१।१।४०। एतदन्तमप्यव्ययम्। कृत्वा। उदेतोः। विसृपः। (३९९) अव्ययीभावश्च १।१।४१। अव्ययं स्यात्। अधिहरि। (४००) अव्ययादाप्सुपः २।४।८२। अव्ययाद्विहितस्याऽऽपः सुपश्च लुक्। तत्र शालायाम्। अथ। विहितविशेषणान्नेह— अत्युच्चैसौ। अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्ति तथापि न गौणे। आप्ग्रहणं व्यर्थम्, अव्ययस्याऽलिङ्गत्वात्। तथा च श्रुतिः—

---

**कृत्वेति**। 'समानकर्तृकयोः' इति भावे क्त्वा प्रत्ययः। **उदेतोरिति**। उत्पूर्वादिणः 'भावलक्षणे' इत्यादिना तोसुन्प्रत्ययः। **विसृप इति**। विपूर्वकात्सृपेः 'सृपितृदोः कसुन्' इति भावे कसुन्प्रत्ययः।

(३९९) **अधिहरीति**। अत्राव्ययीभावसमासेऽव्ययत्वे च 'अव्ययादाप्सुपः' इति सुपो लुक्।

(४००) **अव्ययादाप्सुप इति**। अत्र 'ण्यक्षत्रियाऽऽर्ष' इत्यतो लुगित्यनुवर्तते। तदाह—**अव्ययाद्विहितस्येति**। **तत्रेति**। 'तत्र' इत्यतः स्त्रीत्वे टाप्, तस्य लुग्भवतीति।

---

**मूलार्थ**—क्त्वा, तोसुन् और कसुन् प्रत्ययान्त शब्दों की अव्ययसंज्ञा होती है।

**विमर्श**—प्रकरणवश पूर्वसूत्र से 'अव्ययम्' पद की अनुवृत्ति अपेक्षित है।

**उदाहरण**—(१) कृत्वा (=करके)। (२) उदेतोः (=उठकर, उदय प्राप्त करने के लिए)। (३) विसृपः (=फैलकर)।

**(३९९) पद**—अव्ययीभावः, च। **अनुवृत्ति**—अव्ययम्। **संज्ञासूत्र**।

**मूलार्थ**—अव्ययीभाव समास की भी अव्ययसंज्ञा होती है।

**विमर्श**—यहाँ भी प्रकरणवश पूर्वसूत्र (३९५) से 'अव्ययम्' की अनुवृत्ति आती है। तदनुसार—'अव्ययीभाव समास भी अव्ययसंज्ञक होगा।'

**उदाहरण**—अधिहरि (=हरि में)।

**(४००) पद**—अव्ययात्, आप्सुपः। **अनुवृत्ति**—लुक्। **विधिसूत्र**।

**मूलार्थ**—अव्यय से विहित आप् और सुप् का लुक् होता है।

**विमर्श**—प्रकृत सूत्र में 'ण्यक्षत्रियाऽऽर्ष०' (२।४।५८) से आदेशवाचक पद—'लुक्' की अनुवृत्ति आती है। तदनुसार—'अव्यय से विहित आप् (=टाप्, डाप्, चाप्) तथा सुप् का लुक् (लोप) होता है।'

**उदाहरण**—(१) तत्र शालायाम् (=उस घर में)। यहाँ 'तत्र' शब्द त्रल्-प्रत्ययान्त है। उससे स्त्रीलिङ्गवाची टाप् प्रत्यय का प्रकृत सूत्र से लुक् हुआ। (२) अथ (=अनन्तर)। यहाँ भी प्रकृत सूत्र (अव्ययादाप्सुपः) से विभक्ति का लुक् हुआ।

यहाँ 'अव्ययात्' पद विहित विशेषण (अर्थात् 'अव्यय से विहित' इस प्रकार विशेषता सूचित करने से अत्युच्चैसौ (=ऊँचे स्थान का अतिक्रमण करने वाले दो जन) में सुप् (औ) का लुक् नहीं हुआ। क्योंकि यहाँ 'औ' विभक्ति 'उच्चैस्' अव्यय से विहित नहीं है, किन्तु समस्त पद 'अत्युच्चैस्' से विहित है। यद्यपि अव्ययसंज्ञा में तदन्त विधि होती है। तो भी गौण में तदन्त विधि की प्रवृत्ति नहीं होती। 'अत्युच्चैस्' पद का अवयव 'उच्चैस्' समास में उपसर्जन होने से गौण हो गया है। अतः सुप् का लुक् नहीं होता।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥
वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥ २ ॥

अवगाहः । वगाहः । अपिधानम् । पिधानम् । इत्यव्ययानि ।

इति सुबन्तप्रकरणम् ।

---

**सदृशमिति** । त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु, सर्वेषु वचनेषु च यद्विकारं न प्राप्नोति, किन्तु सदृशम्, एकप्रकारमेव भवति तदव्ययमिति भाष्योक्ता आथर्वणश्रुतियोजना । **वष्टीति** । भागुरिनामक आचार्यः अव-अपि एतयोरुपसर्गयोः अकारस्य लोपं वष्टि—इच्छतीत्यर्थः । तथा च हलन्तानामपि पदानाम् आपं=टाप्प्रत्ययम् इच्छतीत्यर्थः । 'वाचा, निशा दिशा' इत्याद्युदाहरणानीति भावः । **वगाह इति** । एतदप्युदाहरणमात्रमिति शम् ।

इत्यव्ययप्रकरणम् ।

---

सूत्र में 'आप्' पद की कोई आवश्यकता नहीं है, क्योंकि अव्यय लिङ्ग रहित होता है। अतः अव्ययवाची पदों से टाप् आदि स्त्री-प्रत्ययों की प्राप्ति ही नहीं होती । पूर्वोक्त 'तत्र' आदि उदाहरणों में विभक्ति का लुक् होना ही अव्यय का प्रयोजन है ।

प्रक्रिया-ग्रन्थकारों ने अव्यय-प्रकरण के अन्त में दो कारिकाओं द्वारा अव्ययवाचक पदों की विशेषता बतलायी है ।

**कारिकार्थ**—( १ ) जो शब्द तीनों लिङ्गों ( पुंल्लिङ्ग, स्त्रीलिङ्ग तथा नपुंसकलिङ्ग ), सभी विभक्तियों तथा सभी वचनों में एक-सा रहता है, कुछ भी न बदले ( न व्येति=न विकृतं भवति ), वह अव्यय कहलाता है ।

( २ ) आचार्य भागुरि के मतानुसार—'अव' और 'अपि' उपसर्ग के आदि वर्ण अकार का लोप होता है । हलन्त शब्दों से स्त्रीलिङ्ग में ( आप् ) टाप् भी होता है ।

**उदाहरण**—( १ ) अव+√गाह्+घञ्=अवगाहः । 'अव' उपसर्ग के अकार का लोप होकर=वगाहः । लोप न होने पर=अवगाहः ( स्नान, गोता ) । ( २ ) अपि+√धा+ल्युट्=अपिधानम् ( =ढक्कन ) । यहाँ 'अ' का लोप होकर=पिधानम् । पक्ष में=अपिधानम् ।

**हलन्त पदों से 'टाप्' के उदाहरण**—( १ ) वाच्+आ ( टाप् )=वाचा ( वाणी )। ( २ ) निश्+आ ( टाप् )=निशा ( रात्रि ) । ( ३ ) दिश्+आ ( टाप् )=दिशा । 'आप्' के अभाव में वाच्, निश् तथा दिश् शब्द भी स्त्रीलिङ्ग में प्रयुक्त होते हैं ।

अव्यय-प्रकरण समाप्त ।

**इति सुबोधिन्याख्यायां मध्यसिद्धान्तकौमुद्याः संस्कृत-हिन्दीव्याख्याया-मव्ययप्रकरणान्तः प्रथमो भागः ।**

---

# वार्तिकादि-सूची



---

# सूत्र-सूची

॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला

१८५

श्रीवरदराजाचार्यविरचिता

# मध्यसिद्धान्तकौमुदी

'सुबोधिनी'-संस्कृत-हिन्दीव्याख्याद्वयोपेता

( स्वादिगणादारभ्य चुरादिगणपर्यन्तो द्वितीयो भागः )

व्याख्याकार

डॉ० सुरेशचन्द्र शर्मा

व्याकरणाचार्य, एम० ए०, पी-एच्० डी०



चौखम्बा सुरभारती प्रकाशन

वाराणसी

THE
CHAUKHAMBA SURBHARATI GRANTHAMALA
185



# MADHYASIDDHĀNTA-KAUMUDĪ

OF

## ŚRĪ VARADARĀJĀCĀRYA

*( Part 2 : Bhwadi to Churadigana )*

*Edited with*

'Subodhini'-Sanskrit & Hindi Commentarie

By
Dr. Suresh Chandra Sharma
*Vyakaranacharya, M. A., Ph. D.*



CHAUKHAMBA SURBHARATI PRAKASHAN
VARANASI

*Publishers :*

CHAUKHAMBA SURBHARATI PRAKASHAN
( Oriental Publishers & Distributors )
K. 37/117 Gopal Mandir Lane
Post Box No. 1129
Varanasi -221001

Tel. 335263, 333431

*Also can be had of :*

CHAUKHAMBA SANSKRIT PRATISHTHAN
38 U. A. Jawaharnagar, Bungalow Road
Post Box No. 2113
Delhi-110007

Tel. 3956391



CHOWKHAMBA VIDYABHAWAN
CHOWK ( Behind The Benares State Bank Building)
Post Box No. 1069
Varanasi-221001
Tel. 320404

# निवेदनम्

विदितमेव तत्रभवतां श्रीमतां यत्संस्कृतवाङ्मयज्ञानाय व्याकरणमेव मुख्यं साधनम्। ऐन्द्रचान्द्रादिषु नैकेषु व्याकरणेषु सत्स्वपि सर्वत्राधुना पाणिनीय-व्याकरणमेव प्रचलति। तच्च व्याकरणं लक्ष्यलक्षणात्मकम्। तत्र शब्दो हि लक्ष्यः, लक्षणन्तु सूत्रम्। अनयोः सम्यग्ज्ञानार्थं पाणिनीयाष्टाध्याय्या अध्ययनं परमावश्यकम्। अतः 'अष्टाध्यायी'ति ग्रन्थस्य गूढाभिप्रायं ज्ञातुं काशिकादि-वृत्तिग्रन्थानां पठनपाठनयोः परम्परा प्रचलिता। परिवर्तनशीलेऽस्मिन् युगेऽध्य-यनाध्यापनविधावपि परिवर्तनं स्वाभाविकमेव। अत एव सरलरीत्या व्याकरण-शास्त्रज्ञानाय अष्टाध्यायीक्रमस्थकाठिन्यनिवारणाय च प्रक्रियाक्रमस्यारम्भो जातः। रूपावतारादुद्गतेयं प्रक्रियापरम्परा रूपमालया प्रक्रियाकौमुद्या च पल्लविता, सिद्धान्तकौमुद्या च पुष्पिता तत्रैव पर्यवसिताऽपि। श्रीमद्भट्टोजि-दीक्षितविदुषा विरचिता वैयाकरणसिद्धान्तकौमुदी प्रौढा पाण्डित्यपरिपूर्णा च वर्तते। अतः सुकुमारमतीनां बालानां प्रवेशोऽत्र दुष्कर इति विचार्य तच्छिष्येण पण्डितप्रवरेण वरदराजाचार्येण प्राथमिकाध्येतॄणां बालानामनायासेन बुद्धिप्रवेश-लाभाय लघुसिद्धान्तकौमुदी, लब्धकिञ्चित्प्रवेशानां माध्यमिकानाञ्च बालानां व्याकरणशास्त्रबोधसम्पत्तये मध्यसिद्धान्तकौमुदी विरचिता।

सेयं मध्यसिद्धान्तकौमुदी स्वल्पेन कालेन बहुबोधाधायिनीति विदन्त्येव विद्वांसः। ग्रन्थस्यास्य परमोपादेयतामभिलक्ष्य कैश्चिद्विश्वविद्यालयैः माध्यमिक-कक्षासु विनिर्धारितोऽयं ग्रन्थः। यद्यप्यद्यत्वे मध्यसिद्धान्तकौमुद्याः संस्कृत-हिन्दीव्याख्योपेतानि नैकानि संस्करणानि प्रकाशितानि सन्ति। परं 'विद्यार्थि-जनोपयोगि सरलटीकोपेतं किञ्चित्संस्करणं नैव समुपलभ्यते' इत्यभावमनुभवता चौखम्बासुरभारतीप्रकाशनाध्यक्षस्याग्रहवशंवदेन छात्रहितैषिणा मया 'सुबो-धिनी'ति संस्कृत-हिन्दीव्याख्योपेतायाः मध्यसिद्धान्तकौमुद्याः द्वितीयो भागः प्रकाशितः। तस्य लोकप्रियतामवेक्ष्य सम्प्रति द्वितीयो भागः प्रकाश्यते। आशासे यदनेन संस्करणेनापि छात्राणां नूनमेवोपकारो भविष्यति।

कार्येऽस्मिन् व्याकरण-साहित्य-वेदान्ताद्यनेकशास्त्रमर्मविदुषां व्याकरण-विभागाध्यक्षाणां पूज्यगुरुवर्याणां श्रीमतां केशवदेवतिवारीमहाभागानां हार्दि-कीमधमर्णतामावहामि, यैरत्यन्तवात्सल्यभावेन पदे पदे काठिन्यं निरस्या-स्माकं साहाय्यं कृतम्। अत्र कियत्साफल्यमधिगतं मयेत्यत्र तु विद्वांसः प्रेक्षका एव प्रमाणम्। प्रमादेनात्र काश्चन त्रुटयः स्युस्ताः संशोध्य विद्वद्भिः सूचनीयो-ऽप्ययं जन इति शम्।

विदुषामाश्रवः—
सुरेशचन्द्र शर्मा

# भूमिका

संस्कृत भाषा भारत की ही नहीं, अपितु विश्व की प्राचीनतम भाषा है। सभ्यता के उष:काल में इस भाषा का उदय हुआ और सर्वप्रथम भारत को ही इस उदय के दर्शन का श्रेय प्राप्त हुआ। 'वेद संसार के प्राचीनतम ग्रन्थ हैं' यह सभी विद्वानों और ऐतिह्यविदों ने स्वीकार किया है।

किसी भी भाषा की सुरक्षा और उसका मौलिक ज्ञान उसके व्याकरण में निहित होता है। बिना व्याकरण के भाषा प्रायः विशृंखल और अपूर्ण रहती है। संस्कृत-वाङ्मय में व्याकरणशास्त्र का विशिष्ट स्थान है। 'व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति व्याकरणम्।' अर्थात् जिससे साधु शब्दों का ज्ञान होता है, उसे **'व्याकरण'** की संज्ञा से अभिहित किया जाता है। महाभाष्यकार ने इसी को **'शब्दानुशासन'**[1] भी कहा है। शिक्षा, कल्प, व्याकरण, निरुक्त, छन्द और ज्योतिष—इन षडङ्गों में 'व्याकरण' वेद का मुख रूप से प्रधान अङ्ग माना जाता है। जैसा कि पाणिनीयशिक्षा में कहा गया है—

'छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्॥'[2]

भगवान् पतञ्जलि ने भी कहा है—**'प्रधानं च षडङ्गेषु व्याकरणम्।'**[3]

व्याकरण-वाङ्मय में ऐन्द्र व्याकरण सबसे प्राचीन है। शब्दोपदेश के लिए प्रकृति-प्रत्यय विभाग की कल्पना सर्वप्रथम सुरगुरु बृहस्पति के शिष्य इन्द्र ने की थी। देवराज इन्द्र से लेकर महर्षि पाणिनि पर्यन्त[4] अनेक आचार्यों ने व्याकरणशास्त्र का निर्माण किया था, परन्तु आज पाणिनीय व्याकरण ही सर्वाङ्ग परिपूर्ण उपलब्ध होता है। यद्यपि यह संस्कृत के प्राचीन आर्ष

---

१. 'अनुशिष्यन्ते अपशब्देभ्यो विविच्य कथ्यन्ते साधुशब्दा अनेनेत्यनुशासनम्, शब्दानामनुशासनं शब्दानुशासनं सूत्रवार्तिकभाष्यव्याख्यानादिरूपं शास्त्रम्।'

२. पाणिनीय-शिक्षा ( ४१-४२ )।

३. महाभाष्यम् ( पस्पशाह्निकम् )।

४. बोपदेव ने इन्द्र आदि आठ वैयाकरणों का उल्लेख किया है—

'इन्द्रश्चान्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः॥' ( कविकल्पद्रुमः )

व्याकरणों में सबसे अन्तिम और संक्षिप्ततम है; तथापि लौकिक और वैदिक दोनों प्रकार के संस्कृत-वाङ्मय को आलोकित करने वाला एक महान् प्रकाश-स्तम्भ है। विश्व की किसी भी भाषा का व्याकरण इतना सरल और परिष्कृत नहीं बन सका है। संसार के सभी विद्वानों ने इसकी वैज्ञानिकता की मुक्तकण्ठ से प्रशंसा की है। पाणिनीय व्याकरण का मूलग्रन्थ भगवान् पाणिनि की अष्टाध्यायी' है। इसमें ३९९५ सूत्र हैं।[1] इस अष्टाध्यायी के माध्यम से उन्होंने संस्कृत भाषा के परिष्कृत रूप को स्थायित्व प्रदान किया। कालान्तर में महर्षि कात्यायन ने 'अष्टाध्यायी' की समीक्षा करते हुए उसके पूरक के रूप में वार्तिकग्रन्थ की रचना की। सूत्र तथा वार्तिकों के पारस्परिक समन्वय को समझाने के लिए शेषावतार भगवान् पतञ्जलि ने विशद विवरणात्मक ग्रन्थ 'महाभाष्यम्' की रचना की। उन्होंने पूर्ववर्ती दोनों आचार्यों की रचनाओं में सत्यान्वेषण किया और सिद्धान्ततः निष्कर्ष प्रस्तुत किया, जिससे विद्वानों ने उनके सिद्धान्तों को विशेष मान्यता प्रदान की—'यथोत्तरं मुनीनां प्रामाण्यम्।' इस प्रकार सूत्रकार 'पाणिनि', वार्तिककार 'कात्यायन' और भाष्यकार 'पतञ्जलि' ये तीनों आचार्य व्याकरण के 'त्रिमुनि' कहलाते हैं।

## पाणिनि

महर्षि पाणिनि के जन्मस्थान, जन्मकाल आदि के विषय में इतिहासकार एकमत नहीं हैं। 'त्रिकाण्डशेष' कोष में पाणिनि के छह नामों का उल्लेख मिलता है। पाणिन, आहिक, दाक्षीपुत्र, शालङ्कि, पाणिनि और शालातुरीय। इन नामों द्वारा इनके गोत्र, माता-पिता तथा देश का निर्णय किया जा सकता है। इनमें पाणिन और पाणिनि दोनों नाम गोत्र-व्यपदेशज हैं। कुछ विद्वानों का मत है कि 'आहिक' इनका मूल नाम है। इनकी माता का नाम दाक्षी था, अतः इनका एक नाम दाक्षीपुत्र भी है। महाभाष्यकार पतञ्जलि का कथन है—'सर्वे सर्वपदादेशाः दाक्षीपुत्रस्य पाणिनेः।' कुछ गवेषकों के अनुसार इनके पिता का नाम शलङ्क था। अतः इनको 'शालङ्कि' कहा गया। 'शालातुरीय' नाम इनके जन्मप्रदेश को स्पष्ट करता है। 'गणरत्नमहोदधि' नामक ग्रन्थ में 'शालातुरीय' की व्युत्पत्ति इस प्रकार की गई है—'**शलातुरो नाम ग्रामः सोऽभिजनोऽस्यास्तीति शालातुरीयस्तत्रभवान् पाणिनिः।**' इससे स्पष्ट होता है कि पाणिनि का जन्मस्थान 'शलातुर' नामक ग्राम ही है, जो वर्तमान

---

१. 'चतुःसहस्री सूत्राणां पञ्चसूत्रविवर्जिता।
अष्टाध्यायी पाणिनीया सूत्रैर्माहेश्वरैः सह॥'
(स्वरसिद्धान्तचन्द्रिका, श्लो० १५)

में 'लाहौर' नाम से प्रसिद्ध है और पाकिस्तान का विशाल नगर है। इनकी प्रारम्भिक शिक्षा सम्भवतः तक्षशिला में हुई थी, पश्चात् अपने ज्ञान की अभिवृद्धि के लिए यह अन्यत्र चले गये। इनके गुरु का नाम उपवर्षाचार्य था, जो नालन्दा विश्वविद्यालय के सुप्रसिद्ध आचार्य कहे जाते थे। इन्होंने अपने अध्ययन काल में ही कठिन तपस्या करके आशुतोष भगवान् शङ्कर को प्रसन्न किया और उनके उपदेश से 'अष्टाध्यायी' नामक व्याकरणशास्त्र की रचना की। महर्षि पाणिनि की बन्दना में आचार्यों ने कहा भी है—

'येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः॥'

महर्षि पाणिनि के काल के सम्बन्ध में इतिहासकारों के भिन्न-भिन्न मत हैं। अष्टाध्यायी के 'कुमारः श्रमणादिभिः' ( २।१।७० ) सूत्र में 'श्रमण' पद प्रयुक्त हुआ है। इससे आलोचक पाणिनि को बुद्धकालीन अथवा तत्पश्चात्कालीन सिद्ध करते हैं। इसी प्रकार कुछ विद्वान् 'इन्द्रवरुण०' ( ४।१।४९ ) सूत्र में 'यवन' पद को देखकर इन्हें 'सिकन्दर' के समकालीन स्वीकार करते हैं। परन्तु यह नितान्त भ्रमपूर्ण है। क्योंकि वैदिक ब्राह्मणग्रन्थों में भी श्रमण पद का उल्लेख मिलता है।[1] इसी प्रकार सिकन्दर के भारतागमन से भारतीय लोग यवनों से परिचित हुए। यह भी भ्रम ही है, क्योंकि महाभारत में यवन सैनिकों के द्वारा युद्ध करने का प्रसङ्ग है।

पं० युधिष्ठिर मीमांसक का मत है कि पाणिनि विक्रम से २८०० वर्ष पूर्व हुए हैं। किन्तु भाण्डारकर और गोल्डस्टुकर ने पाणिनि का समय ५०० ई० पू० से पहले निश्चित किया है। इसी प्रकार भारतीय और पाश्चात्य मतों पर सम्यग् विचार करने के उपरान्त डॉ० वासुदेवशरण अग्रवाल ने पाणिनि का समय ५०० ई० पू० निश्चित किया है।[2]

## कात्यायन

पाणिनि की 'अष्टाध्यायी' पर आवश्यकतानुसार अनेक आचार्यों ने वार्तिक-ग्रन्थ लिखे थे। उनमें महामुनि कात्यायन का स्थान प्रमुख है। पाणिनीय व्याकरण को सम्पूर्ण एवं समृद्ध बनाने के लिए कात्यायन का विशेष महत्त्व है। पाणिनि और कात्यायन समकालीन और सतीर्थ्य थे। इनका कात्यायन

---

१. 'अत्र पिता अपिता भवति, माता अमाता, लोका अलोकाः, देवा अदेवाः, श्रमणोऽश्रमणः, तापसोऽतापसः।' ( शतपथब्राह्मण )

२. द्रष्टव्य—श्रीवासुदेवशरण अग्रवाल : 'पाणिनिकालीन भारतवर्ष'। ( पृ० ४७०–४८० )

नाम गोत्रज है। आपका मूल नाम 'वररुचि' था। महाभाष्य के प्रथमाह्निक में 'यथा लौकिकवैदिकेषु' इस वार्तिक पर 'प्रियतद्धिता दाक्षिणात्याः, यथा लोके वेदे चेति प्रयोक्तव्ये यथा लौकिकवैदिकेष्विति प्रयुञ्जते।' इस पतञ्जलि-वचन से विदित होता है कि ये दाक्षिणात्य थे। ये केवल वार्तिककार ही नहीं अपितु महाकवि भी थे। इनके 'स्वर्गारोहण' नामक काव्य की प्रशंसा अनेक ग्रन्थों में है। यथा—

'यः स्वर्गारोहणं कृत्वा स्वर्गमानीतवान् भुवि।
काव्येन रुचिरेणैव ख्यातो वररुचिः कविः॥'

## महाभाष्यकार पतञ्जलि

इस समय पाणिनीय व्याकरण पर पतञ्जलि-विरचित एक ही भाष्य-ग्रन्थ उपलब्ध होता है। यह विशालकाय होने से महाभाष्य के नाम से प्रसिद्ध है। भाष्य का तात्पर्य निम्नाङ्कित है—

'सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥'

महामुनि पतञ्जलि एवं उनके महाभाष्य की सभी विद्वानों ने मुक्तकण्ठ से प्रशंसा की है। उनका महाभाष्य न केवल व्याकरणशास्त्र का ही प्रामाणिक ग्रन्थ है, अपितु अनेक विषयों का आकर ग्रन्थ है। इस ग्रन्थ की भाषा यद्यपि अत्यन्त सरल है, तथापि कहीं-कहीं भाव-गाम्भीर्य अत्यधिक है।

भगवान् पतञ्जलि ने मनोवाक्कायदोषनिरसनार्थ 'योगसूत्र', 'महाभाष्य' और 'चरकसंहिता' इन तीन विश्वप्रसिद्ध ग्रन्थों की रचना की, जैसा कि किसी विद्वान् ने भगवान् पतञ्जलि की स्तुति करते हुए कहा है—

'योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन।
योऽपाकरोत् तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि॥'

महाभाष्यकार पतञ्जलि ने अपने परिचय के विषय में कुछ नहीं लिखा है, किन्तु 'महाभाष्य' में कुछ स्थलों पर 'गोर्नदीयस्त्वाह' तथा 'गोणिकापुत्रः' का उल्लेख मिलता है। इससे ज्ञात होता है कि यह गोर्नद प्रदेश के निवासी थे। यह गोर्नद प्रदेश कहाँ है? इस पर आधुनिक विद्वान् गोण्डा जनपद को ही गोर्नद मानते हैं। इनके महाभाष्य में 'पुष्यमित्रो जयते, इह पुष्यमित्रं याजयामः' इत्यादि प्रयोग मिलते हैं। इससे प्रतीत होता है कि ये राजा पुष्यमित्र के समकालिक थे। पुष्यमित्र का समय ईसा की द्वितीय शताब्दी निश्चित किया गया है। भारतीय पौराणिक गणना के आधार पर पं० युधिष्ठिर मीमांसक ने पतञ्जलि का समय विक्रम से १२०० वर्ष पूर्व निश्चित किया है।

पाणिनीय व्याकरण के ये तीनों आचार्य 'त्रिमुनि' के नाम से प्रसिद्ध हैं। आशुतोष भगवान् शंकर के डमरू से पाणिनि के चतुर्दशसूत्र प्राप्त हुए और उन्हीं सूत्रों के आधार पर उन्होंने अष्टाध्यायी की रचना की। उसकी पूर्ति के लिए कात्यायन ने वार्तिकों की रचना की और भगवान् शेषावतार पतञ्जलि ने जिज्ञासु विद्यार्थियों और मनीषियों के हितार्थ 'महाभाष्य' का प्रवचन किया। ये तीनों व्याकरणशास्त्र के प्रवर्तक हैं।

## अष्टाध्यायी के टीकाकार

पाणिनीय व्याकरण के मूल ग्रन्थ 'अष्टाध्यायी' पर अनेक वृत्तिग्रन्थ लिखे गये। वृत्तिकारों में श्वोभूति, व्याडि, कुणि, माथुर, वररुचि आदि प्रमुख हैं। परन्तु इस समय उपलब्ध वृत्ति-ग्रन्थों में वामन और जयादित्य द्वारा विरचित 'काशिकावृत्ति' अत्यन्त सराहनीय है। इसका निर्माणकाल विद्वानों ने वि० सं० ६५०-७०० के मध्य स्वीकार किया है।

इस प्रकार अध्येता को सर्वप्रथम सम्पूर्ण 'अष्टाध्यायी' कण्ठस्थ करके प्रयोग के लिए 'काशिका' का अध्ययन करना होता था। अनन्तर विशेष-ज्ञानार्थ महाभाष्य पढ़कर ही विशिष्ट पाण्डित्य प्राप्त होता था।

## प्रक्रिया-क्रम

प्रौढ़ एवं विशेष परिश्रम न करने वाले विद्यार्थियों को उक्त प्रणाली में कष्ट और गौरव का अनुभव होने लगा था। अतः सरल रीति से व्याकरण-शास्त्र के ज्ञान के लिए तथा अष्टाध्यायी-क्रमस्थ कठिनाई को दूर करने के लिए सर्वप्रथम बौद्धमतावलम्बी धर्मकीर्ति ने वि० सं० १३०० में 'रूपावतार' नामक प्रक्रिया-ग्रन्थ की रचना की। पश्चात् विमल सरस्वती ने 'रूपमाला' और पं० रामचन्द्राचार्य ने 'प्रक्रियाकौमुदी' की रचना की। किन्तु इन प्रक्रिया-ग्रन्थों में अष्टाध्यायी के समस्त सूत्रों का सन्निवेश नहीं था। इस न्यूनता की पूर्ति के लिए म० म० श्रीभट्टोजि दीक्षित ने 'वैयाकरण सिद्धान्त-कौमुदी' की रचना की। विद्वानों ने भट्टोजि दीक्षित का समय वि० सं० १५०० से १५७५ के मध्य स्वीकार किया है। उक्त ग्रन्थ अष्टाध्यायी के समस्त सूत्रों सहित उणादिसूत्र, फिट्सूत्र, लिङ्गानुशासन, गणपाठ और धातु-पाठ से सर्वाङ्गपरिपूर्ण है। यह ग्रन्थ इतना उपयोगी सिद्ध हुआ कि सम्पूर्ण भारतवर्ष में पाणिनीय व्याकरण का अध्ययन इसी के द्वारा होने लगा। 'सिद्धान्तकौमुदी' पर अनेक टीकाएँ लिखी गयीं, जिनमें दीक्षित जी की प्रौढमनोरमा, ज्ञानेन्द्र सरस्वती की तत्त्वबोधिनी, वासुदेव दीक्षित की बालमनोरमा तथा नागेश का लघुशब्देन्दुशेखर प्रसिद्ध है।

## आचार्य वरदराज

आचार्य वरदराज दाक्षिणात्य पण्डित थे। इनके पिता दुर्गातनय और गुरु भट्टोजिदीक्षित थे। अपने अध्ययन के पश्चात् इन्होंने पाणिनि-व्याकरण में प्रवेशार्थी सुकुमार मति वाले बालकों के लिए 'सिद्धान्तकौमुदी' का पथ-प्रदर्शक 'लघुसिद्धान्तकौमुदी' नामक ग्रन्थ की रचना की। वरदराज का यह लघु प्रयास प्रारम्भिक छात्रों के लिए परमोपयोगी है।

## मध्यसिद्धान्तकौमुदी

इस प्रकार 'लघुसिद्धान्तकौमुदी' द्वारा साधारण ज्ञान प्राप्त हो जाने पर विद्यार्थियों की ज्ञानवृद्धि के लिए वरदराज ने द्वितीय सोपान रूप 'मध्य-सिद्धान्तकौमुदी' का प्रणयन किया। मध्यसिद्धान्तकौमुदी के अन्त में श्रीवरद-राज ने कहा है—

'कृतिर्वरदराजस्य मध्यसिद्धान्तकौमुदी।
तस्याः सङ्ख्या तु विज्ञेया खबाणकरवह्निभिः॥'

यह किंवदन्ती है कि आचार्य वरदराज की इस कृति को देखकर गुरुवर भट्टोजिदीक्षित को सन्देह हो गया था कि मध्यकौमुदी को पढ़ने के पश्चात् मेरी 'सिद्धान्तकौमुदी' को कौन पढ़ेगा? क्योंकि सिद्धान्तकौमुदी का सार-सर्वस्व मध्यसिद्धान्तकौमुदी है।

इस ग्रन्थ में सिद्धान्तकौमुदी की अपेक्षा संक्षेप के अतिरिक्त प्रकरण-क्रम में भी भिन्नता है। वाक्य में सर्वप्रथम अर्थज्ञान के लिए पदच्छेद अपेक्षित होता है। अतः पूर्व में सन्धि-प्रकरण को रखा गया है। अनन्तर सुबन्त पदों के ज्ञान के लिए षड्लिङ्ग-प्रकरण और अव्यय-प्रकरण का संघटन किया गया है। इसके बाद स्त्रीप्रत्यय की अपेक्षा तिङन्त पदों के ज्ञान के लिए तिङन्त-प्रकरण का विन्यास सर्वथा उचित है। क्योंकि स्त्रीप्रत्यय कृत्तद्धित-समास के बाद ही अपेक्षित है। अतः अन्त में 'स्त्री-प्रत्यय' का होना ही उचित है। इसी प्रकार कारक का भी समास से पूर्व होना युक्तिसङ्गत प्रतीत होता है। क्योंकि विभक्त्यर्थ-ज्ञान पर ही समास-प्रक्रिया आधारित है।

मध्यसिद्धान्तकौमुदी की एक अत्यन्त प्राचीन टीका 'मध्यमनोरमा' है; ऐसा कुछ विद्वानों ने स्वीकार किया है। परन्तु इसका मुद्रित संस्करण अद्यावधि अप्राप्य है।

आजकल मध्यसिद्धान्तकौमुदी के संस्कृत-हिन्दी टीकाओं सहित अनेक संस्करण उपलब्ध हैं। उनमें पं० सदाशिव शास्त्री की 'सुधा' संस्कृत व्याख्या तथा पं० रामचन्द्र झा द्वारा रचित 'इन्दुमती' हिन्दी टीका का प्रमुख स्थान रहा है।

प्रस्तुत संस्करण में 'सुबोधिनी' संस्कृत-हिन्दी व्याख्या का संक्षेप में वर्ण्यविषय इस प्रकार है—संस्कृत में जिज्ञासु छात्रों को सूत्रार्थ समझाना ही उद्देश्य रहा है। हिन्दी में प्रत्येक सूत्र का पदच्छेद, अनुवृत्ति तथा सूत्रभेद प्रदर्शित कर विद्यार्थियों को सूत्रार्थ समझने की ओर स्वतः उन्मुख होने की प्रणाली बतलायी गई है। अनन्तर ग्रन्थ की 'वृत्ति' के अनुसार सूत्रार्थ किया गया है। 'विमर्श' में अनुवृत्त सूत्रों का उल्लेख करते हुए सूत्रस्थ पदों के साथ उनका सम्बन्ध प्रदर्शित कर सूत्रार्थ स्पष्ट किया गया है। प्रक्रियानुसार क्रम से उदाहरणों की सिद्धि की गई है और प्रत्युदाहरणों के द्वारा सूत्रस्थ पदों की सार्थकता दिखलायी गई है। प्रसङ्गवश कठिन स्थलों का स्पष्टीकरण भी किया गया है। नवीन प्रकरणों के आरम्भ में पूर्वापर सङ्गति उपक्रम के रूप में की गई है। इसके अतिरिक्त अन्य ज्ञातव्य तथ्यों का प्रतिपादन किया गया है।

प्रस्तुत संस्करण की व्याख्या के विषय में गुण-दोषों का विवेचन सुधी पाठकजन ही करेंगे। मेरे प्रमाद एवं अज्ञानवश कुछ त्रुटियाँ हुई होंगी। अतः नीर-क्षीर-विवेकी विद्वानों से निवेदन है कि वे उन्हें सुधारकर सूचित करने का कष्ट करें। आशा एवं विश्वास है कि 'मध्यसिद्धान्तकौमुदी' के इस संस्करण से छात्रगण अवश्य ही लाभ उठायेंगे।

मकरसङ्क्रान्ति
२०४७ वि०

विदुषां वशंवदः
**सुरेशचन्द्र शर्मा**

# प्रकरण-सूची

॥ श्रीः ॥

# मध्यसिद्धान्तकौमुदी

## 'सुबोधिनी'-संस्कृत-हिन्दीव्याख्योपेता

### अथ तिङन्ते भ्वादयः

**( ४०१ ) धातोः ३।१।९१ । अधिकारोऽयम् । वक्ष्यमाणाः प्रत्यया धातोर्ज्ञेयाः । लट् । लिट् । लुट् । लृट् । लेट् । लोट् । लङ् । लिङ् । लुङ् । लृङ् । एषु पञ्चमो लकार-**

( ४०१ ) धातोरिति । तृतीयाध्यायसमाप्तिपर्यन्तस्याधिकारः । पञ्चम इति । स्वोक्तक्रमेण पञ्चमो लकारो लेट् वेदविषयकोऽन्यथा प्रतिलोमसङ्ख्यया लोट्लकारेऽपि पञ्चत्वमापतेत् । 'लिङर्थे लेडि'ति सूत्रे 'छन्दसि लुङ्लङ्लिटः' इत्यतः 'छन्दसी'त्यनुवृत्तेः लेट्लकारस्य छन्दोमात्रविषयकत्वात् तस्य रूपाणीह न प्रदर्श्यन्त इति भावः ।

'सुप्तिङन्तं पदम्' ( १।४।१४ ) सूत्रस्थ क्रम का अनुसरण करके पूर्वार्द्ध भाग में सुबन्त पदों का विवेचन किया गया । अब क्रमप्राप्त तिङन्त पदों के विवेचन हेतु सर्वप्रथम भ्वादि-प्रकरण का प्रारम्भ किया जा रहा है ।

**( ४०१ ) पद**—धातोः । **अधिकारसूत्र ।**

**सूत्रार्थ**—यह अधिकार सूत्र है । आगे कहे गये तिङ् प्रत्यय धातु से विहित होते हैं ।

**विमर्श**—पाणिनीय अष्टाध्यायी के तृतीयाध्याय की समाप्ति तक 'धातोः' ( ३।१।९१ ) सूत्र का अधिकार है । लट् । लिट् । लुट् । लृट् । लेट् । लोट् । लङ् । लिङ् । लुङ् । और लृङ्—ये दश लकार हैं । इनमें पाँचवें लेट् लकार का प्रयोग केवल वेद में ही होता है, लोक में नहीं । इनके आदि में 'ल्' वर्ण होने से इनको 'लकार' कहा जाता है । इनमें पहले छः लकार टित् हैं और शेष चार ङित् । लकारों का प्रयोग धातुओं के आगे किया जाता है । अतः इनके द्वारा धातुवाच्य क्रिया के काल आदि का बोध होता है ।

**लकारों का सामान्य अर्थ**

१. लट्—वर्तमान काल ।
२. लिट्—परोक्ष अनद्यतन भूतकाल ।
३. लुट्—अनद्यतन भविष्यत् काल ।
४. लृट्—सामान्य भविष्यत् काल ।
५. लेट्—लिङर्थ में ( वैदिक भाषा में ) ।
६. लोट्—विधि ( आज्ञा, प्रेरणा देना ) आदि ।
७. लङ्—अनद्यतन भूतकाल ।

श्छन्दोमात्रगोचरः । (४०२) लः कर्मणि च भावे चाऽकर्मकेभ्यः ३।४।६९ । लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च । (४०३)

---

(४०२) लः कर्मणि इति । वाक्यद्वयं सूत्रम् । 'लः कर्मणि चे'ति प्रथमं वाक्यम् । ल इति प्रथमाबहुवचनान्तम् । चकारेण 'कर्तरि कृदि'त्यतः 'कर्तरि' इत्यनुकृष्यते । धातोरित्यधिकृतम् । लकारः कर्मणि कर्तरि च धातोः स्युरिति लभ्यते । एवं सकर्मकेभ्यो भावे लकारा न भवन्ति । 'भावे कर्मकेभ्यः' इति द्वितीयं वाक्यम् । अत्र चकारेण कर्त्रैवानुकृष्यते, न तु कर्म; असम्भवात् । तदाह—अकर्मकेभ्य इति । अत्र के सकर्मकाः के चाकर्मकाः? इति जिज्ञासायामुच्यते—फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम् ।

---

८. लिङ् (१) विधि, निमंत्रण आदि ।
(२) आशीर्वाद ।

९. लुङ्—सामान्य भूत ।

१०. लृङ्—हेतुहेतुमद्भाव अर्थात् लिङ् के अर्थ में जब क्रिया की असिद्धि अर्थ गम्यमान हो ।

(४०२) पद—लः कर्मणि च भावे च अकर्मकेभ्यः । अनुवृत्ति—कर्तरि । विधिसूत्र ।

मूलार्थ—सकर्मक धातुओं से कर्म और कर्ता में तथा अकर्मक धातुओं से भाव और कर्ता में लकार होते हैं ।

विमर्श—प्रकृत सूत्र में दो वाक्य हैं । 'लः कर्मणि च' यह प्रथम वाक्य है । यहाँ 'कर्तरि कृत्' (३।४।६७) पूर्वसूत्र से 'कर्तरि' पद की अनुवृत्ति आती है । 'धातोः' (३।१।९१) का अधिकार है । इस प्रकार लकार (सकर्मक) धातुओं से कर्म और कर्ता में होते हैं । 'भावे चाकर्मकेभ्यः' द्वितीय वाक्य है । यहाँ भी चकार पद से 'कर्तरि' पद की अनुवृत्ति होती है । अतः अकर्मक धातुओं से लकार भाव और कर्ता में होते हैं ।

यहाँ यह जानना आवश्यक है कि धातु के दो अर्थ होते हैं—फल और व्यापार । व्यापार का आश्रय कर्ता और फल का आश्रय कर्म होता है ।[1]

जिस उद्देश्य के लिए क्रिया की जाती है, उसे फल कहते हैं । यथा—'पचति' में विक्लित्ति (=गलना) के उद्देश्य से पाक क्रिया सम्पन्न की जाती है । अतः विक्लित्ति फल है । फल की सिद्धि के लिए जो क्रिया की जाती है, उसे व्यापार कहते हैं । जैसे 'पचति' में आग जलाना तथा पात्र को चूल्हे पर चढ़ाने से लेकर उतारने तक जो भी क्रिया की जाती है, वह सब व्यापार के अन्तर्गत आता है । फल कर्म में और व्यापार कर्ता में रहता है । 'पचति' में विक्लित्ति रूप फल का आश्रय तण्डुल है; अतः तण्डुल कर्म है और विक्लित्ति के साधक अग्नि प्रज्वलित करना आदि क्रिया के आश्रय देवदत्त आदि हैं; अतः वह कर्ता है ।

जिन धातुओं के फल और व्यापार के आश्रय भिन्न-भिन्न हों, उनको सकर्मक कहते हैं । यथा-'देवदत्तः तण्डुलं पचति' यहाँ विक्लित्ति रूप फल तण्डुल में और पाकानुकूल व्यापार देवदत्त में है; अतः पच् धातु सकर्मक है ।[2] जिन धातुओं के फल और व्यापार एक ही आश्रय में हों, उनको अकर्मक कहते हैं । यथा—'देवदत्तः शेते' यहाँ विश्राम रूप फल और चक्षुः-निमीलनादि रूप व्यापार एक ही आश्रय देवदत्त में हैं; अतः शीङ् धातु अकर्मक है ।[3]

---

१. "फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।"—वैयाकरण-भूषणसार, कारिका-२ ।
२. "फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम् ।"
३. "फल-समानाधिकरणव्यापारवाचकत्वम् अकर्मकत्वम् ।"

**वर्तमाने लट् ३।२।१२३** । वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् । अटावितौ । उच्चारणसामर्थ्यान्न लस्येत्वम् । भू सत्तायाम् । कर्तृविवक्षायां 'भू ल्' इति स्थिते । ( ४०४ )

---

यथा—'देवदत्तः तण्डुलं पचति' इत्यत्र विक्लित्तिरूपं फलं तण्डुले, पाकानुकूलो व्यापारश्च देवदत्ते वर्तते । अतः पच्धातुः सकर्मकः । फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम् । यथा—'देवदत्तः शेते' इत्यत्र विश्रामरूपं फलं चक्षुर्निमीलनादिरूपो व्यापारश्चैकस्मिन् देवदत्त एव । अतः शीङ्धातुरकर्मकः ।

( ४०३ ) **वर्तमाने** लडिति । धातोरित्यधिकृतम् । 'वर्तमाने' इति तत्रान्वेति । वर्तमानेऽर्थे विद्यमानाद्धातोः लडिति फलितार्थः । वर्तमानत्वञ्च प्रारब्धापरिसमाप्तिक्रियाश्रयत्वं कालगतं बोद्धव्यम् । भू सत्तायामिति । आत्मधारणं सत्ता, स्वरूपेणावस्थानमिति यावत् ।

---

सामान्यतया साकांक्षित क्रिया सकर्मक होती है । जैसे—'पठति, खादति' आदि में क्या पढ़ता है ? क्या खाता है ? की अपेक्षा रहती है । अतः पठ् आदि धातुएँ सकर्मक हैं एवं निराकांक्षित क्रिया अकर्मक होती है । जैसे—'शेते, हसति, जागर्ति' आदि में क्या सोता है ? क्या हँसता है ? क्या जागता है ? इत्यादि आकाङ्क्षा नहीं होती ।[1]

क्रिया के प्रकार को वाच्य कहते हैं, जो तीन प्रकार का है—

१. कर्तृवाच्य, २. कर्मवाच्य और ३. भाववाच्य ।

इन भ्वादि आदि दश गणों और प्रक्रियाओं में 'कर्तृवाच्य' के रूप ही प्रदर्शित किये गये हैं । केवल भावकर्म-प्रक्रिया में भाववाच्य और कर्मवाच्य के रूप बतलाये गये हैं । इस प्रकार सकर्मक और अकर्मक धातुओं से कर्ता में लकार आने से कर्ता उक्त ( अभिहित ) हुआ । कर्म में द्वितीया तथा कर्ता में प्रथमा विभक्ति का प्रयोग होता है । यथा—'देवदत्तः गृहं गच्छति' ( कर्तृवाच्य ) । कर्म में सकर्मक धातु से लकार आने से कर्मवाच्य होता है । कर्मवाच्य में कर्म में प्रथमा और कर्ता में तृतीया विभक्ति का प्रयोग होता है तथा क्रिया के पुरुष-वचन कर्म के अनुसार होते हैं । यथा—'देवदत्तेन वेदाः पठयन्ते ।' अकर्मक धातु से भाव में लकार होने पर कर्ता में तृतीया विभक्ति होती है । कर्म नहीं होता तथा क्रिया सदैव प्रथमपुरुष की एकवचनान्त ही होती है । यथा—'अस्माभिः स्थीयते' ।[2]

**( ४०३ ) पद—**वर्तमाने लट् । **विधिसूत्र** ।

**मूलार्थ—**वर्तमानकालिक क्रियावृत्ति धातु से लट् लकार होता है । लट् लकार के अकार और टकार की इत्संज्ञा होती है । उच्चारण-सामर्थ्य से 'ल्' की इत्संज्ञा नहीं होती । भू धातु का अर्थ सत्ता ( होना ) है । कर्ता की विवक्षा में ( कर्तृवाच्य में ) लकार आने पर 'भू ल्' इस प्रकार की स्थिति हुई ।

---

१. "क्रियापदं कर्तृपदेन युक्तं व्यपेक्षते यत्र किमित्यपेक्षाम् ।
सकर्मकं तं सुधियो वदन्ति शेषस्ततो धातुरकर्मकः स्यात् ॥"

२. "प्रयोगे कर्तृवाच्यस्य कर्तरि प्रथमा भवेत् । द्वितीया कर्मणि तथा क्रियाकर्तृपदान्विता ॥
प्रयोगे कर्मवाच्यस्य तृतीया स्यात्तु कर्तरि । कर्मणि प्रथमा चैव क्रिया कर्मानुसारिणी ॥
कर्माभावः सदा भावे तृतीया चैव कर्तरि । प्रथमः पुरुषश्चैकवचनं च क्रियापदे ॥"
( हरिकारिका )

**लस्य ३।४।७७ ।** इत्यधिकृत्य । **( ४०५ ) तिप्तस्झि-सिप्थस्थ-मिब्वस्मस्-तातांझ-थासाथां ध्व-मिड्वहि-महिङ् ३।४।७८ ।** एतेऽष्टादश लादेशाः स्युः । **( ४०६ ) लः परस्मैपदम् १।४।९९ ।** लादेशाः परस्मैपदसंज्ञाः स्युः । **( ४०७ ) तङानावात्मनेपदम् १।४।१०० ।** तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञाऽपवादः ।

---

**( ४०५ ) तिप्तस्झि इति ।** तिप्, तस्, झि, सिप्, थस्, थ, मिप्, वस्, मस्, त, आताम्, झ, थास्, आथाम्, ध्वम्, इट्, वहि, महिङ्—एषां समाहारद्वन्द्वात् प्रथमैकवचनम् । अत्र सूत्रे महिङो ङकारस्तिङादिप्रत्याहारार्थः । लस्येति स्थानषष्ठ्यन्तमधिकृतम् । अत आह—**एत इति ।**

**( ४०६ ) ल इति ।** ल इति स्थानषष्ठी । आदेश इति पदमध्याहार्यम् । तदाह—**लादेशा इति ।**

**( ४०७ ) तङानाविति ।** तङ् च आनश्चेति द्वन्द्वः । पूर्वसूत्राल्ल इत्यनुवर्तते । आनग्रहणेनात्र शानच्कानचावेव गृह्येते । तदाह—**तङित्यादिना ।**

---

**विमर्श**—यहाँ 'धातोः' का अधिकार है । 'वर्तमाने' पद का 'धातोः' के साथ अन्वय होता है । इस प्रकार वर्तमान काल अर्थ में विद्यमान धातु से लट् लकार होता है ।

क्रिया के उस काल को वर्तमान कहते हैं, जिसमें क्रिया का आरम्भ होना तो पाया जाता हो, परन्तु समाप्त होना नहीं । जैसे—'सः गच्छति' इस वाक्य में गमन क्रिया का आरम्भ होना पाया जाता है, परन्तु समाप्त होना नहीं । अतः यह वर्तमानकालिक प्रयोग है ।

'लट्' लकार में अकार और टकार की इत्संज्ञा होने से उनका लोप होता है । लकार की इत्संज्ञा नहीं होती, उच्चारण-सामर्थ्य से । अन्यथा 'ल्' की इत्संज्ञा लोप होने से उच्चारण ही व्यर्थ हो जायेगा । भू धातु का अर्थ सत्ता ( होना ) है । कर्तृवाच्य में लट् लकार आने पर 'भू ल्' यह स्थिति हुई ।

**( ४०४ ) पद**—लस्य । **अधिकारसूत्र ।**

**मूलार्थ**—यह अधिकार सूत्र है ।

**( ४०५ ) पद**—तिप् तस् झि सिप् थस् थ मिप् वस् मस् त आताम् झ थास् आथाम् ध्वम् इट् वहि महिङ् । **विधिसूत्र ।**

**मूलार्थ**—लकार के स्थान में तिप्, तस् इत्यादि १८ आदेश होते हैं ।

**विमर्श**—'लस्य' का अधिकार है । अतः तिबादि १८ आदेश लकारों के स्थान में होते हैं । इन अठारहों को तिङ् कहते हैं । आरम्भ के 'ति' से लेकर अन्तिम 'ङ्' तक 'तिङ्' प्रत्याहार बनता है । प्रारम्भ के नौ प्रत्ययों को छोड़कर 'त' से लेकर 'महिङ्' के 'ङ्' तक 'तङ्' प्रत्याहार बनता है ।

**( ४०६ ) पद**—लः परस्मैपदम् । **संज्ञासूत्र ।**

**मूलार्थ**—लकार के स्थान में होने वाले आदेश की परस्मैपद संज्ञा होती है ।

**विमर्श**—'लः' पद में स्थानषष्ठी है । 'आदेश' पद का अध्याहार किया जाता है । इस प्रकार लकारों के स्थान में जो आदेश हों, उनकी परस्मैपद संज्ञा होती है । इससे पूर्वोक्त १८ लादेशों की परस्मैपद संज्ञा प्राप्त हुई ।

**( ४०७ ) पद**—तङ् आनौ आत्मनेपदम् । **संज्ञासूत्र ।**

**( ४०८ ) अनुदात्तङित आत्मनेपदम् १।३।१२ । अनुदात्तेत उपदेशे यो ङित्तदन्ताच्च धातोर्लस्य स्थाने आत्मनेपदं स्यात् । ( ४०९ ) स्वरितञितः कर्त्रभिप्राये क्रियाफले १।३।७२ । स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले । ( ४१० )**

---

( ४०८ ) **अनुदात्तङित इति** । अनुदात्तश्च ङ् च अनुदात्तङौ । ताविती यस्य सः अनुदात्तङित्, तस्मात् अनुदात्तङितः । द्वन्द्वान्ते श्रूयमाणत्वादिच्छब्दः प्रत्येकमभिसम्बध्यते । अनुदात्तेतः ङितश्चेति लभ्यते । उपदेश इत्यनुवृत्तम् । 'भूवादयो धातवः' इत्यस्मादनुवृत्तं धातव इति पदं पञ्चम्या विपरिणम्यते । तदाह—**अनुदात्तेदित्यादिना** ।

( ४०९ ) **स्वरितञित इति** । स्वरितश्च ञ् च स्वरितञौ, ताविती यस्य तस्मादिति बहुव्रीहिः । अत्रापि इच्छब्दः प्रत्येकमभिसम्बध्यते । अत आह—**स्वरितेत इत्यादिना** ।

---

**मूलार्थ**—तङ् प्रत्याहार और शानच्, कानच् की आत्मनेपद संज्ञा होती है ।

**विमर्श**—पूर्वसूत्र से 'लः' पद की अनुवृत्ति आ रही है । अतः लकारों के स्थान में होने वाले तङ् तथा शानच् और कानच् प्रत्ययों की आत्मनेपद संज्ञा होती है । 'ताच्छील्यवयोवचनशक्तिषु चानश्' से विहित चानश् की लादेश होने के अभाव में आत्मनेपद संज्ञा नहीं होती । प्रकृत सूत्र पूर्व ( परस्मैपद ) संज्ञा का अपवाद ( बाधक ) है ।

**( ४०८ ) पद**—अनुदात्तङित आत्मनेपदम् । **अनुवृत्ति**—उपदेशे, धातवः । **संज्ञासूत्र** ।

**मूलार्थ**—अनुदात्तेत् धातु और उपदेशावस्था में ङिदन्त धातु से लकार ( ल् ) के स्थान में आत्मनेपद होता है ।

**विमर्श**—'अनुदात्तश्च ङ् च इति अनुदात्तङौ, तौ इतौ यस्य स अनुदात्तेत्' इस विग्रह में पूर्व में द्वन्द्वसमास है । द्वन्द्व के अन्त में श्रूयमाण इत् शब्द का प्रत्येक के साथ अन्वय होता है । 'उपदेशेऽजनुनासिक इत्' ( १।३।२ ) सूत्र से 'उपदेशे' पद की अनुवृत्ति आ रही है । 'भूवादयो धातवः' ( १।३।१ ) से अनुवृत्त 'धातु' पद पञ्चमी विभक्ति में परिणत होकर 'ङित्' का विशेष्य हो जाता है । विशेषण में तदन्त विधि से 'ङिदन्त धातु' अर्थ होता है । इस प्रकार अनुदात्तेत् ( जिसका अनुदात्त अच् इत्संज्ञक हो ) और उपदेशावस्था में जो ङित्, तदन्त जो धातु, उससे पर लकार के स्थान में आत्मनेपद होता है ।

**( ४०९ ) पद**—स्वरितञितः, कर्त्रभिप्राये, क्रियाफले । **अनुवृत्ति**—धातोः, आत्मनेपदम् । **संज्ञासूत्र** ।

**मूलार्थ**—स्वरितेत् और ञित् धातु से कर्तृगामी क्रियाफल में आत्मनेपद होता है ।

**विमर्श**—'लस्य' का अधिकार है । पूर्वसूत्र से 'आत्मनेपदम्' की अनुवृत्ति आ रही है । क्रिया से उत्पन्न जो फल, वह यदि कर्ता को प्राप्त होता है, तो जिसका स्वरित अच् इत्संज्ञक हो ऐसा धातु और ञकार की इत्संज्ञा वाला जो धातु, उससे परवर्ती लकार के स्थान में आत्मनेपद संज्ञक प्रत्यय होते हैं ।

उपर्युक्त विवेचन से ज्ञात होता है कि 'स्वरितेत्' और 'ञित्' धातु उभयपदी हैं । अर्थात् इनसे आत्मनेपद और परस्मैपद संज्ञक दोनों प्रकार के प्रत्यय आते हैं । किन्तु यहाँ यह व्यवस्था की गई है कि क्रियाफल के कर्तृगामी होने पर आत्मनेपद और परगामी होने पर ( कर्ता से भिन्न को प्राप्त होने पर ) परस्मैपद होता है । जैसे—√'यज' धातु का जकारोत्तरवर्ती अकार स्वरित है

शेषात्कर्तरि परस्मैपदम् १।३।७८। आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि लस्य परस्मैपदं स्यात्। ( ४११ ) तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः १।४।१०१। तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः। ( ४१२ ) तान्येकवचनद्विवचनबहुवचनान्येकशः १।४।१०२। लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि वचनानि प्रत्येक-

---

( ४१० ) शेषादिति। 'अनुदात्तङित आत्मनेपदम्' इति 'स्वरितञित' इति चोक्तादात्मनेपदविषयादन्यः शेषः, तस्मादिति।

( ४११ ) तिङः षट् त्रिकाः, संज्ञास्तु तिस्र इति यथासङ्ख्येनासम्भवात् एकैकस्य त्रिकस्य तिसृषु संज्ञासु प्राप्तास्वाह—तिङ् उभयोः पदयोरिति।

( ४१२ ) तान्येक इति। तच्छब्देनात्र पूर्वसूत्रोपात्तानि प्रथममध्यमोत्तमाख्यानि तिङस्त्रीणि त्रीणि परामृश्यन्ते। तदाह—लब्धप्रथमादिसंज्ञानीति।

---

और इत्संज्ञक भी है। अतः यदि स्वर्गादि फल यागकर्ता को प्राप्त रहे तो 'यजते'। अन्यत्र 'यजति' का प्रयोग होता है। इसी प्रकार 'कृञ्' धातु 'ञित्' है। सन्ध्या-वन्दन आदि में क्रियाफल के कर्तृगामी होने पर आत्मनेपद ही होता है। यथा—'सन्ध्यामहं करिष्ये।' 'यज्ञमहं करिष्ये।' यागकर्ता यदि किसी अन्य का यज्ञ करता हो; जैसे—पुरोहित अपने यजमान का यज्ञ किया करता है। तो 'यज्ञमहं करिष्यामि।' इस प्रकार परस्मैपद का ही प्रयोग किया जायेगा। क्योंकि जिस उद्देश्य की सिद्धि के लिए यजमान ने यज्ञ कराया है, वह ( उद्देश्य की प्राप्ति रूप ) फल यजमान को ही मिलेगा।

( ४१० ) **पद**—शेषात, कर्तरि, परस्मैपदम्। **अनुवृत्ति**—धातोः।

**मूलार्थ**—आत्मनेपद के निमित्त से हीन धातु से कर्ता ( कर्तृवाच्य ) में परस्मैपद होता है।

**विमर्श**—'लस्य' का अधिकार है। अनुदात्तेत्, ङित्, स्वरितेत् एवं ञित्, ये आत्मनेपद आदेश के निमित्त हैं। इनसे रहित धातु से कर्ता अर्थ में लकार के स्थान में परस्मैपदसंज्ञक आदेश होते हैं। इस प्रकार धातु के तीनों प्रकारों—कर्तृवाच्य, कर्मवाच्य और भाववाच्य में से केवल कर्तृवाच्य में ही परस्मैपद होता है, भाव और कर्म में नहीं। भाव और कर्मवाच्य में आत्मनेपद ही होता है। कर्तृवाच्य में दोनों पद आते हैं।

( ४११ ) **पद**—तिङः, त्रीणि, त्रीणि, प्रथममध्यमोत्तमाः। **संज्ञासूत्र।**

**मूलार्थ**—तिङ् के आत्मनेपद और परस्मैपद सम्बन्धी तीन-तीन त्रिकों की क्रम से प्रथम, मध्यम और उत्तम संज्ञा होती है।

**विमर्श**—आत्मनेपद और परस्मैपद के नौ-नौ प्रत्यय होते हैं। उन नौ प्रत्ययों के तीन वर्ग बनते हैं। यथा—( परस्मैपद )

प्रथमपुरुष—तिप्, तस्, झि। मध्यमपुरुष—सिप्, थस्, थ। उत्तमपुरुष—मिप्, वस्, मस्। ( आत्मनेपद— ) प्रथमपु०—त, आताम्, झ। मध्यमपु०—थास्, आथाम्, ध्वम्। उत्तमपु०—इट्, वहि, महिङ्।

( ४१२ ) **पद**—तानि, एकवचन-द्विवचन-बहुवचनानि, एकशः। **संज्ञासूत्र।**

**मूलार्थ**—प्राप्त प्रथमादिसंज्ञक त्रिकों के तीन वचनों की क्रमशः एकवचन, द्विवचन और बहुवचन संज्ञा होती है।

ऽनेकवचनादिसंज्ञानि स्युः। (४१३) युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः १।४।१०५। तिङ्वाच्यकारकवाचिनि युष्मद्यप्रयुज्यमाने प्रयुज्यमाने च मध्यमः। (४१४) अस्मद्युत्तमः १।४।१०७। तथाभूतेऽस्मद्युत्तमः। (४१५) शेषे

---

(४१३) युष्मद्युपपद इति। उपोच्चरितं पदमुपपदम्; युष्मदि समीपोच्चारिते सतीत्यर्थः। सामानाधिकरण्यञ्चैकार्थबोधकत्वरूपं गृह्यते। स्थानिन्यपीत्यस्यार्थमाह—अप्रयुज्यमान इति। स्थानं=प्रसङ्गः, तद्वति युष्मदीत्यर्थात्। अपिना 'प्रयुज्यमाने' इति लभ्यते। एवञ्च—तिङ्वाच्यम्—कारकं, कर्ता, कर्म च, तद्वाचके युष्मच्छब्देऽप्रयुज्यमाने प्रयुज्यमाने च मध्यमः पुरुषो भवति। यथा—'त्वं भवसि। त्वमनुभूयसे।' इत्यादौ।

(४१४) अस्मद्युत्तम इति। तिङ्वाच्यकारकवाचिनि अस्मदि प्रयुज्यमानेऽप्रयुज्यमाने च सति उत्तमपुरुषो भवतीत्यर्थः।

---

**विमर्श**—उपर्युक्त प्रत्येक त्रिक में तीन-तीन प्रत्यय हैं। उनकी क्रम से एकवचन आदि संज्ञाओं का विधान प्रकृत सूत्र से होता है। जैसे—तिप् की एकवचन, तस् की द्विवचन और झि की बहुवचन संज्ञा हुई। जो निम्नलिखित चक्र से स्पष्ट हो जायेगा—

| | परस्मैपद | | | | आत्मनेपद | | |
|---|---|---|---|---|---|---|---|
| | **एक०** | **द्वि०** | **बहु०** | | **एक०** | **द्वि०** | **बहु०** |
| प्रथम- | तिप् | तस् | झि | प्रथम- | त | आताम् | झ |
| मध्यम- | सिप् | थस् | थ | मध्यम- | थास् | आथाम् | ध्वम् |
| उत्तम- | मिप् | वस् | मस् | उत्तम- | इट् | वहि | महिङ् |

**(४१३) पद**—युष्मदि, उपपदे, समानाधिकरणे, स्थानिनि, अपि, मध्यमः। **विधिसूत्र।**

**मूलार्थ**—तिङ्वाच्य कारकवाची युष्मद् शब्द के प्रयुज्यमान अथवा अप्रयुज्यमान होने पर भी धातु से मध्यमपुरुष होता है।

**विमर्श**—'लस्य' का अधिकार है। सूत्रस्थ 'समानाधिकरणे' का अर्थ वृत्तिकार ने 'तिङ्वाच्यकारकवाचिनि' किया है। शब्द अर्थ में वाच्यवाचकभाव सम्बन्ध से रहता है। अतः अर्थ शब्द का अधिकरण होता है। यहाँ तिङ् और युष्मद् का अर्थ एक ही कारक होता है। अतः समानाधिकरण होने से उक्त अर्थ किया गया है। 'स्थानिनि' का अर्थ 'अप्रयुज्यमान' है। क्योंकि—जिसके स्थान में आदेश किया जाता है, उसे स्थानी कहते हैं। आदेश हो जाने के पश्चात् स्थानी का लोप हो जाता है। अर्थात् उसका प्रयोग नहीं होता। 'अपि' का अर्थ 'प्रयुज्यमान' है।

इस प्रकार 'तिङ्' का वाच्य जो कारक (कर्तृ-कर्म रूप), उसका वाचक जो युष्मद् शब्द, उसके उपपद रहते हुए, उसका चाहे प्रयोग हुआ हो या न हुआ हो; वहाँ धातु से परवर्ती लकार के स्थान में मध्यमपुरुषसंज्ञक तिङ् प्रत्यय होते हैं। **उदाहरण**—'त्वं भवसि।' यहाँ युष्मद् शब्द का प्रयोग नियमतः अपेक्षित नहीं है। युष्मद् शब्द के प्रयोग के बिना भी 'भवसि' इत्यादि मध्यमपुरुष के प्रयोग होते हैं।

**(४१४) पद**—अस्मदि, उत्तमः। **अनुवृत्ति**—समानाधिकरणे, स्थानिन्यपि। **विधिसूत्र।**

**मूलार्थ**—तिङ् का वाच्य कारकवाची अस्मद् शब्द के प्रयुज्यमान अथवा अप्रयुज्यमान होने पर भी उत्तमपुरुष होता है।

**प्रथमः** १।४।१०८ । मध्यमोत्तमयोरविषये प्रथमः स्यात् । भू ति इति जाते । ( ४१६ ) **तिङ्शित्सार्वधातुकम्** ३।४।११३ । तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः । ( ४१७ ) **कर्तरि शप्** ३।१।६८ । कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात् । ( ४१८ ) **सार्वधातुकार्द्धधातुकयोः** ७।३।८४ । अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात् । 'एचो-

---

( ४१५ ) **शेष इति** । तिङ्वाच्यकारकवाचिनि युष्मदस्मद्भिन्ने तदादिपदे प्रयुज्यमानेऽप्रयुज्यमाने च प्रथमः पुरुषः स्यादित्यर्थः । यथा—'सः भवती'त्यादौ ।

( ४१७ ) **कर्तरि शप् इति** । शकारोऽत्र सार्वधातुकसंज्ञार्थः, तस्य 'लशक्वतद्धिते' इतीत्संज्ञायां लोपः । पकारोऽनुदात्तार्थः पित्कार्यार्थश्च । तस्य 'हलन्त्यमि'तीत्संज्ञायां लोपः । 'शप्'विकरणोऽयं धातुप्रत्ययमध्यपाती ।

( ४१८ ) **सार्वधातुक इति** । 'इको गुणवृद्धी'ति परिभाषया इक पदमुपतिष्ठते, सोऽङ्गं विशिनष्टि । तदन्तविधिः । 'मिदेर्गुणः' इत्यतः 'गुणः' इत्यनुवर्तते । तदाह—**अनयोरित्यादिना** । **भवति** । सत्तार्थकाद् भूधातोः 'लः कर्मणि च भावे चाकर्मकेभ्यः'

---

**विमर्श**—पूर्व सूत्र ( ४१३ ) से 'समानाधिकरणे' तथा 'स्थानिन्यपि' पदों की अनुवृत्ति आ रही है । अतः तिङ् का वाच्य जो कारक, तद्वाचक जो अस्मद् शब्द, उसका प्रयोग रहे या न रहे—ऐसी दशा में भी लकार के स्थान में उत्तमपुरुषसंज्ञक तिङ् प्रत्यय होते हैं ।

**( ४१५ ) पद**—शेषे, प्रथमः । **विधिसूत्र** ।

**मूलार्थ**—मध्यम और उत्तम पुरुष के अविषय में प्रथमपुरुष होता है ।

**विमर्श**—'भू' से यहाँ प्रथमपुरुष एकवचन में तिप् प्रत्यय आने पर—'भू+ति' । उक्त मध्यम और उत्तम पुरुष के विषय को छोड़कर अन्यत्र सर्वत्र लकार के स्थान में प्रथमपुरुषसंज्ञक 'तिङ्' प्रत्यय होते हैं ।

**( ४१६ ) पद**—तिङ्, शित्, सार्वधातुकम् । **संज्ञासूत्र** ।

**मूलार्थ**—'धातोः' ( ३।१।९१ ) के अधिकार में पठित तिङ् और शित् प्रत्ययों की सार्वधातुक संज्ञा होती है ।

**( ४१७ ) पद**—कर्तरि, शप् । **अनुवृत्ति**—सार्वधातुके, धातोः । **विधिसूत्र** ।

**मूलार्थ**—कर्त्रर्थक सार्वधातुक के परे रहते धातु से 'शप्' प्रत्यय होता है ।

**विमर्श**—प्रकृत सूत्र में 'सार्वधातुके यक्' ( १।३।६७ ) से 'सार्वधातुके' तथा 'धातोरेकाचः' ( ३।१।२२ ) से 'धातोः' पद की अनुवृत्ति आती है । इस प्रकार कर्ता अर्थ में विहित सार्वधातुक-संज्ञक प्रत्यय के परे रहते धातु से 'शप्' रूप विकरण होता है । शप् में शकार की 'लशक्वतद्धिते' से इत्संज्ञा, पकार की 'हलन्त्यम्' से इत्संज्ञा होने पर 'तस्य लोपः' से दोनों का लोप हो जाता है । शप्=अ शेष रहता है ।

**( ४१८ ) पद**—सार्वधातुकार्धधातुकयोः । **अनुवृत्ति**—इक्, गुणः । **विधिसूत्र** ।

**मूलार्थ**—सार्वधातुक तथा आर्धधातुक प्रत्यय के परवर्ती रहने पर इगन्त अङ्ग को गुण होता है । अवादेश । भवति । भवतः ।

**विमर्श**—यहाँ 'इको गुणवृद्धी' परिभाषा द्वारा 'इक्' पद की उपस्थिति होती है । 'अङ्गस्य' का अधिकार है । 'मिदेर्गुणः' ( ७।३।८२ ) से 'गुणः' पद की अनुवृत्ति आ रही है । 'इक्' पद

ऽयवायावः' इति अवादेशः। भवति। भवतः। (४१९) झोऽन्तः ७।१।३। प्रत्ययावयवस्य झस्यान्तादेशः स्यात्। अतो गुणे। भवन्ति। भवसि। भवथः। भवथ।

---

इति कर्तरि खले कपोतन्यायेन दशापि लकाराः प्राप्ताः। तत्रापि वर्तमानकालविवक्षायां 'वर्तमाने लट्' इति लटचनुबन्धलोपे, तस्य स्थाने 'तिप्तस्झि०' इत्यादिसूत्रेण सामान्येन तिबादिषु प्राप्तेषु अस्य धातोः परस्मैपदित्वात् 'शेषात्कर्तरि परस्मैपदम्' इति परस्मैपदे प्राप्ते तत्रापि युष्मदस्मद्व्यतिरिक्ते उपपदे समानाधिकरणे विवक्षिते 'शेषे प्रथमः' इति प्रथमपुरुषे प्राप्ते तत्रापि प्रथमपुरुषगतैकत्वविवक्षायां तिपि, पकारस्येत्संज्ञायां 'तिङ्शित्सार्वधातुकम्' इति सार्वधातुकसंज्ञायां 'कर्तरि शप्' इति शप्प्रत्ययेऽनुबन्धलोपे शित्त्वात्सार्वधातुकसंज्ञायाम्, भू + अ + ति इति जाते, 'सार्वधातुकार्द्धधातुकयोः' इति भूघटकोकारस्य गुणे ओकारे 'एचोऽयवायावः' इति सूत्रेणावादेशे संयोगे च कृते 'भवती'ति सिद्धम्।

(४१९) **झोऽन्त इति।** 'आयनेयी'ति सूत्रात् प्रत्ययग्रहणमनुवर्तते, न त्वादिग्रहणम्, तेन 'शयान्तै' इत्यत्र शीङो झस्य 'लेटोऽडाटौ' इत्याटचपि झस्यान्तादेशसिद्धिः। प्रत्ययावयवझस्यान्तादेशस्वीकारेण उज्झितेत्यादौ धात्ववयवझकारस्यान्तादेशो न भवति। **भवन्तीति।** भू धातोः प्रथमपुरुषगतबहुत्वविवक्षायां झिप्रत्यये सार्वधातुकसंज्ञायां शप्यनुबन्धलोपे गुणेऽवादेशे 'झोऽन्तः' इत्यनेन झकारस्य 'अन्त्' इत्यादेशे 'भव अन्ति' इति जाते 'अतो गुणे' इति द्वयोरकारयोः सवर्णदीर्घापवादे पररूपे कृते 'भवन्ती'ति सिद्धम्।

---

'अङ्गस्य' का विशेषण होने से तदन्त-विधि होती है। 'अङ्गस्य' में स्थानषष्ठी होने के कारण अलोऽन्त्य परिभाषा के बल से अङ्ग के अन्त्य इक् को ही गुण होगा। इस प्रकार—'सार्वधातुक अथवा आर्धधातुक प्रत्यय के परवर्ती रहने पर, पूर्व में जो इगन्त अङ्ग, उसके अन्त्य अल् को गुण होता है'।

**उदाहरण**—(१) √भू+लट् (ल्=प्रथमपुरुष का एकवचन तिप्-ति)—भू+ति ('तिङ्शित्सार्वधातुकम्' से सार्वधातुक संज्ञा होने पर 'कर्तरि शप्' से शप्-अ)—भू+अ+ति (ऊ=ओ 'गुण'—'सार्वधातुकार्धधातुकयोः')—भो+अ+ति (ओ=अव् 'एचोऽयवायावः')=भवति। (२) √भू+लट्-ल् (ल्=प्रथमपुरुष का द्विवचन 'तस्')—भू+तस् (शप्-'अ' प्रत्यय)—भू+अ+तस् (ऊ=ओ गुण—'सार्वधातुकार्धधातुकयोः')—भो अ तस् (ओ=अव्)—भवतस् (स्=र्=ः)=भवतः।

**(४१९) पद**—झः, अन्तः। **अनुवृत्ति**—प्रत्ययः। **विधिसूत्र।**

**मूलार्थ**—प्रत्यय के अवयव 'झ' के स्थान में 'अन्त्' आदेश होता है।

**विमर्श**—प्रकृत सूत्र में 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' (७।१।२) सूत्र से स्वरितत्व प्रतिज्ञा होने से केवल 'प्रत्यय' पद की अनुवृत्ति आती है। वह प्रत्यय पद षष्ठ्यन्त में परिणत हो जाता है। अतः प्रत्ययावयव जो झ (झ्), उसके स्थान में अन्त् आदेश होता है।

**उदाहरण**—(१) भू+लट् (ल्=प्रथमपुरुष का बहुवचन झि)—भू+झि (सार्वधातुक संज्ञा शप्-अ होने पर)—भू+अ+झि ('सार्वधातु०' से गुण, अवादेश होकर)—भव+झि

**( ४२० ) अतो दीर्घो यञि ७।३।१०१ ।** अतोऽङ्गस्य दीर्घो यञादौ सार्वधातुके परे । भवामि । भवावः । भवामः । स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ । अहं भवामि । आवां भवावः । वयं भवामः । **( ४२१ ) शेषे**

---

( ४२० ) अतो दीर्घ इति । अङ्गस्येत्यधिकृतमता विशेष्यते । तेन तदन्तविधिः । 'तुरुस्तुशम्यम' इत्यस्मात्सार्वधातुक इत्यनुवर्तते यञा च विशेष्यते । तदादिविधिस्तदाह—**अतोऽङ्गस्येत्यादिना । भवामीति ।** भू धातोः उत्तमपुरुषगतैकत्वविवक्षायां मिप्प्रत्यये-ऽनुबन्धलोपे सार्वधातुकसंज्ञायां शपि गुणेऽवादेशे 'भव मि' इति स्थिते 'अतो दीर्घो यञि' इत्यनेन दीर्घे 'भवामी'ति । एवं भवावः, भवाम इति । अथ प्रथममध्यमोत्तम-पुरुषव्यवस्थां स्मारयितुमाह—**स भवतीत्यादि ।**

---

( 'झोऽन्तः' से 'झ्'='अन्त्' आदेश )—भव+अन्ति ( 'अतो गुणे' से पररूप—अ+अ=अ )= भवन्ति । ( २ ) भू+लट् ( ल्=मध्यमपुरुष का एकवचन सिप्–सि )—भू+सि ( शप्–श, गुण, अवादेश )=भवसि । ( ३ ) भू+लट् ( ल्=मध्यमपुरुष का द्विवचन 'थस्' )—भू+थस् ( शप्–अ, गुण, अवादेश )—भवथस् ( स्=र्=ः )=भवथः । ( ४ ) भू+लट् ( ल्= मध्यमपुरुष का बहुवचन 'थ' प्रत्यय आने पर )—भू+थ ( शप् , गुण, अवादेश )=भवथ ।

**( ४२० ) पद**—अतः, दीर्घः, यञि । **अनुवृत्ति**—सार्वधातुके । **विधिसूत्र ।**

**मूलार्थ**—यञादि सार्वधातुक के परे रहते अदन्त अङ्ग को दीर्घ होता है । भवामि । भवावः । भवामः ।

**विमर्श**—'अङ्गस्य' का अधिकार है । 'तुरुस्तुशम्यमः सार्वधातुके' ( ७।२।९५ ) सूत्र से 'सार्व-धातुके' पद की अनुवृत्ति आती है । उसका 'यञादि' विशेषण होने से तदादि विधि होती है । इस प्रकार ह्रस्व अकार है अन्त में जिसके, ऐसा जो अङ्ग, उसके अन्त्य 'अच्' को दीर्घ आदेश होता है—यञादि सार्वधातुक प्रत्यय के परवर्ती रहने पर ।

**उदाहरण**—( १ ) भू+लट् ( ल्=उत्तमपुरुष का एकवचन 'मिप्'-मि )—भू+मि ( शप्–अ, गुण, अवादेश )—भव+मि ( 'अतो दीर्घो यञि' से वकारोत्तरवर्ती अ=आ दीर्घ )= भवामि । ( २ ) भू+लट् ( ल्=उत्तमपुरुष का द्विवचन—'वस्' )—भू+वस् ( शप् , गुण, अवादेश )—भव+वस् ( अ='आ' दीर्घ )—भवावस् ( स्=र्=ः )=भवावः । ( ३ ) भू+ लट् ( ल्=उत्तमपुरुष का बहुवचन—'मस्' ) भू+मस् ( शप् , गुण, अवादेश )—भव+मस् ( दीर्घ )—भवामस् ( स्=र्=ः )=भवामः ।

**भू=होना लट् लकार ( वर्तमानकाल ) के रूप**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्रथमपुरुष | भवति | भवतः | भवन्ति |
| मध्यमपुरुष | भवसि | भवथः | भवथ |
| उत्तमपुरुष | भवामि | भवावः | भवामः |

इस प्रकरण में पूर्वोक्त प्रथमपुरुष, मध्यमपुरुष और उत्तमपुरुष की व्यवस्था का स्मरण दिलाने के लिए मूल में कहा गया है—सः भवति=वह उत्पन्न होता है । तौ भवतः=वे दोनों उत्पन्न होते हैं । ते भवन्ति=वे सब उत्पन्न होते हैं । त्वं भवसि=तुम उत्पन्न होते हो । युवां भवथः=तुम दोनों उत्पन्न होते हो । यूयं भवथ=तुम सब उत्पन्न होते हो । अहं भवामि=मैं

**विभाषाऽकखादावषान्त उपदेशे ८।४।१८।** उपदेशे कादिखादिषान्तवर्जे गदनदादेरन्यस्मिन्धातौ परे उपसर्गस्थान्निमित्तात्परस्य नेर्णत्वं वा स्यात् । प्रणिभवति । प्रनिभवति । **( ४२२ ) परोक्षे लिट् ३।२।११५ ।** भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः । **( ४२३ ) परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ३।४।८२ ।** लिटस्ति-

---

( ४२१ ) शेष इति । 'नेर्गदनद–' इति पूर्वसूत्रोक्तधातुभ्योऽन्यः शेषः । 'उपसर्गात्' इति वर्तते । तदाह—**उपदेश इत्यादि ।**

( ४२२ ) **परोक्षे लिट् इति ।** अक्षिभ्यः परं परोक्षम्, तस्मिन्काले 'परोक्षे' इति । **अनद्यतन इति ।** 'अनद्यतने लङि'त्यस्मादनद्यतन इत्यनुवर्तते । 'भूते' इत्यधिकृतम् । व्यतीतायाः रात्रेरुत्तरार्धत आगामिन्याः रात्रेः पूर्वार्द्धपर्यन्तं कालोऽद्यतनः, तद्भिन्नोऽनद्यतनः । निष्कर्षमाह—**भूतेत्यादिना ।**

( ४२३ ) लिटस्तझयोरित्यस्माद् 'लिटः' इत्यनुवर्तते । अत आह—**लिटस्तिबादी-**

---

उत्पन्न होता हूँ । आवां भवावः=हम दोनों उत्पन्न होते हैं । वयं भवामः=हम सभी उत्पन्न होते हैं ।

**( ४२१ ) पद**—शेषे, विभाषा, अकखादौ, अषान्तः, उपदेशे । **विधिसूत्र ।**

**मूलार्थ**—उपदेशावस्था में ककारादि, खकारादि, षकारान्त एवं गद, नद आदि से भिन्न धातु से परे रहते उपसर्गस्थ निमित्त से परवर्ती 'नि' के 'न्' को णत्व विकल्प से होता है ।

**विमर्श**—यहाँ 'शेष' पद का अभिप्राय 'नेर्गदनद–' ( ७।४।१७ ) सूत्र में पठित धातुओं से भिन्न धातुओं से है । इस प्रकार—'उपदेश में ककारादि, खकारादि एवं षकारान्त जो धातु, उनसे अतिरिक्त ( भिन्न ) गद्, नद् आदि धातुओं से भिन्न जो धातु, उनसे परे उपसर्गस्थ निमित्त ( र्, ष् ) से परवर्ती 'नि' के नकार को णकार विकल्प से होता है ।'

**उदाहरण**—( १ ) **'प्र नि+भवति'** ( यहाँ उपसर्गस्थ निमित्त 'प्र' का रेफ है, उससे परवर्ती 'न' को ( 'न्'='ण्' ) णत्व प्रकृत सूत्र से विकल्प से हुआ )=प्रणिभवति । पक्ष में णकाराभाव है—प्रनिभवति ।

**( ४२२ ) पद**—परोक्षे, लिट् । **अनुवृत्ति**—अनद्यतने । **विधिसूत्र ।**

**मूलार्थ**—भूत अनद्यतन, परोक्षार्थवृत्ति धातु से लिट् लकार होता है । 'लिट्' में 'इट्' की इत्संज्ञा, लोप । लकार के स्थान में तिबादि आदेश होते हैं ।

**विमर्श**—यहाँ 'अनद्यतने लङ्' ( ३।२।१११ ) से 'अनद्यतने' पद की अनुवृत्ति आ रही है । 'भूते' का अधिकार है । परोक्षत्व धात्वर्थ का विशेषण है । अद्यतन एवं अनद्यतन दो प्रकार का 'काल' होता है । गत रात्रि के १२ बजे से आगामी रात्रि के १२ बजे तक काल को 'अद्यतन' कहते हैं । उससे भिन्न काल को 'अनद्यतन' कहते हैं । इस प्रकार—'जहाँ भूत अनद्यतन काल वृत्ति क्रिया के साधन ( =कारक ) रहे, वहाँ धातु से परे लिट् लकार होता है ।'

**( ४२३ ) पद**—परस्मैपदानाम्, णल्, अतुस्, उस्, थल्, अथुस्, अ, णल्, वमाः । **अनुवृत्ति**—लिटः । **विधिसूत्र ।**

**मूलार्थ**—लिट् के स्थान में तिबादि नौ के स्थान में णलादि नौ आदेश होते हैं । **'भू+अ'** इस स्थिति के होने पर··· ····· ।

**बादीनां णलादयः स्युः । भू अ इति स्थिते । ( ४२४ ) भुवो वुग्लुङ्लिटोः ६।४।८८। भुवो वुगागमः स्यात् लुङ्लिटोरचि । ( ४२५ ) एकाचो द्वे प्रथमस्य ६।१।१। (४२६) अजादेर्द्वितीयस्य ६।१।२ । इत्यधिकृत्य । ( ४२७ ) लिटिधातोरनभ्यासस्य ६।१।८। लिटि परेऽनभ्यासस्य धात्ववयवस्यैकाचः प्रथमस्य द्वे स्तः, अजादिभूतादचः परस्य तु**

---

**नामिति । णलादय इति ।** णल्, अतुस्, उस्, थल्, अथुस्, अ, णल्, व, म इत्येते नव यथासङ्ख्यं स्युरित्यर्थः ।

( ४२४ ) **भुवो वुगिति ।** 'अचि श्नुधात्वि'त्यतः 'अची'त्यनुवर्तते । अत आह— **भुवो वुगागम** इत्यादि ।

( ४२७ ) **लिटि धातोरिति ।** हलादीनामेकाचामनेकाचां च धातूनां प्रथमावयवस्य द्वित्वम्, अजाद्यनेकाचां धातूनां तु द्वितीयावयवस्येत्यभिप्रायः ।

---

**विमर्श**—प्रकृत सूत्र में 'लिटस्तझयोरेशिरेच्' ( ३।४।८१ ) से 'लिटः' पद की अनुवृत्ति आती है । तदनुसार—'लिट् के स्थान में आदेश तिप् , तस् , झि, सिप् , थस् , थ, मिप् , वस् , मस् के स्थान में क्रमशः णल् , अतुस् , उस्, थल् , अथुस् , अ, णल् , व, म आदेश होते हैं ।'

**( ४२४ ) पद**—भुवः, वुक् , लुङ्लिटोः । **अनुवृत्ति**—अचि । **विधिसूत्र ।**

**मूलार्थ**—लुङ् , लिट् सम्बन्धी अच् के परवर्ती रहने पर भू धातु को वुक् का आगम होता है ।

**विमर्श**—यहाँ 'अचि श्नुधातु०' ( ६।४।७७ ) सूत्र से 'अचि' पद की अनुवृत्ति आ रही है । अतः 'भू धातु को वुक् ( व् ) का आगम होता है—लुङ् , लिट् सम्बन्धी अच् वर्ण के परे रहते ।'

**( ४२५ ) पद**—एकाचः, द्वे, प्रथमस्य । **अधिकारसूत्र ।**

**मूलार्थ**—यह अधिकार सूत्र है ।

**विमर्श**—प्रकृत सूत्रस्थ 'एकाच्' पद में बहुव्रीहि समास है ( एकोऽच् यत्र सः ) । अन्य पदार्थ धातु है । द्वित्व-विधायक सूत्रों से एकवाक्यता होने पर 'एकाच् धातु में प्रथम अच् वर्ण का द्वित्व होता है ।' यह अर्थ सम्पन्न होता है ।

**( ४२६ ) पद**—अजादेः, द्वितीयस्य । **अधिकारसूत्र ।**

**मूलार्थ**—यह भी अधिकार सूत्र है ।

**विमर्श**—पूर्वोक्त विधि के अनुसार 'अजादि धातु में द्वितीय अच् का द्वित्व होता है ।' यह अर्थ बोधन कराता है ।

**( ४२७ ) पद**—लिटि, धातोः, अनभ्यासस्य । **विधिसूत्र ।**

**मूलार्थ**—लिट् के परवर्ती रहने पर अभ्यास रहित धातु के प्रथम एकाच् को द्वित्व होता है और आदिभूत अच् से परे द्वितीय एकाच् को द्वित्व होता है । 'भूव् भूव् अ' ऐसी स्थिति होने पर ।

**विमर्श**—पूर्वोक्त दोनों सूत्र 'एकाचो द्वे प्रथमस्य' और 'अजादेर्द्वितीयस्य' का अधिकार है । अतः दोनों सूत्रों की प्रकृत सूत्र से एकवाक्यता होने पर यह अर्थ होता है—'लिट् परे रहते अभ्यास रहित ( जिसको द्वित्व न हुआ हो ) धातु के अवयव प्रथम एकाच् ( एक अवयव वाले भाग ) को द्वित्व होता है । यदि अच् है आदि में जिसके, ऐसा दो अच् वाला धातु हो, तो वहाँ द्वितीय एकाच् का ही द्वित्व होता है । इस प्रकार हलादि धातु चाहे एकाच् हो अथवा अनेकाच्

द्वितीयस्य । भूव् भूव् अ इति स्थिते । ( ४२८ ) **पूर्वोऽभ्यासः ६।१।४ ।** अत्र ये द्वे तयोः पूर्वोऽभ्याससंज्ञः स्यात् । ( ४२९ ) **हलादिः शेषः ७।४।६० ।** अभ्यासस्याऽऽदिर्हल् शिष्यतेऽन्ये हलो लुप्यन्ते । इति वलोपः । ( ४३० ) **ह्रस्वः ७।४।५९ ।** अभ्यासस्याऽचो ह्रस्वः स्यात् । ( ४३१ ) **भवतेरः ७।४।७३ ।** भवतेरभ्यासोकारस्य अः स्या-

---

( ४२९ ) **हलादिः शेष इति ।** 'अत्र लोपोऽभ्यासस्ये'त्यतोऽभ्यासस्येत्यनुवर्तते ।

( ४३० ) ननु सातत्यगमनार्थके 'अत' धातौ आदिहलभावात् कथं सूत्रस्य प्रवृत्तिः स्यादिति चेन्न, 'ह्रस्वो हलादिशेषः' इति संहितापाठे अहलादि शेष इति छेदेन अभ्यासस्याऽहल् = हलभावो भवति, अर्थात् अभ्यासो हल्रहितो भवतीत्यर्थस्वीकारेण प्रवृत्तौ बाधकाभावात् ।

( ४३१ ) **भवतेर इति ।** प्रयोगे दृष्टस्य भूशब्दस्यानुकरणं विधाय श्तिप्प्रत्ययः ।

---

उसके प्रथम एकाच् को ही द्वित्व होता है। अजादि धातु यदि अनेकाच् होगा, तो द्वितीय एकाच् को ही द्वित्व होगा। जैसे—अनेकाच् 'ऊर्णुञ्' धातु में द्वितीय एकाच् 'णु' को ही द्वित्व होता है।

उक्त नियमानुसार यहाँ 'भूव् अ' में प्रथम एकाच् भूव् को द्वित्व होकर 'भूव् भूव् अ' ऐसी स्थिति हुई।[1]

**( ४२८ ) पद**—पूर्वः, अभ्यासः । **संज्ञासूत्र ।**

**मूलार्थ**—यहाँ जो दो किये गये हैं, उनमें से प्रथम की अभ्यास संज्ञा होती है।

**विमर्श**—यह सूत्र छठे अध्याय ( द्वित्व-विधायक प्रकरण ) का है। अतः द्वित्व विधान करके जो दो रूप बनाये गये हैं, उनमें से प्रथम की अभ्यास संज्ञा होती है।

**( ४२९ ) पद**—हलादिः, शेषः । **अनुवृत्ति**—अभ्यासस्य । **विधिसूत्र ।**

**मूलार्थ**—अभ्यास का आदि हल् शेष रहता है। अन्य हलों का लोप होता है। 'भूव्' में 'व्' का लोप हुआ।

**विमर्श**—यहाँ 'अत्र लोपोऽभ्यासस्य' सूत्र से 'अभ्यासस्य' पद की अनुवृत्ति आ रही है। तदनुसार अभ्यास के आदि में स्थित हल् शेष रहता है। अर्थात् इससे भिन्न हल् वर्णों का लोप हो जाता है।

**( ४३० ) पद**—ह्रस्वः । **अनुवृत्ति**—अभ्यासस्य । **विधिसूत्र ।**

**मूलार्थ**—अभ्यास के अच् को ह्रस्व होता है।

**विमर्श**—प्रकृत सूत्र में 'अत्र लोपोऽभ्यासस्य' ( ७।४।५८ ) से 'अभ्यासस्य' पद की अनुवृत्ति आती है। तथा सूत्र में 'ह्रस्व' शब्दोच्चारण से अच् विधान होने से 'अचश्च' ( १।२।२८ ) परिभाषा द्वारा अच् पद की उपस्थिति होती है। तदनुसार—'अभ्यास के अच् को ह्रस्व होता है'। 'भु भूव् अ' ऐसी स्थिति हुई।

**( ४३१ ) पद**—भवतेः, अः । **अनुवृत्ति**—अभ्यासस्य, लिटि । **विधिसूत्र ।**

**मूलार्थ**—भू धातु के अभ्यास के उकार को अकार आदेश होता है, लिट् के परवर्ती रहने पर।

**विमर्श**—यहाँ 'अत्र लोपोऽभ्यासस्य' ( ७।४।५८ ) से 'अभ्यासस्य' तथा 'व्यथो लिटि'

---

१. प्रकृत में 'भू' से वुक् ( व् ) आगम सहित 'भूव्' का ग्रहण होता है। अतः 'भूव्' में भी धातुत्व है। 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते।' ( परिभाषा )

ल्लिटि। (४३२) अभ्यासे चर्च ८।४।५४। अभ्यासे झलां चरः स्युर्जशश्च। 'झलां जशः, खयां चर' इति विवेकः। बभूव। बभूवतुः। बभूवुः। (४३३) लिट् च ३।४।

---

(४३२) अभ्यासे चर्च इति। 'झलां जश् झशी'त्यस्मात् झलामित्यनुवर्तते। चकारेण जश् समुच्चीयते। खयां चर इति। अयं विवेकोऽन्तरतमपरिभाषया लभ्यते। वर्गाणां प्रथमद्वितीयाः खयः, तेषां चरः चटतकपा इत्यर्थः। अत्रापि यद्वद्वर्ग्याः स्थानिनः तत्तद्वर्ग्या आदेशा भवन्तीत्यपि बोध्यम्। बभूव इति। भू धातोः 'परोक्षे लिट्' इति लिटयनुबन्धलोपे, लः स्थाने प्रथमपुरुषैकवचनविवक्षायां 'तिप्तस्झि०' इत्यादिना सूत्रेण तिपि, तत्स्थाने 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' इति णलि, अनुबन्धलोपे नित्यत्वाद् गुणवृद्धी बाधित्वा 'भुवो वुग्लुङ्लिटोः' इति वुगागमेऽनुबन्धलोपे 'भूव् अ' इति स्थिते वृक्षप्रचलनन्यायेन भूव् इत्यस्य 'लिटि धातोरनभ्यासस्ये'ति सूत्रेण द्वित्वे 'भूव् भूव् अ' इति जाते 'पूर्वोऽभ्यासः' इत्यनेन प्रथमस्य भूव् इत्यस्याभ्याससंज्ञायां 'हलादिः शेषः' इत्यनेन वकारस्य लोपे 'ह्रस्वः' इति ह्रस्वे 'भवतेरः' इत्यभ्यासोकारस्य अकारे 'अभ्यासे चर्च' इत्यनेनाभ्याससंज्ञकस्य भकारस्य बकारे कृते 'बभूव' इति रूपम्।

---

(७।४।६८) से 'लिटि' पद की अनुवृत्ति आती है। तदनुसार—'लिट् के परे रहने पर भू धातु के अभ्यास में स्थित उ वर्ण को अकार आदेश होता है'।

**(४३२) पद**—अभ्यासे, चर्, च। **अनुवृत्ति**—झलाम्, जश्। **विधिसूत्र**।

**मूलार्थ**—अभ्यास में झल् के स्थान में जश् और चर् आदेश होते हैं। अर्थात् 'झल्' के स्थान में 'जश्' और 'खय्' के स्थान में 'चर्' आदेश होता है।

**विमर्श**—प्रकृत सूत्र में 'झलां जश् झशि' (८।४।५३) सूत्र से 'झलाम्' पद की अनुवृत्ति आती है। सूत्रस्थ 'च' द्वारा—उसी सूत्र से 'जश्' का समुच्चय किया जाता है। इस प्रकार झल् वर्णों के स्थान में जश् (ज्, ब्, ग्, ड्, द्) और खय् वर्णों के स्थान में चर् आदेश होते हैं। प्रकृत में झल् (भ्) चतुर्थ वर्ण के स्थान में जश् तृतीय वर्ण (ब्) होने पर बभूव प्रयोग सिद्ध हुआ।

**उदाहरण**—(१) भू+लिट् (ल्=प्रथमपुरुष एकवचन तिप्–ति)—भू+तिप् (परस्मै० से तिप्=णल्=अ)—भू+अ (वुक्–व् का आगम—'भुवो०')—भूव् अ ('लिटि धातो०' से द्वित्व)—भूव् भूव् अ (अभ्यास संज्ञा होकर 'हलादिः शेषः' से व् का लोप)—भू भूव् अ (ऊ=उ—'ह्रस्वः')—भु भूव् अ (उ=अ—'भवतेरः')—भभूव् अ (भ्=ब्—'अभ्यासे चर्च')=बभूव।

(२) भू+लिट् (ल्=प्र० पु० द्विवचन 'तस्' भू+तस् (तस्=अतुस्)—भू अतुस् (वुक्–व् का आगम)—भूव् अतुस् (द्वित्व)—भूव् भूव् अतुस् (अभ्यास संज्ञा, व् का लोप—'हलादिः शेषः')—भू भूव् अतुस् (ऊ=उ=अ)—भभूव् अतुस् (भ्=ब्)—बभूवतुस् (स्=र्=ः)=बभूवतुः।

(३) भू+लिट् (ल्=प्र० पु० बहुवचन 'झि')—भू झि (झि=उस्)—भू उस् (वुक्–व् का आगम, द्वित्व)—भूव् भूव् उस् (व् का लोप)—भू भूव् उस् (ऊ=उ=अ)—भभूव् उस् (भ्=ब्)—बभूवुस् (स्=र्=ः)=बभूवुः।

११५। लिडादेशस्तिङार्धधातुकसंज्ञः स्यात्। (४३४) आर्द्धधातुकस्येड् वलादेः ७।२।३५। वलादेरार्धधातुकस्येडागमः स्यात्। बभूविथ। बभूवथुः। बभूव। बभूव।

---

(४३३) लिट् चेति। 'तिङ्शित्सार्वधातुकमि'त्यस्मात् तिङित्यनुवर्तते, 'आर्धधातुकं शेषः' इत्यस्मादार्धधातुकमिति चेत्याह--- लिडादेश इत्यादि।

(४३४) आर्धधातुकस्येड् इति। 'नेड्वशी'त्यस्मादनुवृत्त्यैव सिद्धे पुनरिड्ग्रहणं नेत्यस्य निवृत्त्यर्थम्। आर्धधातुकस्येति किम्? जुगुप्सति। बभूविथ। भूधातोः 'परोक्षे लिट्' इति लिटयनुबन्धलोपे तत्स्थाने मध्यमपुरुषगतैकत्वविवक्षायां सिपि तस्य 'लिट् चे'ति सूत्रेणार्धधातुकसंज्ञायां 'परस्मैपदानां०' इत्यादिना सिपः स्थाने थलादेशेऽनुबन्धलोपे 'आर्धधातुकस्येड् वलादेः' इति थकारस्येडागमेऽनुबन्धलोपे 'भू + इ + थ' इति जाते 'भुवो वुग्लुङ्लिटोः' इत्यनेन वुगागमेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्ये'ति सूत्रेण द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां 'हलादिः शेषः' इति वकारलोपे 'ह्रस्वः' इति

---

**(४३३) पद**—लिट्, च। **अनुवृत्ति**—तिङ्, आर्धधातुकम्। **संज्ञासूत्र**।

**मूलार्थ**—लिट् के स्थान में आदेश तिङ् की आर्धधातुक संज्ञा होती है।

**विमर्श**—यहाँ 'तिङ्शित्सार्वधातुकम्' (४१६) से 'तिङ्' तथा 'आर्धधातुकं शेषः' (३।४।११४) से 'आर्धधातुकम्' पदों की अनुवृत्ति आ रही है। तदनुसार—'लिट् के स्थान में जो आदेश तिङ् होता है, उसकी आर्धधातुक संज्ञा होती है। पूर्वोक्त सार्वधातुकसंज्ञा नहीं होती।'

**(४३४) पद**—आर्धधातुकस्य, इट्, वलादेः।

**मूलार्थ**—वलादि आर्धधातुक को 'इट्' (इ) का आगम होता है।

**विमर्श**—वल् प्रत्याहार बोध्य वर्ण के आदि में रहने पर आर्धधातुकसंज्ञक प्रत्यय को इट् का आगम होता है। 'आद्यन्तौ टकितौ' से यह टित् आगम आगमी का आदि अवयव होता है। यहाँ 'नेड्वशि कृति' से इट् की अनुवृत्ति सम्भव थी, परन्तु फिर भी सूत्र में पुनः इट् ग्रहण किया गया। वह इट् ग्रहण व्यर्थ होकर ज्ञापन करता है कि इट् इट् ही रहता है, उसके स्थान में गुणादि कोई कार्य नहीं होते। अतः 'भवित् आ' यहाँ इट् (इ) का लघूपध गुण नहीं हुआ।

**उदाहरण**—(१) भू + लिट् (ल्=मध्यमपुरुष एकवचन 'सिप्', आर्धधातुकसंज्ञा—'लिट् च' सिप्=थल्-थ—'परस्मैपदानाम्०')—भू + थ (इट्-इ का आगम—'आर्धधातुकस्येड् वलादेः')—भू इ थ (वुक्—व् का आगम)—भूव् इ थ (द्वित्व)—भूव् भूव् इ थ (अभ्याससंज्ञा, व् का लोप—'हलादिः शेषः')—भू भूव् इ थ (ऊ=उ—'ह्रस्वः', उ=अ—'भवतेरः', भ्=ब्—'अभ्यासे चर्च')=बभूविथ। (२) भू + लिट् (ल्=म० पु० द्वि० व० थस्=अथुस्)—भू + अथुस् (वुगादि कार्य पूर्ववत)—बभूवथुस् (स्=र्=ः)=बभूवथुः। (३) भू + लिट् (ल्=म० पु० बहुवचन 'थ', थ=अ)—भू + अ (वुक् आदि कार्य पूर्ववत)=बभूव। (४) भू + लिट् (ल्=उत्तमपुरुष एकवचन मिप्, मिप्=णल्=अ)—भू + अ (वुगादि कार्य पूर्ववत्)=बभूव। (५) भू + लिट् (ल्=उ० पु० द्विवचन 'वस्' वस्=व)—भू + व (यहाँ वलादि आर्धधातुक होने से इट्-इ का आगम—'आर्धधातुक०')—भू इ व (वुगादि कार्य पूर्ववत)=बभूविव। (६) भू + लिट् (ल्=उ० पु० बहुवचन 'मस्', मस्=म)—भू + म (इट् का आगम)—भू इ म, (वुगादि कार्य पूर्ववत)=बभूविम।

**बभूविव । बभूविम । ( ४३५ ) अनद्यतने लुट् ३।३।१५ ।** भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् । **( ४३६ ) स्यतासी लृलुटोः ३।१।३३ ।** धातोरेतौ स्तो ऌलुटोः परतः । शबाद्यपवादः । 'ऌ' इति ऌङ्ऌटोर्ग्रहणम् । **( ४३७ ) आर्द्धधातुकं शेषः ३।४।११४ ।** तिङ्शिद्भ्योऽन्यो 'धातोरि'ति विहितः प्रत्यय एतत्संज्ञः स्यात् । इट् । **( ४३८ ) लुटः प्रथमस्य डारौरसः २।४।८५ ।** एते क्रमादादेशाः स्युः । डित्वसामर्थ्यादभस्यापि

---

सूत्रेणाभ्यासस्य ह्रस्वे 'भवतेरः' इत्यनेनोकारस्याकारे 'अभ्यासे चर्च' इति सूत्रेण भकारस्य जश्त्वेन बकारे वर्णसम्मेलने कृते 'बभूविथ' इति सिद्धम् ।

( ४३६ ) **स्यतासीति ।** 'निरनुबन्धकग्रहणे सामान्यग्रहणम्' इति न्यायात् यद्यपीह ऌशब्देन ऌङ्ऌटोर्ग्रहणम्, तथापि यथासङ्ख्यं वाचकशब्दसाम्यात् ।

( ४३८ ) **लुटः प्रथमस्येति ।** लुट इति स्थानषष्ठी, लुडादेशस्य प्रथमपुरुषस्येत्यर्थः ।

---

भू धातु लिट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | बभूव | बभूवतुः | बभूवुः |
| म० पु० | बभूविथ | बभूवथुः | बभूव |
| उ० पु० | बभूव | बभूविव | बभूविम |

**( ४३५ ) पद**—अनद्यतने, लुट् । **अनुवृत्ति**—भविष्यति । **विधिसूत्र ।**

**मूलार्थ**—भविष्यत् अनद्यतन अर्थ में धातु से लुट् लकार होता है ।

**विमर्श**—प्रकृत सूत्र में 'भविष्यति गम्यादयः' सूत्र से 'भविष्यति' पद की अनुवृत्ति आती है । काल का अन्वय क्रिया में ही होता है । जब भविष्यत्कालीन क्रिया का अनद्यतनत्व=आज का न होना, बतलाया जा रहा हो तो लुट् लकार का प्रयोग होता है ।

**( ४३६ ) पद**—स्यतासी, ऌलुटोः । **विधिसूत्र ।**

**मूलार्थ**—धातु से स्य और तासि प्रत्यय ऌ ( ऌट्, ऌङ् ) और लुट् के परे रहते । सूत्रस्थ ऌ से ऌट् और ऌङ् का ग्रहण होता है ।

**विमर्श**—'धातोः' का अधिकार है । 'निरनुबन्धकग्रहणे सामान्यग्रहणम्' ( जहाँ अनुबन्ध रहित का ग्रहण किया जाता है, वहाँ सामान्य का ग्रहण होता है । ) इस परिभाषा के द्वारा यहाँ अनुबन्ध रहित 'ऌ' पद से 'ऌङ्' और 'ऌट्' का ग्रहण होता है । अतः ऌङ् और ऌट् के परवर्ती रहने पर धातु से 'स्य' और ऌट् के परवर्ती रहने पर धातु से 'तासि' प्रत्यय होता है ।

**( ४३७ ) पद**—आर्धधातुकम्, शेषः । **संज्ञासूत्र ।**

**मूलार्थ**—तिङ् और शित् से भिन्न धातु से विहित प्रत्यय की आर्धधातुक संज्ञा होती है ।

**विमर्श**—'धातोः' का अधिकार है । पूर्वसूत्र ( ३।४।११३ ) में तिङ् और शित् प्रत्ययों की सार्वधातुक संज्ञा का विधान किया गया है । अतः प्रकृत सूत्रस्थ 'शेष' पद का तात्पर्य तिङ्, शित् से भिन्न प्रत्यय है । अतः 'धातोः' इस पञ्चम्यन्त का उच्चारण करके विधान किये गये तिङ्, शित् से भिन्न प्रत्ययों की 'आर्धधातुक' संज्ञा होती है ।

**( ४३८ ) पद**—लुटः, प्रथमस्य, डारौरसः । **विधिसूत्र ।**

**मूलार्थ**—'लुट्' के प्रथमपुरुष तिप्, तस्, झि के स्थान में क्रमशः डा, रौ, रस् आदेश होते हैं । भ संज्ञा न होने पर भी डकार की इत्संज्ञाकरण-सामर्थ्य से टिलोप हुआ । भविता ।

**टेर्लोपः । भविता । ( ४३९ ) तासस्त्योर्लोपः ७।४।५० । सादौ प्रत्यये परे । ( ४४० ) रि च ७।४।५१ । रादौ प्रत्यये तथा । भवितारौ । भवितारः । भवितासि । भवितास्थः ।**

---

भविता इति । भूधातोः 'अनद्यतने लुट्' इति लुटि, तत्स्थाने प्रथमपुरुषस्यैकवचनविवक्षायां तिप्प्रत्ययेऽनुबन्धलोपे सार्वधातुकसंज्ञायां प्राप्तं शप्प्रत्ययं प्रबाध्य **'स्यतासी ऌलुटोः'** इति तासि, तस्य **'आर्धधातुकं शेषः'** इत्यार्धधातुकसंज्ञायाम् **'आर्धधातुकस्येड् वलादेः'** इतीडागमेऽनुबन्धलोपे 'सार्वधातुकार्धधातुकयोरि'त्यनेन गुणेऽवादेशे 'लुटः प्रथमस्य डारौरसः' इत्यनेन तिपो डादेशेऽनुबन्धलोपे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे 'भविता' इति रूपम् ।

( ४३९ ) **तासस्त्योर्लोप इति ।** तास् च अस्तिश्चेति द्वन्द्वात्षष्ठी 'सः स्यार्द्धधातुके' इत्यतोऽनुवृत्तेन 'सी'ति सप्तम्यन्तेनाऽधिकृताङ्गाक्षिप्तप्रत्ययस्य विशेषणात् तदादिविधिः । अत आह—**रादाविति ।**

( ४४० ) **रि चेति ।** अङ्गाक्षिप्तस्य रेफेण विशेषणात् 'यस्मिन् विधि०' इति तदादिविधिस्तदाह—**रादाविति ।**

---

**विमर्श**—परस्मैपदी तथा आत्मनेपदी दोनों प्रकार की धातु के प्रथमपुरुष में इस सूत्र की प्रवृत्ति होती है । अतः लुट् के स्थान में आदेश तिप्, तस्, झि या त, आताम्, झ के स्थान में क्रमशः डा, रौ, रस् आदेश होते हैं ।

**डित्त्वेति**—यह 'डा' यद्यपि स्वादि कप्-प्रत्ययान्तों के अन्तर्गत नहीं आता, अतः इसके परवर्ती रहने पर भसंज्ञा नहीं होती, फलतः 'टेः' सूत्र से टिलोप भी प्राप्त नहीं होता । तथा डित् ( ड् की इत्संज्ञा ) होने से भसंज्ञक न होने पर भी अङ्ग की 'टि' का लोप हो जाता है । अन्यथा डित्करण व्यर्थ होगा ।

**उदाहरण**—भू+लुट् ( 'अनद्यतने लुट्' )—भू लुट् ( ल्=प्रथमपुरुष एकवचन तिप् )—भू +ति ( सार्वधातुक संज्ञा होने पर प्राप्त शप् प्रत्यय का बाधकर तास् प्रत्यय—'स्यतासी ऌलुटोः' )—भू तास् ति ( आर्धधातुक संज्ञा—'आर्धधातुकं शेषः' इट्=इ का आगम—'आर्धधातुकस्येड्०' )—भू इ तास् ति ( 'ऊ'='ओ' गुण—'सार्वधातु०', ओ=अव् )—भवितास् ति ( ति=डा 'लुटः प्रथमस्य०' डा=आ )—भवितास् आ ( टि=आस् का लोप—'डित्त्वसामर्थ्यादभस्यापि टेर्लोपः' ) =भविता ।

**( ४३९ ) पद**—तासस्त्योः, लोपः । **विधिसूत्र ।**

**मूलार्थ**—सादि प्रत्यय के परवर्ती रहने पर तास् और अस्ति के सकार का लोप होता है ।

**विमर्श**—यहाँ 'स स्यार्धधातुके' ( ७।४।४९ ) से सप्तम्यन्त 'सि' की अनुवृत्ति आती है । तदादिविधि होकर स् है आदि में जिसके, ऐसे प्रत्यय के परे रहते तास् और अस्ति के 'स्' का लोप होता है । ( यह सकार का लोप 'अलोऽन्त्य' परिभाषा के बल से होता है । )

**( ४४० ) पद**—रि, च । **अनुवृत्ति**—तासस्त्योर्लोपः । **विधिसूत्र ।**

**मूलार्थ**—रकारादि प्रत्यय के परवर्ती होने पर भी तास् और अस् के 'स्' का लोप होता है । भवितारौ । भवितारः । इत्यादि ।

**विमर्श**—यहाँ पूर्वसूत्र ( ४३९ ) की अनुवृत्ति आ रही है । अतः रकारादि प्रत्यय के परे होने पर भी पूर्ववत् तास् और अस् का लोप होता है । यहाँ भी 'अलोऽन्त्यस्य' परिभाषा से अन्त्य स् का ही लोप होता है ।

भवितास्थ । भवितास्मि । भवितास्वः । भवितास्मः । ( ४४१ ) लृट् शेषे च ३।३।१३ । भविष्यदर्थाद्धातोर्लृट् क्रियार्थायां क्रियायामसत्यां सत्यां च । स्यः । इट् । भविष्यति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भवि-

---

( ४४१ ) लृट् शेषे चेति । शेषः क्रियार्थोपपदादन्यः । क्रिया अर्थः प्रयोजनं यस्याः क्रियायाः सा क्रियार्था, सा उपपदं यस्मिन् भविष्यति काले ततोऽन्यो भविष्यदित्यर्थः । 'भविष्यती'ति । भूधातोः 'लृट् शेषे चे'ति सूत्रेण लृटचनुबन्धलोपे तत्स्थाने 'तिप्तस्झी'त्यादिना प्रथमपुरुषस्यैकवचनविवक्षायां तिप्यनुबन्धलोपे सार्वधातुक-संज्ञायामपवादत्वेन शपं प्रबाध्य 'स्यतासी लृलुटोरि'त्यनेन स्यप्रत्यये 'आर्धधातुकं शेषः' इत्यनेनार्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड् वलादेः' इतीडागमेऽनुबन्धलोपे 'सार्व-धातुकार्धधातुकयोरि'ति इगन्ताङ्गस्य गुणेऽवादेशे 'आदेशप्रत्यययोः' इति षत्वे कृते 'भविष्यती'ति सिद्धम् ।

---

**उदाहरण**—( १ ) भू+लुट् ( ल्=प्रथमपुरुष द्विवचन—'तस्' प्रत्यय )—भू+तस् ( 'तास्' प्रत्यय—'स्यतासी०' )—भू तास् तस् ( आर्धधातुक संज्ञा होने पर इट् का आगम—'आर्ध-धातुकस्येड्०' )—भू इ तास् तस् ( 'ऊ'='ओ'-गुण, ओ=अव् )—भवितास् तस् ( तस्=रौ—'लुटः प्रथम०' )—भवितास् रौ ( 'स्' का लोप—'रि च' )=भवितारौ ।

( २ ) भू+लुट् ( ल्=प्र० पु० बहुवचन—झि )—भू झि ( पूर्वोक्त तास् आदि कार्य होने पर )—भवितास् झि ( झि=रस् )—भवितास् रस् ( 'स्' का लोप )—भवितारस् ( स्=र्=ः ) =भवितारः । ( ३ ) भू+लुट् ( ल्=मध्यम पु० एकवचन—सिप्='सि' )—भू सि ( पूर्वोक्त तास् आदि कार्य होने पर )—भवितास् सि ( 'स्' का लोप—'तासस्त्योर्लोपः' )=भवितासि । इसी प्रकार—भवितास्थः, भवितास्थ । ( ४ ) भू+लुट् ( उत्तमपुरुष एकवचन मिप्-मि ) भू मि ( पूर्वोक्त तास्, इट्, गुण, अवादेश होने पर )=भवितास्मि । ( ५ ) भू+लुट् ( उ० पु० द्विवचन 'वस्' । पूर्वोक्त कार्य होने पर )—भवितास्वस् ( स्=र्=ः )=भवितास्वः । ( ६ ) भू+लुट् ( उ० पु० बहुवचन 'मस्' ) भू मस् ( पूर्वोक्त तास् आदि कार्य होने पर )—भवितास्मस् ( स्=र्=ः ) =भवितास्मः ।

### भू धातु के लुट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | भविता | भवितारौ | भवितारः |
| म० पु० | भवितासि | भवितास्थः | भवितास्थ |
| उ० पु० | भवितास्मि | भवितास्वः | भवितास्मः |

**( ४४१ ) पद**—लृट्, शेषे च । **अनुवृत्ति**—भविष्यति । **विधिसूत्र** ।

**मूलार्थ**—क्रियार्थक क्रिया के रहने पर अथवा न रहने पर भविष्यत् अर्थ में धातु से लृट् लकार होता है । इट् होने पर । भविष्यति । भविष्यतः । इत्यादि ।

**विमर्श**—यहाँ 'धातोः' का अधिकार है । 'भविष्यति गम्यादयः' सूत्र से 'भविष्यति' की अनुवृत्ति आती है । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' ( ३।३।१० ) पूर्व सूत्र में 'क्रियार्थायां क्रियायाम्' ( क्रियार्थक क्रिया उपपद रहने पर ) अर्थ निर्देश है । उससे भिन्न 'शेष' पदार्थ है । अर्थात् क्रियार्थक क्रिया के न रहने पर भविष्यत् अर्थ में धातु से लृट् लकार होता है । सूत्रस्थ 'च' पद से क्रियार्थक क्रिया रहने पर भी भविष्यत्कालीन धातु से लृट् लकार होता है ।

ष्यावः । भविष्यामः । ( ४४२ ) लोट् च ३।३।१६२ । विध्यादिष्वर्थेषु धातोर्लोट् । ( ४४३ ) आशिषि लिङ्लोटौ ३।३।१७३ । ( ४४४ ) एरुः ३।४।८६ । लोट इकारस्य उः । भवतु । ( ४४५ ) तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् ७।१।३५ । आशिषि

---

( ४४२ ) लोट् चेति । अत्र 'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु' इत्यनुवर्तते । तदाह—विध्यादिष्विति ।

( ४४५ ) अथाशिषि लोटो विशेषमाह—तुह्योस्तातङिति । तुश्च हिश्च तुही,

---

( एक क्रिया यदि दूसरी क्रिया के लिए की जा रही हो तो उस क्रिया को क्रियार्थक क्रिया कहते हैं । जैसे—'पठितुं गच्छति' । यहाँ गमन क्रिया पठन क्रिया के लिए की जा रही है । अतः गमन क्रिया क्रियार्थक क्रिया है । )

**उदाहरण**—( १ ) भू+लृट् ( ल्=प्रथमपुरुष एकवचन तिप्-ति )—भू+ति ( सार्वधातुक संज्ञा 'शप्' का बाधकर 'स्य' प्रत्यय—'स्यतासी लृलुटोः' )—भू स्य ति ( आर्धधातुक संज्ञा—'आर्धधातुकं शेषः' इट्-इ—आर्धधातुकः )—भू इ स्य ति ( 'उ'='ओ'—गुण—'सार्वधातु०' 'ओ'='अव्' )—भविस्यति ( स्='ष्' षत्व—'आदेशप्रत्यययोः' )=भविष्यति । ( २ ) भू+लृट्=तस् ( पूर्वोक्त कार्यों के होने पर )—भविष्यतस् ( स्=रू=ः )=भविष्यतः । ( ३ ) भू+लृट्=प्र० पु० बहुवचन झि ( उक्त कार्य—झ्=अन्त् आदेश )=भविष्यन्ति । ( ४ ) भू+लृट्=म० पु० एकवचन सिप्=भविष्यसि । ( ५ ) भू+लृट्=म० पु० द्विवचन थस्=भविष्यथः । ( ६ ) भू+लृट्=म० पु० बहुवचन थ=भविष्यथः । ( ७ ) भू+लृट्=उ० पु० एकवचन मिप्=भविष्यामि ( दीर्घ ) । ( ८ ) भू+लृट्=उ० पु० द्विवचन वस्=भविष्यावः । ( ९ ) भू+लृट्=उ० पु० बहुवचन मस्=भविष्यामः ।

### भू धातु लृट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | भविष्यति | भविष्यतः | भविष्यन्ति |
| म० पु०— | भविष्यसि | भविष्यथः | भविष्यथ |
| उ० पु०— | भविष्यामि | भविष्यावः | भविष्यामः |

**( ४४२ ) पद**—लोट् च । **अनुवृत्ति**—विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु । **विधिसूत्र ।**

**मूलार्थ**—विधि आदि अर्थ में धातु से लोट् लकार होता है ।

**विमर्श**—प्रकृत सूत्र में 'विधिनिमन्त्रणा०' ( ३।३।१६१ ) सूत्र से 'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु' पद की अनुवृत्ति आती है । तदनुसार—'विधि, निमन्त्रण, आमन्त्रण, अधीष्ट, सम्प्रश्न, प्रार्थना, आशीर्वाद आदि अर्थों में धातु से लोट् लकार होता है' ।

**( ४४३ ) पद**—आशिषि, लिङ्लोटौ । **विधिसूत्र ।**

**मूलार्थ**—आशीर्वाद अर्थ में धातु से लिङ् और लोट् लकार होते हैं ।

**( ४४४ ) पद**—एः, उः । **अनुवृत्ति**—लोटः । **विधिसूत्र ।**

**मूलार्थ**—लोट् सम्बन्धी 'इ' के स्थान में 'उ' आदेश होता है । भवतु ।

**विमर्श**—यहाँ 'लोटो लङ्वत्' ( ३।४।८५ ) सूत्र से 'लोटः' पद की अनुवृत्ति आती है । तदनुसार लोट् लकार के स्थान में आदेश इकार के स्थान में उकारादेश होता है ।

**( ४४५ ) पद**—तुह्योः, तातङ्, आशिषि, अन्यतरस्याम् । **विधिसूत्र ।**

तुह्योस्तातङ् वा । परत्वात्सर्वादेशः । ननु 'ङिच्चे'त्यस्य क्वावकाश इति चेच्छृणु । अनन्यार्थङकारयुक्ताऽनङादिष्विति गृहाण । भवतात् । ( ४४६ ) लोटो लङ्वत् ३।४।८५ । लोटस्तामादयः सलोपश्च । ( ४४७ ) तस्थस्थमिपां तान्तन्तामः ३।४।

---

तयोरिति । तातङि ङकार इत्, अकार उच्चारणार्थकः, तादित्येवावशिष्यते । अत्रानेकालत्वात्सर्वादिशता । नन्विति । 'ङिच्चे'त्यस्याऽनन्यार्थङित्वेषु 'अनङ्' आदिषु चरितार्थत्वान्न बाधकत्वम् । परत्वात्सर्वादेश एव । ङित्त्वप्रयोजनं तु 'युयात्' इत्यादौ गुणनिषेधः । भवतु । भूधातोः 'लोट् च' इति सूत्रेण 'आशिषि लिङ्लोटौ' इति सूत्रेण वा लोटयनुबन्धलोपे तत्स्थाने प्रथमपुरुषैकवचनविवक्षायां तिप्यनुबन्धलोपे सार्वधातुकसंज्ञायां 'कर्तरि शप्' इति शपि सकारपकारयोरित्संज्ञायां लोपे च 'तिङ्शित्सार्वधातुकमि'ति शपोऽकारस्यापि सार्वधातुकसंज्ञायां 'सार्वधातुकार्धधातुकयोः' इति गुणे 'एचोऽयवायावः' इत्यवादेशे 'भवति' इति जाते ''एरुः' इति तिप इकारस्योत्वे 'भवतु' इति । आशिषि तु 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' इत्यनेन 'तु' इत्यस्य विकल्पेनानेकालत्वात्सर्वादेशे तातङि, अनुबन्धलोपे 'भवतात्' इति । तदभावे तु—'भवतु' इति च ।

( ४४६ ) **लोटो लङ्वत्** । लङ् इव लङ्वत् 'तत्र तस्येवे'ति षष्ठ्यन्ताद्वतिः । लङ इति स्थानषष्ठ्यन्ताद्वतिप्रत्यये लङ्स्थानिकस्य कार्यस्यैवातिदेशः, न तु लङि

---

**मूलार्थ**—आशीर्वाद अर्थ में 'तु' और 'हि' के स्थान में विकल्प से 'तातङ्' आदेश होता है।

**विमर्श—परत्वादिति**—यहाँ पर होने के कारण 'तु' और 'हि' के स्थान में तातङ् ( तात् ) आदेश होता है।

यह 'तातङ्' आदेश ङित् है, जो 'ङिच्च' ( १।१।५३ ) सूत्र से अन्त्य 'अल्' के स्थान में प्राप्त है। परन्तु 'विप्रतिषेधे परं कार्यम्' से पर कार्य की प्रबलता सिद्ध होने के कारण 'अनेकाल्शित्सर्वस्य' ( १।१।५५ ) से सम्पूर्ण स्थानी 'तु' के स्थान पर ही तातङ् आदेश होता है। यहाँ शङ्का होती है कि 'ङिच्च' सूत्र निरवकाश होने से अपवाद होकर प्रबल हो सकता है, फिर सर्वादेश क्यों हुआ ? **उत्तर**—प्रकृत में तातङ् का ङित् करना अन्त्यादेश विधान के अतिरिक्त अन्य कार्यों की सिद्धि के लिए है। अतः वह निरवकाश नहीं है। 'ङिच्च' सूत्र अनङ् आदि के विधान में चरितार्थ है। अतः उसकी अपवादता सिद्ध न होने से यहाँ उसकी प्रवृत्ति नहीं होती। इस 'तातङ्' के ङकार के 'युयात्' आदि में गुण-निषेध, 'इज्यात्' आदि में सम्प्रसारण आदि प्रयोजन हैं।

**उदाहरण**—भू+लोट् ( ल्=प्रथमपुरुष एकवचन तिप्=ति )—भू+ति ( सार्वधातुक संज्ञा, शप्–अ )—भू अ ति ( 'उ'='ओ' गुण—'सार्वधातु०', 'ओ'='अव्' )—भवति ( 'इ'='उ'—'एरुः' )=भवतु। आशीर्वाद अर्थ में ( तु=तातङ्='तात्' विकल्प से—'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' )=भवतात्। तातङ् के अभाव पक्ष में—भवतु।

( ४४६ ) **पद**—लोटः, लङ्वत्। **अतिदेशसूत्र**।

**मूलार्थ**—लोट् के स्थान में लङ् के समान कार्य ( ताम् आदि आदेश और वस्, मस् के सकार का लोप ) होते हैं।

**विमर्श**—यह आरोपबोधक अतिदेशसूत्र है। लोट् को लङ् के समान कार्य होता है। अतः

**१०१। ङितश्चतुर्णां तसादीनां तामादयः स्युः। भवताम्। भवन्तु। (४४८) सेर्ह्यपिच्च ३।४।८७। लोटः सेर्हिः, सोऽपिच्च। (४४९) अतो हेः ६।४।१०५। लुक्।**

---

विधीयमानस्य कार्यस्य। लङो यथा तामादयः सलोपश्च भवति तथैव लोटोऽपि भवेदित्यर्थः।

(४४७) **तस्थस्थमिपामिति।** 'ङित् लकारस्थानिकानां तस्-थस्-थ-मिप् इत्येषां ताम्-तम् त-अम् इत्येते आदेशाः क्रमेण भवन्तीत्यर्थः।

(४४८) **सेर्ह्यपिच्च।** 'हि' इति लुप्तप्रथमाकम्। 'लोटो लङ्वत्' इत्यतो लोट् इत्यनुवर्तते। **भव, भवतादिति।** आशिषि भूधातोः लोट्यनुबन्धलोपे मध्यमपुरुषैकवचनविवक्षायां सिप्यनुबन्धलोपे सार्वधातुकसंज्ञायां शपि, शकारपकारयोरित्संज्ञायां लोपे च गुणेऽवादेशे, 'सेर्ह्यपिच्च' इत्यनेन सेः स्थाने 'हि' इत्यादेशे 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' इति विभाषया हेस्तातङादेशेऽनुबन्धलोपे 'भवतात्' इति। तदभावपक्षे तु 'अतो हेः' इति हेर्लुकि सति 'भव' इति रूपं भवति।

---

'तस्' आदि के स्थान में 'ताम्' आदेश एवं उत्तमपुरुष में सकार का लोप लोट् लकार में भी होता है।

**(४४७) पद**—तस्-थस्-थ-मिपाम्, तान्तन्ताऽमः। **अनुवृत्ति**—ङितः। **विधिसूत्र।**

**मूलार्थ**—ङित् लकार के तसादि (तस्-थस्-थ-मिप्) के स्थान में क्रमशः तामादि (ताम्-तम्-त-अम्) चार आदेश होते हैं।

**विमर्श**—'नित्यं ङितः' (३।४।९९) सूत्र से यहाँ 'ङितः' पद की अनुवृत्ति आती है। अतः ङित् लकार के स्थान में तसादि के स्थान में तामादि आदेश होते हैं।

**उदाहरण**—(१) भू+लोट् (ल्=प्र० पु० द्विवचन तस्)—भू तस् (शप्–'अ', ऊ='ओ'—गुण—'सार्वधातु०', ओ='अव्')—भवतस् ('लोटो लङ्वत्' सूत्र से लङ् कार्यातिदेश होने पर 'तस्'='ताम्'—'तस्थस्०')=भवताम्। (२) भू+लोट् (ल्=प्र० पु० बहुवचन झि)—भू+झि (शप्–अ, गुण, अवादेश, झ्='अन्त्'—'झोऽन्तः')—भवन्ति (इ=उ—'एरुः')=भवन्तु।

**(४४८) पद**—सेः, हि, अपित् च। **अनुवृत्ति**—लोटः। **विधिसूत्र।**

**मूलार्थ**—लोट् सम्बन्धी 'सि' के स्थान में 'हि' आदेश होता है और वह आदेश अपित् कहलाता है।

**विमर्श**—प्रकृत सूत्र द्वारा अपित् (पित्-भिन्न) विधान करने से 'सार्वधातुकमपित्' से वह ङिद्वत् हो जाता है और उसके परवर्ती रहने पर ङित्त्वप्रयुक्त गुण-निषेध आदि कार्य होते हैं।

**(४४९) पद**—अतः, हेः। **अनुवृत्ति**—लुक्। **विधिसूत्र।**

**मूलार्थ**—अदन्त अङ्ग से परवर्ती 'हि' का लुक् होता है। भव। भवतात्। भवतम्। भवत।

**विमर्श**—यहाँ 'चिणो लुक्' (६।४।१०४) से 'लुक्' पद की अनुवृत्ति आती है। 'अङ्गस्य' का अधिकार होने से अदन्त अङ्ग से परे 'हि' का लुक् होता है।

**उदाहरण**—(१) भू+लोट् (ल्=म० पु० एकवचन—सिप्='सि')—भू सि (शप्, गुण, अवादेश 'सि'='हि'—'सेर्ह्यपिच्च')—भव हि (परत्वात् लुक् का बाधकर हि=तातङ्='तात्')=भवतात्। तातङ् के अभाव पक्ष में—भव+हि ('हि' का लुक्—'अतो हेः')=भव।

भव। भवतात्। भवतम्। भवत। (४५०) मेर्निः ३।४।८९। लोटः। (४५१) आडुत्तमस्य पिच्च ३।४।९२। लोडुत्तमस्याऽऽट् स्यात् पिच्च। हिन्योरुत्वं न, इकारोच्चारणसामर्थ्यात्। भवानि। (४५२) ते प्राग्धातोः १।४।८०। ते गत्युपसर्गसंज्ञका

---

(४५१) हिन्योरिति। अत्रेकारोच्चारणसामर्थ्यात् हिन्योरुत्वं न भवति। अन्यथा—'सेर्ह्यपिच्च, मेर्निः' इत्युभयत्रापि उत्वमेवोच्चरितं भवेत्। भवानि। भूधातोः 'लोट् च' इति लोटि, तत्स्थाने उत्तमपुरुषगतैकत्वविवक्षायां तिप्यनुबन्धलोपे सार्वधातुकत्वे शप्यनुबन्धलोपे, शित्वात् सार्वधातुकसंज्ञायां गुणेऽवादेशे 'भव मि' इति जाते 'लोटो लङ्वत्' इति लङ्कार्यातिदेशेन 'तस्थस्थमिपां तान्तन्तामः' इति सूत्रेण मिपोऽमादेशे प्राप्ते तं प्रबाध्य 'मेर्निः' इति मेर्न्यादेशे, इकारोच्चारणसामर्थ्यान्निरिकास्योत्वाभावे 'आडुत्तमस्य पिच्च' इत्याडागमेऽनुबन्धलोपे सवर्णदीर्घे 'भवानी'ति सिद्धम्।

---

(२) भू+लोट् (ल्=म० पु० द्विवचन थस्, शप्, गुणावादेश)—भव थस् ('लोटो लङ्वत्' से लङ्वद्भाव होने पर थस्=तम्—'तस्थस्थमिपाम्०')=भवतम्। (३) भू+लोट् (ल्=म० पु० बहुवचन थ)—भू थ (शप्, गुणावादेश, लङ्वद्भाव, थ='त')=भवत।

**(४५०) पद**—मेः, निः। **अनुवृत्ति**—लोटः। **विधिसूत्र।**

**मूलार्थ**—लोट् सम्बन्धी 'मि' के स्थान में 'नि' आदेश होता है।

**विमर्श**—यहाँ 'लोटो लङ्वत्' (४४६) सूत्र से 'लोटः' पद की अनुवृत्ति आती है। तदनुसार—"लोट् लकार के स्थान में आदेश 'मि' के स्थान में 'नि' आदेश होता है"।

**(४५१) पद**—आट्, उत्तमस्य, पित्, च। **अनुवृत्ति**—लोटः। **विधिसूत्र।**

**मूलार्थ**—लोट् लकार सम्बन्धी उत्तमपुरुष को आट् का आगम होता है और वह आट् का आगम पित् होता है। इकारान्त आदेश विधान सामर्थ्य से यहाँ 'हि' एवं 'नि' के इवर्ण को 'एरुः' सूत्र से उकार आदेश नहीं होता। भवानि।

**विमर्श**—पूर्वसूत्र 'लोटो लङ्वत्' से 'लोटः' पद की अनुवृत्ति आ रही है। अतः लोट् के उत्तमपुरुष को 'आट्' का आगम होता है। यह 'आट्' टित् होने से 'आद्यन्तौ टकितौ' सूत्र के अनुसार प्रत्यय का आदि अवयव होता है। पित् होने से गुण आदि कार्य होते हैं। यहाँ 'हि' और 'नि' के इकार के स्थान में 'एरुः' (सू० ४४४) से 'उ' नहीं होता, इकार के उच्चारण सामर्थ्य से। अन्यथा आदेश विधान होने से 'हि' और 'नि' में इकारोच्चारण व्यर्थ हो जायेगा।

**उदाहरण**—भू+लोट् (ल्=उ० पु० एकवचन मिप्='मि')—भू मि (शप्, गुण, अवादेश 'मि'='नि'—'मेर्निः')—भव नि, (आट्='आ' का आगम)—भव आ नि (अ+आ='आ'—दीर्घ—'अकः सवर्णे दीर्घः')=भवानि।

**(४५२) पद**—ते, प्राक्, धातोः। **नियमसूत्र।**

**मूलार्थ**—गतिसंज्ञक और उपसर्गसंज्ञक प्र आदि का धातु से पहले प्रयोग करना चाहिए।

**विमर्श**—प्रकृत सूत्र में 'ते' पद आया है। उसका विवरण इस प्रकार है—इस सूत्र से पूर्व 'उपसर्गाः क्रियायोगे' (१।४।५९) तथा 'गतिश्च' (१।४।६०) सूत्र पढ़े गये हैं। अतः 'ते' पद से उपसर्गसंज्ञक एवं गतिसंज्ञक प्र आदि शब्दों का ग्रहण होता है।

धातोः प्रागेव प्रयोक्तव्याः । ( ४५३ ) आनि लोट् ८।४।१६ । उपसर्गस्थान्निमित्तात् परस्य लोडादेशस्याऽऽनीत्यस्य नस्य णः स्यात् । प्रभवाणि । * दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः * । दुःस्थितिः । दुर्भवानि । * अन्तःशब्दस्याऽङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् * । अन्तर्भवाणि । ( ४५४ ) नित्यं ङितः ३।४।९९ । सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः स्यात् । 'अलोऽन्त्यस्ये'ति सलोपः । भवाव । भवाम ।

---

( ४५३ ) आनि लोट् । 'रषाभ्यां नो णः' इत्यनुवर्तते, 'उपसर्गादसमासेऽपी'त्यत उपसर्गादिति च । तदाह—उपसर्गस्थान्निमित्तादिति । प्रभवाणि । 'ते प्राग्धातोः' इति नियमादत्र प्रपूर्वकाद् भूधातोः लोटि, तत्स्थाने उत्तमपुरुषैकवचनविवक्षायां मिप्यनुबन्धलोपे शप्यनुबन्धलोपे सार्वधातुकसंज्ञायां गुणेऽवादेशे मेर्न्यादिशे आडागमे दीर्घे 'आनि लोट्' इति णत्वे 'प्रभवाणी'ति सिद्धम् ।

---

**( ४५३ ) पद**—आनि, लोट् । **अनुवृत्ति**—नो णः, उपसर्गात् । **विधिसूत्र** ।

**मूलार्थ**—उपसर्गस्थ निमित्त ( र्, ष् ) से परे लोट् सम्बन्धी आनि के न् के स्थान पर ण् आदेश होता है । प्रभवाणि ।

**विमर्श**—यहाँ 'रषाभ्यां नो णः समानपदे' ( ८।४।१ ) सूत्र से 'रषाभ्यां नो णः' तथा 'उपसर्गादसमासेऽपि०' ( ८।४।१४ ) से 'उपसर्गात्' पद की अनुवृत्ति आती है । तदनुसार—"उपसर्ग में स्थित निमित्त से परवर्ती लोट् लकार सम्बन्धी जो 'आनि', उसके नकार के स्थान में णकार आदेश होता है" ।

**उदाहरण—प्रभवाणि**—यहाँ 'प्र+भवानि' दो पदों के मिलने के कारण समान अखण्ड पद न होने से 'अट्कुप्वाङ्०' से णत्व प्राप्त नहीं था । णत्व का निमित्त 'प्र' में 'र्' है, उससे परवर्ती 'आनि' के न्=ण्—'आनि लोट्'=प्रभवाणि ।

**वा०**—णत्व और षत्व के विषय में 'दुर्' को उपसर्ग का प्रतिषेध कहना चाहिए । ( अर्थात् 'दुर्' की उपसर्गसंज्ञा नहीं होती । )

**उदाहरण**—( १ ) दुःस्थितिः । यहाँ 'दुर्' उपसर्ग से परे 'स्था' के स् को 'उपसर्गात्सुनोति०' से षत्व प्राप्त है, जो वार्तिक से उपसर्गत्व का निषेध होने से नहीं होता ।

**उदाहरण**—( २ ) 'दुर्+भवानि' यहाँ 'आनि लोट्' से न्=ण् ( णत्व ) प्राप्त है, परन्तु 'दुरः०' वार्तिक से उपसर्गत्व का निषेध होने से नहीं होता । दुर्भवानि ।

**वा०**—अङ्विधि, किविधि और णत्वविधि के विषय में 'अन्तर्' शब्द की उपसर्ग संज्ञा होती है ।

**उदाहरण**—'अन्तर्+भवानि' ( यहाँ वार्तिक से 'अन्तर्' शब्द की उपसर्ग संज्ञा होने से 'न्'='ण्'—'आनि लोट्' )=अन्तर्भवाणि ।

**( ४५४ ) पद**—नित्यम्, ङितः । **अनुवृत्ति**—स उत्तमस्य, लोपः । **विधिसूत्र** ।

**मूलार्थ**—ङित् लकार सम्बन्धी सकारान्त उत्तमपुरुष का नित्य लोप होता है । भवाव । भवाम ।

**विमर्श**—यहाँ 'स उत्तमस्य' सूत्र की अनुवृत्ति आती है तथा 'इतश्च लोपः०' ( ३।४।९७ ) से 'लोपः' पद की अनुवृत्ति आती है । तदनुसार—'ङित् लकार ( लङ्, लिङ्, लुङ् और लृङ् ) सम्बन्धी उत्तमपुरुष का नित्य लोप होता है' । 'अलोऽन्त्यस्य' परिभाषा के बल से अन्त्य अल् ( सकार ) का लोप किया जाता है ।

**( ४५५ ) अनद्यतने लङ् ३।२।१११ ।** अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् । **( ४५६ ) लुङ्लङ्लृङ्क्ष्वडुदात्तः ६।४।७१ ।** एष्वङ्गस्याट् । **( ४५७ ) इतश्च ३।४।१०० ।** ङितो लस्य परस्मैपदमिकारान्तं यत्तस्य लोपः । अभवत् । अभवताम् । अभवन् ।

---

( ४५५ ) **अनद्यतने लङिति** । अत्र धातोरिति भूत इति चाधिकृतम् । भूत इति धात्वर्थे अन्वेति । तदाह—**अनद्यतनभूतार्थवृत्तेरिति** ।

( ४५७ ) **'इतश्चे'ति** । लस्येत्यधिकृतम् । 'इतश्च लोपः परस्मैपदेष्वि'त्यस्मात् 'लोपः' इति 'परस्मैपदेष्वि'ति चानुवर्तते । परस्मैपदेष्विति षष्ठ्या विपरिणम्यते । अत आह—**ङितो लस्येत्यादि** । **अभवत्** । भूधातोः 'अनद्यतने लङ्' इति लङ्यनुबन्धलोपे, लः स्थाने प्रथमपुरुषैकवचनविवक्षायां 'तिप्तस्झि०' इत्यादिना तिपि, पकारस्येत्संज्ञायां लोपे च सार्वधातुकसंज्ञायां 'कर्तरि शप्' इति शप्यनुबन्धलोपे शित्त्वात्सार्वधातुकसंज्ञायां 'सार्वधातुकार्धधातुकयोः' इति गुणेऽवादेशे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति

---

**उदाहरण**—( १ )भू+लोट् ( ल्=उ० पु० द्विवचन—वस् )—भू वस् ( शप् , गुण् , अव् आदेश, आट्=आ, दीर्घ )—भवावस् ( 'लोटो लङ्वत्' के अतिदेश से 'नित्यं ङितः' द्वारा 'स्' का लोप )=भवाव । ( २ ) भू+लोट् ( ल्=उ० पु० बहुवचन—मस् )—भू मस् ( पूर्वोक्त कार्य होकर )—भवामस् ( 'स्' का लोप—'नित्यं ङितः' )=भवाम ।

**भू धातु, लोट् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | भवतु, भवतात् | भवताम् | भवन्तु |
| म० पु०— | भव, भवतात् | भवतम् | भवत |
| उ० पु०— | भवानि | भवाव | भवाम |

**( ४५५ ) पद**—अनद्यतने, लङ् । **विधिसूत्र** ।

**मूलार्थ**—अनद्यतन भूतार्थवृत्ति धातु से लङ् लकार होता है ।

**विमर्श**—'धातोः' ( ३।१।९१ ) तथा 'भूते' ( ३।२।८४ ) का अधिकार है । अतः अनद्यतन= जो आज का न हो ) भूतकाल में धातु से 'लङ्' लकार होता है ।

**( ४५६ ) पद**—लुङ्-लङ्-लृङ्क्षु, अट् , उदात्तः । **विधिसूत्र** ।

**मूलार्थ**—लुङ् , लङ् और लृङ् के परे रहते अङ्ग को अट् का आगम होता है ।

**विमर्श**—'अङ्गस्य' का अधिकार है । अतः लुङ् , लङ् तथा लृङ् के परवर्ती रहते अङ्ग को अट् का आगम होता है । यह 'अट्' आगम उदात्त कहलाता है । 'अट्' में टकार इत्संज्ञक है । 'अट्' टित् होने से अङ्ग का आदि अवयव होगा ।

**( ४५७ ) पद**—इतः, च । **अनुवृत्ति**—लोपः, परस्मैपदेषु । **विधिसूत्र** ।

**मूलार्थ**—ङित् लकार सम्बन्धी इकारान्त परस्मैपद के इकार का लोप होता है । अभवत् । अभवताम् । इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'लस्य' ( ३।४।७७ ) का अधिकार है । 'इतश्च लोपः परस्मैपदेषु' ( ३।४।९७ ) सूत्र से 'लोपः' और 'परस्मैपदेषु' पद की अनुवृत्ति आती है । 'परस्मैपदेषु' पद का षष्ठ्यन्त में विपरिणाम हो जाता है । तदनुसार—'ङित् लकारों के स्थान में आदेश जो परस्मैपद इकारान्त प्रत्यय, उसे अन्त्य अल् ( अलोऽन्त्यपरिभाषा द्वारा ) का लोप होता है ।'

अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम । ( ४५८ ) विधि-निमन्त्रणाऽऽमन्त्रणाऽधीष्टसम्प्रश्नप्रार्थनेषु लिङ् ३।३।१६१ । एष्वर्थेषु धातोर्लिङ् ।

---

सूत्रेणाङ्गस्याडागमे टस्येत्संज्ञायां लोपे च टित्त्वादाद्यावयवे जाते 'इतश्च' इतीकारलोपे 'अभवत्' इति रूपं सिद्धम् ।

( ४५८ ) 'विधिनिमन्त्रणे'ति । 'धातोः' इत्यधिक्रियते । विधिः = प्रेरणम् = आज्ञाकरणम्, भृत्यादेर्निकृष्टस्य प्रवर्त्तनम्, 'पठेत्, यजेत्' । निमन्त्रणम्=नियोगकरणम्,

---

**उदाहरण**—( १ ) भू+लङ् ( ल्=प्रथमपुरुष एकवचन–तिप्=ति )—भू ति ( सार्वधातुक संज्ञा होकर शप्–'अ'—'कर्तरि शप्' )—भू अ ति ( सार्वधातुक संज्ञा होकर 'ऊ' 'ओ' गुण—'सार्वधातु०' 'ओ'='अव्'—'एचोऽयवायावः' )—भवति ( अट्='अ' का आगम—'लुङ्लङ्लृङ्क्ष्वडुदात्तः' )—अ भ व ति ( 'इ' का लोप—'इतश्च' )=अभवत् । ( २ ) भू+लङ् ( ल्=प्र० पु० द्विवचन–'तस्' )—भू तस् ( शप्, गुण, अवादेश, अट् का आगम )—अभव तस् ( तस्=ताम्—'तस्थस्थमिपाम्०' )=अभवताम् । ( ३ ) भू+लङ् ( ल्=प्र० पु० बहुवचन—झि )—भू+झि ( अट् तथा शेष कार्य लट् के समान )—अभवन्ति ( 'इ' का लोप–'इतश्च' )—अ भ व न् त् ( 'त्' का लोप—'संयोगान्तस्य लोपः' )=अभवन् । ( ४ ) भू+लङ् ( ल्=म० पु० एकवचन सिप्=सि )—भू+सि ( शप्, गुण, अवादेश, अट्, इकार लोप )—अभवस् ( स्=र्=ः )=अभवः । ( ५ ) भू+लङ् ( ल्=म० पु० द्विवचन–थस् )—भू+थस् ( थस्=तम्, शप्, गुण, अवादेश, अट् का आगम )=अभवतम् । ( ६ ) भू+लङ् ( ल्=म० पु० बहुवचन 'थ' )—भू+थ ( थ=त, शप्, गुण, अवादेश, 'अट्' का आगम )=अभवत । ( ७ ) भू+लङ् ( ल्=उ० पु० एकवचन मिप् )—भू मिप् ( मिप्='अम्' आदेश, शप्, गुण, अवादेश, अट् )—अ भ व अम् ( अ+अ='अ' पररूप—'अतो गुणे' )=अभवम् । ( ८ ) भू+लङ् ( ल्=उ० पु० द्विवचन–वस् )—भू+वस् ( अट्, शप्, गुण, अवादेश )—अभव वस् ( 'अ'='आ' दीर्घ—'अतो दीर्घो यञि' )—अभवावस् ( 'स्' का लोप-'नित्यं ङितः' )=अभवाव । ( ९ ) भू+लङ् ( ल्=उ० पु० बहुवचन—'मस्' )—भू+मस् ( अट्, शप्, गुण, अवादेश, दीर्घ )—अभवामस् ( पूर्ववत् 'स्' का लोप )=अभवाम ।

### भू धातु, 'लङ्' लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अभवत् | अभवताम् | अभवन् |
| म० पु० | अभवः | अभवतम् | अभवत |
| उ० पु० | अभवम् | अभवाव | अभवाम |

**( ४५८ ) पद**—विधिनिमन्त्रणामन्त्रणाऽधीष्टसंप्रश्नप्रार्थनेषु, लिङ् । **विधिसूत्र** ।

**मूलार्थ**—विधि, निमन्त्रण, आमन्त्रण, अधीष्ट,[1] संप्रश्न और प्रार्थना अर्थों में धातु से 'लिङ्' लकार का प्रयोग होता है ।

---

१. "विधिः प्रेरणम्, भृत्यादेर्निकृष्टस्य प्रवर्त्तनम् । निमन्त्रणं नियोगकरणम्, आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्त्तनम् । आमन्त्रणं कामचारानुज्ञा । अधीष्टः सत्कारपूर्वको व्यापारः । 'प्रवर्त्तनायां लिङ्' इत्येव सुवचम् ।"—सिद्धान्तकौमुदी

**( ४५९ ) यासुट् परस्मैपदेषूदात्तो ङिच्च ३।४।१०३।** लिङः परस्मैपदानां यासुडागमो ङिच्च । ङित्वोक्तेर्ज्ञायते —क्वचिदनुबन्धकार्येऽप्यनल्विधाविति प्रतिषेध इति । तेन

---

श्राद्धभोजनादौ दौहित्रादेः प्रवर्त्तनम्, 'इह भुञ्जीत'। आमन्त्रणम्=कामचारानुज्ञा। अधीष्टः=सत्कारपूर्वको व्यापारः, 'पुत्रमध्यापयेद् भवान्'। सम्प्रश्नः=सम्प्रधारणम्=उचितानुचितपरिपृच्छा, 'भो वेदमधीयीय उत तर्कम्'। प्रार्थनम्=याञ्चा, 'भो भोजनं लभेय' इति।

( ४५९ ) ङित्वोक्तेरिति। ननु लिङ्वृत्तिङित्त्वस्य यदागमन्यायेन तिप्यतिदेशेन पुनः यासुटः ङित्करणं व्यर्थमिति चेन्न, अनल्विधाविति तन्निषेधात्। न च 'प्रदाय, प्रधाये'त्यादौ क्त्वावृत्तिकित्त्वस्य ल्यबारोपे 'घुमास्थे'ति ईत्वप्राप्त्या 'न ल्यपी'ति व्यर्थं सज्ज्ञापयति 'अनुबन्धकार्येऽनल्विधाविति निषेधो न प्रवर्तत इति। तेन स्थानिवद्भावात्

---

**विमर्श**—विधि आदि छः अर्थों में धातु से लिङ् लकार होता है। विधि आदि का विस्तृत विवेचन इस प्रकार है—

( १ ) **विधि**—विधि का अर्थ 'प्रेरणा' ( =आज्ञा देना ) है। आज्ञा अपने से पद या उम्र में छोटे भृत्य, शिष्य, पुत्र आदि को दी जाती है ( भृत्यादेर्निकृष्टस्य प्रवर्त्तनम् )। जैसे—'त्वं कार्यं कुरु, त्वं पठ पठेः वा, त्वं गच्छ गच्छेः वा'।

( २ ) **निमन्त्रण**—निमन्त्रण का अर्थ है—'नियोगकरण'। नियोग=प्रवृत्ति का करण अर्थात् जनक। आवश्यक श्राद्ध के भोजन में दौहित्र ( कन्या के पुत्र ) आदि की प्रवृत्ति का व्यापार करना। इस प्रकार की प्रेरणा को आग्रह कहते हैं। जैसे—'भो भागिनेय ! श्राद्धभोजने त्वमागच्छ आगच्छेः वा'।

( ३ ) **आमन्त्रण**—'आमन्त्रणं कामचारानुज्ञा' अर्थात् आमन्त्रण उस प्रेरणा को कहते हैं, जिसमें निमन्त्रण से कम बल रहता है। कामचार=स्वेच्छा के लिए प्रेर्यमाण व्यक्ति स्वतन्त्र होता है। अतः आमन्त्रित व्यक्ति जिस कार्य के लिए आमन्त्रित किया गया है, उसमें सम्मिलित होना या न होना उसकी इच्छा पर निर्भर होता है। जैसे—'मित्रवर ! भ्रातुः विवाहमुपलक्ष्य क्रियमाणे प्रीतिभोजोत्सवे भवान् आगच्छतु आगच्छेत् वा'। आजकल की भाषा में इसको 'अनुरोध' कहा जा सकता है।

( ४ ) **अधीष्ट**—'अधीष्ट' का अर्थ है—सत्कारपूर्वक किसी कार्य में लगना। जैसे—किसी अध्यापक से सम्मानपूर्वक कहा जाता है कि 'भवान् मम पुत्रान् अध्यापयतु अध्यापयेत् वा'।

( ५ ) **संप्रश्न**—'संप्रश्न' में प्रेरणा के साथ परामर्श का भाव भी रहता है। 'सम्प्रधारणं सम्प्रश्नः' अर्थात् निश्चय के लिए कहना। जैसे—'किं भो वेदमधीयीय उत वा न्यायशास्त्रम्' ( मैं वेद पढ़ूँ या न्यायशास्त्र )।

( ६ ) **प्रार्थना**—प्रार्थना अपने से बड़े जनों से की जाती है, इसमें याचना रहती है। जैसे—'अहं पुस्तकं लभे, लभेयं वा' ( मुझे पुस्तक दीजिए )।

इस प्रकार उक्त विधि आदि ( =प्रेरणा ) अर्थों में लिङ् और लोट् दोनों लकारों का प्रयोग किया जाता है।

**( ४५९ ) पद**—यासुट्, परस्मैपदेषु, उदात्तः, ङित् च। **अनुवृत्ति**—लिङः। **विधिसूत्र।**

**मूलार्थ**—लिङ् के स्थान में होने वाले परस्मैपदसंज्ञक प्रत्ययों को यासुट् का आगम होता है, वह उदात्त एवं ङिद्वद् भी होता है।

'वक्ष्यमाणे'त्यत्र टित्त्वादुगित्वाच्च ङीब्न। (४६०) **लिङः सलोपोऽनन्त्यस्य ७।२। ७९।** सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः। इति प्राप्ते। (४६१) **अतो येयः ७।२। ८०।** अतः परस्य सार्वधातुकावयवस्य 'यास्' इत्यस्य इय्। गुणः। 'लोपो व्योर्वलि'।

---

ङित्त्वप्रयुक्ते कार्ये सिद्धे 'यासुट्०' इत्यादिसूत्रे ङिद्ग्रहणं व्यर्थमिति वाच्यम्, 'क्वचिदनुबन्धकार्येऽपि अनल्विधाविति निषेधः प्रवर्त्तते' इति ज्ञापनार्थं तस्यावश्यकत्वात्। तेन 'वक्ष्यमाणे'त्यत्र टित्त्वादुगित्वाच्च ङीब्न। अन्यथा लृडादेशस्य शानचः स्थानिवत्वेन टित्त्वात् 'टिड्ढाणञि'ति ङीप् स्यादेव।

(४६०) **लिङः सलोपोऽनन्त्यस्येति।** सेति लुप्तषष्ठीकं पदम्। 'रुदादिभ्यः सार्वधातुके' इत्यतः सार्वधातुक इत्यनुवृत्तं षष्ठ्या विपरिणम्यते। अत आह—**सार्वधातुक इत्यादि।**

(४६१) **अतो येय इति।** अत्र 'या' इति लुप्तषष्ठीकं पदम्। अत इति पञ्चमी। अनुवृत्तं सार्वधातुक इति पदमवयवषष्ठ्या विपरिणम्यते। तदाह—**अत इति। भवेदिति।**

---

**विमर्श**—प्रकृत सूत्र में 'लिङः सीयुट्' (३।४।१०२) से 'लिङः' पद की अनुवृत्ति आती है। तदनुसार—"लिङ् के परस्मैपदसंज्ञक प्रत्ययों को यासुट् (='यास्'-) का आगम होता है और वह उदात्त और ङित् भी होता है"।

**ङित्वोक्तेरिति।** भू+लिङ् (ल्=तिप्, शप्, गुण, अवादेश, यासुट्='यास्' का आगम)—भव यास् त्। यहाँ लिङ् वृत्ति ङित्त्व स्थानिवद्भाव से 'तिप्' में भी रहेगा। यह अतिदिष्ट ङित्त्व 'यास्' आगम से युक्त आगमी परस्मैपद में भी रहेगा। इस प्रकार यासुट् स्वतः ही ङित् है। पुनः इस सूत्र में ङित् ग्रहण क्यों किया? इस प्रश्न के उत्तर में कहा गया है कि उपर्युक्त प्रकार से सूत्रस्थ यासुट् का ङिद् ग्रहण व्यर्थ होकर ज्ञापन करता है कि "क्वचित् अनुबन्ध कार्य करने में भी 'अनल्विधौ' की प्रवृत्ति होती है"। अर्थात् 'अनल्विधौ' से स्थानिवद्भाव का निषेध होता है। अतः 'वक्ष्यमाणा' में टित् और उगित् होने पर भी ङीप् नहीं होता, अन्यथा 'लृट्' के स्थान पर आदेश 'शानच्' को स्थानिवद्भाव से टित् और उगित् ('ऋ' की इत्संज्ञा) होने से 'ङीप्' हो जाता।

**(४६०) पद**—लिङः, सलोपः, अनन्त्यस्य। **अनुवृत्ति**—सार्वधातुके। **विधिसूत्र।**

**मूलार्थ**—सार्वधातुक 'लिङ्' के अनन्त्य सकार का लोप होता है। 'स्' लोप के प्राप्त होने पर।

**विमर्श**—यहाँ 'रुदादिभ्यः सार्वधातुके' (७।२।७६) से अनुवृत्त 'सार्वधातुके' पद का षष्ठ्यन्त में विपरिणाम होता है। अतः सार्वधातुक लिङ् सम्बन्धी अनन्त्य (जो अन्त में स्थित न हो) 'स्' का लोप होता है।

**(४६१) पद**—अतः, येयः। **अनुवृत्ति**—सार्वधातुके। **विधिसूत्र।**

**मूलार्थ**—अत् से परवर्ती सार्वधातुक के अवयव 'यास्' के स्थान पर 'इय्' आदेश होता है। गुण। 'लोपो व्योर्वलि'। भवेत्। भवेताम्।

**विमर्श**—'या' लुप्तषष्ठ्यन्त पद है। 'अतः' पञ्चम्यन्त पद है। 'परस्य' का अध्याहार किया जाता है। 'रुदादिभ्यः०' (७।२।७६) से 'सार्वधातुके' पद की अनुवृत्ति आती है। जिसका अवयवषष्ठ्यन्त में विपरिणाम होता है। तदनुसार—"अत् से परे सार्वधातुकावयव 'यास्' को 'इय्' आदेश होता है"।

भवेत् । भवेताम् । ( ४६२ ) झेर्जुस् ३।४।१०८ । लिङो झेर्जुस् । ( ४६३ ) उस्यपदान्तात् ६।१।९६ । अपदान्तादवर्णादुसि परे पररूपमेकादेशः स्यात् । इति प्राप्ते । परत्वान्नित्यत्वाच्चाऽतो येय इति प्राञ्चः । यद्यप्यन्तरङ्गत्वात्पररूपं न्याय्यम्, तथापि 'यास्' इत्यस्य 'इय्' इति व्याख्येयम् । एवञ्च सलोपस्याऽपवाद इय् । 'अतो येय' इत्यत्र

---

भूधातोः 'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्' इति लिङ्यनुबन्धलोपे, तत्स्थाने प्रथमपुरुषैकवचने तिपि, पकारस्येत्संज्ञायां लोपे च सार्वधातुकसंज्ञायां 'कर्तरि शप्' इति शप्यनुबन्धलोपे शित्त्वात्सार्वधातुकसंज्ञायां 'सार्वधातुकार्धधातुकयोः' इति गुणेऽवादेशे 'इतश्च' इतीकारलोपे 'यासुट् परस्मैपदेषूदात्तो ङिच्चे'ति सूत्रेण यासुटयनुबन्धलोपे टित्त्वादाद्यवयवे 'लिङः सलोपोऽनन्त्यस्ये'ति यासः सकारस्य लोपे प्राप्ते 'अतो येयः' इत्यनेन यासः स्थाने इयादेशे 'आद् गुणः' इति गुणे 'भवे य् त्' इति जाते 'लोपो व्योर्वलि' इति यकारस्य लोपे 'भवेत्' इति सिद्धम् ।

( ४६३ ) **उस्येत्यादि** । 'एकः पूर्वपरयोरि'त्यधिकृतम् । 'आद् गुणः' इत्यत 'आदि'त्यनुवर्तते, 'एङि पररूपमि'त्यस्मात् 'पररूपमि'ति । तदाह—**अपदान्तादिति** । **भवेयुः**। भूधातोः लिङ्यनुबन्धलोपे तत्स्थाने प्रथमपुरुषगतबहुत्वविवक्षायां 'झि'

---

**उदाहरण**—( १ ) भू+लिङ् ( ल्=प्रथमपुरुष एकवचन तिप्=ति )—भू ति ( सार्वधातुक संज्ञा होकर शप्-अ )—भू अ ति ( सार्वधातुक संज्ञा होकर 'ऊ'='ओ'—गुण—'सार्वधातु०', 'ओ'='अव्' आदेश )—भव ति ( 'इ' का लोप—'इतश्च', यासुट्='यास्' का आगम—'यासुट् परस्मैपदेषूदात्तो ङिच्च' )—भव यास् त ( 'लिङः सलोपोऽनन्त्यस्य' से 'स्' लोप की प्राप्ति होने पर 'यास्'='इय्'—'अतो येयः' से )—भव इय् त ( अ+इ='ए'—'आद् गुणः' )—भवे य् त ( 'य्' का लोप—'लोपो व्योर्वलि' )=भवेत । ( २ ) भू+लिङ्=( ल्=प्र० पु० द्विवचन तस् )—भू तस् ( शप्, गुण, अवादेश, यासुट्='यास्' का आगम )—भव यास् तस् ( तस्=ताम्, यास्=इय्, गुण )—भवेय् ताम् ( 'य्' का लोप 'लोपो व्योर्वलि' )=भवेताम् ।

**( ४६२ ) पद**—झेः, जुस् । **अनुवृत्ति**—लिङ् । **विधिसूत्र** ।

**मूलार्थ**—'लिङ्' लकार सम्बन्धी 'झि' के स्थान में जुस् आदेश होता है ।

**विमर्श**—प्रकृत सूत्र में 'लिङः सीयुट्' ( ३।४।१०२ ) सूत्र से 'लिङः' पद की अनुवृत्ति आती है । तदनुसार—"लिङ् लकार सम्बन्धी झि के स्थान पर जुस्='उस्' आदेश होता है" ।

**( ४६३ ) पद**—उसि, अपदान्तात् । **अनुवृत्ति**—आत्, पररूपम् । **विधिसूत्र** ।

**मूलार्थ**—अपदान्त अवर्ण से 'उस्' के परवर्ती रहने पर पूर्व-पर के स्थान में पररूप एकादेश होता है । भवेयुः । भवेः । भवेतम् । इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'एकः पूर्वपरयोः' का अधिकार है । 'आद् गुणः' ( ६।१।८७ ) से 'आत्' तथा 'एङि पररूपम्' ( ६।१।९४ ) से 'पररूपम्' पदों की अनुवृत्ति आ रही है । तदनुसार—'अपदान्त अ वर्ण से उस् के परे रहने पर पूर्व-पर के स्थान में पररूप एक आदेश होता है' । "भव या उस्' यहाँ यद्यपि 'उस्यपदान्तात्' से पररूप की प्राप्ति हुई, तथापि पर एवं नित्य होने के कारण 'अतो येयः' से या=इय् आदेश हुआ" यह प्राचीन वैयाकरणों का मत है । जो उचित प्रतीत नहीं होता । क्योंकि पररूप अन्तरङ्ग होने के कारण पर एवं नित्य से भी प्रबल है । अतः पररूप होना

तु सन्धिरार्षः। भवेयुः। भवेः। भवेतम्। भवेत। भवेयम्। भवेव। भवेम। (४६४) लिङाशिषि ३।४।११६। आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात्। (४६५) किदा-

---

प्रत्यये सार्वधातुकसंज्ञायां शप्यनुबन्धलोपे शित्त्वात् सार्वधातुकसंज्ञायां 'सार्वधातुकार्धधातुकयोः' इति गुणेऽवादेशे, 'झोऽन्तः' इति प्राप्तं झस्यान्तादेशं प्रबाध्य 'झेर्जुस्' इति झेर्जुसादेशेऽनुबन्धलोपे 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इति यासुटचनुबन्धलोपे 'लिङः सलोपोऽनन्त्यस्ये'ति सकारस्य लोपे प्राप्ते 'अतो येयः' इति 'यास्' इत्यस्येयादेशे 'आद् गुणः' इति गुणे सस्य रुत्वे विसर्गे च कृते भवेयुरिति।

(४६४) आशीर्लिङि विशेषमाह—**लिङाशिषीति**। लिङिति लुप्तषष्ठीकं पदम्। 'तिङ्शित्सार्वधातुकमि'त्यतः 'तिङि'त्यनुवर्तते। अत आह—**आशिषीत्यादिना**।

---

ही उचित है। इस आशङ्का के समाधानार्थ 'अतो येयः' की नवीन व्याख्या प्रस्तुत करते हैं—"यास् को 'इय्' आदेश होता है।" अतएव "लिङः सलोपोऽनन्त्यस्य' से प्राप्त सकार के लोप का बाधकर यास्=इय् आदेश हुआ। सूत्र 'अतो येयः' में (यास्+इय्) सौत्रत्वात् सलोप कर गुणसन्धि का विधान किया गया है।

**उदाहरण**—(१) भू+लिङ् (ल्=प्र० पु० बहुवचन झि)—भू झि (शप्, गुण, अवादेश, यासुट्=यास्, झि=जुस्=उस्)—भव यास् उस् ('उस्यपदान्तात्' से प्राप्त पररूप का बाधकर यास्=इय्—'अतो येयः')—भव इय् उस् (अ+इ='ए'—गुण, स्=र=ः)= भवेयुः। (२) भू+लिङ् (ल्=म० पु० एकवचन सिप्=सि)—भू सि (शप्, गुण, अवादेश, यासुट्, यास्=इय्, गुण)—भवे य् सि ('इ' का लोप—'इतश्च', 'य्' का लोप–'लोपो व्योर्वलि') —भवे स् (स्=र्=ः)=भवेः। (३) भू+लिङ् (ल्=म० पु० द्विवचन थस्)—भू थस् (शप्, गुणावादेश, यास्, थस्=तम्)—भव यास् तम् (यास्=इय्, गुण, य् का लोप) =भवेतम्। (४) भू+लिङ् (ल्=म० पु० बहुवचन थ)—भू थ (शप्, गुणावादेश, यास् =इय्, थ=त, गुण)—भवेय् त ('य्' का लोप)=भवेत। (५) भू+लिङ् (ल्=उ० पु० एकवचन मिप्=मि)—भू मि (शप्, गुणावादेश, यास्, यास्=इय्, गुण, मिप्=अम्) =भवेयम्। (६) भू+लिङ् (ल्=उ० पु० द्विवचन वस्)—भू वस् (पूर्वोक्त शप् आदि कार्य)—भवेय् वस् ('स्' का लोप—'नित्यं ङितः', 'य्' का लोप—'लोपो०')=भवेव। (७) भू+लिङ् (ल्=उ० पु० बहुवचन मस्)—भू मस् (पूर्वोक्त शप् आदि कार्य)—भवेय् मस् ('स्' का लोप 'नित्यं ङितः' 'य्' का लोप)=भवेम।

### भू धातु, विधिलिङ् के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | भवेत् | भवेताम् | भवेयुः |
| म० पु० | भवेः | भवेतम् | भवेत |
| उ० पु० | भवेयम् | भवेव | भवेम |

(४६४) **पद**—लिङ्, आशिषि। **अनुवृत्ति**—तिङ्। **संज्ञासूत्र**।

**मूलार्थ**—आशीर्वाद अर्थ में लिङ् के तिङ् की आर्धधातुक संज्ञा होती है।

**विमर्श**—प्रकृत सूत्र में 'तिङ्शित्सार्वधातुकम्' (४१६) से 'तिङ्' पद की अनुवृत्ति आती है। अतः आशीर्वाद अर्थ में लिङ् के स्थान में विहित तिङ् की आर्धधातुक संज्ञा होती है। फलस्वरूप आशीर्लिङ् में 'शप्' नहीं होता।

**शिषि ३।४।१०४ । आशिषि लिङो यासुट् कित् स्यात् । स्कोरिति सलोपः । ( ४६६ ) क्ङिति च १।१।५ । गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ।**

---

( ४६५ ) **किदाशिषि** । अत्र 'लिङः सीयुट्' इत्यतः लिङ इत्यनुवर्तते । 'यासुट् परस्मैपदेष्वि'त्यतः यासुडिति च । तदाह—**आशिषि लिङ इति** ।

( ४६६ ) **क्ङिति च** । अत्र ग् क् ङ् इत्येषां समाहारद्वन्द्वः । कात्पूर्वं गकारस्य चर्त्त्वेन ककारः । अतः क् क् ङ् च इत् यस्येति विग्रहः । द्वन्द्वान्ते श्रूयमाणत्वात् इच्छब्दः प्रत्येकमन्वेति । 'इको गुणवृद्धी' इति सूत्रमनुवर्तते । 'न धातुलोप०' इत्यतः 'ने'त्यनुवर्तते । तदाह मूले—**गित्किन्ङिन्निमित्त इत्यादि** । **भूयात्** । भूधातोः 'आशिषि लिङ्लोटौ' इत्यनेन लिङ्यनुबन्धलोपे, तत्स्थाने 'तिप्तस्झि०' इत्यादिना प्रथमपुरुषैकवचने तिपि, अनुबन्धलोपे 'लिङाशिषि' इत्यनेन तिपः आर्धधातुकसंज्ञायां शपोऽभावे 'इतश्च' इतीकारलोपे 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इति सूत्रेण यासुडागमेऽनुबन्ध-

---

**( ४६५ ) पद**—कित्, आशिषि । **अनुवृत्ति**—लिङ्, यासुट् । **विधिसूत्र** ।

**मूलार्थ**—आशीर्वाद अर्थ में लिङ् सम्बन्धी यासुट् कित् होता है ।

**विमर्श**—यहाँ 'लिङः सीयुट्' ( ३।४।१०२ ) सूत्र से 'लिङः' तथा 'यासुट् परस्मैपदेषूदात्तो ङिच्च' ( ४५९ ) से 'यासुट्' पद की अनुवृत्ति आ रही है । तदनुसार—'आशीर्वाद अर्थ में लिङ् को विहित यासुट् का आगम कित् होता है' ।

**( ४६६ ) पद**—क्ङिति, च । **अनुवृत्ति**—इको गुणवृद्धी, न । **विधिसूत्र ( निषेध )** ।

**मूलार्थ**—गित्, कित्, ङित् को निमित्त मानकर इग्लक्षण गुण और वृद्धि नहीं होते । भूयात् । भूयास्ताम् इत्यादि ।

**विमर्श**—'ग् क् ङ्' में समाहारद्वन्द्व है । सूत्रस्थ 'इत्' शब्द का प्रत्येक के साथ अन्वय होता है—गित्, कित्, ङित् । 'इको गुणवृद्धी' ( १।३।३ ) सूत्र की तथा 'न धातुलोप आर्धधातुके' ( १।१।४ ) सूत्र से 'न' पद की अनुवृत्ति आती है । तदनुसार—'गित्, कित् और ङित् प्रत्ययों के परवर्ती रहते इक्-लक्षण गुण और वृद्धि का निषेध होता है' ।

**उदाहरण**—( १ ) भू+आशीर्लिङ् ( =प्रथमपुरुष एकवचन तिप्=ति )—भू ति ( 'लिङाशिषि' से तिप् की आर्धधातुक संज्ञा होने से 'शप्' का अभाव, यासुट्='यास्' का आगम )—भू यास् ति ( 'इ' का लोप—'इतश्च', सुट् का आगम—'सुट् तिथोः' )—भूयास् स् त ( दोनों 'स्' का लोप—'स्कोः संयोगाद्योरन्ते च' 'सार्वधातु०' से प्राप्त गुण का 'क्ङिति च' से निषेध )= भूयात् । ( २ ) भू+लिङ् ( ल्=प्र० पु० द्विवचन तस् )—भू तस् ( 'तस्'='ताम्'—'तस्थस्थमिपाम्०' आर्धधातुक संज्ञा, शप् का अभाव, यासुट्=यास् )—भू यास् ताम् ( सुट्='स्' का आगम, कित् होने से गुण-निषेध, 'स्' का लोप—'स्कोः०' )=भूयास्ताम् । ( ३ ) भू+लिङ् ( ल् =प्र० पु० बहुवचन 'झि' )—भू झि ( झि=जुस्=उस्, यासुट्=यास् आगम )—भू यास् उस् ( कित् होने से गुण-निषेध, स्=र्=ः )=भूयासुः । ( ४ ) भू+लिङ् ( ल्=म० पु० एकवचन सिप्=सि )—भू सि ( यासुट्=यास् आगम, इकार लोप—'इतश्च' )—भू यास् स् ( 'स्' का संयोगादि लोप, स्=र्=ः )=भूयाः । ( ५ ) भू+लिङ् ( ल्=म० पु० द्विवचन थस् )—भू थस् ( थस्=तम्, यासुट्, कित्त्व, गुण-निषेध )=भूयास्तम् । ( ६ ) भू+लिङ् ( ल्=म० पु०

(४६७) लुङ् ३।२।११०। भूतार्थे धातोर्लुङ्। (४६८) माङि लुङ् ३।३।१७५। माङ्युपपदे धातोर्लुङ् स्यात्। सर्वलकारापवादः। (४६९) स्मोत्तरे लङ् च ३।३।१७६। स्मोत्तरे माङि लङ् स्याल्लुङ् च। (४७०) च्लि लुङि ३।१।४३। शबाद्यपवादः। (४७१) च्लेः सिच् ३।१।४४। इचावितौ। (४७२) गातिस्थाघुपाभूभ्यः

---

लोपे 'सुट् तिथोः' इति सुटि, अनुबन्धलोपे 'किदाशिषि' इत्यनेन कित्त्वे 'स्कोः संयोगाद्योरन्ते च' इति सकारयोः लोपे 'सार्वधातुकार्धधातुकयोः' इत्यनेन गुणे प्राप्ते 'क्ङिति च' इति सूत्रेण निषेधे 'भूयात्' इति सिद्धम्।

(४६८) माङि लुङ्। मास्तु इत्यादौ तु निषेधार्थो मा शब्दो न माङिति न दोषः। माङ्प्रयोगे सर्वलकाराणां स्थाने लुङेव भवतीत्यर्थः।

---

बहुवचन थ) भू थ (थ=त, यासुट् पूर्ववत्)=भूयास्त। (७) भू+लिङ् (ल्=उ० पु० एकवचन मिप्)—भू मिप् (मिप्=अम्, यासुट् आदि पूर्ववत्)=भूयासम्। (८) भू+लिङ् (ल्=उ० पु० द्विवचन 'वस्')—भू वस् (यासुट् आदि पूर्ववत्, 'स्' का लोप—'नित्यं ङितः') =भूयास्व। (९) भू+लिङ् (ल्=उ० पु० बहुवचन 'मस्')—भू मस् (यासुट् आदि पूर्ववत्, 'स्' का लोप)=भूयास्म।

**'भू' धातु, आशीर्लिङ् के रूप**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु०— | भूयात् | भूयास्ताम् | भूयासुः |
| म० पु०— | भूयाः | भूयास्तम् | भूयास्त |
| उ० पु०— | भूयासम् | भूयास्व | भूयास्म |

**(४६७) पद**—लुङ्। **विधिसूत्र।**

**मूलार्थ**—भूतार्थक धातु से 'लुङ्' लकार होता है।

**विमर्श**—भूत अर्थ में विद्यमान धातु से लुङ् लकार होता है। इस सूत्र की प्रवृत्ति सामान्यतः भूतमात्रविवक्षा में ही होती है, विशेष में नहीं।

**(४६८) पद**—माङि, लुङ्। **विधिसूत्र।**

**मूलार्थ**—'माङ्' उपपद रहते धातु से 'लुङ्' लकार होता है।

**विमर्श**—सभी लकारों का बाधकर निषेधार्थक 'माङ्' के उपपद रहने पर 'लुङ्' लकार का प्रयोग होता है।

**(४६९) पद**—स्म, उत्तरे, लङ्, च। **विधिसूत्र।**

**मूलार्थ**—'स्म' उत्तरपरक 'माङ्' के उपपद रहते धातु से 'लुङ्' तथा चकारात् 'लङ्' लकार का प्रयोग होता है।

**विमर्श**—सूत्रस्थ 'च' पद से 'माङि लुङ्' (३।३।१७५) का अनुकर्षण होता है। तदनुसार—'स्म पद के परवर्ती रहने पर माङ् के योग में धातु से उत्तर लङ् और लुङ् लकार होता है'।

**(४७०) पद**—च्लि, लुङि। **विधिसूत्र।**

**मूलार्थ**—'लुङ्' के परवर्ती रहने पर धातु से च्लि प्रत्यय होता है। यह शप् आदि विकरण का अपवाद है।

**(४७१) पद**—च्लेः, सिच्। **विधिसूत्र।**

**सिचः परस्मैपदेषु २।४।७७। एभ्यः परस्य सिचो लुक् स्यात्परस्मैपदेषु। गापाविहेणा-देशपिबती गृह्येते। (४७३) भूसुवोस्तिङि ७।३।८८। 'भू' 'सू' एतयोः सार्वधातुके तिङि परे गुणो न। अभूत्। अभूताम्। अभूवन्। अभूः। अभूतम्। अभूत। अभूवम्।**

---

(४७२) **गापाविहेति**। व्याख्यानात् इण् आदेशो 'गा', पिब् आदेशो यस्य भवति स पा गृह्यते। अत एव 'गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम्' इत्युक्तं भाष्ये।

(४७३) **भूसुवोस्तिङि**। 'मिदेर्गुणः' इत्यतः गुण इति 'नाभ्यस्तस्याचि पिती'-त्यतो नेति सार्वधातुक इति चानुवर्तते। **अभूत्**। भूधातोः 'लुङ्' इत्यनेन लुङ्चनु-बन्धलोपे तत्स्थाने प्रथमपुरुषगतैकत्वविवक्षायां तिप्यनुबन्धलोपे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यडागमे 'च्लि लुङि' इति च्लिप्रत्यये तस्य 'च्लेः सिच्' इति सिजादेशेऽनुबन्धलोपे 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इत्यनेन सिचो लुकि 'इतश्च' इतीकारलोपे, 'सार्वधातुकार्धधातुकयोरि'त्यनेन गुणे प्राप्ते 'भूसुवोस्तिङि' इति सूत्रेण निषेधे 'अभूत्' इति सिद्धम्।

---

**मूलार्थ**—'च्लि' के स्थान में 'सिच्' आदेश होता है। ('सिच्' में इकार और चकार की इत्संज्ञा होती है।

**(४७२) पद**—गातिस्थाघुपाभूभ्यः, सिचः, परस्मैपदेषु। **अनुवृत्ति**—लुक्। **विधिसूत्र**।

**मूलार्थ**—गा, स्था, घुसंज्ञक, पा और भू धातु से परे सिच् का लुक् होता है।

**विमर्श**—यहाँ 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' से 'लुक्' पद की अनुवृत्ति आती है। तदनुसार—"गा, स्था, घुसंज्ञक, पा तथा भू धातुओं से परवर्ती 'सिच्' का लुक् होता है।"

**गापाविहेति**—'गा' से यहाँ इण् के स्थान में होने वाला 'गा' ('इणो गा लुङि') तथा 'पा' से पिब् आदेश वाला 'पा पाने' का ग्रहण होता है।[1]

**(४७३) पद**—भूसुवोः, तिङि। **अनुवृत्ति**—गुणः, न। **विधि( निषेध )सूत्र**।

**मूलार्थ**—'भू' तथा 'सू' धातुओं को सार्वधातुक तिङ् के परवर्ती रहने पर गुण नहीं होता है। अभूत्। अभूताम्। अभूवन् इत्यादि।

**विमर्श**—प्रकृत सूत्र में मिदेर्गुणः' (७।३।८२) से 'गुणः' तथा 'नाभ्यस्तस्याचि पिति' (७।३।८७) से 'न' पद की अनुवृत्ति आती है। अतः 'भू' एवं 'सू' धातुओं को सार्वधातुक तिङ् परे रहते गुण का निषेध होता है।

**उदाहरण**—(१) भू+लुङ् (ल्=प्रथमपुरुष एकवचन—तिप्=ति)—भू ति (शप् का बाधकर 'च्लि' प्रत्यय—'च्लि लुङि', च्लि=सिच्=स्—'च्लेः सिच्')—भू स् ति ('सिच्' का लुक्—'गातिस्था०' अट् का आगम—'लुङ्लङ्लृङ्क्ष्वडुदात्तः', 'इ' का लोप—'इतश्च')—अभूत ('सावधातु०' से प्राप्त गुण का 'भूसुवोस्तिङि' से निषेध)=अभूत। (२) भू+लुङ् (ल्= प्र० पु० द्विवचन 'तस्'='ताम्'—'तस्थस्थमिपाम्०')—भू ताम् ('अट्'='अ' का आगम, च्लि, च्लि=सिच्, सिच् का लुक्)=अभूताम्। (३) भू+लुङ् (ल्=प्र० पु० बहुवचन 'झि')—भू झि ('अट्' का आगम, 'झ्'='अन्त्' आदेश—'झोऽन्तः')—अ भू अन्ति (वुक्='व्' का आगम, च्लि, च्लि=सिच्, सिच् का लुक्, 'इ' का लोप—'इतश्च' 'त्' का लोप—'संयोगान्तस्य

---

१. "गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम्"—महाभाष्यम्।

अभूव। अभूम। (४७४) न माङ्योगे ६।४।७४। माङ्योगे अडाटौ न स्तः। मा भवान्भूत्। मा स्म भवत्। मा स्म भूत्। (४७५) लिङ्निमित्ते लृङ् क्रियातिपत्तौ ३।३।१३९। हेतुहेतुमद्भावादि लिङ्निमित्तं, तत्र भविष्यदर्थाद्धातोर्लृङ्, क्रियाया

---

(४७४) मास्म भूदिति। मास्म-पूर्वाद् भूधातोः 'स्मोत्तरे लङ् च' इत्यनेन लुङ्यनुबन्धलोपे, तत्स्थाने तिपि, 'च्लि लुङि' इति च्लौ, तस्य सिजादेशेऽनुबन्धलोपे, अडागमे प्राप्ते 'न माङ्योगे' इत्यनेन तन्निषेधे 'इतश्च' इतीकारलोपे, सिचो लुकि कृते 'मास्म भूत्' इति।

(४७५) लिङ्निमित्त इति। हेतुहेतुमतोर्लिङ्, इच्छार्थेषु 'लिङ्लोटावि'त्यादि। लिङो निमित्तं, तस्मिन् लिङ्निमित्ते, क्रियाया अतिपत्तिः=अनिष्पत्तिः, तस्यां क्रियातिपत्तौ, 'भविष्यति मर्यादावचने' इत्यतो भविष्यतीत्यनुवर्तते। एवं मूलोक्तार्थः निष्पद्यते। अभविष्यत्। भूधातोः 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति लृङि तत्स्थाने

---

लोपः' )=अभूवन्। (४) भू+लुङ् (ल्=म० पु० एकवचन 'सिप्'='सि')—भू सि (अट् का आगम, च्लि=सिच्, सिच् का लुक्, 'इ' का लोप)—अभू स् (स्=र्=ः)=अभूः। (५) भू+लुङ् (ल्=म० पु० द्विवचन थस्)—भू थस् ('अट्' का आगम, थस्=तम्)—अभू तम् (च्लि=सिच्, सिच् का लुक्)=अभूतम्। (६) भू+लुङ् (ल्=म० पु० बहुवचन 'थ')—भू थ ('अट्' का आगम, थ=त, च्लि=सिच्, सिच् का लुक्, गुण-निषेध)=अभूत। (७) भू+लुङ् (ल्=उ० पु० एकवचन-मिप्=मि)—भू मि (अट्, मि=अम्, च्लि=सिच्, सिच् का लुक्, 'वुक्'='व्' का आगम—'भुवो वुग्०')=अभूवम्। (८) भू+लुङ् (ल्=उ० पु० द्विवचन वस्)—भू वस् ('अट्' का आगम, च्लि, सिच्, सिच् का लुक्)—अभूवस् ('स्' का लोप—'नित्यं ङितः')=अभूव। (९) भू+लुङ् (ल्=उ० पु० बहुवचन 'मस्')—भू मस् (अट् का आगम, च्लि=सिच्, सिच् का लुक्)—अभूमस् ('स्' का लोप)=अभूम।

**भू धातु, लुङ् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | अभूत् | अभूताम् | अभूवन् |
| म० पु०— | अभूः | अभूतम् | अभूत |
| उ० पु०— | अभूवम् | अभूव | अभूम |

**(४७४) पद**—न, माङ्, योगे। **अनुवृत्ति**—अट्, आट्। **विधि( निषेध )सूत्र।**

**मूलार्थ**—'माङ्' के योग में 'अट्' और 'आट्' आगम नहीं होते।

**विमर्श**—यहाँ 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' (सू० ४५६) से 'अट्' तथा 'आडजादीनाम्' (६।४।७२) से 'आट्' की अनुवृत्ति आ रही है। तदनुसार—"निषेधार्थक 'माङ्' के योग में धातुओं को 'अट्' एवं 'आट्' आगम नहीं होते"।

**उदाहरण**—'मा भवान्भूत' में 'अट्' आगम प्राप्त था, उसका 'न माङ्योगे' से निषेध होने पर 'भूत्' ही रूप लुङ् के प्र० पु० एकवचन में हुआ। इसी प्रकार 'मास्म भवत्' और 'मास्म भूत्'।

**(४७५) पद**—लिङ्, निमित्ते, लृङ्, क्रियातिपत्तौ। **अनुवृत्ति**—भविष्यति। **विधिसूत्र।**

**मूलार्थ**—क्रिया की अनिष्पत्ति गम्यमान रहने पर भविष्यत् अर्थ में विद्यमान धातु से हेतु-हेतुमद्भावादि अर्थ में 'लृङ्' लकार होता है। अभविष्यत्—इत्यादि।

**३ म० द्वि०**

**अनिष्पत्तौ गम्यमानायाम् । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । 'सुवृष्टिश्चेद-भविष्यत्तदा सुभिक्षमभविष्यत्' इत्यादि ज्ञेयम् । 'प्रणिभवति' इत्यादौ उपसर्गाणाम-समस्तत्वेऽपि संहिता नित्या । तदुक्तम्—**

**संहितैकपदे नित्या नित्या धातूपसर्गयोः ।**
**नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ १ ॥**

---

तिप्यनुबन्धलोपे 'इतश्च' इतीकारलोपे प्राप्तं शपं प्रबाध्य 'स्यतासी ऌलुटोः' इति स्य-प्रत्यये 'आर्धधातुकं शेषः' इत्यार्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड् वलादेः' इतीडागमे-ऽनुबन्धलोपे गुणेऽवादेशे अडागमेऽनुबन्धलोपे 'आदेशप्रत्यययोः' इति षत्वे 'अभविष्यत्' इति । **संहितेति ।** एकपदे = अखण्डपदे संहिता ( सन्धिः ) नित्या = अवश्यं कर्तव्या ।

---

**विमर्श**—प्रकृत सूत्र में 'भविष्यति मर्यादावचने' ( ३।३।१३६ ) से 'भविष्यति' पद की अनुवृत्ति आती है। लिङ् का निमित्त हेतुहेतुमद्भावादि है, उसमें यदि क्रिया का भविष्यत् काल में होना प्रतीत हो तो धातु से 'ऌङ्' लकार होता है।

**उदाहरण**—( १ ) भू + ऌङ् ( ल् = प्रथमपुरुष एकवचन तिप् = 'ति' )—भू ति ( 'अट्' = 'अ' का आगम, 'इ' का लोप—'इतश्च' )—अ भू त ( शप् का बाधकर 'स्य' प्रत्यय—'स्यतासी ऌलुटोः', आर्धधातुक संज्ञा, इट् = 'इ' का आगम, 'उ' = 'ओ'—गुण, ओ = 'अव्' आदेश, स् = ष्—'आदेशप्रत्यययोः' ) = अभविष्यत् । ( २ ) भू + ऌङ् ( ल् = प्र० पु० द्विवचन तस् )—भू तस् ( अट् का आगम, तस् = ताम्, स्य, इट्, गुण, अवादेश, षत्व पूर्वोक्त कार्य ) = अभविष्यताम् । ( ३ ) भू + ऌङ् ( ल् = प्र० पु० बहुवचन 'झि' )—भू झि ( अट्, इकारलोप, झ् = अन्त् आदेश, स्य, इट्, गुण, अवादेश, 'त्' का संयोगान्त लोप और षत्व होकर ) = अभविष्यन् । ( ४ ) भू + ऌङ् ( ल् = म० पु० एकवचन सिप् = 'सि' )—भू सि ( अट्, 'इ' का लोप, इट्, गुण, अवादेश, षत्व, स् = र् = ः ) = अभविष्यः । ( ५ ) भू + ऌङ् ( ल् = म० पु० द्विवचन थस् )—भू थस् ( अट्, थस् = तम्, स्य, इट्, गुण, अवादेश, षत्व ) = अभविष्यतम् । ( ६ ) भू + ऌङ् ( ल् = म० पु० बहुवचन 'थ' )—भू थ ( अट्, थ = त, इट्, गुण, अवादेश, षत्व ) = अभविष्यत । ( ७ ) भू + ऌङ् ( ल् = उ० पु० एकवचन—'मिप्' )—भू मिप् ( अट्, मिप् = अम्, स्य, इट्, गुण, अवादेश, षत्व ) = अभविष्यम् । ( ८ ) भू + ऌङ् ( ल् = उ० पु० द्विवचन 'वस्' )—भू वस् ( अट्, स्य, इट्, गुण, अवादेश, षत्व, दीर्घ—'अतो दीर्घो यञि', 'स्' का लोप—'नित्यं ङितः' ) = अभविष्याव । ( ९ ) भू + ऌङ् ( ल् = उ० पु० बहुवचन 'मस्' )—भू मस् ( अट्, स्य, इट्, गुण, अवादेश, षत्व, दीर्घ, 'स्' का लोप पूर्ववत् ) = अभविष्याम ।

**भू धातु ऌङ् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | अभविष्यत् | अभविष्यताम् | अभविष्यन् |
| म० पु०— | अभविष्यः | अभविष्यतम् | अभविष्यत |
| उ० पु०— | अभविष्यम् | अभविष्याव | अभविष्याम |

**सुवृष्टिरिति ।** 'यदि अच्छी वृष्टि = वर्षा होगी तो सुकाल होगा।' यह उदाहरण क्रिया की असिद्धि स्पष्ट रूप से दिखलाने के लिए दिया गया है। 'प्रणिभवति' इत्यादि प्रयोगों में उपसर्गों के असमस्त होने पर भी सन्धि नित्य होती है। जैसा कि कहा गया है—

धात्वर्थं बाधते कश्चित् कश्चित् तमनुवर्तते ।
विशिनष्टि तमेवाऽर्थमुपसर्गगतिस्त्रिधा ॥ २ ॥ इति ।

सत्ताद्यर्थनिर्देशश्चोपलक्षणं, 'यागात्स्वर्गो भवती'त्यादौ 'उत्पद्यते' इत्याद्यर्थात् । उपसर्गास्त्वर्थविशेषस्य द्योतकाः । प्रभवति । पराभवति । सम्भवति । अनुभवति । अभिभवति । उद्भवति । परिभवति—इत्यादौ विलक्षणार्थावगतेः । उक्तञ्च—

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराहारसंहारविहारपरिहारवत् ॥ १ ॥

---

तेन 'भवति, नायकः, पावकः' इत्यादौ नित्यमेव संहिताकार्यम् । धातूपसर्गयोः सतोः सन्धिरावश्यकः, यथा—प्रेजते, उपोषति इत्यादौ । समासेऽपि संहिता नित्या, तेन 'सुध्युपास्यः, सूर्योदयः' इत्यादौ नित्यमेव संहिताकार्यम् । किन्तु वाक्ये वक्तुर्विवक्षायां सत्यामेव सन्धिर्भवति । अर्थात् वाक्ये सन्धिकार्याणां विकल्पः सिद्ध्यति । यथा 'पश्यतीन्दुम्, पश्यति इन्दुमि'ति 'वा ।

**धात्वर्थं बाधत इति ।** शाकटायनाचार्या उपसर्गाणां द्योतकत्वं स्वीकुर्वन्ति, गार्ग्याचार्यास्तेषां वाचकत्वं कथयन्ति । अपरे वैयाकरणास्तु द्योतकत्वमेव मन्वते । कश्चिदुपसर्गो धात्वर्थं बाधते । यथा—भूधातुः आत्मधारणानुकूलव्यापारे वर्तते, प्रोपसर्गेणात्मधारणानुकूलव्यापारस्य बाधो भवति । तेन 'प्रभवती'त्यस्योत्पत्त्यनुकूलो व्यापारोऽर्थः । कश्चिदुपसर्गो धात्वर्थस्यानुसरणं करोति । यथा 'अधीते' इत्यत्राधिरुपसर्गः । कश्चिदुपसर्गः तस्मिन् व्यापारे प्रकर्षं करोति । यथा 'प्रपचती'त्यत्र विक्लित्त्यनुकूले व्यापारे प्रकर्षं विदधाति ।

---

**संहितैकेति ।** एक पद में, धातु और उपसर्ग की तथा समास में भी संहिता ( =सन्धि ) नित्य होती है । किन्तु वाक्य में वक्ता की इच्छा पर निर्भर रहती है । ( यथा—'देवी उवाच' अथवा 'देव्युवाच' ।

**धात्वर्थमिति ।** कोई उपसर्ग धातु के मुख्यार्थ का बाधकर नूतन अर्थ का बोध कराता है, कोई धात्वर्थ का ही अनुसरण करता है और कोई विशेषण होकर उसी धात्वर्थ को और भी अधिक स्पष्ट कर देता है । इस प्रकार उपसर्ग की गति तीन प्रकार की होती है ।

**सत्ताद्यर्थ०**—सत्ता इत्यादि धातुओं के अर्थ-प्रदर्शन अन्य-अन्य अर्थों का भी उपलक्षण है । अर्थात् 'भू सत्तायाम्' इत्यादि धातुपाठ दर्शित ही अर्थ नहीं है, अपितु अन्य भी अर्थ है । 'यागात् स्वर्गो भवति' ( याग से उत्पन्न अदृष्ट से स्वर्ग उत्पन्न होता है ) यहाँ भू धात्वर्थ उत्पत्त्यनुकूल व्यापारार्थ है । उत्पत्ति रूप फल अन्य उसका व्यापारजनक है । उपसर्ग वाचक नहीं हैं । अर्थविशेष का वाचक धातु ही है । उपसर्ग तो केवल द्योतक हैं । निकटस्थ पद में रहने वाली शक्ति के बोधक को ही द्योतक कहते हैं । 'प्रभवति=उत्पन्न होता है, पराभवति=पराजित होता है, सम्भवति=सम्यक् उत्पन्न होता है, अनुभवति=अनुभव करता है, अभिभवति=सर्वतोभाव से उत्पन्न होता है । उद्भवति=उत्पन्न होता है, परिभवति=तिरस्कृत होता है ।' इस प्रकार एक ही भू धातु के अनेक विलक्षण अर्थ प्रतीत होते हैं । जैसा कि कहा भी गया है—

**उपसर्गेणेति ।** उपसर्ग के बल से धात्वर्थ भिन्न-भिन्न प्रतीत होने लगता है । जैसे—हरणार्थक 'हृ' धातु 'प्र' उपसर्ग लगने पर प्रहार ( =आघात ), 'आ' लगने पर आहार ( =भोजन ),

**अत सातत्यगमने । अतति । अततः । अतन्ति । अतसि । अतथः । अतथ । अतामि । अतावः । अतामः । ( ४७६ ) अत आदेः ७।४।७० । अभ्यासस्याऽऽदेरतो दीर्घः स्यात् । पररूपापवादः । आत । आततुः । आतुः । आतिथ । आतथुः । आत । आत । आतिव ।**

---

**उपलक्षणमिति ।** उपलक्षणं नाम 'स्वार्थबोधकत्वे सति स्वेतरार्थबोधकत्वम्' । **उपसर्गेणेति ।** उपसर्गेण धातोः सम्बन्धे सति निर्दिष्टं यद्रूपं तदतिरिक्तरूपविशिष्टस्य प्रतीतिर्भवति । यथा 'हृ हरणे' इत्यस्य निर्दिष्टं रूपं हरणत्वं तदतिरिक्तं यद्रूपम्—आघातत्वं तद्विशिष्टाघातार्थो हृधातोः उपसर्गबलात्प्रतीयते । यथा प्रहारः=कशाद्याघातः, आहारः=भक्षणम्, संहारः=बधः, विहारः=क्रीडा, परिहारः=परित्यागः ।

( ४७६ ) **अत आदेः ।** 'अत्र लोप०' इत्यस्मादभ्यासस्येत्यनुवर्तते । 'दीर्घं इण' इत्यतो दीर्घ इति च । तदाह—**अभ्यासस्येत्यादि । आत ।** 'अत सातत्यगमने' इत्यस्मा-

---

**'सम्'** उपसर्ग जोड़ने पर संहार ( =विनाश ), 'वि' लगने पर विहार ( =क्रीडा ) और 'परि' उपसर्ग लगने पर परिहार ( =समाधान ) इत्यादि । **अत[1] इति ।** 'अत्' धातु का अर्थ निरन्तर गमन ( =जाना ) है ।

**उदाहरण**—अत्+लट् ( ल्=प्रथमपुरुष एकवचन तिप्=ति )—अत् ति ( सार्वधातुक संज्ञा, शप्-अ )=अतति । इसी प्रकार अन्य रूप भी सिद्ध होते हैं ।

**अत् धातु, लट् लकार के रूप**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु०— | अतति | अततः | अतन्ति |
| म० पु०— | अतसि | अतथः | अतथ |
| उ० पु०— | अतामि | अतावः | अतामः |

**( ४७६ ) पद**—अतः, आदेः । **अनुवृत्ति**—अभ्यासस्य, दीर्घः । **विधिसूत्र ।**

**मूलार्थ**—अभ्यास के आदि अकार को दीर्घ होता है ।

**विमर्श**—यहाँ 'अत्र लोप०' ( ७।४।५८ ) से 'अभ्यासस्य' तथा 'दीर्व इणः किति' से 'दीर्वः' पदों की अनुवृत्ति आ रही है । तदनुसार अभ्यास के आदि अकार को दीर्घ रूप आदेश होता है ।

**उदाहरण**—( १ ) अत्+लिट् ( ल्=प्रथमपुरुष एकवचन तिप्, तिप्=णल्='अ' )—अत् अ ( द्वित्व—'लिटि धातोरनभ्यासस्य' अभ्यास संज्ञा, हलादिशेष )—अ अत् अ ( अ+अ='आ' दीर्घ—'अत आदेः' )=आत । ( २ ) आततुः ( लिट् प्र० पु० द्विवचन में पूर्वोक्त प्रकार से सिद्ध होता है । ( ३ ) इसी प्रकार प्र० पु० बहुवचन में—आतुः । ( ४ ) आतिथ ( यहाँ वलादि आर्धधातुक होने से इट् का आगम । ( ५ ) आतिव, आतिम (यहाँ लिट् के उ० पु० द्विवचन, बहुवचन में वलादि होने से इट् का आगम विशेष ।

**अत् धातु, लिट् लकार के रूप**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु०— | आत | आततुः | आतुः |
| म० पु०— | आतिथ | आतथुः | आत |
| उ० पु०— | आत | आतिव | आतिम |

---

१. यहाँ अन्त्य अकार उदात्त और इत्संज्ञक है । तदनुसार परस्मैपद होता है । यदि अनुदात्त होता तो 'अनुदात्तङित आत्मनेपदम्' से आत्मनेपद हो जाता ।

**आतिम । अतिता । अतिष्यति । अततु । ( ४७७ ) आडजादीनाम् ६।४।७२ । अजादे-रङ्गस्याऽऽड् लुङ्लङ्लृङ्क्षु । आतत् । अतेत् । अत्यात् । अत्यास्ताम् । लुङि सिचि**

---

द्धातोः लिटचनुबन्धलोपे तत्स्थाने तिपि 'परस्मैपदानामि'त्यादिना तिपो णलादेशेऽनु-बन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां 'हलादिः शेषः' इति लोपे 'अ अत् अ' इति जाते 'अत आदेः' इत्यभ्यासस्य दीर्घे आत इति ।

( ४७७ ) **आडजादीनामिति** । 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यस्मात् 'लुङ्लङ्लृङ्क्षु' इत्यनुवर्तते । तदाह मूले—**अजादेरित्यादि** । **आतत्** । अत्धातोर्लङ्यनुबन्धलोपे

---

**अतिता**—अत्+लुट् ( ल्=प्र० पु० एकवचन तिप् )—अत् तिप् ( 'तास्'—'स्यतासी लृलुटोः', आर्धधातुक संज्ञा, इट्, तिप्=डा='आ' )—अत् इ तास् आ ( टिलोप—'डित्त्वसामर्थ्या-दभस्यापि टेर्लोपः' )=अतिता ।

**अत् धातु, लुट् लकार के रूप**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु० | अतिता | अतितारौ | अतितारः |
| म० पु० | अतितासि | अतितास्थः | अतितास्थ |
| उ० पु० | अतितास्मि | अतितास्वः | अतितास्मः |

**अतिष्यति**—अत्+लृट् ( ल्=प्र० पु० एकवचन तिप्=ति )—अत् ति ( 'स्य'—'स्यतासी०', आर्धधातुक संज्ञा, इट्, षत्व )=अतिष्यति ।

**अत् धातु लृट् लकार के रूप**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु० | अतिष्यति | अतिष्यतः | अतिष्यन्ति |
| म० पु० | अतिष्यसि | अतिष्यथः | अतिष्यथ |
| उ० पु० | अतिष्यामि | अतिष्यावः | अतिष्यामः |

**अततु**—अत्+लोट् ( ल्=प्र० पु० एकवचन तिप्=ति )—अत् ति ( शप्, इ=उ )=अततु ।

**अत् धातु, लोट् लकार के रूप**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु० | अततु, अततात् | अतताम् | अतन्तु |
| म० पु० | अत, अततात् | अततम् | अतत |
| उ० पु० | अतानि | अताव | अताम |

**( ४७७ ) पद**—आट्, अजादीनाम् । **अनुवृत्ति**—लुङ्लङ्लृङ्क्षु । **विधिसूत्र** ।

**मूलार्थ**—लुङ्, लङ् और लृङ् के परवर्ती रहने पर अजादि अङ्ग को 'आट्' का आगम होता है । आतत् । अतेत् इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' ( ४५६ ) से 'लुङ्लङ्लृङ्क्षु' की अनुवृत्ति आती है । 'अङ्गस्य' का अधिकार है । तदनुसार—"अजादि अङ्ग को 'आट्' का आगम होता है; लुङ्, लङ् और लृङ् के परे होने पर" । यह सूत्र अट् आगम का बाधक है ।

**उदाहरण**—( १ ) अत्+लङ् ( ल्=प्र० पु० एकवचन—तिप्=ति )—अत् ति ( शप्—'अ', 'आट्'='आ' का आगम—'आडजादीनाम्' आ+अ='आ'—वृद्धि—'आटश्च' )—आतति ( 'इ' का लोप—'इतश्च' )=आतत् ।

**इडागमे कृते ( ४७८ ) अस्तिसिचोऽपृक्ते ७।३।९६। विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः। ( ४७९ ) इट ईटि ८।२।२८। इटः परस्य सस्य लोपः स्या-**

---

तत्स्थाने तिपि सार्वधातुकसंज्ञायां शप्यनुबन्धलोपे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति प्राप्तमटं प्रबाध्य 'आडजादीनाम्' इत्याडागमे, 'आटश्चे'ति वृद्धौ 'इतश्च' इतीकारलोपे 'आतत्' इति सिद्धम्।

( ४७८ ) **अस्तिसिचोऽपृक्ते।** सिच्च अस् चेति समाहारद्वन्द्वः, ततो विद्यमानार्थकास्तीत्यव्ययेन कर्मधारयः, अस्ति चासौ सिचः अस्तिसिचस्, ततः पञ्चम्याः सौत्रो लुक्। तथैवाह वृत्तौ—**विद्यमानात्सिच इत्यादि।**

---

**अत् धातु लङ् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | —आतत् | आतताम् | आतन् |
| म० पु० | —आतः | आततम् | आतत |
| उ० पु० | —आतम् | आताव | आताम |

( २ ) अत्+लिङ् ( ल्=तिप्=ति )—अत् ति ( शप्-अ, यासुट्=यास् )—अत् अ यास् ति ( यास्=इय्, अ+इ='ए'—गुण, 'य्' का लोप—'लोपो व्योर्वलि' 'इ' का लोप—'इतश्च' )=अतेत। ( ३ ) अत्+आशीर्लिङ् ( ल्=प्र० पु० एकवचन तिप्=ति )—अत् ति ( 'लिङाशिषि' से आर्धधातुक संज्ञा होकर शप् का अभाव, यासुट्=यास्, इ का लोप सुट्='स्' का आगम—'सुट् तिथोः' )—अत्यास् स् त ( स्+स् का लोप—'स्कोः०' )=अत्यात्। ( ४ ) अत्+आशीर्लिङ् ( ल्=प्र० पु० द्विवचन तस्=ताम् )—अत् ताम् ( यासुट्=यास् )= अत्यास्ताम्।

**अत् धातु, लिङ् लकार के रूप**

**विधिलिङ्**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | —अतेत् | अतेताम् | अतेयुः |
| म० पु० | —अतेः | अतेतम् | अतेत |
| उ० पु० | —अतेयम् | अतेव | अतेम |

**आशीर्लिङ्**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | —अत्यात् | अत्यास्ताम् | अत्यासुः |
| म० पु० | —अत्याः | अत्यास्तम् | अत्यास्त |
| उ० पु० | —अत्यासम् | अत्यास्व | अत्यास्म |

**( ४७८ ) पद**—अस्तिसिचः, अपृक्ते। **अनुवृत्ति**—ईट्। **विधिसूत्र।**

**मूलार्थ**—विद्यमान सिच् और अस् से परे अपृक्त हल् को ईट् का आगम होता है।

**विमर्श**—'ब्रुव ईट्' ( ७।३।९३ ) से 'ईट्' की अनुवृत्ति आ रही है। 'सिच्च अस् च' समाहारद्वन्द्व है। अस्ति शब्द के साथ सिचस् का कर्मधारय समास है। इस प्रकार विद्यमान सिच् एवं अस् धातु से उत्तर में स्थित अपृक्तसंज्ञक हल् को ईट् ( ई ) का आगम होता है।

**( ४७९ ) पद**—इटः, ईटि। **अनुवृत्ति**—सस्य, लोपः। **विधिसूत्र।**

**दीटि । * सिज्लोप एकादेशे सिद्धो वाच्यः * । आतीत् । आतिष्टाम् । ( ४८० ) सिजभ्यस्तविदिभ्यश्च ३।४।१०९ । सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्सम्बन्धिनो झेर्जुस् । आतिषुः । आतीः । आतिष्टम् । आतिष्ट । आतिषम् । आतिष्व । आतिष्म । आतिष्यत् । एवम्–अव रक्षण-गति-कान्ति-प्रीति-तृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छा-**

---

( ४७९ ) **इट ईटि** । 'इटः' इत्यत्र पञ्चमी । 'रात्सस्ये'त्यतः सस्येति, 'संयोगान्तस्ये'त्यतो लोप इति चात्रानुवर्तते । तदाह—**इटः परस्येति । आतीत्** । अत् धातोर्लुङ्यनुबन्धलोपे तत्स्थाने तिपि, 'च्लि लुङि' इति च्लौ, 'च्लेः सिच्' इति सिच्यनुबन्धलोपे 'अत् स् ति' इति जाते 'आडजादीनाम्' इत्यादि 'आटश्चे'ति वृद्धौ सिचः सकारस्यार्धधातुकत्वे 'आर्धधातुकस्येड् वलादेः' इतीडागमे 'आत् इ स् ति' इति स्थिते 'इतश्च' इतीकारलोपे 'त्' इत्यस्याऽपृक्तसंज्ञायाम् 'अस्तिसिचोऽपृक्ते' इतीडागमे 'आत् इ स् ई त्' इति जाते 'इट ईटि' इति सलोपे, सलोपस्य त्रैपादिकत्वात् 'पूर्वत्राऽसिद्धमि'त्यसिद्धत्वेन दीर्घत्वाऽभावे प्राप्ते 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति वार्तिकेन सिज्लोपस्यासिद्धत्वाभावेन सवर्णदीर्घे 'आतीत्' इति रूपम् ।

( ४८० ) **सिजभ्यस्त इति** । झेर्जुसिति सूत्रमनुवर्तते । 'नित्यं ङितः' इत्यतः 'ङितः' इति चानुवर्तते । तदाह वृत्तौ—**सिचोऽभ्यस्तादित्यादि । आतिषुः** । अत् धातोः

---

**मूलार्थ**—इट् से परवर्ती सकार का लोप होता है, ईट् परे रहते ।

**वा०**—एकादेश करने में सिच् का लोप सिद्ध होता है । आतीत् । आतिष्टाम् ।

**विमर्श**—यहाँ 'रात्सस्य' ( ८।२।२४ ) से 'सस्य' एवं 'संयोगान्तस्य लोपः' ( ८।२।२३ ) से 'लोपः' पद की अनुवृत्ति आती है । तदनुसार—'इट् से परे सिच् के सकार का लोप होता है; ईट् के परवर्ती रहने पर ।

**उदाहरण**—( १ ) अत्+लुङ् ( ल्=प्र० पु० एकवचन तिप्=ति )—अत् ति ( च्लि, च्लि=सिच्=स् )—अत् स् ति ( आट्='आ' का आगम—'आडजादीनाम्', आ+अ='आ' वृद्धि—'आटश्च' )—आत् स् ति ( आर्धधातुक संज्ञा होकर इट्='इ' का आगम, 'इ' का लोप )—आत् इ स् त् ( अपृक्त संज्ञा, ईट्='ई' का आगम—'अस्तिसिचोऽपृक्ते' 'स्' का लोप—'इट ईटि' सलोप-विधायक सूत्र के त्रिपादी होने से 'पूर्वत्राऽसिद्धम्' से असिद्ध होने पर दीर्घाभाव प्राप्त हुआ, 'सिज्लोप एकादेशे सिद्धो वाच्यः' वार्तिक से सिच् लोप के सिद्ध होने पर इ+ई='ई'-सवर्णदीर्घ ) =आतीत् । ( २ ) अत्+लुङ् ( ल्=प्र० पु० द्विवचन तस्=ताम् )—अत् ताम् ( आट्, वृद्धि, च्लि=सिच्=स्, इट्, स्=ष्—'षत्व' 'त्'='ट्'—ष्टुत्व )=आतिष्टाम् ।

**( ४८० ) पद**—सिजभ्यस्तविदिभ्यः, च । **अनुवृत्ति**—झेर्जुस्, ङितः । **विधिसूत्र ।**

**मूलार्थ**—सिच्, अभ्यस्तसंज्ञक और विद् से परे ङित् सम्बन्धी 'झि' के स्थान में 'जुस्' आदेश होता है । आतिषुः । आतीः । आतिष्टम् इत्यादि ।

**विमर्श**—'झेर्जुस्' ( ३।४।१०८ ) सूत्र तथा 'नित्यं ङितः' ( ३।४।९९ ) से 'ङितः' पद की अनुवृत्ति आती है । तदनुसार—"सिच्प्रत्यय, अभ्यस्तसंज्ञक जागृ इत्यादि धातुओं और विद् धातु से परवर्ती ङित् लकार सम्बन्धी 'झि' को जुस् आदेश होता है" ।

**उदाहरण**—( १ ) अत्+लुङ् ( ल्=प्र० पु० बहुवचन झि )—अत् झि ( च्लि=सिच्=स्, आट्, वृद्धि, झि=जुस्='उस्'—'सिजभ्यस्तविदिभ्यश्च' इट्–'इ' )—आतिस् उस् ( स्=ष्, स्=र्=ः )=आतिषुः । 'आतीः' आदि अन्य रूप भी इसी प्रकार सिद्ध होते हैं ।

दीप्त्यालिङ्गन-हिंसा-दान-भागवृद्धिषु । अवतीत्यादि । षिध गत्याम् । ( ४८१ ) पुगन्तलघूपधस्य च ७।३।८६। पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः, सार्वधातुकार्धधातुकयोः । 'धात्वादे'रिति सः । सेधति । षत्वम् । सिषेध ।

सेक्सृप्सृस्तृसृजस्तृस्त्यान्ये इन्त्याजन्तसादयः ।
एकाचः षोपदेशाः स्युः ष्वष्क्स्विद्स्वद्स्वञ्जस्वप्स्मिङः ॥

---

लुङ्चनुबन्धलोपे तत्स्थाने प्रथमपुरुषबहुवचनविवक्षायां झिप्रत्यये सार्वधातुकसंज्ञायां शपं प्रबाध्य च्लौ, तस्य सिच्यनुबन्धलोपे इडागमे षत्वे 'आडजादीनाम्' इत्यादि वृद्धौ 'सिजभ्यस्तविदिभ्यश्चे'ति झेर्जुसादेशेऽनुबन्धलोपे सस्य रुत्वे विसर्गे च कृते 'आतिषुः' इति ।

( ४८१ ) **पुगन्तलघूपधस्येति** । 'मिदेर्गुणः' इत्यतो गुण इत्यनुवर्तते । अङ्गस्येत्यधिकृतमवयवषष्ठ्यन्तमाश्रीयते । पुक् अन्ते यस्य तत्पुगन्तम्, लघ्वी उपधा यस्य तल्लघूपधम्, पुगन्तश्च लघूपधञ्चेत्यनयोः समाहारः पुगन्तलघूपधम्, तस्येति । सेधति । गत्यर्थक–षिध्धातोर्लटि तत्स्थाने प्रथमपुरुषैकवचनविवक्षायां तिपि, सार्वधातुकसंज्ञायां शप्यनुबन्धलोपे शित्त्वात्सार्वधातुकसंज्ञायां 'धात्वादेः षः सः' इत्यनेन षकारस्य

---

**अत् धातु, लुङ् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | आतीत् | आतिष्टाम् | आतिषुः |
| म० पु० | आतीः | आतिष्टम् | आतिष्ट |
| उ० पु० | आतिषम् | आतिष्व | आतिष्म |

**अत् धातु, लृङ् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | आतिष्यत् | आतिष्यताम् | आतिष्यन् |
| म० पु० | आतिष्यः | आतिष्यतम् | आतिष्यत |
| उ० पु० | आतिष्यम् | आतिष्याव | आतिष्याम |

'अव' धातु रक्षण, गति, कान्ति, प्रीति, तृप्ति, ज्ञान, प्रवेश, श्रवण, स्वाम्यर्थ, याचन, क्रिया, इच्छा, दीप्ति, प्राप्ति, आलिङ्गन, हिंसा, दान, भाग और वृद्धि अर्थों में है । 'अवति' इत्यादि रूप बनते हैं । 'षिध्' धातु का अर्थ गति ( =जाना ) है ।

**( ४८१ ) पद**—पुगन्तलघूपधस्य, च । **अनुवृत्ति**—गुणः । **विधिसूत्र ।**

**मूलार्थ**—पुगन्त और लघूपध अङ्ग के अवयव इक् को सार्वधातुक-आर्धधातुक प्रत्यय के परे रहने पर गुण होता है । सेधति इत्यादि ।

**विमर्श**—'मिदेर्गुणः' ( ७।३।८२ ) से 'गुणः' की अनुवृत्ति आती है । 'अङ्गस्य' का अधिकार है । 'इको गुणवृद्धी' परिभाषा द्वारा 'इक्' पद की उपस्थिति होती है । तदनुसार पूर्वोक्त अर्थ निष्पन्न होता है ।

**उदाहरण**—( १ ) षिध्+लट् ( ल्=तिप्=ति )—षिध् ति ( शप्-अ, 'ष्'='स्'—'धात्वादेः षः सः' इ='ए'—गुण—'पुगन्तलघूपधस्य च' )=सेधति । ( २ ) षिध्+लिट् ( ल्=तिप्, ष=सत्व, 'लिट् च' से आर्धधातुक संज्ञा, शप् का अभाव, तिप्=णल्='अ' )—सिध् अ ( द्वित्व, अभ्यास संज्ञा, हलादि शेष, गुण—'पुगन्त०' स्=षत्व—'आदेशप्रत्यययोः' )=सिषेध ।

दन्त्यः केवलदन्त्यो, न तु दन्त्योष्ठजोऽपि, ष्वष्कादीनां पृथग् ग्रहणात् । ( ४८२ ) **असंयोगाल्लिट् कित् १।२।५ । असंयोगात्परोऽपि लिट् कित्स्यात् । सिषिधतुः । सिषिधुः । सिषेधिथ । सिषिधथुः । सिषिध । सिषेध । सिषिधिव । सिषिधिम । सेधिता । सेधिष्यति । सेधतु । असेधत् । सेधेत् । सिध्यात् । असेधीत् । असेधिष्यत् ।**

---

सत्वे 'पुगन्तलघूपधस्य च' इति लघूपधस्य गुणे 'सेधति' इति सिद्धम् । **सिषेध इति ।** 'षिध्'धातोः 'परोक्षे लिट्' इति लिटचनुबन्धलोपे तत्स्थाने तिपि, षस्य सत्वे, 'लिट् चे'त्यनेनार्धधातुकसंज्ञायां शपोऽभावे 'परस्मैपदानामि'त्यादिना सूत्रेण तिपः णलादेशेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वेऽभ्याससंज्ञायां 'हलादिः शेषः' इत्यनेन धकारस्य लोपे 'पुगन्तलघूपधस्य चे'त्यनेन गुणे 'आदेशप्रत्यययोः' इति षत्वे कृते सिषेध इति ।

( ४८२ ) **असंयोगाल्लिट् कित् ।** 'सार्वधातुकमपित्' इत्यतः 'अपिदि'त्यनुवर्तते । तदाह—**असंयोगादित्यादिना । सिषिधतुः ।** षिध्धातोर्लिट्यनुबन्धलोपे तत्स्थाने प्रथमपुरुषद्विवचनविवक्षायां तस्प्रत्यये 'धात्वादेः षः सः' इति सत्वे, 'परस्मैपदानामि'-त्यादिना सूत्रेण तसः स्थाने अतुसादेशे 'लिट् चे'त्यार्धधातुकसंज्ञायां शपोऽभावे 'लिटि धातोरनभ्यासस्य' इति द्वित्वेऽभ्याससंज्ञायां हलादिशेषे 'असंयोगाल्लिट् कित्' इत्यनेनातुसः कित्त्वे 'पुगन्तलघूपधस्य चे'त्यनेन गुणे प्राप्ते 'क्ङिति चे'ति निषेधे, षत्वे रुत्वे विसर्गे च कृते 'सिषिधतुः' इति सिद्धम् ।

---

**सेक्सृप् इति । कारिकार्थ**—सेक्, सृप्, सृ, स्तृ, सृज्, स्तृ, स्त्यै—इनसे भिन्न जो दन्त्यान्त अथवा अजन्त सकारादि एकाच् धातु, वह षोपदेश है; तथा ष्वष्क्, स्विद्, स्वद्, स्वञ्ज्, स्वप्—ये भी षोपदेश हैं ।

**( ४८२ ) पद**—असंयोगात, लिट्, कित । **अनुवृत्ति**—अपित । **विधिसूत्र ।**

**मूलार्थ**—असंयोग से परे अपित ( पित भिन्न ) लिट् कित होता है । सिषिधतुः । सिषिधुः इत्यादि ।

**विमर्श**—यहाँ 'सार्वधातुकमपित' ( १।२।४ ) सूत्र से 'अपित' पद की अनुवृत्ति आती है । तदनुसार—'संयोग भिन्न से परवर्ती अपित लिट् कित होता है' ।

**उदाहरण**—षिध्+लिट् ( ल्=प्र० पु० द्विवचन तस् )—षिध् तस् ( ष्=स्, तस्=अतुस् ) —सिध् अतुस् ( द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'असंयोगाल्लिट् कित्' से अतुस् को कित्त्व होने पर 'इ'='ए'—गुण की प्राप्ति, कित होने से 'क्ङिति च' से गुण-निषेध, षत्व, स्=र्=ः )= सिषिधतुः । इसी प्रकार अन्य रूप सिद्ध होंगे—

**लिट् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | सिषेध | सिषिधतुः | सिषिधुः |
| म० पु० | सिषेधिथ | सिषिधथुः | सिषिध |
| उ० पु० | सिषेध | सिषिधिव | सिषिधिम |

लुट् में—सेधिता, लृट् में—सेधिष्यति, लोट् में—सेधतु, लङ् में—असेधत, विधिलिङ् में—सेधेत, आशीर्लिङ् में—सिध्यात, लुङ् में—असेधीत एवं लृङ् में—असेधिष्यत ।

**( ४८३ ) सात्पदाद्योः ८।३।१११ । सातेः पदादेश्च सस्य षो न । इति निषेधे प्राप्ते । ( ४८४ ) उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ८।३।६५ । उपसर्गस्थान्निमित्तादेषां सस्य षः । ( ४८५ ) सदिरप्रतेः ८।३।६६ । प्रतिभिन्नादुपसर्गात्सदेः सस्य षः । ( ४८६ ) स्तन्भेः ८।३।६७ । स्तन्भेः**

---

**असेधीत्** । षिध्धातोर्लुङि, तत्स्थाने तिपि, षस्य सत्वे सार्वधातुकसंज्ञायां प्राप्तं शपं प्रबाध्य च्लौ, च्लेः सिचि, इचोरित्संज्ञायां लोपे च कृते 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यडागमेऽनुबन्धलोपे सकारस्यार्धधातुकसंज्ञायाम् इडागमेऽनुबन्धलोपे 'इतश्च' इतीकारलोपे अपृक्तसंज्ञायाम् 'अस्तिसिचोऽपृक्ते' इति ईटि 'इट ईटि' इति सलोपे, तस्य 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति वार्तिकेन सिद्धत्वेन सवर्णदीर्घे 'असेधीत्' इति रूपम् ।

( ४८३ ) **सात्पदाद्योरिति** । षश्च नेत्यनुवर्तते । तेन सातेः सस्य पदादेः सस्य च प्राप्तं षत्वं न भवति ।

( ४८४ ) **उपसर्गादिति** । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते । 'अपदान्तस्य मूर्धन्यः' इत्यधिकारात् सस्य षः स्यादित्यर्थो लभ्यते ।

( ४८५ ) **सदिरप्रतेरिति** । अत्र 'निषीदति' इत्युदाहरणम् । सदिरिति षष्ठ्यर्थे प्रथमा ।

( ४८६ ) **स्तन्भेरिति** । 'स्तन्भुस्तुन्भु' इति सूत्रनिर्दिष्टस्य नोपधस्येत्यर्थः । अत आह—**सौत्रस्येति** ।

---

**( ४८३ ) पद**—सात्पदाद्योः । **अनुवृत्ति**—षः, न । **विधिसूत्र ( निषेध )** ।

**मूलार्थ**—'साति' प्रत्यय के सकार और पदादि के सकार को षत्व नहीं होता ।

**विमर्श**—यहाँ 'अपदान्तस्य मूर्द्धन्यः' ( ८।३।५५ ) से 'मूर्धन्यः' तथा 'न रपर०' ( ८।३।११० ) से 'न' पद की अनुवृत्ति आती है । तदनुसार—'साति प्रत्यय के सकार को तथा पदादि सकार को षकार नहीं होता' ।

**( ४८४ ) पद**—उपसर्गात्, सुनोति-सुवति-स्यति-स्तौति-स्तोभति-स्था-से-नय-सेध-सिच्-सञ्ज-स्वञ्जाम् । **अनुवृत्ति**—सः । **विधिसूत्र** ।

**मूलार्थ**—उपसर्गस्थ निमित्त से परवर्ती सुनोतीत्यादि धातुओं के सकार को षकार ( षत्व ) होता है ।

**विमर्श**—'सहेः साडः सः' ( ८।३।५६ ) से षष्ठ्यन्त 'सः' पद की अनुवृत्ति आती है । 'अपदान्तस्य मूर्द्धन्यः' का अधिकार होने से—'उपसर्गस्थ निमित्त से पर में स्थित सु, सू, सो, स्तु, स्तुभ्, स्था, सेनय्, सेध्, सिच्, सञ्ज् और स्वञ्ज धातुओं के सकार को षकार आदेश होता है ।'

**( ४८५ ) पद**—सदिः, अप्रतेः । **विधिसूत्र** ।

**मूलार्थ**—प्रति-भिन्न उपसर्ग से परे सद् धातु के सकार को षकार आदेश होता है ।

**विमर्श**—'अपदान्तस्य मूर्धन्यः' का अधिकार है । यहाँ भी 'उपसर्गस्थान्निमित्तात्' का अन्वय होता है । अतः प्रति से भिन्न उपसर्ग से परवर्ती 'सद्' के सकार को षत्व होता है ।

**( ४८६ ) पद**—स्तन्भेः । **विधिसूत्र** ।

सौत्रस्य सस्य षः। (४८७) अवाच्चालम्बनाविदूर्ययोः ८।३।६८। अवात्स्तम्भेरेतयोरर्थयोः सस्य षः। (४८८) वेश्च स्वनो भोजने ८।३।६९। व्यवाभ्यां स्वनतेः सस्य षो, भोजने। (४८९) परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ८।३।७०। परिनिविभ्यः परेषामेषां सस्य षः स्यात्। निषेधति। (४९०) प्राक्सितादड्व्यवायेऽपि ८।३।८३। 'सित्'-शब्दात्प्राग् य सुनोत्यादयस्तेषामड्व्यवायेऽपि

---

(४८७) अवाच्चेति। अवोपसर्गपूर्वकात्स्तन्भेः आलम्बनवैदूर्यार्थे गम्ये सस्य षत्वं भवतीत्यर्थः।

(४८८) वेश्चेति। अवादित्यनुकर्षणार्थश्चकारः।

(४८९) परिनिविभ्य इति। सेवेत्यकार उच्चारणार्थः। 'षेवृ सेवायामि'ति धातोर्ग्रहणम्। सितेत्यनेन 'षिञ् बन्धने' इति क्तान्तस्य ग्रहणम्। निषेधति। 'नि' इत्युपसर्गपूर्वकात् षिध्धातोर्लटचनुबन्धलोपे 'धात्वादेः षः सः' इति षस्य सत्वे, लटः स्थाने तिप्यनुबन्धलोपे सार्वधातुकसंज्ञायां शप्यनुबन्धलोपे 'पुगन्तलघूपधस्य चे'त्यनेन गुणे 'निसेधति' इति जाते 'उपसर्गात् सुनोती'त्यादिना षत्वे 'निषेधति' इति।

(४९०) प्राक्सितादिति। 'उपसर्गात्सुनोती'त्यादिसूत्रे स्थाधातुमारभ्य 'परिनिविभ्यः' इत्यत्र सितशब्दात्प्राक् ये धातव उपात्ताः तेषु दशस्वित्यर्थः। न्यषेधत्

---

मूलार्थ—उपसर्गस्थ निमित्त से परे सौत्र स्तम्भ धातु के 'स्' के स्थान पर 'ष्' आदेश होता है।

(४८७) पद—अवात्, च, आलम्बनाविदूर्ययोः। विधिसूत्र।

मूलार्थ—आलम्बन (=आश्रय) एवं अविदूर्य्य (=समीप) अर्थ में अव् उपसर्गपूर्वक स्तम्भ धातु के सकार को षकार आदेश होता है।

(४८८) पद—वेः, च, स्वनः, भोजने। विधिसूत्र।

मूलार्थ—'वि' एवं 'अव्' उपसर्गपूर्वक 'स्वन्' के सकार को मूर्धन्य (षकार) आदेश होता है, भोजन अर्थ में।

(४८९) पद—परिनिविभ्यः, सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्। विधिसूत्र।

मूलार्थ—परि, नि और वि उपसर्गों से परवर्ती सेव सित आदि धातुओं के 'स्' के स्थान में 'ष्' आदेश होता है। निषेधति।

विमर्श—पूर्ववत् 'सहेः साडः सः' (८।३।५६) से षष्ठ्यन्त 'सः' की अनुवृत्ति आ रही है। 'अपदान्तस्य मूर्धन्यः' का अधिकार है। अतः 'परि, नि, वि' इनसे परे सेव, सित, सय, सिवु, सह, सुट्, स्तु, स्वञ्ज् धातुओं के सकार को षकार आदेश होता है।

उदाहरण—नि+सेधति ('स्'='ष्'--'परिनिविभ्यः०')=निषेधति।

(४९०) पद—प्राक्, सितात्, अड्, व्यवाये, अपि। विधिसूत्र।

मूलार्थ—सित शब्द से पूर्व सुनोति आदि धातु सम्बन्धी सकार को अट का व्यवधान रहने पर भी षत्व होता है। न्यषेधत्। न्यषेधीत्। न्यषेधिष्यत्।

विमर्श—प्रकृत सूत्र में भी पूर्ववत् षष्ठ्यन्त 'सः' की अनुवृत्ति आती है। 'अपदान्तस्य मूर्धन्यः' का अधिकार है। 'सेवसित०' में सित शब्द से पूर्व जो सुनोति आदि पन्द्रह धातुओं के सकार को अट् के व्यवधान में भी षकार आदेश होता है।

**सस्य षः स्यात्। न्यषेधत्। न्यषेधीत्। न्यषेधिष्यत्। ( ४९१ ) स्थादिष्वभ्यासेन चाऽभ्यासस्य ८।३।६४। प्राक्-सितात्स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात्, एषामेव चाऽभ्यासस्य न तु सुनोत्यादीनाम्। निषिषेध। निषिषिधतुः। ( ४९२ ) सेधतेर्गतौ ८।३।११३। गत्यर्थस्य सेधतेः सस्य षो न। गङ्गां विसेधति। एवम्—चिती संज्ञाने।**

---

**इत्यादि।** 'नि + असेधत्, नि + असेधीत्, नि + असेधिष्यत्' इत्यत्र अडागमेन व्यवधानात् 'उपसर्गात्सुनोती'त्यादिना षत्वेऽप्राप्ते 'प्राक्सितादड्व्यवायेऽपि' इत्यनेनाऽटा व्यवधानेऽपि षत्वमित्युक्तरूपसिद्धिः।

( ४९१ ) **स्थादिष्विति।** यद्यपि 'निषिषेध' इत्यत्राभ्यासस्य 'उपसर्गात्सुनोती'-त्यादिना षत्वं सिद्धम्, ततः परस्य सस्य 'आदेशप्रत्यययोः' इत्यनेन षत्वं भविष्यतीति नास्य सूत्रस्य प्रयोजनं, तथापि 'अधितिष्ठौ' इत्यादौ अवर्णान्तोऽभ्यासस्तत्र षत्व-विधानार्थमिदमावश्यकमिति।

( ४९२ ) **सेधतेर्गतौ।** 'न रपरे'त्यतो नेत्यनुवर्तते। **गङ्गां विसेधति।** 'वि + सेधति' इत्यवस्थायाम् 'उपसर्गात्सुनोती'त्यादिना षत्वे प्राप्ते 'सेधतेर्गतौ' इत्यनेन निषेधे 'विसेधति' इति सिद्धम्।

---

**उदाहरण**—( १ ) नि+असेधत् ( 'स्'='ष्'—'प्राक्सितादड्व्यवायेऽपि', 'इ'='य्'—'यण्' )=न्यषेधत्। ( २ ) नि+असेधीत् ( 'स्'='ष्', यण् )=न्यषेधीत्। ( ३ ) नि+असेधिष्यत् ( 'स्'='ष्' यण् )=न्यषेधिष्यत्।

**( ४९१ ) पद**—स्थादिषु, अभ्यासेन, च, अभ्यासस्य। **अनुवृत्ति**—प्राक् सितात्, सः। **विधिसूत्र।**

**मूलार्थ**—सित शब्द से पूर्व स्था आदि धातुओं के सकार को अभ्यास के व्यवधान में भी षकार ( मूर्धन्य ) आदेश होता है। इन धातुओं के ही अभ्यास व्यवधान होने से षत्व होता है, अर्थात् सुनोति ( सु ) आदि के अभ्यास के व्यवधान में नहीं। निषिषेध। निषिषिधतुः।

**विमर्श**—यहाँ पूर्वसूत्र ( ४९० ) से 'प्राक्सितात्' पद की अनुवृत्ति आती है। 'सहेः साडः सः' से षष्ठ्यन्त 'सः' की अनुवृत्ति आती है। 'अपदान्तस्य मूर्धन्यः' का अधिकार होने से उक्त सूत्रार्थ निष्पन्न होता है।

**उदाहरण**—( १ ) लिट्—प्र० पु० ए० व०—नि+सिसेध ( पूर्व सकार का 'उपसर्गात्०' से षत्व )—नि षिसेध ( 'स्'='ष्'—'स्थादिष्वभ्यासेन चाभ्यासस्य' )=निषिषेध। ( २ ) लिट्—प्र० पु० द्विवचन—नि+सिसिधतुः ( पूर्व सकार का 'ष्'—'उपसर्गात्०' )—नि षिसिधतुः ( 'स्'='ष्' 'स्थादिष्व०' )=निषिषिधतुः।

**( ४९२ ) पद**—सेधतेः, गतौ। **अनुवृत्ति**—सः, न। **विधिसूत्र** ( निषेध )।

**मूलार्थ**—गत्यर्थक सिध धातु के 'स्' के स्थान में 'ष्' नहीं होता। गङ्गां विसेधति।

**विमर्श**—पूर्ववत् षष्ठ्यन्त 'सः' तथा 'न रपर०' ( ८।३।११० ) सूत्र से 'न' पद की अनुवृत्ति आती है। 'अपदान्तस्य मूर्धन्यः' का अधिकार होने से 'गति अर्थ युक्त सिध धातु के सकार को षकार आदेश नहीं होता।

**उदाहरण**—गङ्गां विसेधति ( =गच्छति )—'वि+सेधति' ( 'स्'='ष्'—'उपसर्गात्सुनोति०' से प्राप्ति 'सेधतेर्गतौ' से निषेध होने पर )=विसेधति। इसी प्रकार 'चिती संज्ञाने' ( =होश में आना ), 'शुच शोके' ( =चिन्ता या शोक करना ) धातुओं के रूप भी बनते हैं। गद् धातु 'स्पष्ट

शुच शोके। गद व्यक्तायां वाचि। गदति। (४९३) नेर्गद-नद-पत-पद-घु-मा-स्यति-हन्ति-याति-वाति-द्राति-प्साति-वपति-वहति-शाम्यति-चिनोति-देग्धिषु च ८।४।१७। उपसर्गस्थान्निमित्तात्परस्य नेर्णः स्यात् गदादिषु परेषु। प्रणिगदति। (४९४) कुहोश्चुः ७।४।६२। अभ्यासकवर्गहकारयोश्चवर्गादेशः। (४९५) अत उपधायाः ७।२।११६। उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये। जगाद। जगदतुः। जगदुः।

---

(४९३) नेर्गद इति। अत्र 'रषाभ्यां नो णः' इति, 'उपसर्गादसमासेऽपि' इत्यत उपसर्गादिति चानुवर्तते। तदाह—उपसर्गस्थादित्यादि। प्रणिगदति। 'प्र+नि' इत्युपसर्गपूर्वकात् गद्धातोर्लटचनुबन्धलोपे तत्स्थाने तिपि, सार्वधातुकत्वे शप्यनुबन्धलोपे 'नेर्गदनद०' इति णत्वे 'प्रणिगदति' इति रूपम्।

(४९४) कुहोश्चुरिति। कुश्च हुश्च कुहू, तयोः कुहोः। 'अत्र लोपोऽभ्यासस्ये'-त्यत अभ्यासस्येत्यनुवर्तते। तदाह—अभ्यासस्येति।

(४९५) अत इति। अत्र 'मृजेर्वृद्धिः' इत्यतः 'वृद्धिरि'त्यनुवर्तते, 'अचो ञ्णिति' इत्यतः ञिति णिति चेति। तदाह—उपधाया इत्यादि। जगाद। गद्धातोर्लिटचनुबन्धलोपे, तत्स्थाने प्रथमपुरुषैकवचने तिपि, 'परस्मैपदानामि'ति तिपो णलि, अनुबन्ध-

---

बोलना' अर्थ में है। √गद्+लट् (ल्=प्र० पु० एकवचन तिप्=ति)—गद् ति (शप्-अ) =गदति।

**(४९३) पद**—नेः, गद-नद-पत-पद-घु-मा-स्यति-हन्ति-याति-वाति-द्राति-प्साति-वपति-वहति-शाम्यति-चिनोति-देग्धिषु, च। **अनुवृत्ति**—रषाभ्यां नो णः, उपसर्गात्। **विधिसूत्र।**

**मूलार्थ**—उपसर्गस्थ निमित्त से परवर्ती 'नि' के नकार को णकार आदेश होता है; गदादि धातुओं के परे रहते। प्रणिगदति।

**विमर्श**—प्रकृत सूत्र में 'रषाभ्यां नो णः समानपदे' (८।४।१) से 'रषाभ्यां नो णः' की तथा 'उपसर्गादसमासेऽपि०' (८।४।१४) से 'उपसर्गात्' पद की अनुवृत्ति आ रही है। तदनुसार—"उपसर्गस्थ निमित्त (र्, ष्) से परे 'नि' उपसर्ग के नकार को णकार आदेश होता है; 'गद्, नद्' आदि धातुओं में से कोई धातु परे रहने पर।"

**उदाहरण**—प्र+नि+गदति ('न्'='ण्'—'नेर्गदनद०')=प्रणिगदति।

**(४९४) पद**—कुहोः, चुः। **अनुवृत्ति**—अभ्यासस्य। **विधिसूत्र।**

**मूलार्थ**—अभ्यास के कवर्ग और हकार को चवर्ग आदेश होता है।

**विमर्श**—यहाँ 'अत्र लोपोऽभ्यासस्य' (७।४।५८) से 'अभ्यासस्य' पद की अनुवृत्ति आती है। (कुश्च हुश्च कुहू, तयोः=कवर्गहकारयोः) अभ्याससंज्ञक कवर्ग (क्, ख्, ग्, घ्, ङ्) के स्थान में क्रमशः चवर्ग (च्, छ्, ज्, झ्, ञ्) तथा 'ह्' के स्थान में आन्तरतम्य (बाह्य प्रयत्न देखकर) से 'झ्' होता है।

**(४९५) पद**—अतः, उपधायाः। **अनुवृत्ति**—वृद्धिः, ञिति, णिति। **विधिसूत्र।**

**मूलार्थ**—ञित्, णित् प्रत्यय के परवर्ती रहने पर उपधा के अकार को वृद्धि होती है। जगाद। जगदतुः। जगदुः। इत्यादि।

**विमर्श**—प्रकृत सूत्र में 'मृजेर्वृद्धिः' (७।२।११४) से 'वृद्धिः' और 'अचो ञ्णिति' (७।२।११५) से 'ञ्णिति' पदों की अनुवृत्ति आती है। तदनुसार—'ञकारेत्संज्ञक और णकारेत्संज्ञक प्रत्ययों के परे रहने पर उपधा अकार को वृद्धि होती है'।

**जगदिथ। जगदथुः। जगद। (४९६) णलुत्तमो वा ७।१।९१। उत्तमो णल् वा णित् स्यात्। जगाद। जगद। गदिता। गदिष्यति। गदतु। अगदत्। गदेत्। गद्यात्। (४९७) अतो हलादेर्लघोः ७।२।७। हलादेर्लघोरतो वृद्धिर्वेडादौ सिचि परस्मैपदे।**

---

लोपे 'लिटि धातोरनभ्यासस्ये'त्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिशेषे 'कुहोश्चुः' इत्यनेनाभ्यासगकारस्य चुत्वेन जकारे 'जगद् अ' इति जाते 'अत उपधायाः' इति वृद्धौ जगाद इति।

(४९६) **णलुत्तमो वा**। 'गोतो णिदि'त्यतः 'णिदि'त्यनुवर्तते।

(४९७) **अतो हलादेरिति**। अत्र 'सिचि वृद्धिः परस्मैपदेष्वि'त्यनुवर्तते। नेटीत्यस्मादीटि, 'ऊर्णोतेर्विभाषे'त्यतो विभाषेति च। अत आह मूले—हलादेरित्यादि। **अगादीत्**। गद्धातोर्लुङ्यनुबन्धलोपे प्रथमपुरुषगतैकत्वविवक्षायां तिप्यनुबन्धलोपे सार्वधातुकसंज्ञायां शपं प्रबाध्य च्लौ, च्लेः सिच्यनुबन्धलोपेऽडागमे 'इतश्चे'तीकारलोपे, सस्यार्धधातुकसंज्ञायामिटि, 'अस्तिसिचोऽपृक्ते' इति तकारस्येडागमेऽनुबन्धलोपे

---

**उदाहरण**—(१) √गद्+लिट् (ल्=प्र० पु० एकवचन तिप्)—गद् ति (तिप्=णल्='अ'—'परस्मैपदानाम्०' द्वित्व, अभ्यास संज्ञा, 'हलादिः शेषः'—'द्' का लोप)—ग गद् अ ('ग्'='ज्'—'कुहोश्चुः')—जगद् अ (वृद्धि—'अत उपधायाः')=जगाद। (२) √गद्+लिट्=तस्=अतुस् (द्वित्व, अभ्यास संज्ञा, 'द्' का लोप, 'ग्'='ज्'—'कुहोश्चुः')—जगदतुस् (स्=र्=ः)=जगदतुः। (३) √गद्+झि (=उस्, पूर्वोक्त कार्य)=जगदुः। (४) √गद्+लिट् (=सिप्)—गद् सि (सि=थल्=थ, उक्तकार्य, इट्)=जगदिथ। (५) √गद्+थस् (=अथुस्)=जगदथुः। (६) √गद्+थ (=णल्=अ)=जगद।

**(४९६) पद**—णल्, उत्तमः, वा। **अनुवृत्ति**—णित्। **विधिसूत्र**।

**मूलार्थ**—उत्तमपुरुष का णल् विकल्प से णित् होता है। जगाद, जगद इत्यादि।

**विमर्श**—यहाँ 'गोतो णित्' (७।१।९०) से 'णित्' पद की अनुवृत्ति आती है। तदनुसार—"उत्तमपुरुष सम्बन्धी 'णल्' को विकल्प से णिद्भाव होता है"।

**उदाहरण**—(१) √गद्+लिट् (ल्=उ० पु० एकवचन मिप्=णल् 'अ')—गद् अ (द्वित्व, अभ्यास संज्ञा, 'द्' का लोप, ग्=ज्, 'णलुत्तमो वा' से पाक्षिक णिद्भाव होने पर 'वृद्धि'—'अत उपधायाः')=जगाद। णित्व के अभाव में—जगद। (२) गदिता (लुट्)। (३) गदिष्यति (लृट्)। (४) गदतु (लोट्)। (५) अगदत् (लङ्)। (६) गदेत् (विधिलिङ्)। (७) गद्यात् (आशीर्लिङ्)।

**(४९७) पद**—अतः, हलादेः, लघोः। **अनुवृत्ति**—सिचि वृद्धिः परस्मैपदेषु, इटि, विभाषा। **विधिसूत्र**।

**मूलार्थ**—इडादि परस्मैपद सिच् के परवर्ती रहने पर हलादि धातु के ह्रस्व अकार को विकल्प से वृद्धि होती है।

**विमर्श**—प्रकृत सूत्र में 'सिचि वृद्धिः परस्मैपदेषु' (७।२।१) सूत्र, 'नेटि' सूत्र से 'इटि' और 'ऊर्णोतेर्विभाषा' (७।२।६) से 'विभाषा' पदों की अनुवृत्ति आ रही है। तदनुसार—'इट् है आदि में जिसके, ऐसे परस्मैपदसंज्ञक सिच् के परे रहने पर हलादि अङ्ग के अवयव ह्रस्व अकार को विकल्प से वृद्धि होती है'।

अगादीत् । अगदीत् । अगदिष्यत् । णद अव्यक्ते शब्दे । (४९८) **णो नः ६।१।६५ ।** धात्वादेर्णस्य नः स्यात् । णोपदेशास्त्वनर्द-नाटि-नाथ-नाध-नन्द-नक्क-नॄ-नृतः । (४९९) **उपसर्गादसमासेऽपि णोपदेशस्य ८।४।१४ ।** उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्समासेऽसमासेऽपि । प्रणदति । प्रणिनदति । नदति । ननाद । (५००) **अत एकहल्मध्येऽनादेशादेर्लिटि ६।४।१२० ।** लिण्निमित्तादेशादिकं न

---

'अगद् इ स् ई त्' इति जाते 'इट ईटि' इति सलोपे 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घे 'अतो हलादेर्लघोः' इति विभाषया वृद्धौ 'अगादीत्', तदभावे च 'अगदीत्' इति सिद्धम् ।

(४९८) **णो न इति ।** ण इति षष्ठ्यन्तं पदम् । 'धात्वादेः षः सः' इत्यस्मात् 'धात्वादेरि'ति पदमनुवर्तते । तदाह—**धात्वादेरित्यादि ।**

(४९९) **उपसर्गादिति ।** 'रषाभ्यां नो णः' इत्यधिकृतम् । 'समासेऽङ्गुलेः०' इत्यतः समास इत्यनुवर्तते ।

(५००) **अत इति ।** 'घ्वसोरेद्धावि'त्यतः एदिति अभ्यासलोप इति चानुवर्तते ।

---

**उदाहरण**—(१) √गद्+लुङ् (ल्=प्र० पु० एकवचन तिप्=ति)—गद् ति (अट्, 'इ' का लोप—'इतश्च' च्लि=सिच्=स्, आर्धधातुक संज्ञा, इट्=इ, ईट्='ई'–'अस्तिसिचोऽपृक्ते') —अ गद् इ स् ई त् ('स्' का लोप—'इट ईटि' सवर्णदीर्घ, 'वृद्धि' विकल्प से—'अतो हलादेर्लघोः')=अगादीत् । वृद्धि के अभावपक्ष में—अगदीत् । लृङ् में—अगदिष्यत् ।

णद् धातु का अर्थ=अस्पष्ट शब्द अर्थात् पशु-पक्षियों का शब्द है ।

**(४९८) पद**—णः, नः । **अनुवृत्ति**—धात्वादेः । **विधिसूत्र ।**

**मूलार्थ**—धातु के आदि में स्थित 'ण्' के स्थान में 'न्' होता है । **णोपदेश इति ।** नर्द, नाटि, नाथ, नन्द, नक्क, नॄ, नृत धातुओं से भिन्न नकारादि धातुएँ णोपदेश हैं ।

**विमर्श**—यहाँ 'धात्वादेः षः सः' (६।१।६४) से 'धात्वादेः' पद की अनुवृत्ति आ रही है । तदनुसार—'धातु के आदि में स्थित धातु के अवयव णकार के स्थान में नकार आदेश होता है' । उपदेश अवस्था में णोपदेश धातुओं का परिगणन मूल में किया गया है ।

**(४९९) पद**—उपसर्गात्, असमासेऽपि, णोपदेशस्य । **अनुवृत्ति**—समासे । **विधिसूत्र ।**

**मूलार्थ**—उपसर्गस्थ निमित्त से परवर्ती णोपदेश धातु के 'न्' के स्थान में 'ण्' आदेश होता है; समास और असमास स्थल में । प्रणदति । प्रणिनदति । नदति । ननाद ।

**विमर्श**—प्रकृत सूत्र में 'रषाभ्यां नो णः' का अधिकार है । 'समासेऽङ्गुलेः सङ्गः' (८।३।८०) से 'समासे' पद की अनुवृत्ति आने पर पूर्वोक्त अर्थ सम्पन्न होता है ।

**उदाहरण**—(१) √नद्+लट् ('ण्'='न्'—'णो नः' ल्=प्र० पु० एकवचन तिप्=ति, शप्–अ)=नदति । प्र+नदति ('न्'='ण्'—'उपसर्गादसमासेऽपि०')=प्रणदति । (२) प्र+नि+नदति (उपसर्ग के 'न्'='ण्'—'नेर्गदनद०')=प्रणिनदति । (३) √नद्+लट् (प्र० पु० ए० व० में)=नदति । (४) √णद्+लिट् (=प्र० पु० एकवचन तिप्=णल्=अ, ण्=न)—नद् अ (द्वित्व, अभ्यास संज्ञा, 'हलादिः शेषः' से द् का लोप, उपधावृद्धि—'अत उपधायाः')=ननाद ।

**(५००) पद**—अतः, एकहल्मध्ये, अनादेशादेः, लिटि । **अनुवृत्ति**—एत्, अभ्यासलोपः, क्ङिति ।

**भवति यदङ्गं तदवयवस्याऽसंयुक्तहल्मध्यस्थस्याऽत एत्वमभ्यासलोपश्च किति लिटि। नेदतुः। नेदुः। ( ५०१ ) थलि च सेटि ६।४।१२१। इड्वति थलि च प्रागुक्तं स्यात्। नेदिथ। नेदथुः। नेद। ननाद। ननद। नेदिव। नेदिम। नदिता। नदिष्यति। नदतु। अनदत्। नदेत्। नद्यात्। अनादीत्। अनदीत्। अनदिष्यत्। श्च्युतिर् क्षरणे। * इर**

---

'गमहने'त्यतः कितीत्यनुवर्तते। एकशब्द असहायवाची। तदाह—**लिण्निमित्तेत्यादिना।** **नेदतुः।** णद् धातोर्लिटि तत्स्थाने तसि, 'णो नः' इति णस्य नत्वे तसः अतुसि, द्वित्वेऽभ्यासकार्ये च कृते 'न नद् अतुस्' इति स्थिते 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वेऽभ्यासलोपे, सस्य रुत्वे, रेफस्य विसर्गे च कृते 'नेदतुः' इति रूपम्।

( ५०१ ) **प्रागुक्तमिति।** लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्य संयुक्तहल्मध्यस्थस्यात एत्वं स्यादभ्यासलोपश्च सेटि थलीत्यर्थः। **नेदिथ।** णद्धातोर्लिटि,

---

**मूलार्थ**—लिट्-निमित्तक आदेश नहीं हुआ हो ऐसा जो 'अङ्ग' तदवयव जो असंयुक्त हल्-मध्यस्थ अकार को एकार आदेश होता है और अभ्यास का लोप होता है; कित् लिट् के परे रहते। नेदतुः। नेदुः।

**विमर्श**—यहाँ 'ध्वसोरेद्धावभ्यासलोपश्च' ( ६।४।११९ ) से 'एत्' तथा 'अभ्यासलोपः' एवं 'गमहनजन०' ( ६।४।९८ ) से 'कित्' पदों की अनुवृत्ति आती है। तदनुसार—'लिट् को निमित्त मानकर जिस अङ्ग के आदि वर्ण के स्थान में आदेश न हुआ हो, उसके अवयव संयोग रहित हल् के साथ वर्तमान ह्रस्व अकार को एकार और अभ्यास का लोप होता है; कित् लिट् के परवर्ती रहने पर।

**उदाहरण**—( १ ) √णद्+लिट्=तस् ( ण्=न्—'णो नः', तस्=अतुस् )—नद् अतुस् ( द्वित्व, अभ्यासकार्य )—न नद् अतुस् ( एत्व, अभ्यासलोप—'अत एकहल्मध्ये०' स्=र्=ः ) =नेदतुः। ( २ ) √णद्+लिट्=झि ( ण्=न, झि=उस्, द्वित्व अभ्यासकार्य, एत्व, अभ्यास-लोप, स्=र्=ः )=नेदुः।

**( ५०१ ) पद**—थलि, च, सेटि। **अनुवृत्ति**—अत एकहल्मध्येऽनादेशादेः लिटि। एत्, अभ्यासलोपः। **विधिसूत्र।**

**मूलार्थ**—सेट् ( इट् सहित ) 'थल्' के परवर्ती रहने पर भी पूर्वोक्त प्रकार का एत्व और अभ्यास लोप होता है। नेदिथ। इत्यादि।

**विमर्श**—'अत एकहल्मध्येऽनादेशादेर्लिटि' (५००) सूत्र एवं पूर्ववत् 'एत्' तथा 'अभ्यासलोपः' की अनुवृत्ति आ रही है। तदनुसार—'सेट् थल् के परे रहते भी, लिट्-निमित्तक आदेश न हुआ हो ऐसा जो अङ्ग, उसका अवयव असंयुक्त एक हल् के मध्य में स्थित अकार के स्थान में एत्व और अभ्यास का लोप होता है।

**उदाहरण**—( १ ) √णद्+लिट्=सिप्=थल् ( 'ण्'='न' )—नद् थ ( द्वित्व, अभ्यास-कार्य, इट्='इ' )—न न द् इ थ ( एत्व, अभ्यासलोप—'थलि च सेटि' )=नेदिथ।

**णद् धातु, लिट् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | ननाद | नेदतुः | नेदुः |
| म० पु०— | नेदिथ | नेदथुः | नेद |
| उ० पु०— | ननाद, ननद | नेदिव | नेदिम |

**इत्संज्ञा वाच्या * । श्च्योतति । (५०२) शर्पूर्वाः खयः ७।४।६१ । शिष्यन्तेऽभ्यासस्य । हलादिः शेषापवादः । चुश्च्योत । ( ५०३ ) इरितो वा ३।१।५७ । इरितो धातोश्च्लेरङ् वा, परस्मैपदे । अश्चुतत् । अश्च्योतीत् । यकाररहितोऽप्ययम् । श्चोतति । चुश्चोत । अश्चुतत् । अश्चोतीत् । च्युतिर् आसेचने । च्योतति । टुनदि समृद्धौ ।**

---

तत्स्थाने सिप्यनुबन्धलोपे, तत्स्थाने 'परस्मैपदानामि'त्यादिना थलादेशे, णस्य नत्वे, द्वित्वेऽभ्यासकार्ये कृते 'ननद् इ थ' इति जाते 'थलि च सेटि' इत्येत्वेऽभ्यासलोपे च कृते 'नेदिथ' इति सिद्धम् । **श्च्योतति ।** श्च्युतिर् धातोः 'इर इत्संज्ञा वाच्या' इत्यनेन 'इर्' इत्यस्येत्संज्ञा कृते श्च्युतः लटि, तत्स्थाने तिप्यनुबन्धलोपे, सार्वधातुकत्वे शप्यनुबन्धलोपे सार्वधातुकसंज्ञायां 'पुगन्तलघूपधस्य चे'त्यनेन गुणे 'श्च्योतति' इति रूपम् ।

**( ५०२ ) शर्पूर्वा इति ।** 'अत्र लोपोऽभ्यासस्ये'त्यतोऽभ्यासस्येत्यनुवर्तत । शर्पूर्वो येभ्य इत्यतद्गुणसंविज्ञानो बहुव्रीहिः । तेन शर् न शिष्यन्ते । **चुश्च्योत ।** श्च्युतिर् धातोः इर इत्संज्ञा कृते श्च्युतः लिट्यनुबन्धलोपे प्रथमपुरुषगतैकत्वविवक्षायां तिपि, 'परस्मैपदानामि'ति तिपः णलादेशेऽनुबन्धलोपे, धातोर्द्वित्वेऽभ्याससंज्ञायां हलादिशेषं बाधित्वा विशेषविहितत्वात् 'शर्पूर्वाः खयः' इति चकारशेषे 'चुश्च्युत् अ' इति जाते 'पुगन्तलघूपधस्य चे'त्यनेन गुणे संयोगे च कृते 'चुश्च्योत' इति ।

**( ५०३ ) इरितो वा ।** अत्र 'धातोरेकाचः' इत्यतः धातोरिति, 'च्लेः सिजि'त्यतः च्लेरिति, 'अस्यतिवक्ति०' इत्यतोऽङिति, 'पुषादिद्युताद्य्०' इत्यतः परस्मैपदेष्वित्यनु-

---

नदिता ( लुट् ), नदिष्यति ( लृट् ), नदतु ( लोट् ), अनदत् ( लङ् ), नदेत् ( विधिलिङ् ), नद्यात् ( आशीर्लिङ् ), अनादीत्-अनदीत् ( लुङ्—विकल्प से वृद्धि ), अनदिष्यत् ( लृङ् ) ।

√श्च्युतिर् धातु का अर्थ=क्षरण है ।

**वा०**—'इर्' की इत्संज्ञा होती है ।

**उदाहरण—** √श्च्युतिर्+लट् ( इर् की इत्संज्ञा—'इर इत्संज्ञा वाच्या' )—श्च्युत् लट्=तिप्=ति, शप्, गुण )=श्च्योतति ।

**( ५०२ ) पद**—शर्, पूर्वाः, खयः । **अनुवृत्ति**—अभ्यासस्य । **विधिसूत्र ।**

**मूलार्थ**—अभ्यास सम्बन्धी 'शर्' पूर्वक 'खय्' शेष रहता है । अन्य हल् का लोप होता है । चुश्च्योत ।

**विमर्श**—प्रकृत सूत्र में 'अत्र लोपोऽभ्यासस्य' ( ७।४।५८ ) से 'अभ्यासस्य' पद की अनुवृत्ति आती है । तदनुसार—"अभ्यास सम्बन्धी शर् पूर्वक 'खय्' प्रत्याहार का बोध्य वर्ण ही शेष रहता है । अन्य का लोप होता है" । यह सूत्र 'हलादिः शेषः' का बाधक है ।

**उदाहरण**—√श्च्युतिर् ( इर् की इत्संज्ञा होने पर )—√श्च्युत्+लिट् ( तिप्=णल्=अ )—श्च्युत् अ ( द्वित्व, अभ्यास संज्ञा, 'हलादिः शेषः' का बाधकर 'च्' का लोप—'शर्पूर्वाः खयः' )—चुश्च्युत् अ ( उ='ओ' गुण—'पुगन्त०' )=चुश्च्योत ।

**( ५०३ ) पद**—इर्, इतः, वा । **अनुवृत्ति**—धातोः, च्लेः, अङ्, परस्मैपदेषु । **विधिसूत्र ।**

**मूलार्थ—परस्मैपद में इर् इत्संज्ञक धातु से परवर्ती 'च्लि' को 'अङ्' आदेश विकल्प से होता है । अश्च्युतत्, अश्च्योतीत् इत्यादि ।**

**( ५०४ ) आदिर्ञिटुडवः १।३।५ ।** उपदेशे धातोराद्या एते इतः स्युः । **( ५०५ ) इदितो नुम् धातोः ७।१।५८ ।** नन्दति । ननन्द । नन्दिता । नन्दिष्यति । नन्दतु ।

---

वर्तन्ते । **अश्च्युतत्, अश्च्योतीत् ।** इरित्संज्ञक-श्च्युत्धातोः लुङि तत्स्थाने तिप्यनुबन्धलोपे शपं प्रबाध्य 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सूत्रं बाधित्वा 'इरितो वा' इति विभाषयाऽङादेशे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यडागमेऽनुबन्धलोपे 'इतश्चे'-तीकारलोपे 'अश्च्युतत्' इति । अङभावे तु—'च्लेः सिच्' इति सिच्यनुबन्धलोपे आर्धधातुकसंज्ञायामिडागमे 'इतश्चे'तीकारलोपे 'अस्तिसिचोऽपृक्ते' इति तस्य ईटि 'श्च्युत् इ स ई त्' इति जाते, 'इट ईटि' इति सलोपे प्रत्ययलक्षणेन सिच आर्धधातुकमाश्रित्य लघूपधगुणेऽङ्गस्याडागमे सवर्णदीर्घे कृते 'अश्च्योतीत्' इति रूपम् ।

**यकाररहितोऽपि०**—क्षरणार्थक-श्च्युतिर् धातुः यकाररहितोऽपि दृश्यते । तेन 'श्चुतिर् क्षरणे' इति पाठः फलितः ।

**( ५०४ ) आदिरिति ।** अत्र 'भूवादयो धातवः' इत्यतः 'धातोः' 'उपदेशेऽजनुनासिक इत्' इत्यतः उपदेशे, इदिति चानुवर्तन्ते । तदाह—**उपदेश इति ।**

**( ५०५ ) नन्दति ।** 'टुनदि' इत्यत्र 'उपदेशेऽजनुनासिक इत्' इत्यनेन इकारस्येत्संज्ञायां लोपे 'टुनद्' इत्यस्य धातुसंज्ञायां 'टु' इत्यस्य 'आदिर्ञिटुडवः' इत्यनेनेत्संज्ञायां

---

**विमर्श**—यहाँ 'धातोरेकाचः०' ( ३।१।२२ ) सूत्र से 'धातोः', 'च्लेः सिच्' ( ३।१।४४ ) से 'च्लेः', 'अस्यतिवक्तिख्यातिभ्योऽङ्' ( ३।१।५२ ) से 'अङ्' और 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' ( ३।१।५५ ) से 'परस्मैपदेषु' पदों की अनुवृत्ति आती है । तदनुसार—"इर् की इत्संज्ञा युक्त धातु से पर में स्थित च्लि को विकल्प से 'अङ्' आदेश होता है; परस्मैपदसंज्ञक प्रत्यय के परवर्ती रहने पर" ।

**उदाहरण**—√श्च्युतिर ( इर् की इत्संज्ञा लोप )—√श्च्युत्+लुङ्=तिप्=ति, च्लि, सिच् का बाधकर च्लि=अङ्='अ' विकल्प से—'इरितो वा', अट् का आगम )—अ श्च्युत् अ ति ( 'इ' का लोप )=अश्च्युतत् । अङ् के अभाव पक्ष में ( च्लि=सिच्='स्', आर्धधातुक संज्ञा, इट्, इ का लोप—'इतश्च', ईट् का आगम )—श्च्युत् इ स् ई त् ( 'स्' का लोप—'इट ईटि', लघूपधगुण, अट्, सवर्णदीर्घ )=अश्च्योतीत् ।

√श्च्युतिर् धातु का यकार रहित भी पाठ मिलता है ( श्चुतिर् क्षरणे ) । वहाँ श्चोतति ( लट् ), चुश्चोत ( लिट् ), अश्चुतत्–अश्चोतीत् ( लुङ् ) रूप बनते हैं ।

√च्युतिर् धातु का अर्थ=आसेचन (=सींचना ) है । लट् प्र० पु० एकवचन में—च्योतति ।

√टुनदि धातु का अर्थ=समृद्धि ( =आनन्द ) है ।

**( ५०४ ) पद**—आदिः, ञिटुडवः । **अनुवृत्ति**—धातोः, उपदेशे, इत् । **संज्ञासूत्र ।**

**मूलार्थ**—उपदेशावस्था में धातु के आदि में स्थित 'ञि, टु, डु' की इत्संज्ञा होती है ।

**( ५०५ ) पद**—इदितः, नुम, धातोः । **विधिसूत्र ।**

**मूलार्थ**—इदित् धातु को नुम् ( =न् ) का आगम होता है ।

**विमर्श**—यह नुम् ( न् ) का आगम 'मिदचोऽन्त्यात्परः' के नियम से अन्त्य अच् से पर धातु का अवयव होता है ।

**उदाहरण**—( १ ) √टुनदि ( 'इ' की इत्संज्ञा—'उपदेशेऽजनुनासिक इत्', लोप )—टुनद् ( धातुसंज्ञा, 'टु' की इत्संज्ञा—'आदिर्ञिटुडवः' लोप )—नद्+लट्=तिप्='ति' नुम्–न्—

**चमां शिति ७।३।७५।** एषामचो दीर्घः स्याच्छिति । * आङि चम इति वक्तव्यम् * । आचामति । आङि किम्? चमति । विचमति । अचमीत् । स्खल सञ्चलने । स्खलति । चस्खाल । (५३४) **अतो ल्रान्तस्य ७।२।२।** अतः समीपौ यौ ल्रौ, तदन्तस्याङ्गस्यातो वृद्धिः परस्मैपदपरे सिचि । अस्खालीत् । अस्खलिष्यत् । त्सर छद्मगतौ ।

---

च्लौ, च्लेः सिच्यनुबन्धलोपे, इटि, तिप इकारलोपे, ईटि, सलोपे 'अतो हलादेर्लघोः' इति वृद्धौ प्राप्तायाम्, 'ह्म्यन्तक्षण०' इति निषेधे 'अक्रमीदि'ति ।

(५३३) **ष्ठिवुक्लमु इति ।** 'शमामष्टानामि'त्यतः दीर्घ इत्यनुवर्तते । दीर्घश्रुत्या च 'अचः' इत्युपतिष्ठते । तदाह—**एषामित्यादि ।**

(५३४) **अतो ल्रान्तस्येति ।** 'अङ्गस्ये'त्यधिकृतम् । 'सिचि वृद्धिः परस्मैपदेषु' इत्यनुवर्तते । **अस्खालीत् ।** स्खल्धातोर्लुङि तत्स्थाने तिपि, च्लौ, च्लेः सिच्यनुबन्धलोपे आर्धधातुकत्वे 'आर्धधातुकस्येड् वलादेः' इति इडागमेऽनुबन्धलोपेऽपृक्तसंज्ञायाम् 'अस्तिसिचोऽपृक्ते' इतीडागमे 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अतो ल्रान्तस्ये'ति वृद्धौ इकारलोपे 'अस्खालीत्' इति ।

---

(५) विधिलिङ्—क्राम्येत्, क्रामेत् । (६) आशीर्लिङ्—क्रम्यात् । (७) लुङ्—अक्रमीत् । (८) लृङ्—अक्रमिष्यत् ।

**√चमु, छमु, जमु** और **झमु** धातुओं का अर्थ भक्षण (=खाना) है ।

**(५३३) पद**—ष्ठिवु-क्लमु-चमां, शिति । **अनुवृत्ति**—दीर्घः । **विधिसूत्र ।**

**मूलार्थ**—ष्ठिवु, क्लमु और चम् धातुओं के 'अच्' को दीर्घ होता है, शित् के परवर्ती रहने पर । **वा०**—'आङ्' उपसर्गपूर्वक चम् धातु को दीर्घ होता है—ऐसा कहना चाहिए । आचामति इत्यादि ।

**विमर्श**—'शमामष्टानाम्०' (७।३।७४) से 'दीर्घः' पद की अनुवृत्ति आती है । दीर्घ पद की श्रुति से 'अचः' षष्ठ्यन्त पद की उपस्थिति होती है । तदनुसार—शित् प्रत्यय के परवर्ती रहने पर ष्ठिवु, क्लमु और चम् धातु के अच् को दीर्घ होता है ।

**उदाहरण**—आ+√चम् (उकारेत्संज्ञक)+लट् (=तिप्=ति, शप्=अ, 'आङि चम इति वक्तव्यम्' इस वार्तिक के सहकार से 'ष्ठिवुक्लमुचमां शिति' से दीर्घ)=आचामति ।

**प्रत्युदाहरण**—वार्तिक में आङ् पद का ग्रहण होने से केवल √चम् से लट् में दीर्घ नहीं हुआ—'चमति' । विचमति । लुङ्—अचमीत् ।

√स्खल् का अर्थ संचलन (=चलना) है । लट्—स्खलति । लिट्—चस्खाल ।

**(५३४) पद**—अतः, ल्रान्तस्य । **अनुवृत्ति**—सिचि, वृद्धिः, परस्मैपदेषु । **विधिसूत्र ।**

**मूलार्थ**—अत् के समीपवर्ती जो लकार रेफ, तदन्त अङ्ग के अत् को वृद्धि होती है, परस्मैपद 'सिच्' के परवर्ती रहने पर । अस्खालीत् ।

**विमर्श**—'अङ्गस्य' का अधिकार है । 'सिचि वृद्धिः परस्मैपदेषु' (५२८) की अनुवृत्ति आती है । तदनुसार—'परस्मैपदसंज्ञक सिच् के परवर्ती रहने पर अकार-समीपवर्ती लकारान्त, रेफान्त अङ्ग के अवयव अकार को वृद्धि होती है ।

**उदाहरण**—√स्खल्+लुङ् (=तिप्=ति, अट्, च्लि=सिच्=स्, आर्धधातुक संज्ञा, इट्, ईट्, 'स्' का लोप—'इट ईटि' सवर्णदीर्घ, अ='आ'—वृद्धि—'अतो ल्रान्तस्य')=अस्खालीत् ।

अत्सारीत् । पा पाने । (५३५) **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यच्छंधौशीयसीदाः ७।३।७८ ।** पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे । पिबादेशोऽदन्तस्तेन न गुणः । पिबति । (५३६) **आत औ णलः ७।१।३४ ।** आदन्ताद्धातोर्णल औकारादेशः स्यात् । पपौ । (५३७)

---

(५३५) **पाघ्राध्मेति ।** यथासंख्यमादेशा भवन्ति । 'ष्ठिवुक्लमुचमां शिती'त्यतः शितीत्यनुवर्तते । अङ्गाक्षिप्तप्रत्ययविशेषणत्वात्तदादिविधिस्तदाह—**पादीनामित्यादि । पिबति ।** पाधातोः लटि, तत्स्थाने तिपि सार्वधातुकसंज्ञायां शप्यनुबन्धलोपे 'पाघ्राध्मा०' इत्यादिना पास्थाने पिबादेशे, पिबादेशस्यादन्तत्वाद् गुणाभावे 'अतो गुणे' इति पररूपे 'पिबती'ति ।

(५३६) **आत आवि'ति ।** अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते । 'आत' इति तद्विशेषणत्वात्तदन्तविधिस्तदाह—**आदन्तादिति । पपौ ।** पाधातोर्लिटि, तत्स्थाने तिपि, तिपो णलादेशे, धातोर्द्वित्वेऽभ्यासत्वे 'ह्रस्वः' इति ह्रस्वे 'प पा अ' इति जाते 'आत औ णलः' इति णलः स्थाने औत्वे वृद्धौ च कृतायाम् 'पपौ' इति सिद्धम् ।

---

लृङ्—अस्खलिष्यत् । √त्सर का अर्थ—कपटपूर्वक गमन है । लुङ् में वृद्धि होकर—अत्सारीत् । √'पा' धातु का अर्थ—पीना है ।

**(५३५) पद**—पा-घ्रा-ध्मा-स्था-म्ना-दाण्-दृश्य-र्ति-सर्ति-शद-सदाम्, पिब-जिघ्र-धम-तिष्ठ-मन-यच्छ-पश्य-च्र्छ-धौ-शीय-सीदाः । **अनुवृत्ति**—शिति । **विधिसूत्र ।**

**मूलार्थ**—इत्संज्ञक शकारादि प्रत्यय के परे रहने पर पा आदि धातुओं को पिब् आदि आदेश होते हैं । पिबति ।

**विमर्श**—प्रकृत सूत्र में 'ष्ठिवुक्लमुचमां शिति' (५३३) से 'शिति' की अनुवृत्ति आती है । अतः इत्संज्ञक शकारादि प्रत्यय के परवर्ती रहने पर पा आदि धातुओं को क्रमशः पिब् आदि आदेश होते हैं । यथा—

| | |
|---|---|
| पा=पिब् | दृश्=पश्य |
| घ्रा=जिघ्र | ऋ=ऋच्छ |
| ध्मा=धम | सृ=धौ |
| स्था=तिष्ठ | शद=शीय |
| म्ना=मन | सद=सीद |
| दाण्=यच्छ | |

ये पिब आदि आदेश अकारान्त हैं । अतः उपधा न होने से इकार को लघूपध गुण नहीं होता ।

**उदाहरण**—(१) √पा+लट् (=तिप्=ति, शप्=अ, पा=पिब—'पाघ्राध्मा०')—पिब अ ति (अ+अ='अ' पररूप—'अतो गुणे')=पिबति ।

**(५३६) पद**—आतः, औ, णलः । **विधिसूत्र ।**

**मूलार्थ**—आदन्त धातु से परवर्ती णल् के स्थान में 'औ' आदेश होता है । पपौ ।

**उदाहरण**—(१) √पा+लिट् (=तिप्=णल्, द्वित्व, अभ्यास संज्ञा, ह्रस्व, णल्='औ'—'आत औ णलः')—प पा औ (आ+औ='औ'—वृद्धि)=पपौ ।

**आतो लोप इटि च ६।४।६४।** अजाद्योरार्द्धधातुकयोः क्ङिदिटोः परयोरातो लोपः। पपतुः। पपुः। पपिथ। पपाथ। पपथुः। पप। पपौ। पपिव। पपिम। पाता। पास्यति। पिबतु। अपिबत्। पिबेत्। ( ५३८ ) **एर्लिङि ६।४।६७।** घुसंज्ञानां मास्थागापिबतिजहातिस्यतीनां चाऽऽत एत्वमार्द्धधातुके किति लिङि। पेयात्। 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्।' तेन 'पा रक्षणे' इत्यस्य नैत्वम्। 'गातिस्थे'ति

---

( ५३७ ) **आतो लोप** इति। 'आर्धधातुके' इत्यधिकृतम्। 'दीङो युडची'त्यतः अचि 'क्ङिती'ति चानुवर्तते, तदादिविधिः। क्ङिति अजाद्यार्धधातुके इटि च आतो लोप इति लभ्यते। **पपतुः।** पाधातोर्लिटि, तत्स्थाने तसि, तसः स्थाने अतुसि, द्वित्वेऽभ्याससंज्ञायां ह्रस्वे 'प पा अतुस्' इति जाते 'आतो लोप इटि च' इत्याकारलोपे सस्य रुत्वे विसर्गे च कृते 'पपतुः' इति।

( ५३८ ) **एर्लिङीति।** 'आर्धधातुके' इत्यधिकृतम्। 'घुमास्थागापाजहातिसाम्' इत्यनुवर्तते। तदाह—**घुसंज्ञानामिति। अपात्।** पाधातोर्लुङि तत्स्थाने तिपि, च्लौ, च्लेः स्थाने सिजादेशेऽनुबन्धलोपे 'गातिस्थे'त्यादिना सिचो लोपे अडागमे तिप इकारलोपे 'अपात्' इति।

---

**( ५३७ ) पद**—आतः, लोपः, इटि च। **अनुवृत्ति**—अचि क्ङिति। **विधिसूत्र।**

**मूलार्थ**—अजादि कित् ङित् आर्धधातुक और इट् के परवर्ती रहने पर आकार का लोप होता है। पपतुः। इत्यादि।

**विमर्श**—'आर्धधातुके' का अधिकार है। 'दीङो युडचि' ( ६।४।६३ ) सूत्र से 'अचि' और 'क्ङिति' पदों की अनुवृत्ति आती है। तदनुसार—'आर्धधातुक अजादि कित्, ङित् प्रत्यय और इट् के परे रहते धातु के अवयव आकार का लोप होता है'।

**उदाहरण**—( १ ) √पा+लिट् ( =तस्=अतुस्, कित—'असंयोगाल्लिट् कित्' द्वित्व, अभ्यास संज्ञा, ह्रस्व, हलादिशेष )—प पा अतुस् ( 'आ' का लोप—'आतो लोप इटि च' स्=र्=ः )=पपतुः। 'पपुः' में 'उस्' परे रहने पर आ का लोप। थल्, व, म में इट् होने से 'आ' का लोप हो जाता है। यह अजन्त अनिट् धातु होने से थल् में विकल्प से इट् होता है ( भारद्वाज के नियम से )।

**√पा धातु ( =पीना ) लिट् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | पपौ | पपतुः | पपुः |
| म० पु०— | पपिथ—पपाथ | पपथुः | पप |
| उ० पु०— | पपौ | पपिव | पपिम |

लुट्—पाता। लृट्—पास्यति। लोट्—पिबतु। लङ्—अपिबत्। विधिलिङ्—पिबेत्।

**( ५३८ ) पद**—एः, लिङि। **अनुवृत्ति**—घुमास्थागापाजहातिसाम्, किति। **विधिसूत्र।**

**मूलार्थ**—घुसंज्ञक धातु तथा—मा, छा, गै, पा, हा, औ, षो धातु को एत्व होता है, आर्धधातुक कित् लिङ् के परे रहते।

**विमर्श**—'घुमास्थागापाजहातिसाम्' ( ६।४।६६ ) की अनुवृत्ति आती है। 'दीङो युडचि' ( ६।४।६३ ) से किति की अनुवृत्ति आती है। 'आर्धधातुके' का अधिकार है। इस प्रकार—'आर्धधातुक कित् लिङ् के परवर्ती रहने पर घुसंज्ञक तथा मा स्था आदि धातु को एत्व होता है'।

सिचो लुक् । अपात् । अपाताम् । ( ५३९ ) आतः ३।४।११० । सिज्लुकि आदन्तादेव झेर्जुस् । ( ५४० ) उस्यपदान्तात् ६।१।९६ । अपदान्तादवर्णादुसि पररूपमेकादेशः । अपुः । अपास्यत् । ग्लै म्लै हर्षक्षये । ग्लायति । ( ५४१ ) आदेच उपदेशेऽशिति । ६।१।४५ । उपदेशे एजन्तस्य धातोरात्वं, न तु शिति । जग्लौ । ग्लाता । ग्लास्यति ।

---

( ५३९ ) आत इति । 'झेर्जुस्' इति सूत्रमत्रानुवर्तते । 'आतः सिज्लुगन्तादि'ति वार्तिकात् सिज्लुकीति लभ्यते । पूर्वसूत्रेणैव सिद्धे नियमार्थमिदं सूत्रम् ।

( ५४० ) उस्यपदान्तादिति । 'आद् गुणः' इत्यस्मात् आदित्यनुवर्तते, 'एङि पररूपमि'त्यस्मात्पररूपमिति च । तदाह—अपदान्तादिति ।

( ५४१ ) आदेच इति । 'लिटि धातोः' इत्यत अनुवृत्तं धातोरिति पदमेचा विशेष्यते, तेन तदन्तविधिस्तदाह—उपदेशे एजन्तस्येति । जग्लौ । ग्लैधातोर्लिटस्तिपि, तिपो णलादेशे, 'आदेच उपदेशेऽशिति' इत्यात्वे 'लिटि धातोरनभ्यासस्ये'ति द्वित्वेऽभ्याससंज्ञायां ह्रस्वे 'हलादिः शेषः' इति ललोपे 'कुहोश्चुः' इति चुत्वेन गस्य जत्वे 'आत औ णलः' इत्यौत्वे 'वृद्धिरेचि' इति वृद्धौ 'जग्लौ' इति रूपम् ।

---

**उदाहरण**—( १ ) पा+आशीर्लिङ् ( =तिप्=ति, यासुट्=यास्, इ का लोप, यासुट् कित् 'किदाशिषि' से आ=ए—'एर्लिङि' 'स्' का लोप )=पेयात् ।

'लुग्विकरण और अलुग्विकरण धातुओं में अलुग्विकरण धातु का ही ग्रहण होता है ।' इस नियम से यहाँ 'पा पाने' धातु का ही ग्रहण होता है । अतः 'पा रक्षणे' धातु से लिङ् में एत्व नहीं होता । लुङ् में 'गातिस्था०' से सिच् का लुक् होने पर—अपात् । अपाताम् ।

**( ५३९ ) पद**—आतः । **अनुवृत्ति**—झेर्जुस्, सिज्लुकि । **नियमसूत्र** ।

**मूलार्थ**—सिच् का लुक् होने पर आदन्त धातु से परे ही 'झि' को जुस् होता है ।

**विमर्श**—यहाँ 'झेर्जुस्' ( ३।४।१०८ ) सूत्र की अनुवृत्ति आती है । **वार्तिक**—'आतः सिच्लुगन्तादिति वक्तव्यम्' से 'सिच्लुकि' पद का अनुवर्तन होता है । तदनुसार—"जहाँ सिच् का लोप हुआ हो वहाँ आदन्त धातु से परे ही 'झि' को जुस् होता है" ।

**( ५४० ) पद**—उसि, अपदान्तात् । **अनुवृत्ति**—आत्, पररूपम् । **विधिसूत्र** ।

**मूलार्थ**—अपदान्त अवर्ण से 'उस्' परे रहते पररूप एकादेश होता है । अपुः । अपास्यत् ।

**विमर्श**—प्रकृत सूत्र में 'आद् गुणः' से 'आत्' और 'एङि पररूपम्' से 'पररूपम्' पद की अनुवृत्ति आती है । तदनुसार—अपदान्त अवर्ण से परे उस् हो तो पूर्व-पर दोनों के स्थान में पररूप एकादेश होता है ।

**उदाहरण**— √पा+लुङ् ( =झि=जुस्=उस्—'आतः' अट्, च्लि=सिच्, सिच् का लुक्—'गातिस्था०' )—अ पा उस् ( आ+उ=उ—पररूप 'उस्यपदान्तात्' )—अपुस् ( स्=र्=ः )=अपुः । लृङ्—अपास्यत् ।

√ग्लै, म्लै धातुओं का अर्थ—हर्ष का क्षय ( ग्लानि करना ) है ।

**उदाहरण**—( १ ) √ग्लै+लट् ( =तिप्=ति, शप्, ऐ=आय् )=ग्लायति ।

**( ५४१ ) पद**—आत्, एचः, उपदेशे, अशिति । **अनुवृत्ति**—धातोः । **विधिसूत्र** ।

**मूलार्थ**—उपदेश में एजन्त धातु को आत्व होता है, किन्तु शित् के परे रहते आत्व नहीं होता । जग्लौ इत्यादि ।

**ग्लायतु । अग्लायत् । ग्लायेत् । ( ५४२ ) वाऽन्यस्य संयोगादेः ६।४।६८ । घुमास्था-देरन्यस्य संयोगादेर्धातोरात एत्वं वा, आर्द्धधातुके किति लिङि । ग्लेयात्–ग्लायात् । ( ५४३ ) यमरमनमातां सक् च ७।२।७३ । एषां सक् स्यात्, एभ्यः सिच इट्, परस्मैपदेषु । अग्लासीत् । अग्लास्यत् । एवं म्लायतीत्यादि । धेट् पाने । धयति । दधौ ।**

---

( ५४२ ) **वाऽन्यस्येति** । 'आर्धधातुके' इत्यधिकृतम् । 'एर्लिङि' इति, 'आतो लोपः' इत्यत 'आत' इति चानुवर्तते । कस्मादन्यस्येत्यपेक्षायां 'घुमास्थागापाजहातिसां हली'ति पूर्वोपात्तत्वात् तेभ्योऽन्यस्येति फलति । तदाह—**घुमास्थादेरिति** । **ग्लेयात्, ग्लायात्** । ग्लैधातोराशीर्लिङस्तिपि तस्यार्धधातुकत्वे, यासुडागमेऽनुबन्धलोपे 'आदेच उपदेशेऽशिति' इत्यात्वे तिप इकारलोपे 'स्कोः संयोगाद्योरन्ते च' इति सकारलोपे 'वाऽन्यस्य संयोगादेः' इत्येत्वे ग्लेयात् । एत्वाऽभावपक्षे ग्लायात् ।

( ५४३ ) **यमरमेति** । आदित्यनेन आदन्तं गृह्यते । चकारेण 'इडत्यर्ति' इत्यतः इडिति 'स्तुसुधूञ्भ्य' इत्यतः 'परस्मैपदेष्वि'ति चानुकृष्यते, 'अञ्जेः सिची'त्यतः सिचीति च तच्चानुवृत्तं पदं षष्ठ्या विपरिणम्यते । तदाह—**एषामिति** । **अग्लासीत्** । ग्लैधातोर्लुङस्तिपि, च्लौ, च्लेः सिच्यनुबन्धलोपे, अडागमे 'अ ग्लै स् त्' इति जाते

---

**विमर्श**—'लिटि धातोरनभ्यासस्य' ( ६।१।८ ) से 'धातोः' पद की अनुवृत्ति आती है। तदनुसार—'शित् भिन्न प्रत्यय के परवर्ती रहने पर उपदेशावस्था में एजन्त धातु को आत्व होता है'।

**उदाहरण**—( १ ) √ग्लै+लिट् ( =तिप्=णल्='अ', ऐ='आ'—'आदेच उपदेशेऽशिति'—ग्ला अ ( द्वित्व, अभ्यास संज्ञा, ह्रस्व, हलादिशेष—'ल' लोप )—ग्ला अ ( ग्=ज्—'कुहोश्चुः' णल्=औ—'आत औ णलः' वृद्धि )=जग्लौ । लुट्—ग्लाता । लृट्—ग्लास्यति । लोट्—ग्लायतु । लङ्—अग्लायत् । विधिलिङ्—ग्लायेत् ।

**( ५४२ ) पद**—वा, अन्यस्य, संयोगादेः । **अनुवृत्ति**—एर्लिङि, आतः । **विधिसूत्र** ।

**मूलार्थ**—आर्धधातुक लिङ् के परवर्ती रहने पर घुमास्थादि से अन्य संयोगादि धातु के अकार को विकल्प से एकार होता है । ग्लेयात्, ग्लायात् ।

**विमर्श**—'आर्धधातुके' का अधिकार है । एर्लिङि ( ५३९ ) **सूत्र** तथा 'आतो लोपः' ( ५३८ ) से 'आतः' पद की अनुवृत्ति आती है । प्रकृत सूत्र से **पूर्व** 'घुमास्थागापाजहातिसां हलि' ( ६।४।६६ ) सूत्र पठित होने से 'अन्यस्य' पद से 'घुमास्थागापाहा से भिन्न धातु' का ग्रहण होता है । अतः पूर्वोक्त 'घु, मा, स्था आदि से भिन्न संयोगादि धातु के आकार को विकल्प से एकार होता है, आर्धधातुक कित् लिङ् के परे होने पर' ।

**उदाहरण**— √ग्लै+आशीर्लिङ् ( =तिप्=ति, आर्धधातुक संज्ञा, यासुट्=यास्, ऐ=आ—'आदेच उपदेशे०' 'इ' का लोप )—ग्ला यास् त् ( स् का लोप—'स्कोः०' आ=विकल्प से 'ए'—वाऽन्यस्य संयोगादेः' )=ग्लेयात् । पक्ष में—ग्लायात् ।

**( ५४३ ) पद**—यम-रम-नमातां, सक् च । **अनुवृत्ति**—इट्, परस्मैपदेषु, सिच् । **विधिसूत्र** ।

**मूलार्थ**—यम्, रम्, नम् और आदन्त धातु को 'सक्' का आगम होता है और सिच् को परस्मैपद में 'इट्' का आगम होता है । अग्लासीत् इत्यादि ।

**विमर्श**—'आत्' पद से आदन्त धातुओं का ग्रहण होता है । चकार से 'इडत्यर्ति०' ( ७।२।६६ ) सूत्र से 'इट्' 'स्तुसुधूञ्भ्यः' ( ७।२।७२ ) से 'परस्मैपदेषु' तथा 'अञ्जेः सिचि' ( ७।२।७१ ) से 'सिचि' पदों की अनुवृत्ति आती है । तदनुसार—'यम् ( =निवृत्त होना ), रम्

**धाता । धास्यति । धयतु । अधयत् । धियेत् । ( ५४४ ) दाधा घ्वदाप् १।१।२० । दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना । धेयात् । ( ५४५ ) विभाषा धेट्श्व्योः ३।१।४९ । आभ्यां च्लेश्चङ् वा । ( ५४६ ) चङि ६।१।११ । अनभ्यास-धात्ववयवस्य प्रथमस्यैकाचो द्वे स्तोऽजादेर्द्वितीयस्य । अदधत् । अदधताम् । अदधन् ।**

---

'आदेच उपदेशेऽशिति' इति ग्लैधातोरात्वे 'यमरमनमातां सक्च' इत्यङ्गस्य सकागमे इडागमे च कृते 'इतश्चे'तीकारलोपे 'अस्तिसिचोऽपृक्ते' इतीडागमे 'इट ईटि' इति सकारलोपे सवर्णदीर्घे 'अग्लासीत्' इति ।

( ५४४ ) **दाधाघ्वेति ।** 'गा-मा-दाग्रहणेष्वविशेषः' इति परिभाषाग्रां दाग्रहणेन धारूपस्यापि ग्रहणम् । तेन धाग्रहणे 'धेट् पाने' इत्यादीनामपि ग्रहणम् ।

( ५४५ ) **विभाषेति ।** अत्र 'च्लि लुङी'त्यनुवर्तते । 'णिश्रि' इत्यतः कर्तरि चङीति चानुवर्तते । तदाह—**आभ्यामिति ।**

( ५४६ ) **चङीति ।** 'एकाचो द्वे प्रथमस्य', 'अजादेर्द्वितीयस्य' इति चाधिकृतम् । 'लिटि धातोरि'त्यतः 'धातोरनभ्यासस्ये'त्यनुवर्तते । तदाह मूले—**चङि पर इत्यादिना ।**

---

( =क्रीडा करना, रमण करना ), नम् ( =नम्र होना, प्रणाम करना ) और आकारान्त धातुओं को सक् का आगम होता है तथा इससे परवर्ती सिच् को इट् का आगम होता है, परस्मैपद में' ।

**उदाहरण**—√ग्लै+लुङ् ( =तिप्=ति, च्लि=सिच्=स्, अट्, 'इ' लोप )—अ ग्लै स् त ( 'ऐ'='आ'—'आदेच उपदेशे०', सक्=स् और इट् का आगम—'यमरमनमातां सक्च' )—अग्ला स् इ स् त् ( ईट्, स् का लोप, सवर्णदीर्घ )=अग्लासीत् । अग्लासिष्टाम् । अग्लासिषुः इत्यादि ।

लृङ्—अग्लास्यत् । इसी प्रकार √म्लै+लट्=म्लायति इत्यादि ।

√धेट् का अर्थ—पीना है । √धे+लट् ( =तिप्=ति, शप्, अय् )=धयति । लिट्—णल्='औ'—दधौ । लुट्—धाता । लृट्—धास्यति । लोट्—धयतु । लङ्—अधयत् । विधि-लिङ्—धियेत् ।

**( ५४४ ) पद**—दा-धा-घु, अदाप् । **संज्ञासूत्र ।**

**मूलार्थ**—दाप्, दैप् को छोड़कर दारूप और धारूप धातुओं की घु संज्ञा होती है । धेयात् ।

**विमर्श**—यहाँ, 'गामादाग्रहणेष्वविशेषः' परिभाषा के द्वारा 'दा' के ग्रहण से डुदाञ् दाने, दाण् दाने और कृतात्व—'दो अवखण्डने, देङ् रक्षणे' आदि लाक्षणिक का भी ग्रहण होता है ।

**उदाहरण**—धे+आशीर्लिङ् ( =तिप्=ति, इ का लोप, ए='आ'—'आदेच' )—धा त् ( यासुट्=यास्, घुसंज्ञा—'दाधाघ्वदाप्' आ='ए'—'एर्लिङि' 'स्' लोप )=धेयात् ।

**( ५४५ ) पद**—विभाषा, धेट्श्व्योः । **अनुवृत्ति**—च्लेः, चङ् । **विधिसूत्र ।**

**मूलार्थ**—'धेट्' धातु और श्वि धातु से परे 'च्लि' के स्थान में 'चङ्' विकल्प से होता है ।

**विमर्श**—प्रकृत सूत्र में 'च्लेः सिच्' ( ३।१।४४ ) सूत्र से 'च्लेः' तथा 'णिश्रिद्रुस्रुभ्यः' ( ३।१।४८ ) से 'चङ्' पदों की अनुवृत्ति आती है । तदनुसार—"धेट् एवं श्वि से परवर्ती 'च्लि' को 'चङ्' विकल्प से होता है" ।

**( ५४६ ) पद**—चङि । **अनुवृत्ति**—धातोः, अनभ्यासस्य । **विधिसूत्र ।**

**मूलार्थ**—'चङ्' के परे रहने पर अनभ्यास धातु के अवयव प्रथम एकाच् को द्वित्व होता है । अजादि धातु के अवयव द्वितीय एकाच् को द्वित्व होता है । अदधत् ।

**( ५४७ ) विभाषा घ्राधेट्शाच्छासः २।४।७८।** एभ्यः सिचो लुग्वा स्यात् परस्मैपदे । अधात् । अधाताम् । अधुः । पक्षे इट्सकौ । अधासीत् । अधासिष्टाम् । अधासिषुः । ग्लै न्यक्करणे । ग्लायति । द्रै स्वप्ने । द्रायति । ध्रै तृप्तौ । ध्रायति । ध्यै चिन्तायाम् । ध्यायति । दध्यौ । रै शब्दे । रायति । स्त्यै ष्टचै शब्दसङ्घातयोः ।

---

**अदधत् ।** 'धेट् पाने' इत्यस्माद् धातोः 'आदेच उपदेशेऽशिति' इत्यात्वे लुङि, तत्स्थाने तिप्यनुबन्धलोपे च्लौ 'विभाषा धेट्श्व्योः' इति च्लेश्चङि 'चङि' इति द्वित्वेऽभ्याससंज्ञायां 'ह्रस्वः' इति ह्रस्वे 'अभ्यासे चर्च' इति धस्य दत्वे, अडागमेऽनुबन्धलोपे 'अ द धा अ त्' इति जाते 'आतो लोप इटि च' इत्याकारलोपे कृते 'अदधत्' इति रूपं निष्पन्नम् ।

( ५४७ ) **विभाषा घ्राधेडिति ।** 'ण्यक्षत्रियार्ष०' इत्यतः लुगिति, 'गातिस्था' इत्यतः 'सिचः परस्मैपदेष्वि'ति चानुवर्तते । तदाह—**एभ्य इत्यादिना ।**

**अधादिति ।** धेट्धातोः 'आदेच उपदेशेऽशिति' इत्यात्वे लुङि तत्स्थाने तिपि इकारलोपे, च्लौ 'च्लेः सिच्' इति सिचि 'विभाषा घ्राधेट्शाच्छासः' इति विकल्पेन सिचो लोपे अङ्गस्याडागमेऽनुबन्धलोपे 'अधात्' इति ।

---

**विमर्श**—'एकाचो द्वे प्रथमस्य' और 'अजादेर्द्वितीयस्य' का अधिकार है । 'लिटि धातोः' ( ४२७ ) से 'धातोरनभ्यासस्य' की अनुवृत्ति आती है । तदनुसार—'चङ् के परवर्ती रहने पर अनभ्यास धातु के अवयव प्रथम एकाच् को द्वित्व होता है; अजादि धातु के द्वितीय एकाच् को द्वित्व होता है' ।

**उदाहरण**—( १ ) √धेट्+लुङ् ( ल्=तिप्=ति, आत्व—'आदेच उपदेशेऽशिति' )—धा ति ( च्लि, च्लि=चङ्='अ' विकल्प से—'विभाषा धेट्श्व्योः', 'धा' को द्वित्व—'चङि' अभ्यास संज्ञा, ह्रस्व, ध्=द्—'अभ्यासे चर्च', अट् का आगम )—अ द धा अति ( 'इ' का लोप, 'आ' का लोप—'आतो लोप इटि च' )=अदधत् । ( २ ) प्र० पु० द्विवचन ( तस्=ताम्, पूर्वोक्त कार्य )=अदधताम् । ( ३ ) प्र० म० बहुवचन झि—अदधन् ।

**( ५४७ ) पद**—विभाषा, घ्राधेट्शाच्छासः । **अनुवृत्ति**—लुक्, सिचः, परस्मैपदेषु ।
**विधिसूत्र ।**

**मूलार्थ**—घ्रा, धेट्, शो, छो और षो धातुओं से परवर्ती 'सिच्' का विकल्प से लुक् होता है, परस्मैपद के परे रहते । अधात् । अधाताम् इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'ण्यक्षत्रियार्ष०' ( २।४।५८ ) से 'लुक्' और 'गातिस्था०' ( २।४।७७ ) से 'सिचः, परस्मैपदेषु' पदों की अनुवृत्ति आती है । तदनुसार—'परस्मैपदसंज्ञक प्रत्यय परवर्ती रहते—घ्रा, धेट्, शो, छो और षो से परे सिच् के सकार का विकल्प से लोप होता है' ।

**उदाहरण**—( १ ) धेट् ( टकारेत्संज्ञक ) ( आत्व—'आदेच उपदेशे०' )—धा+लुङ् ( ल्=तिप्=ति, अट्, इ का लोप, च्लि, 'विभाषा धेट्श्व्योः' से च्लि=चङ् न होने पर पक्ष में—च्लि=सिच्, सिच् का विकल्प से लुक्—'विभाषा घ्राधेट्शाच्छासः' )=अधात् ।

**सिच् के लुक् के अभाव पक्ष में**—अ धा स् त ( अपृक्त संज्ञा, ईट्, सक् का आगम और इट्—'यमरमनमातां सक्च' )—अ धा स्, इ स् ई त ( स् का लोप—'इट ईटि' सवर्णदीर्घ )=अधासीत् । ( २ ) लुङ् प्र० पु० द्वि० व०—अधाताम्, अधासिष्टाम् । ( ३ ) लुङ् प्र० पु० ब० व०—अधुः, अधासिषुः ।

स्त्यायति । षोपदेशस्यापि सत्वे कृते रूपं तुल्यम्, षोपदेशफलं तु 'तिष्टचासती'त्यादौ भविष्यति । खै खदने । खायति । क्षै जै षै क्षये । क्षायति । जायति । सायति । 'घुमास्थे'त्यत्र 'विभाषा घ्राधेट्' इत्यत्र च स्यतेरेव गहणं; न त्वस्य, तेन एत्वसिज्लुकौ न । सायात् । असासीत् । कै गै शब्दे । शै श्रै पाके । पै ओवै शोषणे । पायात् । अपासीत् । 'घुमास्थे'तीत्वं तदपवाद 'एर्लिङी'त्येत्वं 'गातिस्थे'ति सिज्लुक् च न, 'लक्षण-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमि'ति पारूपस्य लाक्षणिकत्वात् । ष्टै वेष्टने । स्तायति । स्नै वेष्टने, शोभायां चेत्येके । स्नायति ।। दैप् शोधने । दायति । अघुत्वा-देत्वसिज्लुकौ न । दायात् । अदासीत् । घ्रा गन्धोपादाने । जिघ्रति । घ्रायात्—घ्रेयात् । अघ्रासीत् । अघ्रास्यत् । ध्मा शब्दाग्निसंयोगयोः । धमति । ष्ठा गतिनिवृत्तौ । तिष्ठति ।

---

घुमास्थेत्यत्रेति । अत्र व्याख्यानमेव शरणम् । 'विभाषा घ्राधेट्शाच्छासः' इत्यत्र श्यन्विकरणाभ्यां साहचर्य्यम्—'सहचरिताऽसहचरितयोर्मध्ये सहचरितस्यैव ग्रहणमि'ति परिभाषाबलात् ।

---

√चै धातु का अर्थ=तिरस्कार करना है। (१) √चै+लट् (=तिप्=ति, शप्, ऐ=आय्)=चायति । √द्रै का अर्थ=स्वप्न है। द्रायति । √ध्रै का अर्थ=तृप्ति होना है। ध्रायति । √ध्यै का अर्थ=चिन्तन करना है। ध्यायति । लिट्—दध्यौ । √रै धातु का अर्थ=शब्द करना है। लट्—रायति । √स्त्यै और ष्ट्यै धातु—शब्द और संघात अर्थ में है। स्त्यायति । षोपदेश धातु के 'ष्' को सकारादेश होने पर समान ही रूप बनता है। फिर भी षोपदेश धातु का फल 'तिष्टचासति' इत्यादि में षत्व की प्रवृत्ति होना है।

√खै धातु का अर्थ=खदन=हिंसा है। खायति । √क्षै, जै, षै का अर्थ—क्षय होना है। क्षायति । जायति । सायति । 'घुमास्था०' एवं 'विभाषा घ्राधेट्०' सूत्रों में 'षोऽन्तकर्मणि' का ग्रहण किया गया है, इसका नहीं। अतः एकारादेश एवं सिच् का लुक् नहीं होता। लिङ्—सायात् । लुङ्०—असासीत् । √कै, गै धातु का अर्थ—शब्द करना है। √शै, श्रै का अर्थ—पाक है। √पै एवं 'ओ वै' धातु शोषण अर्थ में है। लिङ् (आत्व)—पायात् । लुङ्—अपासीत् । 'लक्षणप्रति-पदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' (लाक्षणिक और प्रतिपदोक्त में प्रतिपदोक्त का ही ग्रहण होता है।) लक्षण=सूत्र, तद्द्वारा सम्पन्न को लाक्षणिक और उपदेशावस्था को प्रतिपदोक्त कहते हैं। यहाँ 'पै' का आकारादेश होकर 'पा' बना है, जो लाक्षणिक है। अतः ईत्व, एकारादेश और सिच्-लुक् कार्य नहीं होते।

√ष्टै का अर्थ=लपेटना है। स्तायति । √स्नै का अर्थ=लपेटना है। कुछ आचार्यों के मतानुसार इसका अर्थ 'शोभा' है । स्नायति । √दैप् का अर्थ=शोधन=शुद्ध करना है। दायति । घुसंज्ञा-विधायक सूत्र में 'अदाप्' (५४४) पद होने से इस धातु की घुसंज्ञा नहीं हुई। अतः एत्व एवं सिच् का लुक् भी नहीं हुआ। लिङ्—दायात् । लुङ्—अदासीत् ।

√'घ्रा' धातु का अर्थ—सूँघना है। (१) √घ्रा+लट् (=तिप्, शप्, घ्रा=जिघ्र, पररूप) =जिघ्रति । (२) आशीर्लिङ् में जिघ्र आदेश न होने पर—घ्रेयात्, घ्रायात् । (३) √घ्रा+लुङ् (=तिप्, इकार का लोप, च्लि=सिच्, सिच् का विकल्प से लोप—'विभाषा घ्राधेट्०' अट्)=अघ्रात् । सिच् लोप के अभावपक्ष में (इट्, सक्, ईट्, स् का लोप, सवर्णदीर्घ)=अघ्रासीत् । लृङ्—अघ्रास्यत् ।

√ध्मा धातु का अर्थ—शब्द एवं अग्निसंयोग है। √ध्मा+लट् (=तिप्=ति, शप्,

स्थादिष्विति षत्वम् । अधितिष्ठौ । 'उपसर्गादि'ति षत्वम् । अधिष्ठाता । स्थेयात् । सत्वे कृते प्रकृतिस्तवर्गः स्यात् । उक्तञ्च—

'नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारश्च षाट्टवर्गस्तवर्गजः ॥'

'गातिस्थे'ति सिचो लुक् । अस्थात् । म्ना अभ्यासे । मनति ॥ दाण् दाने । प्रणियच्छति । ह्वृ कौटिल्ये । ह्वरति । **( ५४८ ) ऋतश्च संयोगादेर्गुणः ७।४।१० ।** ऋदन्तस्य संयोगादेरङ्गस्य गुणो, लिटि । उपधाया वृद्धिः । जह्वार । जह्वरतुः । जह्वरुः ।

---

**नकारजाविति ।** धातुषु झलि परतोऽनुस्वारः पञ्चमश्च ङकारो ञकारो णकारो नकारो मकारो वा नकाराज्जातौ अनुस्वारपञ्चमौ, तथा सकाराज्जातः शकारस्तथा च षकारात्परो विद्यमानः तवर्गाज्जातः टवर्गोऽपि प्रकृतस्थितिं लभत इत्यर्थः । तेन 'ष्ठा' इत्यत्र षकारात्परो तवर्गस्थकारो मूलस्थितिं प्राप्नोति, ठकारस्य थकाराज्जायमानत्वात् ।

**( ५४८ ) ऋतश्चेति ।** 'दयतेर्दिगि लिटि' इत्यतः लिटीत्यनुवर्तते । तदाह—**ऋदन्तस्येत्यादिना । जह्वार ।** ह्वृधातोः लिटस्तिपि, तिपो णलादेशेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्ये'ति द्वित्वेऽभ्याससंज्ञायाम् 'उरत्' इत्यत्वे रपरे च जाते 'हलादिः शेषः'

---

ध्मा=धम, पररूप )=धमति । √ष्ठा का अर्थ=ठहरना है । √ष्ठा+लट् ( =ति, शप्, ष्ठा=तिष्ठ, पररूप )=तिष्ठति । 'अधितष्ठौ' यहाँ लिट् में 'स्थादिषु०' सूत्र से अभ्यासोत्तर सकार को षकारादेश हुआ है । लुट्—'अधिष्ठाता' में 'उपसर्गात्सुनोति०' से षत्व हुआ । लिङ्—स्थेयात में 'वाऽन्यस्य' से एकारादेश होता है । 'ष्ठा' में 'धात्वादेः' से सत्व होने पर 'ठ्' भी अपनी मूल स्थिति तवर्ग-'थ्' को प्राप्त करता है । यथा ( कारिकार्थ )—

**नकारजाविति ।** धातुओं में झल् परे रहते जो अनुस्वार और पंचम वर्ण ( ङ्, ञ्, ण्, न्, म् ) हैं, वे नकार के स्थान में ही हुए हैं । तथा च् छ् परे रहते शकार सकार-स्थानिक है और रेफ सकार से परे टवर्ग तवर्ग-स्थानिक है ।

लुङ् में 'गातिस्था०' से सिच् का लुक् होने पर—अस्थात् । √म्ना का अर्थ=अभ्यास करना है । ( १ ) म्ना+लट् ( =तिप्, शप्, म्ना=मन आदेश—'पाघ्राध्मा०', पररूप )=मनति । √दाण् का अर्थ—दान करना है । प्र+√नि+दाण्+लट् ( =तिप्, शप्, दाण्=यच्छ, पररूप, णत्व—'नेर्गदनद०' )=प्रणियच्छति ।

√ह्वृ धातु का अर्थ—कुटिल आचरण करना है । ह्वृ+लट् ( =तिप्, शप्, सार्वधातुक गुण ऋ=अर्—रपर )=ह्वरति ।

**( ५४८ ) पद**—ऋतः, च, संयोगादेः, गुणः । **अनुवृत्ति**—लिटि, अङ्गस्य । **विधिसूत्र ।**

**मूलार्थ**—लिट् के परवर्ती रहने पर ऋदन्त संयोगादि अङ्ग को गुण होता है ।

**विमर्श**—यहाँ 'दयतेर्दिगि लिटि' ( ७।४।९ ) से 'लिटि' पद की अनुवृत्ति आती है । 'अङ्गस्य' का अधिकार है । तदनुसार—'संयोग है आदि में जिसके, ऐसे अङ्ग को भी लिट् परे रहते गुण होता है' ।

**उदाहरण**—( १ ) √ह्वृ+लिट् ( =तिप्=णल्=अ, धातु को द्वित्व, अभ्यास संज्ञा, 'ऋ'='अ'—'उरत्' रपर )—ह्वर् ह्वृ अ ( व् र् का लोप—'हलादिः शेषः' 'ह्'='झ्'—'कुहोश्चुः'

जह्वर्थ। जह्वरथुः। जह्वर। जह्वार-जह्वर। जह्वरिव। जह्वरिम। ह्वर्ता। (५४९) ऋद्धनोः स्ये ७।२।७०। ऋतो हन्तेश्च स्यस्य इट्। ह्वरिष्यति। ह्वरतु। अह्वरत्। ह्वरेत्। (५५०) गुणोऽर्तिसंयोगाद्योः ७।४।२९। अर्तेः संयोगादेर्ऋदन्तस्य च गुणो यकि, यादावार्द्धधातुके लिङि च। ह्वर्यात्। अह्वार्षीत्। अह्वरिष्यत्। स्वृ शब्दोपतापयोः। स्वरति। 'स्वरती'ति वेट्। सस्वरिथ-सस्वर्थ। वमयोस्तु स्वरत्यादिविकल्पं

---

इति वकारस्य रकारस्य च लोपे 'कुहोश्चुः' इति हस्य झत्वे 'अभ्यासे चर्चं' इति झस्य जकारे जह्व् अ' इति जाते 'ऋतश्च संयोगादेर्गुणः' इति गुणेऽकारे रपरे च कृते 'अत उपधायाः' इति वृद्धौ 'जह्वार' इति।

(५४९) **ऋद्धनोरिति।** ऋत् हन् अनयोर्द्वन्द्वः, पञ्चम्यर्थे षष्ठी, 'स्ये' इति षष्ठ्यर्थे सप्तमी। 'आर्धधातुकस्येडि'त्यतः इडित्यनुवर्तते। तदाह—**ऋत इत्यादिना।**

(५५०) **गुणोऽर्तीति।** अङ्गस्येत्यधिकृतम्। 'रीङृतः' इत्यत ऋत इत्यनुवर्तते। तस्याङ्गविशेषणत्वात्तदन्तविधिः। 'अकृत्सार्वधातुकयोः' इत्यतोऽसार्वधातुकग्रहणमनुवर्तते, तेन 'आर्धधातुके' इति लभ्यते। 'रिङ्शयग्लिङ्क्षु' इत्यतः यकि लिङीति च लभ्यते। 'अयङ् यि' इत्यतः 'यी'ति सप्तम्यन्तमनुवर्तते। तदाह—**अर्तेरित्यादि।** **ह्वर्यात्।** ह्वृधातोराशीर्लिङि, तत्स्थाने तिपि 'यासुट् परस्मैपदेषूदात्तो ङिच्चे'ति

---

झ्=ज्—'अभ्यासे चर्च' )—ज ह् व् भ ( ऋ='अ' गुण—'ऋतश्च संयोगादेर्गुणः' रपर, वृद्धि—'अत उपधायाः' )=जह्वार। (२) लिट् (प्र० पु० द्विवचन तस्=अतुस्, पूर्वोक्त कार्य, गुण, रपर, स्=र्=ः)=जह्वरतुः। (३) लिट् (प्र० पु० बहुवचन झि=उस्, पूर्वोक्त कार्य)=जह्वरुः। (४) लिट् म० पु० ए० व०—जह्वर्थ। (५) लिट्—म० पु० द्वि० व०—जह्वरथुः। (६) लिट्—म० पु० बहुव०—जह्वर। (७) लिट् उ० पु० एक व०—जह्वार, 'णलुत्तमो वा' से णित्व के अभाव पक्ष में—जह्वर। (८) लिट् उ० पु० द्वि० व०—जह्वरिव। (९) लिट् उ० पु० ब० व०—जह्वरिम। (१०) √ह्वृ+लुट् (=तिप्=डा=आ, तास्)—ह्वृ तास् आ (ह्वृ धातु अजन्त है। 'ऊदृदन्तैः' संग्रह कारिका में ग्रहण न होने से यह अनुदात्त है। अतः वलादि आर्धधातुक को इट् का आगम नहीं होता। गुण, रपर, टिलोप)=ह्वर्ता।

**(५४९) पद**—ऋद्धनोः, स्ये। **अनुवृत्ति**—इट्,। **विधिसूत्र।**

**मूलार्थ**—ऋदन्त और हन् धातु से परे स्य को इट् (इ) का आगम होता है।

**विमर्श**—प्रकृत सूत्र में 'आर्धधातुकस्येड् वलादेः' (७।२।३५) से 'इट्' की अनुवृत्ति आ रही है। अतः "ऋकारान्त और 'हन्' धातु से परे 'स्य' को इट् का आगम होता है"।

**उदाहरण**—(१) √ह्वृ+लृट् (=तिप्=ति)—ह्वृ ति (स्य, इट्—'ऋद्धनोः स्ये' गुण, रपर)=ह्वरिष्यति। (२) लोट्—ह्वरतु। (३) लङ्—अह्वरत्। (४) विधिलिङ्—ह्वरेत्।

**(५५०) पद**—गुणः, अर्तिसंयोगाद्योः। **अनुवृत्ति**—ऋतः, असार्वधातुकस्य, यकि, लिङि, यि, अङ्गस्य। **विधिसूत्र।**

**मूलार्थ**—यक् के परे रहने पर और यकारादि आर्धधातुक लिङ् के परे रहते ऋ धातु और संयोगादि ऋदन्त धातु को गुण होता है।

**विमर्श**—यहाँ 'रीङृतः (७।४।२७) सूत्र से 'ऋतः' की अनुवृत्ति आती है। 'अङ्गस्य' का अधिकार है। 'अकृत्सार्वधातुकयोः' (७।४।२५) से 'असार्वधातुकस्य' की अनुवृत्ति आने से

बाधित्वा पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्यात् 'श्र्युकः किती'ति निषेधे प्राप्ते क्रादि-नियमान्नित्यमिट् । सस्वरिव । सस्वरिम । परत्वादृद्धनोरिति नित्यमिट् । स्वरिष्यति । अस्वारीत्, अस्वार्षीत् । स्मृ चिन्तायाम् । स्मरति । ह्वृ संवरणे । ह्वरति । सृ गतौ । क्रादित्वान्नेट् । ससार । ससर्थ । ससृव । ससृम । ( ५५१ ) रिङ्शयग्लिङ्क्षु ७।४। २८ । शे, यकि यादावार्द्धधातुके लिङि च ऋतो रिङ् । रीङि प्रकृते रिङ्विधानसाम-

---

यासुडागमेऽनुबन्धलोपे, 'इतश्चे'तीकारलोपे 'ह्व यात्' इति स्थिते कित्त्वाद्गुणनिषेधे प्राप्ते 'गुणोऽर्तिसंयोगाद्योः' इति गुणे रपरे 'ह्वर्यादि'ति रूपम् ।

**वमयोस्तु इति ।** 'स्वरतिसूति' इति विकल्पो यद्यपि परस्तथापि 'आर्धधातुकस्येड् वलादेः' इति विधिप्रकरणारम्भात् प्रागेव 'नेड् वशि कृति' ( ७।२।८ ) 'श्र्युकः किति' ( ७।२।११ ) इत्यादिनिषेधकाण्डारम्भसामर्थ्यात् अयं 'श्र्युकः किती'ति निषेधः स्वरत्यादिविकल्पं बाधते । लिटि वमयोस्तु निषेधमेतं क्रादिनियमो बाधत इति नित्य-मिट् भवतीति भावः ।

**( ५५१ ) रिङ्शयगिति ।** अत्र 'अयङ् यि क्ङिती'त्यतः 'यी'त्यनुवृत्तं लिङो विशेषणम् । तदादिविधिः । 'अकृत्सार्वधातुकयोः' इत्यनुवृत्तमपि लिङ एव विशेषणम् । तदाह—**शे यकि इत्यादिना ।**

---

'आर्धधातुक' अर्थ का लाभ होता है । 'रिङ्शयग्लिङ्क्षु' ( ७।४।२८ ) से 'यकि' तथा 'लिङि' और 'अयङ् यि' ( ७।४।२२ ) से 'यि' की अनुवृत्ति आती है । तदनुसार—'ऋ और संयोगादि ऋदन्त धातु को गुण होता है, यक् और यकारादि आर्धधातुक लिङ् के परवर्ती रहने पर' ।

**उदाहरण**—( १ ) √हृ+आशीर्लिङ् ( =तिप्=ति )—हृ ति ( आर्धधातुक संज्ञा, 'लिङाशिषि' यासुट्=यास् , गुण—'गुणोऽर्तिसंयोगाद्योः', स् का लोप )=ह्रर्यात् । ( २ ) हृ+ लुङ् ( =तिप्=ति )—हृ ति ( अट् , इलोप, च्लि=सिच्, ईट् , ऋ='आ'—वृद्धि—'सिचि वृद्धिः' रपर, स्=ष्—'आदेशप्रत्यययोः' )=अह्वार्षीत् । ( ३ ) लृङ् में—ह्वरिष्यत् ।

√स्वृ का अर्थ—शब्द एवं उपताप है । ( १ ) स्वृ+लट् ( =तिप्=ति; शप्–अ, गुण, रपर )=स्वरति । ( २ ) √स्वृ+लिट् ( =सिप्=थल्=थ )—स्वृ थ ( द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'स्वरतिसूति०' से विकल्प से इट्, गुण, रपर )=सस्वरिथ । इट् के अभाव पक्ष में—सस्वर्थ । ( ३ ) लिट् के उत्तमपुरुष वस् , मस् ( =व, म ) में 'स्वरतिसूति०' से विकल्प से इट् प्राप्त है । उसको प्रतिषेध के प्रथम करण के सामर्थ्य से बाधकर 'श्र्युकः किति' से निषेध प्राप्त हुआ । इस निषेध को बाधकर क्रादि-नियम से नित्य इट् हुआ—सस्वरिव । सस्वरिम । 'स्वरि-ष्यति' में परत्वात् 'ऋद्धनोः स्ये' से नित्य इट् हुआ । ( ४ ) स्वृ+लुङ् ( =तिप्=ति )—ति ( अट्, च्लि=सिच् , इट् विकल्प से 'स्वरति०' ईट्, 'स्' का लोप, वृद्धि, रपर )=अस्वारीत् । इट् के अभाव पक्ष में—वृद्धि—'सिचि वृद्धिः०' रपर, षत्व=अस्वार्षीत् ।

√स्मृ धातु—चिन्ता अर्थ में है । ( १ ) √स्मृ+लट् ( =तिप्=ति, शप्–अ, गुण, रपर ) =स्मरति । √ह्वृ धातु—संवरण अर्थ में है । लट् प्र० पु० ए० व०—ह्वरति । √सृ धातु का अर्थ–गति ( =जाना ) है । यहाँ क्रादि-नियम से इट् का अभाव है । लिट् प्र० पु० ए० व०—ससार । लिट् म० पु० ए० व०—ससर्थ । लिट् उ० पु० द्वि० व०—ससृव । लिट् उ० पु० ब० व०—ससृम ।

**( ५५१ ) पद**—रिङ् , शयग्लिङ्क्षु । **अनुवृत्ति**—ऋतः, असार्वधातुके, यि, अङ्गस्य । **विधिसूत्र ।**

र्थ्यान्न दीर्घः । स्त्रियात् । असार्षीत् । असरिष्यत् । शीघ्रगतौ तु 'पाघ्रे'ति शिति धौरादेशः । धावति । गृ घृ सेचने । गरति । घरति । ध्वृ हूर्च्छने । ध्वरति । दृशिर् प्रेक्षणे । पश्यति । ददर्श । ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन । ददृशतुः । ददृशुः । ( ५५२ ) विभाषा सृजिदृशोः ७।२।६५ । आभ्यां थल इड् वा । ( ५५३ )

---

स्त्रियादिति । सृधातोराशीर्लिङि तिपि, 'इतश्चे'तीकारलोपे यासुडागमेऽनुबन्धलोपे 'रिङ्शयग्लिङ्क्षु' इति रिङादेशेऽनुबन्धलोपे रिङादेशविधानसामर्थ्याद् दीर्घाभावे 'स्त्रियादि'ति रूपम् ।

( ५५२ ) विभाषेति । 'गमेरिट्' इत्यतः इडिति, 'अचस्तास्वत्' इत्यतश्च 'थली'ति अनुवर्तते । सृज्धातोः दृश्धातोश्च क्रादिनियमान्नित्यमिट् प्राप्तस्तत्र विभाषया इड् भवतीत्याह—आभ्यामिति ।

---

**मूलार्थ**—शकार, यक् और यकारादि आर्धधातुक लिङ् के परे रहते—ऋत् को रिङ् आदेश होता है । स्त्रियात् इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'रीङ् ऋतः' ( ७।४।२७ ) से 'ऋतः' 'अकृत्सार्वधातुकयोः' ( ७।४।२५ ) से 'असार्वधातुके' तथा 'अयङ् यि' ( ७।४।२२ ) से 'यि' पदों की अनुवृत्ति आती है । 'अङ्गस्य' का अधिकार है । तदनुसार—'ऋकारान्त अङ्ग को श, यक् तथा यकारादि सार्वधातुक भिन्न लिङ् के परवर्ती रहने पर रिङ् आदेश होता है' । यहाँ रीङ् ऋतः' सूत्र से 'रीङ्' की अनुवृत्ति करके 'शयग्लिङ्क्षु' इतना ही सूत्र बनाया जाता और रीङ् का विधान किया जाना उचित था, पुनः सूत्र में रिङ् ग्रहण क्यों किया गया ? अतः ज्ञापन किया जाता है कि रिङ् आदेश के इकार को 'अकृत्सार्व०' से दीर्घ नहीं होता ।

**उदाहरण**—( १ ) √सृ + आशीर्लिङ् ( =तिप्=ति, इ का लोप, यासुट्=यास् )—सृ यास् त ( 'स्' का लोप, ऋ=रिङ्-रि—'रिङ् शयग्लिङ्क्षु' )=स्त्रियात् । ( २ ) लुङ्—असार्षीत् । लृङ्—असरिष्यत् ।

√सृ धातु के शीघ्रगति ( =दौड़ना ) अर्थ में शित् प्रत्यय के परे रहते 'पाघ्राध्मा' से सृ के स्थान में 'धौ' आदेश होता है । लट् प्र० पु० ए० व०—धावति । √गृ, घृ सेचन अर्थ में हैं । गरति । घरति ।

√ध्वृ धातु का अर्थ हूर्च्छन ( =कुटिलता ) है । लट्—ध्वरति ।

√दृशिर् धातु का अर्थ—देखना है । √दृशिर् ( 'इर इत्संज्ञा वाच्या' से इर् की इत्संज्ञा लोप )—दृश्+लट् ( =तिप्=ति, शप् , दृश्=पश्य्—'पाघ्राध्मा०' )=पश्यति । लिट् प्र० पु० ए० व०—ददर्श । लिट् प्र० पु० द्वि० व०—ददृशतुः ।

**ऋदुपधेभ्यः**—ऋदुपध धातुओं से परवर्ती लिट् गुण की अपेक्षा पूर्वविप्रतिषेध से कित् होता है । अतः 'ददृशतुः' में गुण नहीं हुआ । लिट् प्र० पु० ब० व०—ददृशुः ।

**( ५५२ ) पद**—विभाषा, सृजिदृशोः । **अनुवृत्ति**—इट्, थलि । **विधिसूत्र** ।

**मूलार्थ**—सृज् तथा दृश् धातु से परवर्ती थल् को विकल्प से इट् होता है ।

**विमर्श**—यहाँ 'गमेरिट्०' ( ७।२।५८ ) से 'इट्' और 'अचस्तास्वत्०' ( ७।२।६१ ) से 'थलि' की अनुवृत्ति आती है । तदनुसार—'सृज् एवं दृश् धातु से परे थल् को विकल्प से इट् का आगम होता है' ।

**सृजिदृशोर्झल्यमकिति** ६।१।५८। अनयोरमागमः स्याज्झलादावकिति। **दद्रष्ठ–दर्दशिथ। द्रष्टा। (५५४) षढोः कः सि** ८।२।४१। षस्य ढस्य च कः स्यात्सकारे परे। **द्रक्ष्यति। दृश्यात्। इरित्त्वादङ् वा। (५५५) ऋदृशोऽङि गुणः** ७।४।१६। ऋवर्णान्तानां दृशेश्च गुणः स्यादङि। **अदर्शत्।** अङभावे—**(५५६) न दृशः** ३।१।४७।

---

(५५३) **सृजिदृशोरिति।** नित्यार्थमिदं सूत्रम्। **दद्रष्ठ** इति। 'दृशिर् प्रेक्षणे' इत्यस्माद्धातोः' इरित्संज्ञायां लोपे च कृते लिटि, तत्स्थाने सिपि, सिपः थलादेशेऽनुबन्धलोपे, द्वित्वेऽभ्याससंज्ञायाम् उरदत्वे हलादिशेषे 'विभाषा सृजिदृशोः' इति विकल्पेन इडागमे 'ददृश् इ थ' इति जाते, लघूपधगुणे रपरे 'दर्दशिथ' इति। इडागमाभावपक्षे तु—'सृजिदृशोर्झल्यमकिति' इत्यमागमे मित्त्वादन्त्यादचः परे यणि द द्र श् थ इति जाते 'व्रश्चभ्रस्ज०' इति शकारस्य षकारे 'ष्टुना ष्टुः' इति ष्टुत्वे च कृते 'दद्रष्ठ' इति रूपम्।

(५५४) **द्रक्ष्यति।** दृश्धातोर्लृटि तिपि 'स्यतासी ऌलुटोः' इति स्यप्रत्यये 'व्रश्चभ्रस्ज०' इत्यादिना शकारस्य षत्वे 'सृजिदृशोर्झल्यमकिति' इत्यमागमे यणि 'षढोः कः सि' इति षस्य कत्वे 'आदेशप्रत्यययोः' इति स्यस्य सस्य षत्वे क्षयोः संयोगे क्षत्वे कृते द्रक्ष्यतीति।

(५५५) **ऋदृशोऽङि गुण इति। अदर्शत्।** दृश्धातोः लुङि तिपि, 'इतश्चे'ति इकारलोपे च्लौ, 'इरितो वा' इति च्लेः विभाषयाऽङादेशे 'ऋदृशोऽङि गुणः' इति गुणेऽङ्गस्याडागमेऽनुबन्धलोपे 'अदर्शत्' इति।

---

**(५५३) पद**—सृजिदृशोः, झलि, अम्, अकिति। **विधिसूत्र।**

**मूलार्थ**—कित्-भिन्न झलादि प्रत्यय के परवर्ती रहने पर सृज् और दृश् धातु को 'अम्' आगम होता है।

**विमर्श**—यह अम् आगम मित् होने से अन्त्य अच् से परे होगा। ('मिदचोऽन्त्यात्परः')।

**उदाहरण**—(१) √दृश्+लिट् (=सिप्=थल्=थ)—दृश् थ (द्वित्व, अभ्यास संज्ञा, 'ऋ'='अ'—'उरत्', रपर, हलादिशेष, इट्=इ का आगम—विकल्प से—'विभाषा सृजिदृशोः') —द दृश् इ थ (गुण—'पुगन्त०'—रपर)=दर्दशिथ। इट् के अभाव पक्ष में (अम्—अ का आगम—'सृजिदृशोः०')—द दृ अ श् थ ('ऋ'='र'—यण्, श्=ष्—'व्रश्च०', थ्=ठ्—ष्टुत्व)=दद्रष्ठ।

**(५५४) पद**—षढोः, कः सि। **विधिसूत्र।**

**मूलार्थ**—सकार के परवर्ती रहने पर ष् और ढ् के स्थान में क् आदेश होता है।

**उदाहरण**—(१) √दृश्+लृट् (=तिप्=ति, स्य,)—दृश् स्य ति (श्=ष्—'व्रश्च०', 'अम्'='अ'—'सृजिदृशोः', यण्)—द्रष् स्य ति (ष्=क्—'षढोः कः सि', 'स्'='ष्'—'आदेशप्रत्यययोः' क्+ष्=क्ष्)=द्रक्ष्यति। लिङ्—दृश्यात्। यहाँ कित् होने से अम् नहीं हुआ।

**(५५५) पद**—ऋदृशः, अङि, गुणः। **विधिसूत्र।**

**मूलार्थ**—'अङ्' के परवर्ती रहने पर ऋवर्णान्त धातु और दृश् धातु को गुण होता है।

**उदाहरण**—(१) √दृश्+लुङ् (=तिप्=ति, 'इ' का लोप, अट्, च्लि, च्लि=अङ् विकल्प से—'इरितो वा')—अ दृ श् त ('ऋ'='अ'—गुण—'ऋदृशोऽङि गुणः', रपर)=अदर्शत्। अङ् के अभावपक्ष में—

दृशश्च्लेर्वक्ष्यमाणः क्सो न । अद्राक्षीत् । अद्रक्ष्यत् । श्रु श्रवणे । ( ५५७ ) श्रुवः शृ च ३।१।७४ । श्रुवः शृ आदेशः श्नुप्रत्ययश्च कर्तरि सार्वधातुके । शृणोति । ( ५५८ ) सार्वधातुकमपित् १।२।४ । अपित्सार्वधातुकं ङिद्वत् स्यात् । शृणुतः । ( ५५९ )

---

( ५५६ ) न दृश इति । 'च्लेः सिच्' इत्यतः च्लेरिति, 'शल इगुपधात्' इत्यतः क्स इति चानुवर्तते । तदाह—दृश इति ।

( ५५७ ) श्रुव इति । चकारेणात्र 'स्वादिभ्यः श्नुः' इति सूत्रस्थः श्नुः समुच्चीयते । तदाह—श्रुवः शृ इत्यादेश इत्यादिना । शृणोतीति । श्रुधातोर्लटि तिपि शपि प्राप्ते 'श्रुवः शृ चे'त्यनेन 'श्रु' इत्यस्य 'शृ' इत्यादेशे श्नुप्रत्यये च कृतेऽनुबन्धलोपे श्नुप्रत्ययस्याऽपित्त्वेन ङित्त्वात् 'शृ' इत्येतस्य गुणाभावे, श्नु इत्यस्य उकारस्य गुणे 'शृणोति' इति ।

( ५५८ ) सार्वधातुकमपिदिति । 'गाङ्कुटादिभ्यः' इत्यतः ङिदित्यनुवर्तते । तदाह—अपिदिति । तसादीनां ङित्त्वात् श्नोर्न गुणः । शृणुत इति ।

---

**( ५५६ ) पद**—न, दृशः । **अनुवृत्ति**—च्लेः, क्सः । **विधिसूत्र** ।

**मूलार्थ**—दृश् धातु से परे 'च्लि' को 'क्स' आदेश नहीं होता । अद्राक्षीत् ।

**विमर्श**—प्रकृत सूत्र में 'च्लेः सिच्' ( ३।१।४४ ) से 'च्लेः' और 'शल इगुपधात्०' से 'क्सः' पदों की अनुवृत्ति आती है । अतः दृश् धातु से परवर्ती 'च्लि' को 'क्स' आदेश नहीं होता ।

**उदाहरण**—( १ ) अङ् के अभावपक्ष में—अ दृश् च्लि त ( 'शल इगुपधादनिटः क्सः' से प्राप्त क्स आदेश का 'न दृशः' से निषेध, च्लि=सिच्=स्, श्=ष्—'व्रश्च०', 'ष्'='क्'—'षढोः कः सि', स्=ष्—'आदेशप्रत्यययोः' क्+ष्=क्ष्, ईट्, अम्, यण्, वृद्धि—'वदव्रज०' ) =अद्राक्षीत् । लृट्—अद्रक्ष्यत् ।

√श्रु धातु का अर्थ सुनना है ।

**( ५५७ ) पद**—श्रुवः, शृ, च । **अनुवृत्ति**—श्नु । **विधिसूत्र** ।

**मूलार्थ**—कर्त्रर्थक सार्वधातुक के परवर्ती रहते श्रु धातु को 'शृ' आदेश होता है और श्नु प्रत्यय होता है ।

**विमर्श**—प्रकृत सूत्रस्थ 'च' पद से 'स्वादिभ्यः श्नुः' ( ३।१।७३ ) सूत्र से 'श्नु' पद की अनुवृत्ति होती है ।

**उदाहरण**—( १ ) √श्रु+लट् ( =तिप्=ति )—श्रु ति ( 'श्रु'='शृ' और श्नु )—शृ नु ति ( 'उ'='ओ' गुण—'सार्वधातु०' 'न्'='ण्'—'ऋवर्णान्नस्य णत्वं वाच्यम्' )=शृणोति । यहाँ श्नु प्रत्यय के अपित् होने से 'सार्वधातुकमपित्' से ङित् होने पर 'शृ' के ऋकार को गुण नहीं होता ।

**( ५५८ ) पद**—सार्वधातुकम्, अपित् । **अनुवृत्ति**—ङित् । **अतिदेशसूत्र** ।

**मूलार्थ**—पित्-भिन्न सार्वधातुक ङिद्वत् होता है । शृणुतः ।

**विमर्श**—प्रकृत सूत्र में 'गाङ्कुटादिभ्योऽञ्णिङित्' ( १।२।१ ) से 'ङित्' की अनुवृत्ति आती है । तदनुसार उक्त अर्थ निष्पन्न होता है ।

**उदाहरण**—( १ ) √श्रु+लट् ( =तस्, श्रु=शृ, श्नु )—शृ नु तस् ( णत्व, स्=र्=ः ) =शृणुतः । यहाँ 'नु' के उकार को सार्वधातुक निमित्तक गुण प्राप्त होता है । तस् अपित्

**हुश्नुवोः सार्वधातुके ६।४।८७।** जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्यासंयोगपूर्वोवर्णस्य यण् स्यादचि सार्वधातुके। शृण्वन्ति। शृणोषि। शृणुथः। शृणुथ। शृणोमि। (५६०) **लोपश्चान्यतरस्यां म्वोः ६।४।१०७।** असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा, म्वोः परयोः। शृण्वः-शृणुवः। शृण्मः-शृणुमः। शुश्राव। शुश्रव। शुश्रुव। शुश्रुम। श्रोता। श्रोष्यति। शृणोतु। शृणुयात्। शृणुताम्। शृण्वन्तु। (५६१)

---

(५५९) **हुश्नुवोरिति।** 'इणो यण्' इत्यतः यण् इत्यनुवर्तते, 'अचि श्नु' इत्यतः अचीति, 'ओः सुपी'त्यतः ओरिति, 'एरनेकाचः' इति सूत्रम् एरिति वर्जमनुवर्तते। तदाह—**जुहोतेरित्यादिना।**

(५६०) **लोपश्चेति।** अस्येत्यनेन 'उतश्च प्रत्ययादसंयोगपूर्वात्' इति पूर्वसूत्रोक्त उकारः परामृश्यते। असंयोगपूर्वात् प्रत्ययादिति चोकारेऽन्वेति। तस्याङ्गविशेषणत्वात्तदन्तविधिस्तदाह—**असंयोगपूर्वस्येति।** **शृण्वः, शृणुवः।** श्रुधातोः लटो वसि 'श्रुवः शृ च' इति श्रुवः 'शृ' इत्यादेशे शब्विषये श्नुप्रत्यये च कृते सार्वधातुकसंज्ञायां

---

सार्वधातुक होने से 'सार्वधातुकमपित्' से ङिद्भाव हो जाता है। अतः 'क्ङिति च' से गुण का निषेध हो जाता है।

**(५५९) पद**—हुश्नुवोः, सार्वधातुके। **अनुवृत्ति**—अनेकाचोऽसंयोगपूर्वस्य, अचि, यण्, ओः, अङ्गस्य। **विधिसूत्र।**

**मूलार्थ**—अजादि सार्वधातुक प्रत्यय के परवर्ती रहने पर हु धातु और श्नु-प्रत्ययान्त जो अनेकाच् अङ्ग, तदवयव जो असंयोगपूर्वक उ वर्ण, उसको यण् आदेश होता है। शृण्वन्ति इत्यादि।

**विमर्श**—यहाँ 'इणो यण्' (६।४।८१) से 'यण्' 'अचि श्नु०' (६।४।७७) से अचि, 'ओः सुपि' (६।४।८३) से मण्डूकप्लुत्या 'ओः' तथा 'एरनेकाचोऽसंयोगपूर्वस्य' (६।४।८२) से 'अनेकाचोऽसंयोगपूर्वस्य' की अनुवृत्ति आती है। तदनुसार—"अजादि सार्वधातुक प्रत्यय के परे रहते 'हु' धातु तथा अनेकाच् श्नु-प्रत्ययान्त अङ्ग के असंयोगपूर्वक उवर्ण को यण् आदेश होता है"।

**उदाहरण**—(१) √श्रु+लट् (=झि, श्रु=शृ, श्नु=नु, झ्=अन्त)—शृ नु अन्ति ('अन्ति' को ङिद्भाव होने से गुण-निषेध, णत्व, उ=व् 'यण्'—'हुश्नुवोः सार्वधातुके')= शृण्वन्ति। (२) श्रु+लट् (=सिप्=सि, श्रु=शृ, श्नु, गुण, णत्व, षत्व)=शृणोषि। (३) शृणुथः, शृणुथ—'थस्' और 'थ' के अपित् सार्वधातुक होने से ङिद्भाव होने पर गुण-निषेध। (४) श्रु+लट् (=मिप्=मि, पूर्ववत)=शृणोमि।

**(५६०) पद**—लोपः, च, अन्यतरस्याम्, म्वोः। **अनुवृत्ति**—उतः, प्रत्ययात्, असंयोग-पूर्वात्। **विधिसूत्र।**

**मूलार्थ**—वकार और मकार के परवर्ती रहने पर असंयोगपूर्वक प्रत्यय के उकार का विकल्प से लोप होता है। शृण्वः-शृणुवः इत्यादि।

**विमर्श**—प्रकृत सूत्र में 'उतश्च प्रत्ययादसंयोगपूर्वात्' (६।४।१०६) की अनुवृत्ति आ रही है। तदनुसार—'मकारादि तथा वकारादि प्रत्ययों के परे रहते असंयोगपूर्वक प्रत्यय के उकार का विकल्प से लोप होता है'।

**उदाहरण**—(१) श्रु+लट् (=वस्, श्रु=शृ, श्नु)—शृ नु वस् (णत्व, 'उ' का विकल्प से लोप, णत्व)—शृण्वस्=(स्=रु, रु=ः)=शृण्वः। उकार का लोप न होने पर—शृणुवः।

**उतश्च प्रत्ययादसंयोगपूर्वात् ६।४।१०६।** असंयोगपूर्वात्प्रत्ययोतो हेर्लुक्। शृणु-शृणुतात्। शृणुतम्। शृणुत। गुणावादेशौ। शृणवानि। शृणवाव। शृणवाम। अशृणोत्। अशृणुताम्। अशृण्वन्। अशृणोः। अशृणुतम्। अशृणुत। अशृणवम्। अशृण्व-अशृणुव। अशृण्म-अशृणुम। शृणुयात्। शृणुयाताम्। ( ५६२ ) **उस्य-**

---

'सार्वधातुकमपित्' इति श्नोर्ङित्त्वे 'क्ङिति चे'ति गुणाभावे, णत्वे 'शृ णु व स्' इति जाते 'लोपश्चान्यतरस्यां म्वोः' इति विभाषया उकारलोपे सस्य रुत्वे विसर्गे च कृते 'शृण्वः' इति। लोपाऽभावपक्षे 'शृणुवः' इति।

( ५६१ ) **उतश्चेति।** 'चिणो लुगि'त्यतः 'लुगि'ति, 'अतो हेः' इत्यतश्च 'हेरि'-त्यनुवर्तते। अङ्गस्येत्यधिकृतम्। तदाह—**असंयोगपूर्व इत्यादि। शृणुयात्।** श्रुधातो-र्लिङस्तिपि 'श्रुवः शृ च' इति श्रुवः श्रादेशे श्नुप्रत्यये च कृते णत्वे यासुडागमेऽनुबन्ध-लोपे 'लिङः सलोपोऽनन्त्यस्ये'ति सलोपे 'इतश्चे'तीकारलोपे 'शृणुयात्' इति।

---

( २ ) लट् ( मस्-पूर्ववत )=शृण्मः-शृणुमः। ( ३ ) श्रु+लिट् ( =तिप्=णल्=अ, द्वित्व, अभ्यासकार्य, वृद्धि और 'आव्' आदेश )=शुश्राव। लिट् ( वस्, मस् )=शुश्रुव, शुश्रुम। ( ४ ) लुट्—श्रोता ( आर्धधातुक गुण )। ( ५ ) लृट्—श्रोष्यति। ( ६ ) श्रु+लोट् ( =तिप्=ति, शप् के विषय में श्नु, श्रु=शृ, 'उ'='ओ'—गुण, णत्व )—शृणोति ( ति=तातङ् विकल्प से ) =शृणुतात्। पक्ष में (इ=उ )=शृणोतु। ( ७ ) ( 'तस्' के अपित् सार्वधातुक होने से ङिद्वद्-भाव होने पर गुण-निषेध )=शृणुताम्। ( ८ ) श्रु+लोट् (=झि, झ्=अन्त, शृ, श्नु, णत्व)—शृणु अन्ति ( उ=व्—'यण्'—'हुश्नुवोः' )—शृण्वन्ति ( इ=उ )=शृण्वन्तु।

**( ५६१ ) पद**—उतः, च, प्रत्ययात्, असंयोगपूर्वात्। **अनुवृत्ति**—हेः, लुक्। **विधिसूत्र।**

**मूलार्थ**—असंयोगपूर्वक प्रत्यय के उकार से परे 'हि' का लुक् होता है। शृणु-शृणुतात् इत्यादि।

**विमर्श**—'अङ्गस्य' का अधिकार है। 'चिणो लुक्' ( ६।४।१०४ ) से 'लुक्' और 'अतो हेः' से 'हेः' पदों की अनुवृत्ति आती है। इस प्रकार—"असंयोगपूर्व जो प्रत्यय का उकार, तदन्त अङ्ग से परवर्ती 'हि' का लुक् हो जाता है"।

**उदाहरण**—( १ ) श्रु+लोट् (=सिप्=सि, श्रु=शृ, श्नु, णत्व, सि=हि )—शृणु हि ( हि=तातङ्='तात्'—विकल्प से )=शृणुतात्। तातङ् के अभाव पक्ष में ( 'हि' का लुक्—'उतश्च प्रत्ययादसंयोगपूर्वात्' )=शृणु।

( २ ) मध्यमपुरुष 'थस्', 'थ' में 'तम्' और 'त' आदेश होने पर—शृणुतम्, शृणुत।

( ३ ) श्रु+लोट् ( =मिप्=मि, श्रु=शृ, श्नु, णत्व, मि=नि—'मेर्निः' )—शृ णु नि ( आट्='आ'—'आडुत्तमस्य पिच्च' 'उ=ओ'—गुण, ओ=आव् )=शृणवानि।

( ४ ) उ० पु० वस्, मस् में—शृणवाव, शृणवाम।

**लङ् लकार**—( १ ) प्रथमपुरुष ए० व०—अशृणोत्। द्वि० व०—अशृणुताम्। ब० व०—यण् होकर—अशृण्वन्।

( २ ) मध्यमपुरुष ए० व०—अशृणोः। द्वि० व०—अशृणुतम्। ब० व०—अशृणुत।

( ३ ) उत्तमपुरुष ए० व०—अशृणवम्। द्वि० व०, बहुवचन में विकल्प से उकार का लोप—'लोपश्चान्यतरस्याम्०'—अशृण्व-अशृणुव। अशृण्म-अशृणुम।

**विधिलिङ्**—( १ ) श्रु+लिङ् ( =तिप्, श्रु=शृ, श्नु, णत्व, यासुट्=यास् )—शृणु यास् ति ( 'इ' का लोप, 'स्' का लोप )=शृणुयात्। ( २ ) तस्—शृणुयाताम्।

**पदान्तात्** ६।१।९३। अपदान्तादवर्णादुसि पररूपमेकादेशः स्यात्। शृणुयुः। शृणुयाः। शृणुयातम्। शृणुयात। शृणुयाम्। शृणुयाव। शृणुयाम। श्रूयात्। अश्रौषीत्। अश्रोष्यत्। गम्लृ, सृप्लृ गतौ। **(५६३) इषुगमियमां छः** ७।३।७७। शिति।

---

(५६२) **उस्यपदान्तादिति**। अत्र 'एकः पूर्वपरयोः' इत्यधिकृतम्। 'आद् गुणः' इत्यस्मादादित्यनुवर्तते, 'एङि पररूपम्' इत्यस्मात्पररूपमिति च। तदाह—**अपदान्तादिति**। **शृणुयुः**। श्रुधातोर्लिङः स्थाने झिप्रत्यये झेर्जुसादेशेऽनुबन्धलोपे 'श्रुवः शृ चे'-त्यनेन 'शृ'आदेशे श्नुप्रत्यये णत्वे यासुटि, सकारलोपे 'उस्यपदान्तात्' इति पररूपे सस्य रुत्वे विसर्गे च कृते 'शृणुयुः' इति।

(५६३) **इषुगमीति**। अत्र 'ष्ठिवुक्लमुचमामि'त्यतः 'शिती'त्यनुवर्तते। **गच्छति**। गम्धातोः लटि, तिपि, अनुबन्धलोपे 'तिङ्शित्सार्वधातुकम्' इत्यनेन सार्वधातुकसंज्ञायां 'कर्तरि शप्' इति शप्यनुबन्धलोपे 'गम् अ ति' इति जाते 'इषुगमियमां छः' इति

---

**(५६२) पद**—उसि, अपदान्तात्। **अनुवृत्ति**—एकः पूर्वपरयोः, आत्, पररूपम्। **विधिसूत्र**।

**मूलार्थ**—अपदान्त अवर्ण से 'उस्' परे रहते पूर्व-पर के स्थान में पररूप एकादेश होता है। शृणुयुः। इत्यादि।

**विमर्श**—'एकः पूर्वपरयोः' का अधिकार है। 'आद् गुणः' (६।१।८४) से 'आत्' तथा 'एङि पररूपम्' (६।१।९१) से 'पररूपम्' की अनुवृत्ति आ रही है। तदनुसार—"अपदान्त अवर्ण से (उत्तर में) 'उस' परे रहते पूर्व-पर (अ+उ) के स्थान में पररूप एकादेश होता है"।

**उदाहरण**—(१) श्रु=लिङ् (=झि=जुस्=उस्, श्रु=शृ, श्नु, णत्व)—शृ णु उस् (यासुट्=यास्, स् का लोप, आ+उ=उ—पररूप, स्=र्, र्=ः)=शृणुयुः। विधिलिङ् के रूप इस प्रकार हैं—

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | शृणुयात् | शृणुयाताम् | शृणुयुः |
| म० पु०— | शृणुयाः | शृणुयातम् | शृणुयात |
| उ० पु०— | शृणुयाम | शृणुयाव | शृणुयाम |

(२) आशीर्लिङ् में 'अकृत्सार्व०' से दीर्घ होकर—श्रूयात्।

(३) लुङ् में 'सिचि वृद्धि०' से वृद्धि होकर—अश्रौषीत्।

**लुङ् लकार के रूप—**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | अश्रौषीत् | अश्रौष्टाम् | अश्रौषुः। |
| म० पु०— | अश्रौषीः | अश्रौष्टम् | अश्रौष्ट। |
| उ० पु०— | अश्रौषम् | अश्रौष्व | अश्रौष्म। |

(४) लङ् लकार में—अश्रोष्यत्

√गम्लृ और √सृप्लृ धातुओं का अर्थ=जाना है।

**(५६३) पद**—इषुगमियमाम्, छः। **अनुवृत्ति**—शिति। **विधिसूत्र**।

**मूलार्थ**—'शित्' प्रत्यय के परवर्ती रहने पर इष्, गम् और यम् धातुओं को छकारान्त आदेश होता है।

गच्छति । जगाम । ( ५६४ ) **गमहनजनखनघसां लोपः क्ङित्यनङि ६।४।९८ ।** एषामुपधाया लोपः स्यादजादौ क्ङिति, न त्वङि । जग्मतुः । जग्मुः । जगमिथ, जगन्थ । जग्मथुः । जग्म । जगाम-जगम । जग्मिव । जग्मिम । गन्ता । ( ५६५ ) **गमेरिट् परस्मैपदेषु ७।२।५८ ।** गमेः परस्य सादेरार्द्धधातुकस्येट् परस्मैपदेषु । गमिष्यति ।

---

'अलोऽन्त्यस्ये'ति परिभाषया अन्त्यस्य मकारस्य स्थाने छादेशे जाते 'छे च' इति तुकि 'स्तोः श्चुना श्चुः' इति श्चुत्वे 'गच्छति' इति रूपम् । **जगाम इति** । गम्धातोर्लिटि, तिपि, 'परस्मैपदानामि'त्यादिना तिपः स्थाने णलादेशेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्ये'ति द्वित्वेऽभ्यासत्वे हलादिशेषे 'कुहोश्चुः' इति गकारस्य जकारे 'अत उपधायाः' इति वृद्धौ 'जगाम' इति रूपम् ।

( ५६४ ) **गमहनेति** । 'ऊदुपधायाः' इत्यतः 'उपधायाः' इत्यनुवर्तते । 'अचि श्नु०' इत्यस्मादनुवृत्तस्य अचीत्यस्य अङ्गाक्षिप्तप्रत्ययविशेषणतया तदादिविधिरित्याह—एषामित्यादिना ।

( ५६५ ) **गमेरिडिति** । 'सेऽसिचि' इत्यस्मात् 'से' इत्यनुवर्तते । तेन आर्धधातु-

---

**विमर्श**—यहाँ 'ष्ठिवुक्लमुचमां शिति' ( ७।३।७५ ) से 'शिति' पद की अनुवृत्ति आती है । इस प्रकार इष्, गम् और यम् धातुओं के अन्त्य अल् को 'छ्' आदेश होता है, शित् परे रहते ।

**उदाहरण**—( १ ) √गम्+लट् ( =तिप्=ति, शप्-अ, 'अलोऽन्त्यस्य' परिभाषा के सहकार से 'इषुगमि०' से म्=छ् आदेश, तुक्, श्चुत्व )=गच्छति । ( २ ) √गम्+लिट् ( =तिप्=णल्=अ )—गम् अ, ( द्वित्व, अभ्यास संज्ञा, हलादि शेष, ग्=ज्—'कुहोश्चुः', वृद्धि—'अत उपधायाः' )=जगाम ।

**( ५६४ ) पद**—गमहनजनखनघसाम्, लोपः, क्ङिति, अनङि । **अनुवृत्ति**—अचि, उपधायाः । **विधिसूत्र** ।

**मूलार्थ**—अजादि कित्, ङित् प्रत्यय के परवर्ती रहने पर गम्, हन्, जन्, खन्, घस् धातुओं की उपधा का लोप होता है । किन्तु अङ् के परे लोप नहीं होता । जग्मतुः, जग्मुः । इत्यादि ।

**विमर्श**—'अङ्गस्य' का अधिकार है । 'अचि श्नु०' ( ६।४।७७ ) से 'अचि' तथा 'ऊदुपधाया गोहः' ( ६।४।८९ ) से 'उपधायाः' की अनुवृत्ति आती है । तदनुसार—'अङ्-भिन्न अजादि कित्, ङित् प्रत्यय के परे रहते गम् आदि अङ्गों की उपधा का लोप हो जाता है' ।

**उदाहरण**—( १ ) √गम्+लिट् ( =तस्=अतुस् )—गम् अतुस् ( द्वित्व, अभ्यास संज्ञा, हलादिशेष, ग्=ज् )—जगम् अतुस् ( 'अ' उपधा का लोप—'गमहन०', स्=रु=ः )=जग्मतुः । लिट् के रूप इस प्रकार होते हैं—

**√गम् लिट् लकार**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | —जगाम | जग्मतुः | जग्मुः |
| म० पु० | —जगमिथ-जगन्थ, | जग्मथुः | जग्म |
| उ० पु० | —जगाम-जगम, | जग्मिव | जग्मिम |

( २ ) √गम्+लुट् ( =तिप्, तास्, तिप्=डा=आ )—गम् तास् आ ( म्=ं—'नश्चापदान्तस्य झलि', परसवर्ण—'अनुस्वारस्य ययि०' )=गन्ता ।

**( ५६५ ) पद**—गमेः, इट्, परस्मैपदेषु । **अनुवृत्ति**—से, आर्धधातुकस्य । **विधिसूत्र** ।

गच्छतु । अगच्छत् । गच्छेत् । गम्यात् । ( ५६६ ) **पुषादिद्युताद्यॢदितः परस्मैपदेषु** ३।१।५५ । श्यन्विकरणपुषादेर्द्युतादेर्ऌदितश्च परस्य च्लेरङ्, परस्मैपदेषु । अगमत् । अगमिष्यत् । सर्पति । ( ५६७ ) **अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्** ६।१।५८ । उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा, झलादावकिति । स्रप्ता–सर्प्ता । स्रप्स्यति–

---

कस्येत्यनुवृत्तं विशेष्यते । तदादिविधिस्तदाह—**गमेः परस्येत्यादि** । गमिष्यति । गम्-धातोर्ऌटि, तिपि 'स्यतासी ऌलुटोः' इति स्यप्रत्यये 'गमेरिट् परस्मैपदेषु' इतीडागमेऽनुबन्धलोपे षत्वे कृते 'गमिष्यती'ति ।

( ५६६ ) **पुषादीति** । अत्र 'च्लेः सिच्' इत्यतः च्लेरिति, 'अस्यतिवक्ति०' इत्यतः अङिति चानुवर्तते । पुषादिधातवस्तु दिवादय एव गृह्यन्ते । तदाह—**श्यन्विकरणेति** । **अगमत्** । गम्धातोर्लुङि तत्स्थाने तिप्यनुबन्धलोपेऽडागमेऽनुबन्धलोपे च 'अगम् ति' इति जाते च्लौ 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इति च्लेरङादेशे 'इतश्च' इतीकारलोपे 'अगमत्' इति रूपम् ।

( ५६७ ) **अनुदात्तस्येति** । अत्र 'सृजिदृशोर्झल्यमकिति' इत्यस्मात् झलीति, अमिति, अकिति, 'उपदेशेऽज्०' इत्यतः उपदेश इति चानुवर्तते । अत आह—**उपदेश इत्यादिना** । **स्रप्तेति** । सृप्धातोः लुटि, तिपि 'स्यतासी ऌलुटोः' इति तास्प्रत्यये 'लुटः प्रथमस्ये'ति

---

**मूलार्थ**—परस्मैपद के परवर्ती रहने पर गम् धातु से परे सादि आर्धधातुक को 'इट' का आगम होता है । गमिष्यति इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'आर्धधातुकस्येड् वलादेः' ( ७।२।३५ ) से 'आर्धधातुकस्य' तथा 'सेऽसिचि' ( ७।२।५७ ) से 'से' पद की अनुवृत्ति आ रही है । अतः 'गम् धातु से उत्तर सकारादि आर्धधातुक को परस्मैपदसंज्ञक प्रत्यय के परे रहते इट् ( इ ) का आगम होता है' ।

**उदाहरण**—( १ ) √गम्+लृट् ( =तिप्, स्य, इट् का आगम—'गमेरिट्०' षत्व )= गमिष्यति । ( २ ) √गम्+लोट् ( =तिप्=ति, शप्–अ, म्=छ्—'इषुगमि०' तुक्, श्चुत्व )—गच्छति ( इ=उ—'एरुः' )=गच्छतु । ( ३ ) लङ्—अगच्छत् । ( ४ ) विधिलिङ्—गच्छेत् । ( ५ ) आशीर्लिङ्—गम्यात् ।

( ५६६ ) **पद**—पुषादिद्युताद्यॢदितः, परस्मैपदेषु । **अनुवृत्ति**—च्लेः, अङ् । **विधिसूत्र** ।

**मूलार्थ**—परस्मैपद के परे रहते श्यन्-विकरण पुषादि, द्युतादि तथा ऌदित् धातुओं से परे 'च्लि' के स्थान में 'अङ्' आदेश होता है । अगमत् इत्यादि ।

**विमर्श**—यहाँ पूर्वसूत्र 'च्लेः सिच्' ( ३।१।४४ ) से 'च्लेः' और 'अस्यतिवक्तिख्यातिभ्योऽङ्' ( ३।१।५२ ) से 'अङ्' पद की अनुवृत्ति आती है । तदनुसार—'पुषादि, द्युतादि और ऌदित् धातुओं से च्लि के स्थान में अङ् ( =अ ) आदेश होता है, परस्मैपद के परे रहते' ।

**उदाहरण**—( १ ) √गम्+लुङ् ( =तिप्=ति, अट्, च्लि, इ का लोप, च्लि=अङ्= अ—'पुषादि०' )=अगमत् । ( २ ) लृङ्—अगमिष्यत् । ( ३ ) √सृप्+लट् ( =तिप्=ति, शप्–अ, 'पुगन्त०' से गुण—ऋ=अ, रपर )=सर्पति ।

( ५६७ ) **पद**—अनुदात्तस्य, च, ऋदुपधस्य, अन्यतरस्याम् । **अनुवृत्ति**—झल्यमकिति, उपदेशे । **विधिसूत्र** ।

**मूलार्थ**—कित्-भिन्न झलादि प्रत्यय के परे रहते उपदेशावस्था में जो अनुदात्त ऋदुपध धातु, उसको अम् ( =अ ) आगम विकल्प से होता है : स्रप्ता–सर्प्ता । असृपत् इत्यादि ।

सप्स्र्यति । असृपत् । ञिक्ष्विदा अव्यक्ते शब्दे । क्ष्वेदति । यभ मैथुने । यभति । वेट् । येभिथ । ( ५६८ ) झषस्तथोर्धोऽधः ८।२।४० । झषः परयोस्तथयोर्धः स्यान्न तु दधातेः । ययब्ध । यब्धा । णम प्रह्वत्वे, शब्दे च । नेमिथ–ननन्थ । नन्ता । नंस्यति । अनंसीत् । अनंसिष्टाम् । त्यज हानौ । त्यजति । तत्याज । तत्यजिथ–तत्यक्थ । त्यक्ता ।

---

तिपः डादेशे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इति विकल्पेन अमागमे यणि 'स्रप्ता' इति। अमागमाऽभावे तु—लघूपधगुणे रपरे 'सर्प्ता' इति ।

( ५६८ ) **झषस्तथोरिति** । झष इति पञ्चमी । तश्च थश्चेति द्वन्द्वः । 'अधः' इति षष्ठ्यन्तं पदम् । तेन धाधातुभिन्नस्येति लभ्यते । अत आह—**झषः परयोरिति** ।

**नमिथ** । णमधातोः 'णो नः' इति णस्य नत्वे लिटि सिपि थलि, द्वित्वे भारद्वाजमते वेटि एत्वेऽभ्यासलोपे च कृते 'नेमिथ' इति । इडागमाभावपक्षे तु 'ननम् थ' इति जाते मस्यानुस्वारे परसवर्णे च कृते 'ननन्थ' इति ।

---

**विमर्श**—प्रकृत सूत्र में 'सृजिदृशोर्झल्यमकिति' ( ६।१।५७ ) सूत्र से 'झलि, अम् , अकिति' तथा—'उपदेशेऽशिति' ( ६।१।४४ ) से 'उपदेशे' की अनुवृत्ति आ रही है । तदनुसार—'झलादि कित्-भिन्न प्रत्यय के परवर्ती रहने पर उपदेश अवस्था में अनुदात्त ऋकारोपध धातु को अम् ( =अ ) का आगम विकल्प से होता है' ।

**उदाहरण**—( १ ) √सृप्+लुट् ( =तिप्, तास् , तिप्=डा=आ, टिलोप )—सृप् आ ( विकल्प से अम्=अ आगम—'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्', ऋ=र्—यण् )=स्रप्ता । 'अम्' के अभावपक्ष में—गुण—ऋ=अ, रपर=सर्प्ता । ( २ ) इसी प्रकार लृट् में—स्रप्स्यति, सप्र्स्यति । ( ३ ) √सृप्+लुङ् ( =तिप्=ति, इलोप, च्लि, च्लि=अङ्=अ—'पुषादि-द्युताद्य०' ङित् होने से गुण का निषेध, अट् आगम )=असृपत् ।

**√ञिक्ष्विदा** का अर्थ—अस्पष्ट शब्द करना है । 'ञि' की इत्संज्ञा होकर लोप हो जाता है । ( १ ) √क्ष्विद्+लट् ( तिप्=ति, शप्-अ, गुण—'पुगन्त०' )=क्ष्वेदति ।

**√यभ** धातु मैथुन अर्थ में है । ( १ ) लट्—यभति ।

**( ५६८ ) पद**—झषः, तथोः, धः, अधः । **विधिसूत्र** ।

**मूलार्थ**—'दधाति' को छोड़कर 'झष्' से परे 'त, थ' को 'ध' होता है ।

**उदाहरण**—( १ ) √यभ्+लिट् ( =सिप्=थल्=थ, द्वित्व, अभ्यास संज्ञा, हलादिशेष—य यभ् थ ( भारद्वाज-नियम से विकल्प से इट्, एत्व, अभ्यास का लोप—'थलि च सेटि )= येभिथ । इट् न होने पर पक्ष में—ययभ् थ ( थ्=ध्—'झषस्तथोर्धोऽधः', भ्=ब्—जश्त्व )= ययब्ध । ( २ ) √यभ्+लुट् ( =तिप्=डा=आ, तास् )—यभ् तास् आ ( टिलोप, त्=ध्—'झषस्तथोः' जश्त्व )=यब्धा ।

**√णम** धातु का अर्थ प्रह्वत्व और शब्द है ।

( १ ) णम् ( 'णो नः' से 'ण्'='न्' )—नम्+लिट् ( =सिप्=थल्=थ, द्वित्व, अभ्यास संज्ञा, हलादिशेष )—ननम् थ ( भारद्वाज मत से विकल्प से इट्=इ, एत्व, अभ्यासलोप )= नेमिथ । इट् के अभावपक्ष में एत्वाभ्यासलोप न होने पर ( 'न नम् थ' म्=—अनुस्वार, परसवर्ण )=ननन्थ । ( २ ) लुट्—नन्ता । ( ३ ) लृट्—नंस्यति । ( ४ ) लुङ्—अनंसीत, अनंसिष्टाम् ।

**अत्याक्षीत् । अत्याक्ताम् अत्यक्ष्यत् । अक्षू व्याप्तौ । ( ५६९ ) अक्षोऽन्यतरस्याम् ३।१।७५ । श्नुः स्याद्वा कर्तरि सार्वधातुके । पक्षे–शप् । अक्ष्णोति । अक्षति । आनक्ष । आनक्षतुः । आनक्षुः । आनक्षिथ–आनष्ठ । अक्षिता–अष्टा । अक्षिष्यति । 'स्कोरि'ति कलोपः । (५७०) षढोः कः सि ८।२।४१ । अक्ष्यति । अक्ष्णोतु । अक्ष्णुहि । अक्ष्णवानि ।**

---

( ५६९ ) **अक्षोऽन्यतरस्यामिति ।** अत्र 'स्वादिभ्यः श्नुरि'त्यतः श्नुरिति 'कर्तरि शबि'त्यतः कर्तरीति 'सार्वधातुके यगि'त्यतः सार्वधातुक इति चानुवर्तते । **अक्ष्णोतीति ।** अक्ष्धातोर्लटि तिपि शपि प्राप्ते 'अक्षोऽन्यतरस्याम्' इति शपं बाधित्वा श्नुप्रत्ययेऽनुबन्धलोपे सार्वधातुकसंज्ञायां गुणे णत्वे 'अक्ष्णोती'ति । श्नुप्रत्ययस्याऽभावपक्षे शपि 'अक्षति' इति ।

**अक्षिता ।** ऊदित्—अक्षूधातोर्लुटि तिपि, तिपः डादेशे, तासि, डित्त्वाट्टिलोपे 'स्वरतिसूति०' इति ऊदित्वाद् वैभाषिके इडागमे सति 'अक्षिता' इति । इडभावे च संयोगान्तलोपे कुत्वे 'अष्टा' इति ।

( ५७० ) **षढोः कः सीति ।** स्पष्टम् ।

---

√त्यज् धातु का अर्थ—हानि (=त्यागना) है । ( १ ) लट्—त्यजति । ( २ ) लिट्–तत्याज । ( ३ ) लिट् म० पु० ए० व०—विकल्प से इट् होकर—तत्यजिथ–तत्यक्थ । ( ४ ) लुट्—त्यक्ता । ( ५ ) लुङ् प्र० पु० एकव०—अत्याक्षीत् ( हलन्तलक्षणा वृद्धि ) । ( ६ ) लुङ् प्र० पु० द्वि० व०—अत्याक्ताम् । ( ७ ) लृङ्—अत्यक्ष्यत् ।

**√अक्षू** ( ऊदित् ) धातु का अर्थ—व्याप्त होना है ।

**( ५६९ ) पद**—अक्षः, अन्यतरस्याम् । **अनुवृत्ति**—श्नुः, कर्तरि, सार्वधातुके । **विधिसूत्र ।**

**मूलार्थ**—कर्त्रर्थक सार्वधातुक के परे रहते अक्ष् धातु से विकल्प से श्नु प्रत्यय होता है । अक्ष्णोति–अक्षति ।

**विमर्श**—यहाँ—'स्वादिभ्यः श्नुः' ( ३।१।७३ ) से 'श्नुः', 'कर्तरि शप्' ( ३।१।६८ ) से 'कर्तरि' और 'सार्वधातुके यक्' ( ३।१।६७ ) से 'सार्वधातुके' की अनुवृत्ति आती है । इस प्रकार—'कर्तृवाची सार्वधातुक परे रहते अक्ष् धातु से विकल्प से श्नु प्रत्यय होता है' ।

**उदाहरण**—( १ ) √अक्ष्+लट् ( =तिप्=ति, प्राप्त 'शप्' का बाधकर विकल्प से श्नु =नु—'अक्षोऽन्यतरस्याम्' सार्वधातुक संज्ञा, गुण, णत्व )=अक्ष्णोति । 'श्नु' के अभावपक्ष में शप्—अक्षति । ( २ ) अक्ष्+लिट् ( =तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, हलादिशेष )—अ अक्ष् अ ( अभ्यास को दीर्घ—'अत आदेः' नुट्=न्—'तस्मान्नुड् द्विहलः' )=आनक्ष । ( ३ ) लिट् प्र० पु० द्वि० व०—आनक्षतुः । ( ४ ) लिट् प्र० पु० ब० व०—आनक्षुः । ( ४ ) लिट् म० पु० ए० व०—भारद्वाज-मत में विकल्प से इट् होकर—आनक्षिथ । 'इट्' के अभावपक्ष में—आ न क्ष् थ ( संयोगान्त लोप, ष्टुत्व )=आनष्ठ ।

( ५ ) √अक्ष्+लुट् ( =तिप्=डा=आ, तास् )—अक्ष् तास् आ ( विकल्प से इट्='इ' का आगम—'स्वरतिसूति०', टिलोप )=अक्षिता । इट् के अभाव में—अक्ष् ता ( 'स्कोः' से 'क्' का लोप, ष्टुत्व—त=ट् )=अष्टा ।

( ६ ) लृट्—अक्षिष्यति ( विकल्प से इट् ) ।

**( ५७० ) पद**—षढोः, कः सि । **विधिसूत्र ।**

**मूलार्थ**—सकार के परे रहते ष् और ढ् के स्थान में 'क्' आदेश होता है ।

**आक्ष्णोत् । आक्ष्णवम्–अक्ष्णुयात् । अक्ष्णुयाताम् । अक्ष्णुयुः । अक्ष्यात् । आक्षीत् । आक्षिष्टाम् । आष्टाम् । आक्षिषुः । तक्षू त्वक्षू तनूकरणे । ( ५७१ ) तनूकरणे तक्षः ३।१।७६ । श्नुर्वा शब्विषये । तक्ष्णोति, तक्षति वा काष्ठम् । ततक्ष । ततक्षिथ–ततष्ठ । अतक्षीत् । अतक्षिष्टाम् । अताक्षीत् । अताष्टाम् । तनूकरणे किम् ? वाग्भिः सन्तक्षति ।**

---

( ५७१ ) **तनूकरण इति ।** अत्र 'स्वादिभ्यः श्नुरि'त्यतः श्नुरिति, 'कर्तरि शबि'-त्यतः कर्तरीति, 'सार्वधातुके यगि'त्यतश्च सार्वधातुके इति चानुवर्तते । तनूकरणेऽर्थे विद्यमानाद्धातोः श्नुः स्यात्कर्त्रर्थे सार्वधातुके परे इति फलितार्थः । **तक्ष्णोति ।** तक्ष-धातोर्लटि तिपि, प्राप्तं शपं प्रबाध्य 'तनूकरणे तक्षः' इति विकल्पेन श्नुप्रत्ययेऽनुबन्ध-

---

**उदाहरण**—लृट् में 'इट्' के अभावपक्ष में—अक्ष् स्य ति ( 'क्' का लोप—'स्कोः०', षत्व, 'ष्'='क्'—'षढोः कः सि', क् ष्=क्ष् )=अक्ष्यति ।

( २ ) अ√क्ष्=लोट् ( =तिप्=ति, विकल्प से श्नु=नु )—अ क्ष् नु ति ( णत्व, गुण, 'इ'='उ'—'एरुः' )=अक्ष्णोतु । ( ३ ) लोट् म० पु० ए० व०—अक्ष्णुहि । ( ४ ) लोट् उ० पु० ए० व०—अक्ष्णवानि । ( ५ ) अक्ष्+लङ्=आक्ष्णोत् । ( ६ ) लङ्—उ० पु० एकवचन—आक्ष्णवम् । ( ७ ) विधिलिङ् प्र० पु० ए० व०—अक्ष्णुयात् । द्वि० व०—अक्ष्णुयाताम् । ब० व०—अक्ष्णुयुः । ( ८ ) आशीर्लिङ्—अक्ष्यात् । ( ९ ) लुङ् प्र० पु० ए० व०—आक्षीत् । ( १० ) अक्ष्+लुङ् ( =तस्=ताम्, च्लि=सिच्=स्, विकल्प से इट् )—अक्ष् इ स् ताम् ( आट्, वृद्धि, षत्व, ष्टुत्व )=आक्षिष्टाम् । इट् न होने पर पक्ष में—आक्ष् स् ताम् ( 'झलो झलि' से 'स्' का लोप, 'स्कोः०' से 'क्' का लोप, ष्टुत्व से 'त्'='ट्' )=आष्टाम् ।

( ११ ) लुङ् प्र० पु० ब० व०—आक्षिषुः, आक्षुः ।

**√तक्षू , त्वक्षू** धातु तनूकरण ( =कम करना ) अर्थ में हैं ।

**( ५७१ ) पद**—तनूकरणे, तक्षः । **अनुवृत्ति**—श्नुः, कर्तरि, सार्वधातुके । **विधिसूत्र ।**

**मूलार्थ**—तनूकरण ( सूक्ष्म ) अर्थ में तक्ष् धातु से विकल्प से श्नु होता है, शप् के विषय में । तक्ष्णोति, तक्षति वा काष्ठम् इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'स्वादिभ्यः श्नुः' ( ३।१।७३ ) से 'श्नुः' 'कर्तरि शप्' ( ३।१।६८ ) से 'कर्तरि' और 'सार्वधातुके यक्' ( ३।१।६७ ) से 'सार्वधातुके' पद की अनुवृत्ति आ रही है । 'अक्षोऽन्यतरस्याम्' ( ३।१।७५ ) से 'अन्यतरस्याम्' की अनुवृत्ति आती है । इस प्रकार—'तक्ष् धातु से तनूकरण ( =सूक्ष्म करना, छीलना ) अर्थ में कर्तृवाची सार्वधातुक के परवर्ती रहने पर विकल्प से 'श्नु' प्रत्यय होता है ।

**उदाहरण**—( १ ) √तक्ष्+लट् ( =तिप्=ति, विकल्प से 'श्नु'—'तनूकरणे तक्षः' )—तक्ष् नु ति ( गुण—उ=ओ, णत्व )=तक्ष्णोति । 'श्नु' के अभाव पक्ष में ( शप्–अ )=तक्षति । ( २ ) लिट् प्र० पु० ए० व०—ततक्ष । ( ३ ) लिट् म० पु० ए० व० ( विकल्प से इट् )=ततक्षिथ । इट् के अभाव में—ततष्ठ । ( ४ ) √तक्ष्+लुङ् ( =तिप्=ति, इ का लोप, अट्, च्लि=सिच्=स् )—अ तक्ष् स् त् ( विकल्प से इट्, ईट्, 'स्' का लोप, प्राप्त हलन्तलक्षणा वृद्धि का 'नेटि' से निषेध )=अतक्षीत् । इट् के अभाव पक्ष में वृद्धि—अताक्षीत् । ( ५ ) लुङ् प्र० पु० द्वि० व०—अतक्षिष्टाम् , अताष्टाम् ( विकल्प से इट् ) ।

**प्रत्युदाहरण**—प्रकृत सूत्र के द्वारा तनूकरण ( =छीलना ) अर्थ में ही श्नु प्रत्यय होता है । अतः 'भर्त्सना' अर्थ में श्नु नहीं होता । 'वाग्भिः सन्तक्षति ।'

भर्त्सयतीत्यर्थः। रक्ष पालने। रक्षति। णिक्ष चुम्बने। प्रणिक्षति। वक्ष रोषे। सङ्घाते इत्येके। वक्षति। मृक्ष सङ्घाते। मक्ष इत्येके। तक्ष त्वचने। त्वचनं संवरणम्, त्वचो ग्रहणं च। पक्ष परिग्रहे इत्येके। सूर्क्ष आदरे। सूर्क्षति। सुसूर्क्ष। काक्षि वाक्षि माक्षि काङ्क्षायाम्। द्राक्षि ध्राक्षि ध्वाक्षि घोरवाशिते च। चूष पाने। तूष तुष्टौ। पूष वृद्धौ। पूषति। मूष स्तेये। लूष रूष भूषायाम्। शूष प्रसवे। यूष हिंसायाम्। जूष च। भूष अलङ्कारे। जि जये। जयति। (५७२) सन्लिटोर्जेः ७।३।५७। सन्लिण्निमित्तादभ्यासात्परस्य जेः कुत्वम्। जिगाय। जिग्यतुः। जिगयिथ–जिगेथ। जीव प्राणधारणे। जीवति। पीव् मीव तीव णीव स्थौल्ये। पीवति। पिपीव। मुर्वी

---

लोपे 'तक्ष् नु ति' इति जाते, गुणे णत्वे च कृते 'तक्ष्णोति' इति। श्नोरभावे तु—शपि 'तक्षति' इति।

(५७२) सन्लिटोर्जे इति। सूत्रेऽस्मिन् 'सन्लिटोरि'त्यत्र निमित्तसप्तमी, अभ्यासेऽन्वेति। 'अभ्यासाच्चे'ति सूत्रात् 'अभ्यासात्' चजोः कु घिण्ण्यतोः' इत्यस्मात् 'कु' इति चानुवर्तते। तदाह मूले—सन्लिण्निमित्त इत्यादिना। जिगाय। जिधातोर्लिटि, तत्स्थाने तिपि, तिपः णलादेशेऽनुबन्धलोपे, धातोर्द्वित्वे पूर्वस्याभ्यासत्वे 'जि जि अ' इति जाते 'अचो ञ्णिति' इति वृद्धौ आयादेशे 'सन्लिटोर्जेः' इति जकारस्य कुत्वेन गकारे कृते 'जिगाय' इति सिद्धम्।

---

√रक्ष् धातु का अर्थ—पालन करना है। रक्षति।

√णिक्ष् धातु का अर्थ—चुम्बन करना है। प्रणिक्षति।

√वक्ष धातु का अर्थ—क्रोध करना है। कोई आचार्य संघात अर्थ में इसका प्रयोग करते हैं। √मृक्ष संघात अर्थ में है। कोई 'म्रक्ष' को संघात में कहते हैं।

√तक्ष्—त्वचन अर्थ में है। त्वचन का अर्थ—संवरण है। √त्वच् का अर्थ—ग्रहण करना है। √सूर्क्ष का अर्थ—आदर करना है। लट्—सूर्क्षति। लिट् में—सुसूर्क्ष।

√काक्षि, वाक्षि, माक्षि—आकाङ्क्षा अर्थ में हैं। √द्राक्षि, ध्राक्षि और ध्वाक्षि—घोर शब्द करना अर्थ में हैं। √चूष धातु का अर्थ—चूषना है। √तूष का अर्थ—तुष्टि प्राप्त करना है। √पूष का अर्थ—बढ़ना है। √मूष् का अर्थ—चोरी करना है। √लूष, रूष—भूषा (=सँवरना) अर्थ में हैं। √शूष का अर्थ—प्रसव है। √यूष और जूष धातुएँ—हिंसा अर्थ में हैं। भूष् का अर्थ—अलंकृत होना है।

√जि धातु का अर्थ—जीतना है।

**(५७२) पद**—सन्लिटोः, जेः। **अनुवृत्ति**—अभ्यासात्, कु। **विधिसूत्र।**

**मूलार्थ**—सन् और लिट् निमित्तक अभ्यास से परवर्ती 'जि' धातु को कुत्व होता है। जिगाय इत्यादि।

**विमर्श**—यहाँ 'अभ्यासाच्च' (७।३।५५) सूत्र से 'अभ्यासात्' और 'चजोः कु घिण्ण्यतोः' (७।३।५२) से 'कु' पद की अनुवृत्ति आती है। तदनुसार—"सन् और लिट् निमित्तक अभ्यास से परे 'जि' के अङ्ग को क-वर्ग आदेश होता है"।

**उदाहरण**—√जि+लिट् (=तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा)—जिजी अ (इ=ऐ—वृद्धि—'अचो ञ्णिति', ऐ=आय्, अभ्यास से परवर्ती—ज्=ग्—'सन्लिटोर्जेः')=जिगाय।

बन्धने। (५७३) **उपधायां च ८।२।७८।** धातोरुपधाभूतयोः रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात्। मूर्वति। पूर्व पर्व मर्व पूरणे। पूर्वति। पर्वति। मर्वति। चर्व अदने। चर्वति। कष खष शिष जष झष शष वष मष रुष रिष हिंसार्थाः। शेषति। शिशेष। शेष्टा। (५७४) **शल इगुपधादनिटः क्सः ३।१।४५।** इगुपधो

---

(५७३) **उपधायां चेति।** अत्र 'सिपि धातोरि'त्यतः 'धातोरि'ति, 'र्वोरुपधाया दीर्घ इकः' इत्यतः र्वोरिक इति, दीर्घ इति, 'हलि चे'त्यतः हलीति चानुवर्तते। तदाह—**धातोरित्यादि।**

(५७४) **शल इगुपधेति।** च्लेरित्यनुवर्तते। शल इति पञ्चमी। अत आह—**इगुपध इति। अशिक्षत्।** शिष्धातोः लुङि, तत्स्थाने तिप्यनुबन्धलोपे, 'इतश्चे'तीकारलोपे च्लौ, 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशेऽनुबन्धलोपे अङ्गस्याडागमे

---

(२) लिट् प्र० पु० द्वि० व०—जिग्यतुः। (३) अजन्त होने से 'थल्' में विकल्प से इट् होकर—जिगयिथ, जिगेथ।

√जीव धातु का अर्थ—प्राण धारण करना है। लट्—जीवति।

√पीव, मीव, तीव, णीव धातु—'स्थूलता' अर्थ में हैं। पीवति। लिट्—पिपीव।

√मुर्वी धातु—बन्धन अर्थ में हैं।

**(५७३) पद**—उपधायाम्, च। **अनुवृत्ति**—धातोः, र्वोरिकः, दीर्घः, हलि। **विधिसूत्र।**

**मूलार्थ**—धातु के उपधाभूत हल्परक रेफ और वकार से परवर्ती इक् को दीर्घ आदेश होता है।

**विमर्श**—यहाँ 'सिपि धातोः०' (८।२।७४) से 'धातोः' पद की अनुवृत्ति आती है। 'र्वोरुपधाया दीर्घ इकः' (८।२।७६) से र्वोः, इकः, दीर्घः एवं 'हलि च' से 'हलि' पद की अनुवृत्ति आती है। तदनुसार—'हल् के परवर्ती रहने पर उपधाभूत रेफ एवं वकार से परे इक् को दीर्घ होता है।

**उदाहरण**—मुर्व्+लट् (=तिप्=ति, शप्-अ, उ=ऊ-'दीर्घ'—'उपधायां च')= मूर्वति।

√पूर्व, पर्व और मर्व धातुओं का अर्थ—पूरण है। लट् प्र० पु० ए० व०—पूर्वति। पर्वति। मर्वति।

√चर्व धातु—भक्षणार्थक है। चर्वति।

√कष, खष, शिष, जष, झष, शष, वष, मष, रुष और रिष धातुएँ—हिंसार्थक हैं।

√शिष्+लट् (=तिप्, शप्, गुण)=शेषति। लिट् प्र० पु० ए० व०—शिशेष। लुट्—प्र० पु० ए० व०—शेष्टा।

**(५७४) पद**—शलः, इगुपधात्, अनिटः, क्सः। **अनुवृत्ति**—च्लेः। लुङि। **विधिसूत्र।**

**मूलार्थ**—इगुपध शलन्त धातु से अनिट 'च्लि' के स्थान में 'क्स' आदेश होता है। अशिक्षत्।

**विमर्श**—'धातोः' का अधिकार है। 'च्लि लुङि' (३।१।४३) से 'लुङि' और 'च्लेः सिच्' से 'च्लेः' पद की अनुवृत्ति आ रही है। अतः शलन्त इक् उपधावाली धातु से अनिट् 'च्लि' के स्थान में 'क्स' (स) आदेश होता है।

**उदाहरण**—(१) √शिष्+लुङ् (=तिप्=ति, इकार का लोप, च्लि, च्लि=क्स=

**यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः। अशिक्षत्। (५७५) तीषसहलुभरुषरिषः ७।२।४९। इच्छत्यादेः परस्य तादेरार्द्धधातुकस्येड् वा। रोषिता–रोष्टा। रेषिता–रेष्टा। भष भर्त्सने। इह भर्त्सनं–श्वरवः। पुष पुष्टौ। पोषिता। अनुदात्तेषु 'पुष्ये'ति श्यना निर्देशादयमुदात्तः। अङ्विधौ दैवादिकस्य ग्रहणान्नाङ्। अपोषीत्। श्रिषु श्लिषु प्रुषु प्लुषु दाहे। श्रेषति। श्लेषति। प्रोषति। प्लोषति।**

**इति परस्मैपदप्रक्रिया।**

---

'अ शिष् स त्' इति जाते, 'षढोः कः सि' इति षकारस्य ककारे 'आदेशप्रत्यययोः' इति सकारस्य षत्वे उभयोः संयोगेन क्षत्वे 'अशिक्षत्' इति सिद्धम्।

(५७५) **तीषसहेति**। तीति सप्तम्युपादानात्तदादिविधिः। 'आर्धधातुकस्ये'त्यतः 'आर्धधातुकस्येड्' इति, 'स्वरतिसूती'त्यतश्च वेत्यनुवर्तते। तदाह—**इच्छत्यादेः परस्ये-त्यादिना। रोषितेति**। रुषधातोः लुटि, तिपि, तासि, तिपः स्थाने डादेशेऽनुबन्धलोपे डित्त्वसामर्थ्यादभस्यापि टेर्लोपे 'तीषसहलुभरुषरिषः' इति विकल्पेन इडागमेऽनुबन्धलोपे 'पुगन्तलघूपधस्य चे'त्यनेन गुणे 'रोषिता' इति। इडभावे तु ष्टुत्वे कृते 'रोष्टा' इति रूपम्।

---

'स')—शिष् स त (अट्, 'क्' का लोप, पूर्व 'ष्'—'क्'—'षढोः कः सि', 'स'='ष'—'आदेश-प्रत्यययोः')—अ शिक् ष त (क्+ष्=क्ष्)=अशिक्षत।

**(२७९) पद**—ति, इषसहलुभरुषरिषः। **अनुवृत्ति**—वा, आर्धधातुकस्य इट्। **विधिसूत्र**।

**मूलार्थ**—इष्, सह्, लुभ्, रुष् और रिष् धातुओं से परवर्ती तादि आर्धधातुक को विकल्प से 'इट्' का आगम होता है।

**विमर्श**—'अङ्गस्य' का अधिकार है। 'आर्धधातुकस्येड् वलादेः' (७।२।३५) से—'आर्धधातुक-स्येड्' तथा 'स्वरतिसूति' (७।२।४४) से 'वा' पदों की अनुवृत्ति आती है। 'ति' सप्तम्यन्त होने से तदादिविधि होती है। तदनुसार—'इष्, सह्, लुभ्, रुष् और रिष् धातुओं से परवर्ती तकारादि आर्धधातुक को विकल्प से इट् का आगम होता है।

**उदाहरण**—(१) √रुष्+लुट् (=तिप्, तास्, तिप्=डा=आ, 'टि' का लोप)—रुष् ता (विकल्प से इट्='इ' का आगम—'तीषसहलुभ०' 'उ'='ओ'—गुण—'पुगन्त०')=रोषिता। 'इट्' के अभाव पक्ष में—रुष् ता (ष्टुत्व, गुण)=रोष्टा।

(२) √रिष् धातु से लुट् प्र० पु० ए० व०—रेषिता, रेष्टा।

√भष धातु भर्त्सन अर्थ में है। कुत्ते के शब्द को भर्त्सन कहते हैं।

√पुष धातु का 'पुष्टि' अर्थ है। लुट् में—पोषिता।

अनुदात्त धातुओं के परिगणन (अनिट् कारिका) में 'पुष्य' में श्यन् निर्देश से दिवादिगण पठित अनिट् है और यह शप्-विकरण (भ्वादि) वाली पुष् धातु उदात्त (सेट्) है। अतः दिवादि गण में पुषादि सूत्र से होने वाला 'च्लि' को अङ् आदेश यहाँ नहीं होता।

√पुष+लुङ् (=तिप्=ति, 'इ' का लोप, अट्, च्लि=सिच्=स्)—अ पुष् स् त (इट्, ई, 'स्' का लोप, दीर्घ, प्राप्त वृद्धि का 'नेटि' से निषेध, गुण)=अपोषीत्।

√श्रिष्, श्लिष्, प्रुष् और प्लुष् धातुएँ—दाह अर्थ में हैं। लट्—श्रेषति। श्लेषति। प्रोषति। प्लोषति।

**इति परस्मैपद-प्रक्रिया।**

## अथात्मनेपदम्

एध वृद्धौ। (५७६) टित आत्मनेपदानां टेरे ३।४।७९। टितो लस्यात्मनेपदानां टेरेत्वम्। एधते। (५७७) आतो ङितः ७।२।८१। अतः परस्य ङितामात

---

(५७६) टित आत्मनेपदानामिति। 'लस्ये'त्यधिकृतम्। तदाह मूले—टितो लस्येति। एधते। 'एध् वृद्धौ' इत्यस्माद्धातोः 'वर्तमाने लट्' इति लटचनुबन्धलोपे 'तिप्तस्झी'त्यादिना लस्य स्थाने सर्वे आदेशाः प्राप्ताः। 'अनुदात्तङित आत्मनेपदम्' इति एध् धातोरनुदात्तत्वात् 'तङानामात्मनेपदम्' इति त आताम् झेत्यादीनामात्मनेपदसंज्ञत्वात् तेषां प्राप्तिर्जाता। तत्र प्रथमपुरुषगतैकत्वविवक्षायां 'त' प्रत्यये 'तिङ्शित्सार्वधातुकम्' इति सार्वधातुकसंज्ञायां 'कर्तरि शप्' इति शप्यनुबन्धलोपे 'एध् अ त' इति जाते, तकारोत्तरवर्तिन अकारस्य टिसंज्ञायां 'टित आत्मनेपदानां टेरे' इति टिसंज्ञकस्याकारस्य एत्वे 'एधते' इति सिद्धम्।

(५७७) आतो ङित इति। 'अतो येयः' इत्यस्मात् 'अतः' इति, इय इति चानुवर्तते। यकारादकार उच्चारणार्थः। तदाह—अतः परस्येति।

---

भ्वादि-प्रकरण में परस्मैपदी धातुओं के रूपों की साधनिका प्रदर्शित करने के पश्चात् आत्मनेपदी धातुओं की साधनिका (=सिद्धि-प्रकार) का आरम्भ √एध् (=बढ़ना) धातु से करते हैं।

**(५७६) पद**—टितः, आत्मनेपदानाम्, टेः, ए। **विधिसूत्र**।

**मूलार्थ**—'टित्' लकार सम्बन्धी आत्मनेपद प्रत्ययों की 'टि' को एत्व होता है। एधते।

**विमर्श**—'लस्य' का अधिकार है। अतः "टित् लकारों के स्थान में जायमान आत्मनेपद प्रत्ययों की 'टि' को एकार आदेश होता है"।

'एध्' धातु से कर्ता अर्थ में 'लट्' लकार होने पर इसके स्थान में आत्मनेपदी तङ् प्रत्यय होते हैं। 'एध' धातु का अकार इत्संज्ञक और अनुदात्त है। अतः 'अनुदात्तङित आत्मनेपदम्' सूत्र के अनुसार 'तिप्तस्झि०' इत्यादि सूत्र से क्रमशः त, आतान्, झ इत्यादि आदेश होते हैं।

**उदाहरण**—(१) √एध्+लट् (=प्र० पु० ए० व०—त)—एध् त, (सार्वधातुक संज्ञा होकर शप्-'अ'—'कर्तरि शप्')—एध् अ त (अ—'टि'=ए—'टित आत्मनेपदानां टेरे')=एधते।

**(५७७) पद**—आतः, ङितः। **अनुवृत्ति**—अतः, इयः। **विधिसूत्र**।

**मूलार्थ**—अत (=ह्रस्व अकार) से परवर्ती ङित् सम्बन्धी आकार को इय् आदेश होता है। एधेते। एधन्ते।

**विमर्श**—यहाँ 'अतो येयः' (७।२।८०) से 'अतः' और 'इयः' पदों की अनुवृत्ति अपेक्षित है। अतः अकार से परवर्ती ङित् प्रत्ययों के आकार के स्थान में 'इय्' आदेश होता है।

**उदाहरण**—(१) √एध्+लट् (ल्=प्र० पु० द्वि० व०—आताम्, शप्—'अ')—एध् अ आताम् ('आताम्' अपित् सार्वधातुक होने से ङिद्वत् है। अतः 'आ'='इय्'—'आतो ङितः')—एध इय् ताम् (अ+इ='ए'—गुण, 'य्' का लोप—'लोपो व्योर्वलि' 'टि' आम्=ए—'टित आत्मनेपदानाम्०')=एधेते। (२) √एध्+लट् (=प्र० पु० ब० व०—झ, शप्—अ, झ्=अन्त्—'झोऽन्तः')—एध अन्त ('टि'=अ=एत्व, अ+अ='अ'—पररूप)=एधन्ते।

**इय् स्यात् । एधेते । एधन्ते । ( ५७८ ) थासः से ३।४।८० । टितो लस्य थासः से स्यात् । एधसे । एधेथे । एधध्वे । एधे । एधावहे । एधामहे । ( ५७९ ) इजादेश्च गुरुमतोऽनृच्छः ३।१।३६ । इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् लिटि । ( ५८० ) आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य १।३।६३ । आम्प्रकृत्या तुल्यमनुप्रयुज्य-**

---

( ५७८ ) **थासः से** । लस्येत्यधिकृतम् । 'टित आत्मनेपदानामि'त्यतः 'टितः' इत्यनुवर्तते । तदाह—**टितो लस्येति** ।

( ५७९ ) **इजादेश्चेति** । 'धातोरेकाच' इत्यतो धातोरित्यनुवर्तते, 'कास्प्रत्ययादि'-त्यतः आमिति लिटीति चानुवर्तते । अत आह मूले—**इजादिरित्यादिना** ।

( ५८० ) **आम्प्रत्ययवदिति** । तृतीयान्ताद्वतिः । "आम्प्रत्ययवदि'त्यत्र अतद्गुण-

---

**( ५७८ ) पद**—थासः, से । **अनुवृत्ति**—टितः । **विधिसूत्र** ।

**मूलार्थ**—'टित्' लकार सम्बन्धी 'थास्' के स्थान में 'से' आदेश होता है । एधसे इत्यादि ।

**विमर्श**—'लस्य' का अधिकार है । 'टित आत्मनेपदानां टेरे' ( ३।४।७९ ) से 'टितः' पद की अनुवृत्ति आने से—टित् लकारों के 'थास्' के स्थान में 'से' आदेश होता है ।

**उदाहरण**—( १ ) √एध्+लट् ( =म० पु० ए० व०—थास्, शप्-अ, थास्='से'—'थासः से' )=एधसे । ( २ ) एध्+लट् ( =म० पु० द्वि० व०—आथाम् )—एध् आथाम् ( शप्-अ, आ=इय्—'आतो ङितः', अ+इ='ए' गुण, ( टि= ) आम्=ए—'टित आत्मने०' )= एधेथे । ( ३ ) √एध्+लट् ( =म० पु०—ब० व०—ध्वम्, शप्=अ )—एध् अ ध्वम् ( 'टि' =अम्=ए )=एधध्वे । ( ४ ) √एध्+लट् ( =उ० पु० ए० व०—इट्, शप् )—एध् अ इ ( इ=ए )—एध ए ( अ+ए=ए—पररूप—'अतो गुणे' )=एधे । ( ५ ) √एध्+लट् ( =उ० पु० द्वि० व०—वहि, शप् )—एध् अ वहि ( 'टि'—इ=ए, अ='आ'—दीर्घ—'अतो दीर्घो यञि' )=एधावहे । ( ६ ) √एध्+लट् ( =उ० पु० ब० व०—महि, शप् )—एध् अ महि ( टि—इ=ए, दीर्घ )=एधामहे ।

**√एध् ( =बढ़ना ) लट् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | एधते | एधेते | एधन्ते |
| म० पु० | एधसे | एधेथे | एधध्वे |
| उ० पु० | एधे | एधावहे | एधामहे |

**( ५७९ ) पद**—इजादेः, च, गुरुमतः, अनृच्छः । **अनुवृत्ति**—धातोः, आम्, लिटि । **विधिसूत्र** ।

**मूलार्थ**—ऋच्छ् धातु से भिन्न इजादि और गुरुमान् धातु से 'आम्' प्रत्यय होता है, लिट् के परे रहते ।

**विमर्श**—प्रकृत सूत्र में 'धातोरेकाचः' ( ३।१।२२ ) से 'धातोः' तथा—'कास्प्रत्ययादाममन्त्रे लिटि' से 'आम्' और 'लिटि' पदों की अनुवृत्ति आती है । तदनुसार—'लिट् लकार के परवर्ती रहने पर इजादि तथा गुरुमान् ( गुरु संज्ञा युक्त ) धातु से ( ऋच्छ् को छोड़कर ) 'आम्' प्रत्यय होता है ।

**( ५८० ) पद**—आम्प्रत्ययवत्, कृञः, अनुप्रयोगस्य । **अनुवृत्ति**—आत्मनेपदम् । **विधिसूत्र** ।

मानात्कृञोऽप्यात्मनेपदं स्यात्। (५८१) लिटस्तझयोरेशिरेच् ३।४।८१। लिडा-देशयोस्तझयोरेश् इरेच् एतौ स्तः। एकारोच्चारणं ज्ञापकं—'तङादेशानां टेरेत्वं ने'ति। तेन डारौरसां न। एधाञ्चक्रे। एधाञ्चक्राते। एधाञ्चक्रिरे। एधाञ्चकृषे। एधा-

---

संविज्ञानो बहुव्रीहिः, तेन आम्प्रत्ययविनिर्मुक्तः, आम्प्रत्ययस्य प्रकृतिभूतो धातुरेव गृह्यते। अनुप्रयुज्यत इत्यनुप्रयोगः। पञ्चम्यर्थे षष्ठी। तदाह—आम्प्रकृत्येत्यादिना।

(५८१) लिटस्तझयोरिति। स्पष्टम्। 'एश्' इत्यत्र शित्त्वात्सर्वादेशार्थं शित्करणम्। एधाञ्चक्रे। एध् धातोः 'परोक्षे लिट्' इति लिटि, 'इजादेश्च गुरुमतोऽनृच्छः' इत्यामि 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परके कृञोऽनुप्रयोगे 'एध् आम् कृ लिट्' इति स्थिते, लिटः स्थाने प्रथमपुरुषगतैकत्वविवक्षायां तादेशे 'लिट् चे'त्यनेन आर्धधातुकसंज्ञायां 'लिटस्तझयोरेशिरेच्' इत्यनेन तकारस्य स्थाने एशा-देशेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्ये'त्यनेन द्वित्वे प्राप्ते, तं परत्वात् प्रबाध्य 'इको यणची'ति यणादेशे प्राप्ते, तस्य 'द्विर्वचनेऽची'ति निषेधे, पुनः प्रसङ्गविज्ञानात् धातो-

---

मूलार्थ—आम् प्रकृति के तुल्य 'कृञ्' धातु से भी आत्मनेपद होता है।

विमर्श—यहाँ 'अनुदात्तङित आत्मनेपदम्' (१।३।१२) से 'आत्मनेपदम्' की अनुवृत्ति आ रही है। सूत्रस्थ 'आम्प्रत्ययवत्' में 'वत्' प्रत्यय 'इव' के अर्थ में है। यहाँ अतद्गुणसंविज्ञान बहुव्रीहि समास है। 'आम् प्रत्ययो यस्मात्' (=आम् प्रत्यय हुआ है जिससे) विग्रह है। कृञ् धातु ञित् होने से उभयपदी है। अतः कर्तृभिन्न परगामी क्रिया का फल होने पर परस्मैपद की प्राप्ति होती है। तब प्रकृत सूत्र द्वारा व्यवस्था की जाती है कि जिस धातु से आम् हुआ है, वह धातु यदि आत्मनेपद है तो अनुप्रयुक्त √कृञ् से भी आत्मनेपद होता है; अन्यथा नहीं। अतएव प्रकृत में आम् √एध् (आत्मनेपदी) से हुआ है, इसलिए अनुप्रयुक्त कृञ् से भी आत्मनेपद होता है। 'गोपायाञ्चकार' में आत्मनेपद नहीं हुआ। क्योंकि यहाँ आम् की प्रकृति 'गुप्' धातु परस्मै-पदी है।

(५८१) पद—लिटः, तझयोः, एशिरेच्। विधिसूत्र।

मूलार्थ—लिट् के स्थान में आदेश हुए 'त' और 'झ' के स्थान में क्रमशः 'एश्' और 'इरेच्' आदेश होता है। एधाञ्चके इत्यादि।

विमर्श—'एश्' में शकार इत्संज्ञक होने से सम्पूर्ण 'त' के स्थान में आदेश होता है। 'इरेच्' में चकार इत्संज्ञक है। अनेकाल् होने से सम्पूर्ण 'झ' के स्थान में होता है।

एकारोच्चारणमिति—यहाँ आशङ्का होती है कि सूत्र में 'एश्' के स्थान में 'इश्' का लाघवार्थ उच्चारण किया जाता, 'टित आत्मनेपदानाम्' से एत्व होकर रूप सिद्धि हो जाती, पुनः 'एश्' आदेश में एकार का उच्चारण क्यों किया? वह एकारोच्चारण व्यर्थ होकर ज्ञापन करता है कि तङादेश की 'टि' को एकारादेश नहीं होता। अतः 'डा, रौ रस्' की टि को भी एकार आदेश नहीं हुआ।

उदाहरण—(१) एध्+लिट् (आम्—'इजादेश्च गुरुमतोऽनृच्छः' लिट् का लोप—'आमः') —एध् आम् (लिट्परक 'कृ' का अनुप्रयोग)—एध् आम् कृ लिट् ('आम्प्रत्ययवत्०' से आत्मनेपद होने पर लिट्=प्र० पु० ए० व०—'त')—एधाम् कृ त (आर्धधातुक संज्ञा, त=एश् =ए—'लिटस्तझयोरेशिरेच्')—एधाम् कृ ए ('लिटि धातोः०' से द्वित्व, अभ्यास संज्ञा, 'उरत्'

**थाथे। (५८२) इणः षीध्वंलुङ्लिटां धोऽङ्गात् ८।३।७८। इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य ढः। एधाञ्चकृढ्वे। एधाञ्चक्रे। एधाञ्चकृवहे। एधाञ्चकृमहे। एधाम्बभूव। एधामास। अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न। अन्यथा हि—'कृञ्चानु-**

---

द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायाम् 'उरत्' इत्यभ्यासऋवर्णस्य अत्वे 'उरण् रपरः' इति रपरत्वे 'एध् आम् कर् कृ ए' इति जाते, हलादिशेषे 'कुहोश्चुः' इति ककारस्य चकारे, लिटः कित्त्वात् 'क्ङिति चे'त्यनेन गुणनिषेधे 'इको यणची'ति यणि 'मोऽनुस्वारः' इति मकारस्यानुस्वारे 'वा पदान्तस्ये'ति विकल्पेन परसवर्णे 'एधाञ्चक्रे' इति।

(५८२) इण इति। षीध्वं लुङ्लिट् एषां द्वन्द्वः। इण इत्यङ्गविशेषणत्वात् तदन्तविधिः। 'अपदान्तस्य मूर्धन्यः' इत्यधिकृतम्। धकारस्य ढकारो मूर्धन्यः। अत आह—इणन्तादिति। एधाञ्चकृढ्वे। एध्धातोर्लिटि 'इजादेश्च गुरुमतोऽनृच्छः' इत्यामि, 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परके कृञनुप्रयोगे, लिटः स्थाने मध्यमपुरुषबहुवचनविवक्षायां ध्वमि, 'लिटि धातोरनभ्यासस्ये'ति कृञो द्वित्वेऽभ्यासत्वे 'उरत्' इत्यत्वे रपरे हलादिशेषे 'एधाम् क कृ ध्वम्' इति जाते

---

से ऋ=अ, रपर, हलादिशेष, 'क्'='च्'—'कुहोश्चुः', 'ऋ'='र्'—'यण्')—एधाम् चक्रे (म =अनुस्वार ं='ञ्' परसवर्ण—'वा पदान्तस्य')=एधाञ्चक्रे।

(२) √एध्+लिट् (आम्, लिट् का लोप)—एधाम् (लिट्परक कृ का अनुप्रयोग, लिट्=प्र० पु० द्वि० व०—आताम्, पूर्ववत् द्वित्वादि कार्य 'टि'=आम्=ए)=एधाञ्चक्राते। (३) प्र० पु० ब० व० 'झ' में—झ=इरेच् (=इरे) आदेश होने पर (शेष पूर्ववत् कार्य)= एधाञ्चक्रिरे। (४) म० पु० ए० व० में थास्='से' आदेश (थासः से') होने पर षत्व, वलादि आर्धधातुक होने से प्राप्त 'इट्' का 'कृसृभृवृस्तु०' से निषेध)=एधाञ्चकृषे। (५) म० पु० द्वि० व०—आथाम् (पूर्ववत् कार्य, टि आम् को एत्व)=एधाञ्चक्राथे।

**(५८२) पद**—इणः, षीध्वंलुङ्लिटाम्, धः, अङ्गात्। **अनुवृत्ति**—अपदान्तस्य मूर्द्धन्यः। **विधिसूत्र।**

**मूलार्थ**—इणन्त अङ्ग से परवर्ती 'षीध्वम्' और लुङ्, लिट् सम्बन्धी धकार को ढकार (मूर्द्धन्य) आदेश होता है। एधाञ्चकृढ्वे इत्यादि।

**विमर्श**—'अपदान्तस्य मूर्धन्यः' (८।३५५) का अधिकार है। तदनुसार उक्त अर्थ निष्पन्न होता है।

**उदाहरण**—(१) √एध्+लिट् (आम्, लिट् का लुक्)—एध् आम् (लिट्परक कृ का अनुप्रयोग)—एधाम् कृ लिट् (ल=म० पु० ब० व०—ध्वम्, 'कृ' धातु को द्वित्व, अभ्यास संज्ञा, ऋ='अ'—'उरत्', रपर, हलादिशेष, 'क्'='च्'—'कुहोश्चुः')—एधाम् च कृ ध्वम् ('ध्' ='ढ्'—'इणः षीध्वम्०', अम्=एत्व, अनुस्वार, परसवर्ण)=एधाञ्चकृढ्वे। (२) 'एध्' से लिट् उ० पु० ए० व०—इट् में 'टि' को एत्व (शेष कार्य पूर्ववत्)=एधाञ्चक्रे। (३) लिट् उ० पु० द्वि० व० 'वहि' में—पूर्ववत् कार्य एत्व होकर—एधाञ्चकृवहे। (४) लिट् उ० पु० ब० व० 'महि' में—एधाञ्चकृमहे।

—भूधातु के अनुप्रयोग में एधाम्बभूव आदि और अस् के अनुप्रयोग में 'एधामास' आदि रूप बनते हैं।

प्रयुज्यते' इति, 'कृञ्विति' वा ब्रूयात् । एधिता । एधितारौ । एधितारः । एधितासे । एधितासाथे । (५८३) धि च ८।२।२५ । धादौ प्रत्यये परे सलोपः स्यात् । एधिताध्वे । (५८४) ह एति ७।४।५२ । तासस्त्योः सस्य हः स्यादेति परे । एधिताहे । एधितास्वहे । एधितास्महे । एधिष्यते । एधिष्येते । एधिष्यन्ते । एधिष्यसे । एधिष्येथे ।

---

'कुहोश्चुः' इति कस्य चत्वे 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्' इति धकारस्य ढकारे मकारस्यानुस्वारे वा परसवर्णे च कृते 'टित आत्मनेपदानां टेरे' इत्यमः टिसंज्ञकस्यैत्वे 'एधाञ्चकृढ्वे' इति रूपम् । अनुप्रयोगसामर्थ्यादिति । अन्यथा—असमेव वा भुवमेव वा अनुप्रयुञ्जीत ।

(५८३) 'धि चे'ति । 'सः स्यार्धधातुके' इत्यतः स इत्यनुवर्तते । 'तासस्त्योः' इत्यतो लोप इति । अङ्गाक्षिप्तप्रत्ययो धीत्यनेन विशेष्यते, तेन तदादिविधिस्तदाह—धादाविति । एधिताध्वे । एध्धातोर्लुटचनुबन्धलोपे लः स्थाने मध्यमपुरुषबहुवचने ध्वमि, तासि, आर्धधातुकत्वात् इडागमे 'धि चे'ति सलोपे 'टित आत्मनेपदानां टेरे' इत्यनेन टिसंज्ञकस्यामः एत्वे 'एधिताध्वे' इति ।

(५८४) ह एति । ह इति प्रथमान्तम् । स इति, तासस्त्योरिति चानुवर्तते ।

---

√एध् लिट् लकार ('कृ' का अनुप्रयोग) के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | एधाञ्चक्रे | एधाञ्चक्राते | एधाञ्चक्रिरे |
| म० पु० | एधाञ्चकृषे | एधाञ्चक्राथे | एधाञ्चकृढ्वे |
| उ० पु० | एधाञ्चक्रे | एधाञ्चकृवहे | एधाञ्चकृमहे |

**अनुप्रयोगसामर्थ्यादिति** । अनुप्रयुज्यमान √अस् के स्थान में अनुप्रयोग सामर्थ्य से भू आदेश (अस्तेर्भूः) नहीं होता । अन्यथा 'कृस्' कहने से ही कार्य निर्वाह हो जाता । अनुप्रयोगार्थ भू ग्रहण व्यर्थ होगा । अथवा 'कृभू' के अनुप्रयोग के लिए 'कृभू चानुप्रयुज्येते' ऐसा सूत्र किया जाता । पृथक् अस् ग्रहण व्यर्थ हो जाता ।

(१) एध्+लुट् (ल्=प्र० पु० ए० व०—'त')—एध् त (तास्—'स्यतासी लृलुटोः', त=डा='आ'—'लुटः प्रथमस्य०' इट्)—एधितास् आ ('टि' आस् का लोप)=एधिता । (२) लुट् प्र० पु० द्वि० व० (परस्मैपदी धातु के समान)—एधितारौ । (३) लुट्—प्र० पु० ब० व०—एधितारः । (४) म० पु० ए० व०—थास्=से, 'तासस्त्योर्लोपः' से 'स्' का लोप होकर—एधितासे । (५) म० पु० द्वि० व०—आथाम् में 'टि' आम् को एत्व होकर—एधितासाथे ।

**(५८३) पद**—धि, च । **अनुवृत्ति**—सः, लोपः । **विधिसूत्र** ।

**मूलार्थ**—धकारादि प्रत्यय के परवर्ती रहने पर सकार का लोप होता है ।

**विमर्श**—प्रकृत सूत्र में 'सः स्यार्धधातुके' (७।४।४९) से 'सः' तथा 'तासस्त्योर्लोपः' (७।४।५०) से 'लोपः' पदों की अनुवृत्ति आती है । तदनुसार—'धकारादि प्रत्यय के परे रहते सकार का लोप होता है' ।

**उदाहरण**—√एध्+लुट् (ल्=म० पु० ब० व०—ध्वम्, तास्, इट्)—एधितास् ध्वम् ('स्' का लोप—'धि च', 'अम्'='ए'—'टित आत्मनेपदानाम्०')=एधिताध्वे ।

**(५८४) पद**—ह, एति । **अनुवृत्ति**—सः, तासस्त्योः । **विधिसूत्र** ।

**एधिष्यध्वे । एधिष्ये । एधिष्यावहे । एधिष्यामहे । ( ५८५ ) आमेतः ३।४।९० । लोट एत आम् । एधताम् । एधेताम् । एधन्ताम् । ( ५८६ ) सवाभ्यां वामौ ३।४।**

---

अत आह—तासस्त्योरिति । एधिताहे । एध्धातोः लुटि, तत्स्थाने उत्तमपुरुषैकवचने इटि, तासि, इडागमे, इट इकारस्यैत्वे 'ह एति' इति सकारस्य हकारे कृते 'एधिताहे' इति रूपम् ।

( ५८५ ) आमेत इति । 'लोटो लङ्वदि'त्यतः लोट इत्यनुवर्तते । तदाह—लोट इति । एधताम् । एध्धातोर्लोटि, तत्स्थाने प्रथमपुरुषगतैकत्वविवक्षायां तादेशे,

---

**मूलार्थ**—एकार के परवर्ती रहने पर 'तास्' और 'अस्ति' के सकार को हकार आदेश होता है ।

**विमर्श**—यहाँ 'सः स्यार्धधातुके' से 'सः' तथा 'तासस्त्योर्लोपः' ( ७।४।५० ) से 'तासस्त्योः' की अनुवृत्ति आती है । अतः "एकार के परे रहते 'तास्' और 'अस्' के सकार को हकार आदेश होता है" ।

**उदाहरण**—( १ ) एध्+लुट् ( ल्=उ० पु० ए० व०—इट्, तास्, इट् )—एधितास् इ ( इ=ए—'टित आत्मने०', 'स्'='ह्'—'ह एति' )=एधिताहे । ( २ ) लुट्—उ० पु० द्वि० व० —एधितास्वहे । ( ३ ) लुट् उ० पु० ब० व०—एधितास्महे ।

**√एध्, लुट् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | एधिता | एधितारौ | एधितारः |
| म० पु० | एधितासे | एधितासाथे | एधिताध्वे |
| उ० पु० | एधिताहे | एधितास्वहे | एधितास्महे |

लृट् लकार के रूपों की साधनिका बतलाई जा रही है—

( १ ) √एध्+लृट् ( ल्=प्र० पु० ए० व० 'त' 'स्य'—'स्यतासी लृलुटोः' आर्धधातुक संज्ञा होकर इट्='इ' आगम )—एधि स्य त ( 'स्'='ष्'—'आदेशप्रत्यययोः' 'अ'='ए'—'टित आत्मने०' )=एधिष्यते । इस प्रकार यहाँ विशेष कार्य 'टि' को एकार आदेश होता है । ( २ ) एध्+लृट्—प्र० पु० द्वि० व०—आताम् ( स्य, इट्, आम्=ए, 'आ'='इय्'—'आतो ङितः', 'य्' का लोप—'लोपो व्योर्वलि', अ+इ='ए'—गुण, षत्व )=एधिष्येते । ( ३ ) लृट् प्र० पु० ब० व०—एधिष्यन्ते । ( ४ ) लृट् म० पु० ए० व०—एधिष्यसे । ( ५ ) लृट् म० पु० द्वि० व०—एधिष्येथे । ( ६ ) लृट् म० पु० ब० व०—एधिष्यध्वे । ( ७ ) लृट् उ० पु० ए० व०—एधिष्ये । ( ८ ) लृट् उ० पु० ब० व०—वहि ( 'टि' को एत्व, स्य, इट्, दीर्घ—'अतो दीर्घो यञि' षत्व )=एधिष्यावहे । ( ९ ) लृट् उ० पु० ब० व०—एधिष्यामहे ।

**√एध् धातु लृट् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | एधिष्यते | एधिष्येते | एधिष्यन्ते |
| म० पु० | एधिष्यसे | एधिष्येथे | एधिष्यध्वे |
| उ० पु० | एधिष्ये | एधिष्यावहे | एधिष्यामहे |

**( ५८५ ) पद**—आम्, एतः । **अनुवृत्ति**—लोटः । **विधिसूत्र** ।

**मूलार्थ**—लोट् लकार सम्बन्धी एकार को 'आम्' आदेश होता है । एधताम् इत्यादि ।

९१। सवाभ्यां परस्य लोडेतः क्रमाद्वाऽमौ स्तः। एधस्व। एधेथाम्। एधध्वम्।
(५८७) एत ऐ ३।४।९३। लोडुत्तमस्य एत ऐ स्यात्। आमोऽपवादः। एधै। एधावहै। एधामहै। आटश्च। ऐधत। ऐधेताम्। ऐधन्त। ऐधेथाः। ऐधेथाम्। ऐधध्वम्।

---

सार्वधातुकसंज्ञायां 'कर्तरि शप्' इत्यनेन शप्यनुबन्धलोपे, शित्त्वात् सार्वधातुकत्वे 'टित आत्मनेपदानामि'ति तकाराकारस्यैत्वे 'आमेतः' इति एकारस्यामादेशे 'एधताम्' इति।

(५८६) सवाभ्यामिति। सश्च वश्चेति सवौ, ताभ्याम्, वश्च अम् च वामौ। 'लोटो लङ्वत्' इत्यतः लोट इति, 'आमेतः' इत्यतश्च एत इत्यनुवर्तते। अत आह—सवाभ्यां परस्येति। एधस्व। एध्धातोर्लोटि, तत्स्थाने मध्यमपुरुषैकवचने थासि, शपि, 'थासः से' इति थासः स्थाने 'से' इत्यादेशे 'सवाभ्यां वामौ' इत्यनेन सकारात्परस्यैकारस्य वादेशे 'एधस्वे'ति सिद्धम्।

(५८७) एत ऐ। 'लोटो लङ्वदि'त्यस्मात् लोट इति, 'आडुत्तमस्ये'त्यस्मादुत्तमस्य चेत्यनुवर्तते। तदाह—लोडुत्तमस्येति। एधै। एध्धातोर्लिटि, लः स्थाने उत्तम-

---

**विमर्श**—प्रकृत सूत्र में 'लोटो लङ्वत्' (३।४।८५) सूत्र से 'लोटः' पद की अनुवृत्ति आ रही है। अत एव—लोट् लकार के एकार के स्थान में 'आम्' आदेश होता है।

**उदाहरण**—(१) √एध्+लोट् ('ल्'=प्र० पु० ए० व०—'त' शप्-'अ')—एध् अ त ('अ'='ए'—'टित आत्मनेपदानां टेरे')—एधते ('ए'='आम्'—'आमेतः')=एधताम्। (२) √एध्+लोट् (प्र० पु० द्वि० व०—आताम्, लट् के समान कार्य होकर—एधेते—ए=आम्)=एधेताम्। (३) एध्+लोट् (=झ, शप्, झ्=अन्त, अ=एत्व, पररूप, ए=आम्) =एधन्ताम्।

**(५८६) पद**—सवाभ्याम्, वामौ। **अनुवृत्ति**—लोटः, एतः। **विधिसूत्र**।

**मूलार्थ**—सकार और वकार से परवर्ती लोट् लकार सम्बन्धी एकार को क्रमशः 'व' और 'अम्' आदेश होते हैं। 'एधस्व' इत्यादि।

**विमर्श**—यहाँ 'लोटो लङ्वत्' (३।४।८५) से 'लोटः' और 'आमेतः' (५८६) से 'एतः' पदों की अनुवृत्ति आती है। तदनुसार—"सकार और वकार से परे लोट् लकार के एकार को क्रम से 'व' और 'अम्' आदेश होते हैं"।

**उदाहरण**—(१) √एध्+लोट् (=म० पु० ए० व०—'थास्', शप्, 'थास्'='से'—'थासः से')—एधसे ('ए'='व'—'सवाभ्यां वामौ')=एधस्व। (२) √एध्+लोट् (=म० पु० द्वि० व०—'आथाम्' शप्, आ=इय्, गुण, 'य्' का लोप)=एधेथाम्। (३) √एध्+लोट् (=म० पु० ब० व०—'ध्वम्' शप्, 'टि' अम्=एत्व)—एधध्वे ('ए'='अम्'—'सवाभ्याम्०') =एधध्वम्।

**(५८७) पद**—एतः, ऐ। **अनुवृत्ति**—लोटः, उत्तमस्य। **विधिसूत्र**।

**मूलार्थ**—लोट् लकार सम्बन्धी उत्तमपुरुष के एकार को ऐकार आदेश होता है। एधै इत्यादि।

**विमर्श**—'लोटो लङ्वत्' (३।४।८५) से 'लोटः' तथा 'आडुत्तमस्य पिच्च' (३।४।९२) से 'उत्तमस्य' पदों की अनुवृत्ति आती है। इस प्रकार लोट् लकार के उत्तमपुरुष के एकार के स्थान में 'ऐ' आदेश होता है।

**उदाहरण**—(१) √एध्+लोट् (=उ० पु० ए० व०—इट्='इ', शप्-'अ')—एध

ऐधै । ऐधावहि । ऐधामहि । ( ५८८ ) लिङः सीयुट् ३।४।१०२ । 'लिङः सलोपोऽनन्त्यस्ये'ति सलोपः । ( ५८९ ) लोपो व्योर्वलि ३।१।६६ । एधेत । एधेयाताम् ।

---

पुरुषैकवचने इटि, सार्वधातुकसंज्ञायां शप्यनुबन्धलोपे 'टित आत्मनेपदानां टेरे' इति इकारस्यैत्वे एकारस्य 'एत ऐ' इति ऐत्वे 'आडुत्तमस्य पिच्चे'त्याडामेऽनुबन्धलोपे 'एध आ ऐ' इति जाते, 'आटश्चे'ति वृद्धौ 'एध ऐ' इति स्थिते 'वृद्धिरेचि' इति वृद्धौ 'एधै' इति रूपम् ।

( ५८८ ) लिङः सीयुडिति । स्पष्टम् ।

---

अ इ ( 'इ'='ए'—'टित आत्मने०', ए=ऐ—'एत ऐ', आट्='आ' आगम—'आडुत्तमस्य पिच्च' )—एध आ ऐ ( आ+ऐ='ऐ' वृद्धि—'आटश्च' )—एध ऐ ( अ+ऐ=ऐ—वृद्धि—'वृद्धिरेचि' )=एधै । ( २ ) √एध्+लोट् ( =उ० पु० द्वि० व०—'वहि' शप् , आट् )—एध् अ आ वहि ( अ+आ='आ'—सवर्णदीर्घ, टि इ=ए, ए='ऐ'—'एत ऐ' )=एधावहै । ( ३ ) √एध्+लोट् ( उ० पु० ब० व०—महि, शप्, आट्, दीर्घ, एत्व, ए=ऐ )=एधामहै ।

### √एध् धातु लोट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | एधताम् | एधेताम् | एधन्ताम् |
| म० पु० | एधस्व | एधेथाम् | एधध्वम् |
| उ० पु० | एधै | एधावहै | एधामहै |

लङ् लकार के रूपों की प्रक्रिया बतलाई जा रही है—

( १ ) √एध्+लङ् ( ल्=प्र० पु० ए० व०—'त', सार्वधातुक संज्ञा, शप्='अ', आट्='आ' का आगम—'आडजादीनाम्' )—आ एध् अ त ( आ+ए='ऐ'—वृद्धि—'आटश्च' )=ऐधत । ( लङ् लकार में अजादि होने से 'आडजादीनाम्' से अङ्ग को 'आट्' का आगम होता है । 'आटश्च' से वृद्धि एकादेश होकर रूप बनते हैं । ) ( २ ) √एध्+लङ् ( प्र० पु० द्वि० व०—आताम्, शप्, आ=इय, गुण, 'य्' का लोप, आट्, वृद्धि )=ऐधेताम् । ( ३ ) √एध्+लङ् ( =झ, शप्, 'झ्'='अन्त्' पररूप, आट्, वृद्धि )=ऐधन्त । ( ४ ) लङ् म० पु० ए० व०—ऐधथाः । ( ५ ) लङ् म० पु० द्वि० व०—ऐधेथाम् । ( ६ ) लङ् म० पु० ब० व०—ऐधध्वम् । ( ७ ) लङ् उ० पु० ए० व०—ऐधे । ( ८ ) लङ् उ० पु० द्वि० व०—ऐधावहि । ( ९ ) लङ् उ० पु० ब० व०—ऐधामहि ।

### √एध् लङ् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | ऐधत | ऐधेताम् | ऐधन्त |
| म० पु० | ऐधथाः | ऐधेथाम् | ऐधध्वम् |
| उ० पु० | ऐधे | ऐधावहि | ऐधामहि |

**( ५८८ ) पद**—लिङः, सीयुट् । **विधिसूत्र** ।

**मूलार्थ**—लिङ् के स्थान में आदेश हुए आत्मनेपद प्रत्ययों को 'सीयुट्' का आगम होता है । 'सीयुट्' में 'उट्' इत्संज्ञक है । 'सीय्' अवशिष्ट रहता है ।

**सलोप इति** । 'विधिलिङ्' में 'सीयुट्' के सकार का 'लिङः सलोपोऽनन्त्यस्य' से लोप हो जाता है ।

**(५९०) झस्य रन् ३।४।१०५। लिङो झस्य रन्। एधेरन्। एधेथाः। एधेयाथाम्। एधेध्वम्। (५९१) इटोऽत् ३।४।१०६। लिङादेशस्य इटोऽत्**

---

(५९०) झस्येति। 'लिङः सीयुडि'त्यतो लिङ इत्यनुवर्तते। तदाह—**लिङो झस्येति।**

(५९१) इटोऽदिति। इट् अत् इति च्छेदः। 'लिङः सीयुडि'त्यतः लिङः इत्यनुवर्तते। तदाह—**लिङादेशस्येति। एधेय।** एध्धातोर्लिङि, तत्स्थाने उत्तमपुरुषैक-वचने इटि, तस्य 'इटोऽत्' इत्यनेन अकारादेशे 'लिङः सीयुट्' इति सीयुडागमेऽनुबन्ध-

---

**(५८९.) पद**—लोपः, व्योः, वलि। **त्रिधिसूत्र।**

**मूलार्थ**—'वल्' प्रत्याहारान्तर्गत वर्णों के परवर्ती रहने पर यकार और वकार का लोप होता है।

**उदाहरण**—(१) √एध्+विधिलिङ् (ल्=प्र० पु० ए० व०—'त' शप्-अ)—एध् अ त (सीयुट्='सीय्' का आगम—'लिङः सीयुट्' 'स्' का लोप—'लिङः सलोपोऽनन्त्यस्य')—एध ई य् त ('य्' का लोप—'लोपो व्योर्वलि', अ+ई=ए गुण—'आद् गुणः')=एधेत। (२) √एध्+विधिलिङ् (=प्र० पु० द्वि० व० आताम्, शप्, सीयुट्=सीय्, 'स्' का लोप)—एध ईय् आताम् (अ+ई=ए—गुण)=एधेयाताम्।

**(५९०) पद**—झस्य, रन्। **अनुवृत्ति**—लिङः। **विधिसूत्र।**

**मूलार्थ**—लिङ् लकार सम्बन्धी 'झ' के स्थान में 'रन्' आदेश होता है।

**विमर्श**—पूर्वसूत्र 'लिङः सीयुट्' (५८९) से 'लिङः' पद की अनुवृत्ति आ रही है। तदनुसार—लिङ् के 'झ' के स्थान में 'रन्' आदेश होता है।

**उदाहरण**—(१) √एध्+विधिलिङ् (ल्=प्र० पु० ब० व०—झ, शप्, सीयुट्=सीय्, 'स्' का लोप)—एध ई य् झ ('झ'='रन्'—'झस्य रन्' 'य्' का लोप, अ+ई='ए'—गुण) =एधेरन्। (२) म० पु० ए० व०—एधेथाः। (३) म० पु० द्वि० व०—एधेयाथाम्। (४) म० पु० ब० व०—एधेध्वम्।

**(५९१) पद**—इटः, अत्। **अनुवृत्ति**—लिङः। **विधिसूत्र।**

**मूलार्थ**—लिङादेश 'इट्' के स्थान में 'अत्' आदेश होता है।

**विमर्श**—प्रकृत सूत्र में भी 'लिङः सीयुट्' (५८९) से 'लिङः' पद की अनुवृत्ति आती है। इस प्रकार—"लिङ् के स्थान में आदेश हुए 'इट्' को 'अत्' (=अ) आदेश होता है"।

**उदाहरण**—(१) एध्+विधिलिङ् (ल्=उ० पु० ए० व०—'इट्' शप्, सीयुट्=सीय्, 'स्' का लोप)—एध ईय् इ (अ+ई='ए'—गुण, इ=अत्='अ'—'इटोऽत्')=एधेय। (२) एध्+विधिलिङ् (ल्=उ० पु० द्वि० व०—'वहि' शप्, सीयुट् 'स्' का लोप)—एध ईय् वहि (अ+ई='ए' गुण, 'य्' का लोप—'लोपो व्योः०')=एधेवहि। (३) एध्+विधिलिङ् (ल्=उ० पु० ब० व०—महि, शप्, सीयुट्, 'स्' का लोप, अ+ई='ए'—गुण, 'य्' का लोप) =एधेमहि।

### √एध् धातु विधिलिङ् के रूप

| एक० | द्वि० | बहु० |
|---|---|---|
| प्र० पु०–एधेत | एधेयाताम् | एधेरन् |
| म० पु०–एधेथाः | एधेयाथाम् | एधेध्वम् |
| उ० पु०–एधेय | एधेवहि | एधेमहि |

स्यात्। एधेय। एधेवहि। एधेमहि। (५९२) सुट् तिथोः ३।४।१०७। लिङस्तथोः सुट् स्यात्। यलोपः। एधिषीष्ट। एधिषीयास्ताम्। एधिषीरन्। एधिषीष्टाः। एधिषीयास्थाम्। एधिषीध्वम्। एधिषीय। एधिषीवहि। एधिषीमहि। ऐधिष्ट। ऐधिषाताम्। (५९३) आत्मनेपदेष्वनतः ७।१।५।

---

लोपे, शपि, 'लिङः सलोपोऽनन्त्यस्ये'ति सकारस्य लोपे 'आद् गुणः' इति गुणे 'एधेय' इति सिद्धम्।

(५९२) सुट् तिथोरिति। तिश्च थ् चेति द्वन्द्वात् षष्ठीद्विवचनम्। 'लिङः सीयुट्' इत्यतो लिङ इत्यनुवर्तते। तदाह—लिङ इत्यादिना। एधिषीष्ट। एध् धातोः 'आशिषि लिङ्लोटौ' इत्यनेन आशिषि लिङि, अनुबन्धलोपे, लः स्थाने आत्मनेपदे प्रथमपुरुषैकवचने त प्रत्यये 'लिङाशिषि' इत्यार्धधातुकसंज्ञायां 'लिङः सीयुट्' इति सीयुडागमेऽनुबन्धलोपे 'सुट् तिथोः' इति सुडागमेऽनुबन्धलोपे 'लोपो व्योर्वलि' इति यलोपे 'आर्धधातुकस्येड् वलादेः' इत्यनेन इडागमे 'एधि सी स् त' इति जाते 'आदेशप्रत्यययोः' इत्यनेनोभयोः सकारयोः षत्वे ष्टुत्वेन तकारस्य टकारे 'एधिषीष्ट' इति। ऐधिष्ट।

---

(५९२) पद—सुट्, तिथोः। अनुवृत्ति—लिङः। विधिसूत्र।

**मूलार्थ**—लिङ् लकार सम्बन्धी तकार-थकार को सुट् (=स्) का आगम होता है। एधिषीष्ट इत्यादि।

**विमर्श**—प्रकृत सूत्र में 'लिङः सीयुट्' से 'लिङः' पद की अनुवृत्ति आती है। अतः लिङ् के स्थान में जायमान तकार एवं थकार को 'सुट्' का आगम होता है।

**उदाहरण**—(१) √एध्+आशीर्लिङ् (=ल्=प्र० पु० ए० व०—'त' आर्धधातुक संज्ञा सीयुट्='सीय्'—'लिङः सीयुट्')—एध् सीय् त (सुट्='स्' का आगम—'सुट् तिथोः', 'य्' का लोप—'लोपो व्योर्वलि', इट्='इ' का आगम, दोनों 'स्'='ष्'—'आदेशप्रत्यययोः', 'त्'='ट्'—'ष्टुत्व')=एधिषीष्ट। (२) एध्+आशीर्लिङ् (=ल्=प्र० पु० द्वि० व०—'आताम्' सीयुट्=सीय्, आर्धधातुक संज्ञा, इट्, सुट्='स्' का आगम)—एध् इ सीय् आ स् ताम् ('स्'='ष्'—'आदेशप्रत्यययोः')=एधिषीयास्ताम्। (३) प्र० पु० ब० व०—एधिषीरन् (झ=रन)। (४) म० पु० ए० व०—एधिषीष्ठाः। (५) म० पु० द्वि० व०—एधिषीयास्थाम्। (६) म० पु० ब० व०—एधिषीध्वम्। (७) उ० पु० ब० व०—एधिषीय। (८) उ० पु० द्वि० व०—एधिषीवहि। (९) उ० पु० ब० व०—एधिषीमहि।

### √एध् धातु, आशीर्लिङ् के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | एधिषीष्ट | एधिषीयास्ताम् | एधिषीरन् |
| म० पु०— | एधिषीष्ठाः | एधिषीयास्थाम् | एधिषीध्वम् |
| उ० पु०— | एधिषीय | एधिषीवहि | एधिषीमहि |

'लुङ्' लकार के रूपों की प्रक्रिया बतलाई जा रही है—(१) √एध्+लुङ् (ल्=प्र० पु० ए० व०-त, शप् का बाधकर 'च्लि'—'च्लि लुङि', च्लि=सिच्='स्'—'च्लेः सिच्')—एध् स् त (आर्धधातुक संज्ञा, इट्, स्=षत्व, 'त'='ट्'—ष्टुत्व, आट्='आ'—आगम—'आडजादीनाम्', 'आ'+'ए'='ऐ'—वृद्धि—'आटश्च')=ऐधिष्ट। (२) लुङ् प्र० पु० द्वि० व०—आताम्, च्लि=सिच्, इट्, आट्, वृद्धि, षत्व)=ऐधिषाताम्।

**अनकारात्परस्याऽऽत्मनेपदेषु झस्य अत् स्यात्। ऐधिषत। ऐधिष्ठाः। ऐधिषाथाम्। ऐधिढ्वम्। ऐधिषि। ऐधिष्वहि। ऐधिष्महि। ऐधिष्यत। ऐधिष्येताम्। ऐधिष्यन्त। ऐधिष्यथाः। ऐधिष्येथाम्। ऐधिष्यध्वम्। ऐधिष्ये। ऐधिष्यावहि। ऐधिष्यामहि।**

---

एध् धातोः 'लुङ्' इति लुङि, लः स्थाने प्रथमपुरुषैकवचने त प्रत्यये 'आडजादीनाम्' इत्याडागमेऽनुबन्धलोपे 'च्लि लुङि' इति च्लौ, 'च्लेः सिच्' इत्यनेन च्लेः स्थाने सिच्यनुबन्धलोपे 'आ एध् स् त' इति जाते 'आटश्चे'ति वृद्धौ 'आर्धधातुकस्येड् वलादेः' इति इडागमेऽनुबन्धलोपे 'आदेशप्रत्यययोः' इत्यनेन सकारस्य मूर्धन्यादेशे 'ष्टुना ष्टुः' इत्यनेन ष्टुत्वे संयोगे च कृते 'ऐधिष्ट' इति।

**(५९३) आत्मनेपदेष्विति।** आत्मनेपदेष्विति षष्ठ्यर्थे सप्तमी। 'झोऽन्तः' इत्यतो झ इत्यनुवर्तते। 'अदभ्यस्तात्' इत्यतः अदित्यनुवर्तते। अत आह—**अनकारात्परस्येति।**

---

**(५९३) पद**—आत्मनेपदेषु, अनतः। **अनुवृत्ति**—झः, अत्। **विधिसूत्र।**

**मूलार्थ**—अनकार से परवर्ती आत्मनेपद सम्बन्धी 'झ' के स्थान में 'अत्' आदेश होता है।

**विमर्श**—यहाँ 'झोऽन्तः' (७।१।३) सूत्र से 'झः' और 'अदभ्यस्तात्' (७।१।४) से 'अत्' की अनुवृत्ति आती है। 'आत्मनेपदेषु' में षष्ठी के अर्थ में सप्तमी विभक्ति है। अतः अनकारान्त अङ्ग से परवर्ती आत्मनेपद में वर्तमान 'झ' के स्थान में 'अत्' आदेश होता है।

**उदाहरण**—(१) √एध्+लुङ् (=ल्=प्र० पु० ब० व०—'झ' च्लि, च्लि=सिच्='स्')—एध् स् त (आर्धधातुक संज्ञा, इट्, 'झ'='अत्'—'आत्मनेपदेष्वनतः')=एध् इ स् अत् (आट्='आ'—'आडजादीनाम्', 'आ'+'ए'='ऐ'—'आटश्च', षत्व)=ऐधिषत। (२) एध्+लुङ् (=म० पु० ए० व०—थास्, सिच्, इट्, आट्, वृद्धि, षत्व, ष्टुत्व, स्=र्=:)= ऐधिष्ठाः। (३) म० पु० द्वि० व०—ऐधिषाथाम्। (४) म० पु० ब० व०—ध्वम्, च्लि=सिच्, इट्, आट्, वृद्धि—ऐधि स् ध्वम् ('स्' का लोप—'धि च' 'ध्'='ढ्'—'इणः षीध्वम्०')= ऐधिढ्वम्। (५) उ० पु० ए० व०—'इट्' (च्लि=सिच्, इट्, आट्, वृद्धि, षत्व)=ऐधिषि। (६) उ० पु० द्वि० व०—ऐधिष्वहि। (७) उ० पु० ब० व०—ऐधिष्महि।

**√एध् धातु 'लुङ्' लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | ऐधिष्ट | ऐधिषाताम् | ऐधिषत |
| म० पु० | ऐधिष्ठाः | ऐधिषाथाम् | ऐधिढ्वम् |
| उ० पु० | ऐधिषि | ऐधिष्वहि | ऐधिष्महि |

अब 'लृङ्' लकार के रूपों की रचना-प्रक्रिया का उल्लेख किया जा रहा है—(१) √एध्+लृङ् (ल्=प्र० पु० ए० व०—'त' स्य—'स्यतासी लृलुटोः' आर्धधातुक संज्ञा, इट्, षत्व)—एध् इ ष् य त (आट्, आ+ए=ऐ—वृद्धि—'आटश्च')=ऐधिष्यत। (यहाँ 'टित्' लकार न होने से 'टि' को एकार नहीं होता। (२) √एध्+लृङ् (=प्र० पु० द्वि० व०—आताम्, स्य, इट्, आट्, वृद्धि, षत्व, आ=इय्, गुण, 'य्' का लोप)=ऐधिष्येताम्। (३) प्र० पु० ब० व०—ऐधिष्यन्त। (४) म० पु० ए० व०—ऐधिष्यथाः। (५) म० पु० द्वि० व०—ऐधिष्येथाम्। (६) म० पु० ब० व०—ऐधिष्यध्वम्। (७) उ० पु० ए० व०—ऐधिष्ये। (८) उ० पु० द्वि० व०—ऐधिष्यावहि। (९) उ० पु० ब० व०—ऐधिष्यामहि।

**कमु कान्तौ। ( ५९४ ) कमेर्णिङ् ३।१।३०। स्वार्थे। कामयते। ( ५९५ ) अयामन्ताल्वाय्येत्न्विष्णुषु ६।४।५५। एषु णेरय् आदेशः। कामयाञ्चक्रे। 'आयादय' इति वा**

---

ऐधिषत। एध्धातोः लुङि, तत्स्थाने प्रथमपुरुषबहुवचने 'झ' प्रत्यये 'आत्मनेपदेष्वनतः' इति झस्य 'अत्' आदेशे 'एध् अत् अ' इति जाते 'आडजादीनाम्' इत्याडागमेऽनुबन्धलोपे 'आटश्चे'ति वृद्धौ, च्लौ, तत्स्थाने 'च्लेः सिच्' इति सिच्यनुबन्धलोपे, आर्धधातुकसंज्ञायाम् इडागमे 'ऐध् इ स् अ त' इति जाते 'आदेशप्रत्यययोः' इति सकारस्य षत्वे ष्टुत्वे च कृते 'ऐधिषत' इति।

( ५९४ ) **कमेर्णिङिति।** शेषपूरणेन सूत्रं व्याचष्टे—**स्वार्थ** इति। **कामयते।** उकारेत्संज्ञक-'कमु कान्तौ' इति धातोः 'कमेर्णिङ्' इति णिङ्प्रत्ययेऽनुबन्धलोपे 'अत उपधायाः' इति वृद्धौ 'कामि' इति जाते 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां लटचनुबन्धलोपे 'लः कर्मणि च भावे चाकर्मकेभ्यः' इत्यनेन कर्त्रर्थे 'अनुदात्तङित आत्मनेपदम्' इत्यनेन आत्मनेपदे तप्रत्यये, सार्वधातुकसंज्ञायां शप्यनुबन्धलोपे 'कामि अ त' इति जाते 'सार्वधातुकार्धधातुकयोः' इतीकारस्य गुणे 'एचोऽयवायावः' इत्यनेन अयादेशे 'टित आत्मनेपदानां टेरे' इत्यनेन टेरेत्वे 'कामयते' इति सिद्धम्।

( ५९५ ) **अयामन्तेति।** 'णेरनिटि' इत्यतो णेरित्यनुवर्तते। आम्, अन्त, आलु, आय्य, इत्नु, इष्णु इत्येषु णेरयादेशः स्यादित्यर्थः।

---

**√एध् धातु 'लृङ्' लकार के रूप**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु० | ऐधिष्यत | ऐधिष्येताम् | ऐधिष्यन्त |
| म० पु० | ऐधिष्यथाः | ऐधिष्येथाम् | ऐधिष्यध्वम् |
| उ० पु० | ऐधिष्ये | ऐधिष्यावहि | ऐधिष्यामहि |

√'कमु' का अर्थ—'इच्छा करना' है।

**( ५९४ ) पद**—कमेः, णिङ्। **विधिसूत्र।**

**मूलार्थ**—'कम्' धातु से स्वार्थ में 'णिङ्' प्रत्यय होता है।

**उदाहरण**—( १ ) √कम्+णिङ् ( ='इ'—'कमेर्णिङ्', अ='आ'—'वृद्धि'—'अत उपधायाः' )—कामि ( धातुसंज्ञा—'सनाद्यन्ता धातवः'—लट्=ल्=प्र० पु० ए० व० त, सार्वधातुक संज्ञा, शप्='अ' )—कामि अ त ( इ='ए' गुण—'सार्वधातु०' ए='अय्'—'एचोऽयवायावः' एत्व—'टित आत्मनेपदानां टेरे' )=कामयते।

**( ५९५ ) पद**—अय्, आम्, अन्ताल्वाय्येत्न्विष्णुषु। **अनुवृत्ति**—णेः, आर्धधातुके। **विधिसूत्र।**

**मूलार्थ**—आम्, अन्त, आलु, आय्य, इत्नु और इष्णु के परवर्ती रहने पर 'णि' के स्थान में 'अय्' आदेश होता है।

**विमर्श**—पूर्वसूत्र 'णेरनिटि' ( ६।४।५१ ) से 'णेः' पद की अनुवृत्ति आ रही है। 'आर्धधातुके' ( ६।४।४६ ) का अधिकार है। अतः आम् आदि के परे रहते 'णि' को 'अय्' आदेश होता है।

**उदाहरण**—( १ ) √कम्+णिङ् विकल्प से—'आयादयः' ( ='इ', अ='आ' वृद्धि ) =कामि ( धातु संज्ञा—लिट्, आम्—'कास्यनेकाच आम्वक्तव्यः' 'णेरनिटि' से प्राप्त 'णि' के

णिङ् । चकमे । चकमाते । चकमिरे । चकमिषे । चकमाथे । चकमिध्वे । चकमे । चकमिवहे । चकमिमहे । कामयिता । कमिता । कामयिष्यते । कमिष्यते । कामयताम् ।

---

**कामयाञ्चक्रे** । कम् धातोः 'कमेर्णिङ्' इति णिङि प्राप्ते 'आयादयः' इति वा णिङि, अनुबन्धलोपे, 'अत उपधायाः' इति वृद्धौ 'कामि' इति जाते, धातुसंज्ञायां 'परोक्षे लिट्' इति लिटि 'कास्यनेकाच आम् वक्तव्यः' इत्यामि 'णेरनिटि' इति णिङो लोपे प्राप्ते, तम्प्रबाध्य 'अयामन्ताल्वाय्येत्न्विष्णुषु' इति णिङः इकारस्य अयादेशे 'कामय् आम् लिट्' इति जाते 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इत्यनेन लिट्परके कृञोऽनुप्रयोगे लिटः लकारस्य स्थाने प्रथमपुरुषैकवचने तप्रत्यये, तस्य स्थाने 'लिटस्तझयोरेशिरेच्' इति एशि कृते शस्येत्संज्ञायां लोपे च 'लिटि धातोरनभ्यासस्ये'ति कृञो द्वित्वेऽभ्याससंज्ञायाम् 'उरत्' इति ऋवर्णस्याकारे 'उरण् रपरः' इति रपरे 'कामयाम् क र् कृ ए' इति स्थिते हलादिशेषे 'कुहोश्चुः' इति कस्य चत्वे 'इको यणचि' इति यणि, मकारस्यानुस्वारे वा परसवर्णे च कृते 'कामयाञ्चक्रे' इति रूपम् । **चकमे इति** । 'आयादयः आर्धधातुके वा' इति णिङ्प्रत्ययाभावपक्षे

---

लोप का बाधकर इ=अय्-'अयामन्ताल्वाय्येत्न्विष्णुषु' )—कामय् आम् लिट् ( लिट् का लुक् - 'आमः', लिट्परक √कृ का अनुप्रयोग )—कामयाम् कृ लिट् ( ल्=प्र० पु० ए० व० 'त', त= एश् ='ए'—'लिटस्तझयोरेशिरेच्', 'कृ' को द्वित्व—'लिटि धातोः०' अभ्यास संज्ञा, 'ऋ'='अ'—'उरत्' रपर )—कामयाम् कर् कृ ए ( 'र्' का लोप—'हलादिः शेषः' क्='च्'—'कुहोश्चुः' ऋ=र्—'यण्'—'इको यणचि' म्=-ं-अनुस्वार, परसवर्ण )=कामयाञ्चक्रे । णिङ् प्रत्यय के अभाव पक्ष में—कम्+लिट् ( =प्र० पु० ए० व०—त, त=एश्='ए' द्वित्व )—कम् कम् ए ( अभ्यास संज्ञा, हलादिशेष, क्='च्'—'कुहोश्चुः' )=चकमे । प्र० पु० द्वि० व०—चकमाते । इत्यादि रूप णिङ् के अभाव पक्ष में बनते हैं ।

**√कमु ( उकारेत्संज्ञक ) धातु 'लिट्' लकार के रूप णिङ् पक्ष में—**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | कामयाञ्चक्रे | कामयाञ्चक्राते | कामयाञ्चक्रिरे |
| म० पु० | कामयाञ्चकृषे | कामयाञ्चक्राथे | कामयाञ्चकृढ्वे |
| उ० पु० | कामयाञ्चक्रे | कामयाञ्चकृवहे | कामयाञ्चकृमहे |

**णिङ् के अभावपक्ष में—**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | चकमे | चकमाते | चकमिरे |
| म० पु० | चकमिषे | चकमाथे | चकमिध्वे |
| उ० पु० | चकमे | चकमिवहे | चकमिमहे |

अब लुट् लकार के रूपों की प्रक्रिया का निर्देश किया जा रहा है ।

( १ ) √कम्+णिङ् ( 'इ' विकल्प से, 'आयादयः०' उपधावृद्धि )—कामि ( धातुसंज्ञा, लुट्=ल्=प्र० पु० ए० व०—'त' तास्—'स्यतासी लृलुटोः' आर्धधातुक संज्ञा, इट्, )—कामि इ तास् त, ( 'इ'='ए' गुण—'सार्वधातुकार्धधातुकयोः' ए=अय्, त=डा='आ'—'लुटः प्रथमस्य डारौरसः' 'टि' ( आस् ) का लोप—'डित्त्वसामर्थ्यादभस्यापि टेर्लोपः' )=कामयिता । 'णिङ्' के न होने पर पक्ष में—कमिता ।

अकामयत। कामयेत। कामयिषीष्ट। कमिषीष्ट। (५९६) णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८। ण्यन्तात्, श्र्यादिभ्यश्च च्लेश्चङ् कर्त्रर्थे लुङि। अ कामि अ त इति स्थिते—(५९७) णेरनिटि ६।४।५१। अनिडादावार्द्धधातुके परे णेर्लोपः। (५९८) णौ

'कम्+लिट्' इत्यत्र लः स्थाने प्रथमपुरुषैकवचने तप्रत्यये तस्य एशादेशेऽनुबन्धलोपे धातोर्द्वित्वे 'कम् कम् ए' इति जाते 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां हलादिशेषे 'कुहोश्चुः' इति कस्य चत्वे संयोगे च कृते **'चकमे'** इति।

(५९६) प्रत्ययग्रहणपरिभाषया णीति तदन्तग्रहणम्। 'च्लि लुङि' इत्यतो लुङीति, 'च्लेः सिच्' इत्यतः च्लेरिति चानुवर्तते। अत आह—**ण्यन्तादित्यादिना।**

(५९७) निरनुबन्धग्रहणे सामान्यग्रहणमिति न्यायात् णेरित्यनेन णिङ्णिचोर्ग्रहणम्।

---

(२) √कम्+णिङ्='इ' विकल्प से, वृद्धि—कामि+लृट् (ल्=प्र० पु० ए० व०—त, स्य—'स्यतासी०', आर्धधातुक संज्ञा, इट्, गुण, ए=अय्,)—कामयि स्य त (षत्व, एत्व)= कामयिष्यते। 'णिङ्' के अभावपक्ष में—कमिष्यते।

(३) √कम्+णिङ् (='इ' वृद्धि)—कामि+लोट् (=प्र० पु० ए० व० त, सार्वधातुक संज्ञा, शप्=अ)—कामि अ त ('इ'='ए'—गुण, अयादेश, अ=ए—'टित आत्मनेपदानाम्०' ए=आम्—'आमेतः')=कामयताम्।

(४) √कम्+णिङ्, वृद्धि—कामि+लङ् (ल्=प्र० पु० ए० व० त, शप्=अ, सार्वधातुक संज्ञा, गुण, अयादेश)—कामयत (अट्='अ' का आगम)=अकामयत।

(५) √कम्+णिङ्, वृद्धि—कामि+विधिलिङ् (ल्=प्र० पु० ए० व०—त, सार्वधातुक संज्ञा, शप्, 'इ'='ए'—गुण, अयादेश)—कामय त (सीयुट्='सीय'—'लिङः सीयुट्' 'स्' का लोप—'लिङः सलोपोऽनन्त्यस्य' अ+ई='ए' गुण, 'य्' का लोप—'लोपो व्योर्वलि')= कामयेत।

(६) √कम्+णिङ् (विकल्प से), वृद्धि—कामि+आशीर्लिङ् (ल्=प्र० पु० ए० व० त, आर्धधातुक संज्ञा, सीयुट्='सीय्')—कामि सीय् त (इट्—'आर्धधातुकस्येड् वलादेः' गुण, अय् आदेश, षत्व 'त' को सुट्=स् का आगम—'सुट् तिथोः', 'य्' का लोप—'लोपो व्योर्वलि' स्= षत्व, त्='ट्'—ष्टुत्व)='कामयिषीष्ट'। 'णिङ्' के अभावपक्ष में—'कमिषीष्ट'।

**(५९६) पद**—णिश्रिद्रुस्रुभ्यः, कर्तरि, चङ्। **अनुवृत्ति**—च्लेः, लुङि। **विधिसूत्र।**

**मूलार्थ**—ण्यन्त धातु तथा श्रि, द्रु और स्रु धातुओं से परवर्ती 'च्लि' को 'चङ्' आदेश होता है, कर्त्रर्थक लुङ् लकार के परे रहते।

**विमर्श**—सूत्रस्थ 'णि' पद से 'प्रत्ययग्रहणे तदन्तग्रहणम्' परिभाषा के द्वारा तदन्त (ण्यन्त) का ग्रहण होता है। 'च्लि लुङि' (३।१।४३) से 'लुङि' और 'च्लेः सिच्' (३।१।४४) से 'च्लेः' पदों की अनुवृत्ति आती है। तदनुसार—"ण्यन्त और श्रि, द्रु तथा स्रु धातु से परवर्ती 'च्लि' के स्थान में 'चङ्' (=अ) आदेश होता है, कर्त्रर्थक (कर्तृवाच्य) लुङ् परे रहते"।

'अ कामि अ त' ऐसी स्थिति होने पर—

**(५९७) पद**—णेः, अनिटि। **अनुवृत्ति**—लोपः। **विधिसूत्र।**

**मूलार्थ**—अनिडादि आर्धधातुक के परे रहते 'णि' का लोप होता है।

**विमर्श**—'आर्धधातुके' (६।४।४६) का अधिकार है। 'अतो लोपः' (६।४।४८) से 'लोपः'

**णौ चङ्युपधाया ह्रस्वः ७।४।१। चङ्परे णौ यदङ्गं, तस्योपधाया ह्रस्वः चङि। (५९९) सन्वल्लघुनि चङ्परेऽनग्लोपे ७।४।९३। चङ्परे णौ यदङ्गं, तस्य योऽभ्यासो लघुपरस्तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति। (६००) सन्यतः ७।४।७९। अभ्यासस्यात इत्सनि। (६०१) दीर्घो लघोः ७।४।९४। लघोरभ्यासस्य दीर्घः, सन्वद्भावविषये। अचीकमत। णिङभावपक्षे—* कमेश्च्लेश्चङ् वाच्यः * णेरभावान्न दीर्घसन्वद्भावौ।**

---

(५९९) सन्वल्लघुनि इति। अनग्लोप इति च्छेदः। चङ्परो यस्मादिति बहुव्रीहिः। बहुव्रीहिगम्यो णिः, अङ्गस्येति चानुवर्तते। एवं चङ्परे णौ यदङ्गं तस्य योऽभ्यासे लघुपरस्तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति। णावग्लोपः—णिज्निमित्तकोऽक्प्रत्याहारघटितवर्णलोपः यदि न भूतः स्यादित्यर्थः।

(६००) सन्यतः। 'अत्र लोपः' इत्यत अभ्यासस्येत्यनुवर्तते। 'भृञामिदि'त्यस्मात् इदिति। तदाह—अभ्यासस्येति।

(६०१) दीर्घो लघोरिति। 'अत्र लोपोऽभ्यासस्ये'त्यतः 'अभ्यासस्ये'त्यनुवर्तते। 'सन्वल्लघुनी'ति सूत्रं सन्वच्छब्दवर्जमनुवर्तते। तदाह—लघोरभ्यासस्येति। अचीकमत। कम्धातोः 'कमेर्णिङ्' इति नित्ये णिङ् प्राप्ते 'आयादय आर्धधातुके वा' इत्यनेन

---

की अनुवृत्ति आ रही है। अतः "अनिडादि (जिसके आदि में इट् न हो) आर्धधातुक के परवर्ती रहते 'णि' का लोप होता है"।

(५९८) **पद**—णौ, चङि, उपधायाः, ह्रस्वः। **विधिसूत्र।**

**मूलार्थ**—चङ्-परक 'णि' के परे रहते अङ्ग की उपधा को ह्रस्व होता है।

**विमर्श**—'अङ्गस्य' का अधिकार है। 'चङि' तथा 'णौ' में सप्तमी विभक्ति होने से 'चङ्-परक जो णि, उसके परे रहते' अर्थ होता है। इस प्रकार—"चङ् है परे जिससे, ऐसे 'णि' के परे रहते जो अङ्ग, उसकी उपधा को ह्रस्व होता है"।

(५९९) **पद**—सन्वत्, लघुनि, चङ्परे, अनग्लोपे। **अनुवृत्ति**—अभ्यासस्य। **विधिसूत्र।**

**मूलार्थ**—चङ्-परक 'णि' परे रहते जो अंग, उसके अवयव लघुपरक अभ्यास को सन्वद्भाव होता है, यदि 'णि' परे रहते 'अक्' का लोप न हुआ हो।

**विमर्श**—प्रकृत सूत्र में 'अत्र लोपोऽभ्यासस्य' (७।४।५८) से 'अभ्यासस्य' पद की अनुवृत्ति आती है। 'अङ्गस्य' का अधिकार है। इस प्रकार—"चङ्-परक 'णि' परे रहते जो अङ्ग, उसका अवयव जो लघुपरक अभ्यास, उसको सन्वद्भाव (=सन् परे रहने के समान कार्य) होता है, यदि 'णि' को निमित्त मानकर अङ्ग के 'अक्' का लोप न हुआ हो तो"।

(६००) **पद**—सनि, अतः। **अनुवृत्ति**—अभ्यासस्य, इत्। **विधिसूत्र।**

**मूलार्थ**—'सन्' के परवर्ती रहने पर अभ्यास के अत् को इत्व होता है।

**विमर्श**—यहाँ 'अत्र लोपोऽभ्यासस्य' (७।४।५८) से 'अभ्यासस्य' तथा 'भृञामित्' (७।४।७६) से 'इत्' पदों की अनुवृत्ति आती है। तदनुसार—'सन् परे रहते अभ्यास के अकार को इकार होता है।'

(६०१) **पद**—दीर्घः, लघोः। **अनुवृत्ति**—लघुनि, चङ्परेऽनग्लोपे, अभ्यासस्य। **विधिसूत्र।**

**मूलार्थ**—अभ्यास के अवयव लघु को दीर्घ होता है, सन्वद्भाव के विषय में।

**विमर्श**—प्रकृत सूत्र में—'अत्र लोपः०' (७।४।५८) से 'अभ्यासस्य' तथा 'सन्वत्' पद को

अचकमत। अकामयिष्यत। अकमिष्यत। भाम क्रोधे। भामते। बभामे। क्षमूष् सहने। क्षमते। चक्षमे। चक्षमिषे-चक्षंसे। चक्षमाथे। चक्षमिवहे। (६०२) ष्ठिवोऽ

---

विकल्पेन णिङ्प्रत्ययेऽनुबन्धलोपे उपधावृद्धौ 'कामि' इत्यस्य 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां 'लुङ्' इति लुङ्लकारेऽनुबन्धलोपे तत्स्थाने आत्मनेपदे प्रथमपुरुषैकवचने तप्रत्यये 'च्लि लुङि' इति च्लौ, च्लेः सिचि प्राप्ते 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इत्यनेन च्लेः चङादेशेऽनुबन्धलोपे अङ्गस्याडागमेऽनुबन्धलोपे 'अ कामि अ त' इति जाते, 'णेरनिटि' इत्यनेन णिलोपे, 'णौ चङ्युपधाया ह्रस्वः' इत्यनेन उपधाह्रस्वे, अ कम् अ त इति स्थिते 'चङि' इत्यनेन द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां 'हलादिः शेषः' इत्यनेन हलादिशेषे 'कुहोश्चुः' इत्यनेनाभ्यासककारस्य चकारे 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इत्यनेन सन्वद्भावे 'सन्यतः' इत्यनेनाभ्यासस्य इत्वे 'दीर्घो लघोः' इत्यभ्यासेकारस्य दीर्घे संयोगे च कृते 'अचीकमत' इति। णिङभावपक्षे—अ कम् त इति स्थिते, च्लौ, च्लेः सिचि प्राप्ते 'कमेश्च्लेश्चङ् वाच्यः' इत्यनेन च्लेः चङादेशेऽनुबन्धलोपे 'चङि' इत्यनेन द्वित्वेऽभ्यासकार्ये हलादिशेषे 'कुहोश्चुः' इत्यभ्यासककारस्य चकारे 'अ च कम् अ त' इति जाते संयोगे च कृते 'अचकमत' इति सिद्धम्।

---

छोड़कर 'सन्वल्लघुनि चङ्परेऽनग्लोपे' (५९९) सूत्र की अनुवृत्ति आती है। अतः—'चङ्-परक णि परे रहते जो अङ्ग, उसके लघु अभ्यास को दीर्घ होता है।'

वा०—"कम् से परे 'च्लि' को चङ् आदेश होता है।" 'णिङ्' विकल्प से होता है। अतः उसके अभाव पक्ष में च्लि को 'चङ्' आदेश एवं द्वित्वादि होते हैं। यहाँ 'णि' के अभाव से दीर्घ एवं सन्वद्भाव की प्राप्ति नहीं होती।

**उदाहरण**—(१) √कम्+णिङ् विकल्प से (=इ, उपधावृद्धि)—कामि (धातुसंज्ञा+लुङ्=ल्=प्र० पु० ए० व०—'त' च्लि, च्लि=चङ्='अ'—'णिश्रिद्रुस्रुभ्यः०')—काम् इ अ त (णि='इ' का लोप—'णेरनिटि' उपधा को ह्रस्व—'णौ चङ्युपधाया ह्रस्वः' अङ्ग को अट् का आगम)—अ कम् अ त ('कम्' को द्वित्व—'चङि' 'पूर्वोऽभ्यासः' से अभ्यास संज्ञा, 'हलादिः शेषः' से 'म्' का लोप, अभ्यास के 'क्'='च्'—'कुहोश्चुः' 'सन्वल्लघुनि चङ्परेऽनग्लोपे' से सन्वद्भाव होकर 'सन्यतः' से अभ्यास के 'अ'='इ' 'इ'='ई'—दीर्घ—'दीर्घो लघोः')=अचीकमत। 'णिङ्' के अभाव पक्ष में—अचकमत (वा० से च्लि=चङ्)।

(२) √कम्+लृङ् प्र० पु० ए० व०—'णिङ्' पक्ष में—अकामयिष्यत। 'णिङ्' के अभावपक्ष में—अकमिष्यत।

√भाम धातु का अर्थ—'क्रोध करना' है। लट्—भामते। लिट्—बभामे। √क्षमूष् धातु का अर्थ—'सहन करना है।' (१) लट् प्र० पु० ए० व०—क्षमते। (२) ऊकारेत्संज्ञक √क्षमूष्+लिट् (=प्र० पु० ए० व०—त, त=एश्=ए, धातु को द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'क्'='च्' चत्व)=चक्षमे। (३) क्षम्+लिट् (ल्=म० पु० ए० व०—थास्, थास्=से—'थासः से' द्वित्व, अभ्यास संज्ञा, हलादिशेष, चत्व)—च क्षम् से (विकल्प से इट्—'स्वरतिसूति०' षत्व) =चक्षमिषे। इट् के अभावपक्ष में 'म्' को अनुस्वार होने पर—चक्षंसे। लिट् म० पु० द्वि० व०—चक्षमाथे। लिट्—उ० पु० द्वि० व०—चक्षमिवहे।

८।२।६५। मान्तस्य धातोर्मस्य नः स्यात् म्वोः परयोः। चक्षण्वहे। चक्षमिमहे। चक्षण्महे। गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च। गाधते। बाधृ लोडने। लोडनं प्रतिघातः। बाधते। नाथृ नाधृ याच्ञोपतापैश्वर्याऽऽशीःषु। * आशिषि नाथ इति वाच्यम् *। अस्याऽऽशिष्येवात्मनेपदं स्यात्। नाथते। अन्यत्र नाथति। नाधते। दध धारणे। दधते। स्कुदि आप्रवणे। आप्रवणम् उत्प्लवनमुद्धरणं च। स्कुन्दते। चुस्कुन्दे। श्विदि

---

( ६०२ ) म्वोश्चेति। 'मो नो धातोरि'त्यनुवर्तते। तदाह—मान्तस्येति। चक्षण्वहे। 'क्षमूष् सहने' इत्यस्माद्धातोरनुबन्धलोपे लिटि, तत्स्थाने उत्तमपुरुषद्विवचने वहिप्रत्यये 'लिटि धातोरनभ्यासस्ये'ति धातोः द्वित्वे अभ्याससंज्ञायाम्, हलादिशेषे 'कुहोश्चुः' इति चर्त्वे 'च क्षम् वहि' इति जाते 'स्वरतिसूतिसूयति०' इति विकल्पेन इडागमेऽनुबन्धलोपे टेरेत्वे 'चक्षमिवहे' इति। इडभावपक्षे 'म्वोश्च' इति मकारस्य नकारे 'रषाभ्यां नो णः समानपदे' इति नकारस्य णत्वे 'टित आत्मनेपदानां टेरे' इति टेरेत्वे 'चक्षण्वहे' इति।

चुस्कुन्दे। स्कुदि धातोः नुमि लिटि, तत्स्थाने आत्मनेपदे त प्रत्यये, धातोर्द्वित्वेऽभ्याससंज्ञायां 'शर्पूर्वाः खयः' इति सलोपे 'अभ्यासे चर्च' इति चकारे 'लिटस्तझयोरेशिरेच्' इति एशादेशे 'चुस्कुन्दे' इति।

---

( ६०२ ) पद—म्वोः, च। अनुवृत्ति—मो नो धातोः। विधिसूत्र।

मूलार्थ—मकार और नकार के परवर्ती रहते मान्त धातु के मकार को नकार आदेश होता है। चक्षण्वहे। चक्षमिवहे। चक्षण्महे इत्यादि।

विमर्श—'मो नो धातोः' ( ८।२।६४ ) की अनुवृत्ति आ रही है। तदनुसार उक्त अर्थ निष्पन्न होता है।

उदाहरण—( १ ) √क्षम्+लिट् ( ल्=उ० पु० द्विवचन--वहि )--क्षम् वहि ( धातु को द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'क्'='च्'--चर्त्व—'कुहोश्चुः' )—च क्षम् वहि, ( विकल्प से इट्='इ' आगम—'स्वरतिसूति०', 'इ'='ए'—'टित आत्मनेपदानाम्०' )=चक्षमिवहे।, इट् के अभावपक्ष में ( 'म्'='न्'—'म्वोश्च' 'न्'='ण्'—'रषाभ्याम्' णत्व )=चक्षण्वहे। ( २ ) लिट्—उ० पु० बहुवचन में पूर्ववत् चक्षमिमहे। इट् के अभावपक्ष में चक्षण्महे।

√गाधृ धातु का अर्थ—प्रतिष्ठा, लिप्सा ( =लाभ प्राप्ति की इच्छा ) और ग्रन्थजनक व्यापार है। ( १ ) लट् प्र० पु० एकवचन—गाधते। √बाधृ का अर्थ—प्रतिघात करना है। बाधते।

√नाथृ, नाधृ धातुओं का अर्थ—याचना करना, कष्ट पहुँचाना, ऐश्वर्य प्राप्त करना एवं आशीर्वाद देना है।

वा०—नाथ धातु से आशीर्वाद अर्थ में ही आत्मनेपद होता है।

उदाहरण—( १ ) आशीर्वाद अर्थ में आत्मनेपद—नाथते। अन्य अर्थ में—परस्मैपद—नाथति। ( २ ) नाधृ+लट्=नाधते।

√दध् धातु का अर्थ—धारण करना है। ( १ ) दध्+लट् ( =प्र० पु० ए० व०—त, शप्, टि=एत्व )=दधते।

√स्कुदि का अर्थ—आप्रवरण=उत्प्लवन एवं उद्धरण है। यहाँ इकार की इत्संज्ञा लोप होता है। ( १ ) स्कुदि+लट् ( =प्र० पु० ए० व०—त, इकार की इत्संज्ञा लोप, नुम्='न्' का

श्वैत्ये । श्विन्दते । शिश्विन्दे । वदि अभिवादनस्तुत्योः । वन्दते । ववन्दे । भदि कल्याणे सुखे च । भन्दते । बभन्दे । मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । मन्दते । ममन्दे । स्पदि किञ्चिच्चलने । स्पन्दते । स्पन्देते । पस्पन्दे । मुद हर्षे । मोदते । मुमुदे । उर्द माने क्रीडायां च । ऊर्दते । ऊर्दाञ्चक्रे । कुर्द खुर्द गुर्द गुद क्रीडायामेव । कूर्दते । खूर्दते । गूर्दते । गोदते । जुगुदे । षूद क्षरणे । सूदते । सुषूदे । ह्राद अव्यक्ते शब्दे । ह्रादते । जह्रादे । ह्लादी सुखे च । चादव्यक्ते शब्दे । ह्लादते । स्वाद आस्वादने । स्वादते । पर्द कुत्सिते शब्दे । गुदरवे इत्यर्थः । पर्दते । पपर्दे । यती प्रयत्ने । यतते । येते । श्रथि शैथिल्ये । श्रन्थते । ग्रथि कौटिल्ये । ग्रन्थते । कत्थ श्लाघायाम् । कत्थते ।

---

मोदत इति । मुदधातोर्लटि तत्स्थानेऽऽत्मनेपदे तप्रत्यये शपि, शपः शित्त्वात्सार्वधातुकसंज्ञायां 'पुगन्तलघूपधस्य चे'ति लघूकारस्य गुणे टेरेत्वे कृते 'मोदते' इति रूपम् ।

---

आगम—'इदितो नुम् धातोः' शप्=अ, टि=एत्व )=स्कुन्दते । ( २ ) स्कुदि+लिट् ( नुम्, ल्=त, द्वित्व, अभ्यास संज्ञा, 'स्' का लोप—'शर्पूर्वाः खयः' 'क्'='च्'—'शर्पूर्वाः खयः' 'त' ='एश्'—'लिटस्तझयोः' )=चुस्कुन्दे ।

√श्विदि का अर्थ—श्वैत्य—श्वेतता होना है । इदित् होने से नुम् । श्विन्दते । लिट् में—शिश्विन्दे ।

√वदि का अर्थ—अभिवादन तथा स्तुति करना है । ( १ ) वदि ( इदित् होने से नुम् )+ लट् ( ='त' शप्=अ, टि=एत्व )=वन्दते । ( २ ) लिट् प्र० पु० ए० व०—ववन्दे ।

√भदि धातु का अर्थ—कल्याण एवं सुखजनक व्यापार है । ( १ ) लट्—भन्दते । लिट्—बभन्दे ।

√मदि धातु—स्तुति, मोद, मद, स्वप्न, इच्छा एवं गति अर्थ में है । ( १ ) लट्—प्र० पु० ए० व०—मन्दते । लिट्—प्र० पु० ए० व०—ममन्दे ।

√स्पदि का अर्थ—ईषत् ( कुछ ) चलना है । ( १ ) लट्—प्र० पु० ए० व०—स्पन्दते । लट्—प्र० पु० द्वि० व०—स्पन्देते । लिट्—प्र० पु० ए० व०—पस्पन्दे ।

√मुद धातु—हर्ष ( =प्रसन्न होना ) अर्थ में है । ( १ ) मुद+लट् ( =प्र० पु० ए० व०—त, शप्, सार्वधातुक संज्ञा, 'उ'='ओ'—गुण='पुगन्तलघूपधस्य च' )=मोदते । ( २ ) मुद्+लिट् प्र० पु० ए० व०—मुमुदे ।

√उर्द धातु मान एवं क्रीडा अर्थ में है । ( १ ) उर्द्+लट् ( =प्र० पु० ए० व०—त, शप्, टि=एत्व, 'उ'='ऊ'—'दीर्घ'—'उपधायां च' )=ऊर्दते । ( २ ) उर्द—दीर्घ—'उपधायां च' +लिट् ( 'आम्'—'इजादेश्च०' लिट् का लुक्—'आमः' )—ऊर्दाम् ( लिट्परक 'कृ' का अनुप्रयोग, ल्=त, त=एश्, धातु को द्वित्व, अभ्यास संज्ञा, ऋ='अ', रपर, हलादिशेष, चर्त्व, यण्, अनुस्वार, परसवर्ण )=ऊर्दाञ्चक्रे ।

√कुर्द, खुर्द, गुर्द और गुद् धातु का अर्थ—क्रीडा करना है । **उदाहरण**—लट् लकार प्रथम पुरुष ए० व० क्रमशः—कूर्दते । खूर्दते । गूर्दते । गोदते । गुद्+लिट् प्र० पु० ए० व०—जुगुदे ।

√षूद् धातु क्षरणार्थक है । उदा०—लट् प्र० पु० ए० व०—सूदते । लिट्—सुषूदे इत्यादि ।

√ह्राद धातु का अर्थ—अस्पष्ट शब्द करना है । लट्—ह्रादते । लिट्—जह्रादे ।

√ह्लादी धातु—अस्पष्ट शब्दार्थक एवं सुखार्थक है । लट्—ह्लादते ।

√स्वाद धातु आस्वादन अर्थ में है । लट् स्वादते ।

चकत्थे। श्लोकृ सङ्घाते। सङ्घातो ग्रन्थः। स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा। आद्येऽकर्मको, द्वितीये सकर्मकः। श्लोकते। शुश्लोके। शकि शङ्कायाम्। शङ्कते। शशङ्के। अकि लक्षणे। अङ्कते। आनङ्के। ककि वकि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ तिकृ तीकृ रघि लघि गत्यर्थाः। कङ्कते। वङ्कते। श्वङ्कते। त्रङ्कते। ढौकते। डुढौके। त्रौकते। तुत्रौके। * सुब्धातुष्ठिवुष्वष्कतीनां सत्वनिषेधः * ष्वष्कते। षष्वष्के। वस्कते। ववस्के। मस्कते। ममस्के। टेकते। टीकते। तेकते। तीकते। रङ्घते। लङ्घते। श्लाघृ कत्थने। श्लाघते। शश्लाघे। पचि व्यक्तीकरणे। पञ्चते। पपञ्चे। ऋज गतिस्थानार्जनोपार्जनेषु। अर्जते। नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते। तेन द्विहल्त्वान्नुट्। आनृजे। ऋजि भृजी भर्जने। ऋञ्जते। ऋञ्जाञ्चक्रे। आर्ञ्जत। भर्जते। एजृ भ्रेजृ भ्राजृ दीप्तौ। एजते। एजा-

---

**आनृजे।** ऋजधातोः लिटि तत्स्थाने तप्रत्यये, द्वित्वेऽभ्याससंज्ञायाम् 'उरत्' इति ऋवर्णस्याकारादेशे रपरत्वे हलादिशेषे 'अ ऋ ज् त' इति जाते 'अत आदेः' इति पूर्वाकारस्य दीर्घे ऋज्धातोरेकहल्त्वेऽपि 'नुड्विधौ ऋकारैकदेशो हल्त्वेन गृह्यते' इति

---

√पर्द धातु—कुत्सित शब्दार्थक है अर्थात् गुदास्थान से निःसृत शब्द में है। लट्—पर्दते। लिट्—पपर्दे।

√यती धातु का अर्थ—प्रयत्न करना है। लट्—यतते। लिट्—येते।

√ श्रिथि का अर्थ—शिथिलता करना है। इदित् होने से नुम्। लट्—श्रन्थते।

√ग्रथि का अर्थ—कुटिलता है। इदित् होने से नुम्। लट्—ग्रन्थते। √कत्थ का अर्थ—श्लाघा (=प्रशंसा) करना है। लट्—कत्थते। लिट्—चकत्थे। √श्लोकृ धातु—संघात अर्थ में है। संघात का अर्थ—ग्रन्थ निर्माण करना है।

यहाँ 'ग्रथ्यमान=ग्रथन क्रिया के कर्म का व्यापार अथवा ग्रन्थनिर्माणकर्ता का व्यापार' यह दो अर्थ प्रकृत धातु के सम्भव हैं। प्रथम अर्थ में यह अकर्मक है और द्वितीय अर्थ में फल=ग्रंथन ग्रन्थ में रहने से और व्यापार निर्माणकर्ता में रहने से (फलव्यधिकरणव्यापारवाचक होने से) सकर्मक है। लट्—श्लोकते। लिट्—शुश्लोके।

√शकि धातु का अर्थ—आशङ्का करना है। इदित् होने से नुम्, अनुस्वार, परसवर्ण। लट्—शङ्कते। लिट्—शशङ्के।

√अकि धातु—चिह्नार्थक है। नुम्, अनुस्वार, परसवर्ण। लट्—अङ्कते। अङ्क्+लिट् (=प्र० पु० ए० व०—त, धातु को द्वित्व, अभ्यास संज्ञा, हलादिशेष, अभ्यास के 'अ' को दीर्घ—'अत आदेः', नुट्—'तस्मान्नुड् द्विहलः', त=एश्)=आनङ्के।

√ककि, वकि, श्वकि, त्रकि, ढौकृ, त्रौकृ, ष्वष्क, वस्क, मस्क, टिकृ, टीकृ, तिकृ, तीकृ, रघि और लघि—ये १५ धातुएँ गमनार्थक हैं। इदित् धातुओं में नुम्, अनुस्वार, परसवर्ण। उदा०—लट् क्रमशः—कङ्कते। वङ्कते। श्वङ्कते। त्रङ्कते। ढौकते। लिट्—डुढौके। त्रौकते। लिट्—तुत्रौके।

**वा०—**सुब्धातु (=नामधातु), ष्ठिव् धातु तथा 'ष्वष्क' धातु सम्बन्धी षकार को सत्व नहीं होता।

—ष्वष्क् धातु में प्राप्त 'धात्वादेः षः सः' से सत्व का प्रकृत वार्तिक से निषेध हुआ। लट्—ष्वष्कते। लिट्—षष्वस्के। वस्कते। लिट्—ववस्के। मस्कते। लिट्—ममस्के। टेकते। टीकते। तेकते। तीकते। रङ्घते। लङ्घते।

ञ्चक्रे । भ्रेजते । बिभ्रेजे । भ्राजते । बभ्राजे । वेष्ट वेष्टने । वेष्टते । विवेष्टे । चेष्ट चेष्टायाम् । चेष्टते । चिचेष्टे । स्फुट विकसने । स्फोटते । पुस्फुटे । टुवेपृ कम्पने । वेपते । कपि चलने । कम्पते । भिक्ष भिक्षायामलाभे लाभे च । भिक्षते । बिभिक्षे । दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु । दीक्षते । दिदीक्षे । भाष व्यक्तायां वाचि । भाषते । बभाषे । वर्ष स्नेहने । वर्षते । ववर्षे । ईह चेष्टायाम् । ईहते । ईहाञ्चक्रे । गर्ह गल्ह कुत्सायाम् । गर्हते । गल्हते । काश्र्‌ दीप्तौ । काशते । ऊह वितर्के । ऊहते । ऊहाञ्चक्रे । कथम्—'अनुक्तमप्यूहति पण्डितो जनः' इति । अनुदात्तेत्वलक्षणमात्मनेपदमनित्यम् । अनुदात्तेतश्चक्षिङो ङित्करणाज्ज्ञापकात् । तेन-'उदयति यदि भानुः',

---

वार्तिकवचनात् 'तस्मान्नुड् द्विहलः' इति दीर्घीभूतात्परस्य नुटि 'लिटस्तझयोरि'ति तकारस्य स्थाने एशादेशे 'आनृजे' इति ।

---

√श्लाघृ धातु का अर्थ—कत्थन अर्थात् अपने गुणों को प्रकट करना है। लट्—श्लाघते (=स्वगुणान् प्रकटीकरोति)। लिट्—शश्लाघे।

√पचि धातु—व्यक्तीकरण (=स्पष्टार्थक) में है। इदित्वान्नुम्, अनुस्वार, परसवर्ण। लट्—पञ्चते। लिट्—पपञ्चे।

√ऋज धातु गत्यर्थक तथा स्थान का अर्जन और उपार्जनार्थक है। लट्—अर्जते। ऋज धातु से लिट् में ऋकार का अवयव 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' से रेफ एक हल् एवं जकार एक हल् =दो हल् युक्त धातु होने से 'तस्मान्नुट्०' से नुट् हुआ। ऋज्+लिट् (=द्वित्व, ऋ=अ—'उरत्' रपर, हलादिशेष)—अ ऋज्+लिट् (अ='आ'—दीर्घ—'अत आदेः' नुट्='न्'—'तस्मान्नुड् द्विहलः' त=एश्=ए)=आनृजे।

√ऋजि तथा भृजी धातु पाकार्थक हैं। लट्—ऋञ्जते। लिट् में (आम् एवं कृञ् का अनुप्रयोग आदि कार्य)=ऋञ्जाञ्चक्रे। लङ्—आर्ञ्जत। भृज्+लट्=भर्जते।

√एजृ, भेजृ, भ्राजृ धातु दीप्त्यर्थक हैं। क्रमशः उदाहरण—लट्–एजते। लिट्—एजाञ्चक्रे। भ्रेजते। लिट्—बिभ्रेजे। भ्राजते। लिट्—बभ्राजे।

√वेष्ट धातु का अर्थ वेष्टन=लपेटना है। वेष्टते। लिट्–विवेष्टे। √चेष्ट धातु चेष्टार्थक है। लट्-चेष्टते। लिट्—चिचेष्टे। √स्फुट का अर्थ विकसित=खिलना है। लट्—स्फोटते। लिट्—पुस्फुटे। √टुवेपृ का अर्थ—काँपना है। वेपते। √कपि धातु गत्यर्थक है। लट्—कम्पते। √भिक्ष धातु भिक्षा के लाभ या अलाभ अर्थ में है। भिक्षते। लिट्—बिभिक्षे। √दीक्ष का अर्थ—मुण्डन करना, इज्या =यज्ञ करना, उपनयन=यज्ञोपवीत धारण करना, नियम एवं व्रतादेश है। लट्—दीक्षते। लिट्—दिदीक्षे। √भाष धातु का अर्थ—स्पष्ट बोलना है। भाषते। लिट्—बभाषे। √वर्ष का अर्थ–बरसना है। लट्—वर्षते। लिट्—ववर्षे। √ईह धातु चेष्टा (चाहना) अर्थ में है। ईहते। लिट्—ईहाञ्चक्रे। √गर्ह और **गल्ह** धातु कुत्सा अर्थ में हैं। गर्हते। गल्हते। √काश्र्‌ धातु दीप्त्यर्थक है। लट्—काशते। √ऊह वितर्क अर्थ में है। ऊहते। लिट्—ऊहाञ्चक्रे।

**कथमिति।** 'अनुक्तमप्यूहति पण्डितो जनः' के 'ऊहति' पद में ऊह् धातु के अनुदात्त होने से आत्मनेपद होना चाहिए। परन्तु 'ऊहति' परस्मैपद का प्रयोग क्यों किया गया? इस शङ्का के समाधान के लिए कहा गया है—'अनुदात्तेत्वलक्षणमात्मनेपदमनित्यम्'। अनुदात्तेत्व प्रयुक्त आत्मनेपद अनित्य होता है। चक्षिङ् धातु में अनुदात्त होने से ही आत्मनेपद सिद्ध था, पुनः ङित् क्यों किया? वह ङित्करण व्यर्थ होकर ज्ञापन करता है—'अनुदात्तेत्वलक्षणम्०'। उससे

'स्फायान्निर्मोकसन्धिरि'त्यादि सिद्धमित्याहुः। अय गतौ। अयते। ( ६०३ ) उपसर्गस्यायतौ ८।२।१९। अयतावुपसर्गरेफस्य लत्वम्। प्लायते। पलायते। ( ६०४ ) दयायासश्च ३।१।३७। एभ्य आम्लिटि। अयाञ्चक्रे। अयिता। अयिष्यते। अयताम्।

---

( ६०३ ) पलायत इति। परा उपसर्गात् अयधातोः लटि, आत्मनेपदे तप्रत्यये 'उपसर्गस्यायतौ' इत्यनेन रकारस्य लकारे पलाय् त इति जाते सार्वधातुकसंज्ञायां शप्यनुबन्धलोपे टेरेत्वे संयोगे च 'पलायते' इति।

( ६०४ ) दयायासश्चेति। दय अय अस् इत्येषां समाहारद्वन्द्वात्पञ्चम्येकवचनम्। 'कास्प्रत्ययादि'त्यतः 'आम् लिटी'त्यनुवर्तते। अत आह—एभ्य आमित्यादि। अयाञ्चक्रे। अयधातोः लिटि 'दयायासश्चे'ति आमि कृते—'अय आम् लिट्' इति जाते 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परके कृञोऽनुप्रयोगे, लिटो लस्य स्थाने तप्रत्यये, तत्स्थाने 'लिटस्तझयोरेशिरेच्' इत्येशि अनुबन्धलोपे, 'लिटि धातोरनभ्यासस्य' इति धातोर्द्वित्वे 'अयाम् कृ कृ ए' इति स्थिते 'पूर्वोऽभ्यासः' इत्यभ्यासत्वे 'उरत्' इति अभ्यासऋवर्णस्याकारे रपरे च कृते हलादिशेषे 'कुहोश्चुः' इति कस्य चत्वे 'इको यणचि' इति यणि, अनुस्वारे परसवर्णे च कृते 'अयाञ्चक्रे' इति।

---

उत्पूर्वक अय धातु से परस्मैपद में 'उदयति' और 'स्फायी वृद्धौ' इस अनुदात्त इत्संज्ञक धातु से लट् के स्थान में 'शतृ' आदेश होने पर 'स्फायान्' रूप सिद्ध होते हैं।

√अय धातु गत्यर्थक है। अयते।

**( ६०३ ) पद**—उपसर्गस्य, अयतौ। **अनुवृत्ति**—रो लः। **विधिसूत्र**।

**मूलार्थ**—अय् धातुपरक उपसर्ग के रेफ को लकार होता है।

**विमर्श**—यहाँ 'कृपो रो लः' (८।२।१८) सूत्र से 'रो लः' की अनुवृत्ति आती है। तदनुसार—अय् धातु के परे रहते उपसर्ग के रेफ को लकारादेश ( =लत्व ) होता है।

**उदाहरण**—( १ ) प्र+अयते ( लट् ) ( र्=ल्—'उपसर्गस्यायतौ' )—प्ल अयते ( अ+अ='आ' दीर्घ )=प्लायते।

( २ ) परा+अयते ( र्=ल् )—पला+अयते ( दीर्घ )=पलायते।

**( ६०४ ) पद**—दयायासः, च। **अनुवृत्ति**—आम्, लिटि। **विधिसूत्र**।

**मूलार्थ**—दय्, अय् और आस् धातुओं से 'आम्' होता है, लिट् के परे रहते। अयाञ्चक्रे इत्यादि।

**विमर्श**—प्रकृत सूत्र में 'कास्प्रत्ययादाममन्त्रे लिटि' ( ३।१।३५ ) सूत्र से 'आम्' और 'लिटि' पदों की अनुवृत्ति आती है। तदनुसार—"लिट् लकार के परवर्ती रहते दय्, अय् तथा आस् धातु से 'आम्' होता है।"

**उदाहरण**—( १ ) अय्+लिट् ( 'आम्'—'दयायासश्च' )—अय् आम् लिट् ( 'आमः' से 'लिट्' का लुक्, लिट्परक √कृ का अनुप्रयोग—'कृञ्चानुप्रयुज्यते लिटि' ल्=प्र० पु० ए० व०—त, त=एश्=ए, धातु को द्वित्व )—अयाम् कृ कृ ए ( अभ्यास संज्ञा, 'उरत्' से ऋ=अ, रपर, हलादिशेष, 'क्'='च्'—'कुहोश्चुः' 'ऋ'='र्'—यण, म्=ं अनुस्वार, परसवर्ण—'वा पदान्तस्य' )=अयाञ्चक्रे। ( २ ) लुट्—अयिता। ( ३ ) लृट्—अयिष्यते। ( ४ ) लोट्—अयताम्। ( ५ ) लङ्—आयत। ( ६ ) विधिलिङ्—अयेत। ( ७ ) आशीर्लिङ्—अयिषीष्ट।

आयत । अयेत । अयिषीष्ट । ( ६०५ ) विभाषेटः ८।३।७९ । इणः परो य इट्, ततः परेषां षीध्वंलुङ्लिटां धस्य वा ढः । अयिषीढ्वम् । अयिषीध्वम् । आयिष्ट । आयिढ्वम् । आयिध्वम् । आयिष्यत । द्युत दीप्तौ । द्योतते । ( ६०६ ) द्युतिस्वाप्योः सम्प्रसारणम् ७।४।६७ । अभ्यासस्य । दिद्युते । द्योतिता । द्योतिष्यते । द्योतताम् ।

---

( ६०५ ) विभाषेट इति । 'इणः षीध्वंलुङ्लिटां धः' इति, 'अपदान्तस्ये'त्यतो मूर्धन्य इति चानुवर्तते । तदाह—इणः पर इत्यादिना । अयिषीढ्वम् । अय्धातोः आशीर्लिङि, लस्य स्थाने मध्यमपुरुषबहुवचने ध्वमि, 'लिङः सीयुट्' इति सीयुडागमेऽनुबन्धलोपे, यकारलोपे, आर्धधातुकत्वात् सलोपाभावे, इडागमेऽनुबन्धलोपे "विभाषेटः' इति विकल्पेन धस्य मूर्धन्यादेशे ढकारे षत्वे 'अयिषीढ्वम्' इति । ढत्वाभावे तु—'अयिषीध्वमि'ति ।

( ६०६ ) द्युतिस्वाप्योरिति । 'अत्र लोपोऽभ्यासस्ये'त्यतः 'अभ्यासस्ये'त्यनुवर्तते । तदाह—अभ्यासस्येति । दिद्युते । द्युत्धातोः 'परोक्षे लिट्' इति लिट्यनुबन्धलोपे, लः स्थाने प्रथमपुरुषगतैकवचने तादेशे 'लिट् चे'त्यार्धधातुकसंज्ञायां तस्य स्थाने एशि,

---

**( ६०५ ) पद**—विभाषा, इटः । **अनुवृत्ति**—इणः षीध्वंलुङ्लिटां धः, अपदान्तस्य मूर्धन्यः । **विधिसूत्र ।**

**मूलार्थ**—इण् से परवर्ती जो इट्, उससे परे षीध्वम् और लुङ्, लिट् के 'ध्' को विकल्प से मूर्धन्य ( ढ् ) आदेश होता है । अयिषीढ्वम् । अयिषीध्वम् इत्यादि ।

**विमर्श**—यहाँ 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्' ( ८।३।७८ ) से 'इणः षीध्वंलुङ्लिटां धः' की अनुवृत्ति आती है । 'अपदान्तस्य मूर्धन्यः' ( ८।३।५५ ) का अधिकार होने से उक्त सूत्रार्थ होता है ।

**उदाहरण**—( १ ) अय्+आशीर्लिङ् ( ल्=म० पु० ब० व०—ध्वम् , सीयुट्=सीय् )—अय् सीय् ध्वम् ( 'य्' का लोप, इट्; 'ध्'='ढ्'—विकल्प से—'विभाषेटः, षत्व )=अयिषीढ्वम् । मूर्धन्यादेश (ढत्व ) के अभावपक्ष में—अयिषीध्वम् । ( २ ) लुङ्—प्र० पु० ए० व०—आयिष्ट । ( ३ ) अय्+लुङ् म० पु० ब० व० में ( विकल्प से 'ध्'='ढ्' )—आयिढ्वम् , आयिध्वम् । ( ४ ) लङ्—आयिष्यत ।

√द्युत धातु का अर्थ दीप्ति ( =चमकना ) है । ( १ ) द्युत्+लट् ( =प्र० पु० ए० व०—त, शप्=अ, 'उ'='ओ'—गुण 'पुगन्तलघूपधस्य च' एत्व—'टित आत्मने०' )=द्योतते ।

**( ६०६ ) पद**—द्युतिस्वाप्योः, सम्प्रसारणम् । **अनुवृत्ति**—अभ्यासस्य । **विधिसूत्र ।**

**मूलार्थ**—द्युत धातु और स्वापि ( णिजन्त ) के अभ्यास को सम्प्रसारण होता है । दिद्युते ।

**विमर्श**—यहाँ 'अत्र लोपोऽभ्यासस्य' ( ७।४।५८ ) से 'अभ्यासस्य' की अनुवृत्ति आती है । अतः द्युत और ण्यन्त स्वप् ( स्वापि ) के अभ्यास को सम्प्रसारण होता है ।

**उदाहरण**—( १ ) द्युत्+लिट् ( =प्र० पु० ए० व०—त, आर्धधातुक संज्ञा, त=एश्=ए, धातु को द्वित्व )—द्युत् द्युत् ए ( अभ्यास संज्ञा, 'य्'='इ'—सम्प्रसारण—'द्युतिस्वाप्योः सम्प्रसारणम्' 'उ' का पूर्वरूप, हलादिशेष )=दिद्युते । ( २ ) लुट्—द्योतिता । ( ३ ) लृट्—द्योतिष्यते । ( ४ ) लोट्—द्योतताम् । ( ५ ) लङ्—अद्योतत । ( ६ ) विधिलिङ्—द्योतेत । ( ७ ) आशीर्लिङ्—द्योतिषीष्ट ।

**अद्योतत । द्योतेत । द्योतिषीष्ट । ( ६०७ ) द्युद्भ्यो लुङि १।३।९१ । द्युतादिभ्यः परस्मैपदं वा स्याल्लुङि । 'पुषादी'त्यङ् । अद्युतत् । अद्योतिष्ट । अद्योतिष्यत । एवम्— श्विता वर्णे । ञिमिदा स्नेहने । ञिष्विदा स्नेहनमोचनयोः । मोहनयोरित्येके । ञिक्ष्विदा चेत्येके । रुच दीप्तावभिप्रीतौ च । घुट परिवर्तने । शुभ दीप्तौ । क्षुभ सञ्चलने । णभ तुभ हिंसायाम् । स्रंसु ध्वंसु भ्रंसु अवस्रंसने । ध्वंसु गतौ च । स्रम्भु विश्वासे । वृतु वर्तने । वर्तते । * ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन * ।**

---

शस्येत्संज्ञायां लोपे च, धातोर्द्वित्वे 'द्युत् द्युत् ए' इति जाते 'पूर्वोऽभ्यासः' इत्यभ्यास-संज्ञायां 'द्युतिस्वाप्योः सम्प्रसारणम्' इत्यभ्यासयकारस्य सम्प्रसारणे इकारे 'सम्प्रसा-रणाच्च' इत्युकारस्य पूर्वरूपे 'दित् द्युत् ए' इति जाते 'हलादिः शेषः' इति तलोपे 'दिद्युते' इति ।

( ६०७ ) **द्युद्भ्यो लुङीति** । 'शेषात्कर्तरि' इत्यतः परस्मैपदमित्यनुवर्तते । **अद्युतत्** । द्युत् धातोर्लुङि, लः स्थाने 'द्युद्भ्यो लुङि' इति परस्मैपदे तिप्यनुबन्धलोपे 'च्लि लुङि' इति च्लौ तस्य 'च्लेः सिच्' इति सिचि प्राप्ते, तं प्रबाध्य 'पुषादिद्युताद्य्-लृदितः' इत्यङादेशेऽनुबन्धलोपे ङित्वाद् गुणाभावे अडागमे 'इतश्चे'ति इकारस्य लोपे 'अद्युतत्' इति रूपम् ।

---

**( ६०७ ) पद**—द्युद्भ्यः, लुङि । **अनुवृत्ति**—परस्मैपदम् , वा । **विधिसूत्र** ।

**मूलार्थ**—द्युतादि से परवर्ती लुङ् को विकल्प से परस्मैपद होता है ।

**विमर्श**—प्रकृत सूत्र में 'शेषात्कर्तरि परस्मैपदम्' ( १।३।७८ ) से 'परस्मैपदम्' तथा 'वा क्यषः' ( १।३।७ ) से 'वा' पद की अनुवृत्ति आती है । तदनुसार—द्युतादि धातुओं से लुङ् को विकल्प से परस्मैपद होता है । 'द्युद्भ्यः' में बहुवचन निर्देश होने से द्युत् से लेकर कृपू पर्यन्त धातुओं का ग्रहण होता है ।

**उदाहरण**—( १ ) द्युत्+लुङ् ( =प्र० पु० ए० व० 'द्युद्भ्यो लुङि' से विकल्प से परस्मैपद होने पर तिप्=ति )—द्युत् ति ( च्लि, च्लि को प्राप्त सिच् आदेश का बाधकर 'च्लि'='अङ्'—'पुषादि०', अडागम, 'इ' का लोप—'इतश्च' )=अद्युतत् । परस्मैपद के अभावपक्ष में आत्मने-पद—अद्योतिष्ट । ( २ ) लृङ्—अद्योतिष्यत ।

√श्विता धातु का अर्थ—श्वेत रंग में रंगना है । श्वेतते इत्यादि । √ञिमिदा का अर्थ—'चिकना होना' है । मेदते इत्यादि । √ञिष्विदा ( =स्विद् ) का अर्थ—पसीना आना और छोड़ना है । कुछ विद्वान् इसका अर्थ 'मोहित होना' कहते हैं । लट्—स्वेदते । कुछ आचार्य **'ञिष्विदा'** के स्थान पर **'ञिक्ष्विदा'** पाठ बतलाते हैं ।

√रुच् का अर्थ—'चमकना और अच्छा लगना' है । रोचते । √घुट का अर्थ—'घोंटना' है । घोटते । √शुभ का अर्थ—'चमकना, शोभित होना' है । शोभते । √क्षुभ का अर्थ—'व्याकुल होना, विचलित होना' है । क्षोभते । √णभ, तुभ का अर्थ—'हिंसा करना' है । नभते । तोभते । √स्रंसु, ध्वंसु और भ्रंसु ( उदित् ) का अर्थ—'गिरना' है । स्रंसते । भ्रंसते । ध्वंसते इत्यादि । √ध्वंसु धातु का अर्थ—'जाना' भी है । √स्रम्भ का अर्थ—'विश्वास करना' है । स्रम्भते ।

√वृत् का अर्थ—'होना' है । ( १ ) वृत्+लट् ( =प्र० पु० ए० व०—त, शप्=अ, 'ऋ' ='अ'—गुण, रपर 'टि' को एत्व )=वर्तते ।

ववृते। वर्तिता (६०८) **वृद्भ्यः स्यसनोः १।३।९२।** वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं, स्ये सनि च। (६०९) **न वृद्भ्यश्चतुर्भ्यः ७।२।५९।** वृतुवृधुशृधुस्यन्दूभ्यः सादेरार्धधातुकस्येण्न स्यात्तङानयोरभावे। वत्स्यति। वर्तिष्यते। वर्तताम्। अवर्तत। वर्तेत। वर्तिषीष्ट। अवृतत्। अवर्तिष्ट। अवर्त्स्यत्। अवर्तिष्यत। एवं—वृधु वृद्धौ।

---

(६०८) **वृद्भ्य इति।** अत्र 'शेषात्कर्तरी'त्यतः परस्मैपदम्, 'वा क्यषः' इत्यतो वेति चानुवर्तते। तदाह—**वृतादिभ्य इति।**

(६०९) **न वृद्भ्य इति।** 'सेऽसिची'त्यतः 'से' इति 'आर्धधाकतुस्येड् वलादेः' इत्यत 'आर्धधातुकस्येड्' इति चानुवर्तते। तदाह—**एभ्य इत्यादि।** **वत्स्यति।** वृत्

---

**ऋदुपधेभ्यः०**—ऋदुपध (ह्रस्व ऋकार है उपधा में जिनके, ऐसी) धातुओं से परवर्ती जो लिट् (लिट्स्थानिक आदेश), उसको गुणप्राप्ति से पूर्व ही (पूर्वविप्रतिषेध से) कित्त्व हो जाता है।

**उदाहरण**—(२) वृत्+लिट् (=प्र० पु० ए० व०—त, त=एश्=ए)—वृत् ए (धातु को द्वित्व, अभ्यास संज्ञा, ऋ=अ—'उरत्' रपर, हलादिशेष)—व वृत् ए ('पुगन्त०' से गुण की प्राप्ति, 'ऋदुपधेभ्यो०' से लिट् के कित् होने से 'क्ङिति च' से गुण का निषेध)=ववृते। (३) वृत्+लुट् (=प्र० पु० ए० व०—त, तास्, इट्, गुण, रपर, त=डा=आ, टिलोप) =वर्तिता।

(६०८) **पद**—वृद्भ्यः, स्यसनोः। **अनुवृत्ति**—परस्मैपदम्, वा। **विधिसूत्र।**

**मूलार्थ**—वृत् आदि पाँच धातुओं[1] से विकल्प से परस्मैपद होता है, 'स्य' और 'सन्' के परवर्ती रहने पर।

**विमर्श**—यहाँ शेषात्कर्तरि परस्मैपदम्' (१।३।७८) से 'परस्मैपदम्' तथा 'वा क्यषः' (१।३।९०) से 'वा' पद की अनुवृत्ति आती है। तदनुसार—'स्य' और 'सन्' के परवर्ती रहने पर वृत् आदि पाँच धातुओं से विकल्प से परस्मैपद होता है।

(६०९) **पद**—न, वृद्भ्यः, चतुर्भ्यः। **अनुवृत्ति**—परस्मैपदेषु, से, आर्धधातुकस्येड्। **विधिसूत्र** (निषेध)।

**मूलार्थ**—वृत् आदि चार धातुओं से परवर्ती सकारादि आर्धधातुक को 'इट्' नहीं होता, 'तङ्' और 'आन' (शानच्, कानच्) के अभाव में अर्थात् परस्मैपद में।

**विमर्श**—प्रकृत सूत्र में 'गमेरिट् परस्मैपदेषु' (७।२।५८) से 'परस्मैपदेषु' 'सेऽसिचि०' (७।२।५७) से 'से' तथा 'आर्धधातु०' (७।२।३५) से 'आर्धधातुकस्येड्' की अनुवृत्ति आने पर पूर्वोक्त अर्थ सम्पन्न होता है।

**उदाहरण**—(१) वृत्+लृट् (=प्र० पु० ए० व०—'वृद्भ्यः स्यसनोः' से विकल्प से परस्मैपद होने पर—तिप्='ति' स्य—'स्यतासी०')—वृत् स्य ति ('आर्धधातुकस्येड् वलादेः' से 'इट्' की प्राप्ति, उसका 'न वृद्भ्यश्चतुर्भ्यः' से निषेध, लघूपधगुण, रपर)=वर्त्स्यति। परस्मैपद के अभावपक्ष में आत्मनेपद—वर्तिष्यते। (२) लोट्—वर्तताम्। (३) लङ्—अवर्तत। (४) विधिलिङ्—वर्तेत। (५) आशीर्लिङ्—वर्तिषीष्ट। (६) लुङ्—अवृतत्, अवर्तिष्ट (यहाँ 'द्युद्भ्यो लुङि' से विकल्प से परस्मैपद होने से 'च्लि' को 'पुषादि०' से 'अङ्' होने पर 'अवृतत्') (७) लृङ्—अवर्त्स्यत्, अवर्तिष्यत। (विकल्प से परस्मैपद)। उपसर्ग के योग में √वृत से—

---

१. 'वृतु, वृधु, शृधु, स्यन्दू और कृपू' ये पाँच धातु वृतादि हैं।

शृधु शब्दकुत्सायाम् । स्यन्दू प्रस्रवणे । स्यन्दते । सस्यन्दे । सस्यन्दिषे । सस्यन्त्से । सस्यन्दिध्वे । सस्यन्ध्वे । स्यन्दिता । स्यन्ता । 'वृद्भ्यः स्यसनोरि'ति परस्मैपदे कृते ऊदिल्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यान्न वृद्भ्य इति निषेधः । स्यन्त्स्यति । स्यन्दिष्यते । स्यन्त्स्यते । स्यन्देत । स्यन्दिषीष्ट । स्यन्त्सीष्ट । 'द्युद्भ्यो लुङी'ति परस्मैपदपक्षेऽङ् । नलोपः । अस्यदत् । अस्यन्दिष्ट । अस्यन्त । अस्यन्त्साताम् । अस्यन्त्सत । अस्यन्त्थाः । अस्यन्दध्वम् । अस्यन्त्सि । अस्यन्त्स्यत् । अस्यन्दिष्यत । अस्यन्त्स्यत । ( ६१० ) अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ८।३।७२ । एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा । अनुष्यन्दते, अनुस्यन्दते वा जलम् ।

---

धातोर्लृटि, 'वृद्भ्यः स्यसनोः' इति वा परस्मैपदे लः स्थाने प्रथमपुरुषगतैकवचने तिप्यनुबन्धलोपे, 'स्यतासी लृलुटोः' इति स्ये, आर्धधातुकत्वे 'आर्धधातुकस्येड् वलादेः' इतीडागमे प्राप्ते 'न वृद्भ्यश्चतुर्भ्यः' इति तन्निषेधे, लघूपधगुणे रपरे च कृते 'वर्त्स्यति' इति । परस्मैपदाभावे आत्मनेपदपक्षे 'वर्तिष्यते' इति रूपम् ।

( ६१० ) अनुविपर्यभिनिभ्य इति । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्त-

---

लट्—प्रवर्तते ( =प्रवृत्त होता है ), अनुवर्तते ( =पीछे चलता है ), प्रत्यावर्तते=( लौटता है ), परिवर्तते ( =बदलता है ) तथा निवर्तते ( =विरत होता है, लौटता है ) इत्यादि रूप बनते हैं ।

√वृधु धातु का अर्थ—'बढ़ना' है । वर्धते । √शृधु का अर्थ—'कुत्सित शब्द निकलना' है । शर्धते ।

√स्यन्दू धातु का अर्थ—'प्रस्रवण=चूना, रिसना' है । लट्—स्यन्दते । लिट्—सस्यन्दे । लिट्—म० पु० ए० व० में ( थास्=से, धातु को द्वित्व, अभ्यास संज्ञा, हलादिशेष, विकल्प से इट्—'स्वरतिसूति०', षत्व )=सस्यन्दिषे । इट् के अभावपक्ष में—सस्यन्द् से ( 'द्'='त्'—'चर्त्व' )=सस्यन्त्से । लिट् म० पु० ब० व० ( ध्वम्, द्वित्वादि कार्य, विकल्प से इट्, एत्व )= सस्यन्दिध्वे । इडभाव पक्ष में—सस्यन्ध्वे । लुट्—प्र० पु० ए० व० ( त, तास्, विकल्प से इट्, त=डा=आ, टिलोप )=स्यन्दिता । इट् न होने पर चर्त्व—स्यन्ता । लृट् लकार में 'वृद्भ्यः स्यसनोः' से वैकल्पिक परस्मैपद होने पर ऊदित्लक्षण 'स्वरतिसूति०' से अन्तरङ्ग वैकल्पिक इट् नहीं हुआ, किन्तु बहिरङ्ग 'न वृद्भ्यश्चतुर्भ्यः' ने वैकल्पिक इट् का बाध किया । इसमें प्रमाण सूत्रस्थ चतुर्ग्रहण ही है । अन्यथा वैकल्पिक इट् बोधन करने पर उसका वैयर्थ्य स्पष्ट ही है । अतः परस्मैपद पक्ष में केवल एक ही रूप—स्यन्त्स्यति । आत्मनेपद में वैकल्पिक इट्—स्यन्दिष्यते । इडभाव पक्ष में—स्यन्त्स्यते । विधिलिङ्—स्यन्देत । आशीर्लिङ्—वै० इट्—स्यन्दिषीष्ट, स्यन्त्सीष्ट । लुङ्—प्र० पु० ए० व०—'द्युद्भ्यो लुङि' से परस्मैपद पक्ष में ( तिप्=ति, अडागम, च्लि=अङ्=अ, नलोप, इकारलोप )=अस्यदत् । आत्मनेपद पक्ष में—विकल्प से इट्—अस्यन्दिष्ट । इट् न होने पर—अस्यन्त । लृङ्—प्र० पु० ए० व०—परस्मैपद में इट् न होने पर—अस्यन्त्स्यत् । आत्मनेपद पक्ष में—अस्यन्दिष्यत । अस्यन्त्स्यत ।

**( ६१० ) पद**—अनुविपर्यभिनिभ्यः, स्यन्दते अप्राणिषु । **अनुवृत्ति**—सः । **विधिसूत्र** ।

**मूलार्थ**—अनु, वि, परि, अभि और नि उपसर्गों से परवर्ती अप्राणिकर्तृक 'स्यन्द्' धातु के सकार को विकल्प से षत्व होता है । अनुष्यन्दते अनुस्यन्दते वा जलम् इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'सहेः साडः सः' ( ८।३।५६ ) से 'सः' की अनुवृत्ति आती है । 'अपदान्तस्य मूर्धन्यः' ( ८।३।५५ ) का अधिकार है । तदनुसार पूर्वोक्त सूत्रार्थ निष्पन्न होता है ।

अप्राणिषु किम् ? अनुस्यन्दते हस्ती । कृपू सामर्थ्ये । ( ६११ ) कृपो रो लः ८।२।१८। कृपः उः रः लः इति च्छेदः । कृपेः रेफस्य लः । कृपेर्ऋकारस्यावयवो यो रः=रेफसदृशस्तस्य च लः=लकारसदृशः स्यात् । कल्पते । चक्लृपे । चक्लृपिषे । चक्लृप्से । इत्यादि 'स्यन्दि'वत् । ( ६१२ ) लुटि च क्लृपः १।३।९३ । लुटि स्यसनोश्च क्लृपेः परस्मैपदं

---

मनुवर्तते । 'अपदान्तस्य मूर्धन्यः' इत्यधिकाराल्लभ्यते । तदाह—एभ्य इत्यादिना । अनुष्यन्दत इति । अनूपसर्गपूर्वकात् स्यन्द धातोर्लटि, तत्स्थाने 'त' इत्यादेशे, शपि, टेरेत्वे, 'अनुविपर्यभिनिभ्यः०' इति विकल्पेन षत्वे 'अनुष्यन्दते' इति । षत्वाभावे तु—'अनुस्यन्दते' इति रूपम् ।

( ६११ ) कृपो रो ल इति । कृप इति लुप्तविभक्तिकं पदम् । ऋकारस्य षष्ठ्येकवचने 'उः' इति रूपम् । रः इति षष्ठ्यन्तम् । कल्पत इति । 'कृपू सामर्थ्ये' इत्यस्माद्धातोः लटि तत्स्थाने 'त' इति प्रत्यये, शपि, 'पुगन्त०' इति गुणे, रपरत्वे 'क र् प् अ त' इति जाते 'कृपो रो लः' इति रस्य लत्वे टेरेत्वे कृते 'कल्पते' इति ।

( ६१२ ) लुटि चेति । अत्र चकारात् 'वृद्भ्यः स्यसनोः' इत्यतः स्यसनोरित्यनुकृष्यते । 'शेषात्कर्तरि' इत्यतः परस्मैपदमिति, 'वा क्यषः' इत्यतो वेति च । तदाह—**लुटि स्यसनोरित्यादिना ।**

---

**उदाहरण**—( १ ) अनु+स्यन्द्+लट् ( =प्र० पु० ए० व०—त, शप्=अ, एत्व, 'स्'='ष्' विकल्प से—'अनुविपर्यभिनिभ्यः०' )=अनुष्यन्दते । षत्वाभाव पक्ष में—अनुस्यन्दते वा जलम् । अर्थ—जल बहता है । यहाँ प्राणिभिन्न जल अचेतन कर्ता है । अतः षत्व हुआ । सूत्र में अप्राणिषु=चेतन न हो—कहा गया है, अतः 'अनुस्यन्दते हस्ती'=हाथी पसीज रहा है । यहाँ षत्व नहीं हुआ ।

√कृपू धातु का अर्थ—'सामर्थ्य=समर्थ, दक्ष होना' है ।

**( ६११ ) पद**—कृपः, रः, लः । **विधिसूत्र ।**

**मूलार्थ**—कृप् धातु के रेफ को लकार आदेश होता है । तथा 'कृप्' के ऋकारावयव जो रेफ सदृश भाग, उसको लकार सदृश आदेश होता है । कल्पते इत्यादि ।

**विमर्श**—सूत्रार्थ स्पष्ट है । 'कृप उः' ऐसा पदच्छेद है । 'कृप' यह लुप्तषष्ठीक पद है ।

**उदाहरण**—( १ ) कृप्+लट् ( =प्र० पु० ए० व०—त, शप्=अ, 'पुगन्त०' से गुण ऋ=अ, रपर )—क र् प् अ त ( 'र्'='ल्'—'कृपो रो लः' 'टि' को एत्व )=कल्पते । ( २ ) कृप्+लिट् ( =प्र० पु० ए० व०—त, त=एश्=ए, धातु को द्वित्व, अभ्यास संज्ञा, उरत्, रपर, हलादि शेष, 'क्'='च्'—कुहोश्चुः )—च कृ प् ए ( ऋकारावयव रेफसदृश को लकार सदृश लकार—'कृपो रो लः' )=चक्लृपे । ( २ ) कृप्+लिट् ( =म० पु० ए० व०—थास्=से, द्वित्व, अभ्यासादि कार्य, इट् पक्ष में—लत्व, षत्व )=चक्लृपिषे । इट् न होने पर—चक्लृप्से । अन्य रूप 'स्यन्द्' धातु के समान बनेंगे ।

**( ६१२ ) पद**—लुटि, च, क्लृपः । **अनुवृत्ति**—स्यसनोः, वा, परस्मैपदम् । **विधिसूत्र ।**

**मूलार्थ**—लुट् 'स्य' और 'सन्' के परवर्ती रहने पर कृप् धातु से विकल्प से परस्मैपद होता है ।

**विमर्श**—यहाँ 'वृद्भ्यः स्यसनोः' ( ६०९ ) से 'स्यसनोः' 'वा क्यषः' ( १।३।९० ) से 'वा' तथा 'शेषात्कर्तरि परस्मैपदम्' ( १।३।७८ ) से 'परस्मैपदम्' पदों की अनुवृत्ति आती है । तद-

वा । ( ६१३ ) तासि च क्लृपः ७।२।६० । क्लपेः परस्य तासेः, सादेरार्द्धधातुकस्येण्न, तङानयोरभावे । कल्प्तासि । कल्पितासे । कल्प्तासे । कल्प्स्यति । कल्पिष्यते । कल्प्स्यते । कल्पिषीष्ट । ( ६१४ ) लिङ्सिचावात्मनेपदेषु १।२।११ । इक्समीपाद्धलः परौ झलादी लिङ्, आत्मनेपदपरः सिच्चेत्येतौ कितौ स्तः । क्लृप्सीष्ट । अक्लृपत् । अकल्पिष्ट । अक्लृप्त । अकल्प्स्यत् । अकल्पिष्यत । अकल्प्स्यत । इति द्युतादयः ।

---

( ६१३ ) तासि चेति । 'सेऽसिचि०' इत्यतः से इति 'आर्धधातुकस्य' इत्यतः आर्धधातुकस्येडिति चानुवर्तते । 'न वृद्भ्यः' इत्यतो नेति, 'गमेरिट्' इत्यतः परस्मैपदमिति चानुवर्तते । तदाह—क्लृपेः परस्येति । कल्प्तासि । कृप्धातोर्लुटि 'लुटि च क्लृपः' इति वैभाषिके परस्मैपदे सिपि, तासि, 'स्वरति' इति वैभाषिकेडागमे प्राप्ते 'तासि च क्लृपः' इति इडागमाभावे 'पुगन्तलघूपधस्य चे'ति गुणे रपरत्वे 'कृपो रो लः' इति लत्वे 'कल्प्तासि' । आत्मनेपदे तु—थासि, 'थासः से' इति 'से' आदेशे तासि, 'स्वरती'ति वेटि, कल्पितासे । इडभावपक्षे—'कल्प्तासे' इति रूपद्वयम् ।

( ६१४ ) लिङ्सिचाविति । इक्समीपादिति, झलादीति, किदिति चानुवर्तते । कल्पिषीष्ट, क्लृप्सीष्ट इति । कृप्धातोः आशिषि लिङि लस्य स्थाने आत्मनेपदे तप्रत्यये

---

नुसार—"लृट् लकार में 'स्य' एवं 'सन्' प्रत्यय के विषय में क्लृप् से परे लकार के स्थान में परस्मैपदसंज्ञक प्रत्यय आदेश विकल्प से होते हैं" ।

**( ६१३ ) पद**—तासि, च, क्लृपः । **अनुवृत्ति**—न, से, आर्धधातुकस्येट् । **विधिसूत्र ( निषेध )।**

**मूलार्थ**—क्लृप् से परवर्ती तास् और सादि आर्धधातुक को इट् नहीं होता, तङ् और आन ( शानच्-कानच् ) के अभाव में ।

**विमर्श**—इस सूत्र में—'न वृद्भ्यश्चतुर्भ्यः' ( ७।२।५९ ) से 'न', 'सेऽसिचि०' ( ७।२।५७ ) से 'से' और 'आर्धधातुकस्येड् वलादेः' ( ७।२।३५ ) से 'आर्धधातुकस्येट्' पदों की अनुवृत्ति आती है । अतः क्लृप् से परवर्ती तास् तथा सकारादि आर्धधातुक को इट् का आगम नहीं होता, परस्मैपद के परे रहते ।

**उदाहरण**—( १ ) √कृप्+लुट् ( प्राप्त आत्मनेपद का बाधकर 'लुटि च क्लृपः' से विकल्प से परस्मैपद होने पर म० पु० ए० व०—सिप्='सि', तास्, 'स्वरति०' से विकल्प से इट् की प्राप्ति 'तासि च क्लृपः' से निषेध 'पुगन्त०' से 'ऋ'='अ'—गुण, रपर, 'र्'='ल्'—'कृपो रो लः' )= कल्प्तासि । आत्मनेपद पक्ष में ( थास्=से, तास्, विकल्प से इट्, गुण, रपर, लत्व )=कल्पितासे । इडभाव पक्ष में—कल्प्तासे ।

( २ ) लृट् में परस्मैपद होने पर प्र० पु० ए० व०—( तिप्=ति, स्य, विकल्प से इट् की प्राप्ति, 'तासि च क्लृपः' से निषेध, गुण, रपर, लत्व )=कल्प्स्यति । परस्मैपद के अभावपक्ष में—विकल्प से इट्—कल्पिष्यते-कल्प्स्यते ।

**( ६१४ ) पद**—लिङ्सिचौ, आत्मनेपदेषु । **अनुवृत्ति**—हलन्तात्, इको झल्, कित् । **अतिदेश सूत्र ।**

**मूलार्थ**—इक् समीप हल् से परवर्ती जो झलादि लिङ् और आत्मनेपदपरक सिच्, ये दोनों कित् होते हैं । क्लृप्सीष्ट इत्यादि ।

## अथात्मनेपदम्

**दद दाने। ददते। ददद्दे। ददद्दाते। दददिरे। ददिता। ददिष्यते। ददताम्। अददत। ददेत। ददिषीष्ट। अददिष्ट। अददिष्यत। त्रपूष् लज्जायाम्। त्रपते।**

---

'लिङः सीयुट्' इति सीयुडागमेऽनुबन्धलोपे, 'सुट् तिथोः' इत्यनेन सुटि, अनुबन्धलोपे 'कृप् सीय् स् त' इति जाते आर्धधातुकसंज्ञायाम् 'पुगन्तलघूपधस्य चे'ति गुणे रपरे 'कृपो रो लः' इति रकारस्य लकारे 'स्वरतिसूति॰' इत्यादिना विकल्पेन इडागमे 'आदेशप्रत्यययोः' इत्यनेनोभयोः सकारयोः षत्वे 'ष्टुना ष्टुः' इत्यनेन ष्टुत्वे 'लोपो व्योर्वलि' इति यकारलोपे संयोगे 'कल्पिषीष्ट' इति। इडभावपक्षे तु—'क्लृप् सीय् स् त' इति जाते यलोपे, 'आदेशप्रत्यययोः' इत्यनेन सस्य षत्वे 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वे 'क्ङिति चे'त्यनेन गुणनिषेधे 'क्लृप्सीष्ट' इति सिद्धम्।

**दद दाने।** दानञ्च—स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोपादानम्। **ददद्दे।** दद्धातोर्लिटि, तत्स्थाने प्रथमपुरुषैकवचने तादेशे, 'त' इत्यस्य स्थाने 'लिटस्तझयोरेशिरेच्' इत्यनेन एशादेशेऽनुबन्धलोपे, द्वित्वेऽभ्यासकार्ये च जाते, 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्येत्वेऽभ्यासलोपे च प्राप्ते 'न शशददवादिगुणानाम्' इति निषेधे 'ददद्दे' इति रूपम्।

---

**विमर्श**—प्रकृत सूत्र में 'इको झल्' (१।२।९) सूत्र, 'हलन्ताच्च' (१।२।१०) से हलन्तात् और 'असंयोगाल्लिट् कित्' (१।२।५) से 'कित्' की अनुवृत्ति आ रही है। तदनुसार—इक् के समीप जो हल्, उससे परवर्ती झलादि लिङ् और सिच् आत्मनेपद के विषय में किद्वत् होते हैं।

**उदाहरण**—(१) √कृप्+आशीर्लिङ् (=प्र० पु० ए० व०—त, 'सीयुट्'='सीय्', सुट्='स्') —कृप् सीय् स् त (गुण, रपर, लत्व—'कृपो रो लः', विकल्प से 'इट्'—'स्वरतिसूति॰', षत्व, ष्टुत्व, यकार का लोप—'लोपो व्योः॰')=कल्पिषीष्ट। इट् के अभाव पक्ष में—कृप् सी स् त (लत्व, 'पुगन्तलघूपधस्य च' से गुण की प्राप्ति, 'लिङ्सिचावात्मनेपदेषु' से लिङ् के किद्वत् होने से 'क्ङिति च' से गुणनिषेध, षत्व, ष्टुत्व)=क्लृप्सीष्ट। (२) √कृप् 'द्युद्भ्यो लुङि' से परस्मैपद पक्ष में—तिप्=ति, इकारलोप, च्लि='अङ्'='अ'—'पुषादिद्युतादि॰' अडागम, लत्व, ङित् होने से गुण का अभाव=अक्लृपत्। आत्मनेपद पक्ष में (च्लि=सिच्='स्', विकल्प से इट्—'स्वरतिसूति॰')—अ क्लृप् इ स त ('पुगन्त॰' से गुण, षत्व, ष्टुत्व)=अकल्पिष्ट। इट् के अभावपक्ष में—अक्लृप् स् त ('स्' का लोप—'झलो झलि')=अक्लृप्त। (३) लृङ् में भी तीन रूप बनते हैं—अकल्प्स्यत् (परस्मैपद पक्ष में), अकल्पिष्यत, अकल्प्स्यत।

**द्युतादिगण समाप्त।**

---

√दद धातु का अर्थ—'देना' है। (१) लट्, प्र० पु० ए० व०—ददते।

**√दद् धातु लट् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | ददते | ददेते | ददन्ते |
| म० पु० | ददसे | ददाथे | ददध्वे |
| उ० पु० | ददे | ददावहे | ददामहे |

**( ६१५ ) तॄफलभजत्रपश्च ६।४।१२२।** **एषामत एत्वमभ्यासलोपश्च, किति लिटि, सेटि थलि च। त्रेपे।** त्रपिता। त्रप्ता। त्रपिष्यते। त्रप्स्यते। त्रपताम्। अत्रपत। त्रपेत। त्रपिषीष्ट। त्रप्सीष्ट। अत्रपिष्ट। अत्रप्त। अत्रपिष्यत। अत्रप्स्यत। घट चेष्टायाम्। घटते। जघटे। व्यथ भयसञ्चलनयोः। व्यथते। **( ६१६ ) व्यथो लिटि ७।४।६८। व्यथेरभ्यासस्य सम्प्रसारणं स्याल्लिटि परे। हलादिः शेषापवादः। विव्यथे।**

---

( ६१५ ) तॄफलभजत्रपश्चेति। 'अत एकहल्मध्ये' इत्यत अत इति, लिटीति चानुवर्तते। 'घ्वसोरेद्धावभ्यासलोपश्चे'त्यतः एदिति, अभ्यासलोपश्चेति च, 'गमहन' इत्यतः कितीति, 'थलि च सेटि' इति सूत्रश्चानुवर्तते। तदाह—**एषामत इत्यादि। त्रेपे।** त्रप्धातोर्लिटि तत्स्थाने प्रथमपुरुषगतैकत्वविवक्षायां तप्रत्यये, तस्य स्थाने 'लिटस्तझयोरेशिरेच्' इति एशि, अनुबन्धलोपे धातोर्द्वित्वेऽभ्यासत्वे 'तॄफलभजत्रपश्चे'त्यनेन त्रप अकारस्यैत्वे अभ्यासलोपे च कृते 'त्रेपे' इति।

( ६१६ ) **व्यथो लिटीति।** अत्र अभ्यासस्येति सम्प्रसारणमिति चानुवर्तते। तदाह—

---

( २ ) दद्+लिट् ( =त=एश्='ए', द्वित्व, अभ्यास संज्ञा, 'अत एकहल्मध्येऽनादेशादेर्लिटि' से एत्व और अभ्यासलोप की प्राप्ति, उसका 'न शसददवादिगुणानाम्'-से निषेध, हलादिशेष ) =दददे। ( ३ ) लिट् प्र० पु० द्वि० व०—दददाते। ( ४ ) लिट्—प्र० पु० ब० व०—दददिरे। ( ४ ) लुट्—ददिता। ( ५ ) लृट्—ददिष्यते। ( ६ ) लोट्—ददताम्। ( ७ ) लङ्—अददत। ( ८ ) विधिलिङ्—ददेत। ( ९ ) आशीर्लिङ्—ददिषीष्ट। ( १० ) लुङ्—अददिष्ट। ( ११ ) लृङ्—अददिष्यत।

√त्रपूष् ( =त्रप् ) धातु का अर्थ 'लज्जित होना' है।

**( ६१५ ) पद—**तॄफलभजत्रपः, च। **अनुवृत्ति—**अतः, लिटि, एत्, अभ्यासलोपः, किति, थलि च सेटि। **विधिसूत्र।**

**मूलार्थ—**तॄ, फल, भज् और त्रप्—इन धातुओं के अत् को एत्व और अभ्यास का लोप होता है, कित् लिट् और सेट् थल् के परवर्ती रहने पर। त्रेपे इत्यादि।

**विमर्श—**सूत्रार्थ की पूर्णता के लिए—'अत एकहल्मध्येऽनादेशादेर्लिटि' ( ६।४।१२० ) सूत्र से 'अतः' 'लिटि' 'घ्वसोरेद्धावभ्यासलोपश्च' ( ६।४।११९ ) से 'एत्' और 'अभ्यासलोपः' 'गमहन०' से 'किति' तथा 'थलि च सेटि' ( ६।४।१२१ ) सूत्र की अनुवृत्ति आती है। तदनुसार—तॄ ( =तैरना ), फल् ( =फलना ), भज् ( =सेवा करना ) और त्रप् ( =लज्जित होना ) धातुओं के ह्रस्व अकार को एत्व और अभ्यास का लोप होता है, कित् लिट् और सेट् थल् के परे रहते।

**उदाहरण—**( १ ) त्रप्+लिट् ( =त=एश्='ए' द्वित्व, अभ्यास संज्ञा, 'अ'='ए', अभ्यास का लोप—'तॄफलभजत्रपश्च' )=त्रेपे। ( २ ) त्रप्+लुट् ( =त=डा='आ', तास् )—त्रप् तास् आ ( विकल्प से इट्—'स्वरतिसूतिसूयति०', टिलोप )=त्रपिता। इट् के अभावपक्ष में—त्रप्ता। ( ३ ) लृट्—त्रपिष्यते, त्रप्स्यते। ( ४ ) लोट्—त्रपताम्। ( ५ ) लङ्—अत्रपत। ( ६ ) विधिलिङ्—त्रपेत। ( ७ ) आशीर्लिङ्—त्रपिषीष्ट, त्रप्सीष्ट ( विकल्प से इट् )। ( ८ ) लुङ्—अत्रपिष्ट, अत्रप्त। ( ९ ) लृङ्—अत्रपिष्यत, अत्रप्स्यत।

√घट् धातु का अर्थ—'चेष्टा करना' है। ( १ ) लट्—घटते। ( २ ) लिट्—जघटे।

√व्यथ धातु भय एवं सञ्चलन ( =दुःखी होना ) अर्थ में है। ( १ ) लट्—व्यथते।

**( ६१६ ) पद—**व्यथः, लिटि। **अनुवृत्ति—**अभ्यासस्य, सम्प्रसारणम्। **विधिसूत्र।**

प्रथ प्रख्याने । प्रथते । पप्रथे । प्रस विस्तारे । प्रसते । पप्रसे । म्रद मर्दने । म्रदते । स्खद स्खदने । स्खदनं—विद्रावणम् । स्खदते । क्रप कृपायाम्, गतौ च । क्रपते । ञित्वरा सम्भ्रमे । त्वरते । टुभ्राजृ, टुभ्राशृ, टुभ्लाशृ दीप्तौ । भ्राजते । ( ६१७ ) **फणां च सप्तानाम् ६।४।१२५'।** फण्-राज्-भ्राज्-भ्राशृ-भ्लाशृ-स्यमु-स्वन् एषां वा एत्वाभ्यासलोपौ स्तः, किति लिटि, सेटि थलि च । भ्रेजे । बभ्राजे । 'वा भ्राशे'ति

---

**व्यथेरभ्यासस्येति ।** **विव्यथ इति ।** व्यथ्धातोर्लिटि तत्स्थाने तप्रत्यये 'लिटि धातोरनभ्यासस्ये'ति द्वित्वेऽभ्यासत्वे 'हलादिः शेषः' इति सूत्रमपवादत्वात् बाधित्वा 'व्यथो लिटि' इत्यनेन सम्प्रसारणे व् इ थ् व्यथ् त इति जाते 'हलादिः शेषः' इति थकारलोपे 'लिटस्तझयोः' इति 'त' इत्यस्य स्थाने एशादेशेऽनुबन्धलोपे 'विव्यथे' इति ।

( ६१७ ) **फणां चेति ।** फणामिति षष्ठीबहुवचनम् । एत्वाभ्यासलोपौ, किति लिटीति चानुवर्तते । **भ्रेज** इति । 'टु भ्राजृ दीप्तौ' इत्यस्माद्धातोः अनुबन्धलोपे लिटि प्रथमपुरुषैकवचने तप्रत्यये तस्य 'लिटस्तझयोरेशिरेच्' इत्यनेन एशादेशेऽनुबन्धलोपे

---

**मूलार्थ**—लिट् के परवर्ती रहते व्यथ् धातु को सम्प्रसारण होता है । 'हलादिः शेषः' का यह अपवाद है । विव्यथे इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'अत्र लोपोऽभ्यासस्य' ( ७।४।५८ ) से 'अभ्यासस्य' तथा 'द्युतिस्वाप्योः सम्प्रसारणम्' ( ७।४।६७ ) से 'सम्प्रसारणम्' पद की अनुवृत्ति आती है । तदनुसार—'लिट् के परे रहते व्यथ् धातु के अभ्यास को सम्प्रसारण होता है' ।

**उदाहरण**—( १ ) व्यथ्+लिट् ( =त, धातु को द्वित्व, अभ्यास संज्ञा, 'हलादिः शेषः' का बाधकर, 'य्'='इ'—सम्प्रसारण—'व्यथो लिटि', हलादिशेष, त=एश्='ए' )=विव्यथे ।

√प्रथ का अर्थ 'बोधन करना' है । ( १ ) लट्—प्रथते । ( २ ) लिट्—पप्रथे ।

√प्रस् धातु का अर्थ—'विस्तार करना' है । ( १ ) लट्—प्रसते । ( २ ) लिट्—पप्रसे ।

√म्रद का अर्थ—'मर्दन करना' है । ( १ ) लट्—म्रदते ।

√स्खद् का अर्थ—विद्रावण='बिगाड़ना' है । लट्—स्खदते ।

√क्रप् का अर्थ—'कृपा करना, जाना' है । लट्—क्रपते ।

√ञित्वरा का अर्थ—'घबरा कर शीघ्रता करना' है । लट्—त्वरते ।

√टुभ्राजृ, टुभ्राशृ, टुभ्लाशृ का अर्थ—दीप्ति='चमकना' है । 'टु' इत् का फल है 'ट्वितोऽथुच्' । ( १ ) भ्राज्+लट्=भ्राजते ।

**( ६१७ ) पद**—फणां, च, सप्तानाम् । **अनुवृत्ति**—वा, अतः, लिटि, एत्, अभ्यासलोपः, किति, थलि च सेटि । **विधिसूत्र ।**

**मूलार्थ**—फण् आदि सात धातुओं को एत्व और अभ्यास का लोप विकल्प से होता है, कित् लिट् और सेट् थल् परे रहते । भ्रेजे । बभ्राजे इत्यादि ।

**विमर्श**—सूत्रार्थ की पूर्ति हेतु—'वा जृभ्रमुत्रसाम्' ( ६।४।१२४ ) से 'वा', 'अत एकहल्मध्ये' ( ६।४।१२० ) से 'अतः', और 'लिटि', 'घ्वसोरेद्धावभ्यासलोपश्च' ( ६।४।११९ ) से 'एत्' और 'अभ्यासलोपः', 'गमहन' से 'किति' तथा 'थलि च सेटि' ( ६।४।१२१ ) सूत्र की अनुवृत्ति आती है । इस प्रकार—'फण् आदि सात धातुओं के अवर्ण के स्थान में भी विकल्प से एत्व और अभ्यास का लोप होता है, कित् लिट् तथा सेट् थल् के परवर्ती रहते ।

**उदाहरण**—( १ ) टुभ्राजृ ( अनुबन्धलोप )—भ्राज्+लिट् ( =त, द्वित्व, अभ्यास संज्ञा'

श्यन्वा। भ्राश्यते। भ्राशते। भ्रेशे। बभ्राशे। भ्लाश्यते। भ्लाशते। भ्लेशे। बभ्लाशे। रमु क्रीडायाम्। रमते। रेमे। रन्ता। जभी जृभि गात्रविनामे। (६१८) रधिजभोरचि ७।१।६१। रधिजभोरचि नुम्। जम्भते। जजम्भे। जृम्भते। जजृम्भे। इत्यात्मनेपदिनः।

अथोभयपदिनः

श्रिञ् सेवायाम्। श्रयति। श्रयते। शिश्राय। शिश्रिये। श्रयितासि। श्रयितासे। श्रयिष्यति। श्रयिष्यते। श्रयतु। श्रयताम। अश्रयत्। अश्रयत। श्रयेत्। श्रयेत।

---

'भ्राज् ए' इति स्थिते धातोर्द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्यासत्वे हलादिशेषे भ्रा भ्राज् ए इति जाते 'ह्रस्वः' इत्यनेन ह्रस्वत्वे 'फणां च सप्तानाम्' इत्यनेन अभ्यासलोपे उपधा-एत्वे च 'भ्रेजे' इति सिद्धम्।

(६१८) **रधिजभोरचीति**। 'इदितो नुम् धातोः' इत्यतः नुमित्यनुवर्तते। तेन 'रधिजभोर्धात्वोर्नुमागमः स्यात् अचि परतः' इत्यर्थो निष्पद्यते। **जम्भते**। जभ् धातोर्लटि तङि 'रधिजभोरचि' इति नुमि अनुस्वारे परसवर्णे, शपि, टेरेत्वे च कृते 'जम्भते' इति।

**शिश्राय इति**। श्रिधातोः 'परोक्षे लिट्' इति लिटि, लः स्थाने परस्मैपदे प्रथम-

---

एत्व तथा अभ्यासलोप विकल्प से—'फणां च सप्तानाम्', त=एश्='ए')=भ्रेजे। एत्वाभ्यास-लोप के अभावपक्ष में (हलादिशेष, 'भ्'='ब्'—जश्त्व)=बभ्राजे।

(२) भ्राश्+लट् (=त, 'वा भ्राश०' से विकल्प से श्यन्=य, एत्व)=भ्राश्यते। श्यन् के अभावपक्ष में शप्=अ, 'टि' को एत्व=भ्राशते। (३) भ्राश्+लिट् में (विकल्प से एत्वाभ्यास लोप होने पर)=भ्रेशे। बभ्राशे।

√भ्लाश्+लट् (=त, विकल्प से श्यन्, एत्व)=भ्लाश्यते। पक्ष में शप्—भ्लाशते। लिट् में—भ्लेशे, बभ्लाशे।

√रमु धातु का अर्थ—'रमण करना' है। (१) लट्—रमते। (२) लिट्—रेमे। (३) लुट्—रन्ता।

√जभी, जृभि का अर्थ—'अँगड़ाई लेना या जम्हाई लेना' है।

**(६१८) पद**—रधिजभोः, अचि। **अनुवृत्ति**—नुम्। **विधिसूत्र**।

**मूलार्थ**—अजादि प्रत्यय के परवर्ती रहने पर रध् और जभ् धातु को 'नुम्' का आगम होता है। जम्भते।

**विमर्श**—यहाँ—'इदितो नुम् धातोः' (७।१।५८) सूत्र से 'नुम्' की अनुवृत्ति आती है। तदनुसार—'रध् और जभ् धातु को नुम् होता है, अजादि प्रत्यय के परे रहते।

**उदाहरण**—(१) जभ्+लट् (=त, नुम्='न्'—'रधिजभोरचि', अनुस्वार, परसवर्ण, शप्, 'टि' को एत्व)=जम्भते। (२) लिट्—जजम्भे। (३) जृभ्+लट्=जृम्भते। (४) जृभ्+लिट् प्र० पु० ए० व०—जजृम्भे।

अब उभयपदी धातुओं की रूप-सिद्धि का विवेचन किया जा रहा है—

√श्रिञ् धातु का अर्थ—'सेवा करना' है। (१) लट् (परस्मैपद) प्र० पु० ए० व०—श्रयति। आत्मनेपद—श्रयते। (२) श्रि+लिट् (=परस्मैपद प्र० पु० ए० व०—तिप्=णल्=

**श्रीयात् । श्रयिषीष्ट । चङ् । अशिश्रियत् । अशिश्रियत । अश्रयिष्यत् । अश्रयिष्यत ।**
**भृञ् भरणे । भरति । भरते । बभार । बभ्रतुः । बभ्रुः । बभर्थ । बभृव । बभृम ।**
**बभ्रे । बभृषे । भर्तासि । भर्तासे । भरिष्यति । भरिष्यते । भरतु । भरताम् । अभरत् ।**

---

पुरुषगतैकत्वविवक्षायां तिपि, 'परस्मैपदानामि'त्यादिना तिपो णलादेशेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्ये'ति धातोः द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्यासंज्ञायां हलादिशेषे 'सार्वधातुकार्धधातुकयोः' इति गुणे 'एचोऽयवायावः' इत्यनेन अयादेशे 'शिश्रय् अ' इति जाते 'अत उपधायाः' इत्युपधाकारस्य वृद्धौ 'शिश्राय' इति । आत्मनेपदे तु—'शिश्रित' इति जाते 'त' इत्यस्य स्थाने एशादेशेऽनुबन्धलोपे 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इति इयङि 'शिश्रिये' इति । **अशिश्रियत् ।** 'श्रिञ् सेवायाम्' इत्यस्माद्धातोः लुङि प्रथमपुरुषैकवचने तिपि 'च्लि लुङि' इति च्लौ, 'च्लेः सिच्' इत्यनेन सिजादेशे प्राप्ते 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इत्यनेन च्लेः स्थाने चङादेशेऽनुबन्धलोपे द्वित्वेऽभ्यासत्वे हलादिशेषे 'शिश्रि अ ति' इति जाते 'इतश्चे'त्यनेन तिप इकारलोपे अडागमेऽनुबन्धलोपे 'अचि श्नु०' इत्यनेन इयङादेशेऽनुबन्धलोपे 'अशिश्रियत्' इति ।

---

'अ', धातु को द्वित्व, अभ्यास संज्ञा, हलादिशेष )—शि श्रि अ ( गुण—'सार्वधातुकार्धधातुकयोः' 'ए'='अय्' आदेश )—शिश्रय् अ ( 'अ'='आ'—वृद्धि—'अत उपधायाः' )=शिश्राय आत्मनेपद में—( त, त=एश्=ए, द्वित्व, अभ्यास संज्ञा, हलादिशेष )—शि श्रि ए ( इ=इयङ्=इय्'='अचि श्नु०' )=शिश्रिये ।

**√श्रिञ् धातु लिट् लकार के रूप ( परस्मैपद में )**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | शिश्राय | शिश्रियतुः | शिश्रियुः |
| म० पु० | शिश्रयिथ | शिश्रियथुः | शिश्रिय |
| उ० पु० | शिश्राय | शिश्रियिव | शिश्रियिम |

**√श्रिञ् लिट् लकार ( आत्मनेपद में )**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | शिश्रिये | शिश्रियाते | शिश्रियिरे |
| म० पु० | शिश्रियिषे | शिश्रियाथे | शिश्रियिध्वे |
| उ० पु० | शिश्रिये | शिश्रियिवहे | शिश्रियिमहे |

( ३ ) लुट् म० पु० ए० व०—श्रयितासि ( परस्मैपद )। आत्मनेपद—श्रयितासे ( ४ ) लृट्—परस्मैपद—श्रयिष्यति । आत्मनेपद—श्रयिष्यते । ( ५ ) लोट्—परस्मैपद—श्रयतु । आ० प०—श्रयताम् । ( ६ ) लङ्—प० प०—अश्रयत् । आ० प०—अश्रयत । ( ७ ) विधिलिङ्—प० प०—श्रयेत् । आ० प०—श्रयेत । ( ८ ) आशीर्लिङ् प० प०—श्रीयात् । आ० प०—श्रयिषीष्ट । ( ९ ) श्रि+लुङ् ( =परस्मैपद तिप्=ति, च्लि='चङ्'='अ'—'णिश्रिद्रुस्रुभ्यः' धातु को द्वित्व—'चङि' अभ्यास संज्ञा, हलादिशेष )—शि श्रि अ ति ( इकारलोप—'इतश्च' अट्='अ'—'लुङ्लङ्लृङ्क्ष्वडुदात्तः', इ=इयङ्=इय्—'अचि श्नु०' )=अशिश्रियत । आत्मनेपद में—**अशिश्रियत ।** ( १० ) लृङ्—प० प०—अश्रयिष्यत् । आ० प०—अश्रयिष्यत ।

√भृञ् का अर्थ—'पालन करना' है । ( १ ) लट्—भरति, भरते । ( २ ) भृ+लिट् (=परस्मैपद तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, 'ऋ'='अ'—'उरत्' रपर, हलादिशेष )—भ भृ अ

अभरत। भरेत्। भरेत। भ्रियात्। (६१९) उश्च १।२।१२। ऋवर्णात्परौ झलादी लिङ्आत्मनेपदपरः सिच्चेत्येतौ कितौ स्तः। भृषीष्ट। भृषीयास्ताम्। अभार्षीत्। (६२०) ह्रस्वादङ्गात् ८।२।२७। सिचो लोपो, झलि। अभृत। अभरिष्यत्। अभरिष्यत।

(६१९) उश्चेति। 'लिङ्सिचावात्मनेपदेषु' इति सूत्रमत्रानुवर्तते, 'इको झल्' इत्यतो झलिति च। तदाह—**ऋवर्णादिति। भृषीष्ट।** भृधातोराशीर्लिङि लः स्थाने तप्रत्यये, सीयुटि, उटि गते, यकारलोपे 'सुट् तिथोः' इति सुडागमेऽनुबन्धलोपे 'भृसी स् त' इति जाते, प्राप्तस्य इटः 'एकाच उपदेशे' इति निषेधे 'उश्चे'ति कित्त्वात् प्राप्त-गुणस्य 'क्ङिति च' इति निषेधे षत्वे पुनः षत्वे ष्टुत्वे च कृते 'भृषीष्ट' इति।

('भ्'='ब्'—'अभ्यासे चर्च', ऋ='अ'—गुण, रपर, 'अ'='आ'—वृद्धि-'अत उपधायाः')= बभार। आत्मनेपद में (त=एश्=ए, द्वित्व, अभ्यास संज्ञा, ऋ=अ, रपर, हलादिशेष, चर्त्व) —बभृ ए (ऋ=र्—'यण्')=बभ्रे।

**√भृञ् धातु लिट् लकार परस्मैपद के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | बभार | बभ्रतुः | बभ्रुः |
| म० पु० | बभर्थ | बभ्रथुः | बभ्र |
| उ० पु० | बभार-बभर | बभृव | बभृम |

**√भृञ् लिट् लकार (आत्मनेपद)**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | बभ्रे | बभ्राते | बभ्रिरे |
| म० पु० | बभृषे | बभ्राथे | बभृढ्वे |
| उ० पु० | बभ्रे | बभृवहे | बभृमहे |

(३) लुट् (प० प०) म० पु० ए० व०—भर्तासि। आ० प०—भर्तासे। (४) लृट्—भरिष्यति, भरिष्यते। (५) लोट्—भरतु। भरताम्। (६) लङ् (प० प०)—अभरत्। आ० प०—अभरत। (७) विधिलिङ्—भरेत्। भरेत। (८) आशीर्लिङ् (प० प०) भ्रियात्।

**(६१९) पद**—उः, च। **अनुवृत्ति**—लिङ्सिचावात्मनेपदेषु, झल्, कित्। **अतिदेशसूत्र।**

**मूलार्थ**—ऋवर्ण से परवर्ती झलादि लिङ् और सिच् किद्वत् होते हैं, आत्मनेपद के विषय में। भृषीष्ट इत्यादि।

**विमर्श**—सूत्रार्थ को स्पष्ट करने के लिए—'इको झल्' (१।२।९) से 'झल्' 'असंयोगाल्लिट् कित्' (१।२।५) से 'कित्' तथा 'लिङ्सिचावात्मनेपदेषु' सूत्र की अनुवृत्ति आती है। तदनुसार—'ऋवर्णान्त धातुओं से परवर्ती भी झलादि लिङ् और सिच् आत्मनेपद के विषय में किद्वत् होते हैं'।

**उदाहरण**—(१) भृ+आशीर्लिङ् (ल्=त, सीयुट्=सीय्, यकार का लोप, सुट्='स्'—'सुट् तिथोः')—भृ सी स् त (प्राप्त 'इट्' का 'एकाच उपदेशे०' से निषेध, 'उश्च' से कित् होने से प्राप्त गुण का 'क्ङिति च' से निषेध, 'स्'—'ष', पुनः षत्व, ष्टुत्व)=भृषीष्ट। (२) आशीर्लिङ् प्र० पु० द्वि० व०—भृषीयास्ताम्। (३) भृ+लुङ् (=तिप्=ति, च्लि=सिच्='स्', अट्, इकारलोप)—अ भृ स् त ('ऋ'='आ' वृद्धि—'सिचि वृद्धिः' रपर, षत्व)=अभार्षीत्।

**(६२०) पद**—ह्रस्वात्, अङ्गात्। **अनुवृत्ति**—झलि, सस्य, लोपः। **विधिसूत्र।**

हृञ् हरणे। हरति। हरते। जहार। जह्रतुः। जह्रुः। जहर्थ। जह्रिव। जह्रिम। जह्रे। जह्रिषे। हर्ता। हर्तासि। हर्तासे। हरिष्यति। हरिष्यते। धृञ् धारणे। धरति। णीञ् प्रापणे। नयति। नयते। निनाय। डुपचष् पाके। पचति। पचते। पपाच। पेचिथ। पपक्थ। पेचे। पक्ता। पक्ष्यति। पक्ष्यते। अपक्त। अपक्षाताम्। भज सेवायाम्। भजति। भजते। भेजे। भक्ता। भक्तासि। भक्तासे। भक्ष्यति। भक्ष्यते।

---

( ६२० ) ह्रस्वादिति। सिच इति भाष्यम्। 'झलो झलि' इत्यतो झलीति, 'संयोगान्तस्य लोपः' इत्यतो लोप इति चानुवर्तते। अत आह—सिचो लोप इति।

जहार इति। हृधातोः लिटि, लः स्थाने परस्मैपदे तिपि, तिपः णलादेशेऽनुबन्धलोपे धातोः द्वित्वेऽभ्यासत्वे 'उरत्' इत्यनेन अभ्यास ऋकारस्य अकारे रपरत्वे हलादिशेषे 'ह हृ अ' इति जाते 'कुहोश्चुः' इत्यनेन हकारस्य झकारे 'अभ्यासे चर्च' इत्यनेन चर्त्वेन जकारे 'अचो ञ्णिति' इत्यनेन वृद्धौ रपरत्वे संयोगे च कृते जहार इति।

---

**मूलार्थ**—ह्रस्वान्त अङ्ग से परे सिच् के सकार का लोप होता है, 'झल्' के परवर्ती रहते। अभृत इत्यादि।

**विमर्श**—यहाँ 'झलो झलि' ( ८।२।२६ ) से 'झलि' 'संयोगान्तस्य लोपः' ( ८।२।२३ ) से लोपः तथा 'रात्सस्य' ( ८।२।२४ ) से 'सस्य' की अनुवृत्ति आ रही है। महाभाष्योक्त व्याख्यान से यहाँ सिच् के सकार का ग्रहण होता है। अतः ह्रस्वान्त अङ्ग से उत्तरवर्ती सिच् ( सकार ) का झल् के परे रहते लोप होता है।

**उदाहरण**—( १ ) भृ+लुङ् ( =प्र० पु० ए० व०—त, च्लि=सिच्='स्', अट् का आगम )—अ भृ स् त ( 'स्' का लोप--'ह्रस्वादङ्गात्' )=अभृत। ( २ ) लृङ् ( प० प० )—अभरिष्यत्। ( आ० प० ) **अभरिष्यत।**

√हृञ् धातु का अर्थ—'हरण करना, ले जाना, चुराना' है।

√हृञ् धातु के लिट् लकार के व, म, से, वहि और महि प्रत्ययों में क्रादिनियम से इट् हो जाता है। शेष रूप √भृञ् की तरह बनते हैं।

( १ ) लट्—हरति। हरते। ( २ ) लिट् ( प० प० ) प्र० पु० ए० व०—जहार। द्वि० व०—जह्रतुः। ब० व०—जह्रुः। म० पु० ए० व०--जहर्थ। उ० पु० द्वि० व०—जह्रिव। उ० पु० ब० व०—जह्रिम। आत्मनेपद प्र० पु० ए० व०—जह्रे। म० पु० ए० व०--जह्रिषे। ( ३ ) लुट् ( प० प० )--हर्ता। लुट् म० पु० ए० व०—हर्तासि। ( आ० प० )--हर्तासे। ( ४ ) लृट्—हरिष्यति। हरिष्यते।

√धृञ् का अर्थ--'धारण करना' है। लट्—धरति। धरते।

√णीञ् धातु का अर्थ--'ले जाना' है। यह धातु अजन्त एकाच् है। और सेट् कारिका 'ऊदृदन्तै०' में ग्रहण न होने से अनिट् है। 'णो नः' से धातु के 'ण्' के स्थान में 'न्' आदेश हो जाता है। ( १ ) लट् ( प० प० )—नयति। आ० प०—नयते। ( २ ) लिट्—निनाय।

√डुपचष् ( =पच् ) धातु का अर्थ—'पकाना' है। स्वरितेत् होने से उभयपदी है। ( १ ) लट्--पचति। पचते। ( २ ) लिट्—प्र० पु० ए० व०--पपाच। ( ३ ) पच्+लिट् ( =सिप्=थल्='थ', द्वित्व, अभ्यास संज्ञा, हलादिशेष )--पपच् थ ( आर्धधातुक संज्ञा, 'आर्धधातुकस्येड्०' से प्राप्त इट् का 'एकाच उपदेशे' से निषेध क्रादि-नियम से नित्य प्राप्त इट् का बाधकर भारद्वाज नियम से विकल्प से इट्, एत्व और अभ्यास का लोप—'थलि च सेटि' )—पेचिथ। इट् के

भजतु । भजताम् । अभाक्षीत् । अभक्त । अभक्षाताम् । अभक्ष्यत् । अभक्ष्यत । यज देवपूजासङ्गतिकरणदानेषु । यजति । यजते । **( ६२१ ) लिट्यभ्यासस्योभयेषाम्** ६।१।१७ । वच्यादीनां, ग्रह्यादीनां चाभ्यासस्य सम्प्रसारणं स्याल्लिटि । इयाज । **( ६२२ ) वचिस्वपियजादीनां किति** ६।१।१५ । वचिस्वप्योर्यजादीनां च सम्प्रसारणं, किति ।

---

( ६२१ ) लिट्यभ्यासस्येति । 'ष्यङः सम्प्रसारणमि'त्यतः सम्प्रसारणमित्यनुवर्तते । उभयपदेनात्र 'वचिस्वपियजादीनाम्' इति सूत्रोपात्ताः 'ग्रहिज्यावयि' इति सूत्रोपात्ताश्च गृह्यन्ते । इयाज । यज्धातोर्लिटि, लः स्थाने तिपि तस्य स्थाने णलादेशेऽनुबन्धलोपे द्वित्वेऽभ्यासादिकार्ये 'य यज् अ' इति जाते 'लिट्यभ्यासस्योभयेषाम्' इत्यनेनाभ्यासस्य यकारस्य सम्प्रसारणे 'इ अ यज' इति जाते 'सम्प्रसारणाच्च' इत्यनेन पूर्वरूपे 'अत उपधायाः' इत्यनेन उपधावृद्धौ संयोगे च कृते 'इयाज' इति ।

( ६२२ ) वचिस्वपीति । आदिशब्दोऽत्र यजिनैव सम्बध्यते, न तु वचिस्वपिभ्याम् । 'सम्प्रसारणमि'त्यनुवर्तते । तदाह—**वचिस्वप्योर्यजादीनामिति** । **इयजिथ** । यज्धातो-

---

अभावपक्ष में—प पच् थ ( 'च्'='क्'—कुत्व—'चोः कुः' )=पपक्थ । लिट् आत्मनेपद—पेचे । ( ४ ) लुट्—पक्ता । ( ५ ) लृट्—पक्ष्यति । पक्ष्यते । ( ६ ) लुङ् आत्मनेपद—अपक्त । लुङ् आ० प० प्र० पु० द्वि० व०—अपक्षाताम् ।

√भज् का अर्थ—'सेवा करना' है । भज् धातु के रूप 'पच्' के समान ही बनते हैं । यहाँ केवल जकार को प्रथम 'चोः कुः' से कुत्व गकार होता है और फिर उसको 'खरि च' से ककार । यह धातु भी अनिट् है । ( १ ) लट्—भजति । भजते । ( २ ) लिट् आ० प०—भेजे । ( ३ ) लुट्—भक्ता । ( ४ ) लुट् म० पु० ए० व०—भक्तासि, भक्तासे । ( ५ ) लृट्—भक्ष्यति, भक्ष्यते । ( ६ ) लोट्—भजतु । भजताम् । ( ७ ) लुङ् ( प० प० )—अभाक्षीत् । आ० प०—अभक्त । लुङ् आ० प० प्र० पु० द्वि० व०—अभक्षाताम् । ( ८ ) लृङ्—अभक्ष्यत् । आ० प०—अभक्ष्यत ।

√यज् धातु का अर्थ—'देवपूजा, यज्ञ करना और दान करना' है । ( १ ) लट् ( प० प० )—यजति । ( आ० प० )—यजते ।

**( ६२१ ) पद**—लिटि, अभ्यासस्य, उभयेषाम् । **अनुवृत्ति**—सम्प्रसारणम् । **विधिसूत्र** ।

**मूलार्थ**—वच् आदि और ग्रह् आदि धातुओं के अभ्यास को लिट् के परवर्ती रहते सम्प्रसारण होता है । इयाज ।

**विमर्श**—प्रकृत सूत्र में 'ष्यङः सम्प्रसारणम्' ( ६।१।१३ ) से 'सम्प्रसारणम्' की अनुवृत्ति आ रही है । सूत्रस्थ 'उभयेषाम्' पद से 'वचिस्वपियजादीनाम्' तथा 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' सूत्रोक्त धातुओं का ग्रहण होता है । अतः वच्यादि और ग्रह्यादि दोनों धातुओं के अभ्यास को सम्प्रसारण होता है, लिट् के परे रहते ।

**उदाहरण**—( १ ) यज्+लिट् (=तिप्=णल्='अ', द्वित्व, अभ्यास संज्ञा, हलादिशेष )—य यज् अ ( 'य्'='इ'—सम्प्रसारण—'लिट्यभ्यासस्योभयेषाम्' पूर्वरूप—'सम्प्रसारणाच्च' )—इ यज् अ ( 'अ'='आ'—वृद्धि—'अत उपधायाः' )=इयाज ।

**( ६२२ ) पद**—वचिस्वपियजादीनाम्, किति । **अनुवृत्ति**—सम्प्रसारणम् । **विधिसूत्र** ।

**मूलार्थ**—कित् के परवर्ती रहते वच्, स्वप् और यजादि धातु को सम्प्रसारण होता है ।

९ म० हि०

यजिर्वपिर्वहिश्चैव वसिर्वेञ् व्येञ् इत्यपि ।
ह्वेञ्वदी श्वयतिश्चैव यजाद्याः स्युरिमे नव ॥ १ ॥

ईजतुः । ईजुः । इयजिथ–इयष्ठ । ईजे । यष्टा । 'षढोः कः सि' । यक्ष्यति यक्ष्यते । यजतु । यजताम् । अयजत् । अयजत । यजेत् । यजेत । इज्यात् । यक्षीष्ट । अयाक्षीत् । अयष्ट । वह प्रापणे । वहति । वहते । उवाह । ऊहतुः । ऊहुः । उवहिथ ।

---

लिटि, लः स्थाने सिपि, 'परस्मैपदाना मि'त्यादिना सिपः थलादेशेऽनुबन्धलोपे 'लिट् च' इत्यार्धधातुकसंज्ञायां सिपः पित्त्वात् कित्त्वाभावे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'यज् यज् थ' इति जाते 'लिटचभ्यासस्योभयेषाम्' इति सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे हलादिशेषे 'इयज् थ' इति भूते, प्राप्तस्येटः 'एकाच उपदेशे' इत्यनेन निषेधे भारद्वाजनियमेन वैभाषिके इडागमेऽनुबन्धलोपे इयजिथ इति । इडागमाभावे 'इयज् थ' इत्यत्र 'व्रश्चभ्रस्जसृजमृजयज०' इत्यादिना षत्वे, थकारस्य 'ष्टुना ष्टुः' इति ष्टुत्वे कृते 'इयष्ठ' इति ।

---

**विमर्श**—'ष्यङः सम्प्रसारणम्०' ( ६।१।१३ ) से 'सम्प्रसारणम्' की अनुवृत्ति आ रही है। तदनुसार वच्, स्वप् तथा यजादि धातुओं को कित् प्रत्यय के परे रहते सम्प्रसारण होता है।

**यजिर्वपिरिति**। यज्, वप्, वह्, वस्, वेञ्, व्येञ्, ह्वेञ्, वद और श्वि—ये नौ धातुएँ यजादि कहलाती हैं।

**उदाहरण**—( १ ) यज्+लिट् ( =तस्=अतुस्, प्राप्त धातु के द्वित्व का बाधकर 'य्'= 'इ'—सम्प्रसारण—'वचिस्वपियजादीनां किति', पूर्वरूप )—इज् अतुस् ( 'पुनः प्रसङ्गविज्ञानात्सिद्धम्' परिभाषा के बल से द्वित्व, अभ्यास संज्ञा, हलादिशेष )—इ इज् अतुस् ( इ+इ= 'ई'—सवर्णदीर्घ, स्=र्=ः )=ईजतुः। ( २ ) लिट् प्र० पु० ब० व०—ईजुः। ( ३ ) यज्+ लिट् ( =सिप्=थल्=थ, द्वित्व, अभ्यास संज्ञा, 'य्'='इ'—सम्प्रसारण—'लिट्यभ्यासस्योभयेषाम्' पूर्वरूप )—इ यज् थ ( भारद्वाज नियम से विकल्प से इट् )=इयजिथ। इट् के अभावपक्ष में—इ यज् थ ( 'ज्'='ष्'—'व्रश्चभ्रस्ज०', थ्='ठ्'—ष्टुत्व )=इयष्ठ। ( ४ ) यज्+लिट् ( =आत्मनेपद—त, 'य्'='इ' सम्प्रसारण—'वचि०', पूर्वरूप )—इज् त ( द्वित्व, अभ्यास संज्ञा, हलादिशेष )—इ इज् त ( इ+इ='ई' दीर्घ, त=एश्='ए'—'लिटस्तझयोरेशिरेच्' )=ईजे। ( ५ ) यज्+लुट् प्र० पु० ए०—यष्टा। ( ६ ) यज्+लृट् ( =तिप्=ति, स्य )—यज् स्य ति ( 'ज्'='ष्'—'व्रश्चभ्रस्ज०' 'स्'='ष्'—'आदेशप्रत्यययोः', 'ष्'='क्'— 'षढोः कः सि', क्+ष्=क्ष् )=यक्ष्यति। आत्मनेपद में—यक्ष्यते। ( ७ ) लोट्—यजतु। यजताम्। ( ८ ) लङ्—अयजत्। अयजत। ( ९ ) विधिलिङ्—यजेत्। यजेत। ( १० ) आशीर्लिङ् परस्मैपद मे 'किदाशिषि' से यासुट् के कित् होने से 'वचिस्वपियजादीनाम्०' से सम्प्रसारण होकर 'इज्यात्' रूप बनता है। आत्मनेपद में—यक्षीष्ट।

( ११ ) यज्+लुङ् ( =तिप्=ति, च्लि=सिच्=स्, इकारलोप, अट् का आगम, ईट्= 'ई'—'अस्तिसिचोऽपृक्ते' )—अयज् ई त् ( ज्=ष्—'व्रश्च०' 'ष्'='क्'—'षढोः कः सि', स्= ष्—'आदेशप्रत्यययोः' क्+ष्=क्ष्, यकारोत्तरवर्ती अकार को वृद्धि—'वदव्रजहलन्तस्याचः' ) =अयाक्षीत्। आत्मनेपद में—अयष्ट।

√वह् धातु का अर्थ—'ले जाना' है। ( १ ) लट्—वहति। वहते। वह् धातु के लिट् लकार में यज् के समान रूप बनते हैं। यजादि होने से सम्प्रसारण होता है। णल् और थल् में 'लिट्य-

'हो ढः'। ( ६२३ ) झषस्तथोर्धोऽधः ८।२।४० । झषः परयोस्तथोर्धः स्यान्न तु दधातेः । 'ष्टुना ष्टुः' । ( ६२४ ) ढो ढे लोपः ८।३।१३ । ढस्य लोपः स्याड्ढे परे । ( ६२५ ) सहिवहोरोदवर्णस्य ६।३।११२ । अनयोरवर्णस्य ओत्स्यात् ढ्लोपे । उवोढ । ऊहे । वोढा । वक्ष्यति । वक्ष्यते । वहतु । वहताम् । अवहत् । अवहत । वहेत् । वहेत । उह्यात् । वक्षीष्ट । अवाक्षीत् । अवोढाम् । अवाक्षुः । अवाक्षीः । अवोढम् । अवोढ । अवाक्षम् । अवाक्ष्व । अवाक्ष्म । अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवक्षा-

---

( ६२३ ) झषस्तथोरिति । 'झषः' इति पञ्चमी । तश्च थश्चेति द्वन्द्वः । 'अधः' इति षष्ठ्यन्तम् । तेन धाधातुभिन्नस्येति लभ्यते । अत आह—झषः परयोरिति ।

( ६२४ ) ढो ढे लोप इति । स्पष्टम् ।

( ६२५ ) सहिवहोरिति । 'ढ्लोपे पूर्वस्ये'त्यतः 'ढ्लोपे' इत्यनुवर्तते । तदाह—अनयोरवर्णस्येति । उवोढ । वह्धातोर्लिटि, लः स्थाने सिपि, सिपस्थलि 'एकाच उपदेशे' इति इडभावे प्राप्ते क्रादिनियमान्नित्यमिटि प्राप्ते 'उपदेशेऽत्वतः' इति इटो निषेधे, थलः स्थानिवत्वेन पित्त्वात् किदभावे सम्प्रसारणाभावे च, धातोर्द्वित्वेऽभ्यासत्वे 'लिट्यभ्यासस्योभयेषामि'ति अभ्यासवकारस्य सम्प्रसारणे पूर्वरूपे कृते हलादिशेषे 'उ वह् थ' इति जाते 'हो ढः' इति हकारस्य ढकारे, 'झषस्तथोर्धोऽधः' इति थकारस्य धकारे 'ष्टुना ष्टुः' इति ष्टुत्वेन धस्य ढत्वे 'ढो ढे लोपः' इति ढकारलोपे, 'ढ्लोपे

---

भ्यासस्योभयेषाम्' से अभ्यास को सम्प्रसारण होता है। अन्य में कित् होने से 'वचिस्वपि' से द्वित्व से पूर्व ही सम्प्रसारण होता है। ( २ ) वह्+लिट् ( =तिप्=णल्='अ', द्वित्व, अभ्यास संज्ञा, अभ्यास के 'व्'='उ'—सम्प्रसारण—'लिट्यभ्यासस्योभयेषाम्' पूर्वरूप, हलादिशेष )—उ वह् अ ( उपधावृद्धि )=उवाह। ( ३ ) लिट् प्र० पु० द्वि० व०=ऊहतुः। ( ४ ) लिट् प्र० पु० ब० व०—ऊहुः।

**( ६२३ ) पद**—झषः, तथोः, धः, अधः। **विधिसूत्र।**

**मूलार्थ**—झष् से परवर्ती 'त्' और 'थ्' को 'ध्' होता है। परन्तु धा धातु के अवयव झष् से परवर्ती को 'ध्' नहीं होता।

**( ६२४ ) पद**—ढः, ढे, लोपः। **विधिसूत्र।**

**मूलार्थ**—ढकार के परवर्ती रहने पर ढकार का लोप होता है।

**( ६२५ ) पद**—सहिवहोः, ओत्, अवर्णस्य। **अनुवृत्ति**—ढ्लोपे। **विधिसूत्र।**

**मूलार्थ**—सह् और वह् धातु के अकार को ओकार आदेश होता है, ढकार के लोप होने पर। उवोढ।

**विमर्श**—प्रकृत सूत्र में 'ढ्लोपे पूर्वस्य दीर्घोऽणः' ( ६।३।११० ) से 'ढ्लोपे' पद की अनुवृत्ति आती है। तदनुसार—'ढलोप होने पर सह और वह धातुओं के अवर्ण को ओकार हो जाता है।'

**उदाहरण**—( १ ) वह्+लिट् ( =सिप्=थल्=थ, द्वित्व, अभ्यास संज्ञा, 'व्'='उ'—सम्प्रसारण 'लिट्यभ्यासस्य' पूर्वरूप, हलादिशेष )—उ वह् थ ( भारद्वाज नियम से वैकल्पिक इट् )=उवहिथ। इट् के अभाव पक्ष में—उ वह् थ ( 'ह्'='ढ्'—'हो ढः', 'थ्'='ध्'—'झषस्तथोर्धोऽधः' ष्टुत्व से 'ध्'='ढ्' )—उ व ढ् ढ ( 'ढ्' का लोप—'ढो ढे लोपः', 'अ'='ओ'—'सहिवहोरोदवर्णस्य' )=उवोढ।

थाम् । अवोढ्वम् । अवक्षि । अवक्ष्वहि । अवक्ष्महि । अवक्ष्यत् । अवक्ष्यत । डुवप् बीजसन्ताने । बीजसन्तानं=क्षेत्रे विकिरणं गर्भाधानं च । अयं छेदनेऽपि । केशान्वपति । वपते । उवाप । ऊपे । वप्ता । वप्स्यति । वप्स्यते । उप्यात् । वप्सीष्ट । प्रण्यवाप्सीत् ।

---

पूर्वस्य दीर्घोऽणः' इति पूर्वस्याणो दीर्घे प्राप्ते 'सहिवहोरोदवर्णस्य' इत्यकारस्य ओकारे कृते 'उवोढ' इति रूपं सिद्धम् । **अवाक्षीत्** । वह्धातोर्लुङि, लः स्थाने तिपि, अनुबन्धलोपे, च्लौ, च्लेः सिच्यनुबन्धलोपे, तिप इकारलोपे 'अस्तिसिचोऽपृक्ते' इतीडागमे 'अ वह् स् ई त्' इति जाते 'वदव्रजहलन्तस्याचः' इति वकाराकारस्य वृद्धौ 'हो ढः' इति हकारस्य ढकारे 'षढोः कः सि' इति ढस्य कत्वे, 'आदेशप्रत्यययोः' इति सिचः सस्य षत्वे क् ष् संयोगे च कृते 'अवाक्षीदि'ति ।

---

**√वह् लिट् लकार के रूप ( परस्मैपद )**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | उवाह | ऊहतुः | ऊहुः |
| म० पु० | उवहिथ-उवोढ | ऊहथुः | ऊह |
| उ० पु० | उवाह-उवह | ऊहिव | ऊहिम |

**( आत्मनेपद )**

| | | | |
|---|---|---|---|
| प्र० पु० | ऊहे | ऊहाते | ऊहिरे |
| म० पु० | ऊहिषे | ऊहाथे | ऊहिध्वे-ऊहिढ्वे |
| उ० पु० | ऊहे | ऊहिवहे | ऊहिमहे |

( २ ) वह्+लुट् ( =तिप्, तास्, तिप्=डा 'आ' )—वह् तास् आ ( 'ह्'='ढ्' 'त्'='ध्'—'झषस्तथोः' 'ध्'='ढ्'—ष्टुत्व, ढलोप )—वढ् आस् आ ( टिलोप, 'अ'='ओ'—'सहिवहोरोदवर्णस्य' )=वोढा । ( ३ ) लृट्—वक्ष्यति । वक्ष्यते । ( ४ ) लोट्—वहतु । वहताम् । ( ५ ) लङ्—अवहत् । अवहत । ( ६ ) विधिलिङ्—वहेत् । वहेत । ( ७ ) आशीर्लिङ्—उह्यात् । वक्षीष्ट । ( ८ ) वह्+लुङ् ( =तिप्=ति, च्लि=सिच्=स्, अट्, इकारलोप, ईट्—'अस्तिसिचः' )—'अवह् स् ई त्' ( अ='आ'—वृद्धि—'वदव्रज०' 'ह्'='ढ्'—'हो ढः' ढ्=क्—'षढोः कः सि' षत्व, क्+ष्=क्ष् )=अवाक्षीत् ।

**√वह् धातु लुङ् लकार के रूप ( परस्मैपद )**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अवाक्षीत् | अवोढाम् | अवाक्षुः |
| म० पु० | अवाक्षीः | अवोढम् | अवोढ |
| उ० पु० | अवाक्षम् | अवाक्ष्व | अवाक्ष्म |

**( आत्मनेपद )**

| | | | |
|---|---|---|---|
| प्र० पु० | अवोढ | अवक्षाताम् | अवक्षत |
| म० पु० | अवोढाः | अवक्षाथाम् | अवोढ्वम् |
| उ० पु० | अवक्षि | अवक्ष्वहि | अवक्ष्महि |

लृङ् में—अवक्ष्यत् । आ० प०—अवक्ष्यत ।

**√डुवप् ( =वप् ) धातु बीजसन्तान अर्थ में है । बीजसन्तान का अर्थ—'बीज को खेत में फैलाना और गर्भाधान करना' है । इस धातु का अर्थ 'काटना' भी है । ( १ ) केशान्वपति**

अवप्त । वेञ् तन्तुसन्ताने । वयति । वयते । ( ६२६ ) **वेञो वयिः २।४।४१** । स्यात्लिटि । इकार उच्चारणार्थः । उवाय । ( ६२७ ) **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ६।१।१६** । चात्किति सम्प्रसारणम् । इति यकार-

---

( ६२६ ) **वेञो वयि इति** । 'लिटचन्यतरस्यामि'त्यनुवर्तते । लिटि वेञ्धातोर्वयादेशः स्यादित्यर्थः । **उवायेति** । वेञ्धातोर्लिटि, लः स्थाने तिपि, तिपो णलादेशेऽनुबन्धलोपे 'वेञो वयिः' इति वयादेशे, धातोर्द्वित्वे, अभ्यासत्वे 'लिटचभ्यासस्योभयेषाम्' इति सम्प्रसारणे, पूर्वरूपे, हलादिशेषे 'उ वय् अ' इति जाते 'अत उपधायाः' इति वृद्धौ 'उवाय' इति रूपम् ।

( ६२७ ) **ग्रहिज्येति** । 'ष्यङः सम्प्रसारणमि'त्यस्मात्सम्प्रसारणमित्यनुवर्तते । चकारेणात्र 'वचिस्वपियजादीनामि'त्यतः कितीति समुच्चीयते । तेन ग्रहिज्यादिधातूनां किति ङिति च सम्प्रसारणं स्यादित्यर्थो निष्पद्यते । **ऊयतुरिति** । वेञ्धातोर्लिटि, तसि, तसः स्थानेऽतुसि 'वेञो वयिः' इति वयादेशे, धातोर्द्वित्वेऽभ्यासत्वे 'लिटचभ्यासस्योभयेषाम्' इत्यभ्याससम्प्रसारणे पूर्वरूपे, हलादिशेषे वकारस्यापि 'ग्रहिज्यावयिव्यधि०' इत्यादिना सूत्रेण सम्प्रसारणे पूर्वरूपे सवर्णदीर्घे सस्य रुत्वे विसर्गे च कृते 'ऊयतुः' इति । नन्वत्र 'न सम्प्रसारणे सम्प्रसारणमि'ति ज्ञापकेन 'ग्रहिज्या' इत्यनेन प्राप्तं सम्प्रसारणं यकारस्यैव स्यान्न तु वकारस्येति चेन्न, लिटि वयो यः' इत्यनेन सम्प्रसारणनिषेधात् ।

---

( =बालों को काटता है )। आ० प०—वपते । ( २ ) लिट्—उवाप । आ० प०—ऊपे । ( ३ ) लुट्—वप्ता । ( ४ ) लृट्—वप्स्यति । आ० प०—वप्स्यते । ( ५ ) आशीर्लिङ्—उप्यात् । आ० प०—वप्सीष्ट । ( ६ ) लुङ्—अवाप्सीत् । आ० प०—अवप्त । प्रनि+अवाप्सीत ( 'नेर्गदनद०' से णत्व, षण् )=प्रण्यवाप्सीत् ।

√वेञ् धातु का अथ 'बुनना' है । ( १ ) लट्—वयति । वयते ।

**( ६२६ ) पद**—वेञः, वयिः । **अनुवृत्ति**—लिट्यन्यतरस्याम् । **विधिसूत्र** ।

**मूलार्थ**—लिट् के परवर्ती रहने पर 'वेञ्' धातु को 'वय्' आदेश विकल्प से होता है । उवाय ।

**विमर्श**—यहाँ 'लिट्यन्यतरस्याम्' ( २।४।४० ) सूत्र की अनुवृत्ति आ रही है । अतएव—"लिट् के परवर्ती रहते 'वेञ्' धातु को विकल्प से 'वय्' आदेश हो जाता है" ।

**उदाहरण**—वेञ्+लिट् ( =तिप्=णल्='अ', 'वेञ्'='वय्'—'वेञो वयिः' )—वय् अ ( द्वित्व, अभ्यास संज्ञा, 'व्'='उ' सम्प्रसारण—'लिट्यभ्यासस्योभयेषाम्' पूर्वरूप, हलादिशेष )—उ वय् अ ( 'अ'='आ'—उपधावृद्धि )=उवाय ।

**( ६२७ ) पद**—ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनाम् , ङिति, च । **अनुवृत्ति**—किति, सम्प्रसारणम् । **विधिसूत्र** ।

**मूलार्थ**—कित, ङित के परवर्ती रहते ग्रहि, ज्या आदि सूत्रोक्त नौ धातुओं को सम्प्रसारण होता है । इस सूत्र से यकार का सम्प्रसारण प्राप्त होने पर—

**विमर्श**—सूत्रार्थ की पूर्ति हेतु 'ष्यङः सम्प्रसारणम्' ( ६।१।१३ ) से 'सम्प्रसारणम्' तथा 'वचिस्वपियजादीनां किति' ( ६।१।१५ ) से 'किति' पद की अनुवृत्ति आती है । तदनुसार—

**च प्राप्ते । ( ६२८ ) लिटि वयो यः ६।१।३८ । वयो यस्य सम्प्रसारणं न स्याल्लिटि । ऊयतुः । ऊयुः । ( ६२९ ) वश्चास्यान्यतरस्यां किति ६।१।३९ । वयो यस्य वो वा स्यात्किति लिटि । ऊवतुः । ऊवुः । वयस्तासावभावात्थलि नित्यमिट् । उवयिथ । स्थानिवत्त्वेन ञित्त्वात्तङ् । ऊये । ऊवे । वयादेशाभावे—( ६३० ) वेञः ६।१।४० ।**

---

**( ६२८ ) लिटीति ।** 'न सम्प्रसारणे सम्प्रसारणमि'त्यतः 'न सम्प्रसारणमि'त्यनुवर्तते । तदाह—**वयो यस्येति ।**

**( ६२९ ) वश्चास्येति ।** अत्र 'लिटि वयो यः' इत्यनुवर्तते । तदाह—**वयो यस्येति ।**

**( ६३० ) वेञ इति ।** 'लिटि वयो यः' इत्यतो लिटीति, 'न सम्प्रसारणे

---

'ग्रह, ज्या, वय ( वेञ् ), व्यध, वश, व्यच, ओव्रश्चू, प्रच्छ्, भ्रस्ज धातुओं को सम्प्रसारण होता है, कित् तथा ङित् प्रत्यय के परवर्ती रहते' ।

**( ६२८ ) पद**—लिटि, वयः, यः । **अनुवृत्ति**—न सम्प्रसारणम् । **विधिसूत्र** ( निषेध ) ।

**मूलार्थ**—लिट् के परे रहते 'वय्' के यकार को सम्प्रसारण नहीं होता । ऊयतुः । ऊयुः ।

**विमर्श**—यहाँ 'न सम्प्रसारणे सम्प्रसारणम्' ( ६।१।३६ ) से 'न सम्प्रसारणम्' की अनुवृत्ति आ रही है । अतः लिट् लकार के परवर्ती रहते 'वय्' के यकार को सम्प्रसारण नहीं होता ।

**उदाहरण**—√वेञ्+लिट् ( =तस्=अतुस्, 'वेञ्'='वय्'—'वेञो वयिः', धातु को द्वित्व, पूर्व की अभ्यास संज्ञा, 'व्'='उ'—सम्प्रसारण—'लिट्यभ्यासस्य०', पूर्वरूप, हलादिशेष )—उवय् अतुस् ( 'व्'='उ'—सम्प्रसारण—'ग्रहिज्या०', पूर्वरूप, उ+उ='ऊ'—दीर्घ ) —ऊयतुस् ( स्=र्=: )=ऊयतुः । यहाँ 'ग्रहिज्या०' से पुनः यकार का सम्प्रसारण प्राप्त होता है, उसका 'लिटि वयो यः' से निषेध हो जाता है ।

**( ६२९ ) पद**—वः, च, अस्य, अन्यतरस्याम्, किति । **अनुवृत्ति**—लिटि वयो यः । **विधिसूत्र ।**

**मूलार्थ**—कित् लिट् के परवर्ती रहने पर 'वय्' के यकार को वकार आदेश विकल्प से होता है । ऊवतुः । ऊवुः ।

**विमर्श**—पूर्वसूत्र 'लिटि वयो यः' ( ६।१।३८ ) की अनुवृत्ति आ रही है । तदनुसार—"कित् लिट् के परे रहते 'वय्' के यकार को वकारादेश विकल्प से होता है" ।

**उदाहरण**—लिट्—प्र० पु० द्वि०—ऊयतुस् ( विकल्प से 'य्'='व्'—'वश्चान्यतरस्यां किति' )—ऊवतुस् ( स्=र्=: )=ऊवतुः । लिट् प्र० पु० ब० व०—ऊवुः । 'वेञ्' को 'वय्' आदेश केवल लिट् में ही होता है, लुट् में नहीं । अतः 'तास्' में यह अनिट् न होने के कारण 'उपदेशेऽत्वतः' की प्रवृत्ति न होने से 'थल्' में नित्य 'इट्' का आगम हुआ । उवयिथ । वेञ् धातु वृत्ति ञित्व के स्थानिवद्भाव से 'वय्' आदेश में आ जाने से आत्मनेपद भी होता है । वय् के यकार को वकार आदेश विकल्प से होता है ।

√वेञ्+लिट् ( =त, वेञ्='वय्' विकल्प से, द्वित्व, अभ्यास संज्ञा 'व्'='उ'—सम्प्रसारण, पूर्वरूप, हलादिशेष )—उ वय् त ( त=एश्='ए', 'व्'='उ'—सम्प्रसारण 'ग्रहिज्या', पूर्वरूप, दीर्घ, 'य्'='व्' विकल्प से—'वश्चान्यतरस्यां किति' )=ऊवे । 'व्' आदेश के अभाव पक्ष में—ऊये । 'वय्' आदेश भी विकल्प से होता है । उसके अभावपक्ष में रूपसिद्धि के लिए सूत्र कहा जा रहा है—

**( ६३० ) पद**—वेञः । **अनुवृत्ति**—लिटि, न, सम्प्रसारणम् । **विधिसूत्र** ( निषेध ) ।

**वेञः सम्प्रसारणं न स्याल्लिटि । ववौ । ववतुः । ववुः । वविथ । ववाथ । ववे । ववाते वविरे । वाता । ऊयात् । वासीष्ट । इट्सकौ । अवासीत् । अवासिष्टाम् । अवासिषुः । अवास्त । अवासाताम् । व्येञ् संवरणे । व्ययति । व्ययते । ( ६३१ ) न व्यो लिटि ६।१।४६ । व्येञ आत्वं न स्याल्लिटि । परमपि हलादेः शेषं बाधित्वा यस्य सम्प्र-**

---

सम्प्रसारणमि'त्यतो न सम्प्रसारणमिति चानुवर्तते । तदाह्—वेञ इति । **ववौ** । वेञ्-धातोर्लिटि तिपि, तिपः णलादेशे वयादेशाभावपक्षे 'वेञः' इति सम्प्रसारणनिषेधे 'आदेच उपदेशे' इत्यात्वे 'आत औ णलः' इति णलः स्थाने औत्वे धातोर्द्वित्वेऽभ्यासत्वे ह्रस्वे 'वृद्धिरेचि' इति वृद्धौ 'ववौ' इति ।

---

**मूलार्थ**—लिट् लकार के परवर्ती रहते 'वेञ्' धातु को सम्प्रसारण नहीं होता । ववौ । ववतुः इत्यादि ।

**विमर्श**—सूत्रार्थ को स्पष्ट करने के लिए 'लिटि वयो यः' ( ६२८ ) से 'लिटि' तथा 'न सम्प्रसारणे सम्प्रसारणम्' ( ६।१।३६ ) से 'न, सम्प्रसारणम्' की अनुवृत्ति आती है । तदनुसार—'वेञ् धातु को लिट् के परे रहते सम्प्रसारण नहीं होता' ।

**उदाहरण**—( १ ) √वेञ्+लिटि ( तिप्=णल्, 'वय्' आदेश के अभावपक्ष में—प्राप्त सम्प्रसारण का 'वेञः' से निषेध, 'ए'='आ'—आत्व—'आदेच उपदेशे', द्वित्व, अभ्यास संज्ञा, ह्रस्व, णल्='औ'—'आत औ णलः', आ+औ='औ'=वृद्धि—'वृद्धिरेचि' )=ववौ । ( २ ) लिट् प्र० पु० द्वि० व०—ववतुः । ( ३ ) बहुव०—ववुः । ( ४ ) म० पु० एकव०—वविथ-ववाथ । ( ५ ) म० पु० द्वि० व०—ववथुः । ( ६ ) म० पु० ब० व०—वव । ( ७ ) उ० पु० ए० व०—ववौ । ( ८ ) उ० पु० द्वि०—वविव ( ९ ) उ० पु० ब० व०—वविम । लिट् ( आत्मनेपद ) में—ववे, ववाते, वविरे इत्यादि । लुट्—वाता । लिङ्—ऊयात्, वासीष्ट ।

**√वेञ् धातु, लुङ् लकार के रूप ( परस्मैपद )**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०– | अवासीत् | अवासिष्टाम् | अवासिषुः |
| म० पु०– | अवासीः | अवासिष्टम् | अवासिष्ट |
| उ० पु०– | अवासिषम् | अवासिष्व | अवासिष्म |

**( आत्मनेपद )**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०– | अवास्त | अवासाताम् | अवासत |
| म० पु०– | अवास्थाः | अवासाथाम् | अवास्ध्वम् |
| उ० पु०– | अवासि | अवास्वहि | अवास्महि |

√व्येञ् का अर्थ 'संवरण' ( ='घेरना', ढकना, वश में करना ) है । ( ३ ) लट्—व्ययति, व्ययते ।

**( ६३१ ) पद**—न, व्यः, लिटि । **अनुवृत्ति**—आदेचः, उपदेशे । **विधिसूत्र ।**

**मूलार्थ**—लिट् के परवर्ती रहते 'व्येञ्' धातु को आत्व नहीं होता ।

सारणम्, 'उभयेषां' ग्रहणसामर्थ्यात् । अन्यथा वच्यादीनां, ग्रह्यादीनां चानुवृत्त्यैव सिद्धे, किं तेन ? विव्याय । विव्यतुः विव्युः । ( ६३२ ) इडत्त्यर्तिव्ययतीनाम् ७।२।६६ । अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् । विव्ययिथ । विव्यथुः । विव्य । विव्याय । विव्यय । विव्यिव । विव्यिम । विव्ये । व्याता । व्यास्यति । वीयात् । व्यासीष्ट । अव्यासीत् । अव्यास्त । ह्वेञ् स्पर्धायां शब्दे च । ह्वयति । ह्वयते । ( ६३३ ) अभ्यस्तस्य च

---

( ६३१ ) न व्यो लिटि । 'आदेच उपदेशेऽशिति' इत्यस्मात् आदित्यनुवर्तते । अत आह—व्येञ आत्वमित्यादि ।

( ६३२ ) इडत्यर्तीति । 'अचस्तास्वदि'त्यतः थलीत्यनुवर्तते । तदाह—अद्-ऋ-व्येञ् एभ्यस्थल इत्यादि । विव्ययिथ । व्येञ् धातोः लिटि सिपि थलि धातोर्द्वित्वे अभ्याससम्प्रसारणे 'इडत्यर्तिव्ययतीनाम्' इति थल इडागमेऽनुबन्धलोपे अयादेशे 'विव्ययिथ' इति रूपम् ।

---

**विमर्श**—पूर्वसूत्र 'आदेच उपदेशेऽशिति' ( ६।१।४५ ) से 'आदेचः, उपदेशे' की अनुवृत्ति आती है । इस प्रकार—'उपदेश में एजन्त व्येञ् धातु को लिट् के परे रहते आत्व नहीं होता' । लिट् में द्वित्व के अनन्तर अभ्यास संज्ञा, तत्पश्चात् सम्प्रसारण एवं हलादिशेष दोनों की युगपत् ( एक साथ ) प्राप्ति होती है, पर होने के कारण हलादिशेष की प्राप्ति होती है; किन्तु 'उभयेषाम्' से 'सम्प्रसारणं तदाश्रयञ्च कार्यं बलवत्' ज्ञापन होने से प्रथमतः सम्प्रसारण ही होता है । अन्यथा 'लिट्यभ्यासस्य' इतना ही सूत्र बनाकर आचार्य उसमें वच्यादि और ग्रह्यादि की अनुवृत्ति करते । 'उभयेषां' ग्रहण व्यर्थ ही होता ।

( १ ) व्येञ्+लिट् ( =तिप्=णल्='अ', द्वित्व, अभ्यास संज्ञा, 'य्'='इ'—सम्प्रसारण—'लिट्यभ्यासस्य', पूर्वरूप )—वि व्ये अ ( ए='ऐ'—वृद्धि, ऐ='आय्' आदेश )=विव्याय । प्राप्त आत्व का 'न व्यो लिटि' से निषेध । ( २ ) व्येञ्+लिट् ( =तस्=अतुस्, य्=इ—सम्प्रसारण, पूर्वरूप, वि को द्वित्व )—वि वि अतुस् ( इ=य्—'यण्', स्=र्=ः )=विव्यतुः । ( ३ ) लिट् प्र० पु० बहुवचन—विव्युः ।

**( ६३२ ) पद—इट्**, अत्यर्तिव्ययतीनाम् । **अनुवृत्ति**—थलि । **विधिसूत्र** ।

**मूलार्थ**—अत्, ऋ और व्येञ् से परवर्ती थल् को नित्य इट् का आगम होता है । विव्ययिथ । विव्यथुः । इत्यादि ।

**विमर्श**—'अचस्तास्वत्थल्यनिटो नित्यम्' ( ७।२।६१ ) सूत्र से 'थलि' पद की अनुवृत्ति आती है । अतः 'अद भक्षणे, ऋ गतौ और व्येञ् संवरणे' धातुओं से परवर्ती 'थल्' को नित्य इट् ( =इ ) का आगम होता है ।

**उदाहरण**—( १ ) √व्ये+लिट् ( =सिप्=थल्='थ', द्वित्व, अभ्यास को सम्प्रसारण 'य्'='इ'—पूर्वरूप, हलादिशेष, इट्='इ' का आगम—'इडत्यर्तिव्ययतीनाम्' )—वि व्ये इ थ ( 'ए'='अय्' आदेश )=विव्ययिथ । ( २ ) लिट्—म० पु० द्वि०—विव्यथुः । ( ३ ) लिट्—म० पु० बहु०—विव्य । ( ४ ) लिट् म० पु० ए० व०—विव्याय-विव्यय ( णलुत्तमो वा ) । ( ५ ) लिट् उ० पु० द्वि० व०—विव्यिव । ( ६ ) लिट् उ० पु० बहु०—विव्यिम । ( ७ ) लिट्—( आत्मनेपद ) प्र० पु० ए० व०—विव्ये । ( ८ ) लुट्—व्याता । ( ९ ) लृट्—व्यास्यति ( १० ) व्ये+लिङ् ( =तिप्=ति, इकारलोप, यासुट्, सम्प्रसारण—'ग्रहिज्या' पूर्वरूप )—वि यास् त

६।१।३३। अभ्यस्तीभविष्यतो ह्वेञः सम्प्रसारणं स्यात्। जुहाव। जुहुवे। ह्वाता। ह्वास्यति। ह्वास्यते। (६३४) लिपिसिचिह्वश्च ३।१।५३। च्लेरङ्। (६३५) आत्मनेपदेष्वन्यतरस्याम् ३।१।५४। अह्वत्। अह्वताम्। अह्वन्। अह्वत-अह्वास्त। राजृ दीप्तौ। राजति। राजते। रराज। रेजतुः। रराजतुः। रेजुः। रराजुः। रेजे।

---

(६३३) अभ्यस्तस्य चेति। ह्वेञ इति, सम्प्रसारणं चेत्यनुवर्तते। तदाह—अभ्यस्तीभविष्यत इत्यादिना। जुहाव। ह्वेञ्धातोर्लिटि, तिपि, तिपः णलादेशे अनुबन्धलोपे 'अभ्यस्तस्य चे'ति सम्प्रसारणे पूर्वरूपे द्वित्वेऽभ्यासत्वे हलादिशेषे 'अभ्यासे चर्च' इति चर्त्वे 'अचो ञ्णिति' इति वृद्धौ आवादेशे च कृते 'जुहाव' इति।

(६३४) लिपिसिचीति। लिपि सिचि ह्वा इत्येषां समाहारद्वन्द्वात्पञ्चम्येकवचनम्। च्लेः अङिति चानुवर्तते। तदाह—च्लेरङिति।

(६३५) आत्मनेपदेष्विति। 'लिपिसिचिह्वश्चे'ति सूत्रम्, च्लेरङ् चानुवर्तते। आत्मनेपदे च्लेरङ् वा स्यादित्यर्थः। अह्वदिति। ह्वेञ्धातोर्लुङि, तिपि, 'इतश्चे'तीकारलोपे 'च्लि लुङि' इति च्लौ, 'लिपिसिचिह्वश्चे'त्यनेन च्लेरङि अनुबन्धलोपे,

---

('स्' का लोप—'स्कोः', 'इ'='ई'—दीर्घ—'अकृत्सार्वधातुकयोः')=वीयात्। आत्मनेपद—व्यासीष्ट। (११) लुङ्—अव्यासीत्। आत्मनेपद में—अव्यास्त।

√ह्वेञ् धातु का अर्थ—'स्पर्धा करना, जोर से बुलाना' है। लट्—ह्वयति। ह्वयते।

**(६३३) पद**—अभ्यस्तस्य, च। **अनुवृत्ति**—ह्वेञः, सम्प्रसारणम्। **विधिसूत्र।**

**मूलार्थ**—अभ्यस्त हो रहे (अभ्यस्त संज्ञा की संभावना होने पर) ह्वेञ् धातु को सम्प्रसारण होता है। जुहाव। जुहुवे। इत्यादि।

**विमर्श**—प्रकृत सूत्र में 'ह्वेञः सम्प्रसारणम्' की अनुवृत्ति आती है। तदनुसार—'अभ्यस्त के निमित्त ह्वेञ् धातु को सम्प्रसारण होता है'।

**उदाहरण**—(१) ह्वे+लिट् (तिप्=णल्='अ', 'व्'='उ'—सम्प्रसारण, पूर्वरूप)—हु अ (द्वित्व, अभ्यास संज्ञा, 'कुहोश्चुः' से चुत्व, जश्त्व, वृद्धि)=जुहाव। आत्मनेपद—जुहुवे। (२) लुट्—ह्वाता। (३) लृट्—ह्वास्यति। ह्वास्यते।

**(६३४) पद**—लिपिसिचिह्वः, च। **अनुवृत्ति**—च्लेः, अङ्। **विधिसूत्र।**

**मूलार्थ**—लिप्, सिच् और ह्वेञ् धातु से परवर्ती 'च्लि' को अङ् आदेश होता है।

**विमर्श**—प्रकृत सूत्र में—'च्लेः सिच्' (३।१।४४) से 'च्लेः' और 'अस्यतिवक्तिख्यातिभ्योऽङ्' (३।१।५२) से 'अङ्' पदों की अनुवृत्ति आती है। तदनुसार—"लिप्, सिच् और ह्वेञ् धातु से भी परवर्ती 'च्लि' के स्थान में 'अङ्' आदेश होता है।"

**(६३५) पद**—आत्मनेपदेषु, अन्यतरस्याम्। **अनुवृत्ति**—लिपिसिचिह्वः, अङ्, च्लेः। **विधिसूत्र।**

**मूलार्थ**—आत्मनेपद में लिप्, सिच् और ह्वेञ् धातु से परवर्ती 'च्लि' को 'अङ्' आदेश विकल्प से होता है। **अह्वत**–अह्वास्त इत्यादि।

**विमर्श**—पूर्वसूत्र 'लिपिसिचिह्वश्च' (६३५) से 'लिपिसिचिह्वः' 'च्लेः सिच्' (३।१।४४) से 'च्लेः' तथा 'अस्यतिवक्ति' (३।१।५२) से 'अङ्' की अनुवृत्ति आने से—"आत्मनेपद में लिप् इत्यादि धातुओं से परे 'च्लि' के स्थान में विकल्प से 'अङ्' आदेश होता है।"

**उदाहरण**—(१) √ह्वे+लुङ् (=तिप्=ति, इकारलोप, च्लि, च्लि=अङ्='अ'—

रराजे । हिक्क अव्यक्ते शब्दे । हिक्कति । हिक्कते । अञ्चु गतौ याचने च । अञ्चति । अञ्चते । अच इत्येके । 'अचि' इत्यपरे । टुयाचृ याच्ञायाम् । याचति । याचते । बुधिर् बोधने । बोधति । बोधते । इरित्त्वादङ् वा । अबुधत्-अबोधीत् । अबोधिष्ट । खनु अवदारणे । खनति । खनते । चखान । चख्नतुः । चख्नुः । चख्ने । खायात् । खन्यात् । चीवृ आदानसंवरणयोः । चीवति । चीवते । चायृ पूजानिशामनयोः । चायति । चायते । व्यय गतौ । व्ययति । व्ययते । विव्याय । विव्यये । दाशृ दाने । दाशति । दाशते । भेषृ भये । गतावित्येके । भेषति । भेषते । अस गतिदीप्त्यादानेषु । असति । असते । आस । आसे । अयं षान्तोऽपि । स्पश बाधनस्पर्शनयोः । स्पर्शनं ग्रन्थनम् । स्पशति । स्पशते । लष कान्तौ । लष्यति-लषति । लष्यते-लषते । चष भक्षणे । चषति । चषते । झष आदानसंवरणयोः । झषति । झषते । दासृ दाने । दासति । दासते । धावु गतिशुद्धयोः । धावति । धावते ।

इति भ्वादिप्रकरणम् ।

---

अङ्गस्याडागमे, आत्त्वे, 'अ ह्वा अ त्' इति जाते 'आतो लोप इटि च' इत्याकारलोपे 'अह्वत्' इति । आत्मनेपदे—'आत्मनेपदेष्वन्यतरस्याम्' इत्यनेन विभाषया अङादेशे 'अह्वत' इति । अङभावे तु च्लेः सिचि 'अ ह्वा स् त' इति जाते संयोगे कृते 'अह्वास्त' इति ।

---

'लिपिसिचिह्वश्च', आत्व, अट् का आगम )—अ ह्वा अ त् ( 'आ' का लोप—'आतो लोप इटि च' ) =अह्वत् । आत्मनेपद में √ह्वे+लुङ् ( =त, अट् का आगम, आत्व, च्लि, च्लि=अङ्='अ'—विकल्प से—'आत्मनेपदेष्वन्यतरस्याम्'—आकारलोप )=अह्वत । अङ् के अभाव पक्ष में—अह्वास्त ।

√राजृ धातु का अर्थ 'दीप्ति' ( =प्रकाशित होना ) है । ( १ ) लट्—राजति । राजते । ( २ ) लिट् प्र० पु० ए० व० ( प० प० )—रराज । ( ३ ) लिट्—प्र० पु० द्वि० व०—रेजतुः, रराजतुः ( यहाँ 'फणां च सप्तानाम्' से विकल्प एत्व और अभ्यास का लोप होने से दो रूप बनते हैं ) । ( ४ ) लिट्—प्र० पु० बहुव०—रेजुः । रराजुः । आत्मनेपद, लिट् प्र० पु० एकव०—रेजे । रराजे ।

√हिक्क का अर्थ—'हिचकी आना' है । लट्—हिक्कति । हिक्कते । √अञ्चु धातु का अर्थ—'जाना, माँगना' है । कुछ विद्वानों के अनुसार यहाँ 'अच' पाठ है । अन्य आचार्य 'अचि' पाठ मानते हैं ।

√'टु याचृ' का अर्थ—'माँगना' है । लट्—याचति । याचते । √बुधिर् (=बुध्) का अर्थ—'बोधन' ( =समझना ) है । ( १ ) लट्—बोधति । बोधते । ( २ ) √बुध्+लुङ् ( =तिप्=ति, इकारलोप, अट्, च्लि, च्लि=अङ्='अ'—विकल्प से—'इरितो वा' )=अबुधत् । अङ् के अभावपक्ष में—( च्लि=सिच्='स्' इट्, ईट् )—अबुध् इ स् ई त् ( 'स्' का लोप—'इट ईटि', गुण )=अबोधीत् । आत्मनेपद में—अबोधिष्ट । √खनु का अर्थ—'अवदारण' ( =खोदना ) है । ( १ ) लट्—खनति । खनते । ( २ ) लिट् प्र० पु० ए० व०—चखान । ( ३ ) खन्+लिट् ( =तस्=अतुस्, द्वित्व, अभ्यास संज्ञा, हलादि शेष )—ख खन् अतुस् ( चुत्व, 'अ' उपधा का

# अथ अदादिप्रकरणम्

**( ६३६ ) ऋतेरीयङ् ३।१।२९। स्वार्थे। ऋतिः सौत्रः। जुगुप्सायामिति बहवः। कृपायां चेत्येके। ऋतीयते। ऋतीयाञ्चक्रे। 'आयादय' इति ईयङभावपक्षे शेषत्वात्पर-**

---

**लष कान्ताविति।** लष्यति–लषति, लष्यते–लषते। अत्र 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः' इति श्यन्विकल्पः।

**इति भ्वादिप्रकरणम्।**

**( शब्विकरणनिरूपणं समाप्तम्। )**

---

शब्विकरणधातुनिरूपणानन्तरं लुग्विकरणान् धातून् निरूपयितुमुपक्रमते—

( ६३६ ) **ऋतेरीयङिति।** ऋतेर्धातुपाठेऽदर्शनादाह—ऋतिः सौत्रः। **स्वार्थ इति।**

---

लोप—'गमहनजनखनघसां लोपः क्ङित्यनङि', स्=र्=:)=चख्नतुः। (४) लिट् प्र० पु० बहुव०—चख्नुः। आत्मनेपद में—चख्ने, चख्नाते, चख्निरे। इत्यादि। (५) आशीर्लिङ् में 'ये विभाषा' से विकल्प से आत्व—खायात्–खन्यात्। आत्मनेपद में—खनिषीष्ट।

√चीवृ ( =चीव् ) धातु का अर्थ—'लेना, ढकना' है। लट्—चीवति। चीवते। √चायृ ( =चाय् ) का अर्थ 'स्वागत, पूजा करना और चाहना' है। (१) लट्—चायति। चायते। √व्यय धातु का अर्थ 'गमन'=( जाना व्यय करना ) है। लट्—व्ययति। व्ययते। √दाशृ ( =दाश् ) धातु का अर्थ 'दान करना' है। लट्—दाशति। दाशते। √भेषृ ( =भेष् ) का अर्थ—'डरना' है। कुछ आचार्यों के अनुसार इस धातु का अर्थ 'गति'=( जाना ) है। लट्—भेषति। भेषते। √अस् धातु का अर्थ—'जाना, चमकना, लेना' है। (१) लट्—असति। असते। (२) लिट् प्र० पु० ए० व०—आस। आत्मनेपद में—आसे। यह धातु षकारान्त भी है। √स्पश् धातु का अर्थ बाधन और स्पर्शन ( =गूँथना ) है। लट्—स्पशति। स्पशते। √लष् का अर्थ—'चमकना, इच्छा करना' है। लट्—लष्यति-लषति ( यहाँ 'वा भ्राशभ्लाशभ्रमुक्रमु०' से विकल्प से श्यन् होता है। पक्ष में शप् )। आत्मनेपद में—लष्यते-लषते। √चष धातु का अर्थ—'चखना, खाना' है। लट्—चषति। चषते। √झष् धातु का अर्थ—'आदान, ढकना' है। लट्—झषति। झषते। √दास् का अर्थ 'देना' है। लट्—दासति। दासते। √धावु ( =धाव् ) धातु का अर्थ—'दौड़ना और शुद्ध होना' है। लट्—धावति। धावते।

**भ्वादिप्रकरण समाप्त।**

---

भ्वादि-प्रकरण में शप् विकरण वाली धातुओं की रूपसिद्धि का विवेचन किया गया। अब अदादि-प्रकरण में ( शप् का ) लुक् विकरण वाली धातुओं की रूपसिद्धि की प्रक्रिया बतलायी जा रही है—

**( ६३६ ) पद**—ऋतेः, ईयङ्। **विधिसूत्र।**

**मूलार्थ**—'ऋत' धातु से स्वार्थ में ईयङ् प्रत्यय होता है। √'ऋति' यह सूत्रपठित धातु है। कुछ आचार्य √'ऋत' धातु का अर्थ—'निन्दा करना' मानते हैं और कुछ 'कृपा करना' अर्थ

**स्मैपदम् । द्वित्वेऽभ्यासलोपे च जाते, 'उरत्' । 'तस्मान्नुड्द्वी'ति नुट् । गुणः । आनर्त्त । अर्तिष्यतीत्यादि । अद भक्षणे । (६३७) अदिप्रभृतिभ्यः शपः २।४।७२ । लुक् स्यात् । अत्ति । अत्तः । अदन्ति । अत्सि । अत्थः । अत्थ । अद्मि । अद्वः । अद्मः । ( ६३८ )**

---

अर्थविशेषनिर्देशाभावादिति भावः । **ऋतीयत इति ।** ऋत् धातोर्लटि, तङि, शपि, 'ऋतेरीयङ्' इत्यनेन ईयङि, पररूपे टेरेत्वे च कृते 'ऋतीयते' इति ।

( ६३७ ) **अदिप्रभृतिभ्य इति ।** 'ण्यक्षत्रियार्षञितः' इत्यतो 'लुगि'त्यनुवर्तते । अदिप्रभृतिभ्यः परस्य शपो लुगित्यर्थः । **अत्ति ।** अद्धातोः 'वर्तमाने लट्' इति लटि, लः स्थाने प्रथमपुरुषगतैकत्वविवक्षायां तिप्यनुबन्धलोपे 'अद् ति' इति जाते सार्वधातुकसंज्ञायां 'कर्तरि शप्' इति शपि जाते 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि 'खरि चे'ति दस्य चर्त्वेन तकारे 'अत्ति' इति रूपं सिद्धम् ।

---

इसका प्रयोग करते हैं । ऋतीयते । ऋतीयाञ्चक्रे । आर्धधातुक प्रत्यय की विवक्षा में 'ईयङ्' विकल्प से होता है । ईयङ् के अभाव पक्ष में परस्मैपद लिट् में—आनर्त । लृट् में—अर्तिष्यति इत्यादि ।

**विमर्श**—'धातोः, प्रत्ययः परश्च' का अधिकार है । अतः 'ऋति' धातु से स्वार्थ में ईयङ् प्रत्यय होता है । "अर्थ निर्देश से रहित प्रत्यय स्वार्थ में होते हैं ।" इस नियम से 'ईयङ्' भी स्वार्थ में होता है । इस प्रकार ऋत्+ईयङ् ( =ईय )—'ऋतीय' की 'सनाद्यन्ताः' से धातुसंज्ञा हुई ।

**उदाहरण**—( १ ) √ऋत्+ईयङ् ( =ईय )—ऋतीय ( धातुसंज्ञा होकर )+लट् ( =त, शप्='अ'—पररूप, एत्व )=ऋतीयते । ( २ ) √ऋत्+ईयङ्=ऋतीय+लिट् ( =आम्—'कास्यनेकाचः', 'आमः' से लिट् का लुक्, लिट्परक √कृ का अनुप्रयोग—'कृञ्चानुप्रयुज्यते लिटि' )—ऋतीय कृ लिट् ( =त=एश्=ए, द्वित्व, अभ्यास संज्ञा, ऋ='अ'—'उरत्' रपर, हलादि शेष, अभ्यास को चर्त्व, यण्, अनुस्वार, परसवर्ण )=ऋतीयाञ्चक्रे । 'आयादय आर्धधातुके वा' से 'ईयङ्' विकल्प से होने के कारण अभावपक्ष में—√ऋत्+लिट् ( शेषत्वात् परस्मैपद प्र० पु० एकव०—तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा ऋ='अ'—'उरत्', रपर, हलादिशेष )—अ ऋत् अ ( अभ्यास को दीर्घ 'अत आदेः', नुट्='न्'—'तस्मान्नुड् द्विहलः', 'ऋ'='अ'—गुण 'पुगन्त०' रपर )=आनर्त । ( ३ ) लृट्—अर्तिष्यति । इत्यादि ।

**√अद** धातु का अर्थ—भक्षण ( =खाना ) है ।

**( ६३७ ) पद**—अदिप्रभृतिभ्यः, शपः । **अनुवृत्ति**—लुक् । **विधिसूत्र ।**

**मूलार्थ**—अदादि-गण में पठित धातुओं से परवर्ती 'शप्' का लुक् होता है । अत्ति, अत्तः, अदन्ति इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' ( २।४।५८ ) से 'लुक्' पद की अनुवृत्ति आती है । तदनुसार—'अद् आदि धातुओं से परे शप् विकरण का लुक् ( =अदर्शन ) हो जाता है' ।

**उदाहरण**—( १ ) √अद्+लट् ( =तिप्=ति, सार्वधातुक संज्ञा, शप्—'कर्तरि शप्' शप् का लुक्—'अदिप्रभृतिभ्यः शपः' )—अद् ति ( 'द्'='त्'—'खरि च' )=अत्ति । ( २ ) लट् प्र० पु० द्विव०—अत्तः । ( ३ ) प्र० पु० बहुव०-अदन्ति ( झ्='अन्त' आदेश ) । ( ४ ) म० पु० ए० व०—अत्सि । ( ५ ) √अद्+लट् ( =थस्, शप् का लुक्, चर्त्व—'द'='त' स्=र्=: )

लिट्यन्यतरस्याम् २।४।४०। अदो घस्लृ वा स्याल्लिटि। जघास। उपधालोपः। घस्य चर्त्वे। ( ६३९ ) शासिवसिघसीनां च ८।३।६०। इण्कुभ्यामेषां सस्य षः। जक्षतुः। जक्षुः। घसस्तासावभावात्थलि नित्यमिट्–जघसिथ। आद। आदतुः। आदुः। 'इडत्य-

( ६३८ ) लिटयन्यतरस्यामिति। 'अदो जग्धिः' इत्यस्मात् अद इति, 'लुङ्सनोर्घस्लृ' इत्यतो घस्लृ इति चानुवर्तते। तदाह—अद इति। जघास इति। अद्धातोः लिटि, लः स्थाने प्रथमपुरुषैकवचने तिपि, तिपो णलि, अनुबन्धलोपे 'लिटयन्यतरस्यामि'ति अदो 'घस्लृ' आदेशे लृकारस्येत्संज्ञायां लोपे च 'घस् अ' इति जाते 'लिटि धातोरनभ्यासस्ये'ति द्वित्वे अभ्यासत्वे हलादिशेषे 'कुहोश्चुः' इति घस्य झकारे, 'अभ्यासे चर्चे' इति झस्य जत्वे 'अत उपधायाः' इति घकाराकारस्य वृद्धौ 'जघास' इति। 'घस्लृ' इत्यादेशाभावपक्षे तु 'आद' इति।

( ६३९ ) 'शासिवसि इति। 'इण्कोः' इति, 'अपदान्तस्य मूर्धन्यः' इति चाधिकृतम्। 'सहेः साडः सः' इत्यतः स इत्यनुवर्तते। तदाह—इण्कुभ्यामिति। जक्षतुः। 'अद भक्षणे' इत्यस्माद् धातोः लिटि, लः स्थाने प्रथमपुरुषगतद्विवचनविवक्षायां तसि, तसः स्थाने 'परस्मैपदानामि'त्यादिना अतुसादेशे, 'लिटयन्यतरस्यामि'ति विकल्पेन

=अत्थः। ( ६ ) म० पु० बहु०—अत्थ। लट् उ० पु० मिप्, वस्, मस् में 'द्' को चर्त्व नहीं होता।

√अद्=खाना, लट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | अत्ति | अत्तः | अदन्ति |
| म० पु०— | अत्सि | अत्थः | अत्थ |
| उ० पु०— | अद्मि | अद्वः | अद्मः |

**( ६३८ ) पद**—लिटि, अन्यतरस्याम्। **अनुवृत्ति**—अदः, घस्लृ। **विधिसूत्र।**

**मूलार्थ**—लिट् के परवर्ती रहने पर 'अद्' के स्थान में विकल्प से 'घस्लृ' आदेश होता है। जघास।

**विमर्श**—सूत्रार्थ की पूर्ति हेतु 'अदो जग्धिर्ल्यप्ति किति' ( २।४।३६ ) से 'अदः' तथा 'लुङ्सनोर्घस्लृ' ( २।४।३७ ) से 'घस्लृ' की अनुवृत्ति आती है। तदनुसार—"लिट् परे रहते 'अद्' के स्थान में विकल्प से 'घस्लृ' आदेश होता है"।

**उदाहरण**—( १ ) अद्+लिट् (=प्र० पु० एकव०—तिप्=णल्=अ, अद्=घस्लृ=घस्—विकल्प से—'लिट्यन्यतरस्याम्' )—घस् अ ( द्वित्व, अभ्यास संज्ञा, 'स्' का लोप—'हलादिः शेषः' 'घ'='झ्'—'कुहोश्चुः' 'झ्'='ज्'—'अभ्यासे चर्च' 'अ'='आ'—वृद्धि—'अत उपधायाः' )=जघास।

**( ६३९ ) पद**—शासिवसिघसीनाम्, च। **अनुवृत्ति**—सः, इण्कोः, अपदान्तस्य मूर्धन्यः। **विधिसूत्र।**

**मूलार्थ**—इण्-कवर्ग से परवर्ती शास् और वस् धातु को सकार के स्थान में ( मूर्धन्य ) षकार आदेश होता है। जक्षतुः। जक्षुः। इत्यादि।

र्तिव्ययतीनामि'ति नित्यमिट् । आदिथ । अत्ता । अत्स्यति । अत्तु । अत्तात् । अत्ताम् ।

---

अदो 'घस्लृ' आदेशेऽनुबन्धलोपे, द्वित्वे अभ्यासादिकार्ये कृते, 'कुहोश्चुः' इति चुत्वे 'ज घस् अतुस्' इति जाते 'असंयोगाल्लिट् कित्' इत्यनेन कित्त्वे 'गमहनजन०' इत्युपधाकारलोपे 'खरि चे'त्यनेन घकारस्य ककारे 'शासिवसिघसीनाञ्चे'त्यनेन सकारस्य षत्वे संयोगे सस्य रुत्वे विसर्गे च कृते 'जक्षतुः' इति । घस्लृ-आदेशाऽभावे तु—'आदतुः' इति रूपम् ।

---

**विमर्श**—'इण्कोः' और 'अपदान्तस्य मूर्धन्यः' का अधिकार है । 'सहेः साडः सः' ( ८।३।५६ ) से 'सः' पद की अनुवृत्ति आ रही है । इस प्रकार—'इण् तथा कवर्ग से उत्तर शास् , वस् तथा घस् के सकार को भी मूर्धन्य आदेश होता है' ।

**उदाहरण**—( १ ) √अद्+लिट् ( =तस्=अतुस् , अद्=घस्लृ='घस्' विकल्प से )—घस् अतुस् ( द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'व'='झ्'—'कुहोश्चुः' 'झ्'='ज्'—अभ्यासे चर्च' )—जघस् अतुस् ( उपधा अकार का लोप—'गमहनजन०' 'स्'='ष्'—'शासिवसिघसीनां च' 'व्'='क्'—'खरि च' )—जक् ष् अतुस् ( क्+ष्=क्ष् , स्=र्=: )=जक्षतुः । ( २ ) लिट् प्र० पु० **बहु०**—जक्षुः ( 'घस्लृ' आदेश होने पर ) । ( ३ ) लिट् म० पु० एकव०—जघसिथ । यहाँ नित्य इट् होता है, **क्योंकि** घस् आदेश के लिट् और लुङ् में ही होने के कारण तास् में प्रयोग नहीं होता । अतः 'उपदेशेऽत्वतः' की अप्रवृत्ति से थल् में नित्य 'इट्' हो जाता है ।

'घस्लृ' आदेश के अभाव पक्ष में—'आद, आदतुः, आदुः' इत्यादि । √अद् धातु के थल् को उपदेश में अकारवान् होने से वैकल्पिक इट् की प्राप्ति होती है; परन्तु 'इडत्त्यर्तिव्ययतीनाम्' से नित्य इट् होकर—आदिथ ।

**√अद् लिट् लकार के रूप**

| | एक० | द्वि० | ब० |
|---|---|---|---|
| प्र० पु० | जघास | जक्षतुः | जक्षुः |
| म० पु० | जघसिथ | जक्षथुः | जक्ष |
| उ० पु० | जघास-जघस | जक्षिव | जक्षिम |

**घस्लृ आदेश के अभाव पक्ष में—**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | आद | आदतुः | आदुः |
| म० पु० | आदिथ | आदथुः | आद |
| उ० पु० | आद | आदिव | आदिम |

**√अद् लुट् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अत्ता | अत्तारौ | अत्तारः |
| म० पु० | अत्तासि | अत्तास्थः | अत्तास्थ |
| उ० पु० | अत्तास्मि | अत्तास्वः | अत्तास्मः |

अदन्तु । ( ६४० ) हुझल्भ्यो हेर्धिः ६।४।१०१ । होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि । अत्तात् । अत्तम् । अत्त । अदानि । अदाव । अदाम । ( ६४१ ) अदः सर्वेषाम् ७।३। १०० । अदः परस्यापृक्तसार्वधातुकस्य अट् स्यात्, सर्वमतेन । आदत् । आत्ताम् ।

---

( ६४० ) हुझल्भ्य इति । अङ्गविशेषणत्वात्तदन्तविधिस्तदाह—होर्झलन्तेभ्य इति । अद्धि इति । अद्धातोर्लोटि, लः स्थाने सिपि, 'सेर्ह्यपिच्च' इत्यनेन 'हि' इत्यादेशे 'अद् हि' इति स्थिते, शपि, 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि, 'तुह्योस्तातङ्ङाशिष्यन्यतरस्यामि'ति हेः स्थाने विकल्पेन तातङादेशेऽनुबन्धलोपे चर्त्वे 'अत्तादि'ति । पक्षे—'हुझल्भ्यो हेर्धिः' इत्यनेन हेः स्थाने 'धि' आदेशे 'अद्धि' इति ।

( ६४१ ) अदः सर्वेषामिति । 'अद' इति पञ्चम्येकवचनम् । 'तस्मादित्युत्तरस्ये'ति परिभाषया परस्येति लभ्यते । 'गुणोऽपृक्ते' इत्यतोऽपृक्ते इति, 'तुरुस्तुशम्यमः सार्वधातुके' इत्यतः सार्वधातुके इति चानुवर्तते । 'अड् गार्ग्यगालवयोः' इत्यतः अडित्यनुवर्तते । अत आह—अदः परस्येति । आदत् । अद्धातोर्लङि, लः स्थाने तिप्यनुबन्ध-

---

**√अद् लृट् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अत्स्यति | अत्स्यतः | अत्स्यन्ति |
| म० पु० | अत्स्यसि | अत्स्यथः | अत्स्यथ |
| उ० पु० | अत्स्यामि | अत्स्यावः | अत्स्यामः |

लोट् लकार में भी शप् का 'अदिप्रभृतिभ्यः' से लुक् होता है। √अद् धातु से लोट् लकार प्रथमपुरुष में—अत्तु-अत्तात् । अत्ताम् । अदन्तु ।

**( ६४० ) पद**—हुझल्भ्यः, हेः, धिः । **विधिसूत्र** ।

**मूलार्थ**—हु धातु और झलन्त धातुओं से परवर्ती 'हि' के स्थान में 'धि' आदेश होता है। अद्धि-अत्तात् इत्यादि ।

**उदाहरण**—( १ ) √अद्+लोट् ( =सिप्=‘हि’—'सेर्ह्यपिच्च', हि=तातङ्=‘तात्’—विकल्प से—'तुह्योः' चर्त्व )=अत्तात् । 'तातङ्' के अभावपक्ष में—अद् हि ( 'हि'='धि'—'हुझल्भ्यो हेर्धिः' )=अद्धि ।

**√अद् धातु लोट् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अत्तु-अत्तात् | अत्ताम् | अदन्तु |
| म० पु० | अद्धि-अत्तात् | अत्तम् | अत्त |
| उ० पु० | अदानि | अदाव | अदाम |

**( ६४१ ) पद**—अदः, सर्वेषाम् । **अनुवृत्ति**—अट्, अपृक्ते, सार्वधातुके । **विधिसूत्र** ।

**मूलार्थ**—'अद्' धातु से परवर्ती अपृक्त सार्वधातुक को सभी आचार्यों के मत से 'अट्' का आगम होता है । आदत् । आत्ताम् इत्यादि ।

**विमर्श**—यहाँ 'अस्तिसिचोऽपृक्ते' ( ७।३।९६ ) से 'अपृक्ते', 'तुरुस्तुशम्यमः सार्वधातुके' से 'सार्वधातुके' और 'अड् गार्ग्यगालवयोः' से 'अट्' की अनुवृत्ति आती है । तदनुसार—"अद् से परे अपृक्त सार्वधातुक को सभी आचार्यों के मतानुसार 'अट्' आगम होता है ।"

**आदन् । आदः । आत्तम् । आत्त । आदम् । आद्व । आद्म । अद्यात् । अद्याताम् । अद्युः । अद्यात् । अद्यास्ताम् । अद्यासुः । (६४२) लुङ्सनोर्घस्लृ २।४।३७। अदः ऌदित्त्वादङ् ।**

---

लोपे, इकारलोपे, शपि, तस्य 'अदिप्रभृतिभ्यः शपः' इति लुकि आडागमेऽनुबन्धलोपे 'आटश्चे'ति वृद्धौ 'अदः सर्वेषामि'ति अटचनुबन्धलोपे 'आदत्' इति ।

( ६४२ ) **लुङ्सनोरिति** । 'अदो जग्धिः' इत्यस्मात् 'अदः' इत्यनुवर्तते । तदाह—**अद इति । अघसत्** । अद्धातोर्लुङि, लः स्थाने प्रथमपुरुषगतैकत्वविवक्षायां तिपि, अनुबन्धलोपे, 'लुङ्सनोर्घस्लृ' इत्यनेन अदः स्थाने घस्लृ आदेशे ऌकारस्येत्संज्ञायां

---

**उदाहरण**—( १ ) √अद्+लङ् ( =तिप्=ति, इकारलोप, शप्, शप् का लुक्, आट्—'आडजादीनाम्' आ+अ='आ' वृद्धि—'आटश्च' )—आद् त ( अट्='अ'—आगम—'अदः सर्वेषाम्' )=आदत् ।

**√अद् लङ् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | —आदत् | आत्ताम् | आदन् |
| म० पु० | —आदः | आत्तम् | आत्त |
| उ० पु० | —आदम् | आद्व | आद्म |

विधिलिङ् में सार्वधातुक संज्ञा होने से 'यासुट्' के सकार का लोप 'लिङः सलोपोऽनन्त्यस्य' से हो जाता है। ( १ ) √अद्+लिङ् ( =तिप्=ति, शप् का लुक्, यासुट्=यास् )—अद् यास् ति ( 'स्' का लोप, इकार का लोप—'इतश्च' )=अद्यात् ।

**√अद् विधिलिङ् के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अद्यात् | अद्याताम् | अद्युः |
| म० पु० | अद्याः | अद्यातम् | अद्यात |
| उ० पु० | अद्याम् | अद्याव | अद्याम |

आशीर्लिङ् के आर्धधातुक होने के कारण सकार का लोप नहीं होता ।

**√अद् आशीर्लिङ् के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | —अद्यात् | अद्यास्ताम् | अद्यासुः |
| म० पु० | —अद्याः | अद्यास्तम् | अद्यास्त |
| उ० पु० | —अद्यासम् | अद्यास्व | अद्यास्म |

**( ६४२ ) पद**—लुङ्सनोः, घस्लृ । **अनुवृत्ति**—अदः । **विधिसूत्र** ।

**मूलार्थ**—लुङ् और सन् के परे रहते 'अद्' धातु को 'घस्लृ' आदेश होता है। अघसत् इत्यादि ।

**विमर्श**—सूत्र में स्थानीवाचक पद का अभाव है। अतः 'अदो जग्धिः' ( २।४।३६ ) से 'अदः' पद की अनुवृत्ति आती है। तदनुसार—"लुङ् और सन् के परवर्ती रहने पर 'अद्' के स्थान में 'घस्लृ' ( =घस् ) आदेश होता है"।

**उदाहरण**—√अद्+लुङ् ( ल्=प्र० पु० एकव०—तिप्=ति, अद्=घस्लृ='घस्'—'लुङ्सनोर्घस्लृ' )—घस् ति ( च्लि, प्राप्त 'सिच्' का बाधकर च्लि=अङ्='अ'—'पुषादि०', अट्, इकारलोप )=अघसत् ।

अघसत् । आत्स्यत् । हन हिंसागत्योः । हन्ति । ( ६४३ ) अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ६।४।३७। 'अनुनासिके'ति लुप्तषष्ठीकं, वनतीतरेषां विशेषणम् । अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ क्ङिति परे । यमि-रमि-नमि-गमि-हनि-मन्यतयोऽनुदात्तोपदेशाः । तनु-षणु-क्षणु-क्षिणु-ऋणु-तृणु-घृणु-वनु-मनु-तनोत्यादयः । हतः । घ्नन्ति । हंसि । हथः । हथ । हन्मि । हन्वः ।

---

लोपे च च्लौ, प्राप्तं सिजादेशं प्रबाध्य 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' इति च्लेः स्थाने अङ्यनुबन्धलोपे अङ्गस्य अडागमे 'इतश्चे'तीकारलोपे 'अघसत्' इति ।

( ६४३ ) अनुदात्तोपदेशेति । अनुनासिक इति लुप्तषष्ठीकं पदं वनतीतरेषां विशेषणम् । घ्नन्ति । हन्धातोर्लटि, लः स्थाने झिप्रत्यये, शपो लुकि, 'झोऽन्तः' इति झस्यान्तादेशे 'हन् अन्ति' इति जाते सार्वधातुकसंज्ञायां 'सार्वधातुकमपित्' इत्यन्तेः ङिद्वद्भावे 'गमहनजन०' इत्यादिना हन उपधालोपे 'हो हन्तेर्ञ्णिन्नेषु' इति हकारस्य कुत्वेन घकारे 'घ्नन्ति' इति ।

---

√अद् धातु लुङ् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | अघसत् | अघसताम् | अघसन् |
| म० पु०— | अघसः | अघसतम् | अघसत |
| उ० पु०— | अघसम् | अघसाव | अघसाम |

( २ ) √अद्+लृङ् ( =तिप्=ति, स्य, आट् का आगम, वृद्धि—'आटश्च' इकारलोप, 'द्'='त्'—चर्त्वं )=आत्स्यत् ।

√अद् धातु लृङ् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | आत्स्यत् | आत्स्यताम् | आत्स्यन् |
| म० पु०— | आत्स्यः | आत्स्यतम् | आत्स्यत |
| उ० पु०— | आत्स्यम् | आत्स्याव | आत्स्याम |

√हन् धातु का अर्थ—'मारना, जाना' है । ( १ ) √हन्+लट् ( =ति, सार्वधातुक संज्ञा, शप्—शप् का लुक्—'अदिप्रभृतिभ्यः' न्=ं-अनुस्वार—'नश्चापदान्तस्य झलि'—='न्' परसवर्ण—'अनुस्वारस्य ययि०' )=हन्ति ।

( ६४३ ) पद—अनुदात्तोपदेशवनतितनोत्यादीनाम् , अनुनासिकस्य, लोपः, झलि, क्ङिति । विधिसूत्र ।

**सूत्रार्थ**—अनुदात्तोपदेश, अनुनासिकान्त वन तथा तनोत्यादि धातुओं के अनुनासिक का लोप होता है, झलादि कित, ङित् के परे रहते ।

**विमर्श**—यहाँ 'अनुनासिक' पद लुप्तषष्ठ्यन्त है । अतः उसका सम्बन्ध 'लोपः' के साथ और 'अनुदात्तोपदेश' के साथ है । अतः—"अनुदात्तोपदेश ( जो उपदेशावस्था में अनुदात्त पढ़े गए हों ) और अनुनासिकान्त वन् और 'तन्' आदि धातुओं के अनुनासिक का झलादि कित ङित प्रत्ययों के परवर्ती रहते लोप होता है" ।

हन्मः । **( ६४४ ) वमोर्वा ८।४।२३ ।** उपसर्गस्थान्निमित्ताद्धन्तेर्नस्य णो वा स्याद्वमोः परयोः । प्रहण्मि–प्रहन्मि । प्रहण्वः–प्रहन्वः । प्रहण्मः–प्रहन्मः । जघान । जघ्नतुः ।

---

**( ६४४ ) वमोर्वा ।** 'उपसर्गादसमासेऽपी'ति सूत्रात् उपसर्गादित्यनुवर्तते । 'रषाभ्यां नो णः' इति सूत्रमनुवर्तते, 'हन्तेरत्पूर्वस्य' इत्यतो हन्तेरिति । तदाह—**उपसर्गस्थान्निमित्तादित्यादिना ।**

---

**यमि इति ।** अनुदात्तोपदेश निम्नलिखित छः धातुएँ हैं—

( १ ) यम उपरमे । ( २ ) रम क्रीडायाम् । ( ३ ) णम् पह्वत्वे । ( ४ ) गम गतौ । ( ५ ) हन हिंसागत्योः । ( ६ ) मन ज्ञाने ।

'तन्' आदि अनुनासिकान्त आठ धातुएँ हैं—

( १ ) तन विस्तारे । ( २ ) क्षण् हिंसायाम् । ( ३ ) क्षिण् हिंसायाम् । ( ४ ) ऋण् गतौ । ( ५ ) तृण् अदने । ( ६ ) घृण् दीप्तौ । ( ७ ) मनु अवबोधने ( ८ ) वनु याचने ।

( १ ) √हन्+लट् ( =तस्, शप् का लुक्, 'तस्' अपित्सार्वधातुक होने से 'सार्वधातुकमपित्' से ङिद्वत्, अतः अनुनासिकान्त 'हन्' धातु के नकार का लोप—'अनुदात्तोपदेश०' )—हतस् ( स्=र्=: )=हतः । ( २ ) √हन्+लट् ( =झि, शप् का लुक्, 'झ्'='अन्त्'—'झोऽन्तः' सार्वधातुक संज्ञा, ङिद्वत्, अकार ( उपधा ) का लोप—'गमहनजन०' 'ह्'='घ्'—'हो हन्तेर्ञ्णिन्नेषु' )=घ्नन्ति ।

### √हन् धातु लट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | हन्ति | हतः | घ्नन्ति |
| म० पु०— | हंसि | हथः | हथ |
| उ० पु०— | हन्मि | हन्वः | हन्मः |

**( ६४४ ) पद**—वमोः, वा । **अनुवृत्ति**—उपसर्गात्, हन्तेः, रषाभ्यां नो णः । **विधिसूत्र ।**

**मूलार्थ**—उपसर्गस्थ निमित्त से परवर्ती हन् धातु के नकार के स्थान में विकल्प से णकार आदेश होता है, वकार-मकार के परे रहते । प्रहण्मि–प्रहन्मि ।

**विमर्श**—सूत्रार्थ को स्पष्ट करने के लिए—'उपसर्गादसमासेऽपि०' ( ८।४।१४ ) से 'उपसर्गात्', 'हन्तेरत्पूर्वस्य' ( ८।४।२१ ) से 'हन्तेः' और 'रषाभ्यां नो णः समानपदे' ( ८।४।१ ) से 'रषाभ्यां नो णः' की अनुवृत्ति आती है । तदनुसार—'उपसर्ग में स्थित निमित्त ( र्, ष् ) से उत्तरवर्ती हन् धातु के नकार के स्थान में विकल्प से व तथा म के परवर्ती रहते णकार आदेश होता है' ।

**उदाहरण**—( १ ) प्र+हन्मि ( 'न्'='ण्'—विकल्प से—'वमोर्वा' )=प्रहण्मि । णकार आदेश के अभावपक्ष में—प्रहन्मि । इसी प्रकार—प्रहण्वः–प्रहन्वः । प्रहण्मः–प्रहन्मः । ( २ ) √हन्+लिट् ( =तिप्=णल्='अ', द्वित्व, अभ्यास संज्ञा, हलादिशेष )—ह हन् अ ( ह्='झ्'—'कुहोश्चुः', झ्='ज्'—'अभ्यासे चर्च' 'अत उपधायाः' से वृद्धि, 'ह्'='घ्'—'हो हन्तेः' )=जघान । ( ३ ) √हन्+लिट् ( =तस्=अतुस्, द्वित्व, अभ्यास संज्ञा, हलादिशेष, चुत्व, चर्त्व )—जहन् अतुस् ( उपधा अकार का लोप—'गमहन०' ह्='घ्'—'हो हन्तेः' )—जघ्नतुस् ( स्=र्=: )=जघ्नतुः । ( ४ ) लिट् प्र० पु० बहु०—जघ्नुः ।

जघ्नुः । ( ६४५ ) अभ्यासाच्च ७।३।५५ । अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात् । जघनिथ–जघन्थ । जघ्नथुः । जघ्न । जघान–जघन । जघ्निव । जघ्निम । हन्ता । हनिष्यति । हन्तु–हतात् । हताम् । घ्नन्तु । ( ६४६ ) हन्तेर्जः ६।४।३६ । हन्तेर्जः स्यात् हौ परे । ( ६४७ ) असिद्धवदत्राऽऽभात् ६।४।२२ । इत ऊर्ध्वमापादपरिसमाप्ते-राभीयम् । समानाश्रये तस्मिन्कर्तव्ये तदसिद्धं स्यात् । —इति जस्यासिद्धत्वाद्धेर्लुक् ।

---

( ६४५ ) अभ्यासाच्चेति । 'हो हन्तेः' इत्यनुवर्तते, 'चजोः कु घिण्यतोः' इत्यतः 'कु' इति पदञ्च । तदाह—अभ्यासात्परस्येति । जघनिथ । हन्धातोः लिटि, लः स्थाने मध्यमपुरुषैकवचने सिपि, सिपः स्थाने थलादेशेऽनुबन्धलोपे द्वित्वेऽभ्यासादिकार्ये 'ह हन् थ' इति जाते 'कुहोश्चुः' इति हकारस्य झकारे, 'अभ्यासे चर्च' इति जकारे 'अभ्यासाच्च' इत्यनेन हकारस्य कुत्वेन घकारे 'ऋतो भारद्वाजस्ये'ति नियमेन वैकल्पिके इडागमेऽनुबन्धलोपे 'जघनिथ' इति । इडभावपक्षे—'जघन्थ' इति ।

( ६४६ ) हन्तेर्ज इति । 'शा हौ' इत्यतः 'हौ' इत्यनुवृत्तिमभिप्रेत्य सूत्रं व्याचष्टे—हन्तेर्जः स्यादिति ।

( ६४७ ) असिद्धवदत्रेति । षष्ठाध्यायस्य चतुर्थपादे इदं सूत्रम् । आभादित्यभि-विधावाङ् । भस्येत्यधिकारमभिव्याप्येत्यर्थः । भाधिकारश्च आपादपरिसमाप्तेरिति । तथा च आपादपरिसमाप्तेरिति लभ्यते । यद्यत्सूत्रे इदमनुवर्तते तत्तदाभीयकार्यं

---

( ६४५ ) पद—अभ्यासात्, च । अनुवृत्ति—हो हन्तेः, कु । विधिसूत्र ।

मूलार्थ—अभ्यास से परे हन् धातु के हकार को कुत्व होता है ।

विमर्श—प्रकृत सूत्र में 'हो हन्तेर्ञ्णिन्नेषु' ( ७।४।५४ ) से 'हो हन्तेः' तथा 'चजोः कु घिण्यतोः' ( ७।४।५२ ) से 'कु' पदों की अनुवृत्ति आ रही है । अतः अभ्यास से उत्तरवर्ती भी हन् धातु के हकार को कवर्ग आदेश होता है ।

उदाहरण—( १ ) √हन्+लिट् ( =म० पु० एक०—सिप्=थल्=थ, द्वित्व, अभ्यास संज्ञा, हलादिशेष, अभ्यास के 'ह्'='झ्'—'कुहोश्चुः', 'झ्'='ज्'—'अभ्यासे चर्च' )—जहन् थ ( विकल्प से इट्—'ऋतो भारद्वाजस्य', 'ह्'='घ्'—'अभ्यासाच्च' )=जघनिथ । इट् के अभावपक्ष में—जघन्थ । ( २ ) लिट्—म० पु० द्वि०—जघ्नथुः ( उपधालोप ) । ( ३ ) लिट् म० पु० बहु०—जघ्न । ( ४ ) लिट् उ० पु० ए० व०—जघान-जघन । ( ५ ) लिट् उ० पु० द्वि०—जघ्निव । ( ६ ) लिट् उ० पु० बहु०—जघ्निम । ( ७ ) लुट्—हन्ता । ( ८ ) लृट्—हनिष्यति । ( ९ ) लोट् प्र० पु० एक०—हन्तु, हतात् । ( १० ) लोट् प्र० पु० द्वि०—हताम् । ( ११ ) लोट् प्र० पु० बहु० ( उपधालोप कुत्व )—घ्नन्तु ।

( ६४६ ) पद—हन्तेः, जः । अनुवृत्ति—हौ । विधिसूत्र ।

मूलार्थ—'हि' के परवर्ती रहते 'हन्' धातु को 'ज' आदेश होता है ।

विमर्श—'शा हौ' ( ६।४।३५ ) सूत्र से निमित्तवाचक पद 'हौ' की अनुवृत्ति आती है । तदनुसार—'हि' के परे रहते हन् धातु के स्थान में 'ज' आदेश होता है ।

( ६४७ ) पद—असिद्धवत्, अत्र, आभात् । अधिकारसूत्र ।

मूलार्थ—इस सूत्र से लेकर अष्टाध्यायी के षष्ठाध्याय की समाप्ति पर्यन्त 'आभीय' कहलाता है । समानाश्रय आभीय कार्य कर्तव्य हो तो पूर्वकृत आभीयशास्त्र असिद्ध होता है । इस प्रकार

जहि–हतात् । हतम् । हत । हनानि । हनाव । हनाम । अहन् । अहताम् । अघ्नन् । अहन् । अहतम् । अहत । अहनम् । अहन्व । अहन्म । हन्यात् । ( ६४८ ) आर्द्धधातुके २।४।३५ ।

कर्तव्येऽसिद्धमित्यर्थः । जहि । हन्धातोर्लोटि, लः स्थाने मध्यमपुरुषैकवचने सिपि, 'हन् सि' इति स्थिते, शपो लुकि, 'सेर्ह्यपिच्च' इत्यनेन सेः 'हि' इत्यादेशे 'हन्तेर्जः' इति हनः जादेशे 'जहि' इति रूपम् । अत्र 'अतो हेः' इति अतः परस्य हेर्लुक् न भवति, 'असिद्धवदत्राभादि'ति जादेशस्यासिद्धत्वादिति ।

( ६४८ ) आर्धधातुके । अधिकारोऽयम् ।

'ज' आदेश के असिद्ध होने से 'अतो हेः' से प्राप्त 'हि' का लुक् नहीं हुआ । जहि–हतात् । हतम् इत्यादि । —

**विमर्श**—'आभात्' में आङ् अभिविधि अर्थ में है । इस प्रकार 'आभात्' का तात्पर्य–'भस्य ( ६।४।१२९ ) का अधिकार जहाँ तक जाता है अर्थात् पाद की समाप्ति पर्यन्त' है । अत एव प्रकृत सूत्र से प्रारम्भ कर चतुर्थ पाद की समाप्ति तक सूत्रों से विहित कार्य 'आभीय' है ।

"समानाश्रय आभीय कार्य करना हो तो पूर्व का किया हुआ आभीय कार्य असिद्धवत् हो जाता है ।" समानाश्रय का तात्पर्य है—समान है आश्रय जिसका अर्थात् जिन कार्यों के निमित्त समान हों, उन्हें समानाश्रय कहते हैं । यहाँ 'ज' आदेश और 'हि' का लुक् आभीय कार्य हैं तथा समान आश्रय वाले भी हैं । क्योंकि 'ज' आदेश और 'हि' के लोप का आश्रय 'हन्' और प्रत्यय 'हि' दोनों हैं । अतः दोनों के समानाश्रय आभीय कार्य होने से पूर्व किया हुआ 'ज' आदेश 'हि' लोप की कर्तव्यता में असिद्धवत् हो जाता है । इस प्रकार अदन्त के अभाव में लोप नहीं होता ।

**उदाहरण**—√हन्+लोट् ( =सिप्, शप्, लुक्, सि='हि' 'सेर्ह्यपिच्च' 'हन्'='ज'—'हन्तेर्जः' )=**जहि** । यहाँ 'अतोः हेः' से 'हि' का लुक् प्राप्त है, परन्तु 'असिद्धवदत्राभात्' से 'ज' आदेश के असिद्धवत् होने से अदन्त के अभाव में 'हि' का लुक् नहीं होता । तातङ् पक्ष में—हतात् ।

**√हन् धातु लोट् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | हन्तु–हतात् | हताम् | घ्नन्तु |
| म० पु० | जहि–हतात् | हतम् | हत |
| उ० पु० | हनानि | हनाव | हनाम |

**हन् धातु लङ् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अहन् | अहताम् | अघ्नन् |
| म० पु० | अहन् | अहतम् | अहत |
| उ० पु० | अहनम् | अहन्व | अहन्म |

√हन्+विधिलिङ् ( =तिप्=ति, शप्, लुक्, यासुट्='यास्', इकारलोप )—हन् यास् त ( 'स्' का लोप—'लिङः सलोपोऽनन्त्यस्य' )=हन्यात् ।

**( ६४८ ) पद—आर्धधातुके । अधिकारसूत्र ।**

**सूत्रार्थ—यह अधिकार सूत्र है ।**

इत्यधिकृत्य । ( ६४९ ) हनो वध लिङि २।४।४२ । ( ६५० ) लुङि च २।४।४३ । वधादेशोऽदन्तः । 'आर्द्धधातुके' इति विषयसप्तमी, तेनार्द्धधातुकोपदेशेऽकारान्तत्वादतो लोपः । वध्यात् । वध्यास्ताम् । अवधीत् । अहनिष्यत् । यु मिश्रणामिश्रणयोः ।

---

( ६४९ ) हनो वध इति । हनो वधादेशः स्यादार्धधातुके लिङीत्यर्थः ।

( ६५० ) लुङि चेति । लुङि चापि हनो वधादेशः स्यादिति भावः । अवधीत् । हन्धातोर्लुङि 'लुङि चे'ति हनः स्थाने वधादेशे लः स्थाने तिपि, च्लौ, च्लेः स्थाने सिजादेशेऽनुबन्धलोपे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यटि, 'इतश्चे'तीकारलोपे 'अ वध् स् त्' इति जाते 'आर्धधातुकस्येड् वलादेः' इति इटि 'अतो लोपः' इति अकारस्य लोपे 'अस्तिसिचोऽपृक्ते' इतीडागमेऽनुबन्धलोपे 'इट ईटि' इति सकारलोपे 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति सिज्लोपस्य सिद्धत्वात्सवर्णदीर्घे 'अवधीत्' इति रूपम् ।

---

( 'वा यौ ( २।४।५७ ) सूत्र तक 'आर्धधातुक के विषय में' का अधिकार जाता है । )

**( ६४९ ) पद**—हनः, वध, लिङि । **विधिसूत्र** ।

**मूलार्थ**—लिङ् के परवर्ती रहने पर हन् धातु को 'वध' आदेश होता है ।

**विमर्श**—'आर्धधातुके' का अधिकार है । अतः आर्धधातुक लिङ् के परे रहते √हन् को वध आदेश होता है ।

**( ६५० ) पद**—लुङि च । **अनुवृत्ति**—हनो वध । **विधिसूत्र** ।

**मूलार्थ**—'लुङ्' के परवर्ती रहने पर भी 'हन्' धातु को 'वध' आदेश होता है । वध्यात् इत्यादि ।

**विमर्श**—'आर्धधातुके' ( ६४९ ) का अधिकार है । चकार से पूर्वसूत्र ( ६५० ) से 'हनो वध' की अनुवृत्ति आती है । तदनुसार—"आर्धधातुक लुङ् के विषय में भी 'हन्' धातु के स्थान में 'वध' आदेश होता है" । यह 'वध' आदेश अदन्त है ।

**'आर्धधातुके' इति** । अधिकार सूत्र 'आर्धधातुके' में विषयसप्तमी है । अर्थात् वैषयिक आधार के विषय में सप्तमी विभक्ति का प्रयोग हुआ है । आशय यह है कि यहाँ आर्धधातुक के परवर्ती रहने की आवश्यकता नहीं है, अपितु आर्धधातुक के विषय में यह आदेश होता है अर्थात् आर्धधातुकसंज्ञक प्रत्यय के आने से पूर्व ही यह आदेश हो जाता है । तत्पश्चात् वध से आर्धधातुक प्रत्यय आता है । इससे आर्धधातुक के उपदेशकाल में अदन्त होने से 'अतो लोपः' से अकार का लोप हो जाता है ।

**उदाहरण**—( १ ) √हन्+आशीर्लिङ् ( =तिप्=ति, आर्धधातुक संज्ञा, 'हन्'='वध'—'हनो वध लिङि', यासुट्='यास्'—किदाशिषि )—वध यास् ति ( 'अ' का लोप 'अतो लोपः' इ का लोप—'इतश्च', 'स्' का लोप—'स्कोः' )=वध्यात् । ( २ ) 'आशीर्लिङ्—प्र० पु० द्वि०—वध्यास्ताम् । ( ३ ) √हन्+लुङ् ( 'हन्'='वध'—'लुङि च' ल=तिप्='ति' च्लि, च्लि= सिच्='स्', अट्, इकार लोप-'इतश्च' )—अ वध स् त ( आर्धधातुक संज्ञा, इट्, 'अ' का लोप—'अतो लोपः' इट्—'अस्तिसिचोऽपृक्ते' 'स्' का लोप—'इट ईटि', इ+ई='ई'—सवर्णदीर्घ )= अवधीत् । ( ४ ) लृङ्—अहनिष्यत् ।

√यु धातु का अर्थ—'मिलाना, अलग करना' है ।

**( ६५१ ) उतो वृद्धिर्लुकि हलि ७।३।८९ ।** लुग्विषये उतो वृद्धिः स्यात्पिति हलादौ सार्वधातुके, न त्वभ्यस्तस्य । यौति । युतः । युवन्ति । यौषि । युथः । युथ । यौमि । युवः । युमः । युयाव । युयुवतुः । युयुवुः । युयविथ–युयोथ । युयुवथुः । युयुव । युयाव–युयव । युयुविव । युयुविम । यविता । यविष्यति । यौतु–युतात् । अयौत् ।

---

( ६५१ ) उतो वृद्धि इति । 'लुकि' इत्यत्र विषयसप्तमी । 'नाभ्यस्तस्याचि

---

**( ६५१ ) पद**—उतः, वृद्धिः, लुकि, हलि । **अनुवृत्ति**—नाभ्यस्तस्य पिति, सार्वधातुके । **विधिसूत्र ।**

**मूलार्थ**—हलादि पित् सार्वधातुक प्रत्यय के परवर्ती रहने पर लुक् के विषय में धातु के उकार को वृद्धि होती है, परन्तु अभ्यस्तसंज्ञक उकार को वृद्धि नहीं होती । यौति, युतः इत्यादि ।

**विमर्श**—प्रकृत सूत्र में अचि रहित 'नाभ्यस्तस्याचि पिति सार्वधातुके' ( ७।३।८७ ) सूत्र की अनुवृत्ति आती है । तदनुसार—'लुक् के विषय में उकार को वृद्धि होती है, हलादि पित् सार्वधातुक के परे रहते, परन्तु अभ्यस्तसंज्ञक को वृद्धि नहीं होती' ।

**उदाहरण**—( १ ) √यु+लट् ( =तिप्=ति, शप्, लुक्, 'उ'='औ'—वृद्धि—'उतो वृद्धिर्लुकि हलि' )=यौति । ( २ ) लट्—प्र० पु० द्वि० व०—युतः ( यहाँ तस् में अपित् सार्वधातुक होने से वृद्धि नहीं हुई । ( ३ ) √यु+लट् ( =प्र० पु० बहु०—झि, स्='अन्त्' आदेश—'झोऽन्तः' शप्, लुक्, अपित् होने से वृद्धि का अभाव, उ=उवङ्=उव )—युव अन्ति ( अ+अ='अ' पररूप )=युवन्ति ।

### √यु धातु लट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | यौति | युतः | युवन्ति |
| म० पु० | यौषि | युथः | युथ |
| उ० पु० | यौमि | युवः | युमः |

( १ ) यु+लिट् ( =तिप्=णल्='अ' द्वित्व, अभ्यासकार्य )—यु यु अ ( 'उ'='औ'—वृद्धि—'अचो ञ्णिति' औ='आव्' आदेश )=युयाव ।

### √यु धातु लिट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | युयाव | युयुवतुः | युयुवुः |
| म० पु० | युयविथ | युयुवथुः | युयुव |
| उ० पु० | युयाव–युयव | युयुविव | युयुविम |

( २ ) लुट्—यविता । ( ३ ) लृट्—यविष्यति । लोट्—यौतु । युतात् । लङ् लकार में 'तिप्' और सिप् में हलादि पित् होने के कारण वृद्धि होगी । 'मिप्' में अम्' आदेश हो जाने पर हलादि प्रत्यय के न रहने के कारण वृद्धि नहीं होती ।

### √यु लङ् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अयौत् | अयुताम् | अयुवन् |
| म० पु० | अयौः | अयुतम् | अयुत |
| उ० पु० | अयवम् | अयुव | अयुम |

अयुताम् । अयुवन् । युयात् । इह वृद्धिर्न, भाष्ये 'पिच्च ङिन्न ङिच्च पिन्ने'ति व्याख्यानात् । विशेषविहितेन ङित्वेन पित्त्वस्य बाधात् । युयाताम् । युयुः । यूयात् । यूयास्ताम् । यूयासुः । अयावीत् । अयाविष्यत् । या प्रापणे । याति । यातः । यान्ति । ययौ । याता । यास्यति । यातु । अयात् । अयाताम् । ( ६५२ ) **लङः शाकटायनस्यैव** ३।४।१११ । आदन्ताल्लङो झेर्जुस् वा । अयुः । अयान् । यायात् । यायाताम् । यायुः । यायात् । यायास्ताम् । यायासुः । अयासीत् । अयासिष्टाम् । अयास्यत् । एवं–वा गति-

---

पिति सार्वधातुके' इति सूत्रमचिवर्जमनुवर्तते । तदाह—**लुग्विषय इत्यादि । यौति ।** युधातोर्लटि, लः स्थाने तिपि, शपि, शपो लुकि, 'उतो वृद्धिर्लुकि हलि' इत्युकारस्य वृद्धौ 'यौति' इति ।

( ६५२ ) **लङः शाकटायनस्येति ।** झेर्जुस् इति, आत इति चानुवर्तते । तदाह—**आदन्तादिति । अयुः ।** याधातोः लङि परस्मैपदे झिप्रत्यये अडागमेऽनुबन्धलोपे 'लङः शाकटायनस्यैव' इत्यनेन विकल्पेन झेर्जुसि अनुबन्धलोपे 'अ या उस्' इति जाते

---

विधिलिङ् में—युयात । यहाँ 'यासुट् परस्मैपदेषूदात्तो ङिच्च' सूत्र से 'यासुट्' को ङित्व विधान भी होने के कारण वृद्धि नहीं होती । इस प्रकार विशेषरूप से ङित् के द्वारा सामान्य पित् का बाध हो जाता है । इसी आशय से भगवान् भाष्यकार ने कहा है—"ङिच पिन्न, पिच्च ङिन्न" अर्थात् ङित् पित् नहीं होता और पित् ङित् नहीं होता । विधिलिङ् प्र० पु० द्वि० व०—युयाताम् । बहु०—युयुः । आशीर्लिङ् में—यूयात , यूयास्ताम्, यूयासुः इत्यादि । ( यहाँ 'अकृत्सार्वधातुकयोः' से दीर्घ होता है । ) ( १ ) √यु+लुङ् ( =तिप्=ति, च्लि=सिच्='स्', अट्, इकारलोप, इट्, ईट्, 'स्' का लोप—'इट ईटि', इ+ई='ई'—सवर्णदीर्घ )—अ यु ई त ( उ='औ'—वृद्धि —'सिचि वृद्धिः परस्मैपदेषु' औ='आव्' आदेश )=अयावीत । ( २ ) लृङ्—अयाविष्यत ।

√या धातु का अर्थ—'पहुँचना, जाना' है । ( १ ) √या+लट् ( =तिप्=ति, शप्, लुक् ) =याति । ( २ ) लट् द्विव०—यातः । ( ३ ) लट् बहु०—यान्ति । ( ४ ) √या+लिट् ( =तिप् =णल्='औ'—'आत औ णलः' द्वित्व, अभ्यास संज्ञा, ह्रस्व )—य या औ ( आ+औ='औ'— वृद्धि—'वृद्धिरेचि' )=ययौ । ( ५ ) लुट्—याता । ( ६ ) लृट्—यास्यति । ( ७ ) लोट्—यातु । ( ८ ) लङ् प्र० पु० एकव०—अयात । ( ९ ) लङ् प्र० पु० द्विव०—अयाताम् ।

**( ६५२ ) पद**—लङः शाकटायनस्य; एव । **अनुवृत्ति**—झेर्जुस् , आतः । **विधिसूत्र ।**

**मूलार्थ**—आदन्त धातु से उत्तरवर्ती लङ् सम्बन्धी 'झि' के स्थान में 'जुस्' आदेश होता है । अयुः, अयान् इत्यादि ।

**विमर्श**—यहाँ 'झेर्जुस्' ( ३।४।१०८ ) तथा 'आतः' ( ३।४।११० ) सूत्रों की अनुवृत्ति आ रही है । अतः—"आकारान्त धातुओं से परवर्ती लङ् के 'झि' के स्थान में आचार्य शाकटायन के मत में 'जुस्' आदेश होता है" ।

**उदाहरण**—( १ ) √या+लङ् (=झि, शप् , लुक, अट् )—अ या झ ( झि=जुस्='उस्'— विकल्प से—'लङः शाकटायनस्यैव', आ+उ='उ'—पररूप—'उस्यपदान्तात' स्=र्= : ) =अयुः । जुस् के अभावपक्ष में—अ या झि ( झ्='अन्त'—'झोऽन्तः' इकार लोप, 'त' का संयोगान्त लोप, सवर्णदीर्घ )=अयान् । ( २ ) विधिलिङ्—यायात, यायाताम् , यायुः इत्यादि । ( ३ ) आशीर्लिङ्—यायात , यायास्ताम् , यायासुः । ( ४ ) √या+लुङ् ( =तिप्=ति, च्लि=

गन्धनयोः। भा दीप्तौ। ष्णा शौचे। 'वाऽन्यस्य संयोगादेरि'त्येत्वम्। स्नेयात्। स्नायात्। श्रा पाके। द्रा कुत्सायां गतौ। प्सा भक्षणे। पा रक्षणे। रा दाने। ला आदाने। दाप् लवने। ख्या प्रकथने। अयं सार्वधातुक एव प्रयोक्तव्यः। ख्याति। विद ज्ञाने। (६५३) विदो लटो वा ३।४।८३। वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः। वेद। विदतुः। विदुः। वेत्थ। विदथुः। विद। वेद। विद्व। विद्म। पक्षे-

---

'उस्यपदान्तात्' इत्यनेन पररूपे सस्य रुत्वे विसर्गे च कृते 'अयुः' इति। जुसभावपक्षे तु 'झोऽन्तः' इति झस्यान्तादेशे 'इतश्च' इत्यनेन इकारलोपे 'संयोगान्तस्य लोपः' इति तकारलोपे सवर्णदीर्घे संयोगे च कृते 'अयान्' इति।

(६५३) विदो लटो वेति। अत्र 'परस्मैपदानां णलतुस' इत्यादिसूत्रमनुवर्तते। तदाह—वेत्तेर्लट इत्यादि। वेद। विद्धातोर्लटि, लः स्थाने तिपि, 'विदो लटो वा' इति तिपः स्थाने णलि, अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि 'पुगन्तलघूपधस्य चे'ति इकारस्य गुणे वेद इति। णलभावपक्षे तु—'विद् ति' इति स्थिते, चर्त्वेन दकारस्य तकारे गुणे 'वेत्ति' इति।

---

सिच्='स्' अट्, इकारलोप)—अ या स् त ('इट्' का आगम, सक्='स्'—'यमरमनमातां सक्च', ईट्—'अस्तिसिचोऽपृक्ते' 'स्' का लोप—'इट ईटि' सवर्णदीर्घ)=अयासीत्। (५) लुङ्—द्विव०—अयासिष्टाम्। (६) लृङ्—अयास्यत्।

√वा का अर्थ—'चलना, वहना, सूचित करना' है। लट्—वाति। √भा धातु का अर्थ—'चमकना' है। लट्—भाति। √ष्णा (स्ना) का अर्थ—'स्नान करना' है। लट्—स्नाति। आशीर्लिङ् में संयोगादि होने से 'वाऽन्यस्य संयोगादेः' से विकल्प से एत्व होता है। स्नेयात्। स्नायात्। √श्रा का अर्थ—'पकाना' है। लट्—श्राति। √द्रा का अर्थ—'कुत्सित गति'—(बुरी चाल चलना) है। लट्—द्राति। √प्सा का अर्थ—'खाना' है। लट्—प्साति। √पा का अर्थ—'रक्षा करना' है। लट्—पाति। √रा का अर्थ—'देना' है। लट्—राति। √ला का अर्थ—'लेना' है। लट्—लाति। √दाप् का अर्थ—'काटना' है। लट्—दाति। √ख्या का अर्थ—कहना है। लट्—ख्याति। इस धातु का सार्वधातुक में ही प्रयोग करना चाहिए।

√विद धातु का अर्थ—'जानना' है।

**(६५३) पद**—विदः, लटः, वा। **अनुवृत्ति**—परस्मैपदानाम्.........वमाः। **विधिसूत्र**।

**मूलार्थ**—'विद्' धातु से परवर्ती लट् लकार सम्बन्धी परस्मैपद को णल् आदि आदेश विकल्प से होते हैं। वेद। विदतुः। विदुः इत्यादि।

**विमर्श**—प्रकृत सूत्र में 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' (३।४।८२) की अनुवृत्ति आती है। तदनुसार—'विद् धातु से परवर्ती लट् के परस्मैपद प्रत्ययों को णल् आदि आदेश विकल्प से होते हैं'।

**उदाहरण**—(१) √विद्+लट् (=तिप्=ति, तिप्=णल्='अ' विकल्प से—'विदो लटो वा' सार्वधातुक संज्ञा शप्, शप् का लुक्—'अदिप्रभृतिभ्यः शपः' 'इ'='ए'—गुण 'पुगन्त-लघूपधस्य च')=वेद। णल् के अभावपक्ष में—विद्+ति (शप् का लुक्, गुण, 'द्'='त्' चर्त्व)=वेत्ति। (२) लट् प्र० पु० द्विव०—विदतुः (अतुस्)। पक्ष में—वेत्तः। (३) लट् प्र० पु० बहु०—विदुः। पक्ष में—विदन्ति।

वेत्ति । वित्तः । विदन्ति । ( ६५४ ) **उषविदजागृभ्योऽन्यतरस्याम्** ३।१।३८ । एभ्यो लिटचाम् वा स्यात् । विदेरदन्तत्वप्रतिज्ञानादामि न गुणः । विदाञ्चकार । विवेद । वेदिता । वेदिष्यति । ( ६५५ ) **विदाङ्कुर्वन्त्वित्यन्यतरस्याम्** ३।१।४१ ।

---

( ६५४ ) **उषविदजागृभ्य** इति । 'कास्प्रत्ययादाममन्त्रे लिटि' इत्यतः आम् लिटीत्यनुवर्तते । अत आह—**एभ्य इति** । **विदाञ्चकार** । विद्धातोर्लिटि 'उषविदजागृभ्योऽन्यतरस्याम्' इत्यामि 'आमः' इति लिटो लुकि, विदेरदन्तत्वप्रतिज्ञानात् उपधायाः लघूपधगुणाभावे, 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परककृञोऽनुप्रयोगे 'विदाम् कृ लिट्' इति जाते, लः स्थाने तिपि, तिपो णलादेशेऽनुबन्धलोपे, धातोर्द्वित्वेऽभ्यासत्वे 'उरत्' इति ऋवर्णस्याकारे रपरत्वे हलादिशेषे 'कुहोश्चुः' इत्यभ्यासस्य चुत्वेन चकारे 'विदाम् च कृ अ' इति जाते, 'सार्वधातुकार्धधातुकयोः' इति गुणे, रपरे च कृते 'अत उपधायाः' इति वृद्धौ मकारस्यानुस्वारे परसवर्णे कृते 'विदाञ्चकार' इति ।

---

**√विद् धातु के लट् लकार के रूप**

**( णलादि पक्ष में )**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | वेद | विदतुः | विदुः |
| म० पु०— | वेत्थ | विदथुः | विद |
| उ० पु०— | वेद | विद्व | विद्म |

**( णलादि के अभाव पक्ष में )**—

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | वेत्ति | वित्तः | विदन्ति |
| म० पु०— | वेत्सि | वित्थः | वित्थ |
| उ० पु०— | वेद्मि | विद्वः | विद्मः |

**( ६५४ ) पद**—उषविदजागृभ्यः, अन्यतरस्याम् । **अनुवृत्ति**—आम्, लिटि । **विधिसूत्र ।**

**मूलार्थ**—'लिट्' के परवर्ती रहने पर उष, विद और जागृ धातु से परे विकल्प से 'आम्' होता है । विदाञ्चकार ।

**विमर्श**—यहाँ 'कास्प्रत्ययादाममन्त्रे लिटि' ( ३।१।३५ ) से 'आम्' तथा 'लिटि' की अनुवृत्ति आती है । तदनुसार—"लिट् परे रहते उष ( =जलाना ), विद् ( =जानना ), जागृ ( =जागना ) धातुओं से विकल्प से 'आम्' होता है" ।

**विदेरदन्तत्वप्रतिज्ञानात्०** विद् धातु को अकारान्त स्वीकार किया गया है । अकार का 'अतो लोपः' से लोप हो जाता है । अकार लोप के स्थानिवद्भाव होने पर लघूपध न मिलने के कारण 'आम्' के परवर्ती रहते 'पुगन्तलघूपधस्य च' से गुण नहीं होता ।

**उदाहरण**—( १ ) √विद्+लिट् ( 'आम्'—उषविदजागृभ्यः०' 'लिट्' का लुक्—'आमः' लिट्परक √कृ का अनुप्रयोग )—विदाम् कृ लिट् ( =तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा ऋ='अ'—'उरत्' रपर, हलादिशेष 'क्'='च्'—कुहोश्चुः )—विदाम् च कृ अ ( गुण, रपर, 'अत उपधायाः' से वृद्धि, अनुस्वार, परसवर्ण )—विदाञ्चकार । आम् के अभावपक्ष में—विवेद । ( २ ) लुट्—वेदिता । ( ३ ) लृट्—वेदिष्यति ।

**वेत्तेर्लोटयाम्, गुणाभावो लोटो लुक्, लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न विवक्षिते । इति शब्दात् । ( ६५६ ) तनादिकृञ्भ्य उः ३।१।७९ । तनादेः कृञश्च उप्रत्ययः स्यात् । शपोऽपवादः । विदाङ्करोतु । ( ६५७ ) अत उत्सार्वधातुके ६।४। ११० । उत्प्रत्ययान्तस्य कृञोऽत उत्स्यात् सार्वधातुके क्ङिति । विदाङ्कुरुतात् । विदाङ्कुरुताम् । विदाङ्कुर्वन्तु । 'उतश्चे'ति हेर्लुक् । आभीयत्वेन लुकोऽसिद्धत्वादुत्वम् ।**

---

( ६५५ ) **विदाङ्कुर्वन्त्वित्ति ।** इतिशब्दोऽत्र प्रकारे । एवं जातीयकं वैकल्प्येन प्रत्येतव्यमित्यर्थः ।

( ६५६ ) **तनादिकृञ्भ्य इति ।** 'सार्वधातुके यगि'त्यतः 'सार्वधातुके' इति, 'कर्तरि शप्' इत्यतः 'कर्तरी'त्यनुवर्तते । तदाह—**तनादेरिति । विदाङ्करोतु ।** विद्धातोर्लोटि, 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इति वैकल्पिके आमि, 'आमः' इति लोटो लुकि, लोट्परके कृञि प्रयुक्ते, लः स्थाने तिपि, शपि प्राप्ते तं प्रबाध्य 'तनादिकृञ्भ्य उः' इत्युकारे कृते 'विदाम् कृ उ ति' इति जाते 'सार्वधातुकार्धधातुकयोः' इति उभयत्र गुणे 'एरुः' इति तिपः उकारस्य उत्वे मस्यानुस्वारे वा परसवर्णे कृते 'विदाङ्करोतु' इति ।

( ६५७ ) **अत उत् इति । उप्रत्ययान्तस्येति ।** 'उतश्च प्रत्ययादि'त्यतः तदनुवृत्तेरिति भावः ।

---

**( ६५५ ) पद**—विदाङ्कुर्वन्तु, इति, अन्यतरस्याम् । **विधिसूत्र ।**

**मूलार्थ**—लोट् के परवर्ती रहते विद् धातु से आम् तथा गुण का अभाव और लोट् का लुक् होता है । लोट्परक √कृ का अनुप्रयोग भी विकल्प से होता है ।

**विमर्श**—प्रकृत सूत्र द्वारा 'विदाङ्कुर्वन्तु' यह रूप लोट् के प्रथमपुरुष के बहुवचन में निपातन किया जाता है ।

'विदाङ्कुर्वन्तु' में पुरुष और वचन विवक्षित नहीं हैं । अर्थात् प्रथमपुरुष के बहुवचन में ही पूर्वोक्त कार्य नहीं होते, अपितु लोट् लकार के सभी पुरुषों और वचन में उक्त चारों कार्य होते हैं ।

**( ६५६ ) पद**—तनादिकृञ्भ्यः, उः । **अनुवृत्ति**—सार्वधातुके, कर्तरि । **विधिसूत्र ।**

**मूलार्थ**—तनादि और कृञ् धातु से परे 'उ' प्रत्यय होता है ।

**विमर्श**—यहाँ—'सार्वधातुके यक्' ( ३।१।६७ ) से 'सार्वधातुके' तथा 'कर्तरि शप्' ( ३।१।६८ ) से 'कर्तरि' पदों की अनुवृत्ति आती है । तदनुसार—"कर्तृवाची सार्वधातुक के परवर्ती रहते तनादि और कृञ् धातुओं से 'उ' प्रत्यय होता है" ।

**उदाहरण**—( १ ) √विद्+लोट् ( 'आम्' विकल्प से—'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' लोट् का लुक्—'आमः', लोट्परक कृ का अनुप्रयोग )—विदाम् कृ लोट् ( =तिप्=ति, शप् का बाधकर 'उ'—'तनादिकृञ्भ्य उः' आर्धधातुक संज्ञा, 'ऋ'='अर्'—गुण 'उ'='ओ'—गुण—'सार्वधातु०' 'इ'='उ'—'एरुः' म्=अनुस्वार=परसवर्ण )='विदाङ्कुर्वन्तु' ।

**( ६५७ ) पद**—अतः, उत, सार्वधातुके । **अनुवृत्ति**—करोतेः, उतः प्रत्ययाव, क्ङिति । **विधिसूत्र ।**

**मूलार्थ**—सार्वधातुक कित् ङित् के परवर्ती रहते उप्रत्ययान्त कृञ् धातु के 'अ' को 'उ' आदेश होता है । विदाङ्कुरुतात् ।

विदाङ्कुरु । विदाङ्करवाणि । वेत्तु । अवेत् । अवित्ताम् । अविदुः । ( ६५८ ) दश्च ८।२।७५ । धातोर्दस्य पदान्तस्य सिपि रुर्वा । अवेः । अवेत् । विद्यात् । विद्याताम् । विद्युः । विद्यात् । विद्यास्ताम् । विद्यासुः । अवेदीत् । अवेदिष्यत् । अस् भुवि । अस्ति । ( ६५९ ) श्नसोरल्लोपः ६।४।१११ । श्नस्यास्तेश्चातो लोपः सार्वधातुके क्ङिति । स्तः । सन्ति । 'तासस्त्योरि'ति सलोपः । असि । स्थः । स्थ । अस्मि । स्वः । स्मः ।

---

( ६५८ ) **दश्चेति** । 'सिपि धातोरुर्वा' इत्यनुवर्तते । पदस्येत्यधिकृतम् । तदाह—**धातोर्दस्येति** । **अवेः** । विद्धातोर्लङः सिपि, शपो लुकि अटि, इकारस्य 'इतश्च' इत्यनेन लोपे 'पुगन्तलघूपधस्य चे'ति गुणे 'अवेद् स्' इति जाते, 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इति सिपः सस्य लोपे 'दश्च' इति विदेर्दस्य वा रुत्वे रेफस्य विसर्गे कृते 'अवेः' इति ।

( ६५९ ) **श्नसोरल्लोप इति** । 'अत उत्सार्वधातुके' इत्यतः सार्वधातुके 'गमहन०' इत्यतः क्ङितीति चानुवर्तते । तदाह—**श्नस्यास्तेश्चात इति** । **स्त** इति । अस्धातो-

---

**विमर्श**—सूत्रार्थ की पूर्ति हेतु—'नित्यं करोतेः' ( ६।४।१०८ ) से 'करोतेः', 'उतश्च प्रत्ययादसंयोगपूर्वात्' ( ६।४।१०६ ) से 'उतः, प्रत्ययात्' तथा 'गमहन०' ( ६।४।९८ ) से 'क्ङिति' की अनुवृत्ति आती है । तदनुसार—"कित् ङित् सार्वधातुक के परे रहते √कृ के अकार के स्थान में उत्व होता है ।"

**उदाहरण**—( १ ) विदाम् कृ लोट् ( =तिप्=ति, 'इ'='उ'—'एरुः' तु=तातङ्=तात्, 'उ'—'तनादिकृञ्भ्य उः', गुण, रपर्, 'अ'='उ'—'अत उत्सार्वधातुके' अनुस्वार, परसवर्ण )= विदाङ्कुरुतात् । ( २ ) लोट् प्र० पु० द्विव०—विदाङ्कुरुताम् । ( ३ ) बहु०—विदाङ्कुर्वन्तु । ( ४ ) लोट् म० पु० एकव० सिप् 'सि'='हि' 'हि' का 'उतश्च प्रत्ययात्' से लुक् । ( आभीयत्वेन लुक् के असिद्ध होने से उत्व )—विदाङ्कुरु । ( ५ ) उ० पु० एक० में आट्, गुण, अवादेश, णत्व—विदाङ्करवाणि । पूर्वोक्त चार कार्यों के अभावपक्ष में—वेत्तु–वित्तात्, वित्ताम्, विदन्तु इत्यादि रूप बनेंगे । ( ६ ) लङ् में—अवेत्, अवित्ताम्, अविदुः ( प्र० पु० ) ।

**( ६५८ ) पद**—दः, च । **अनुवृत्ति**—सिपि धातोरुर्वा । **विधिसूत्र** ।

**मूलार्थ**—'सिप्' के परवर्ती रहते धातु के पदान्त दकार को विकल्प से 'रु' होता है । अवेः, अवेत् ।

**विमर्श**—यहाँ 'सिपि धातोरुर्वा' ( ८।२।७४ ) सूत्र की अनुवृत्ति आ रही है । 'पदस्य' का अधिकार है । अतः—"सिप् परे रहते धातु के पदान्त दकार को विकल्प से 'रु' हो जाता है" ।

**उदाहरण**—( ७ ) विद्+लङ् (=सिप्=सि, शप् का लुक्, अट्, इकार का लोप, उपधा गुण )—अवेद् स् ( 'स्' का लोप—'हल्ङ्याब्भ्यः०', द्=रु—'दश्च'=र्=ः )=अवेः । रुत्व के अभावपक्ष में—अवेत् । विधिलिङ् ( प्र० पु० )—विद्यात्, विद्याताम्, विद्युः । आशीर्लिङ् ( प्र० पु० )—विद्यात्, विद्यास्ताम्, विद्यासुः । लुङ्—अवेदीत् । लृङ्—अवेदिष्यत् ।

√अस् का अर्थ—'होना' है । ( १ ) √अस्+लट् ( =तिप्=ति, शप्, लुक् )=अस्ति ।

**( ६५९ ) पद**—श्नसोः, अल्लोपः । **अनुवृत्ति**—सार्वधातुके, क्ङिति । **विधिसूत्र** ।

**मूलार्थ**—श्न और अस्ति के अकार का लोप होता है सार्वधातुक कित् ङित् के परे रहते ।

**विमर्श**—प्रकृत सूत्र में 'अत उत्सार्वधातुके' ( ६५८ ) से सार्वधातुके तथा 'गमहन०' से

**( ६६० ) अस्तेर्भूः २।४।५२ ।** अस्तेर्भूः आर्धधातुके । बभूव । भविता । भविष्यति । अस्तु-स्तात् । स्ताम् । सन्तु । **( ६६१ ) घ्वसोरेद्धावभ्यासलोपश्च ६।४।११९ ।** घोरस्तेश्चैत्वं हौ, अभ्यासलोपश्च । आभीयत्वाद्धेर्धिः । एधि-स्तात् । स्तम् । स्त । असानि । असाव । असाम । आसीत् । आस्ताम् । आसन् । स्यात् । स्याताम् । स्युः ।

---

लटि, लः स्थाने तसि, शपो लुकि 'श्नसोरल्लोपः' इत्यस्तेरकारस्य लोपे सस्य रुत्वे विसर्गे च कृते 'स्तः' इति ।

( ६६० ) अस्तेर्भूरिति । 'अस्धातोर्भूभावः स्यादार्धधातुके' इत्यर्थः ।

( ६६१ ) घ्वसोरेदिति । घु अस् इत्यनयोर्द्वन्द्वः । एत् हौ इति च्छेदः । एधि । अस्धातोर्लोटि, लः स्थाने मध्यमपुरुषैकवचने सिपि, 'सेर्ह्यपिच्च' इति सिपः स्थाने

---

'क्ङिति' की अनुवृत्ति आती है । अतः "कित् ङित् सार्वधातुक के परवर्ती रहते श्नम् प्रत्यय तथा अस् धातु के अकार का लोप होता है" ।

**उदाहरण**—( २ ) √अस्+लट् ( =तस्, शप्, लुक्, 'अ' का लोप—'श्नसोरल्लोपः' स् =र्=: ) =स्तः । ( ३ ) प्र० पु० बहु०—सन्ति । ( ४ ) अस्+लट् ( =सिप्=सि, शप्, लुक्, 'स्' का लोप—'तासस्त्योर्लोपः' )=असि ।

**√अस् धातु लट् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अस्ति | स्तः | सन्ति |
| म० पु० | असि | स्थः | स्थ |
| उ० पु० | अस्मि | स्वः | स्मः |

**( ६६० ) पद**—अस्तेः, भूः । **अनुवृत्ति**—आर्धधातुके । **विधिसूत्र ।**

**मूलार्थ**—'आर्धधातुक' के परवर्ती रहते 'अस्' धातु को 'भू' आदेश होता है ।

**विमर्श**—'आर्धधातुके' का अधिकार है । अतः आर्धधातुक के विषय में अस् धातु को भू आदेश होता है ।

**उदाहरण**—( १ ) √अस्+लिट् ( =तिप्=णल्='अ', आर्धधातुक संज्ञा 'लिट् च', अस् ='भू'—'अस्तेर्भूः' वुक्='व्' का आगम—'भुवो वुग् लुङ्लिटोः', द्वित्व, अभ्यास संज्ञा, ह्रस्व, 'उ'='अ'—भवतेरः, 'भ्'='ब्'—'अभ्यासे चर्च' )=बभूव । ( २ ) लुट्—भविता । ( ३ ) लृट्—भविष्यति । लोट् प्र० पु०—अस्तु-स्तात् । स्ताम् । सन्तु ।

**( ६६१ ) पद**—घ्वसोः, एत्, हौ, अभ्यासलोपः, च । **अनुवृत्ति**—क्ङिति । **विधिसूत्र ।**

**मूलार्थ**—'हि' के परवर्ती रहने पर घुसंज्ञक धातु और अस् धातु को एत्व और अभ्यास का लोप होता है ।

**विमर्श**—यहाँ 'गमहन०' ( ६।४.९८ ) सूत्र से 'क्ङिति' की अनुवृत्ति आती है । तदनुसार—'हि' तथा कित्, ङित् प्रत्यय के परवर्ती रहते घुसंज्ञक धातु एवं अस् धातु को एकारादेश और अभ्यास का लोप होता है ।"

**आभीयत्वादिति ।** प्रकृत सूत्र द्वारा विहित एत्व के आभीय कार्य होने से झल् परे होने के कारण 'हुझल्भ्यो हेर्धिः' से 'हि' के स्थान में 'धि' आदेश हो जाता है ।

भूयात् । अभूत् । अभविष्यत् । ( ६६२ ) **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ८।३।८७ ।** उपसर्गेणः प्रादुषश्च परस्यास्तेः सस्य षो यकारेऽचि च परे । निःष्यात् । प्रादुःष्यात् । निःषन्ति । प्रादुःषन्ति । यच्परे किम् ? अभिस्तः । रु शब्दे । ( ६६३ ) **तुरुस्तु-**

---

अपित् 'हि' इत्यादेशे 'घ्वसोरेद्धावभ्यासलोपश्च' इति सस्य एत्वे, एत्वस्याभीयत्वेनासिद्धत्वात् 'हुझल्भ्यो हेर्धिः' इति हेर्धौ 'श्नसोरल्लोपः' इत्यल्लोपे 'एधि' इति रूपम् ।

( ६६२ ) **उपसर्गप्रादुर्भ्यामिति** । 'इण्कोरि'त्यधिकृतम् । तत्र इण इत्युपसर्गेण सम्बध्यते । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते । 'मूर्धन्यः' इत्यधिकृतम् । तदाह—**उपसर्गेण इति** । यकारपरकत्वे उदाहरति—**निःष्यात्, प्रादुःष्यादिति ।**

---

**उदाहरण**—( १ ) √अस्+लोट् ( ल्=सिप्='हि'—'सेर्ह्यपिच्च' 'स्'='ए'—'घ्वसोरेद्धावभ्यासलोपश्च' आभीयत्वेन एकार के असिद्ध होने से 'हि'='धि'—'हुझल्भ्यो हेर्धिः', 'अ' का लोप—'श्नसोरल्लोपः' )=एधि । हि=विकल्प से तातङ्=तात ( इस पक्ष में एत्व नहीं होता । क्योंकि 'तातङ्' आदेश होने पर 'हि' के न मिलने से एत्व की प्राप्ति ही नहीं होती । अकारलोप ) =स्तात । उत्तमपुरुष में 'आट्' का आगम होता है, जो 'पित्' है । अतः वहाँ अकार का लोप भी नहीं होता । असानि इत्यादि ।

**√अस् धातु लोट् लकार के रूप**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु०— | अस्तु | स्ताम् | सन्तु |
| म० पु०— | एधि-स्तात | स्तम् | स्त |
| उ० पु०— | असानि | असाव | असाम |

( २ ) अस्+लङ् ( तिप्=ति, इकारलोप, आट्,)—आ अस् त ( शप् लुक्, ईट्—'अस्तिसिचोऽपृक्ते', आ+अ='आ'—वृद्धि—'आटश्च' )=आसीत । ( ३ ) लङ् प्र० पु० द्विव०—आस्ताम् । ( ४ ) लङ् प्र० पु० बहु०—आसन् । म० पु०—आसीः, आस्तम् , आस्त । उ० पु०—आसम् , आस्व, आस्म । विधिलिङ्—स्यात, स्याताम्, स्युः इत्यादि । आशीलिंङ् तथा शेष लकारों में आर्धधातुक होने से 'भू' आदेश हो जाता है । भूयात । लङ्—अभूत । लृङ्—अभविष्यत ।

**( ६६२ ) पद**—उपसर्गप्रादुर्भ्याम्, अस्ति, यच्परः । **अनुवृत्ति**—सः । **विधिसूत्र ।**

**मूलार्थ**—उपसर्ग सम्बन्धी 'इण्' से परे और 'प्रादुस्' से परे 'अस्ति' के सकार को मूर्धन्य ( सकार ) होता है, आगे यकार और अच् के परवर्ती रहते ।

**विमर्श**—'इण्कोः' का अधिकार है । 'अपदान्तस्य मूर्धन्यः' का भी अधिकार आ रहा है । 'सहेः साडः सः' ( ८।३।५६ ) से 'सः' पद की अनुवृत्ति आती है । इस प्रकार—"उपसर्ग सम्बन्धी इण् से उत्तर तथा 'प्रादुस्' से उत्तरवर्ती यकारपरक एवम् अच्परक अस् धातु के सकार को मूर्धन्य षकार आदेश होता है ।"

**उदाहरण**—( १ ) निस्+स्यात ( स्=र्=: )—निः स्यात ( 'स्'='ष्'—'उपसर्गप्रादुर्भ्याम्' )=निःष्यात । ( २ ) प्रादुः+स्यात ( षत्व )=प्रादुःष्यात । ( ३ ) नि+सन्ति, प्रादुः+सन्ति ( षत्व )=निःषन्ति, प्रादुःषन्ति । सूत्र में 'यच्परे' कहा गया है । अतः 'अभिस्तः' में षत्व नहीं हुआ ।

**√रु का अर्थ—'शब्द करना' है ।**

**शम्यमः सार्वधातुके ७।३।९५।** एभ्यः परस्य सार्वधातुकस्य हलादेस्तिङ ईड् वा स्यात्। 'नाभ्यस्तस्ये'त्यतोऽनुवृत्तिसम्भवे पुनः सार्वधातुकग्रहणमपिदर्थम्। रवीति। रौति। रुवीतः। रुतः। हलादेः किम्? रुवन्ति। तिङः किम्? शाम्यति। सार्वधातुके किम्? आशिषि—रूयात्। विध्यादौ तु—रुयात्। रुवीयात्। अरावीत्। अरविष्यत्। 'तु' इति सौत्रो धातुः गतिवृद्धिहिंसासु। तवीति। तौति। तुवीतः। तुतः। तुवन्ति। तुताव। तोता। तोष्यति। णु स्तुतौ। नौति। नुनाव। नविता। टु क्षु शब्दे। क्षौति। चुक्षाव। क्षविता। क्ष्णु तेजने। क्ष्णौति। क्ष्णविता।

---

(६६३) **तुरुस्तुशम्यम इति।** तु रु स्तु शमि अम् इत्येतेषां समाहारद्वन्द्वात्पञ्चम्येकवचनम्। 'उतो वृद्धिः' इत्यतो हलीति, 'भूसुवोः' इत्यतस्तिङीति, 'ब्रुव ईडि'त्यतः ईडिति, 'यङो वा' इत्यस्माद् वेति चानुवर्तते। तदाह—**एभ्य इत्यादिना। रवीति, रौति।** रुधातोर्लटि, तिपि, शपि, शपो लुकि, 'तुरुस्तुशम्यमः सार्वधातुके'

---

**(६६३) पद**—तुरुस्तुशम्यमः, सार्वधातुके। **अनुवृत्ति**—तिङि वा, ईट्, हलि। **विधिसूत्र।**

**मूलार्थ**—तु, रु, स्तु, शमि और यम् धातुओं से परवर्ती हलादि तिङ् सार्वधातुक को विकल्प से ईट् का आगम होता है।

**विमर्श**—प्रकृत सूत्र में 'भूसुवोस्तिङि' (७।३।८८) से 'तिङि', 'उतो वृद्धिर्लुकि हलि' (७।३।८९) से 'हलि', 'ब्रुव ईट्' (७।३।९३) से 'ईट्' तथा 'यङो वा' (७।३।९४) से 'वा' पदों की अनुवृत्ति आती है। तदनुसार—"तु, रु, ष्टुञ्, शम् तथा अम धातुओं से परवर्ती हलादि तिङ् सार्वधातुक को विकल्प से 'ईट्' का आगम होता है।" यहाँ 'नाभ्यस्तस्य' से 'सार्वधातुके' की अनुवृत्ति कर अर्थवशात् षष्ठ्यन्त में विपरिणाम करके कार्य निर्वाह हो जाता। पुनः सूत्र में 'सार्वधातुके' का ग्रहण क्यों किया? इसका उत्तर है कि—अनुवृत्त सार्वधातुक पित् सम्बद्ध आता, तब अपित् तिङ् को ईट्, जो इष्ट है, वह नहीं होता। अतः यहाँ 'सार्वधातुके' का ग्रहण किया गया है।

**उदाहरण**—(१) √रु+लट् (=तिप्=ति, शप्, लुक्, ईट्='ई' आगम विकल्प से—'तुरुस्तुशम्यमः०' गुण, अवादेश)=रवीति। ईट् के अभावपक्ष में—रु ति ('उ'='औ'—वृद्धि—'उतो वृद्धिर्लुकि हलि')=रौति। (२) √रु+लट् (=तस्, शप्, लुक्, ईट्—विकल्प से, 'उ'='उवङ्'='उव'—'अचि श्नु०', स्=र्=:)=रुवीतः। इडभावपक्ष में—रुतः। सूत्र में 'हलादि' ग्रहण किया गया है, अतः—रु+लट् (=झि, झ्='अन्त')—'रु अन्ति' (यहाँ हलादि न होने से ईट् नहीं हुआ। 'उवङ्' होकर, पररूप)=रुवन्ति। 'तिङ्' पद के ग्रहण होने से 'शाम्यति' में 'ईट्' नहीं हुआ। 'सार्वधातुके' का ग्रहण होने से आशीर्लिङ् में 'ईट्' नहीं हुआ—रूयात्। विधिलिङ्—रुयात्, रुवीयात् (विकल्प से इट्)। लुङ्—अरावीत्। लृङ्—अरविष्यत्।

√तु यह सौत्र धातु है। यह गति, वृद्धि एवं हिंसा अर्थ में है। (१) तु+लट् (=तिप्=ति, शप् लुक्, विकल्प से ईट्='ई'—'तुरुस्तुशम्यमः' गुण, अवादेश)=तवीति। इट् के अभावपक्ष में वृद्धि—'उतो वृद्धिः'=तौति। (२) प्र० पु० द्विव०—तुवीतः। तुतः। (३) बहु०—तुवन्ति। (४) लिट्—तुताव। (५) लुट्—तोता। (६) लृट्—तोष्यति। √णु धातु का अर्थ—'स्तुति करना' है। 'णो नः' से नकार आदेश, 'उतो वृद्धिः' से वृद्धि। (१) प्र० पु० एक०—नौति। (२) लिट्—नुनाव। (३) लुट्—नविता।

अक्ष्णावीत् । ष्णु प्रस्रवणे । स्नौति । सुष्णाव । स्नविता । षु प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानम् । सौति । सुतः । सुषाव । सोता । असौषीत् । कु शब्दे । कौति । चुकाव । कोता । इण् गतौ । एति । इतः । ( ६६४ ) इणो यण् ६।४।८१ । अजादौ प्रत्यये परे । इयङोऽपवादः । यन्ति । ( ६६५ ) अभ्यासस्यासवर्णे ६।४।७८ । अभ्यासस्य इ-उवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि परे । इयाय । ( ६६६ ) दीर्घं

---

इति वैकल्पिके ईडागमेऽनुबन्धलोपे गुणेऽवादेशे 'रवीति' इति । ईडभावे तु—'रु ति' इत्यत्र 'उतो वृद्धिर्लुकि हलि' इत्यनेन वृद्धौ 'रौति' इति ।

( ६६४ ) इणो यणिति । 'अचि श्नु०' इत्यतोऽचीत्यनुवर्तते । तस्याङ्गाक्षिप्तप्रत्ययविशेषणत्वात्तदादिविधिस्तदाह—अजादाविति ।

( ६६५ ) अभ्यासस्येति । 'अचि श्नु' इत्यतोऽचीति, य्वोरियङुवङाविति चानुवर्तते । अत आह—अभ्यासस्येति । इयाय । इण्धातोर्लिटि, लः स्थाने प्रथमपुरुषैकवचने तिपि तिपो णलादेशेऽनुबन्धलोपे धातोर्द्वित्वे 'इ इ अ' इति जाते वृद्धौ, आयादेशे 'अभ्यासस्यासवर्णे' इत्यभ्यास-इवर्णस्य स्थाने इयङादेशेऽनुबन्धलोपे दीर्घे 'इयाय' इति ।

---

√टु क्षु का अर्थ—'शब्द करना' है । ( १ ) लट्—क्षौति । ( २ ) लिट्—चुक्षाव । ( ३ ) लुट्—क्षविता । √क्ष्णु का अर्थ—'तेज करना' है । ( १ ) लट्—क्ष्णौति । ( २ ) लुट्—क्ष्णविता । ( ३ ) लुङ्—अक्ष्णावीत् । √ष्णु का 'प्रस्रवण' अर्थ है । ( १ ) लट्—स्नौति । ( २ ) लिट्—सुष्णाव । ( ३ ) लुट्—स्नविता । √षु धातु प्रसव और ऐश्वर्य अर्थ में है । प्रसव का अर्थ—'अभ्यनुज्ञान'=आज्ञा प्राप्त करना है । 'ष्'='स'—'धात्वादेः' । ( १ ) लट्—सौति । सुतः । ( २ ) लिट्—सुषाव । ( ३ ) लुट्—सोता । ( ४ ) लुङ्—असौषीत् । √'कु' धातु का अर्थ 'शब्द करना' है । ( १ ) लट्—कौति । ( २ ) लिट्—चुकाव । ( ३ ) लुट्—कोता ।

√'इण्' का अर्थ—'जाना' है । ( १ ) √इण् ( इ )+लट् ( =तिप्=ति, शप् लुक्, ङित्वाभाव होने से गुण )=एति । ( २ ) इ+लट् ( =तस्, शप् का लुक्, स्=र्= : )=इतः ।

**( ६६४ ) पद**—इणः, यण् । **अनुवृत्ति**—अचि । **विधिसूत्र** ।

**मूलार्थ**—अजादिप्रत्यय के परवर्ती रहते इण् को यण् आदेश होता है । यन्ति ।

**विमर्श**—यहाँ 'अचि श्नु०' ( ६।४।७७ ) सूत्र से 'अचि' पद की अनुवृत्ति आ रही है । 'अङ्गस्य' का अधिकार है । 'अचि' अङ्ग से आक्षिप्त प्रत्यय का विशेषण होने से तदादिविधि होती है । अतः अजादि प्रत्यय के परे रहते 'इण्' धातु को 'यण्' होता है ।

**उदाहरण**—( ३ ) √इ+लट् ( =झि, 'झ्'='अन्त्' शप् लुक्, 'इ'='य्'—'इणो यण्' ) =यन्ति ।

**( ६६५ ) पद**—अभ्यासस्य, असवर्णे । **अनुवृत्ति**—अचि, य्वोः, इयङुवङौ ।

**मूलार्थ**—असवर्ण अच् के परवर्ती रहते अभ्यास सम्बन्धी 'इवर्ण-उवर्ण' को 'इयङ्-उवङ्' आदेश होता है । इयाय ।

**विमर्श**—सूत्रार्थ की पूर्ति हेतु पूर्वसूत्र 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' ( ६।४।७७ ) से 'अचि, य्वोः और इयङुवङौ' पदों की अनुवृत्ति आती है । तदनुसार—"सवर्णभिन्न अच् के परे रहते अभ्यास के इवर्ण, उवर्ण को क्रमशः 'इयङ्' और 'उवङ्' आदेश होते हैं ।"

**इणः किति** ७।४।६९। इणोऽभ्यासस्य दीर्घः स्यात्किति लिटि परे। **ईयतुः। ईयुः। इययिथ। इयेथ। एता। एष्यति। एतु। ऐत्। ऐताम्। आयन्। इयात्। ईयात्।** ( ६६७ ) **एतेर्लिङि** ७।४।२४। उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्धधातुके किति लिङि। **निरियात्।** ( ६६८ ) **अन्तादिवच्च** ६।१।८५। योऽय-

---

( ६६६ ) **दीर्घ इण इति।** 'अत्र लोपोऽभ्यासस्ये'त्यतः 'अभ्यासस्ये'ति 'व्यथो लिटी'त्यतः 'लिटी'ति चानुवर्तते। अत आह—'**इणोऽभ्यासस्ये**'ति। **ईयतुः।** इण् धातोर्लिटि लः स्थाने तसि, तसोऽतुसादेशे द्वित्वेऽभ्यासत्वे 'इ इ अतुस्' इति जाते 'इणो यण्' इति यणि 'दीर्घ इणः किति' इति दीर्घे रुत्वे विसर्गे च कृते 'ईयतुः' इति। **इययिथ।** इण्धातोर्लिटि तत्स्थाने सिपि, सिपस्थलि द्वित्वे भारद्वाजनियमात् वैकल्पिके इटि, गुणेऽयादेशे 'अभ्यासस्यासवर्णे' इतीयङि 'इययिथ' इति। इडागमाभावपक्षे तु गुणे अभ्यासस्य इयङादेशे 'इयेथ' इति।

( ६६७ ) **एतेर्लिङि।** अत्र 'उपसर्गाद्ध्रस्व ऊहतेः' इत्यस्मात् 'उपसर्गाद्ध्रस्वः' इति, 'केऽणः' इत्यस्मादण इति, 'अयङ् यि किति' इत्यस्मात् 'किती'ति चानुवर्तते। तदाह—**उपसर्गात्परस्येति। निरियात्।** निरुपसर्गपूर्वकादिण्धातोराशीर्लिङि, लः

---

**उदाहरण**—( १ ) √इ+लिट् ( =तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा )—इ इ अ ( 'इ' ='ऐ'—वृद्धि, 'आय्' आदेश )=इयाय।

( ६६६ ) **पद**—दीर्घः, इणः, किति। **अनुवृत्ति**—अभ्यासस्य, लिटि। **विधिसूत्र।**

**मूलार्थ**—कित् लिट् के परवर्ती रहते 'इण्' धातु के अभ्यास को दीर्घ होता है। ईयतुः। ईयुः इत्यादि।

**विमर्श**—प्रकृत सूत्र में 'अत्र लोपोऽभ्यासस्य' ( ७।४।५८ ) से 'अभ्यासस्य' तथा 'व्यथो लिटि' ( ७।४।६८ ) से 'लिटि' की अनुवृत्ति आती है। तदनुसार—"कित् लिट् के परे रहते 'इण्' धातु के अभ्यास को दीर्घ होता है।"

**उदाहरण**—( १ ) √इण्=इ+लिट् ( =तस्=अतुस्, द्वित्व, अभ्यास संज्ञा )—इ इ अतुस् ( 'इ'='य्'—यण्—'इणो यण्', 'दीर्घ'—'इ'='ई'—'दीर्घ इणः किति' )=ईयतुस् ( स्= र= : )=ईयतुः। ( २ ) लिट् प्र० पु० बहु०—ईयुः। ( ३ ) इ+लिट् ( =सिप्=थल्='थ', द्वित्व, अभ्यास संज्ञा, भारद्वाज नियम से विकल्प से इट्, गुण, अय् आदेश, इ=इयङ्='इय'—'अभ्यासस्यासवर्णे' )=इययिथ। इट् के अभाव पक्ष में—'इ इ थ' ( —'इ'='ए'—गुण, इ=इयङ् ='इय्' )=इयेथ। ( ४ ) लुट्—एता। ( ५ ) लृट्—एष्यति। ( ६ ) लोट्—एतु। ( ७ ) इ+लङ् ( =तिप्=ति, इकारलोप, शप्, लुक्, आट्='आ'—आडजादीनाम्, आ+इ='ऐ' वृद्धि—'आटश्च' )=ऐत्। ( ८ ) लङ् प्र० पु० द्वि०—ऐताम्। ( ९ ) इ+लङ् ( =झि, इकारलोप, झ्='अन्त्' आदेश, संयोगान्त लोप )—इ अन् ( 'इ'='य्'—'इणो यण्' )—यन् ( आभीय होने से यण् के असिद्ध होने पर अजादि मानकर 'आट्' आगम )=आयन्। ( १० ) विधिलिङ्—इयात्। ( ११ ) आशीर्लिङ्—ईयात् ( 'अकृत्सार्वधातुकयोः' से दीर्घ )।

( ६६७ ) **पद**—एतेः, लिङि। **अनुवृत्ति**—उपसर्गाद्ध्रस्वः, अणः, किति। **विधिसूत्र।**

**मूलार्थ**—उपसर्ग से परवर्ती 'इण्' धातु के 'अण्' को ह्रस्व होता है, आर्धधातुक कित् लिङ् के परे रहते। निरियात्।

मेकादेशः सः पूर्वस्यान्तवत्परस्यादिवत्स्यात् । *उभयत आश्रयणे नान्तादिवत्* । अभी-यात् । अणः किम् ? समेयात् । 'समीयादि'ति प्रयोगस्तु भौवादिकस्य । ( ६६९ ) **इणो गा लुङि २।४।४५** । इणो गादेशः स्याल्लुङि । 'गातिस्थे'ति सिचो लुक् । अगात् । अगाताम् । अगुः । ऐष्यत् । इक् स्मरणे । अयमधिपूर्व एव, 'अधीगर्थदयेशां कर्मणी'-ति लिङ्गात् । अन्यथा हीगर्थेत्येव ब्रूयात् । * इण्वदिक इति वक्तव्यम् * । अधियन्ति ।

---

स्थाने तिप्यनुबन्धलोपे यासुडागमेऽनुबन्धलोपे तस्यार्धधातुकत्वे कित्त्वे सलोपे 'अकृत्सा-र्वधातुकयोः' इति दीर्घे 'एतेर्लिङि' इति ह्रस्वे 'निरियादि'ति रूपम् ।

(६६८) **अन्तादिवच्च** । 'एकः पूर्वपरयोरि'ति सूत्रमनुवर्तते । 'अन्तादिवदि'-त्यस्य यथासंख्यपरिभाषया क्रमेणान्वयः ।

( ६६९ ) **इणो गा लुङि** । सूत्रार्थः स्पष्टः । **अगात्** । इण्धातोर्लुङि तिप्यनु-बन्धलोपे 'इणो गा लुङि' इत्यनेन इणः स्थाने 'गा' इत्यादेशे, च्लौ, च्लेः सिच्यनु-

---

**विमर्श**—सूत्रार्थ की पूर्णता हेतु 'उपसर्गाद्ध्रस्व ऊहतेः' ( ७।४।२३ ) से 'उपसर्गात् ह्रस्वः', 'केऽणः' ( ७।४।१३ ) से 'अणः' तथा 'अयङ् यि क्ङिति' से 'किति' पदों की अनुवृत्ति आती है । अतः "उपसर्ग से उत्तर—'इण्' धातु के 'अण्' को कित् लिङ् के परवर्ती रहते 'ह्रस्व' होता है" ।

**उदाहरण**—( १ ) √निर् + इ + लिङ् ( =तिप्='ति', इकारलोप, यासुट्='यास्' आर्ध-धातुक संज्ञा, कित्, 'स्' का लोप, 'इ'='ई'—दीर्घ—'अकृत्सार्वधातुकयोः' ह्रस्व—'एतेर्लिङि' )= निरियात् ।

**( ६६८ ) पद**—अन्तादिवत्, च । **अनुवृत्ति**—एकः पूर्वपरयोः । **अतिदेशसूत्र** ।

**मूलार्थ**—पूर्व-पर के स्थान में जो एकादेश होता है, वह पूर्व के अन्त के समान और पर के आदि के समान होता है ।

**विमर्श**—यह अतिदेश सूत्र है । अतः आरोप का विधान किया जा रहा है । 'एकः पूर्वपरयोः' का अधिकार है । अतः 'अन्तादिवत्' का अन्वय 'यथासंख्य' परिभाषा के सहकार से 'पूर्वपरयोः' के साथ किया जाता है । इस प्रकार सूत्र का आशय यह है कि—"पूर्व और पर के स्थान में होने वाला एकादेश क्रमशः पूर्ववर्ती वर्ण-समुदाय के अन्त के समान और परवर्ती वर्ण-समुदाय के आदि के समान समझा जाता है" ।

( प० ) **उभयत इति** । उभयत आश्रयण में अन्तादिवद्भाव नहीं होता । अर्थात् पूर्ववद्भाव और अन्तवद्भाव दोनों एकसाथ नहीं होते । **अभीयात्** । अभि+ईयात् । यहाँ उक्त परिभाषा के अनुसार ह्रस्व नहीं होता । यदि प्रकृत सूत्र से पूर्वान्तवद्भाव से 'अभी' में उपसर्गत्व धर्म माना जाय तो आगे 'यात्' में इण् नहीं मिलता । यदि परादिवद्भाव से 'ईयात्' में इणत्व लाया जाय तो पूर्व में 'अभ्' शेष रहता है, जो उपसर्ग नहीं है । यदि पूर्वान्तवद्भाव से एकादेश युक्त 'अभी' में उपसर्गत्व और 'भीयात्' में इण् धातुत्व का आश्रयण किया तो ह्रस्व हो सकता है । परन्तु दोनों विरुद्ध कार्य एक साथ नहीं होते । अतः यहाँ ह्रस्व नहीं होता ।

**अणः किम् ? समेयात्** । 'एतेर्लिङि' सूत्र में 'अणः' पद का ग्रहण होने से 'समेयात्' में सूत्र की प्रवृत्ति नहीं होती । सम्+आ+ईयात् ( आ+ई='ए'—गुण )=समेयात् । 'समीयात्' प्रयोग भ्वादिगणीय धातु का है ।

**( ६६९ ) पद**—इणः, गा, लुङि । **विधिसूत्र** ।

**मूलार्थ**—लुङ् के परवर्ती रहते 'इण्' के स्थान में 'गा' आदेश होता है ।

अध्यगात् । केचित्तु आर्धधातुकाधिकारोक्तस्यैवातिदेशमाहुः । तन्मते यण्न । तथा च भट्टिः—'ससीतयो राघवयोरधीयन्नि'ति । वी गतिव्याप्तिप्रजननकान्त्यसनखादनेषु । प्रजनो गर्भग्रहणम् । असनं क्षेपणम् । वेति । वीतः । वियन्ति । वेषि । वेमि । वीहि । अवेत् । अवीताम् । अवियन् । अटि सत्यनेकाच्त्वाद्यणिति केचित् । अव्यन् । अत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यते । एति । ईतः । इयन्ति । ईयात् । ऐषीत् । वच परिभाषणे । वक्ति । वक्तः । अयमन्तिपरो न प्रयुज्यते । बहुवचनपर इत्यन्ये । झिपर इत्यपरे ।

---

बन्धलोपे, तिप इकारलोपे 'अ गा स् त्' इति जाते 'गातिस्थे'ति सिचो लुकि 'अगात्' इति ।

( ६७० ) अस्यतिवक्तिख्यातिभ्योऽङ् । 'च्लेः सिच्' इत्यतः 'च्लेरि'त्यनुवर्तते । तदाह—एभ्यश्च्लेरिति ।

---

**उदाहरण**—( १ ) √इ+लुङ् ( =तिप्=ति, अट्, इकारलोप, 'इ'='गा'—'इणो गा लुङि' ) अ गा त् ( च्लि=सिच्, सिच् का लुक्—'गातिस्था०' )=अगात् ।

**इण् धातु लुङ् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०- | अगात् | अगाताम् | अगुः |
| म० पु०- | अगाः | अगातम् | अगात |
| उ० पु०- | अगाम् | अगाव | अगाम |

( २ ) लृङ्—ऐष्यत् ।

√इक् धातु का अर्थ—'स्मरण करना' है । यह 'अधि' उपसर्गपूर्वक ही है । 'अधीगर्थ' सूत्रकरण से यह ज्ञापन होता है । अन्यथा 'इगर्थ' ऐसा ही सूत्र का निर्माण आचार्य पाणिनि करते ।

**वा०**—इण् धातु के समान इक् को भी कार्य हो—ऐसा कहना चाहिए ।

( १ ) अधि+इक् ( इ )+लट् ( =झि, झ्='अन्त' आदेश, यण्—'इणो यण्' )=अधियन्ति । ( २ ) लुङ्—अधि+अगात् ( यण् )=अध्यगात् । कुछ आचार्यों का कथन है कि "आर्धधातुक के अधिकार में कथित कार्य का ही अतिदेश होता है । उनके मत में यहाँ 'इणो यण्' से यण् नहीं होता । अतएव भट्टिकाव्य में 'अधीयन्' प्रयोग ही मिलता है" ।

√वी धातु गति, व्याप्ति, प्रजन, कान्ति, अशन और खादन अर्थ में है । प्रजन का अर्थ—'गर्भ ग्रहण करना' है । 'असन' का अर्थ—'फेंकना है । ( १ ) √वी+लट् ( =तिप्=ति, शप् लुक्, गुण )=वेति । ( २ ) प्र० पु० द्विव०—वीतः । ( ३ ) √वी+लट् ( =झि, झ्=अन्त, शप्, लुक्, ई=इयङ्='इय' )=वियन्ति । ( ४ ) म० पु० एकव०—वेषि । ( ५ ) उ० पु० एक०—वेमि । ( ६ ) लोट् म० पु० ए० व०—वीहि । ( ७ ) लङ्—अवेत्, अवीताम्, अवियन् । 'उपदेशकालिक एकाच् धातु के अडागम करने पर अनेकाच् होने से यण् होता है' ऐसा कुछ आचार्यों का मत है । वहाँ—अव्यन् । कुछ विद्वान् ईकार का प्रश्लेष होने से 'ई' धातु को स्वतन्त्र मानते हैं । ई धातु से लट् में एति, ईतः, इयन्ति । लिङ्—ईयात् । लुङ्—ऐषीत् ।

√वच धातु का अर्थ—'भाषण करना' है । ( १ ) लट् प्र० पु० एक०—वक्ति । ( २ ) प्र० पु० द्वि व०—वक्तः ( 'च्'='ग्'—'जश्त्व', 'ग्'='क्'—चर्त्व ) । यह 'अन्ति' में शिष्टजनों द्वारा अप्रयुक्त है । कुछ आचार्यों का कथन है कि 'झि' में इसका प्रयोग नहीं होता । ( ३ ) वच्+लट्

वक्तु । वग्धि । वच्यात् । उच्यात् । ( ६७० ) **अस्यतिवक्तिख्यातिभ्योऽङ् ३।१।५२ ।** एभ्यश्च्लेरङ् स्यात् । ( ६७१ ) **वच उम् ७।४।२० ।** वच उमागमः स्यात् अङि । अवोचत् । अवक्ष्यत् । मृजू शुद्धौ । ( ६७२ ) **मृजेर्वृद्धिः ७।२।११४ ।** मृजेरिको वृद्धिः स्याद्धातुप्रत्यये । 'व्रश्चे'ति षः । मार्ष्टि । मृष्टः । * क्ङित्यजादौ वेष्यते * । मार्जन्ति । मृजन्ति । मार्क्षि । ममार्ज । ममृजतुः । ममार्जतुः । ममार्जिथ । ममार्ष्ट । मार्जिता ।

---

( ६७१ ) **वच उमिति** । 'ऋदृशोऽङि' इत्यतः 'अङि' इत्यनुवर्तते । तदाह—**वच इति । अवोचत्** । वच् धातोर्लुङि तत्स्थाने तिप्यनुबन्धलोपे तिप इकारलोपेऽडागमेऽनुबन्धलोपे च्लौ, च्लेः सिचि प्राप्ते 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङि 'अवच् अ त्' इति जाते 'वच उम्' इत्युमि मित्त्वादन्त्यावयवे गुणे कृते 'अवोचत्' इति ।

( ६७२ ) **मृजेर्वृद्धिः** । 'इको गुणवृद्धी' इति परिभाषया इक इति षष्ठ्यन्तमुपतिष्ठते । तदाह—**मृजेरिको वृद्धिरिति । मार्ष्टि** । मृज्धातोः तिपि, शपि, शपो लुकि,

---

( =सिप्=सि='हि' 'सेर्ह्यपिच्च', 'हि'='धि' 'हुझल्भ्यः०' जश्त्व, चर्त्व )=वग्धि । ( ४ ) विधिलिङ्—वच्यात् । ( ५ ) आशीर्लिङ्—उच्यात् ( 'वचिस्वपि' से सम्प्रसारण ) ।

**( ६७० ) पद**—अस्यतिवक्तिख्यातिभ्यः, अङ् । **अनुवृत्ति**—च्लेः, लुङि । **विधिसूत्र** ।

**मूलार्थ**—असु, वच और ख्याञ् धातुओं से परवर्ती 'च्लि' को 'अङ्' आदेश होता है ।

**विमर्श**—सूत्र में स्थानीवाचक पद का अभाव है । अतः 'च्लेः सिच्' ( ३।१।४४ ) से 'च्लेः' की अनुवृत्ति आती है । 'च्लि लुङि' ( ३।१।४३ ) से 'लुङि' पद की अनुवृत्ति आ रही है । इस प्रकार—"असु, वच और ख्याञ् धातुओं से उत्तरवर्ती 'च्लि' के स्थान में 'अङ्' आदेश होता है, 'लुङ्' के परे रहते" ।

**( ६७१ ) पद**—वचः, उम् । **अनुवृत्ति**—अङि । **विधिसूत्र** ।

**मूलार्थ**—'अङ्' के परवर्ती रहते 'वच' को 'उम्' का आगम होता है । अवोचत् ।

**विमर्श**—यहाँ 'ऋदृशोऽङि गुणः' ( ७।४।१६ ) से 'अङि' पद की अनुवृत्ति आ रही है । अतः 'अङ्' के परवर्ती रहते 'वच्' को 'उम्' ( =उ ) का आगम होता है ।

**उदाहरण**—( १ ) √वच्+लुङ् ( =तिप्=ति, इकारलोप, अट् ( ='अ' आगम, च्लि )—अ वच् च्लि त् ( च्लि='अङ्'='अ'—'अस्यतिवक्तिख्यातिभ्योऽङ्' उम्='उ' का आगम, गुण ) =अवोचत् । ( २ ) लृङ्—अवक्ष्यत् ।

√मृजू ( ऊदित् ) धातु का अर्थ—'शुद्ध करना, माँजना' है ।

**( ६७२ ) पद**—मृजेः, वृद्धिः । **अनुवृत्ति**—इकः । **विधिसूत्र** ।

**मूलार्थ**—धात्वधिकार विहित प्रत्यय के परे रहते मृज् के 'इक्' को वृद्धि होती है ।

**विमर्श**—'इको गुणवृद्धी' परिभाषा के द्वारा 'इकः' षष्ठ्यन्त पद की उपस्थिति होती है । तदनुसार—'मृज्' के 'इक्' के स्थान में वृद्धि होती है ।

**उदाहरण**—( १ ) √मृज्+लट् ( =तिप्=ति, शप्, लुक्, ऋ='आ' वृद्धि—'मृजेर्वृद्धिः' रपर 'ज्'='ष्'—'व्रश्चभ्रस्ज०' )=मार्ष्टि । ( २ ) लट् प्र० पु० द्विव०—मृष्टः ।

**वा०**—अजादि कित् ङित् प्रत्यय के परवर्ती रहते 'मृज्' के इक् को विकल्प से वृद्धि होती है । ( ३ ) मृज्+लट् ( =झि, 'झ्'='अन्त्', ऋ='आ'—वृद्धि विकल्प से—'क्ङित्यजादौ वेष्यते', रपर )=मार्जन्ति । वृद्धि के अभावपक्ष में—मृजन्ति । ( ४ ) लट् म० पु० एक०—मार्क्षि ।

**मार्ष्टा । मार्ष्टु । मृड्ढि । अमार्ट् । अमार्ड् । अमार्जम् । अमार्जीत् । 'षढोः कः सि' । अमार्क्षीत् । अमार्क्ष्यत् । अमार्जिष्यत् । रुदिर् अश्रुविमोचने । ( ६७३ ) रुदादिभ्यः सार्वधातुके ७।२।७६ । रुद् स्वप् श्वस् अन् जक्ष् एभ्यो वलादेः सार्वधातुकस्येट् स्यात् । रोदिति । रुदितः । हौ परत्वादिटि धित्वं न । रुदिहि । ( ६७४ ) रुदश्च पञ्चभ्यः ७।३।९८ । रुदादेः परस्य हलादेः पितः सार्वधातुकस्यापृक्तस्य ईट् स्यात् । ( ६७५ )**

---

'मृजेर्वृद्धिः' इति ऋकारस्य वृद्धौ रपरत्वे 'व्रश्चभ्रस्ज०' इति षत्वे तकारस्य ष्टुत्वेन टकारे 'मार्ष्टि' इति ।

( ६७३ ) **रुदादिभ्य इति ।** 'ईड्वलादेरि'त्यनुवर्तते । अत आह—**एभ्यः वलादेरिति । रोदिति ।** रुद्धातोर्लटि, तिपि, शपि, शब्लुकि 'रुदादिभ्यः सार्वधातुके' इति इडागमेऽनुबन्धलोपे 'पुगन्तलघूपधस्य चे'ति गुणे 'रोदिति' इति रूपम् ।

( ६७४ ) **रुदश्चेति ।** सूत्रेऽस्मिन् 'नाभ्यस्तस्य' इत्यतः पिति सार्वधातुके इति,

---

( ५ ) लिट् प्र० पु० एकव०—ममार्ज । ( ६ ) प्र० पु० द्वि०—विकल्प से वृद्धि—ममार्जतुः । ममृजतुः । ( ७ ) म० पु० ए० व० में ऊदित् होने से विकल्प से इट्—ममार्जिथ । ममार्ष्ट ( षत्व, ष्टुत्व ) । ( ८ ) लुट्—मार्जिता, मार्ष्टा ( विकल्प से इट् ) । ( ९ ) लोट्—मार्ष्टु । ( १० ) मृज्+लोट् ( =सिप्='सि', 'सि'='हि' )—मृज् हि ( शप्, लुक्, 'ज्'='ष्'—'व्रश्च०' 'हि'='धि'-'हुझल्भ्यः' 'ध्'='ढ्'—'ष्टुत्व' 'ष्'='ड्'—'जश्त्व' )=मृड्ढि । ( ११ ) मृज्+लङ् ( =तिप्=ति, शप् लुक्, 'इ'लोप, अट् )—अ मृज् त् ( ऋ='आ'—'मृजेर्वृद्धिः' रपर 'त्' का लोप—'संयोगान्तस्य लोपः' 'ज्'='ट्' विकल्प से-'वाऽवसाने' )=अमार्ट् । टत्व के अभावपक्ष में जश्त्व—अमार्ड् । ( १२ ) लङ् उ० पु० एकव०—अमार्जम् । ( १३ ) मृज्+लुङ् ( =तिप्=ति, 'इ' का लोप, अट्, च्लि=सिच्='स्', इट्, ईट्, ऋ='आ' वृद्धि—'मृजेर्वृद्धिः' रपर, 'स्' लोप—'इट ईटि', सवर्णदीर्घ )=अमार्जीत् । इट् के अभावपक्ष में—अमार्क्षीत् । ( १४ ) लृङ् में—अमार्क्ष्यत् । अमार्जिष्यत् ( इट् विकल्प ) ।

√रुदिर् ( 'इर्' इत्संज्ञक ) धातु का अर्थ—'रोना' है ।

**( ६७३ ) पद**—रुदादिभ्यः, सार्वधातुके । **अनुवृत्ति**—ईट्, वलादेः । **विधिसूत्र ।**

**मूलार्थ**—रुदादि पाँच धातुओं से परवर्ती वलादि सार्वधातुक को इट् का आगम होता है । रोदिति इत्यादि ।

**विमर्श**—प्रकृत सूत्र में—'आर्धधातुकस्येड् वलादेः' से 'इट्, वलादेः' की अनुवृत्ति आ रही है । तदनुसार—"रुद्, स्वप्, श्वस्, अन और जक्ष् धातुओं से परवर्ती वल् आदि सार्वधातुक को 'इट्' का आगम होता है ।"

**उदाहरण**—( १ ) √रुद्+लट् ( =तिप्=ति, शप्, शप् का लुक्, इट्='इ' का आगम—'रुदादिभ्यः सार्वधातुके' 'उ'='ओ'—गुण—'पुगन्त०' )=रोदिति । ( २ ) लट् प्र० पु० द्वि०—रुदितः । ( ३ ) लोट् म० पु० ए० व० में 'हुझल्भ्यः' के पर होने से बाधकर 'इट्' । अतः 'हि'='धि'—रुदिहि ।

**( ६७४ ) पद**—रुदः, च, पञ्चभ्यः । **अनुवृत्ति**—अपृक्ते, हलि, सार्वधातुके । **विधिसूत्र ।**

**मूलार्थ—रुदादि पाँच धातुओं से परवर्ती अपृक्त संज्ञक हलादि पित् सार्वधातुक को 'ईट्' का आगम होता है ।**

**अड् गार्ग्यगालवयोः ७।३।९९। अरोदीत्–अरोदत्। अरुदिताम्। अरुदन्। अरोदीः। अरोदः। प्रकृतिप्रत्ययविशेषापेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद्यासुट्, 'असिद्धं बहिरङ्ग-मन्तरङ्गे' इति परिभाषणात्। रुद्यात्। अरुदत्–अरोदीत्। अरोदिष्यत्। ञिष्वप्**

---

'उतो वृद्धिः' इत्यतो 'हली'ति, 'गुणोऽपृक्ते' इत्यतः अपृक्ते इति, 'ब्रुव ईट्' इत्यतः ईडिति चानुवर्तते। 'रुदः' इत्यत्र पञ्चमी। रुदादिभ्य इत्यभिप्रायः। अत आह–**हलादेः पित इत्यादि**।

( ६७५ ) **अड् गार्ग्येति**। गार्ग्यगालवयोराचार्ययोः मते रुदादिभ्यः पञ्चभ्यः परस्य हलादेः पितः सार्वधातुकस्य अपृक्तस्य अडागमः स्यादिति सूत्रार्थः। **अरोदीत्**। रुद धातोर्लुङि तिपि, अनुबन्धलोपे, 'इतश्चे'तीकारलोपे, अटि, च्लौ, च्लेः सिचि 'रुदश्च पञ्चभ्यः' इतीडागमेऽनुबन्धलोपे 'अ रुद् ई स् त्' इति जाते, इटि, सलोपे 'पुगन्त०' इति गुणे 'अरोदीत्' इति। 'अड् गार्ग्यगालवयोः' इत्यट्पक्षे तु —'अरोददि'ति। **रुद्या-दिति**। रुद्धातोः लिङि तिपि 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया अन्तरङ्ग-

---

**विमर्श**—सूत्रार्थ की पूर्ति हेतु—'नाभ्यस्तस्य'० ( ७।३।८७ ) से पिति, सार्वधातुके, 'उतो वृद्धिः' ( ७।३।८९ ) से 'हलि' 'गुणोऽपृक्ते' ( ७।३।९१ ) से 'अपृक्ते' तथा 'ब्रुव ईट्' ( ७।३।९३ ) से 'ईट्' की अनुवृत्ति आती है। अतः "रुद् आदि पाँच धातुओं से उत्तरवर्ती हलादि सार्वधातुक को भी 'ईट्' का आगम होता है"।

**( ६७५ ) पद**—अट्, गार्ग्यगालवयोः। **अनुवृत्ति**—रुदः, पञ्चभ्यः, अपृक्ते, हलि, सार्वधातुके। **विधिसूत्र**।

**मूलार्थ**—रुदादि पाँच धातुओं से परवर्ती अपृक्त संज्ञक हलादि पित् सार्वधातुक को गार्ग्य और गालव आचार्य के मत से 'अट्' का आगम होता है। अरोदीत। अरोदत इत्यादि।

**विमर्श**—यहाँ पूर्वसूत्र 'रुदश्च पञ्चभ्यः' ( ६७४ ) तथा उसमें अनुवृत्त 'अपृक्ते', 'हलि' तथा 'सार्वधातुके' पदों की अनुवृत्ति आती है। इस प्रकार—"रुद् आदि पाँच धातुओं से उत्तरवर्ती हलादि अपृक्त सार्वधातुक को गार्ग्य तथा गालव आचार्य के मत में 'अट्' का आगम होता है"।

**उदाहरण**—( १ ) √रुद्+लङ् ( =तिप्=ति, इकारलोप, अट्, शप्, शप् का लुक् )—अ रुद् त ( 'अट्'='अ'—'अड् गार्ग्यगालवयोः' गुण )=अरोदत। अट् के अभाव पक्ष में—अ रुद् त ( 'ईट्'—'रुदश्च पञ्चभ्यः', गुण—'पुगन्त०' )=अरोदीत। ( २ ) लङ् प्र० पु० द्वि०—अरुदिताम् ( इट्—'रुदादिभ्यः' )। ( ३ ) लङ् प्र० पु० बहु०—अरुदन्। ( ४ ) रुद्+लङ् ( =सिप्=सि, अट्, इकारलोप )—अ रुद् स् ( शप्, लुक्, 'अट्'='अ' का आगम—'अड् गार्ग्यगालवयोः'—विकल्प से, गुण, स्=र्=ः )=अरुदः। अट् के अभावपक्ष में ( 'रुदश्च पञ्चभ्यः' से 'ईट्' )=अरोदीः। ( ५ ) √रुद्+लिङ् ( =तिप्=ति, इकारलोप, अन्तरङ्ग होने से 'ईट्' और 'अट्' का बाधकर यासुट्='यास्', 'स्' का लोप—'स्कोः संयोगाद्योरन्ते च' )=रुद्यात।

यहाँ 'यासुट्' अन्तरङ्ग है। प्रकृति और प्रत्यय विशेष की अपेक्षा रखने वाला 'अट्' एवम् 'ईट्' बहिरङ्ग है। अतः अन्तरङ्ग होने से 'यासुट्' ही हुआ। क्योंकि अन्तरङ्ग कार्य की कर्तव्यता में बहिरङ्ग असिद्ध होता है।

( ६ ) √रुद्+लुङ् ( =तिप्=ति, अट्, च्लि=अङ्='अ'—विकल्प से—'इरितो वा',

**शये । स्वपिति । स्वपितः । सुष्वाप । सुषुपतुः । सुष्वपिथ–सुष्वप्थ । ( ६७६ ) सुविनिर्दुर्भ्यः सुपिसूतिसमाः ८।३।८८ ।** एभ्यः सुप्यादेः सस्य षः स्यात् । 'पूर्वं धातु-रुपसर्गेण युज्यते' । किति लिटि—परत्वात्सम्प्रसारणे, षत्वे च कृते द्वित्वम् । **पूर्वत्रासिद्धीयमद्विर्वचने ।** सुषुषुपतुः । सुषुषुपुः । अकिति तु—द्वित्वेऽभ्यासस्य सम्प्रसारणम् । षत्वस्यासिद्धत्वात् ततः पूर्वं 'हलादिः शेषः' नित्यत्वाच्च । ततः सुपिरूपाभावान्न षः । सुसुष्वाप । सुस्वप्ता । अस्वपीत्–अस्वपत् । स्वप्यात् । सुप्यात् । सुप्यास्ताम् । सुषुप्यात् ।

---

त्वादीटमटं च प्रबाध्य यासुडागमेऽनुबन्धलोपे 'स्कोः संयोगाद्योरन्ते चे'ति सलोपे कृते 'रुद्यात्' इति रूपम् ।

( ६७६ ) **सुविनिर्दुर्भ्य इति ।** 'सहेः साडः सः' इत्यस्मात् स इति षष्ठ्यन्तमनुवर्तते, 'मूर्धन्यः' इत्यधिकृतम् । सूत्रे सुपीत्यनेन कृतसम्प्रसारणस्य स्वप्धातोः, सूतीत्यनेन सूतिशब्दः कृदन्तो गृह्यते । समेत्यनेनापि समपदस्य ग्रहणम् । तदाह—**एभ्य इति । पूर्वत्रासिद्धीयमिति ।** ननु 'सुषुषुपतुः' इत्यत्र परत्वात्सम्प्रसारणे षत्वे विहितेऽपि तस्य त्रैपादिकत्वेनाऽसिद्धत्वात्षकारोपलक्षितस्य द्वित्वं न स्यादित्याह—**पूर्वत्रासिद्धीयमद्विर्वचने**

---

इकारलोप, ङित्वात् गुणाभाव )=अरुदत् । 'अङ्' के अभावपक्ष में—अरुद् च्लि त् ( च्लि=सिच्='स', ईट्—'रुदश्च', इट्, 'स्' लोप, सवर्णदीर्घ, गुण )=अरोदीत् । ( ७ ) लृङ्—अरोदिष्यत् ।

ञिष्वप् ( =स्वप् ) धातु का अर्थ—'शयन'=( सोना ) है । ( १ ) √स्वप्+लट् ( =तिप्=ति, शप् का लुक्, इट्='इ' आगम—'रुदादिभ्यः सार्वधातुके' )=स्वपिति । ( २ ) लट् प्र० पु० द्वि०—स्वपितः । ( ३ ) √स्वप्+लिट् ( =तिप्=णल्='अ', द्वित्व, अभ्यास संज्ञा, प्राप्त हलादिशेष का बाधकर, अभ्यास के 'व्'='उ'—सम्प्रसारण—'लिट्यभ्यासस्य०' पूर्वरूप—'सम्प्रसारणाच्च' )—सु स्वप् अ ( उपधावृद्धि—'अत उपधायाः' षत्व—'आदेशप्रत्यययोः' )=सुष्वाप । ( ४ ) लिट् प्र० पु० द्वि०—सुषुपतुः । ( ५ ) लिट् म० पु० एक०—सुष्वपिथ–सुष्वप्थ ( भारद्वाज के मत से वैभाषिक—इट् ) ।

( ६७६ ) **पद**—सुविनिर्दुर्भ्यः, सुपिसूतिसमाः । **अनुवृत्ति**—सः । **विधिसूत्र ।**

**मूलार्थ**—सु, वि, निर्, दुर् उपसर्गों से परवर्ती सुपि, सूति और सम के सकार को षकार आदेश होता है ।

**विमर्श**—यहाँ 'सहेः साडः सः' से 'सः' पद की अनुवृत्ति आती है । 'अपदान्तस्य मूर्धन्यः' का अधिकार है । तदनुसार—'सु, वि, निर् तथा दुर् उपसर्गों से उत्तरवर्ती सुपि ( =स्वप् ), सूति तथा सम के सकार को मूर्धन्य आदेश होता है' ।

( १ ) प्रथमतः धातु उपसर्ग के साथ सम्बद्ध होता है । अतः धातु और उपसर्ग निमित्तक कार्य अन्तरङ्ग होता है । कित् लिट् में सम्प्रसारण एवं तदाश्रित कार्य के बलवान् होने से द्वित्व से पूर्व सम्प्रसारण कर 'सुप्' रूप निष्पन्न होने से षत्व करने के पश्चात् उसका द्वित्व प्रयुक्त 'तस्' में रूप—**सुषुषुपतुः** । ( २ ) कित् भिन्न में पूर्व में द्वित्व होने पर अभ्यास संज्ञा के अनन्तर द्वित्व, षत्व 'हलादिः शेषः' की दृष्टि में असिद्ध है और नित्य भी । अतः षकार निवृत्ति के पश्चात् सुप् परत्वाभाव होने से षत्व नहीं हुआ—सुसुष्वाप । ( ३ ) लुट् में—सु+स्वप्ता=सुस्वप्ता । ( ४ ) लङ्—अस्वपत्, अस्वपीत् ( 'अड् गार्ग्यगालवयोः' से विकल्प से 'अट्' आगम होने से दो रूप

अस्वाप्सीत्–अस्वप्स्यत् । श्वस प्राणने । प्राणनं जीवनम् । श्वसिति । श्वसितः । शश्वास । श्वसिता । श्वसिष्यति । श्वसितु । अश्वसीत्–अश्वसत् । अश्वसिताम् । अश्वसन् । श्वस्यात् । श्वस्यास्ताम् । श्वस्युः । श्वस्यात् । श्वस्यास्ताम् । श्वस्यासुः । 'ह्म्यन्ते'ति न वृद्धिः । अश्वसिष्यत् । अन च । अनिति । आन । अनिता । अनिष्यति । आनीत्–आनत् । ( ६७७ ) अनितेः ८।४।१९ । उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः स्यात् । प्राणिति । जक्ष भक्षहसनयोः । जक्षिति । जक्षितः । ( ६७८ ) अदभ्यस्तात् ७।१।४ ।

---

इति । अर्थाद् द्विर्वचने कर्तव्ये 'पूर्वत्रासिद्धमि'ति सूत्रं न प्रवर्तते । श्वसिति । 'श्वस प्राणने' इत्यस्माद्धातोर्लटि, तिपि, शपि, शब्लुकि 'रुदादिभ्यः सार्वधातुके' इतीडागमे 'श्वसिति' इति ।

( ६७७ ) अनितेरिति । 'उपसर्गादसमासेऽपी'त्यतः 'उपसर्गादि'ति 'रषाभ्यां नो णः' इति सूत्रञ्चानुवर्तते । तदाह—उपसर्गस्थादिति । प्राणिति । प्रोपसर्गपूर्वक-अन्-धातोर्लटि, तिपि, शपि, शब्लुकि, सवर्णदीर्घे 'रुदादिभ्यः' इति तिपः इडागमेऽनुबन्ध-लोपे 'अनितेः' इत्यनेन णत्वे 'प्राणिति' इति ।

---

बनते हैं । ) ( ५ ) लिङ्—स्वप्यात् । सुप्यास्ताम् । ( ६ ) सु+सुप्यात्=सुषुप्यात् ( षत्व—'सुविनिर्दुर्भ्यः' ) । ( ७ ) लुङ्—अस्वाप्सीत् । ( ८ ) लृङ्—अस्वप्स्यत् ।

√श्वस् धातु का अर्थ 'प्राणन' है । प्राणन का अर्थ—जीवन ( =जीवित रहना ) है । ( १ ) √श्वस्+लट् ( =तिप्=ति, शप्, शप् का लुक्, इट्='इ' का आगम—'रुदादिभ्यः सार्वधातुके' )=श्वसिति । ( २ ) लट्—प्र० पु० द्विव०—श्वसितः । ( ३ ) लिट्—शश्वास । ( ४ ) लुट्—श्वसिता । ( ५ ) लृट्—श्वसिष्यति । ( ६ ) लोट्—श्वसितु । ( ७ ) लङ्—अश्वसीत्, अश्वसत् ( विकल्प से अट्, अडभाव पक्ष में—ईट् ) । ( ८ ) लङ् प्र० पु० द्विव०—अश्वसिताम् । ( ९ ) लङ् प्र० पु० बहु०—अश्वसन् । ( १० ) लिङ्—श्वस्यात्, श्वस्यास्ताम्, श्वस्युः । ( ११ ) आशीर्लिङ्—श्वस्यात्, श्वस्यास्ताम्, श्वस्यासुः । ( १२ ) लुङ्—'ह्म्यन्त०' से वृद्धि नहीं होती—अश्वसीत् । ( १३ ) लृङ्—अश्वसिष्यत् ।

√अन धातु भी प्राणन ( =जीवित रहना ) अर्थ में है । ( १ ) लट्—अनिति । ( २ ) लिट्—आन । ( ३ ) लुट्—अनिता । ( ४ ) लृट्—अनिष्यति । ( ५ ) लङ्—आनीत्, आनत् ( विकल्प से 'अट्', पक्ष में 'ईट्' ) ।

**( ६७७ ) पद**—अनितेः । **अनुवृत्ति**—उपसर्गात्, रषाभ्यां नो णः । **विधिसूत्र** ।

**मूलार्थ**—उपसर्गस्थ निमित्त ( र्, ष् ) से परवर्ती 'अन्' धातु के नकार के स्थान में णकार आदेश होता है ।

**विमर्श**—प्रकृत सूत्र में 'उपसर्गादसमासेऽपि' ( ८।४।१४ ) से 'उपसर्गात्' तथा 'रषाभ्यां नो णः समानपदे' ( ८।४।१ ) से 'रषाभ्यां नो णः' की अनुवृत्ति आती है । तदनुसार—"उपसर्ग में स्थित निमित्त ( र्, ष् ) से उत्तरवर्ती 'अन' धातु के नकार को णकार आदेश होता है ।"

**उदाहरण**—( १ ) प्र+√अन्+लट् ( =तिप्=ति, शप्, शप् का लुक्, सवर्णदीर्घ, इट्='इ' का आगम—'रुदादिभ्यः सार्वधातुके' )—प्रानिति ( 'न्'='ण्'—णत्व—'अनितेः' )=प्राणिति ।

√जक्ष धातु का अर्थ—'खाना, हँसना' है । ( १ ) √जक्ष्+लट् ( =तिप्=ति, शप् का लुक्, 'इट्'—'रुदादिभ्यः' )=जक्षिति । ( २ ) लट्—प्र० पु० द्विव०—जक्षितः ।

अभ्यस्तात्परस्य झस्य अत्स्यात् । अन्तापवादः । जक्षति । अजक्षीत्-अजक्षत् । अजक्षताम् । 'सिजभ्यस्ते'ति झेर्जुस् । अजक्षुः । जागृ निद्राक्षये । जागर्ति । जागृतः । जाग्रति । 'उषविदे'त्याम्वा । जागराञ्चकार । जजागार । ( ६७९ ) जाग्रोऽविचिण्णल्ङित्सु ७।३।८५ । जागर्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन्वृद्धिविषये प्रतिषेध-

---

( ६७८ ) अदभ्यस्तादिति ।'झोऽन्तः' इत्यतः 'झः' इत्यनुवर्तते । अभ्यस्तसंज्ञकात् परस्य झस्यात्स्यादित्यर्थः । जक्षति । जक्ष्धातोर्लटि, तिपि, शपि, शपो लुकि, 'रुदादिभ्यः सार्वधातुके' इति इडागमेऽनुबन्धलोपे 'जक्षिति' इति । जक्षतीति । जक्ष्-धातोर्लटि, लः स्थाने झौ, 'जक्षित्यादयः षट्' इत्यभ्याससंज्ञायाम् 'अदभ्यस्तात्' इति झस्य स्थाने 'अत्' इत्यादेशे 'जक्षति' इति रूपम् ।

( ६७९ ) जाग्रोऽविचिण्णिति । वि-चिण्-णल्-ङित् एषां द्वन्द्वे नञ्समासः । 'मिदेर्गुणः' इत्यतः गुण इत्यनुवर्तते । तदाह—जागर्तेरिति । जजागरतुः । जागृधातोर्लिटि

---

( ६७८ ) पद—अत्, अभ्यस्तात् । अनुवृत्ति—झः, प्रत्ययस्य । विधिसूत्र ।

मूलार्थ—अभ्यस्त संज्ञक से उत्तरवर्ती 'झ' के स्थान में 'अत्' आदेश होता है । यह 'झोऽन्तः' का अपवाद है । जक्षति इत्यादि ।

विमर्श—सूत्र में स्थानीवाचक पद का अभाव है । अतः 'झोऽन्तः' ( ७।१।३ ) से 'झः' पद की अनुवृत्ति आती है । 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' ( ७।१।२ ) से स्वरितत्वात् एकदेश 'प्रत्ययस्य' की अनुवृत्ति आती है । तदनुसार—''अभ्यस्त संज्ञक से परवर्ती प्रत्यय के अवयव 'झ्' के स्थान में 'अत्' आदेश होता है ।''

उदाहरण—( १ ) √जक्ष्+लट् ( =झि, शप् लुक्, 'जक्षित्यादयः षट्' से अभ्यस्त संज्ञा, 'झ्'='अत्'—'अदभ्यस्तात्' )=जक्षति । ( २ ) लङ् प्र० पु० एक०—अजक्षीत्, अजक्षत् ( 'अड् गार्ग्य०' से विकल्प से अट्, पक्ष में 'रुदश्च' से ईट् ) । ( ३ ) लङ् प्र० पु० द्वि०—अजक्षताम् । ( ४ ) जक्ष्+लङ् ( =झि, शप्, शप् का लुक्, अट्, अभ्यस्त संज्ञा, झि=जुस्='उस्', स्=र्=: )=अजक्षुः ।

√जागृ धातु का अर्थ—'जागना' है । ( १ ) √जागृ+लट् ( =तिप्=ति, शप्, लुक्, ऋ='अ'—गुण—'सार्वधातुकार्धधातुकयोः' रपर )=जागर्ति । ( २ ) लट्—प्र० पु० द्विव०—जागृतः । ( ३ ) √जागृ+लट् ( =झि, शप् का लुक्, अभ्यस्त संज्ञा 'झ्'='अत्'='अदभ्यस्तात्', 'ऋ'='र्'-यण् )=जाग्रति । ( ४ ) √जागृ+लिट् ( 'आम्'—'आयादयः०', आर्धधातुक संज्ञा, गुण, रपर, 'लिट् का लुक्'—'आमः' )—जागराम् ( लिट्परक √कृ का अनुप्रयोग—'कृञ्चानुप्रयुज्यते लिटि', लिट्=तिप्=णल्='अ' )—जागराम् कृ अ ( धातु को द्वित्व, अभ्यास संज्ञा, 'ऋ'='अ'—'उरत्' रपर, हलादिशेष, 'क्'='च्'—'अभ्यासे चर्च' )—जागराम् च कृ अ ( म्=—अनुस्वार=परसवर्ण, 'ऋ'='आ'—वृद्धि—'अचो ञ्णिति', रपर )=जागराञ्चकार । ( ५ ) 'आयादय आर्धधातुके वा' से 'आम्' के अभावपक्ष में—जागृ+लिट् ( =तिप्=णल्='अ', द्वित्व, अभ्यास संज्ञा, ह्रस्व )—जजागृ अ ( 'ऋ'='आ'—वृद्धि—'अचो ञ्णिति' रपर )=जजागार ।

( ६७९ ) पद—जाग्रः, अविचिण्णल्ङित्सु । अनुवृत्ति—सार्वधातुकार्धधातुकयोः, गुणः । विधिसूत्र ।

मूलार्थ—जागृ धातु को गुण होता है, विन्, चिण् तथा णल् से भिन्न वृद्धि-विषयक प्रत्यय

विषये च। जजागरतुः। जजागरुः। जागरिता। जागरिष्यति। अजागः। अजागृताम्। अभ्यस्तत्वाज्जुस्। ( ६८० ) जुसि च ७।३।८३। अजादौ जुसि इगन्ताङ्गस्य गुणः स्यात्। अजागरुः। अजादौ किम्? जागृयुः। आशिषि तु—जागर्यात्। जागर्यास्ताम्। जागर्यासुः। अजागरीत्। दरिद्रा दुर्गतौ। दरिद्राति। ( ६८१ ) इद्दरिद्रस्य

---

तसि, तसोऽतुसादेशे, धातोर्द्वित्वेऽभ्यासत्वे, हलादिशेषे, ह्रस्वे 'जजागृ अतुस्' इति जाते 'जाग्रोऽविचिण्णल्ङित्सु' इति गुणे, रपरत्वे सस्य रुत्वे विसर्गे च कृते 'जजागरतुः' इति।

( ६८० ) जुसि चेति। 'अङ्गस्ये'त्यधिकृतम्। 'मिदेर्गुणः' इत्यतः गुण इत्यनुवर्तते। 'इको गुणवृद्धी' इति परिभाषया 'इकः' इति षष्ठ्यन्तं पदमुपतिष्ठते। तेन अङ्गस्य विशेषणात्तदन्तविधिः। 'क्सस्याची'त्यतोऽनुवृत्तेन 'अचि' इति पदेन जुसीत्यस्य विशेषणात्तदादिविधिस्तदाह—**अजादाविति। अजागरुः।** जागृधातोर्लङि झौ, 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञायाम्, अङ्गस्याडागमेऽनुबन्धलोपे, झेर्जुसादेशेऽनुबन्धलोपे 'जुसि चे'ति गुणे, रपरे सस्य रुत्वे विसर्गे च कृते 'अजागरुः' इति।

---

और ङित् से भिन्न निषेध-विषयक प्रत्यय के परवर्ती रहते। जजागरतुः। ,जजागरुः। जागरिता इत्यादि।

**विमर्श**—प्रकृत सूत्र में आदेश-वाचक पद का अभाव है। अतः 'मिदेर्गुणः' ( ७।३।८२ ) से 'गुणः' पद की अनुवृत्ति आती है। 'सार्वधातुकार्धधातुकयोः' ( ७।३।८४ ) सूत्र भी यहाँ अनुवृत्त होता है। अत एव—'विन् चिण् णल् से भिन्न वृद्धि-विषयक प्रत्यय एवं ङित् से भिन्न प्रतिषेध-विषयक प्रत्यय के परवर्ती रहने पर जागृ धातु के अङ्ग को गुण होता है'।

**उदाहरण**—( १ ) √जागृ+लिट् ( =तस्=अतुस्, धातु को द्वित्व, पूर्व की अभ्यास संज्ञा, हलादिशेष, ह्रस्व )—जजागृ अतुस् ( 'ऋ'='अ'—गुण—'जाग्रोऽविचिण्णल्ङित्सु', रपर, स्=र्=ः )=जजागरतुः। ( २ ) लिट्—प्र० पु० बहु०—जजागरुः। ( ३ ) लुट्—जागरिता। ( ४ ) लृट्—जागरिष्यति। ( ५ ) √जागृ+लङ् ( =तिप्=ति, इकारलोप—'इतश्च', अट् )—अ जागृ त् ( शप् का लुक्, 'त्' का हल्ङ्यादिलोप, र्=ः )=अजागः। ( ६ ) लङ् प्र० पु० द्विव०—अजागृताम्। बहुवचन में 'झि' को अभ्यस्त संज्ञक 'जुस्' होने पर—

**( ६८० ) पद**—जुसि, च। **अनुवृत्ति**—गुणः। **विधिसूत्र।**

**मूलार्थ**—अजादि 'जुस्' प्रत्यय के परवर्ती रहते इगन्त अङ्ग को गुण होता है। अजागरुः।

**विमर्श**—'अङ्गस्य' का अधिकार है। 'मिदेर्गुणः' ( ७।३।८२ ) से 'गुणः' पद की अनुवृत्ति आती है। 'इको गुणवृद्धी' परिभाषा के द्वारा षष्ठ्यन्त 'इकः' पद की उपस्थिति होती है। तदन्त विधि होकर—"अजादि जुस् के परवर्ती रहते इगन्त अङ्ग को गुण होता है।"

**उदाहरण**—( ७ ) √जागृ+लङ् ( =झि=जुस्='उस्', शप् लुक्, अभ्यस्त संज्ञा—'जक्षित्यादयः षट्' 'ऋ'='अ'—गुण 'जुसि च', रपर, स्=र्=ः )=अजागरुः। सूत्र में 'अजादि' ग्रहण होने से 'जागृयुः' में गुण नहीं हुआ। क्योंकि यहाँ अजादि जुस् नहीं है। आशीर्लिङ् में 'जाग्रो०' से गुण—जागर्यात्। जागर्यास्ताम्। जागर्यासुः। लुङ्—अजागरीत्।

√दरिद्रा धातु 'दुर्गति' अर्थ में है। ( १ ) लट्—दरिद्राति।

**( ६८१ ) पद**—इत, दरिद्रस्य। **अनुवृत्ति**—हलि, आतः, सार्वधातुके, क्ङिति। **विधिसूत्र।**

६।४।११४। दरिद्रातेरिकारः स्याद्धलादौ क्ङिति सार्वधातुके। दरिद्रितः। ( ६८२ ) श्नाभ्यस्तयोरातः ६।४।११२। श्नाभ्यस्तयोरातो लोपः स्यात् क्ङिति सार्वधातुके दरिद्रति। अनेकाच्त्वादाम्। दरिद्राञ्चकार। 'आत औ णलः' इत्यत्र 'ओ' इत्येव सिद्धे 'औ' विधानं दरिद्रातेरालोपे कृते श्रवणार्थम्, अत एव ज्ञापकादाम्नेत्येके। ददरिद्रौ। * दरिद्रातेरार्द्धधातुके विवक्षिते आलोपो वाच्यः। लुङि वा *। * सनि, ण्वुलि, ल्युटि

---

( ६८१ ) इद्दरिद्रस्येति। 'गमहन०' इत्यस्मात् क्ङितीत्यनुवर्तते, 'ई हल्यघोः' इत्यतः 'हलि' इति, 'अत उत्' इत्यत 'सार्वधातुके' इति च। तदाह—दरिद्रातेरिति। दरिद्रितः। दरिद्राधातोः लटि, तसि, शपि, शपो लुकि, 'दरिद्रा तस्' इति जाते 'इद्दरिद्रस्य' इत्याकारस्य इकारे, सस्य रुत्वे विसर्गे च 'दरिद्रितः' इति।

( ६८२ ) श्नाभ्यस्तयोरात इति। अत्र 'गमहन०' इत्यतः क्ङिति, लोप इति चानुवर्तते; 'अत उत्' इत्यतः 'सार्वधातुके' इति च। दरिद्रति। दरिद्राधातोर्लटि,

---

**मूलार्थ**—हलादि कित्-ङित् सार्वधातुक के परवर्ती रहते दरिद्रा धातु 'आत्' को 'इत्' आदेश होता है। दरिद्रितः।

**विमर्श**—प्रकृत सूत्र में 'ई हल्यघोः' ( ६।४।११३ ) से 'हलि', 'श्नाभ्यस्तयोरातः' ( ६८३ ) से 'आतः', 'अत उत्सार्वधातुके' ( ६।४।११० ) से 'सार्वधातुके' तथा 'गमहन०' ( ६।४।९८ ) से 'क्ङिति' पदों की अनुवृत्ति आती है। तदनुसार—"हलादि कित्-ङित् सार्वधातुक के परवर्ती रहते 'दरिद्रा' धातु के आकार के स्थान में इकार ( इत् ) आदेश हो जाता है।"

**उदाहरण**—( १ ) √दरिद्रा+लट् ( =तस्, शप्, लुक, 'आ'='इ'—'इद्दरिद्रस्य', स्=र्=: )=दरिद्रितः।

**( ६८२ ) पद**—श्नाभ्यः, तयोः, आतः। **अनुवृत्ति**—लोपः, सार्वधातुके, क्ङिति। **विधिसूत्र।**

**मूलार्थ**—कित्-ङित् सार्वधातुक के परवर्ती रहते 'श्ना' प्रत्यय और अभ्यस्त संज्ञक धातु के आकार का लोप होता है। दरिद्रति इत्यादि।

**विमर्श**—यहाँ 'श्नसोरल्लोपः' ( ६।४।१११ ) से 'लोपः', 'अत उत्सार्वधातुके' ( ६।४।११० ) से 'सार्वधातुके' और 'गमहन०' ( ६।४।९८ ) से 'क्ङिति' की अनुवृत्ति आती है। अतः "कित् ङित् सार्वधातुक के परवर्ती रहते श्ना तथा अभ्यस्त संज्ञक के आकार का लोप होता है।"

**उदाहरण**—( १ ) √दरिद्रा+लट् ( =झि, अभ्यस्त संज्ञा, शप्, शप् का लुक्, 'झ्'='अत्'—'अदभ्यस्तात्', 'आ' का लोप—'श्नाभ्यस्तयोरातः' )=**दरिद्रति**। लिट् लकार में अनेकाच् लक्षण 'आम्' होने से—दरिद्राञ्चकार। 'आत औ णलः' सूत्र से 'ओ' विधान कर, वृद्धि होकर 'ममौ, पपौ' इत्यादि प्रयोगों की सिद्धि हो सकती थी, परन्तु 'औ'कार विधान इसलिए किया गया है कि दरिद्रा धातु के आकार का लोप होने पर 'औ' का श्रवण रहे। अत एव यहाँ 'आम्' भी नहीं होता। इस पक्ष में—ददरिद्रौ। कोई आचार्य इसका णल् में 'ददरिद्र' रूप मानते हैं। वह निर्मूल है।

**वा०**—आर्धधातुक की विवक्षा में 'दरिद्रा' धातु के आकार का ( नित्य ) लोप होता है। परन्तु 'लुङ्' के परे रहते विकल्प से 'आ' का लोप होता है।

च न * । दरिद्रिता । अदरिद्रात् । अदरिद्रिताम् । अदरिद्रुः । दरिद्रियात् । दरिद्रयात् । दरिद्रीत् । पक्षे—इट्सकौ । अदरिद्रासीत् । चकासृ दीप्तौ । चकास्ति । चकास्तः । चकासति । चकासाञ्चकार । चकासिता । चकास्तु । 'धि चे'ति सलोपः सिच एवेत्येके । तन्मते—चकाद्धि । 'चकाधि' इत्येव तु भाष्यम् । (६८३) तिप्यनस्तेः ८।२।७३। पदान्तस्य सस्य दः स्यात्तिपि, न त्वस्तेः । अचकात्–अचकाद् । अचकास्ताम् । अच-

---

तत्स्थाने 'झि' प्रत्यये 'जक्षित्यादयः' इत्यभ्यस्तसंज्ञायां, झस्य 'अदभ्यस्तात्' इत्यदादेशे 'श्नाभ्यस्तयोरातः' इत्याकारलोपे 'दरिद्रति' इति ।

(६८३) तिप्यनस्तेरिति । 'पदस्ये'त्यधिकृतम् । न अस्ति अनस्तिस्तस्येति विग्रहः । 'झलां जशोऽन्ते' इत्यतः 'अन्ते' इत्यनुवर्तते । 'ससजुषो' इत्यतः स इति षष्ठ्यन्तमनुवर्तते । 'वसुस्रंसु०' इत्यतः द इति । अत आह—**पदान्तस्येति । अचकाद् ।** चकासृधातोर्लङि तिपि 'इतश्चे'ति इकारलोपे अङ्गस्याडागमेऽनुबन्धलोपे हल्ङ्यादिलोपे 'तिप्यनस्तेः' इति सस्य दत्वे 'वाऽवसाने' इति विकल्पेन तकारे 'अचकात्' इति । पक्षे—'अचकादि'ति ।

---

**वा०**—सन्, ण्वुल् और ल्युट् के परे रहते 'दरिद्रा' धातु के आकार का लोप नहीं होता ।

(१) लुट्—दरिद्रिता ('आ' का लोप)। (२) लङ्—अदरिद्रात, अदरिद्रिताम्, अदरिद्रुः। (३) विधिलिङ्—दरिद्रियात। (४) आशीर्लिङ्—दरिद्रयात। (५) लुङ्—आलोप पक्ष में—अदरिद्रीत। पक्ष में इट्, सक्—अदरिद्रासीत।

√चकास् (=चकास्) धातु का अर्थ—'दीप्ति' (=चमकना) है। (१) √चकास्+लट् (=तिप्=ति, शप्, लुक्)=चकास्ति। (२) लट् प्र० पु० द्विव०—चकास्तः। (३) √चकास्+लट् (=झि, झ्='अत्' शप्, लुक्)=चकासति। (४) लिट् में अनेकाच् लक्षण आम्, कृ का अनुप्रयोग—चकासाञ्चकार। (५) लुट्—चकासिता। (६) लोट्—चकास्तु। (७) √चकास्+लोट् (=सिप्=सि, शप् लुक् 'सि'='हि')—चकास् हि ('हि'='धि'—'हुझल्भ्यः' 'स्'='द्'—जश्त्व)=चकाद्धि। "यहाँ 'धि च' से सकार का लोप होता है" यह पक्ष ही भाष्यसम्मत है। अतः 'चकाधि' रूप बनता है।

**(६८३) पद**—तिपि, अनस्तेः। **अनुवृत्ति**—सः, दः। **विधिसूत्र।**

**मूलार्थ**—'तिप्' के परवर्ती रहते पदान्त सकार को दकार आदेश होता है। 'अस्' धातु के सकार को दकार नहीं होता ? अचकात्–अचकाद्।

**विमर्श**—इस सूत्र में स्थानी और आदेश वाचक पदों का अभाव है। अतः 'ससजुषो रुः' (८।२।६६) से षष्ठ्यन्त 'सः' तथा 'वसुस्रंसु०' (८।२।७२) से 'दः' पदों की अनुवृत्ति आती है। तदनुसार—"अस् धातु को छोड़कर सकारान्त पद को दकार आदेश होता है, तिप् के परवर्ती रहने पर।"

**उदाहरण**—(१) √चकास्+लङ् (=तिप्=ति, इकार का लोप—'इतश्च', अट्, 'त' का हल्ङ्यादि लोप, 'स्'='द्'—'तिप्यनस्तेः', 'द्'='त' विकल्प से—'वाऽवसाने')=अचकात। पक्ष में—अचकाद्। (२) लङ् प्र० पु० द्विव०—अचकास्ताम्। (३) लङ् प्र० पु० बहु०—अचकासुः।

कासुः। (६८४) **सिपि धातो रुर्वा ८।२।७४।** पदान्तस्य धातोः सस्य रुर्वा स्यात्सिपि। पक्षे दः। अचकाः। अचकात्–अचकाद्। शासु अनुशिष्टौ। शास्ति। (६८५) **शास इदङ्हलोः ६।४।३४।** शास उपधाया इत्स्यादङि, हलादौ। क्ङिति च। 'शासिवसी'ति षः। ष्टुत्वम्। शिष्टः। शासति। शशास। शशासतुः। शास्तु–शिष्टात्। शिष्टाम्। शासतु। (६८६) **शा हौ ६।४।३५।** शास्तेः शादेशः स्याद्धौ

---

(६८४) **सिपि धातोरिति।** 'पदस्ये'त्यधिकृतम्। 'झलां जशोऽन्ते' इत्यतः 'अन्ते' इति, 'ससजुषो' इत्यतः स इति लुप्तषष्ठीकमनुवर्तते। तदाह—**पदान्तस्येति। अचका इति।** चकासृधातोर्लङि सिपि शपि, शपो लुकि, अडागमेऽनुबन्धलोपे 'इतश्चे'ति इकारलोपे हल्ङ्यादिलोपे 'सिपि धातोरुर्वा' इति वैकल्पिके सस्य रुत्वे विसर्गे 'अचकाः' इतिं। रुत्वाभावपक्षे 'तिप्यनस्तेः' इति सस्य दकारे कृते 'अचकाद्' इति।

(६८५) **शास इदङ्हलोरिति।** 'अनिदिताम्' इत्यत 'उपधाया क्ङिति' इत्यनुवर्तते। अत आह—**शास उपधाया इति। शिष्ट इति।** शास्धातोर्लटि, तसि, शब्लुकि, 'शास इदङ्हलोः' इतीत्वे, सस्य षत्वे, ष्टुत्वे सस्य रुत्वे विसर्गे च कृते 'शिष्टः' इति।

---

**(६८४) पद**—सिपि, धातोः, रुः, वा। **अनुवृत्ति**—सः, दः। **विधिसूत्र।**

**मूलार्थ**—'सिप्' के परवर्ती रहते धातु के पदान्त सकार को विकल्प से 'रु' आदेश होता है। पक्ष में—दकार भी होता है। अचकाः। अचकात् इत्यादि।

**विमर्श**—पूर्वसूत्र की तरह यहाँ भी 'सः' और 'दः' पदों की अनुवृत्ति आती है। तदनुसार—"सिप् के परवर्ती रहते पदान्त धातु के 'स्' को 'रु' विकल्प से होता है"। पक्ष में दकार भी होता है।

**उदाहरण**—(१) √चकास्+लङ् (=सिप्=सि, शप्, शब्लुक्, इकारलोप, 'स्' का हलङ्यादि लोप, अट् का आगम, स्=रु='र्' विकल्प से—'सिपि धातो रुर्वा', र्=ः)=अचकाः। रुत्वाऽभावपक्ष में ('स्'='द्' 'द्'='त्'—विकल्प से—'वाऽवसाने')=अचकात्। तत्व के अभाव में=अचकाद्।

√शास् धातु का अर्थ—'शासन करना' है। (१) लट्—शास्ति।

**(६८५) पद**—शासः, इत्, अङ्-हलोः। **अनुवृत्ति**—उपधायाः, क्ङिति। **विधिसूत्र।**

**मूलार्थ**—'अङ्' और हलादि कित्-ङित् प्रत्यय के परवर्ती रहते शास् धातु की उपधा को 'इत्व' होता है। शिष्टः। इत्यादि।

**विमर्श**—प्रकृत सूत्र में 'अनिदितां हल उपधायाः क्ङिति' (६।४।२४) से 'उपधायाः' और और 'क्ङिति' पदों की अनुवृत्ति आ रही है। तदनुसार—"अङ् तथा हलादि कित् ङित् प्रत्यय के परवर्ती रहते 'शास्' की उपधा को इकारादेश हो जाता है।"

**उदाहरण**—(१) √शास्+लट् (=तस्, शप्, लुक्, 'आ'='इ'—इत्व—'शास इदङ्-हलोः' 'स्'='ष्'—षत्व 'शासिवसि०', ष्टुत्व, स्=र्=ः)=शिष्टः। (२) √शास्+लट् (=झि, शप्, लुक्, 'जक्षित्यादयः षट्' से अभ्यस्त संज्ञा होकर, 'झ्'='अत्'—'अदभ्यस्तात्')=शासति। (३) लिट्—शशास। (४) लिट् प्र० पु० द्वि०—शशासतुः। (५) लोट् प्र० पु०—शास्तु–शिष्टात्, शिष्टाम्, शासतु।

परे। तस्याऽऽभीयत्वेनाऽसिद्धत्वाद्धेर्धिः। शाधि। अशात्-अशाद्। अशिष्टाम्। अशासुः। अशाः। अशात। शिष्यात्। ( ६८७ ) सर्तिशास्त्यर्तिभ्यश्च ३।१।५६। एभ्यश्च्लेरङ् स्यात्कर्त्रर्थे लुङि। अशिषत्। अशासिष्यत्।

इति परस्मैपदप्रक्रिया।

---

( ६८६ ) शा हौ इति। 'शास इदङ्' इत्यस्मात् शास इत्यनुवर्तते। तदाह—शास्तेरिति। शाधि। शास्धातोर्लोटि, सिपि, अनुबन्धलोपे, 'सेर्ह्यपिच्च' इति सेर्ह्यादेशे 'शा हौ' इत्यनेन शास्तेः शादेशे 'शा हि' इति जाते, सलोपस्याऽसिद्धत्वात् 'हुझल्भ्यो हेर्धिः' इति हेर्धित्वे 'शाधि' इति रूपम्।

( ६८७ ) सर्तिशास्त्यर्तिभ्यश्चेति। च्लेरिति, अङिति चानुवर्तते। तदाह—एभ्य इति। अशिषत्। शास्धातोः लुङि, तिपि, 'इतश्चे'तीकारलोपे, अडागमेऽनुबन्धलोपे 'शास इदङ्हलोः' इति इदादेशे च्लौ, च्लेः स्थाने 'सर्तिशास्त्यर्तिभ्यश्चे'त्यनेन अङादेशेऽनुबन्धलोपे षत्वे 'अशिषत्' इति।

इति परस्मैपदम्।

---

( ६८६ ) पद—शा, हौ। अनुवृत्ति—शासः। विधिसूत्र।

मूलार्थ—'शास्' धातु को 'हि' के परवर्ती रहने पर 'शा' आदेश हो जाता है।

विमर्श—पूर्वसूत्र ( ६८५ ) से 'शासः' पद की अनुवृत्ति आती है। अतः "'हि' के परे रहते 'शास्' के स्थान में 'शा' आदेश होता है।"

उदाहरण—( १ ) √शास्+लोट् ( =सिप्=सि, शप्, लुक्, 'सि'='हि'—'सेर्ह्यपिच्च' )—शास् हि ( शास्='शा'—'शा हौ' 'शा' आदेश को आभीयत्वेन असिद्ध मानकर 'हि'='धि'—'हुझल्भ्यो हेर्धिः' )=शाधि। ( २ ) लङ्—अशात्-अशाद्, अशिष्टाम्, अशासुः, अशाः, अशात् ( तत्व, दत्व विकल्प ) इत्यादि। ( ३ ) विधिलिङ्—शिष्यात्।

( ६८७ ) पद—सर्तिशास्त्यर्तिभ्यः, च। अनुवृत्ति—अङ्, कर्तरि, च्लेः, लुङि। विधिसूत्र।

मूलार्थ—कर्त्रर्थक लुङ् के परवर्ती रहते सृ, शास् और ऋ धातु से परवर्ती 'च्लि' को 'अङ्' आदेश होता है। अशिषत्। अशासिष्यत्।

विमर्श—सूत्रार्थ की स्पष्टता हेतु—'अस्यतिवक्तिख्यातिभ्योऽङ्' ( ३।१।५२ ) से 'अङ्', 'णिश्रिद्रुस्रुभ्यः' ( ३।१।४८ ) से 'कर्तरि', 'च्लेः सिच्' ( ३।१।४४ ) से 'च्लेः' तथा 'च्लि लुङि' ( ३।१।४३ ) से 'लुङि' पदों की अनुवृत्ति आती है। तदनुसार—"शासु ( शास् ), सर्ति ( सृ ) और अर्ति ( ऋ ) धातुओं से परवर्ती 'च्लि' के स्थान में 'अङ्' आदेश होता है, कर्तृवाची लुङ् के परे रहते।"

उदाहरण—( १ ) √शास्+लुङ् ( =तिप्='ति', इकारलोप, 'इतश्च' 'अट्' का आगम, 'आ'='इ'—'शास इदङ्हलोः', च्लि, च्लि='अङ्'='अ'—'सर्तिशास्ति०' षत्व )=अशिषत्। ( २ ) लृङ्—अशासिष्यत्।

इति परस्मैपद-प्रक्रिया।

**अथात्मनेपदप्रक्रिया । शीङ् स्वप्ने । ( ६८८ ) शीङः सार्वधातुके गुणः ७।४।२१ ।** शीङो गुणः स्यात्सार्वधातुके । 'क्ङिति चे'त्यस्यापवादः । शेते । शयाते । **( ६८९ ) शीङो रुट् ७।१।६ ।** शीङः परस्य झादेशस्यातो रुट् । शेरते । शेषे । शयाथे । शेध्वे ।

---

( ६८८ ) **शीङः सार्वधातुक इति ।** सूत्रार्थः स्पष्टः । **शेते ।** शीङ्धातोर्लटि, शीङो ङित्त्वात् तत्स्थाने 'अनुदात्तङित०' इत्यात्मनेपदे प्रथमपुरुषगतैकत्वविवक्षायां 'त' इति प्रत्यये, शपि, शपो लुकि, 'शीङः सार्वधातुके गुणः' इति ईकारस्य गुणे एकारे 'टित आत्मनेपदानां टेरे' इति टेरेत्वे कृते 'शेते' इति ।

( ६८९ ) **शीङो रुडिति ।** 'झोऽन्तः' इत्यस्मात् 'झ' इत्यनुवर्तते । 'अदभ्यस्तादि'-त्यस्मात् अदित्यनुवृत्तं षष्ठ्या विपरिणम्यते । तदाह—**शीङः परस्येति । शेरते ।** शीङ्-धातोः लटि, तत्स्थाने झप्रत्यये, शपो लुकि 'शीङः सार्वधातुके गुणः' इति गुणे

---

अदादि गण के परस्मैपदी धातुओं की रूपसिद्धि के विवेचन के अनन्तर आत्मनेपदी धातुओं के रूपों की प्रक्रिया प्रदर्शित की जा रही है—

√शीङ् धातु का अर्थ—'शयन' ( =सोना ) है ।

**( ६८८ ) पद**—शीङः, सार्वधातुके, गुणः । **विधिसूत्र ।**

**मूलार्थ**—सार्वधातुक प्रत्यय के परवर्ती रहते 'शीङ्' धातु को गुण होता है । शेते । शयाते ।

**विमर्श**—'शीङ्' धातु ङित् होने से 'अनुदात्तङित०' से आत्मनेपदी है । अतः 'त' आदि प्रत्यय आते हैं । वे अपित् होने से 'सार्वधातुकमपित्' से ङिद्वत् हो जाते हैं । उन प्रत्ययों के परवर्ती रहते—'क्ङिति च' से गुण का निषेध प्राप्त होता है । उसका अपवाद प्रकृत सूत्र है ।

**उदाहरण**—( १ ) √शी+लट् ( =त, शप्, शप् का लुक्, ङिद्वत् होने से गुणाभाव प्राप्त, उसका बाधकर 'ई'='ए'—गुण—'शीङः सार्वधातुके गुणः' टि 'अ'='ए'—एत्व—'टित आत्मनेपदानाम्' )=शेते । ( २ ) √शी+लट् ( =आताम्, शप्, लुक्, गुण, अयादेश, आम्=एत्व )=शयाते ।

**( ६८९ ) पद**—शीङः, रुट् । **अनुवृत्ति**—झः, अत् । **विधिसूत्र ।**

**मूलार्थ**—'शीङ्' से परवर्ती 'झ' के स्थान में आदेश 'अत्' को 'रुट्' का आगम होता है । शेरते इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'झोऽन्तः' ( ७।१।३ ) से 'झः' तथा 'अदभ्यस्तात्' ( ७।१।४ ) से 'अत्' पदों की अनुवृत्ति आती है । तदनुसार—"शीङ् धातु से उत्तरवर्ती झ के स्थान में आदेश 'अत्' को रुट् ( =र् ) का आगम होता है ।"

**उदाहरण**—( १ ) √शी+लट् ( ='झ', शप् का लुक्, 'ई'='ए'—गुण 'शीङः सार्वधातुके गुणः', 'झ्'='अत्'—'आत्मनेपदेष्वनतः' टि—'अ'='ए'—'टित आत्मने०', रुट्='र्' 'शीङो रुट्' )=शेरते । ( २ ) शी+लट् म० पु० एक०—शेषे ।

**शीङ् धातु 'लट्' लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | शेते | शयाते | शेरते |
| म० पु०— | शेषे | शयाथे | शेध्वे |
| उ० पु०— | शये | शेवहे | शेमहे |

**शये । शेवहे । शेमहे । शिश्ये । शयिता । शयिष्यते । शेताम् । अशेत । अशयाताम् । अशेरत । शयीत । शयीयास्ताम् । शयीरन् । शयिषीष्ट । अशयिष्ट । अशयिष्यत । इङ् अध्ययने । इङिकावध्युपसर्गतो न व्यभिचरतः । अधीते । अधीयाते । अधीयते ।**

---

'आत्मनेपदेष्वनतः' इति झस्य तादेशे 'शीङो रुट्' इति रुडागमेऽनुबन्धलोपे टेरेत्वे 'शेरते' इति रूपम् । **शयीत** । शीङ्धातोर्लिङि तत्स्थाने 'त' प्रत्यये, शपो लुकि, 'शीङः सार्वधातुके गुणः' इति गुणे 'लिङः सीयुट्' इति सीयुटि, उटि गते, टित्त्वादाद्यावयवे 'लिङः सलोपोऽनन्त्यस्ये'ति सलोपे, एकारस्य स्थाने अयादेशे यलोपे च कृते 'शयीत' इति । **अधीते** । अध्युपसर्गपूर्वकात् इङ्धातोर्लटि, तादेशे, शपो लुकि, टेरेत्वे च कृते 'इको यणचि' इति प्राप्तं यणं प्रबाध्य **सवर्णदीर्घे** 'अधीते' इति ।

---

(३) शी+लिट् (=त, त=एश्=‘ए’—‘लिटस्तझयोरेशिरेच्’ धातु को द्वित्व; अभ्यास संज्ञा, ह्रस्व, ‘ई’=‘य्’—‘यण्’-‘एरनेकाचः’ )=शिश्ये । (४) लुट्—शयिता । (५) लृट्—शयिष्यते । (६) शी+लोट् (=त, शप्, शप् का लुक्, गुण—‘शीङः सार्वधातुके०’, टि=एत्व, ‘ए’=‘आम्’—‘आमेतः’ )=शेताम् ।

**'शीङ्' धातु लोट् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | शेताम् | शयाताम् | शेरताम् |
| म० पु०— | शेष्व | शयाथाम् | शेध्वम् |
| उ० पु०— | शयै | शयावहै | शयामहै |

(७) शी+लङ् (=त, शप्, शप् का लुक्, अट्, गुण—‘शीङः सार्वधातुके’ )=अशेत ।

**'शीङ्' धातु लङ् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | अशेत | अशयाताम् | अशेरत |
| म० पु०— | अशेथाः | अशयाथाम् | अशेध्वम् |
| उ० पु०— | अशयि | अशेवहि | अशेमहि |

(८) शी+विधिलिङ् (=त, शप्, शप् का लुक्, ई=‘ए’—गुण ‘शीङः सार्वधातुके’ सीयुट्=सीय्) शे सीय् त (‘स्’ का लोप—‘लिङः सलोपोऽनन्त्यस्य’ ‘ए’=‘अय्’—आदेश य् का लोप )=शयीत ।

**शीङ् धातु विधिलिङ् के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | शयीत | शयीयाताम् | शयीरन् |
| म० पु०— | शयीथाः | शयीयाथाम् | शयीध्वम् |
| उ० पु०— | शयीय | शयीवहि | शयीमहि |

(९) शी+आशीर्लिङ् (=त, सीयुट्=सीय्, ‘ई’=‘ए’ ‘गुण’, इट्, अयादेश )—‘शय् इ सीय् त’ (‘य्’ का लोप—‘लोपो व्योर्वलि’, ‘सुट्’=‘स्’—‘सुट्तिथोः’ ‘स्’=‘ष्’—षत्व, ष्टुत्व )=शयिषीष्ट ।

**( ६९० ) गाङ् लिटि २।४।४९। इङो गाङ् स्याल्लिटि। अधिजगे। अध्येता। अध्येष्यते। अधीताम्। अधीष्व। अधीयाथाम्। अधीध्वम्। अध्ययै। अध्ययावहै। अध्ययामहै। अध्यैत। अध्यैयाताम्। अध्यैयत। अध्यैथाः। अध्यैयाथाम्। अध्यैध्वम्।**

( ६९० ) गाङ् लिटीति। 'इङश्चे'त्यतः 'इङः' इत्यनुवर्तते। अधिजगे। अधिपूर्वकात् इङ्धातोर्लिटि 'गाङ् लिटि' इत्यनेन इङो गाङादेशेऽनुबन्धलोपे, लः स्थाने

### शीङ् धातु आशीर्लिङ् के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | शयिषीष्ट | शयिषीयास्ताम् | शयिषीरन् |
| म० पु० | शयिषीष्ठाः | शयिषीयास्थाम् | शयिषीढ्वम्–शयिषीध्वम् |
| उ० पु० | शयिषीय | शयिषीवहि | शयिषीमहि |

( १० ) शी+लुङ् ( =त, च्लि, च्लि=सिच्='स्' गुण—'सार्वधातुकार्धधातुकयोः' 'ए'='अय्' आदेश, 'स्'='ष्'—'षत्व' ष्टुत्व, अट् )=अशयिष्ट।

### √शीङ्धातु लुङ् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अशयिष्ट | अशयिषाताम् | अशयिषत |
| म० पु० | अशयिष्ठाः | अशयिषाथाम् | अशयिढ्वम्–अशयिध्वम् |
| उ० पु० | अशयिषि | अशयिष्वहि | अशयिष्महि |

( ११ ) लृङ् में अशयिष्यत इत्यादि।

√इङ् धातु का अर्थ—'पढ़ना' है। 'इङ् अध्ययने' और 'इक् स्मरणे' धातुओं का अधि उपसर्ग के बिना प्रयोग नहीं होता। पूर्व में धातु से प्रत्यय आने पर समस्त प्रक्रियागत कार्य हो जाते हैं। अनन्तर सिद्ध रूप के साथ उपसर्ग का योग होता है। जैसे—इते, इयाते, इयते रूप लट् लकार प्र० पु० में निष्पन्न होने के बाद 'अधि' उपसर्ग जोड़ा जाता है। सवर्णदीर्घ होकर—अधीते, अधीयाते, अधीयते इत्यादि।

( १ ) अधि+इ+लट् ( =त, शप् लुक्, 'टि' को एत्व, इ+इ='ई'—सवर्णदीर्घ )= अधीते।

### √अधि+'इङ्' धातु, लट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अधीते | अधीयाते | अधीयते |
| म० पु० | अधीषे | अधीयाथे | अधीध्वे |
| उ० पु० | अधीये | अधीवहे | अधीमहे |

**( ६९० ) पद**—गाङ्, लिटि। **अनुवृत्ति**—इङः। **विधिसूत्र।**

**मूलार्थ**—'लिट्' के परवर्ती रहने पर 'इङ्' को 'गाङ्' आदेश होता है। अधिजगे। अध्येता इत्यादि।

**विमर्श**—यहाँ 'इङश्च' ( २।४।४८ ) सूत्र से 'इङः' पद की अनुवृत्ति आती है। अतः "लिट् लकार परे रहते 'इङ्' को 'गाङ्' ( =गा ) आदेश होता है।"

**उदाहरण**—( १ ) अधि+√इ+लिट् ( इ='गाङ्'='गा'—'गाङ् लिटि', ल्=त=एश्='ए' धातु को द्वित्व, अभ्यास संज्ञा, ह्रस्व, चुत्व, 'आ' का लोप—'आतो लोप इटि च' )=अधिजगे।

**अध्यैयि । अध्यैवहि । अध्यैमहि । अधीयीत । अधीयीयाताम् । अधीयीरन् । अधीयीध्वम् । अध्येषीष्ट । ( ६९१ ) विभाषा लुङ्लृङोः २।४।५० । इणो गाङ् । ( ६९२ )**

तादेशे, तस्य एशि, अनुबन्धलोपे, 'गा' इत्यस्य द्वित्वेऽभ्यासत्वे, ह्रस्वे 'कुहोश्चुः' इति चुत्वेन गकारस्य जकारे 'आतो लोप इटि चे'त्याकारलोपे '**अधिजगे**' इति ।

( ६९१ ) **विभाषा लुङ्लङोरिति** । 'इङश्चे'त्यतः इङ इति, 'गाङ् लिटी'त्यतः 'गाङ्' इति चानुवर्तते । तदाह—**इङो गाङिति** ।

( २ ) अधि+√इ+लुट् ( =त, तास् )—अधि इ तास् त ( त=डा='आ'—'लुटः प्रथमस्य डारौरसः' 'इ'='ए'—गुण—'सार्वधातुकार्धधातुकयोः' 'टि'—आस् का लोप—'डित्वसामर्थ्याद-भस्यापि 'टेर्लोपः' यण्, )=अध्येता । ( ३ ) अधि+√इ+लृट् ( =त, स्य, 'टि' को एत्व, षत्व, गुण—'सार्वधातु०' यण् )=अध्येष्यते । ( ४ ) अधि+√इ+लोट् ( =त, शप्, शप् का लुक्, 'टि' को एत्व, ए='आम्'—'आमेतः' सवर्णदीर्घ )=अधीताम् ।

**अधि+√इङ् धातु 'लोट्' लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | अधीताम् | अधीयाताम् | अधीयताम् |
| म० पु०— | अधीष्व | अधीयाथाम् | अधीध्वम् |
| उ० पु०— | अध्ययै | अध्ययावहै | अध्ययामहै |

( ५ ) अधि+√इ+लङ् ( =त, शप्, शप् का लुक्, आट्, वृद्धि, यण् )=अध्यैत ।

**अधि+√इङ् धातु 'लङ्' लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | अध्यैत | अध्यैयाताम् | अध्यैयत |
| म० पु०— | अध्यैथाः | अध्यैयाथाम् | अध्यैध्वम् |
| उ० पु०— | अध्यैयि | अध्यैवहि | अध्यैमहि |

( ६ ) अधि+√इ+लिङ् ( =त, शप् का लुक्, सीयुट्=सीय्, 'स्' का लोप, 'य्' का लोप, इयङ्=इय्, दीर्घ )=अधीयीत ।

**अधि+√'इङ्' धातु विधिलिङ् के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | अधीयीत | अधीयीयाताम् | अधीयीरन् |
| म० पु०— | अधीयीथाः | अधीयीयाथाम् | अधीयीध्वम् |
| उ० पु०— | अधीयीय | अधीयीवहि | अधीयीमहि |

( ७ ) अधि+√इ+आशीर्लिङ् ( =त, सीयुट्='सीय्' 'य्' का लोप, 'इ'='ए'—गुण—'सार्वधातु०' )—अधि ए सी त ( सुट्='स्'—'सुट् तिथोः' यण्, उभयसकार का षत्व, ष्टुत्व ) अध्येषीष्ट ।

**अधि+√'इङ्' धातु आशीर्लिङ् के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | अध्येषीष्ट | अध्येषीयास्ताम् | अध्येषीरन् |
| म० पु०— | अध्येषीष्ठाः | अध्येषीयास्थाम् | अध्येषीढ्वम् |
| उ० पु०— | अध्येषीय | अध्येषीवहि | अध्येषीमहि |

**( ६९१ ) पद**—विभाषा, लुङ्लृङोः । **अनुवृत्ति**—इणः, गाङ् । **विधिसूत्र** ।

**गाङ्कुटादिभ्योऽञ्णिन्ङित् १।२।१।** गाङादेशात्कुटादिभ्यश्चाऽञ्णितः प्रत्यया ङितः स्युः। (६९३) **घु-मा-स्था-गा-पा-जहातिसां हलि ६।४।६६।** एषामात ईत्स्यात् हलादौ क्ङित्यार्धधातुके। अध्यगीष्ट। अध्यैष्ट। अध्यगीष्यत। अध्यैष्यत। ईर गतौ कम्पने च। ईर्ते। ईराञ्चक्रे। ईरिता। ईरिष्यते। ईर्ताम्। ईर्ष्व। ईर्ध्वम्। ऐरिष्ट।

---

(६९२) **गाङ्कुटादिभ्य इति।** ञ्च ण्च ञ्णौ, तौ इतौ यस्य स ञ्णित्, स न भवतीति अञ्णित्। गाङ् च कुटादिभ्यश्चेति पञ्चमी। 'गाङ्' इत्यनेनात्र गाङादेशस्य ग्रहणमत आह—**गाङादेशादिति।**

(६९३) **घुमास्थागापाजहातिसामिति।** 'आर्धधातुके' इत्यधिकृतम्। 'आतो लोप इटि चे'त्यतः आत इति, 'ईद्यति' इत्यतः 'ईदि'ति, 'दीङो युडचि' इत्यतः 'क्ङिति' इति चानुवर्तते। अत आह—**एषामात इत्यादिना। अध्यगीष्ट।** अधिपूर्वकादिङ्धातो-र्लुङि तत्स्थाने तप्रत्यये 'विभाषा लुङ्लृङोः' इतीङो गाङादेशेऽनुबन्धलोपे, च्लौ, च्लेः

---

**मूलार्थ**—'लुङ्' और 'लृङ्' के परवर्ती रहने पर 'इङ्' के स्थान में विकल्प से 'गाङ्' आदेश होता है।

**विमर्श**—प्रकृत सूत्र में स्थानी और आदेश वाचक पदों का अभाव है। अतः 'इङश्च' (२।४।४८) से स्थानिवाचक 'इङः' तथा 'गाङ् लिटि' (६९०) से आदेशवाचक 'गाङ्' पद की अनुवृत्ति आती है। तदनुसार "लुङ् तथा लृङ् लकार के परे रहते 'इङ्' धातु को विकल्प से 'गाङ्' आदेश होता है।"

**(६९२) पद**—गाङ्कुटादिभ्यः, अञ्णिन्ङित्। **अतिदेशसूत्र।**

**मूलार्थ**—इङ्-स्थानिक गाङ् धातु और कुटादि से परवर्ती ञित् णित् से भिन्न प्रत्यय ङित् होते हैं।

**(६९३) पद**—घु-मा-स्था-गा-पा-जहाति-साम्, हलि। **अनुवृत्ति**—ईत्, क्ङिति। **विधिसूत्र।**

**मूलार्थ**—हलादि कित् ङित् आर्धधातुक के परवर्ती रहते घुसंज्ञक धातु तथा मा, स्था, पा, गा, हा और षो धातु के आकार को ईत्व (ई) होता है। अध्यगीष्ट। अध्यैष्ट इत्यादि।

**विमर्श**—प्रकृत सूत्र में 'ईद्यति' (६।४।६५) से 'ईत्' तथा 'दीङो युडचि क्ङिति' (६।४।६३) से 'क्ङिति' की अनुवृत्ति आती है। 'आर्धधातुके' का अधिकार है। अतः "घुसंज्ञक धातु, मा, स्था, गा, पा, हा और षो धातुओं के आकार को ईकार हो जाता है, हलादि कित् ङित् आर्धधातुक के परे रहते।"

**उदाहरण**—(१) अधि+√इ+लुङ् (=त, 'इ'=गाङ्='गा'—विकल्प स 'विभाषा लुङ्लृङोः', च्लि, च्लि=सिच्='स्', 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' से 'सिच्' को ङिद्वद्भाव, 'आ' ='ई'—'घुमास्थागापा०', 'अट्' का आगम, षत्व, ष्टुत्व, यण्)=अध्यगीष्ट। 'गाङ्' के अभावपक्ष में—आट्, वृद्धि, सिच्, षत्व, ष्टुत्व—अध्यैष्ट। (२) अधि+√इ+लृङ् (=त, विकल्प से 'इ'='गा'—'विभाषा लङ्लृङोः' स्य, ङिद्वद्भाव, 'आ'='ई'—'घुमास्था०' अट्, षत्व, यण्)= अध्यगीष्यत। 'गाङ्' आदेश के अभाव पक्ष में—आ इ स्य त (—वृद्धि, षत्व, ष्टुत्व, यण्)= अध्यैष्यत।

√ईर धातु का अर्थ—'जाना, काँपना' है। (१) लट्—ईर्ते। (२) लिट्—ईराञ्चक्रे। (३) लुट्—ईरिता। (४) लृट्—ईरिष्यते। (५) लोट्—ईर्ताम्। (६) लोट् म० पु० बहु०—ईर्ध्वम्। (७) लुङ्—ऐरिष्ट।

कश गतिशासनयोः । कष्टे । कशाते । ईड स्तुतौ । ईट्टे । ( ६९४ ) ईशः से ७।२। ७७। ( ६९५ ) ईडजनोर्ध्वे च ७।२।७८। ईशीड्जनां सेध्वेशब्दयोः सार्वधातुकयो-रिट् स्यात् । योगविभागो वैचित्र्यार्थः । ईडिषे । ईडिध्वे । एकदेशविकृतस्यानन्यत्वात्— ईडिष्व । ईडिध्वम् । विकृतिग्रहणेन प्रकृतेरग्रहणात्—ऐड्ढ्वम् । ईश ऐश्वर्ये । ईष्टे । ईशिषे । ईशिध्वे । आस उपवेशने । आस्ते । 'दयायासश्च'त्याम् । आसाञ्चक्रे । आस्स्व । आध्वम् । आसिष्ट । आङः शासु इच्छायाम् । आशास्ते । आशासाते ।

---

स्थाने सिचि, 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' इति सिचो ङित्त्वे 'घुमास्थागापाजहातिसां हलि' इति ईत्वे यणि षत्वे ष्टुत्वे च कृते 'अध्यगीष्ट' इति ।

( ६९४ ) ईशः से । 'इडत्त्यर्ति' इत्यतः इडिति, 'रुदादिभ्यः' इत्यतः सार्वधातुके इति चानुवर्तते । तेन ईशधातोः सार्वधातुकस्य सेपदस्येट् स्यादित्यर्थः ।

( ६९५ ) ईडजनोर्ध्वे चेति । 'इडि'ति, 'सार्वधातुके' इति चानुवर्तते । तेन ईड-जनधातुभ्यामुत्तरस्य 'ध्वे' इत्येतस्य च सार्वधातुकस्येड् भवतीति सूत्रार्थः । ईडिषे ।

---

√कश् धातु का अर्थ—'जाना, शासन करना' है । ( १ ) √कश्+लट् ( =त, शप्, शप् का लुक्, 'टि' को एत्व, श्=ष्—'व्रश्च०' ष्टुत्व )=कष्टे । ( २ ) लट् प्र० पु० द्वि०—कशाते ।

ईड् धातु का अर्थ—'स्तुति करना' है । ( १ ) लट्—ईट्टे ।

( ६९४ ) पद—ईशः, से । अनुवृत्ति—इट्, सार्वधातुके । विधिसूत्र ।

मूलार्थ—'ईश्' धातु से परवर्ती 'से' सार्वधातुक को इट् का आगम होता है ।

विमर्श—प्रकृत सूत्र में 'इडत्यर्तिव्ययतीनाम्' ( ७।२।६६ ) से 'इट्' तथा—'रुदादिभ्यः सार्वधातुके' ( ७।२।७६ ) से 'सार्वधातुके' पदों की अनुवृत्ति आती है । तदनुसार—"ईश धातु से उत्तरवर्ती सार्वधातुक 'से' को 'इट्' का आगम होता है ।"

( ६९५ ) पद—ईडजनोः, ध्वे, च । अनुवृत्ति—से, सार्वधातुकस्य, इट् । विधिसूत्र ।

मूलार्थ—ईड और जन धातु से परवर्ती सार्वधातुक 'से, ध्वे' को 'इट्' का आगम होता है । ईडिषे । ईडिध्वे ।

विमर्श—पूर्वसूत्र ( ६९४ ) से 'से' 'इडत्यर्ति०' ( ७।२।६६ ) से 'इट्' तथा 'रुदादिभ्यः' ( ७।२।७६ ) से 'सार्वधातुके' पदों की अनुवृत्ति आती है । तदनुसार—"ईड् और जन् धातु से परवर्ती सार्वधातुक 'से' और 'ध्वे' को 'इट्' ( =इ ) का आगम होता है" ।

योगविभाग—यहाँ योगविभाग ( अर्थात्—पृथक् दो सूत्रों की रचनाकरण ) विचित्रता रूप अर्थ का बोधक है । विचित्रता इस प्रकार की है कि—पूर्वसूत्र से 'से' की अनुवृत्ति उत्तरसूत्र में है तथा उत्तरसूत्र से 'ध्वे' की अनुवृत्ति पूर्वसूत्र ( ६९४ ) में है । विशेषतया उत्तरसूत्र से पूर्वसूत्र में अनुवृत्ति करना ही विलक्षणता है ।

उदाहरण—( १ ) √ईड्+लट् ( =थास्, थास्='से'—'थासः से' )—ईश से ( इट्='इ' का आगम—'ईडजनोर्ध्वे च' षत्व )=ईडिषे । ( २ ) √ईड्+लट् ( =ध्वम्, अम्='ए'—'टित आत्मनेपदानाम्', 'इट्'='इ' का आगम—'ईडजनोर्ध्वे च' )=ईडिध्वे । ( ३ ) 'ईडिष्व' में से नहीं है तथापि एकदेशविकृतन्याय से 'से' मानकर 'इट्' का आगम होता है । ( ४ ) √ईड्+लोट् ( =ध्वम्, शप् का लुक्, इट् )=ईडिध्वम् । ( ५ ) लङ् म० पु० बहु०—ऐड्ढ्वम् । यहाँ विकृति ( =ध्वे ) का ग्रहण होने से प्रकृति ( ध्वम् ) का ग्रहण नहीं होता । अतः इट् भी नहीं होता—ऐड्ढ्वम् ।

आशासे । वस आच्छादने । वस्ते । वस्से । वध्वे ववसे । वसिता । णिसि चुम्बने । निस्ते । णिजि शुद्धौ । 'चोः कुः' । निङ्क्ते । निङ्क्षे । निनिञ्जे । निञ्जिता । निञ्जिष्यते । वृजी वर्जने । वृक्ते । वृजाते । इदिदित्यन्ये । वृङ्क्ते । पृची सम्पर्चने । पृक्ते । पपृचे । षूङ् प्राणिगर्भविमोचने । सूते । सुषुवे । सुषुवाते । सुषुविरे । सुषुविषे । सोता । सविता । 'भूसुवोरि'ति गुणनिषेधः । सुवै । सविषीष्ट–सोषीष्ट । असविष्ट–

---

ईड्धातोर्लटि तत्स्थाने मध्यमपुरुषैकवचने 'थास्' प्रत्यये, 'थासः से' इत्यनेन थासः स्थाने 'से' इत्यादेशे, शब्लुकि, 'ईशः से' इति इडागमेऽनुबन्धलोपे षत्वे 'ईडिषे' इति ।

---

√ईश धातु—'ऐश्वर्य' अर्थ में है । ( १ ) √ईश्+लट् (=त, शप्, लुक्, 'श्'='ष्', ष्टुत्व ) =ईष्टे । ( २ ) √ईश्+लट् ( =थास्=से, शप्, लुक्, 'टि' को एत्व, इट्='इ' का आगम—'ईशः से' षत्व )=ईशिषे । ( ३ ) √ईश्+लट् ( =ध्वम्, शप्, लुक्, 'टि' को एत्व, 'इट्' का आगम—'ईडजनोर्ध्वे च' )=ईशिध्वे ।

√आस् धातु का अर्थ 'बैठना' है । ( १ ) √आस्+लट् ( =त, शप्, लुक् 'टि' को एत्व ) =आस्ते ।

### √आस् धातु लट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | आस्ते | आसाते | आसते |
| म० पु० | आस्से | आसाथे | आध्वे |
| उ० पु० | आसे | आस्वहे | आस्महे |

( २ ) लिट् में—आसाञ्चक्रे ( 'दयायासश्च' से आम्, लिट्परक √कृ का अनुप्रयोग )। ( ३ ) √आस्+लोट् ( =म० पु० एक०—थास्=से, शप् लुक् )—आस् से ( ए='व'—'सवाभ्यां वामौ' )=आस्व । ( ४ ) √आस्+लोट् ( =ध्वम्, शप्, लुक्, 'स्' का लोप—'धि च', एत्व, ए=अम्—'सवाभ्यां वामौ' )=आध्वम् । ( ५ ) लुङ्—आसिष्ट ।

√आङ् उपसर्गपूर्वक शास् धातु का अर्थ—'इच्छा करना' है । ( १ ) आ+√शास्+लट् ( =त, शप्, लुक् 'टि' को एत्व )=आशास्ते । ( २ ) लट् प्र० पु० द्विव०—आशासाते । ( ३ ) लट् म० पु० एक०—आशासे । √वस् धातु का अर्थ 'आच्छादन' ( =ढकना ) है । ( १ ) लट् प्र० पु० एक०—वस्ते । ( २ ) लट् म० पु० एक०—वस्से । ( ३ ) लट् प्र० पु० बहु०—वध्वे । ( ४ ) लिट्—ववसे । ( ५ ) लुट्—वसिता ।

√णिसि धातु का अर्थ—'चुम्बन करना' है । ( 'णो नः' से 'ण्'='न्' )—निस्+लट् ( =त, शप्, लुक् 'टि' को एत्व )=निस्ते । √णिजि ( =निज् ) धातु का अर्थ—'शुद्ध होना' है । ( १ ) √निज्+लट् ( =त, शप्, लुक् 'टि' को एत्व )—निज् ते ( नुम्='न्', 'ज्'='ग्'—कुत्व—'चोः कुः', 'ग्'='क्'—'खरि च' न्=-अनुस्वार, परसवर्ण—'ङ्' )=निङ्क्ते । ( २ ) लट् म० पु० एक०—निङ्क्षे । ( ३ ) लिट्—निनिञ्जे । ( ४ ) लुट्—निञ्जिता । ( ५ ) लृट्—निञ्जिष्यते ।

√वृजी धातु का अर्थ 'वर्जन' ( रोकना, मना करना ) है । ( १ ) √वृज्+लट् ( =त, शप्, लुक् 'टि' को एत्व, 'ज्'='ग्'—कुत्व, 'ग्'='क्'—'खरि च' )=वृक्ते । ( २ ) लट् प्र० पु० द्वि०—वृजाते । 'यह धातु इदित है' ऐसा कुछ आचार्यों का मत है । वहाँ ह्रस्व इकार की इत्संज्ञा होने से नुम्—वृङ्क्ते । √पृची ( =पृच् ) धातु 'सम्पर्चन' ( =सम्बन्ध ) अर्थ में है । ( १ ) लट्—पृक्ते । ( २ ) लिट्—पपृचे ।

असोष्ट । चक्षिङ् व्यक्तायां वाचि । अयं दर्शनेऽपि । इकारोऽनुदात्तो युजर्थः । नुम्तु न, 'अन्त्येदित' इति व्याख्यानात् । ङकारस्तु 'अनुदात्तेत्वप्रयुक्तमात्मनेपदमनित्यमि'ति ज्ञापनार्थः । तेन 'स्फायन्निर्मोकसन्धिरि'त्यादिसिद्धिः । 'स्कोरि'ति कलोपः । चष्टे । चक्षाते । 'आर्धधातुके' । ( ६९६ ) चक्षिङः ख्याञ् २।४।५४ । ( ६९७ ) वा लिटि २।४।५५ । अत्र भाष्ये 'ख्शादिर'यमादेशः । असिद्धकाण्डे–'शस्य यो वा' इति स्थितम् । ञित्वात्पदद्वयम् । चख्यौ । चख्ये । चक्शौ । चक्शे । 'चयो द्वितीयाः शरि पौष्करसादेरि'-

---

( ६९६ ) चक्षिङः ख्याञ् इति । 'आर्धधातुके' इत्यधिकृतम् । चक्षिङ्धातोः ख्याञ् आदेशो भवति, आर्धधातुकविषये ।

( ६९७ ) वा लिटीति । 'चक्षिङः ख्याञ्' इति पूर्वसूत्रमनुवर्तते । 'आर्धधातुके' इत्यधिकृतम् । लिटचार्धधातुके चक्षिङः ख्याञ् आदेशो वा भवतीति सूत्रार्थः । **असिद्धकाण्ड इति ।** त्रिपादीप्रकरणे णत्वप्रकरणानन्तरमसिद्धकाण्ड इति । तेन 'प्रख्यानमि'त्यादौ

---

√षूङ् धातु प्रसवार्थक है । ( 'धात्वादेः षः सः' से सत्व ) । ( १ ) लट्—सूते ( २ ) लिट्—सुषुवे ( उवङ् ) । ( ३ ) लोट्—सोता, सविता ( 'स्वरति-सूति०' से विकल्प से इट् ) । ( ४ ) सू+लोट् ( =उ० म० ए० व०—'इ' शप् लुक् 'आट्'='आ' वृद्धि, 'आट्' आगम के पित् होने से 'भूसुवोः' से गुण का निषेध )=सुवै । ( ५ ) आशीर्लिङ् में—सविषीष्ट, सोषीष्ट ( विकल्प से इट् ) । ( ६ ) लुङ् में—असविष्ट, असोष्ट ।

√चक्षिङ् धातु का अर्थ—'स्पष्ट बोलना' है । यह धातु 'दर्शन' अर्थ में भी है । धातु में स्थित इकार अनुदात्त है । अनुदात्त होने से 'अनुदात्तेतश्च हलादेः' से युच् प्रत्यय होता है । यथा—'विचक्षणः प्रथयन्' । अतः प्रकृत में इकार की इत्संज्ञा होने पर भी 'इदितो नुम् धातोः' से नुम् नहीं हुआ । क्योंकि 'इदितो' सूत्र के व्याख्यान में यह स्पष्ट किया गया है कि जहाँ ह्रस्व इकार अन्त में इत्संज्ञक रहे वहाँ ही धातु को नुम् का आगम होता है । वह अन्तिम अच् से परे धातु का अवयव होता है । यहाँ अन्तिम इत्संज्ञक इकार नहीं है, क्योंकि यहाँ ङकार की इत्संज्ञा है, जो आत्मनेपद विधान के लिए है ।

यहाँ आशङ्का होती है कि इकार के अनुदात्त होने से आत्मनेपद विधान हो जाता, पुनः ङकार क्यों किया ? वह ङकार व्यर्थ होकर ज्ञापन करता है कि 'अनुदात्तेत्वलक्षण प्रयुक्त आत्मनेपद अनित्य होता है ।' उक्त ज्ञापन का फल यह है कि 'स्फायन्' में 'लट्' को 'शानच्' न होकर 'शतृ' हुआ । यहाँ स्फायी धातु वृद्ध्यर्थक अनुदात्तेत् है ।

( १ ) चक्ष्+लट् ( =त, शप्, लुक्, 'क्' का लोप—'स्कोः', 'टि' को एत्व, ष्टुत्व )= चष्टे । ( २ ) चक्ष्+लट् ( =आताम्, शप्, लुक्, 'टि' को एत्व )=चक्षाते ।

**( ६९६ ) पद**—चक्षिङः, ख्याञ् । **विधिसूत्र ।**

**मूलार्थ**—आर्धधातुक के विषय में 'चक्षिङ्' धातु को 'ख्याञ्' ( =ख्या ) आदेश होता है ।

**विमर्श**—'आर्धधातुके' का अधिकार है ।

**( ६९७ ) पद**—वा लिटि । **अनुवृत्ति**—चक्षिङः, ख्याञ् । **विधिसूत्र ।**

**मूलार्थ**—लिट् आर्धधातुक के परवर्ती रहते 'चक्षिङ्' धातु को विकल्प से 'ख्याञ्' आदेश होता है ।

**विमर्श**—'आर्धधातुके' का अधिकार है । पूर्वसूत्र 'चक्षिङः ख्याञ्' ( ६९६ ) की अनुवृत्ति आ रही है । तदनुसार—"लिट् आर्धधातुक के परवर्ती रहते 'चक्षिङ्' धातु के स्थान में 'ख्याञ्'

ति तु न, चर्त्वस्यासिद्धत्वात्। चचक्षे। ख्याता। क्शाता। ख्यास्यति। ख्यास्यते। क्शास्यति। क्शास्यते। चष्टाम्। अचष्ट। चक्षीत। ख्यायात्। ख्येयात्। क्शायात्। क्शेयात्। 'अस्यतिवक्ती'त्यङ्। अख्यत्। अख्यत। 'यमरमे'तीट्-सकौ। अक्शासीत्। अक्शास्त। * वर्जने ख्शाञ् नेष्टः *। समचक्षिष्टेत्यादि।

इत्यात्मनेपदप्रक्रिया।

---

अथोभयपदप्रक्रिया

द्विष अप्रीतौ। द्वेष्टि। द्विष्टे। दिद्वेष। दिद्विषे। द्वेष्टा। द्वेक्ष्यति। द्वेष्टु-द्विष्टात्। द्विड्ढि। द्विक्ष्व। द्वेषाणि। द्वेषै। अद्वेट्। ( ६९८ ) द्विषश्च ३।४।११२।

---

यत्वस्याऽसिद्धत्वेन न णत्वम्। अन्यथा यकारव्यवधानस्य सत्त्वात् णत्वं स्यादेवेति। चख्यौ। चक्षिङ्धातोर्लिटि 'वा लिटी'ति चक्षिङः स्थाने ख्याञ् आदेशेऽनुबन्धलोपे लिटः स्थाने परस्मैपदविवक्षायां तिपि, तिपो णलादेशे, 'आत औ णलः' इति णलः स्थाने औकारे, धातोः द्वित्वेऽभ्यासत्वे, ह्रस्वे, हलादिशेषे, चर्त्वे, वृद्धौ 'चख्यौ' इति। आत्मनेपदे तु 'चख्ये' इति।

इत्यात्मनेपदप्रक्रिया।

---

( ६९८ ) द्विषश्चेति। 'लङः' इति 'झेर्जुस्' इति चानुवर्तते। तदाह—द्विषः परस्येति। अद्विषुः। द्विष्धातोर्लङि, लङः स्थाने झिप्रत्यये शब्लुकि, 'द्विषश्चे'ति वा

---

आदेश विकल्प से होता है।" महाभाष्य में 'ख्शाञ्' आदेश है, यह स्वीकार किया गया है। असिद्ध काण्ड में स्थित 'शस्य यो वा' से शकार को यकार आदेश विकल्प से होता है। 'ख्याञ्' में ञकार की इत्संज्ञा होने से 'स्वरितञितः' सूत्र से उभयपद होता है।

**उदाहरण**—( १ ) √चक्षिङ्+लिट् ( चक्षिङ्=ख्याञ्='ख्या' विकल्प से, ल्=परस्मैपद प्र० पु० एकव०—तिप्=णल्=औ—'आत औ णलः' धातु को द्वित्व, अभ्यास संज्ञा, ह्रस्व, चुत्व, जश्त्व, वृद्धि )=चख्यौ। आत्मनेपद पक्ष में—चख्ये ( त=एश्, 'आ'लोप इत्यादि कार्य )। भाष्योक्त 'ख्शाञ्' आदेश स्वीकार करने पर—चक्शौ। चक्शे। चर्त्व के असिद्ध होने से प्रकृत प्रयोगों में 'चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्' की प्रवृत्ति नहीं होती। 'ख्याञ्' आदेश के अभावपक्ष में—चचक्षे। ( २ ) लुट्—ख्याता। 'ख्या' के अभावपक्ष में—क्शाता। ( ३ ) लृट्—ख्यास्यति, ख्यास्यते। क्शास्यति, क्शास्यते। ( ४ ) लोट्—चष्टाम्। ( ५ ) लङ्—अचष्ट। ( ६ ) विधिलिङ्—चक्षीत। ( ७ ) आशीर्लिङ् में 'ख्या' आदेश पक्ष में—ख्यायात, ख्येयात ( 'वाऽन्यस्य' से विकल्प से एत्व )। 'ख्शा' आदेश पक्ष में—क्शायात, क्शेयात। ( ९ ) लुङ्—'ख्या' आदेश पक्ष में—अख्यत, अख्यत ( 'अस्यतिवक्तिख्यातिभ्योऽङ्' से च्लि=अङ्='अ' )। क्शादेशपक्ष में—'यमरम' से इट्, सक्—अक्शासीत। आत्मनेपद पक्ष में—अक्शास्त।

**वा०**—"वर्जन अर्थ में 'चक्षिङ्' के स्थान में 'ख्शाञ्' आदेश नहीं होता।" तदनुसार लुङ् में—अचक्षिष्ट।

आत्मनेपदप्रक्रिया समाप्त।

---

√द्विष् धातु का अर्थ—'द्वेष करना' है। ( १ ) द्विष्+लट् ( =परस्मैपद तिप्=ति, शप्, लुक्, ष्टुत्व )=द्वेष्टि। आत्मनेपद में त, शप्, लुक्, ष्टुत्व, 'टि' को एत्व )=द्विष्टे। ( २ ) लिट्—

द्विषः परस्य लङो झेर्जुस् वा । अद्विषुः । अद्विषन् । अद्विष्टम् । अद्विषम् । द्विषीत । द्विक्षीष्ट । 'शल इगुपधे'ति क्सः । अद्विक्षत् । अद्वेक्ष्यत । दुह प्रपूरणे । 'दादेर्धातोर्घः' इति हस्य घः । 'झषस्तथोर्धोऽधः' । दोग्धि । दुग्धः । दुहन्ति । 'एकाचो बशो भष्' इति दकारस्य धकारः । धोक्षि । दुग्धः । दुग्ध । दोह्मि । दुह्वः । दुह्मः । दुग्धे । दुहाते । दुहते । धुक्षे । दुहाथे । धुग्ध्वे । दुहे । दुह्वहे । दुह्महे । दुदोह । दुदुहे । दोग्धा । धोक्ष्यति । धोक्ष्यते । दोग्धु–दुग्धात् । दुग्धाम् । दुहन्तु । दुग्धि–दुग्धात् ।

---

झेर्जुसादेशेऽनुबन्धलोपे, अटयनुबन्धलोपे, सस्य रुत्वे विसर्गे च कृते 'अद्विषुः' इति । जुसादेशाऽभावपक्षे तु—'अद्विषन्' इति । दोग्धि । दुह्धातोर्लटस्तिपि, शपि, शपो लुकि, 'दादेर्धातोर्घः' इति हस्य घत्वे 'झषस्तथोर्धोऽधः' इति तस्य धत्वे 'दुघ् धि' इति जाते 'झलां जश् झशि' इत्यनेन घस्य गकारे 'पुगन्तलघूपधस्य चे'ति गुणे 'दोग्धि' इति रूपम् ।

**धोक्ष्यति** । 'दुह् प्रपूरणे' इत्यस्माद्धातोर्लृटस्तिपि, स्यप्रत्यये, 'पुगन्तलघूपधस्य चे'ति गुणे 'दादेर्धातोर्घः' इति हस्य घत्वे 'एकाचो बशो भष०' इति भष्भावेन दस्य धत्वे 'खरि चे'त्यनेन घस्य कत्वे, षत्वे, क् ष् संयोगे क्षे जाते 'धोक्ष्यती'ति सिद्धम् । आत्मनेपदपक्षे तु 'धोक्ष्यते' इति ।

---

दिद्वेष, **आत्मनेपद**—दिद्विषे । ( ३ ) लुट्—द्वेष्टा । ( ४ ) लृट्—द्वेक्ष्यति । ( ५ ) लोट्—द्वेष्टात्–द्वेष्टु । ( ६ ) लोट्—म० पु० एकव० ( सिप्='सि', 'सि'='हि', 'हि'='धि' 'हुझल्भ्यो०' 'ष्'='ड्' जश्त्व, 'ध्'='ढ्'—ष्टुत्व )=द्विड्ढि । आत्मनेपद में—द्विक्ष्व । ( ७ ) लोट् उ० पु० एकव०—द्वेषाणि ( गुण, णत्व ) । आत्मनेपद में—द्वेषै । ( ८ ) द्विष्+लङ् ( =तिप्=ति, शप्, लुक्, गुण, इकारलोप, 'त्' का हल्ङ्यादिलोप, जश्त्व से 'ष्'='ड्' 'ड्'='ट्' विकल्प से—'वाऽवसाने', अट् का आगम )=अद्वेट् ।

**( ६६८ ) पद**—द्विषः, च । **अनुवृत्ति**—लङः, शाकटायनस्य, झेर्जुस् । **विधिसूत्र** ।

**मूलार्थ**—द्विष् धातु से परवर्ती लङ् सम्बन्धी 'झि' को जुस् आदेश विकल्प से होता है । अद्विषुः । अद्विषन् इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'लङः शाकटायनस्यैव' ( ३।४।१११ ) सूत्र से 'लङः' और 'शाकटायनस्य' तथा 'झेर्जुस्' ( ३।४।१०८ ) की अनुवृत्ति आती है । तदनुसार—"द्विष् धातु से परवर्ती लङादेश 'झि' के स्थान में जुस् आदेश आचार्य शाकटायन के मत में होता है, अन्य आचार्यों के मत में नहीं ।"

**उदाहरण**—( १ ) √द्विष्+लङ् ( =झि, शप्, शप् का लुक्, झि=जुस्='उस्' विकल्प से—'द्विषश्च', अट्, स्=र्=ः )=अद्विषुः । जुस् के अभाव पक्ष में—अद्विषन् । ( २ ) विधिलिङ् परस्मैपद—द्विष्यात् । आत्मनेपद—द्विषीत । ( ३ ) आशीर्लिङ् आत्मनेपद—द्विक्षीष्ट । ( ४ ) लुङ्—परस्मैपद—अद्विक्षत् ( 'शल इगुपधात्' से च्लि='क्स' ) । ( ५ ) लृङ् आत्मनेपद—अद्वेक्ष्यत ।

√दुह् धातु का अर्थ—दुहना है । ( १ ) दुह्+लट् ( =तिप्=ति, शप्, लुक्, 'ह्'='घ्'—'दादेर्धातोर्घः', 'त्'='ध्'—'झषस्तथोर्धोऽधः' )—दुघ् धि ( 'घ्'='ग्'—'झलां जश् झशि' 'उ'='ओ'—गुण—'पुगन्तलघूपधस्य च' )=दोग्धि । ( २ ) दुह्+लट् ( =तस्, शप्, लुक् 'ह्'='घ्'—'दादेर्धातोर्घः' 'त्'='ध्'—'झषस्तथोर्धोऽधः' 'घ्'='ग्'—जश्त्व, स्=र्=ः )

दुग्धम् । दुग्ध । दोहानि । दुग्धाम् । दुहाताम् । दुहताम् । धुक्ष्व । दुहाथाम् । धुग्ध्वम् । दोहै । दोहावहै । दोहामहै । अधोक्-अधोग् । अदुग्धाम् । अदुहन् । अदोहम् । अदुग्ध । अदुहाताम् । अदुहत । अदुग्धाः । अदुहाथाम् । अधुग्ध्वम् । दुह्यात् । दुहीत । लिङ्-

---

अधोक् इति । दुह्धातोर्लङि, तत्स्थाने तिपि, शपो लुकि, अङ्गस्याडागमे लघूपधगुणे, 'इतश्चे'ति तिप इकारलोपे 'हल्ङ्याब्भ्यो दीर्घादि'ति तलोपे 'दादेर्धातोर्घः' इत्यनेन हकारस्य घकारे 'एकाचो बशो भष्' इति भष्भावेन दस्य धत्वे, जश्त्वेन गकारे, तस्य 'वाऽवसाने' इति चर्त्वविकल्पेन ककारे 'अधोक्' इति । पक्षे—'अधोगि'ति । अधुक्षदिति । दुह्धातोर्लुङि, तत्स्थाने तिप्यनुबन्धलोपे, 'च्लि लुङि' इति च्लौ 'शल इगुपधादनिटः क्सः' इति च्लेः स्थाने क्सादेशेऽनुबन्धलोपे 'दादेर्धातोर्घः' इत्यनेन हकारस्य घकारे 'एकाचो०' इति भष्भावेन दस्य धत्वे 'खरि चे'त्यनेन घस्य कत्वे

---

=दुग्धः । (३) दुह्+लट् (=झि, शप्, लुक्, 'झ्'='अन्त्'—'झोऽन्तः')=दुहन्ति। (४) दुह्+लट् (=सिप्='सि' 'ह्'='घ्', 'घ्'='क्'—चर्त्व—'खरि च', 'द्'='ध्'—'एकाचो बशो भष्०' गुण, षत्व, क्+ष्='क्ष्')=धोक्षि । यहाँ अजादि और हलादि अजादि प्रत्ययों के परवर्ती रहते और वकारादि तथा मकारादि प्रत्ययों के परवर्ती रहते उक्त 'दादेधातोर्घः, झलां जश् झशि, झषस्तथोर्धोऽधः, एकाचो बशो भष्' इत्यादि सूत्रों की प्रवृत्ति नहीं होती। केवल हलादि यथा—तकारादि और थकारादि प्रत्ययों के परे रहते उक्त सूत्रों की प्रवृत्ति होती है। सकारादि प्रत्ययों के परे रहने पर भी उक्त कार्य होते हैं।

### √दुह् धातु लट् लकार (परस्मैपद) के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | दोग्धि | दुग्धः | दुहन्ति |
| म० पु० | धोक्षि | दुग्धः | दुग्ध |
| उ० पु० | दोह्मि | दुह्वः | दुह्मः |

### (आत्मनेपद)

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | दुग्धे | दुहाते | दुहते |
| म० पु० | धुक्षे | दुहाथे | धुग्ध्वे |
| उ० पु० | दुहे | दुह्वहे | दुह्महे |

(५) लिट्—परस्मैपद—दुदोह। (६) आत्मनेपद—दुदुहे। (७) लुट्—दोग्धा। (८) दुह्+लृट् (=तिप्=ति, स्य, गुण—'पुगन्तलघूपधस्य च', 'ह्'='घ्'—'दादेर्धातोर्घः', 'द्'='ध्'—'एकाचो बशो भष्', 'घ्'='क्'—'खरि च', षत्व, क् ष्=क्ष्)=धोक्ष्यति। आत्मनेपद में—धोक्ष्यते। (९) लोट्—दोग्धु, दुग्धात्। इत्यादि। आत्मनेपद में—दुग्धाम्, दुहाताम्, दुहताम् इत्यादि। (१०) दुह्+लङ् (=तिप्=ति, शप्, शप् का लुक्, अट् का आगम, 'उ'=गुण—'पुगन्त०', इकारलोप—'इतश्च', 'त्' का लोप 'हल्ङ्याब्भ्यो०', 'ह्'='घ्'—'दादेर्धातोर्घः' 'द्'='ध्'—भष्भाव—'एकाचो०', 'ध्'='ग्', 'ग्'='क्' चर्त्व विकल्प से)=अधोक्। चर्त्व के अभावपक्ष में—अधोग्। लङ् प्र० पु० द्विव०—अदुहाताम्। बहुव०—अदुहन्। आत्मनेपद पक्ष में—अदुग्ध, अदुहाताम्, अदुहत इत्यादि। (झ्='अत्'—'आत्मनेपदेष्वन्यतरस्याम्')।

**सिचावात्मनेषु । धुक्षीष्ट । 'शल इगुपधे'ति क्सः । अधुक्षत् । ( ६९९ ) लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ७।३।७३ । एषां क्सस्य लुग्वा दन्त्ये तङि । अधुक्षत–अदुग्ध । ( ७०० ) क्सस्याचि ७।३।७२ । अजादौ तङि क्सस्य लोपः स्यात् । अधुक्षाताम् । अधुक्षन्त । अधुक्षथाः–अदुग्धाः । अधुक्षाथाम् । अधुक्षध्वम्–अधुग्ध्वम् ।**

---

अङ्गस्याडागमेऽनुबन्धलोपे 'इतश्चे'ति तिप इकारलोपे षत्वे, कषोः संयोगे क्षे कृते 'अधुक्षत्' इति ।

( ६९९ ) **लुग्वेति** । 'क्सस्याची'त्यतः 'क्सस्ये'त्यनुवर्तते । अत आह—**एषां क्सस्येति । अदुग्ध इति** । दुह्धातोर्लुङि तत्स्थाने आत्मनेपदे तप्रत्यये, च्लौ, च्लेः स्थाने 'शल इगुपधादनिटः क्सः' इति क्सादेशे 'लुग्वा दिहलिहगुहामात्मनेपदे दन्त्ये' इति विभाषया क्सस्य लुकि, 'दादेर्धातोर्घः' इति हस्य घत्वे 'झषस्तथोर्धोऽधः' इति तकारस्य धकारे 'झलां जश् झशि' इत्यनेन घस्य गत्वे, अडागमेऽनुबन्धलोपे 'अदुग्ध' इति । क्सस्य लुगभावपक्षे तु—'अधुक्षत' इति ।

( ७०० ) **क्सस्याचीति** । 'घोलोपो लोटि वा' इत्यस्माल्लोप इत्यनुवर्तते । अचीत्यस्याङ्गाक्षिप्तविशेषणत्वात्तदादिविधिः । तदाह—**अजादावित्यादिना । अधुक्षाताम्** । दुह्धातोर्लुङि तत्स्थानेऽऽत्मनेपदे प्रथमपुरुषद्विवचने आतामि, च्लौ, च्लेः

---

( ११ ) विधिलिङ्—दुह्यात् । दुहीत । ( १२ ) दुह्+आशीर्लिङ् ( =त, सीयुट्=सीय्, 'लिङ्सिचावात्मनेपदेषु' से किद्वद्भाव, 'क्ङिति च' से गुणनिषेध 'य्' का लोप—'लोपो व्योर्वलि' 'ह्'='घ्', 'द्'='ध्'—भष्भाव, 'घ्'='क्' 'खरि च' षत्व, क्+ष्=क्ष्, सुट्='स्'-'सुट् तिथोः' षत्व, ष्टुत्व )=धुक्षीष्ट । ( १३ ) दुह्+लुङ् ( =तिप्=ति, च्लि, च्लि=क्स्='स'—'शल इगुपधादनिटः क्सः' 'ह्'='घ्', 'द्'='ध्'—भष्भाव )—धुघ् स ति ( 'घ्'='क्'—'खरि च' अट् का आगम, इकारलोप, षत्व, क्+ष्='क्ष्' )=अधुक्षत ।

**( ६९९ ) पद**—लुक्, वा, दुहदिहलिहगुहामात्मनेपदे, दन्त्ये । **अनुवृत्ति**—क्सस्य । **विधिसूत्र ।**

**मूलार्थ**—दन्त्य 'तङ्' के परवर्ती रहने पर दुह् आदि धातुओं से उत्तर स्थित 'क्स' का लुक् विकल्प से होता है । अधुक्षत । अदुग्ध ।

**विमर्श**—यहाँ 'क्सस्याचि' ( ७।३।७२ ) से 'क्सस्य' की अनुवृत्ति आती है । तदनुसार—दुह्, दिह्, लिह् और गुह् धातुओं से उत्तरवर्ती 'क्स' का विकल्प से लुक् होता है, दन्त्य तङ् के परे होने पर ।

**उदाहरण**—( १ ) दुह्+लुङ् ( =त, 'च्लि'='क्स' 'शल इगुपधात०', 'क्स' का विकल्प से लुक्—'लुग्वा दुहदिह' 'ह्'='घ्'—'दादेर्धातोर्घः' 'त्'='ध्'—'झषस्तथोर्धोऽधः' 'घ्'='ग्'—'झलां जश् झशि', अट् )=अदुग्ध । लुक् के अभाव पक्ष में—अधुक्षत ।

**( ७०० ) पद**—क्सस्य, अचि । **अनुवृत्ति**—लोपः । **विधिसूत्र ।**

**मूलार्थ**—अजादि 'तङ्' के परवर्ती रहते क्स ( =स ) का लोप होता है । अधुक्षाताम् इत्यादि ।

**विमर्श**—'घोर्लोपो लेटि वा' ( ७।३।७० ) से 'लोपः' पद की अनुवृत्ति आ रही है । तदनुसार—"अजादि तङ् के परे रहते 'क्स' का लोप होता है" ।

**अधुक्षि । अधुक्षावहि–अदुह्वहि । अधुक्षामहि । अधोक्ष्यत् । अधोक्ष्यत । एवं दिह उपचये । उपचयो वृद्धिः । प्रणिदेग्धि । देग्धु–दिग्धि । लिह आस्वादने । 'हो ढः' । ढो ढे लोपः । लेढि । लीढः । लिहन्ति । लेक्षि । लीढे । लिहाते । लिहते । लिक्षे ।**

---

क्सादेशेऽनुबन्धलोपे 'दुह् स आताम्' इति जाते 'अलोऽन्त्यस्ये'ति परिभाषासहकारेण 'क्सस्याची'त्यनेन अकारलोपे 'दादेर्धातोर्घः' इति हस्य घत्वे, दस्य भष्भावेन धत्वे, 'खरि चे'ति चर्त्वेन घस्य कत्वे, सस्य षत्वे क्षोः संयोगे क्षे जाते, अङ्गस्याडागमेऽनुबन्धलोपे, क्सादेशस्य कित्त्वाद् गुणनिषेधे 'अधुक्षाताम्'ति । **अलीढ** । लिह् धातोर्लुङि, तत्स्थाने आत्मनेपदसंज्ञके 'त' प्रत्यये, च्लौ, च्लेः स्थाने 'शल इगुपधादनिटः क्सः' इति क्सादेशेऽनुबन्धलोपे 'लुग्वा' इति विकल्पेन क्सस्य लुकि 'हो ढः' इति हस्य ढत्वे, तकारस्य धत्वे, ष्टुत्वे 'ढो ढे लोपः' इति ढलोपे, 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति पूर्व-

---

**उदाहरण**—( १ ) दुह्+लुङ् ( =आताम्, च्लि, च्लि=क्स='स'—'शल इगुपधात्' )- दुह् स् आताम् ( 'अलोऽन्त्यस्य' परिभाषा के सहकार से 'क्सस्याचि' से अकार का लोप, 'ह्'='घ्'—'दादेर्धातोर्घः' 'द्'='ध्'—भष्भाव, 'घ्'='क्'—'खरि च' षत्व, 'क्'+'ष्'='क्ष्', अट् ) =**अधुक्षाताम्** ।

( २ ) लुङ् प्र० पु० बहु०—अधुक्षन्त ( झ्='अन्त्' आदेश, क्स के अकार का लोप ) ।

### √दुह् धातु लङ् लकार के रूप

#### ( परस्मैपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अधुक्षत् | अधुक्षताम् | अधुक्षन् |
| म० पु० | अधुक्षः | अधुक्षतम् | अधुक्षत |
| उ० पु० | अधुक्षम् | अधुक्षाव | अधुक्षाम |

#### ( आत्मनेपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अदुग्ध, अधुक्षत | अधुक्षाताम् | अधुक्षन्त |
| म० पु० | अदुग्धाः, अधुक्षथाः | अधुक्षाथाम् | अधुग्ध्वम् , अधुक्षध्वम् |
| उ० पु० | अधुक्षि | अदुह्वहि, अधुक्षावहि | अधुक्षामहि |

( ३ ) दुह+लृङ् ( =तिप्=ति, स्य, 'उ'='ओ'—गुण—'पुगन्तलघूपधस्य च' 'ह्'='घ्'—'दादेर्धातोर्घः', 'द्'='ध्'—भष्भाव, 'घ्'='क्'—चर्त्व, षत्व, क्+ष्='क्ष्' इकारलोप—'इतश्च' अट् )=अधोक्ष्यत् । आत्मनेपद में—अधोक्ष्यत ।

इसी प्रकार √दिह् ( =बढ़ना ) धातु के भी रूप बनते हैं। √लिह् धातु का अर्थ—'चाटना' है ।

( १ ) लिह्+लट् ( =तिप्=ति, शप्, शप् का लुक्, गुण, 'ह्'='ढ्'—'हो ढः' 'त्'='ध्'—'झषस्तथोर्धोऽधः' 'ध्'='ढ'—'ष्टुत्व' 'ढ्' का लोप—'ढो ढे लोपः' )=लेढि । ( २ ) लिह्+लट् ( =तस्, शप् का लुक्, 'ह्'='ढ्', 'त्'='ध्', 'ध्'='ढ्'—'ष्टुत्व' ढकारलोप, 'इ'='ई' दीर्घ—'ढ्रलोपे' पूर्वस्य दीर्घोऽणः' स्=र्=ः )=लीढः । ( ३ ) लिह्+लट् ( =झि, शप् का लुक्, 'झ्'='अन्त्' )=लिहन्ति ।

लिहाथे। लीढ्वे। लेढु–लीढात्। लीढाम्। लिहन्तु। लीढि। लेहानि। लीढाम्। अलेट्–अलेड्। अलीढाम्। अलिक्षत्। अलिक्षत। अलीढ। अलेक्ष्यत्। अलेक्ष्यत। ब्रूञ् व्यक्तायां वाचि। (७०१) ब्रुवः पञ्चानामादित आहो ब्रुवः ३।४।८४। ब्रुवो

---

स्याणो दीर्घे 'अलीढ' इति। लुगभावपक्षे—हस्य ढत्वे 'षढोः कः सि' इति ढकारस्य ककारे षत्वे क्षोः संयोगे 'क्षे' जाते 'अलिक्षत' इति।

(७०१) ब्रुवः पञ्चानामिति। 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' इत्यत

---

√लिह् धातु लट् लकार के रूप (परस्मैपद)

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०– | लेढि | लीढः | लिहन्ति |
| म० पु०– | लेक्षि | लीढः | लीढ |
| उ० पु०– | लेह्मि | लिह्वः | लिह्मः |

(आत्मनेपद)

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०– | लीढे | लिहाते | लिहते |
| म० पु०– | लिक्षे | लिहाथे | लीढ्वे |
| उ० पु०– | लिहे | लिह्वहे | लिह्महे |

(४) लोट्—लेढु–लीढात् (विकल्प से तातङ्=(तात्) आदेश।

लिह् धातु लोट् लकार के रूप (परस्मैपद)

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | लेढु–लीढात् | लीढाम् | लिहन्तु |
| म० पु०— | लीढि–लीढात् | लीढम् | लीढ |
| उ० पु०— | लेहानि | लेहाव | लेहाम |

(आत्मनेपद)

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | लीढाम् | लिहाताम् | लिहताम् |
| म० पु०— | लिक्ष्व | लिहाथाम् | लीढ्वम् |
| उ० पु०— | लेहै | लेहावहै | लेहामहै |

(५) √लिह्+लङ् (=तिप्=ति, शप्, लुक्, इकारलोप, 'त्' का हलङ्यादि लोप, गुण, ह्='ढ्' अट्, विकल्प से चर्त्व)=अलेट्, अलेड्। (६) लङ् प्र० पु० द्विव०—अलीढाम्। (७) लिह्+लुङ् (=तिप्=ति, च्लि, च्लि=क्स='स'—'शल इगुपधात्०' ह्='ढ्'= 'क्'—'षढोः कः सि' षत्व, क्+ष्=क्ष्, अट्)=अलिक्षत्। आत्मनेपद में—√लिह्+लुङ् (='त', च्लि='क्स्' 'क्स' का विकल्प से लुक्—'लुग्वा दुहदिह०' 'ह्'='ढ्', 'त'='ध्' ष्टुत्व, 'ढ्' का लोप, 'इ'='ई'—दीर्घ—'ढ्लोपे पूर्वस्य दीर्घोऽणः')=अलीढ। क्स के लुक् के अभावपक्ष में 'ह्'='ढ्' 'ढ्'='क्'—'षढोः कः सि' षत्व)=अलिक्षत। (८) लृङ्—अलेक्ष्यत्। आत्मनेपद—अलेक्ष्यत।

√ब्रूञ् धातु का अर्थ 'स्पष्ट बोलना' है।

(७०१) पद—ब्रुवः, पञ्चानाम्, आदितः, आहः, ब्रुवः। अनुवृत्ति—लटो वा, परस्मै-

**लटस्तिबादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाऽऽहादेशः । अकार उच्चारणार्थः । आह । आहतुः । आहुः । ( ७०२ ) आहस्थः ८।२।३५ । चर्त्वम् । आत्थ । आहथुः । ( ७०३ ) ब्रुव ईट् ७।३।९३ । ब्रुवः परस्य हलादेः पित ईट् स्यात् । ब्रवीति । ब्रूतः ।**

---

उत्तरसूत्रमिदम् । 'विदो लटो वा' इत्यतः लटो वेत्यनुवर्तते । अत आह—**ब्रुवो लट इति । आह ।** ब्रूधातोर्लटि, तत्स्थाने तिपि, शपो लुकि 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इति तिपो णलादेशेऽनुबन्धलोपे ब्रुव आहादेशे च कृते 'आह' इति रूपम् ।

( ७०२ ) **आहस्थ इति ।** 'झलो झलि' इत्यतः 'झली'त्यनुवर्तते । तदाह—**झलि परे इति । आत्थ ।** ब्रूधातोर्लटि, लः स्थाने सिपि, शपो लुकि 'ब्रुवः पञ्चानामि'ति सिपस्थलादेशे, ब्रुव आहादेशे च कृते 'आहस्थः' इत्यनेन हस्य थत्वे 'खरि चे'ति चर्त्वेन तकारे **'आत्थ'** इति ।

( ७०३ ) **ब्रुव इडिति ।** 'नाभ्यस्तस्ये'त्यतः पितीति, 'उतो वृद्धिः' इत्यतो हलीति चानुवर्तते । तदाह—**ब्रुवः परस्येति । ब्रवीति ।** ब्रूधातोर्लटि, लः स्थाने तिपि, शपो

---

पदानां णलतुसुस्थलथुसणल्वमाः । **विधिसूत्र ।**

**मूलार्थ**—'ब्रू' धातु से परवर्ती लट् लकार सम्बन्धी तिप् आदि पाँच के स्थान में विकल्प से णल् आदि आदेश होते हैं और 'ब्रू' के स्थान में 'आह' आदेश भी होता है । 'आह' आदेश का अकार उच्चारण की सुगमता के लिए है । आह । आहतुः । आहुः ।

**विमर्श**—प्रकृत सूत्र में 'विदो लटो वा' ( ३।४।८३ ) से 'लटो वा' की अनुवृत्ति आती है तथा 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' ( ३।४।८२ ) सम्पूर्ण सूत्र की अनुवृत्ति आ रही है । तदनुसार "ब्रू धातु से परवर्ती जो लट् लकार, उसके स्थान में परस्मैपदसंज्ञक पाँच प्रत्ययों ( तिप्, तस्, झि, सिप्, थस् ) के स्थान में क्रमशः णलादि ( णल्, अतुस्, उस्, थल्, अथुस् ) आदेश विकल्प से होते हैं तथा 'ब्रू' धातु को 'आह' आदेश भी होता है ।"

**उदाहरण**—( १ ) ब्रू+लट् ( =तिप्, शप्, लुक्, तिप्=णल्='अ' 'ब्रू'='आह'—'ब्रुवः पञ्चानामादित आहो ब्रुवः' )=आह । ( २ ) ब्रू+लट् ( =तस्, शप्, लुक्, तस्=अतुस्, 'ब्रू'='आह्', स्=र्=: )=आहतुः । ( ३ ) ब्रू+लट् ( =झि, शप्, लुक् 'झि'='उस्', 'ब्रू' ='आह्', स्=र्=: )=आहुः ।

**( ७०२ ) पद**—आहः, थः । **अनुवृत्ति**—हः, झलि । **विधिसूत्र ।**

**मूलार्थ**—'झल्' के परवर्ती रहते 'आह्' को थकारान्त आदेश होता है । आत्थ । आहथुः ।

**विमर्श**—यहाँ 'झलो झलि' ( ८।२।२६ ) से 'झलि' तथा 'हो ढः' ( ८।२।३ ) से षष्ठ्यन्त 'हः' पदों की अनुवृत्ति आती है । इस प्रकार—"झल् के परवर्ती रहते आह् के हकार के स्थान में थकार आदेश होता है ।"

**उदाहरण**—( १ ) ब्रू+लट् ( =सिप्, शप्, लुक्, सिप्=थल्=थ, 'ब्रू'='आह्'—'ब्रुवः पञ्चानाम्०' 'ह्'='थ्'—'आहस्थः' 'थ्'='त्'—चर्त्व—'खरि च' )=आत्थ । ( २ ) लट् म० पु० द्विव०—आहथुः ।

**( ७०३ ) पद**—ब्रुवः, ईट् । **अनुवृत्ति**—पिति, हलि । **विधिसूत्र ।**

**मूलार्थ**—'ब्रूञ्' धातु से परवर्ती हलादि पित् को 'ईट्' का आगम होता है । ब्रवीति । ब्रूतः । ब्रुवन्ति इत्यादि ।

ब्रुवन्ति । ब्रूते । ब्रुवाते । ब्रुवते । (७०४) ब्रुवो वचिः २।४।५३ । ब्रुवो वच्यादेशः स्यादार्द्धधातुके । उवाच । ऊचतुः । ऊचुः । उवचिथ–उवक्थ । ऊचे । वक्ता । वक्ष्यति । वक्ष्यते । ब्रवीतु–ब्रूतात् । ब्रूताम् । ब्रुवन्तु । ब्रूहि–ब्रूतात् । ब्रूतम् । ब्रूत । ब्रवाणि ।

---

लुकि, आहादेशाभावपक्षे 'ब्रुव ईट्' इति तिप ईटि, अनुबन्धलोपे 'सार्वधातुकार्धधातुकयोः' इति ब्रुव उकारस्य गुणेऽवादेशे च कृते 'ब्रवीति' इति ।

(७०४) ब्रुवो वचिरिति । ब्रुवो वचिरादेशः स्यादार्धधातुके इति सूत्रार्थः । इकार उच्चारणार्थः । उवाच । ब्रूधातोर्लिटि तत्स्थाने तिपि, 'लिट् च'त्यार्धधातुकसंज्ञायाम् 'ब्रुवो वचिः' इत्यनेन 'ब्रू' इत्यस्य स्थाने 'वच्' इत्यादेशे, तिपो णलादेशेऽनुबन्धलोपे, धातोर्द्वित्वेऽभ्यासत्वे 'वच् वच् अ' इति स्थिते 'लिटयभ्यासस्योभयेषामि'ति अभ्यासवचः सम्प्रसारणे उकारे 'सम्प्रसारणाच्चे'ति पूर्वरूपे 'हलादिः शेषः' इति च्लोपे

---

**विमर्श**—'नाभ्यस्तस्याचि पिति०' (७।३।८७) से 'पिति' तथा 'उतो वृद्धिर्लुकि हलि' (७।३।८९) से 'हलि' पद की अनुवृत्ति आती है। तदनुसार—"ब्रूधातु से परवर्ती हलादि पित प्रत्यय को ईट् (=ई) का आगम होता है।"

**उदाहरण**—(१) ब्रू+लट् (=तिप्, शप्, शप् का लुक्, पूर्वसूत्र (७०१) से आह आदेश के अभावपक्ष में—ईट्='ई'—'ब्रुव ईट्' 'उ'='ओ'—गुण 'सार्वधातु०', 'ओ'='अव्' आदेश) =ब्रवीति। (२) ब्रू+लट् (=तस्, शप्, लुक्, स्=र्=ः)=ब्रूतः। (३) ब्रू+लट् (=झि, झ='अन्त' आदेश, शप्, लुक् 'उ'='उवङ्'='उव्')=ब्रुवन्ति। आत्मनेपद में—(१) ब्रू+लट् (=त, शप्, लुट् 'टि'—'अ'='ए'—'टित आत्मनेपदानाम्')=ब्रूते, इत्यादि।

**√ब्रूञ् धातु लट् लकार के रूप (परस्मैपद)**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | आह, ब्रवीति | आहतुः, ब्रूतः | आहुः, ब्रुवन्ति |
| म० पु० | आत्थ, ब्रवीषि | आहथुः, ब्रूथः | ब्रूथ |
| उ० पु० | ब्रवीमि | ब्रूवः | ब्रूमः |

**(आत्मनेपद)**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | ब्रूते | ब्रुवाते | ब्रुवते |
| म० पु० | ब्रूषे | ब्रुवाथे | ब्रूध्वे |
| उ० पु० | ब्रुवे | ब्रूवहे | ब्रूमहे |

**(७०४) पद**—ब्रुवः वचिः। **अनुवृत्ति**—आर्धधातुके। **विधिसूत्र।**

**मूलार्थ**—आर्धधातुक के परवर्ती रहते 'ब्रू' धातु को 'वचि' (=वच्) आदेश होता है। उवाच। ऊचतुः इत्यादि।

**विमर्श**—'आर्धधातुके' (२।४।३५) का अधिकार है। अतः "आर्धधातुक प्रत्यय के परवर्ती रहते 'ब्रू' को 'वच्' आदेश हो जाता है"।

**उदाहरण**—(१) ब्रू+लिट् (=तिप्, 'लिट् च' से आर्धधातुक संज्ञा, 'ब्रू'='वच्'—'ब्रुवो वचिः' तिप्=णल्='अ', द्वित्व, अभ्यास संज्ञा)—वच् वच् अ (अभ्यास के 'व्'='उ'—सम्प्रसारण—'लिट्यभ्यासस्योभयेषाम्' पूर्वरूप—'सम्प्रसारणाच्च', 'च्' का लोप—'हलादिः शेषः', 'अ'='आ' वृद्धि—'अत उपधायाः')=उवाच। (२) ब्रू+लिट् (=तस्=अतुस्, 'ब्रू'=

ब्रवाव । ब्रवाम । ब्रूताम् । ब्रवै । अब्रवीत् । अब्रूताम् । अब्रूत । ब्रूयात् । ब्रुवीत । उच्यात् । वक्षीष्ट । अवोचत् । अवोचत । अवक्ष्यत् । * चर्करीतञ्च * । 'चर्करीतमि'ति यङ्लुगन्तं तददादौ बोध्यम् । ऊर्णुञ् आच्छादने । ( ७०५ ) ऊर्णोतेर्विभाषा ७।३।९०।

---

' अत उपधायाः' इति उपधावृद्धौ 'उवाच' इति । अवोचत् । ब्रूधातोर्लुङि तिपि 'च्लि लुङि' इति च्लौ 'ब्रुवो वचिः' इति वचादेशे 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशे 'वच् अ ति' इति जाते तिप इकारलोपे 'वच उम्' इति उमि, मकारलोपे, गुणे अटि च कृते 'अवोचत्' इति रूपम् ।

---

'वच्' कित् प्रत्यय होने से वचिस्वपियजादीनां किति' से द्वित्व से पूर्व सम्प्रसारण 'व्'='उ' पूर्वरूप, द्वित्व, अभ्यास संज्ञा, हलादिशेष, सवर्णदीर्घ, स्=र्=: )=ऊचतुः । ( ३ ) लट् प्र० पु० बहुव०—ऊचुः । ( ४ ) ब्रू+लिट् ( =सिप्=थल्='थ' 'ब्रू'='वच्' द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'व्'='उ'—सम्प्रसारण, पूर्वरूप, भारद्वाज नियम से विकल्प से इट् )=उवचिथ । इट् के अभाव पक्ष में—'च्'='क्'—'चोः कुः'=उवक्थ ।

### ब्रू धातु, लिट् लकार के रूप ( परस्मैपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | उवाच | ऊचतुः | ऊचुः |
| म० पु० | उवचिथ-उवक्थ | ऊचथुः | ऊच |
| उ० पु० | उवाच-उवच | ऊचिव | ऊचिम |

( ४ ) लोट्—वक्ता । ( ५ ) लृट्—वक्ष्यति । वक्ष्यते । ( ६ ) ब्रु+लोट् ( =तिप्=ति, शप्, लुक्, ईट्='ई'—'ब्रुव ईट्' 'उ'='ओ'—गुण—'सार्वधातु०', ओ='अव्' आदेश, 'इ'='उ'—'एरुः' )=ब्रवीतु ( 'तु'=विकल्प से तातङ्=तात् )=ब्रूतात् ( तातङ्पक्ष में ) ।

### ब्रू धातु लोट् लकार के रूप ( परस्मैपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | ब्रवीतु-ब्रूतात् | ब्रूताम् | ब्रुवन्तु |
| म० पु० | ब्रूहि-ब्रूतात् | ब्रूतम् | ब्रूत |
| उ० पु० | ब्रवाणि | ब्रवाव | ब्रवाम |

### ( आत्मनेपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | ब्रूताम् | ब्रुवाताम् | ब्रुवताम् |
| म० पु० | ब्रूष्व | ब्रुवाथाम् | ब्रूध्वम् |
| उ० पु० | ब्रवै | ब्रवावहै | ब्रवामहै |

( ७ ) ब्रू+लङ् ( =तिप्=ति, शप्, लुक्, अट्, 'ईट्'='ई'—'ब्रुव ईट्' गुण, अवादेश, इकारलोप )=अब्रवीत् ।

### √ब्रू धातु, लङ् लकार के रूप ( परस्मैपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अब्रवीत् | अब्रूताम् | अब्रुवन् |
| म० पु० | अब्रवीः | अब्रूतम् | अब्रूत |
| उ० पु० | अब्रवम् | अब्रूव | अब्रूम |

ऊर्णोतेर्वृद्धिर्वा स्याद्धलादौ पिति सार्वधातुके। ऊर्णौति–ऊर्णोति। ऊर्णुतः। ऊर्णुवन्ति। ऊर्णुते। ऊर्णुवाते। ऊर्णुवते। * ऊर्णोतेराम्नेति वाच्यम् *। **( ७०६ ) नन्द्राः संयोगादयः ६।१।३।** अचः परा संयोगादयो न-द-रा द्विर्न भवन्ति। 'नु'शब्दस्य द्वित्वम्।

---

( ७०५ ) **ऊर्णोतेर्विभाषा** इति। 'उतो वृद्धिर्लुकि हलि' इत्यतो वृद्धिरिति हलीति च 'नाभ्यस्तस्य' इत्यतः 'पिति सार्वधातुके' इति चानुवर्तते। तदाह—**ऊर्णोतेर्वृद्धिरिति। ऊर्णौति।** ऊर्णुञ्धातोर्लटस्तिपि, शपि, शपो लुकि, 'ऊर्णोतेर्विभाषा' इति वृद्धौ 'ऊर्णौति' इति।

( ७०६ ) **नन्द्रा इति।** अच्चासौ आदिश्चेति कर्मधारयात्पञ्चमीं न् द् र् एषां द्वन्द्वः। 'एकाचो द्वे' इत्यनुवर्तते 'अजादेर्द्वितीयस्ये'त्यतः अजादेरिति च। **ऊर्णुनाव।**

---

( ८ ) विधिलिङ्—ब्रूयात्। ( ९ ) आशीर्लिङ्—उच्यात् ( वच् आदेश सम्प्रसारण )। आत्मनेपद—वक्षीष्ट। ( १० ) ब्रू + लुङ् ( = तिप् = ति, च्लि, 'ब्रू' = 'वच्'—'ब्रुवो वचिः' च्लि = अङ् = 'अ'—'अस्यतिवक्तिख्यातिभ्योऽङ्' )—वच् अ ति ( इकारलोप, 'उम्' = 'उ'—'वच उम्' )—व उ च् अ त् ( अ + उ = 'ओ'—गुण, अट् ) = अवोचत्। आत्मनेपद में—अवोचत। ( ११ ) लङ् में—अवक्ष्यत्।

**ग० सू०**—'चर्करीतम्' 'यङ्लुगन्त' को कहते हैं। उसको अदादि गण में समझना चाहिए[1]। अर्थात् शप् का लुक् आदि कार्य-जो अदादि गण में होते हैं, वह यङ्लुगन्त धातुओं को भी होते हैं।

√ऊर्णुञ् धातु का अर्थ—'ढँकना' है।

**( ७०५ ) पद**—ऊर्णोतेः, विभाषा। **अनुवृत्ति**—वृद्धिः, हलि, पिति सार्वधातुके। **विधिसूत्र।**

**मूलार्थ**—हलादि पित् सार्वधातुक के परवर्ती रहते 'ऊर्णु' धातु को विकल्प से वृद्धि होती है। ऊर्णौति। ऊर्णोति इत्यादि।

**विमर्श**—यहाँ 'उतो वृद्धिर्लुकि हलि' ( ७।३।८९ ) से 'वृद्धि' और 'हलि' तथा 'नाभ्यस्तस्य०' ( ७।३।८७ ) से 'पिति' और 'सार्वधातुके' पदों की अनुवृत्ति आती है। तदनुसार—हलादि पित् सार्वधातुक के परे रहने पर ऊर्णु धातु को विकल्प से वृद्धि होती है। ( 'अलोऽन्त्यस्य' परिभाषा के द्वारा यह वृद्धि अन्त्य अल् उकार को होगी। )

**उदाहरण**—( १ ) ऊर्णु + लट् ( = तिप् = ति, शप्, लुक्, उ = 'औ' वृद्धि विकल्प से—'ऊर्णोतेर्विभाषा' ) = ऊर्णौति। वृद्धि के अभावपक्ष में—गुण—ऊर्णोति। ( २ ) लट् प्र० पु० द्विव०—ऊर्णुतः। ( ३ ) प्र० पु० ब० व०—ऊर्णुवन्ति। आत्मनेपद में—ऊर्णुते। ऊर्णुवाते। ऊर्णुवते।

**वा०**—लिट् के परे रहते ऊर्णु धातु को 'आम्' नहीं होता। ( ऊर्णु धातु इजादि गुरुमान् होने से 'इजादेश्च गुरुमतोऽनृच्छः' से 'आम्' प्राप्त था, उसका प्रकृत वार्तिक से निषेध किया गया है। )

**( ७०६ ) पद**—नन्द्राः, संयोगादयः। **अनुवृत्ति**—अजादेर्द्वितीयस्य, एकाचः द्वे। **विधिसूत्र।**

**मूलार्थ**—अच् से परवर्ती संयोगादि नकार, दकार और रेफ को द्वित्व नहीं होता।

**विमर्श**—प्रकृत सूत्र में 'एकाचो द्वे प्रथमस्य' ( ६।१।१ ) से 'एकाचः द्वे' तथा 'अजादेर्द्वितीयस्य' से 'अजादि' की अनुवृत्ति आती है। तदनुसार—'अच् से परवर्ती संयोगादि नकार, दकार

---

**१. 'चर्करीतमिति यङ्लुगन्तस्य संज्ञा' इति प्राचीनाः।** यङ्लुगन्तप्रक्रियायां शब्लुगादिकमदादिगणकार्यं भवतीत्यर्थः।

णत्वस्यासिद्धत्वात् । 'पूर्वत्रासिद्धीयमद्विर्वचने' इति त्वनित्यम्, 'उभौ साभ्यासस्ये'ति लिङ्गात् । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुवुः । ( ७०७ ) **विभाषोर्णोः १।२।३ ।** ऊर्णोतेः पर इडादिप्रत्ययो वा ङित् स्यात् । ऊर्णुनुविथ–ऊर्णुनविथ । ऊर्णुविता–उर्णविता । ऊर्णौतु–ऊर्णोतु । ऊर्णवानि । ऊर्णवै । ( ७०८ ) **गुणोऽपृक्ते ७।३।९१ ।** ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके । वृद्धयपवादः । और्णोत् । और्णोः ।

---

ऊर्णुधातोर्लिटि तत्स्थाने तिपि समागते, तिपो णलादेशेऽनुबन्धलोपे 'इजादेश्चे'त्यादिना आमि प्राप्ते 'ऊर्णोतेराम्नेति वाच्यम्' इति वार्तिकेन तन्निषेधे 'अजादेर्द्वितीयस्य' इति सरेफस्य णोर्द्वित्वे प्राप्ते 'नन्द्राः संयोगादयः' इति रेफस्य द्वित्वाभावे 'णु' इत्यस्य द्वित्वे प्रथमनकारस्य 'रषाभ्यामि'ति णत्वे, प्राप्तं गुणं प्रबाध्य 'अचो ञ्णिति' इति वृद्धौ आवादेशे च कृते 'ऊर्णुनाव' इति ।

( ७०७ ) **विभाषोर्णोरिति ।** 'गाङ्कुटादिभ्यः' इत्यतः ङिदिति, 'विज इट्' इत्यतः इडिति चानुवर्तते । तदाह—**इडादीति ।**

( ७०८ ) **गुणोऽपृक्त इति ।** 'ऊर्णोतेर्विभाषा' इत्यत उर्णोतेरिति, 'नाभ्यस्तस्य' इत्यतः 'पिति सार्वधातुके' इति, 'उतो वृद्धिः' इत्यतः हलीति चानुवर्तते । तदाह—

---

और रेफ को द्वित्व नहीं होता' । 'ऊर्णु' में रेफ–'अच्' ऊकार से परवर्ती है और संयोगादि 'ण्' है । अतः प्रकृत सूत्र से प्राप्त द्वित्व का निषेध हो जाता है । अतः 'नु' शब्द को द्वित्व होता है । द्वित्व के प्रति णत्व के असिद्ध होने से 'नु' शब्द को ही द्वित्व होता है । यहाँ 'पूर्वत्रासिद्धम्' सूत्र का बाधक वचन 'पूर्वत्रासिद्धीयमद्विर्वचने' की प्रवृत्ति होनी चाहिए । द्वित्व कार्य करने में 'पूर्वत्रासिद्धम्' की प्रवृत्ति नहीं होती है । वह वचन अनित्य है । अतः यहाँ उसकी प्रवृत्ति नहीं होती । अनित्यता में प्रमाण 'उभौ साभ्यासस्य' सूत्र है ।

**उदाहरण**—( १ ) ऊर्णु+लिट् ( =तिप्=णल्='अ', 'इजादेश्च' से प्राप्त 'आम्' का 'ऊर्णोतेराम्नेति वाच्यम्' से निषेध, 'अजादेर्द्वितीयस्य' से रेफ सहित 'र्णो' के द्वित्व की प्राप्ति, 'नन्द्राः संयोगादयः' से रेफ के द्वित्व का निषेध, णत्व के असिद्ध होने से 'उ' का द्वित्व, प्रथम 'न्'='ण्' णत्व–'रषाभ्याम्', 'उ'='औ'—वृद्धि—'अचो ञ्णिति' 'औ'='आव्' आदेश )=ऊर्णुनाव । ( २ ) लिट्, प्र० पु० द्वि०—ऊर्णुनुवतुः । ( ३ ) लिट् प्र० पु० ब० व०—ऊर्णुनुवुः ।

**( ७०७ ) पद**—विभाषोः, णोः । **अनुवृत्ति**—ङित्, इट् । **अतिदेशसूत्र ।**

**मूलार्थ**—'ऊर्णु' धातु से परवर्ती इडादि प्रत्यय विकल्प से ङिद्वत् होता है ।

**विमर्श**—प्रकृत सूत्र में 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' ( १।२।१ ) से 'ङित्' तथा 'विज इट्' ( १।२।२ ) से 'इट्' की अनुवृत्ति आती है । तदनुसार—"ऊर्णुञ्' धातु से परवर्ती इडादि प्रत्यय विकल्प से ङिद्वत् होता है ।"

**उदाहरण**—( १ ) ऊर्णु+लिट् ( =सिप्=थल्=थ, 'नु' को द्वित्व, प्रथम 'न्' को णत्व, इट्, विकल्प से ङिद्वद्भाव—'विभाषोर्णोः', ङित्व पक्ष में प्राप्त गुण का निषेध, उवङ्=उव् )= ऊर्णुनुविथ । ङित्व के अभाव पक्ष में—( गुण, अव् आदेश )=ऊर्णुनविथ । ( २ ) लुट् में—ऊर्णुविता, उर्णविता । ( ३ ) लोट्—ऊर्णौतु, ऊर्णोतु ( विकल्प से वृद्धि ) । ( ४ ) लोट् उ० पु० एकव०—ऊर्णवानि । आत्मनेपद में—ऊर्णवै ।

**( ७०८ ) पद**—गुणः, अपृक्ते । **अनुवृत्ति**—ऊर्णोतेः, पिति, सार्वधातुके, हलि । **विधिसूत्र ।**

और्णुतम् । ऊर्णुयात् । ऊर्णुयाताम् । ऊर्णुयुः । ऊर्णुयाः । इह वृद्धिर्न, 'ङिच्च पिन्ने'ति व्याख्यानात् । ऊर्णुयात् । ऊर्णुयास्ताम् । ऊर्णुयासुः । ऊर्णुविषीष्ट–ऊर्णविषीष्ट । और्णुवीत् । और्णुविष्टाम् । ( ७०९ ) ऊर्णोतेर्विभाषा ७।२।६ । ऊर्णोतेरिडादौ परस्मैपदपरे सिचि वा वृद्धिः स्यात् । पक्षे गुणः । और्णावीत् । और्णाविष्टाम् । और्णवीत् । और्णविष्टाम् ।

इत्यदादिप्रकरणम् ।

---

ऊर्णोतेर्गुण· इत्यादिना । और्णोत् । ऊर्णुधातोर्लङि तिपि, शपो लुकि, आडागमेऽनुबन्धलोपे इकारलोपे 'उतो वृद्धिर्लुकि हली'ति प्राप्ते तं प्रबाध्य 'गुणोऽपृक्ते' इति गुणे 'आटश्चे'ति वृद्धौ 'और्णोत्' इति ।

( ७०९ ) ऊर्णोतेर्विभाषा । 'सिचि वृद्धिः परस्मैपदेषु' इति सूत्रम्, 'नेटि' इत्यत इटीति चानुवर्तते । तदाह—ऊर्णोतेरिडादाविति । और्णावीत् । ऊर्णुधातोर्लुङि लः स्थाने तिपि, अनुबन्धलोपे, आडागमे 'आटश्चे'ति वृद्धौ, च्लौ, च्लेः सिच्यनुबन्धलोपे, तिप इकारलोपे 'और्णु स् त्' इति जाते सकारस्य इडागमेऽनुबन्धलोपे ईटि च 'विभाषोर्णोः' इतीटो ङित्त्वाद् गुणाभावे उवङि 'इट ईटि' इति सलोपे दीर्घे च कृते 'और्णुवीत्' इति । ङित्त्वाभावपक्षे गुणं प्रबाध्य 'ऊर्णोतेर्विभाषा' इति विकल्पेन वृद्धौ, आवादेशे कृते 'और्णावीत्' इति ।

इति अदादिप्रकरणम् ।

---

**मूलार्थ**—अपृक्तसंज्ञक हलादि सार्वधातुक के परवर्ती रहते 'ऊर्णु' धातु को गुण होता है । और्णोत् ।

**विमर्श**—सूत्रार्थ की पूर्णता के लिए—'ऊर्णोतेर्विभाषा' ( ७।३।९० ) से 'ऊर्णोतेः' 'नाभ्यस्तस्य' ( ७।३।८७ ) से 'पिति, सार्वधातुके' और 'उतो वृद्धिर्लुकि हलि' ( ७।३।८९ ) से 'हलि' पदों की अनुवृत्ति आती है । अतः 'अपृक्त हलादि पित् सार्वधातुक के परे रहते ऊर्णु धातु को गुण होता है' ।

**उदाहरण**—( १ ) ऊर्णु+लङ् ( =तिप्=ति, शप्, लुक्, आट्, वृद्धि—'आटश्च', इकारलोप, प्राप्त वृद्धि का बाधकर 'उ'='ओ'-गुण—'गुणोऽपृक्ते' )=और्णोत् । ( २ ) म० पु० एकव०—और्णोः । ( ३ ) म० पु० द्विव०—और्णुतम् । ( ४ ) विधिलिङ्—और्णुयात्, और्णुयाताम्, और्णुयुः । और्णुयाः । ( ५ ) आशीर्लिङ्—ऊर्णूयात्, ऊर्णूयास्ताम्, ऊर्णुयासुः इत्यादि । ( यहाँ 'अकृत्सार्वधातुकयोः' से दीर्घ होता है । ) आत्मनेपद में—ऊर्णुविषीष्ट । ऊर्णविषीष्ट ।

**( ७०९ ) पद**—ऊर्णोतेः, विभाषा । **अनुवृत्ति**—सिचि, वृद्धिः, परस्मैपदेषु, इटि । **विधिसूत्र** ।

**मूलार्थ**—इडादि परस्मैपदपरक सिच् के परवर्ती रहते ऊर्णु धातु को विकल्प से वृद्धि होती है । पक्ष में गुण । और्णावीत् इत्यादि ।

**विमर्श**—यहाँ 'सिचि वृद्धिः परस्मैपदेषु' ( ७।२।१ ) सूत्र तथा 'नेटि' ( ७।२।४ ) से 'इटि' पद की अनुवृत्ति आती है । तदनुसार—"इडादि परस्मैपद सिच् के परे रहते 'ऊर्णु' धातु को विकल्प से वृद्धि होती है" ।

# अथ जुहोत्यादिप्रकरणम्

हु दानाऽऽदनयोः । ( ७१० ) जुहोत्यादिभ्यः श्लुः २।४।७५ । जुहोत्यादिभ्यः परस्य शपः श्लुः स्यात् । ( ७११ ) श्लौ ६।१।१० । धातोर्द्वे स्तः श्लौ । जुहोति ।

---

अथ श्लुविकरणा धातवो निरूप्यन्ते—

( ७१० ) जुहोत्यादिभ्य इति । 'अदिप्रभृतिभ्य' इत्यतः 'शपः' इत्यनुवर्तते । तदाह—जुहोत्यादिभ्य इत्यादि ।

( ७११ ) श्लौ इति । 'एकाचो द्वे प्रथमस्ये'त्यतः 'द्वे' इति, 'लिटि धातोः' इत्यतश्च 'धातोरि'त्यनुवर्तते । अत आह—धातोर्द्वे स्त इति । जुहोति । हुधातोः लटि, परस्मैपदे प्रथमपुरुषैकवचने तिप्यनुबन्धलोपे सार्वधातुकसंज्ञायां शपि 'जुहोत्यादिभ्यः

---

**उदाहरण**—( १ ) ऊर्णु+लुङ् ( =तिप्=ति, आट्, वृद्धि, च्लि, च्लि=सिच्='स्', इकारलोप )—और्णु स् त ( ईट्='इ', ईट्='ई', 'विभाषोर्णोः' 'इट्' को विकल्प से ङिद्वद्भाव होने से गुण का अभाव, 'उ'='उवङ्'='उव्' 'स्' का लोप—'इट ईटि', दीर्घ )=और्णुवीत् । ङित्व के अभावपक्ष में—( 'ऊर्णोतेर्विभाषा' से विकल्प से 'उ'='औ' वृद्धि, 'औ'='आव्' आदेश )=और्णावीत् । वृद्धि के अभाव पक्ष में गुण—और्णवीत् । ( २ ) लुङ्—प्र० पु० द्विव०—और्णाविष्टाम्, और्णविष्टाम् । इत्यादि । लुङ् आत्मनेपद में—और्णुविष्ट, और्णविष्ट इत्यादि । लृङ् लकार में—और्णुविष्यत्, और्णविष्यत् । आत्मनेपद में—और्णुविष्यत, और्णविष्यत इत्यादि ।

**अदादि-प्रकरण समाप्त ।**

---

अदादि प्रकरण में 'शप्' के 'लुक्' विकरण वाली धातुओं के रूपों की साधनिका प्रदर्शित की गई । अब जुहोत्यादि प्रकरण में 'श्लु' विकरण वाली धातुओं की रूपसिद्धि की प्रक्रिया का विवेचन किया जा रहा है—

√हु धातु का अर्थ—'दान करना' तथा 'खाना' है ।

**( ७१० ) पद**—जुहोत्यादिभ्यः, श्लुः । **अनुवृत्ति**—शपः । **विधिसूत्र ।**

**मूलार्थ**—जुहोत्यादिगणपठित धातुओं से परे 'शप्' का 'श्लु' ( लोप ) होता है ।

**विमर्श**—प्रकृत सूत्र में 'अदिप्रभृतिभ्यः शपः' ( २।४।७२ ) से 'शपः' की अनुवृत्ति आती है । तदनुसार—"जुहोत्यादिगण पठित धातुओं से परवर्ती 'शप्' को 'श्लु' होता है ।" यहाँ प्रत्यय के अदर्शन की श्लु संज्ञा है । अतः 'शप्' का 'श्लु' ( =लोप ) होता है ।

**( ७११ ) पद**—श्लौ । **अनुवृत्ति**—धातोः, द्वे ।

**मूलार्थ**—श्लु होने पर धातु को द्वित्व होता है । जुहोति । जुहुतः ।

**विमर्श**—'एकाचो द्वे प्रथमस्य' से अधिकार प्राप्त 'द्वे' की अनुवृत्ति आती है । 'लिटि धातोरनभ्यासस्य' ( ६।१।८ ) से 'धातोः' पद की अनुवृत्ति आने पर श्लु के परे रहते धातु को द्वित्व होता है ।

**उदाहरण**—( १ ) √हु+लट् ( =तिप्=ति, शप्, शप् का 'जुहोत्यादिभ्यः श्लुः' से श्लु, धातु को द्वित्व—'श्लौ' )—हु हु ति ( अभ्यास संज्ञा, 'ह्'='झ्'—'कुहोश्चुः', 'झ्'='ज्'—'अभ्यासे चर्च', 'उ'='ओ'—गुण—'सार्वधातुकार्धधातुकयोः' )=जुहोति । ( २ ) √हु+लट्

**जुहुतः । 'हुश्नुवोरि'ति यण् । जुह्वति । ( ७१२ ) भीह्रीभृहुवां श्लुवच्च ३।१।३९ । एभ्यो लिटयाम् वा स्यादामि श्लाविव कार्यं च । जुहवाञ्चकार । जुहाव । होता । होष्यति । जुहोतु-जुहुतात् । जुहुताम् । जुह्वतु । हेर्द्धिः । जुहुधि । आटि परत्वाद्**

---

श्लुः' इति शपः श्लौ 'श्लौ' इति धातोर्द्वित्वे 'हु हु ति' इति जाते 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां 'कुहोश्चुः' इत्यनेन हकारस्य झकारे 'अभ्यासे चर्च' इति चर्त्वेन जकारे 'सार्वधातुकार्धधातुकयोः' इति गुणे ओकारे कृते 'जुहोति' इति ।

( ७१२ ) भीह्रीभृहुवामिति । 'कास्प्रत्ययादि'त्यत आम् लिटीत्यनुवर्तते । तदाह—एभ्य इति । जुहवाञ्चकार । हुधातोर्लिटि 'भीह्रीभृहुवां श्लुवच्च' इति विकल्पेन आम्प्रत्यये श्लुवत्कार्ये च 'हु आम् लिटि' इति जाते 'श्लौ' इति 'द्वित्वेऽभ्यासत्वे 'कुहोश्चुः' इति चुत्वेन हकारस्य झकारे 'अभ्यासे चर्च' इति जकारे गुणेऽवादेशे 'आमः' इत्यनेन लिटो लुकि, 'कृञ्चानुप्रयुज्यते लिटि' इत्यनेन लिट्परक-

---

( =तस्, शप्, शप्=श्लु, द्वित्व, अभ्यास संज्ञा, 'ह्'='झ्',—कुत्व, 'झ्'='ज्'—'चर्त्व' स्=र्=ः )=जुहुतः । ( ३ ) √हु+लट् ( =झि, शप्=श्लु, द्वित्व, अभ्यास संज्ञा, 'ह्'='झ्', 'झ्'='ज्' )—जु हु झि ( 'उभेऽभ्यस्तम्' से अभ्यस्त संज्ञा, झ्=अत्—'अदभ्यस्तात्', उ=व्—यण्—'हुश्नुवोः सार्वधातुके' )=जुह्वति ।

**√हु धातु, लट् लकार के रूप**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु० | —जुहोति | जुहुतः | जुह्वति |
| म० पु० | —जुहोषि | जुहुथः | जुहुथ |
| उ० पु० | —जुहोमि | जुहुवः | जुहुमः |

**( ७१२ ) पद**—भी-ह्री-भृ-हुवाम् , श्लुवत्, च । **अनुवृत्ति**—आम्, लिटि, अन्यतरस्याम् । **विधिसूत्र ।**

**मूलार्थ**—भी, ह्री, भृ तथा हु धातु से लिट् के परवर्ती रहने पर विकल्प से 'आम्' प्रत्यय होता है और 'आम्' के परे श्लु के समान द्वित्व आदि कार्य भी होते हैं । जुहवाञ्चकार । जुहाव ।

**विमर्श**—यहाँ 'कास्प्रत्ययादाममन्त्रे लिटि' ( ३।१।३५ ) से 'आम्, लिटि' तथा 'उषविदजागृभ्योऽन्यतरस्याम्' ( ३।१।३८ ) से 'अन्यतरस्याम्' की अनुवृत्ति आती है । इस प्रकार—"भी ह्री, भृ तथा हु धातु से लिट् के परे रहते विकल्प से 'आम्' प्रत्यय होता है तथा श्लुवत् कार्य ( श्लु के होने पर द्वित्वादि कार्य ) भी होते हैं ।"

**उदाहरण**—( १ ) √हु+लिट् ( =विकल्प से आम्, श्लुवद्भाव—'भीह्रीभृहुवाम्', द्वित्व, अभ्यास संज्ञा, 'ह्'='झ्'—'कुहोश्चुः', 'झ्'='ज्'—'अभ्यासे चर्च', 'उ'='ओ'—गुण, 'ओ'='अव्'—आदेश, 'लिट्' का लुक्—'आमः', लिट्परक √कृ का अनुप्रयोग—'कृञ्चानुप्रयुज्यते०' )—जुहाम् कृ+लिट् ( =तिप्=णल्=अ, द्वित्व—'लिटि धातोः', अभ्यास संज्ञा 'ऋ'='अ'—'उरत्', रपर, हलादिशेष, 'क्'='च्'—'कुहोश्चुः', 'ऋ'='अ'—गुण, रपर, 'अ'='आ'—वृद्धि—'अत उपधायाः' म्=ं-अनुस्वार, विकल्प से परसवर्ण 'वा पदान्तस्य' )=जुहवाञ्चकार । **'आम्' के अभावपक्ष में**—√हु+लिट् ( =तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, कुत्व, चर्त्व, उ='औ'—वृद्धि—'अचो ञ्णिति' औ='आव्' आदेश )=जुहाव ।

गुणः । जुहवानि । अजुहोत् । अजुहुताम् । परत्वाज्जुसि चेति गुणः । अजुहवुः । जुहुयात् । हूयात् । अहौषीत् । अहोष्यत् । ञिभी भये । बिभेति ( ७१३ ) भियोऽन्य-

---

कृञोऽनुप्रयोगे लिटस्तिपो णलि अनुबन्धलोपे द्वित्वे, 'उरत्' इत्यत्वे रपरे हलादिशेषे 'कुहोश्चुः' इत्यनेन ककारस्य चकारे गुणे, रपरे 'अत उपधायाः' इत्युपधावृद्धौ अनुस्वारे 'वा पदान्तस्ये'ति पाक्षिके परसवर्णे 'जुहवाञ्चकार' इति । आमोऽभावपक्षे लिटि तिपि, तिपः णलादेशेऽनुबन्धलोपे द्वित्वेऽभ्यासत्वे 'अचो ञ्णिति' इति वृद्धौ, आवादेशे 'जुहाव' इति रूपम् ।

---

### √हु धातु लिट् लकार के रूप

#### आम् पक्ष में

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | जुहवाञ्चकार | जुहवाञ्चक्रतुः | जुहवाञ्चक्रुः |
| म० पु० | जुहवाञ्चकर्थ | जुहवाञ्चक्रथुः | जुहवाञ्चक्र |
| उ० पु० | जुहवाञ्चकार, जुहवाञ्चकर | जुहवाञ्चकृव | जुहवाञ्चकृम |

#### 'आम्' के अभाव पक्ष में—

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | जुहाव | जुहुवतुः | जुहुवुः |
| म० पु० | जुहोथ, जुहविथ | जुहुवथुः | जुहुव |
| उ० पु० | जुहाव, जुहव | जुहुविव | जुहुविम |

( २ ) √हु + लुट् प्र० पु० ए० व०—होता । ( ३ ) लृट्—होष्यति, इत्यादि । ( ४ ) √हु + लोट् ( = तिप् = ति, शप् = श्लु, द्वित्व—'श्लौ', अभ्यास संज्ञा, 'ह्' = 'झ्'—'कुहोश्चुः', 'झ्' = 'ज्'—'अभ्यासे चर्च', गुण, 'इ' = 'उ'—'एरुः' तु = तातङ् = 'तात्'—विकल्प से ) = जुहुतात् । तातङ् के अभावपक्ष में—जुहोतु । ( ५ ) √हु + लोट् ( = तस् = ताम्, शप्, शप् = श्लु, द्वित्व—'श्लौ' अभ्यास संज्ञा, कुत्व, चर्त्व ) = जुहुताम् । ( ६ ) √हु + लोट् ( = झि, शप् = श्लु, द्वित्व, चर्त्व, अभ्यस्त संज्ञा, 'झ्' = 'अत्'—'अदभ्यस्तात्' )—जुहु अति ( 'उ' = 'व्'—'यण्', 'इ' = 'उ'—'एरुः' ) = जुह्वतु । ( ७ ) √हु + लोट् ( = सिप् = सि, शप् = श्लु, द्वित्व, कुत्व, चर्त्व, 'सि' = 'हि'—'सेर्ह्यपिच्च', 'हि' = 'धि'—'हुझल्भ्यो हेर्धिः' ) = जुहुधि । ( ८ ) √हु + लोट् ( = मिप् = मि, शप् = श्लु, द्वित्व, अभ्यासकार्य )—जुहु मि ( 'मि' = 'नि'—'मेर्निः' 'आट्' = 'आ'—'आडुत्तमस्य पिच्च' )—जुहु आ नि ( यहाँ यण् का बाधकर पर होने से गुण, 'ओ' = 'अव्' आदेश ) = जुहवानि ।

### √हु धातु लोट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | जुहोतु, जुहुतात् | जुहुताम् | जुह्वतु |
| म० पु० | जुहुधि | जुहुतम् | जुहुत |
| उ० पु० | जुहवानि | जुहवाव | जुहवाम |

**तरस्याम् ६।४।११५। भिय इद्वा स्याद्धलादौ सार्वधातुके क्ङिति। बिभितः-बिभीतः। 'एरनेकाच' इति यण्। बिभ्यति। बिभयाञ्चकार। बिभाय। भेता। भेष्यति। बिभेतु-बिभितात्-बिभीतात्। बिभिताम्-बिभीताम्। अबिभेत्।**

( ७१३ ) **भियोऽन्यतरस्याम्**। 'इद्दरिद्रस्य' इत्यतः इदिति, 'गमहन' इत्यस्मात् 'क्ङिति' इति 'ई हल्यघोः' इत्यतः हलीति, 'अत उत्सार्वधातुके' इत्यस्मात्सार्वधातुके इति चानुवर्तते। तदाह—**भिय इद्वेति**। **बिभितः**। 'ञिभी भये' इत्यस्माद्धातोः लटि, तत्स्थाने तसि, शपि, शपः श्लौ, धातोर्द्वित्वेऽभ्यासत्वे, ह्रस्वे भस्य बत्वे 'भियोऽन्यतरस्याम्' इति ईकारस्य इकारे सस्य रुत्वे विसर्गे च कृते 'बिभितः' इति। **बिभ्यति**।

( ९ ) √हु+लङ् ( =तिप्=ति, अट्='अ', शप्=श्लु, द्वित्व, कुत्व, चर्त्व, इकारलोप—'इतश्च' 'उ'='ओ'—गुण )=अजुहोत्। ( १० ) हु+लङ् ( प्र० पु० द्विवचन )=अजुहुताम्। ( ११ ) √हु+लङ् ( =झि=जुस्='उस्'—'सिजभ्यस्त' शप्=श्लु, द्वित्व, अभ्यासकार्य, अट्='अ' आगम, यण् का बाधकर पर होने से 'उ'='ओ'—गुण—'जुसि च' 'ओ'='अव्' आदेश, स्=र्=ः )=अजुहवुः।

**√हु धातु लङ् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | अजुहोत् | अजुहुताम् | अजुहवुः |
| म० पु०— | अजुहोः | अजुहुतम् | अजुहुत |
| उ० पु०— | अजुहवम् | अजुहुव | अजुहुम |

( १२ ) विधिलिङ्—जुहुयात्, जुहुयाताम्, जुहुयुः इत्यादि।

( १३ ) आशीर्लिङ्—'अकृत्सार्वधातुकयोः' से दीर्घ होकर—हूयात् इत्यादि।

( १४ ) √हु+लुङ् ( =तिप्=ति, अट्, च्लि, च्लि=सिच्=स्, 'इ' का लोप, ईट्='ई', 'उ'='औ'—वृद्धि—'सिचि वृद्धिः' षत्व )=अहौषीत्।

**हु धातु लुङ् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | अहौषीत् | अहौष्टाम् | अहौषुः |
| म० पु०— | अहौषीः | अहौष्टम् | अहौष्ट |
| उ० पु०— | अहौषम् | अहौष्व | अहौष्म |

( १५ ) लृङ्—अहोष्यत् इत्यादि।

√ ( ञि ) भी धातु का अर्थ—'डरना' है। ( १ ) भी+लट् ( =तिप्=ति, शप्=श्लु, द्वित्व, अभ्यास संज्ञा, ह्रस्व, भ्='ब्'—'अभ्यासे चर्च' 'ई'='ए'—गुण—'सार्वधातु०' )=बिभेति।

**( ७१३ ) पद**—भियः, अन्यतरस्याम्। **अनुवृत्ति**—इत्, क्ङिति, हलि, सार्वधातुके। **विधिसूत्र**।

**मूलार्थ**—हलादि कित् ङित् सार्वधातुक के परवर्ती रहते भी धातु को विकल्प से इत्व होता है। बिभितः। बिभीतः। इत्यादि।

**विमर्श**—सूत्रार्थ की पूर्ति हेतु—'इद्दरिद्रस्य' ( ६।४।११४ ) से इत्, 'गमहन' ( ६।४।९८ ) से 'क्ङिति', 'ई हल्यघोः' ( ६।४।११३ ) से 'हलि' तथा 'अत उत्' ( ६।४।११० ) से 'सार्वधातुके'

**बिभियात्–बिभीयात् । भीयात् । अभैषीत् । अभेष्यत् । ह्री लज्जायाम् । जिह्रेति । जिह्रीतः । जिह्रियति । जिह्रयाञ्चकार । जिह्राय । ह्रेता । ह्रेष्यति । जिह्रेतु । जिह्रीयात् । अजिह्रेत् । जिह्रीयात् । ह्रीयात् । अह्रैषीत् । अह्रेष्यत् । पॄ पालन-**

---

भीधातोर्लटि तत्स्थाने झिप्रत्यये श्लौ, धातोर्द्वित्वे, ह्रस्वत्वे भस्य बत्वे 'उभेऽभ्यस्तम्' इत्यभ्यस्तसंज्ञायाम्, 'अदभ्यस्तात्' इति झेरति, एरनेकाचोऽसंयोगपूर्वस्य' इति यणि **'बिभ्यति'** इति ।

**जिह्रेति** । ह्रीधातोः लटि तिपि शपि 'जुहोत्यादिभ्यः श्लुः' इति शपः श्लौ 'श्लौ' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां 'ह्रस्वः' इति अभ्यासस्याचो ह्रस्वे 'कुहोश्चुः' इति हस्य झत्वे 'अभ्यासे चर्च' इति झस्य जकारे 'सार्वधातुकार्धधातुकयोः' इति गुणे 'जिह्रेति' इति । **अह्रैषीत्** । 'ह्री लज्जायाम्' इत्यस्माद्धातोः लुङि तिपि, च्लौ, च्लेः

---

पदों की अनुवृत्ति आती है । तदनुसार—"कित् अथवा ङित् हलादि सार्वधातुक के परवर्ती रहते 'भी' धातु के ईकार को विकल्प से इकार आदेश होता है ।"

**उदाहरण**—( १ ) √भी+लट् ( =तस्, शप्=श्लु, द्वित्व, अभ्यास संज्ञा, ह्रस्व—'भ्'='ब्'—'अभ्यासे चर्च' 'ई'='इ' विकल्प से, स्=र्=ः )=बिभितः । इकार के अभावपक्ष में—बिभीतः । ( २ ) भी+लट् ( =झि, शप्=श्लु, द्वित्व, अभ्यास संज्ञा, ह्रस्व, चर्त्व, 'झ्'='अत्' –'अदभ्यस्तात्' 'ई'='य्'—'यण्'—'एरनेकाचः' )=बिभ्यति ।

### √भी धातु लट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | बिभेति | बिभितः, बिभीतः | बिभ्यति |
| म० पु०— | बिभेषि | बिभिथः, बिभीथः | बिभिथ, बिभीथ |
| उ० पु०— | बिभेमि | बिभिवः, बिभीवः | बिभिमः, बिभीमः |

( ३ ) √भी+लिट् ( 'भीह्रीभृहुवाम्' से 'आम्' तथा श्लुवद्भाव, द्वित्व, अभ्यास संज्ञा, ह्रस्व, चर्त्व, लिट् का लुक्—'आमः' )—बि भी आम् ( गुण, अय् आदेश, लिट्परक √कृ का अनुप्रयोग—'कृञ्चानुप्रयुज्यते' )—बिभयाम् कृ+लिट् ( =तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, उरत्, रपर, हलादिशेष, 'क्'='च्'—'कुहोश्चुः' गुण, रपर, वृद्धि—'अत उपधायाः' अनुस्वार, परसवर्ण )=बिभयाञ्चकार । 'आम्' के अभावपक्ष में—भी+लिट् ( =तिप्=णल्=अ, धातु को द्वित्व, अभ्यास संज्ञा, ह्रस्व, चर्त्व, वृद्धि—'अचो ञ्णिति'—'ऐ'='आय्' आदेश )= **बिभाय ।**

### √भी धातु लिट् लकार के रूप

आम् और श्लुवद्भाव पक्ष में—बिभयाञ्चकार इत्यादि ।

**'आम्' के अभाव पक्ष में**—( अनुप्रयोग के अभावपक्ष में )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | बिभाय | बिभ्यतुः | बिभ्युः |
| म० पु०— | बिभयिथ, बिभेथ | बिभ्यथुः | बिभ्य |
| उ० पु०— | बिभाय, बिभय | बिभ्यिव | बिभ्यिम |

पूरणयोः । (७१४) अर्त्तिपिपर्त्योश्च ७।४।७७ । अभ्यासस्य इत्स्यात् श्लौ ।

सिचि, सिचो लोपे, तिप इकारलोपे 'अस्तिसिचोऽपृक्ते' इति ईटि, सस्य षत्वे 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ, अडागमेऽनुबन्धलोपे 'अह्रैषीत्' इति रूपम् ।

(७१४) अर्तिपिपर्त्योश्चेति । 'अत्र लोपः' इत्यत अभ्यासस्येति, 'भृञामित्' इत्यत इदिति, 'निजां त्रयाणामि'त्यतः श्लाविति चानुवर्तते । तदाह—अभ्यासस्येति । पिपर्ति । पृधातोर्लटस्तिपि, शपि, शपः श्लौ, 'श्लावि'ति द्वित्वे अभ्यासत्वे 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे प पृ ति इति जाते, 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येकारान्तादेशे 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरे 'पिपर्ति' इति सिद्धम् ।

(४) लुट्—भेता । (५) लृट्—भेष्यति । लोट् लकार में हलादि प्रत्ययों में विकल्प से ह्रस्व होता है ।

### √भी धातु लोट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | बिभेतु, बिभितात् बिभीतात् | बिभिताम्, बिभीताम् | बिभ्यतु |
| म० पु०— | बिभिहि, बिभितात् बिभीतात् | बिभितम्, बिभीतम् | बिभित, बिभीत |
| उ० पु०— | बिभयानि | बिभयाव | बिभयाम |

(६) लङ्—अबिभेत् । (७) विधिलिङ्—बिभियात्, बिभीयात् । (८) आशीर्लिङ्—भीयात् । (९) लुङ्—अभैषीत् । (१०) लृङ्—अभेष्यत् ।

√ह्री धातु का अर्थ—'लजाना' है । (१) √ह्री+लट् (=तिप्=ति, शप्, शप्=श्लु, धातु को द्वित्व—श्लौ)—ह्री ह्री ति (अभ्यास संज्ञा, ई='इ'—'ह्रस्व', 'ह्'='झ्'—'कुहोश्चुः' 'झ्'='ज्' 'अभ्यासे चर्च' 'ई'='ए'—गुण—'सार्वधातुकार्धधातुकयोः')=जिह्रेति । (२) लट् प्र० पु० द्विव०—जिह्रीतः । (३) √ह्री+लट् (=झि, शप्=श्लु, द्वित्व, अभ्यास संज्ञा, ह्रस्व, कुत्व, चर्त्व)—जि ह्री झि ('झ्'='अत्', संयोगपूर्व होने से 'एरनेकाचः' से यण् नहीं होता । ई=इयङ्=इय्—'अचि श्नुधातुभ्रुवाम्०')=जिह्रियति ।

√ह्री धातु के रूपों की साधनिका प्रायः 'भी' धातु के समान है ।

(४) लिट्—जिह्रयाञ्चकार, जिह्राय इत्यादि । (५) लुट्—ह्रेता । (६) लृट्—ह्रेष्यति । (७) लोट्—जिह्रेतु । लङ्—अजिह्रेत् । विधिलिङ्—जिह्रीयात् । आशीर्लिङ्—ह्रीयात् । लुङ्—अह्रेष्यत् ।

√पॄ धातु का अर्थ—'पालन करना, पूर्ण करना' है ।

**(७१४) पद—**अर्तिपिपर्त्योः, च । **अनुवृत्ति—**अभ्यासस्य, इत्, श्लौ । **विधिसूत्र ।**

**मूलार्थ**—श्लु के विषय में—ऋ धातु और पॄ धातु के अभ्यास को इत्व होता है । पिपर्ति ।

**विमर्श**—यहाँ 'अत्र लोपोऽभ्यासस्य' (७।४।५८) से 'अभ्यासस्य' 'भृञामित्' (७।४।७६) से इत् तथा 'निजां त्रयाणां गुणः श्लौ' (७।४।७५) से 'श्लौ' पदों की अनुवृत्ति आती है । तदनुसार—"ऋ तथा पॄ धातु के अभ्यास को भी श्लु होने पर इकार आदेश होता है ।"

**पिपर्ति । ( ७१५ ) उदोष्ठ्यपूर्वस्य ७।१।१०२ । अङ्गावयवौष्ठ्यपूर्वो य ऋत्तदन्तस्याङ्गस्य उत्स्यात् । ( ७१६ ) हलि च ८।२।७७ । रेफवान्तस्य धातोरुपधाया इको दीर्घो हलि । पिपूर्त्तः । पिपुरति । पपार । ( ७१७ ) शॄदॄप्रां ह्रस्वो वा ७।४।१२ ।**

---

( ७१५ ) **उदोष्ठ्यपूर्वस्येति ।** 'ऋत इद्धातोः' इत्यत ऋत इत्यनुवर्तते, अङ्गस्येत्यधिकृतम्, तदत्रानुवर्तते । एकमोष्ठ्यस्य विशेषणम्, अपरं तु ऋता विशेष्यते । तदन्तविधिस्तदाह—**अङ्गावयवेत्यादिना ।**

( ७१६ ) **हलि च ।** अत्र 'र्वोरुपधाया दीर्घ इकः' इत्यनुवर्तते । 'सिपि धातोरि'त्यतो धातोरिति च । तच्च र्वोरित्यनेन विशेष्यते । तेन तदन्तविधिस्तदाह—**रेफवान्तस्येति । पिपूर्तः ।** पॄधातोर्लटि, तसि, श्लौ, 'श्लावि'ति धातोर्द्वित्वेऽभ्यासकार्ये 'अर्तिपिपर्त्योश्च' इत्यभ्यासाकारस्य इकारान्तादेशे, रपरत्वे हलादिशेषे 'उदोष्ठ्यपूर्वस्य' इत्युत्वे रपरत्वे 'हलि चे'ति दीर्घे, सस्य रुत्वे विसर्गे च कृते 'पिपूर्तः' इति ।

---

**उदाहरण**—( १ ) √पॄ+लट् ( =तिप्=ति, शप्, शप्=श्लु, द्वित्व—'श्लौ' अभ्यास संज्ञा, ऋ='अ'—'उरत्' रपर, हलादिशेष )—प पॄ ति ( 'अ'='इ'—'अर्तिपिपर्त्योश्च' ऋ='अ' गुण—'सार्वधातु०' रपर ) =पिपर्ति ।

**( ७१५ ) पद**—उत् ओष्ठ्यपूर्वस्य । **अनुवृत्ति**—ऋतः, धातोः । **विधिसूत्र ।**

**मूलार्थ**—अङ्गावयव-ओष्ठ्यपूर्वक ऋदन्त अङ्ग को 'उत्' आदेश होता है ।

**विमर्श**—'ऋत इद्धातोः' ( ७।१।१०० ) से 'ऋतः' पद की अनुवृत्ति आती है । अधिकार प्राप्त 'अङ्गस्य' पद की आवृत्ति की जाती है । प्रथम 'अङ्गस्य' 'ओष्ठ्यस्य' का विशेषण है, दूसरा 'ऋतः' का । इस प्रकार—"अङ्ग का अवयव ओष्ठ्य ( जिसका स्थान ओष्ठ हो ) वर्ण पूर्व में जिस ऋकार के, तदन्त ऋकार को उकार अन्तादेश होता है ।"

**( ७१६ ) पद**—हलि, च । **अनुवृत्ति**—र्वोरुपधाया दीर्घ इकः, धातोः । **विधिसूत्र ।**

**मूलार्थ**—रेफान्त और वान्त धातु की उपधा के इक् को दीर्घ होता है, हल् के परवर्ती रहते । पिपूर्तः । पिपुरति । पपार ।

**विमर्श**—सूत्रस्थ चकार से पूर्वसूत्र—'र्वोरुपधाया दीर्घ इकः' ( ८।२।७६ ) सूत्र की अनुवृत्ति आती है । 'सिपि धातोरुर्वा' ( ८।२।७४ ) से 'धातोः' पद की अनुवृत्ति आती है । इस प्रकार—"हल् के परवर्ती होने पर रेफान्त और वकारान्त धातु की उपधा के 'इक्' को दीर्घ होता है ।"

**उदाहरण**—( १ ) √पॄ+लट् ( =तस्, शप्=श्लु, द्वित्व, अभ्यास संज्ञा, 'ऋ'='अ', रपर, हलादिशेष )—प पॄ तस् ( 'अ'='इ'—'अर्तिपिपर्त्योश्च', 'ॠ'='उ'—'उदोष्ठ्यपूर्वस्य' रपर, 'हलि च' से 'उ'='ऊ'—दीर्घ, स्=र्=ः )=पिपूर्तः । ( २ ) √पॄ+लट् ( =झि, शप्, श्लु, द्वित्व, अभ्यासकार्य, इत्व. 'ॠ'='उ'—'उदोष्ठ्यपूर्वस्य', रपर )—पिपुर् झि ( 'झ्'='अत्' )=पिपुरति ।

## √पॄ धातु, लट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | पिपर्ति | पिपूर्तः | पिपुरति |
| म० पु० | पिपर्षि | पिपूर्थः | पिपूर्थ |
| उ० पु० | पिपर्मि | पिपूर्वः | पिपूर्मः |

**शॄदॄप्रां ह्रस्वो वा स्यात्किति लिटि। पप्रतुः। पप्रुः। ( ७१८ ) ऋच्छत्यॄताम् ७।४।११। तौदादिक-ऋच्छेर्ऋधातोर्ऋतां च गुणो, लिटि। पपरतुः। पपरुः। ( ७१९ ) वॄतो वा ७।२।३८। वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि। परिता–परीता। परिष्यति–परीष्यति। पिपर्तु। पिपुरतु। पिपूर्हि। अपिपः।**

---

( ७१७ ) **शॄदॄप्रामिति।** शॄ दॄ पॄ इत्येषां द्वन्द्वः। 'दयतेर्दिगि लिटि' इत्यतः 'लिटि' इत्यनुवर्तते। तदाह—**शॄदॄप्रां ह्रस्वो वेत्यादि।**

( ७१८ ) **ऋच्छत्यॄतामिति।** 'दयतेर्दिगि लिटि' इत्यतो 'लिटी'ति, 'ऋतश्चे'त्यतः गुण इत्यनुवर्तते। अत आह—**तौदादिकऋच्छेरित्यादि। पप्रतुः।** पॄधातोर्लिटि लिटः स्थाने तसि, तसः अतुसादेशे, धातोर्द्वित्वेऽभ्यासकार्ये 'पपॄ अतुस्' इति स्थिते 'शॄदॄप्रां ह्रस्वो वे'ति ऋकारस्य ह्रस्वे, यणि, सस्य रुत्वे विसर्गे च कृते 'पप्रतुः' इति। ह्रस्वाभावपक्षे—'ऋच्छत्यॄताम्' इति ऋकारस्य गुणेऽकारे रपरे, सस्य रुत्वे विसर्गे च कृते 'पपरतुरि'ति।

---

( ४ ) पॄ+लिट् ( =तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, 'ऋ'='अ'--'उरत्' रपर, हलादिशेष, 'ॠ'='अ'—गुण—'ऋच्छत्यॄताम्' रपर )--प पर् अ ( उपधादीर्घ—'अत उपधायाः' )=पपार।

**( ७१७ ) पद**—शॄ-दॄ-प्राम्, ह्रस्वः, वा। **अनुवृत्ति**—क्किति, लिटि। **विधिसूत्र।**

**मूलार्थ**—कित् लिट् के परवर्ती रहते शॄ, दॄ और पॄ धातु को विकल्प से ह्रस्व होता है। पप्रतुः पप्रुः।

**विमर्श**—'शॄ च दॄ च पॄ च=शॄदॄप्रः, तेषाम्'--इतरेतरद्वन्द्वसमास है। 'दयतेर्दिगि लिटि' ( ७।४।९ ) से 'लिटि' पद की अनुवृत्ति आ रही है। 'अङ्गस्य' का अधिकार है। तदनुसार—"शॄ, दॄ तथा पॄ धातु के अङ्ग को लिट् के परे रहते विकल्प से ह्रस्व होता है।"

**उदाहरण**—( १ ) पॄ√+लिट् (=तस्=अतुस्, द्वित्व, अभ्यास संज्ञा, उरत्, रपर, हलादिशेष )—पपॄ अतुस् ( ऋ=र् --'यण्' स्=र्=ः )=पप्रतुः। लिट् प्र० पु० बहु०—पप्रुः।

**( ७१८ ) पद**—ऋच्छत्यॄताम्। **अनुवृत्ति**—गुणः, लिटि। **विधिसूत्र।**

**मूलार्थ**—'ऋच्छ' धातु, 'ऋ' धातु और दीर्घ ऋकारान्त धातु को गुण होता है, लिट् के परवर्ती रहते। पपरतुः। पपरुः।

**विमर्श**—प्रकृत सूत्र में--'दयतेर्दिगि लिटि' ( ७।४।९ ) से 'लिटि' तथा 'ऋतश्च संयोगादेर्गुणः' ( ७।४।१० ) से 'गुणः' की अनुवृत्ति आती है। इस प्रकार—"तुदादिगण की 'ऋच्छ्' धातु, ऋ धातु और ॠदन्त धातु को लिट् के परे रहते गुण होता है।"

**उदाहरण**—( १ ) पूर्वसूत्र ( ७१७ ) से ह्रस्व के अभावपक्ष में—पपॄ+अतुस् ( ॠ='अ' गुण--'ऋच्छत्यॄताम्' रपर, स्=र्=ः )=पपरतुः। ( २ ) प्र० पु० बहु०--पपरुः।

**( ७१९ ) पद**—वॄतः, वा। **अनुवृत्ति**—इटः, अलिटि दीर्घः। **विधिसूत्र।**

**मूलार्थ**—वृङ्, वृञ् और दीर्घ ॠदन्त धातु से परवर्ती 'इट्' को विकल्प से दीर्घ होता है, लिट् के परवर्ती रहने पर दीर्घ नहीं होता। परिता, परीता इत्यादि।

**अपिपूर्ताम् । अपिपरुः । पिपूर्यात् । पिपूर्युः । पूर्यात् । अपारीत् । ( ७२० ) सिचि च**

---

( ७१९ ) वृतो वा इति । 'ग्रहोऽलिटि दीर्घः' इत्यस्मादलिटि दीर्घ इत्यनुवर्तते । वॄ च ऋत् च वॄत् तस्मादिति विग्रहः । अत आह—**वृङ्वृञ्भ्यामिति ।**

---

**विमर्श**—'वॄतः' पद में समाहार द्वन्द्व समास है । ( वॄ च ऋत् च वॄत्, तस्मात् ) 'ग्रहोऽलिटि दीर्घः' ( ७।२।३७ ) से 'अलिटि दीर्घः' तथा 'आर्धधातुकस्येड् वलादेः' ( ७।२।३५ ) से 'इट्' की अनुवृत्ति आती है । तदनुसार—वॄ[1] तथा ऋकारान्त धातुओं से उत्तरवर्ती इट् को विकल्प से दीर्घ होता है, लिट् के परे रहते दीर्घ नहीं होता ।

**उदाहरण**—( १ ) पॄ+लुट् ( =तिप्=डा=आ, तास्, इट्, गुण, रपर )—पर् इ तास् आ ( 'इ'='ई' विकल्प से दीर्घ—'वॄतो वा' टिलोप )=परीता । दीर्घ के अभावपक्ष में—परिता । ( २ ) लृट् में विकल्प से दीर्घ—परीष्यति, परिष्यति । ( ३ ) लोट् में ( लट् के समान पिपर्ति 'इ'='उ'—'एरुः' )=पिपर्तु । ( ४ ) लोट् प्र० पु० बहुव०—**पिपुरतु ।**

**√पॄ धातु, लोट् लकार के रूप**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु० | पिपर्तु-पिपूर्तात् | पिपूर्ताम् | पिपुरतु |
| म० पु० | पिपूर्हि-पिपूर्तात् | पिपूर्तम् | पिपूर्त |
| उ० पु० | पिपराणि | पिपराव | पिपराम |

( ५ ) पॄ+लङ् ( =तिप्=ति, शप्, द्वित्व—'श्लौ' अभ्यास संज्ञा, अत्व, रपर, हलादिशेष, अभ्यास को इत्व—'अर्तिपिपर्त्योश्च', इकारलोप—'इतश्च', गुण, रपर )—अपि पर् त् ( 'त्' का लोप—'हल्ङ्याब्भ्यः', र्=ः )=अपिपः ।

**√पॄ धातु, लङ् लकार के रूप**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु० | अपिपः | अपिपूर्ताम् | अपिपरुः |
| म० पु० | अपिपः | अपिपूर्तम् | अपिपूर्त |
| उ० पु० | अपिपरम् | अपिपूर्व | अपिपूर्म |

( ६ ) विधिलिङ् में यासुट् के ङित् होने से गुण नहीं होता । ऋकार को 'उर्' 'हलि च' से दीर्घ होकर **प्र० पु० एक०**—पिपूर्यात् । प्र० पु० बहु०—पिपूर्युः ।

**पॄ धातु, विधिलिङ् के रूप**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु० | पिपूर्यात् | पिपूर्याताम् | पिपूर्युः |
| म० पु० | पिपूर्याः | पिपूर्यातम् | पिपूर्यात |
| उ० पु० | पिपूर्याम् | पिपूर्याव | पिपूर्याम |

( ७ ) आशीर्लिङ्—पूर्यात् इत्यादि ।

( ८ ) पॄ+लुङ् ( =तिप्=ति, च्लि, च्लि=सिच्=स्, इट्, इकारलोप, ईट्—'अस्तिसिचोऽपृक्ते', 'स्' का लोप—'इट ईटि', अट् का आगम, सवर्णदीर्घ, 'ॠ'='आ'—वृद्धि—'सिचि वृद्धिः परस्मैपदेषु', रपर )=अपारीत् ।

---

१. सूत्रस्थ 'वॄ' से वृङ् तथा वृञ् दोनों धातुओं का ग्रहण होता है ।

परस्मैपदेषु ७।२।४०। अत्र वृत इटो न दीर्घः। अपारिष्टाम्। अपरिष्यत्-अपरीष्यत्। ओहाक् त्यागे। जहाति। (७२१) जहातेश्च ६।४।११६। इत्स्याद्वा हलादौ क्ङिति सार्वधातुके। जहितः। (७२२) ई हल्यघोः ६।४।११३। श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि। जहीतः। जहति। जहौ। हाता। हास्यति। जहातु–

---

(७२०) अत्रेति। परस्मैपदपरके सिचि वृङ्वृञ्भ्याम् ऋदन्ताच्च परस्येटो दीर्घो न भवतीत्यर्थः।

(७२१) जहातेश्चेति। 'इद्दरिद्रस्य इत्यस्मादिदिति, 'भियोऽन्यतरस्यामि'त्यस्मादन्यतरस्यामिति, 'गमहन' इत्यस्मात् क्ङिति इति, 'अत उत्सार्वधातुके' इत्यतः हलीति चानुवर्तते। अत आह—इत्स्याद्वेत्यादि।

(७२२) ई हल्यघोः। ई इति लुप्तप्रथमान्तम्। 'श्नाभ्यस्तयोरातः' इति, 'गमहन' इत्यतः क्ङितीति, 'अत उत्सार्वधातुके' इत्यतः सार्वधातुके इति चानुवर्तते।

---

√पृ धातु, लुङ् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अपारीत् | अपारिष्टाम् | अपारिषुः |
| म० पु० | अपारीः | अपारिष्टम् | अपारिष्ट |
| उ० पु० | अपारिषम् | अपारिष्व | अपारिष्म |

(७२०) पद—सिचि, च, परस्मैपदेषु। अनुवृत्ति—न, वृतः, दीर्घः, इट्। विधिसूत्र।

मूलार्थ—परस्मैपदपरक 'सिच्' के परवर्ती रहते वृङ्, वृञ् और ऋदन्त धातु से पर इट् को दीर्घ नहीं होता।

विमर्श—यहाँ 'न लिङि' (७।२।३९) से 'न', 'वृतो वा' (७१९) से 'वृतः', 'ग्रहोऽलिटि' (७।२।३७) से 'दीर्घः' तथा 'आर्धधातुकस्येड्' (७।२।३५) से 'इट्' की अनुवृत्ति आती है। तदनुसार पूर्वोक्त सूत्रार्थ निष्पन्न होता है।

उदाहरण—(१) लुङ् प्र० पु० द्वि०—अपारिष्टाम् (दीर्घ का निषेध)।

√ओहाक् (हा) धातु का अर्थ—'त्यागना, छोड़ना' है।

(१) √हा+लट् (=तिप्=ति, शप्=श्लु, द्वित्व, अभ्यासकार्य)=जहाति।

(७२१) पद—जहातेः, च। अनुवृत्ति—इत, अन्यतरस्याम्, क्ङिति, हलि। विधिसूत्र।

मूलार्थ—हलादि कित् ङित् के परवर्ती रहते 'हा' धातु को विकल्प से इत्व होता है। जहितः।

विमर्श—प्रकृत सूत्र में 'इद्दरिद्रस्य' (६।४।११४) से 'इत्', 'भियोऽन्यतरस्याम्' (६।४।११५) से 'अन्यतरस्याम्' 'ई हल्यघोः' (६।४।११३) से 'हलि' तथा 'गमहन' से 'क्ङिति' पदों की अनुवृत्ति आती है। तदनुसार—"हलादि कित्, ङित् के परे रहते 'ओहाक्' धातु को विकल्प से इकार अन्तादेश होता है।"

(७२२) पद—ई, हलि, अघोः। अनुवृत्ति—श्नाभ्यस्तयोरातः, क्ङिति, सार्वधातुके। विधिसूत्र।

मूलार्थ—हलादि कित् ङित् सार्वधातुक के परवर्ती रहते श्ना प्रत्यय और अभ्यस्तसंज्ञक आकार को ईत्व होता है। जहीतः इत्यादि।

**जहितात्–जहीतात्। (७२३) आ च हौ ६।४।११७। जहातेर्हौ परे आत्स्यात्। चादीदितौ। जहाहि–जहिहि–जहीहि। अजहात्। अजहुः। (७२४) लोपो यि**

---

तदाह—**श्नाभ्यस्तयोरित्यादिना। जहितः।** हा धातोर्लटि, तसि, शपि, शपः श्लौ 'श्लावि'ति धातोर्द्वित्वेऽभ्यासत्वे ह्रस्वे, हस्य झत्वे, झस्य जत्वे, 'सार्वधातुकमपित्' इति तसो ङिद्वद्भावे 'जहातेश्चे'त्यनेन आकारस्य विकल्पेन इकारादेशे, सस्य रुत्वे विसर्गे च कृते 'जहितः' इति। इत्वाऽभावपक्षे 'ई हल्यघोः' इत्याकारस्य ईकारे कृते 'जहीतः' इति रूपद्वयम्।

(७२३) **आ च हाविति।** 'जहातेश्चे'ति सूत्रमत्रानुवर्तते। तदाह—**जहातेरिति। जहाहि।** हाधातोर्लोटि, तत्स्थाने सिपि, 'सेर्ह्यपिच्च' इति सिपः स्थाने 'हि' इत्यादेशे, शपि, शपः श्लौ, 'श्लावि'ति द्वित्वेऽभ्याससंज्ञायाम्, 'ह्रस्वः' इति ह्रस्वे, चुत्वेन हस्य झत्वे, 'अभ्यासे चर्चे' इति झस्य जत्वे 'आ च हौ' इत्यनेन आत्वे 'जहाहि' इति। चकारेण इकारे विहिते जहिहि। ईकारे विहिते तु—'जहीहि' इति।

---

**विमर्श**—'श्नाभ्यस्तयोरातः' (६।४।११२) सूत्र की 'गमहन०' (६।४।९८) से क्ङिति, 'अत उत्सार्वधातुके' (६।४।११०) से 'सार्वधातुके' की अनुवृत्ति आती है। तदनुसार—"हलादि कित् अथवा ङित् सार्वधातुकसंज्ञक प्रत्यय के परवर्ती रहते 'श्ना' के आकार के स्थान में ईकार आदेश होता है"।

**उदाहरण**—(१) √हा + लट् (=तस्, शप्, शप्=श्लु, धातु को द्वित्व—'श्लौ' ह्रस्व, 'ह्'='झ्', 'झ्'='ज्' तस् को ङिद्वद्भाव—'सार्वधातुकमपित्', 'आ'='इ'—विकल्प से—'जहातेश्च' स्=र्=:)=जहितः। इत्व के अभाव पक्ष में—'आ'='ई'—'ई हल्यघोः')= जहीतः। (२) √हा+लट् (=झि, शप्, श्लु, द्वित्व, अभ्यासकार्य)—ज हा झि ('झ्'= 'अत्' 'आ' का लोप 'श्नाभ्यस्तयोरातः')=जहति।

**√ओहाक् (हा) धातु लट् लकार के रूप**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु० | जहाति | जहितः, जहीतः | जहति |
| म० पु० | जहासि | जहीथः, जहिथः | जहीथ, जहिथ |
| उ० पु० | जहामि | जहिवः, जहीवः | जहिमः, जहीमः |

(३) √हा+लिट् (तिप्=णल्, द्वित्व—'लिटि धातोरनभ्यासस्य', अभ्यास संज्ञा, ह्रस्व, 'ह्'='झ्'—'कुहोश्चुः', 'झ्'='ज्', णल्=औ—'आत औ णलः' आ+औ=औ—'वृद्धिरेचि')=जहौ। (४) लुट्—हाता। (५) लृट्—हास्यति। (६) लोट्—जहातु। जहितात, जहीतात।

**(७२३) पद**—आ, च, हौ। **अनुवृत्ति**—जहातेः। **विधिसूत्र।**

**मूलार्थ**—हा धातु को आत्व होता है तथा पक्ष में इत्व और ईत्व भी होता है। जहाहि, जहिहि, जहीहि इत्यादि।

**विमर्श**—पूर्वसूत्र (७२१) से 'जहातेः' पद की अनुवृत्ति आती है। तदनुसार—'हि' के परवर्ती रहते हा धातु के आकार को आकार आदेश होता है। चकारात् आकार को इकार और ईकार दोनों आदेश होते हैं।

६।४।११८। जहातेराल्लोपो यादौ सार्वधातुके। जह्यात्। 'एर्लिङि'। हेयात्। अहासीत्। अहास्यत्। ऋ गतौ। 'अर्तिपिपर्त्योश्चे'त्यभ्यासस्य इकारः। अभ्यासस्यासवर्णे'

---

(७२४) लोपो यि। 'यि' इति सप्तम्यन्तम्। सार्वधातुकविशेषणत्वात्तदादिविधिः। 'जहातेश्चे'त्यतो जहातेरिति, 'श्नाभ्यस्तयोरातः' इत्यत आत इति, 'अत उत्सार्वधातुके' इत्यतः 'सार्वधातुके' इति चानुवर्तते। तदाह—**जहातेरिति। अहासीत्।** हाधातोर्लुङि तिपि, अडागमेऽनुबन्धलोपे च्लौ, च्लेः सिचि इचो लोपे, तिप इकारलोपे, 'अस्तिसिचोऽपृक्ते' इति ईटि, 'यमरमनमातां सक्च' इति सगागमेऽनुबन्धलोपे, सिच इटि, 'इट ईटि' इति सकारलोपे सवर्णदीर्घे 'अहासीत्' इति सिद्धम्।

---

**उदाहरण**—(१) √हा+लोट् (=सिप्=सि, 'सि'='हि'—'सेर्ह्यपिच्च', शप्=श्लु, द्वित्व, अभ्यास संज्ञा, ह्रस्व, 'ह्'='झ्'—'चुत्व', 'झ्'='ज्' 'आ'='आ'—'आ च हौ')= जहाहि। चकारात् इकार होने पर—जहिहि। ईकार पक्ष में—जहीहि।

**√हा धातु लोट् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | जहातु, जहितात्, जहीतात् | जहिताम्, जहीताम् | जहतु |
| म० पु०— | जहाहि, जहिहि, जहीहि | जहितम्, जहीतम् | जहीत |
| उ० पु०— | जहानि | जहाव | जहाम |

**√हा धातु लङ् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | अजहात् | अजहिताम्, अजहीताम् | अजहुः |
| म० पु०— | अजहाः | अजहितम्, अजहीतम् | अजहीत |
| उ० पु०— | अजहाम् | अजहिव, अजहीव | अजहिम, अजहीम |

**(७२४) पद**—लोपः, यि। **अनुवृत्ति**—जहातेः, आतः, सार्वधातुके। **विधिसूत्र।**

**मूलार्थ**—यकारादि सार्वधातुक के परवर्ती रहते 'हा' धातु के आकार का लोप होता है। जह्यात् इत्यादि।

**विमर्श**—पूर्वसूत्र 'जहातेश्च' (७२१) से 'जहातेः', 'श्नाभ्यस्तयोरातः' (६।४।११२) से 'आतः' तथा 'अत उत्सार्वधातुके' (६।४।११०) से 'सार्वधातुके' पदों की अनुवृत्ति आती है। 'यि' पद सप्तम्यन्त है। सार्वधातुक का विशेषण होने से तदादि विधि होती है। अतः "यकारादि सार्वधातुक के परे रहते 'हा' धातु के आकार का लोप होता है।"

**उदाहरण**—(१) √हा+विधिलिङ् (=तिप्=ति, शप्=श्लु, द्वित्व, अभ्यासकार्य)—जहा ति (इकारलोप, यासुट्=यास्, 'स्' का लोप)—जहायात् ('आ' का लोप—'लोपो यि') =जह्यात्। (२) √हा+आशीर्लिङ् (=तिप्=ति, यासुट्=यास्, 'स्' का लोप, इकारलोप, 'आ'='ए' एत्व—'एर्लिङि')=हेयात्। (३) √हा+लुङ् (=तिप्=ति, च्लि, च्लि=सिच् ='स्' इकारलोप, ईट्='ई'—'अस्तिसिचोऽपृक्ते', धातु को सक्='स्' का आगम तथा इट्='इ' 'यमरमनमातां सक्च', 'स्' का लोप—'इट ईटि' इ+ई='ई'—सवर्णदीर्घ)=अहासीत्। (४) लृङ्—अहास्यत्।

**√ऋ धातु का अर्थ 'गति=जाना' है।**

इयर्ति । इयृतः । इयृति । आर । आरतुः । आरुः । 'इडत्यर्ती'ति नित्यमिट् । आरिथ । अर्ता । अरिष्यति । इयर्तु । इयराणि । ऐयः । ऐयृताम् । ऐयरुः । इयृयात् । 'गुणोऽर्त्ती'ति गुणः । अर्यात् । 'सर्त्तिशास्त्यर्त्तिभ्यश्चे'त्यङ् । आरत् । 'ऋद्धनोः स्ये' । आरिष्यत् । इति परस्मैपदिनः ।

अथात्मनेपदिनः । माङ् माने शब्दे च । (७२५) भृञामित् ७।४।७६ । भृञ्, माङ्, ओहाङ् एषामभ्यासस्येत्स्याच्छ्लौ । 'ई हल्यघोः' । मिमीते । मिमाते । 'श्ना-

---

**इयर्ति** । ऋधातोर्लटि तिपि, शपि, शपः श्लौ, 'श्लौ' इति द्वित्वे 'ऋ ऋ ति' इति जाते 'अर्तिपिपर्त्योश्चे'त्यनेन अभ्यासस्येकारादेशे रपरत्वे हलादिशेषे 'इ ऋ ति' इति स्थिते 'अभ्यासस्यासवर्णे' इति इयङि गुणे रपरे च इयर्ति इति ।

**(७२५) भृञामिदिति** । अत्र 'लोपोऽभ्यासस्ये'त्यतः अभ्यासस्येति, 'निजां त्रयाणां गुणः श्लौ' इत्यतः त्रयाणां श्लावित्यनुवर्तते । अत आह—भृञ् माङित्या-

---

(१) √ऋ+लट् (=तिप्=ति, शप्, शप्=श्लु, द्वित्व)—ऋ ऋ ति (अभ्यास के 'ऋ'='इ' रपर—'अर्तिपिपर्त्योश्च', इ=इयङ्=इय्—'अभ्यासस्यावर्णे')—इय् ऋ ति ('ऋ'='अ'—गुण, रपर)=**इयर्ति** । (२) लट् प्र० पु० द्विव०—इयृतः । (३) लट् प्र० पु० बहुव०—इयृति । (४) लिट् प्र० पु०—आर, आरतुः, आरुः । म० पु० एकव० में 'इडत्यर्ति' से नित्य इट् होने पर—आरिथ । (५) लुट्—अर्ता । (६) लृट्—अरिष्यति । (७) लोट् प्र० पु० एकव०—इयर्तु । (८) लोट् उ० पु० एकव०—इयराणि । (९) √ऋ+लङ् (=तिप्=ति, इकार-लोप-'इतश्च', शप्=श्लु, धातु को द्वित्व, अभ्यास संज्ञा, अभ्यास के 'ऋ'='इ'—'अर्तिपिपर्त्योश्च' रपर, हलादिशेष, इ=इयङ्=इय्)—इय् ऋ त (आट्='आ' का आगम, आ+इ='ऐ' वृद्धि—'आटश्च', 'ऋ'='अ' गुण, रपर, 'त' का लोप—'हल्ङ्याब्भ्यः' र्=ः)=ऐयः । (१०) लङ् प्र० पु० द्विव०—ऐयृताम् । (११) प्र० पु० बहुव०—ऐयरुः । (१२) विधिलिङ्—इयृयात् । (१३) आशीर्लिङ् प्र० पु० एकव० में ('गुणोऽर्ति' से गुण, रपर)—अर्यात् । (१४) लुङ् में 'सर्तिशास्त्यर्त्तिभ्यश्च' से 'च्लि' के स्थान में 'अङ्' आदेश होता है—आरत् । (१५) लृङ् में 'ऋद्धनोः स्ये' से इट् होकर—आरिष्यत् । जुहोत्यादिगण की परस्मैपदी धातुओं की रूपसिद्धि का विवेचन करने के अनन्तर आत्मनेपदी धातुओं के रूपों की साधनिका का निर्देश करते हैं—

**√माङ्** (मा) धातु का अर्थ—'मापना और शब्द करना' है ।

**(७२५) पद**—भृञाम्, इत् । **अनुवृत्ति**—त्रयाणाम्, श्लौ, अभ्यासस्य । **विधिसूत्र** ।

**मूलार्थ**—भृञ्, माङ् और ओहाङ् धातु के अभ्यास को श्लु के विषय में इत्व होता है ।

**विमर्श**—प्रकृत सूत्र में 'निजां त्रयाणां गुणः श्लौ' (७।४।७५) से 'त्रयाणाम्, श्लौ' तथा 'अत्र लोपोऽभ्यासस्य' (७।४।५८) से 'अभ्यासस्य' की अनुवृत्ति आती है । तदनुसार—"भृञ् (=पालन करना), माङ् (नापना) और ओहाङ् (=जाना) इन तीन धातुओं के अभ्यास को इकार आदेश होता है श्लु के विषय में ।"

**उदाहरण**—(१) √मा+लट् (=त, शप्, शप्=श्लु, द्वित्व—'श्लौ' अभ्यास संज्ञा, अभ्यास के 'आ'='इ' इत्व—'भृञामित्', 'आ'='ई'—'ई हल्यघोः' टि 'अ'=एत्व—टित आत्मनेपदानां टेरे')=मिमीते । (२) लट् प्र० पु० द्विव०='आताम्' में 'श्नाभ्यस्तयोरातः' से आकार का लोप होकर—मिमाते । (३) लट् प्र० पु० बहुव०—मिमते ।

भ्यस्ते'ति आतो लोपः । मिमते । ममे । माता । मास्यते । मिमीताम् । अमिमीत । मिमीत । मासीष्ट । अमास्त । अमास्यत । ओहाङ् गतौ । जिहीते । जिहाते । जिहते । जहे । हाता । हास्यते । जिहीताम् । अजिहीत । जिहीत । हासीष्ट । अहास्त । अहास्यत । इत्यात्मनेपदिनः ।

अथोभयपदिनः । डुभृञ् धारणपोषणयोः । बिभर्ति । बिभृतः । बिभ्रति । बिभृते । बिभ्राते । बिभ्रते । बिभराञ्चकार । बभार । बभर्थ । बभृव । बभृम । बिभराञ्चक्रे ।

---

दिना । मिमीते । माङ्धातोर्लटि तत्स्थाने आत्मनेपदे तप्रत्यये, शपि, शपः श्लौ, द्वित्वेऽभ्यासत्वे 'भृञामित्' इत्यभ्यासस्य इत्वे 'ई हल्यघोः' इत्याकारस्य ईत्वे, 'टित आत्मनेपदानां टेरे' इति टेरेत्वे च कृते 'मिमीते' इति ।

बिभर्ति । भृञ्धातोर्लटि, तिपि, शपि, शपः श्लुत्वे 'श्लौ' इत्यनेन धातोर्द्वित्वेऽभ्याससंज्ञायाम्, 'भृञामित्' इति इत्वे, रपरत्वे, हलादिशेषे 'अभ्यासे चर्च' इति भस्य

---

√मा धातु, लट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | मिमीते | मिमाते | मिमते |
| म० पु० | मिमीषे | मिमाथे | मिमीध्वे |
| उ० पु० | मिमे | मिमीवहे | मिमीमहे |

( ४ ) लिट्—ममे । ( ५ ) लुट्—माता । ( ६ ) लृट्—मास्यते । ( ७ ) लोट्—मिमीताम् । ( ८ ) लङ्—अमिमीत । ( ९ ) विधिलिङ्—मिमीत । ( १० ) आशीर्लिङ्=मासीष्ट । ( ११ ) √मा+लुङ् ( =त, अट्='अ'—आगम, च्लि, च्लि=सिच्='स्' )=अमास्त । ( १२ ) लृङ्—अमास्यत ।

√ओहाङ् ( हा ) धातु का अर्थ—'जाना' है ।

( १ ) √हा+लट् ( =त, शप्=श्लु, द्वित्व—श्लौ, अभ्यासकार्य )—जहा त ( अभ्यास को इकार अन्तादेश—'भृञामित्', 'त' के अपित्सार्वधातुक होने से ङिद्वत् होने के कारण 'आ'='ई'—'ई हल्यघोः', टि=एत्व )=जिहीते ।

√हा धातु लट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | जिहीते | जिहाते | जिहते |
| म० पु० | जिहीषे | जिहाथे | जिहीध्वे |
| उ० पु० | जिहे | जिहीवहे | जिहीमहे |

( २ ) लिट्—जहे । ( ३ ) लुट्—हाता । ( ४ ) लृट्—हास्यते । ( ५ ) लोट्—जिहीताम् । ( ६ ) लङ्—अजिहीत । ( ७ ) हा+विधिलिङ् ( =त, शप्=श्लु, द्वित्व—'श्लौ' अभ्यासकार्य )—जहा त ( सीयुट्=सीय्, 'य्' का लोप—'लोपो व्योर्वलि', 'स्' का लोप—'लिङः सलोपोऽनन्त्यस्य' 'आ' का लोप—'श्नाभ्यस्तयोरातः' )=जिहीत । ( ८ ) आशीर्लिङ्—हासीष्ट । ( ९ ) लुङ्—अहास्त । ( १० ) लृङ्—अहास्यत ।

जुहोत्यादि गण की उभयपदी धातुओं की रूपसिद्धि प्रदर्शित की जा रही है—

√डुभृञ् ( भृ ) धातु का अर्थ—'धारण करना, पालन करना' है ।

**बभ्रे। भर्ता। भरिष्यति। भरिष्यते। बिभर्तु। बिभृहि। बिभराणि। बिभृताम्। बिभृध्वम्। अबिभः। अबिभृताम्। अबिभरुः। अबिभृत। बिभृयात्। बिभ्रीत।**

---

बत्वे 'सार्वधातुकार्धधातुकयोः', इति गुणे अकारे रपरे च कृते 'बिभर्ति' इति। **बिभराञ्चकार इति।** भृञ्धातोर्लिटि 'भीह्रीभृहुवामि'त्यामि, श्लुवद्भावे, द्वित्वेऽभ्यासकार्ये 'भृञामित्' इतीत्वे धातोः गुणे रपरे च कृते 'आमः' इत्यनेन लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परक-कृञोऽनुप्रयोगे लिटः स्थाने तिपि, तिपो णल्यनुबन्धलोपे, द्वित्वेऽभ्यासत्वे, अत्वे, रपरत्वे, हलादिशेषे, 'कुहोश्चुः' इति चुत्वेन ककारस्य चकारे 'सार्वधातुकार्धधातुकयोः' इति गुणे, रपरे उपधावृद्धौ, मकारस्य अनुस्वारे 'वा पदान्तस्ये'ति परसवर्णे बिभराञ्चकार इति। आमोऽभावपक्षे तु—

---

(१) भृ+लट् (=तिप्=ति, शप्, शप्=श्लु, द्वित्व, अभ्यास संज्ञा, ऋ=इ—'भृञामित्' रपर, हलादिशेष, 'भ्'='ब्'—'अभ्यासे चर्च', 'ऋ'='अ'—गुण—'सार्वधातु०' रपर)=बिभर्ति। (२) लट् प्र० पु० द्विव० में 'तस्' के अपित् होने के कारण 'ङित्' होने से गुण का निषेध हो जाता है—बिभृतः।

**√भृ धातु, लट् लकार के रूप (परस्मैपद)**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | बिभर्ति | बिभृतः | बिभ्रति |
| म० पु०— | बिभर्षि | बिभृथः | बिभृथ |
| उ० पु०— | बिभर्मि | बिभृवः | बिभृमः |

आत्मनेपद के सभी प्रत्यय 'अपित्' होने से ङिद्वत् होने के कारण उनमें गुण का निषेध हो जाता है।

**√भृ धातु, लट् लकार आत्मनेपद के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | बिभृते | बिभ्राते | बिभ्रते |
| म० पु०— | बिभृषे | बिभ्राथे | बिभृध्वे |
| उ० पु०— | बिभ्रे | बिभृवहे | बिभृमहे |

(३) √भृ+लिट् ('आम्'—'भीह्रीभृहुवाम्' श्लुवद्भाव, द्वित्व, अभ्यास संज्ञा, इत्व—'भृञामित्' रपर, हलादिशेष, 'भ्'='ब्'—'अभ्यासे चर्च' गुण, रपर, लिट् का लुक्—'आमः')—बिभराम् (लिट्परक कृ का अनुप्रयोग; लिट्=तिप्=णल्=अ, द्वित्व, अत्व, रपर, हलादिशेष, गुण, रपर, उपधावृद्धि; म्=—अनुस्वार, परसवर्ण)=बिभराञ्चकार। 'आम्' के अभावपक्ष में=बभार। आत्मनेपद में—बिभराञ्चक्रे। 'आम्' के अभाव में—बभ्रे। (४) लुट्—भर्ता। (५) लृट् में 'ऋद्धनोः स्ये' से 'इट्' होता है। भरिष्यति, भरिष्यते। (६) लोट् प्र० पु० ए० व०—बिभर्तु। (७) लोट्—म० पु० एकव० विभृहि। (८) लोट् उ० पु० एकव०—बिभराणि। आत्मनेपद में बिभृताम्, बिभ्राताम्, बिभ्रताम् इत्यादि। (९) लङ् लकार के प्रथम और मध्यम पुरुष के एकवचन में गुण होने से अपृक्तसंज्ञक 'त्' और 'स्' का 'हल्ङ्याब्भ्यः' से लोप होता है। 'र्' का विसर्ग भी होता है। बहुवचन 'झि' में अभ्यस्त होने से झि=जुस् और 'जुसि च' से गुण।

'रिङ्शये'ति रिङ् । भ्रियात् । ( उश्च ) भृषीष्ट । अभार्षीत् । 'ह्रस्वादङ्गात्' । अभृत । अभरिष्यत् । अभरिष्यत । डुदाञ् दाने । प्रणिददाति । दत्तः । ददति । दत्ते । ददाते । ददते । ददौ । ददे । दाता । दास्यति । दास्यते । ददातु । 'घ्वसोरेद्धावभ्यासलोपश्च' ।

---

धातोर्द्वित्वेऽभ्यासत्वे 'उरत्' इत्यत्वे, रपरे, हलादिशेषे 'अभ्यासे चर्च' इति भस्य बत्वे परत्वात्सार्वधातुकगुणे रपरे 'अत उपधायाः' इति वृद्धौ 'बभार' इति । अबिभः इति । भृञ्धातोर्लङि, तत्स्थाने तिप्यनुबन्धलोपे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यडागमेऽनुबन्धलोपे 'इतश्चे'ति इकारलोपे, शपि, शपः श्लौ, 'श्लौ' इत्यनेन धातोर्द्वित्वे 'अ भृ भृ त्' इति जाते 'भृञामित्' इत्यभ्यासऋकारस्य इत्वे रपरत्वे हलादिशेषे 'अभ्यासे चर्च' इति जश्त्वेन भकारस्य बकारे 'सार्वधातुकार्धधातुकयोः' इत्यनेन ऋकारस्य गुणे अकारे, रपरे 'हल्ङ्याब्भ्यो दीर्घात्०' इत्यनेन तकारस्य लोपे रकारस्य विसर्गे च कृते 'अबिभः'

---

### √भृ धातु, लङ् लकार ( परस्मैपद ) के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | अबिभः | अबिभृताम् | अबिभरुः |
| म० पु०— | अबिभः | अबिभृतम् | अबिभृत |
| उ० पु०— | अबिभरम् | अबिभृव | अबिभृम |

### ( आत्मनेपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | अबिभृत | अबिभ्राताम् | अबिभ्रत |
| म० पु०— | अबिभृथाः | अबिभ्राथाम् | अबिभृध्वम् |
| उ० पु०— | अबिभ्रि | अबिभृवहि | अबिभृमहि |

( १० ) विधिलिङ् ( परस्मैपद ) में—बिभृयात । आत्मनेपद में—बिभ्रीत । ( ११ ) आशीर्लिङ् ( परस्मैपद में ) 'रिङ्शय०' से रिङ् होकर—भ्रियात । आत्मनेपद में 'उश्च' से सीयुट् के कित होने के कारण गुण का निषेध—भृषीष्ट । ( १२ ) √भृ=लुङ् ( =तिप्=ति, अट्, च्लि, च्लि=सिच्=स्, ईट्—'ई'—अस्तिसिचोऽपृक्ते', ऋ='आ'—वृद्धि—'सिचि वृद्धिः परस्मैपदेषु' रपर, इकारलोप, षत्व ) =अभार्षीत । आत्मनेपद में 'ह्रस्वादङ्गात्' से 'सिच्' का लोप हो जाता है—अभृत । ( १३ ) लृङ् में—अभरिष्यत । अभरिष्यत ।

√डुदाञ् ( दा ) धातु का अर्थ—'देना' है । ( १ ) √दा+लट् ( =तिप्=ति, शप्=श्लु, द्वित्व, अभ्यास संज्ञा, ह्रस्व )=ददाति । आत्मनेपद में—( त, 'टि'=एत्व, द्वित्व, अभ्यासकार्य, ह्रस्व, 'आ' का लोप='श्नाभ्यस्तयोरातः', 'द्'='त'—'खरि च' ) =दत्ते ।

### √दा धातु लट् लकार ( परस्मैपद ) के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | ददाति | दत्तः | ददति |
| म० पु०— | ददासि | दत्थः | दत्थ |
| उ० पु०— | ददामि | दद्वः | दद्मः |

### ( आत्मनेपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | दत्ते | ददाते | ददते |
| म० पु०— | दत्से | ददाथे | दद्ध्वे |
| उ० पु०— | ददे | दद्वहे | दद्महे |

**देहि । दत्ताम् । अददात् । अदत्ताम् । अददुः । अदत्त । दद्यात् । ददीत । 'एर्लिङि' । देयात् । दासीष्ट । 'गातिस्थे'ति सिचो लुक् । अदात् । अदाताम् । अदुः । ( ७२६ ) स्थाघ्वोरिच्च १।२।१७ । अनयोरिदन्तादेशः स्यात्, सिच्च कित्स्यादात्मनेपदेषु ।**

---

इति रूपम् । **अदात्** इति । दाधातोर्लुङि, तत्स्थाने प्रथमपुरुषैकवचने तिप्यनुबन्धलोपे, अडागमेऽनुबन्धलोपे, 'च्लि लुङि' इति च्लौ, 'च्लेः सिच्' इति च्लेः स्थाने सिच्यनुबन्धलोपे 'अदास् ति' इति जाते 'इतश्चे'तीकारलोपे 'दाधाघ्वदाप्' इत्यनेन घुसंज्ञायाम् 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इत्यनेन सिचो लोपे 'अदात्' इति ।

( ७२६ ) **स्थाघ्वोरिच्चेति** । अत्र 'असंयोगाल्लिट् कित्' इत्यतः किदिति, 'हनः

---

( २ ) √दा+लिट् ( =तिप्=णल्, द्वित्व, अभ्यास संज्ञा, ह्रस्व, 'णल्'='औ'—'आत औ णलः' आ+औ='औ'—'वृद्धि' )=ददौ । आतमनेपद पक्ष में—ददे । ( ३ ) लुट्—दाता । ( ४ ) लृट्—दास्यति, दास्यते । ( ५ ) लोट्—ददातु । ( ६ ) √दा+लोट् ( =सिप्=सि=हि, शप्=श्लु, द्वित्व, अभ्यास संज्ञा, ह्रस्व, आ='ए'—एत्व तथा अभ्यास का लोप—'घ्वसोरेद्धावभ्यासलोपश्च=देहि । आतमनेपद में—दत्ताम्, ददाताम्, ददताम् इत्यादि ।

**√दा धातु, लोट् लकार ( परस्मैपद ) के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | ददातु, दत्तात् | दत्ताम् | ददतु |
| म० पु० | देहि | दत्तम् | दत्त |
| उ० पु० | ददानि | ददाव | ददाम |

**( आत्मनेपद )**

| | | | |
|---|---|---|---|
| प्र० पु० | दत्ताम् | ददाताम् | ददताम् |
| म० पु० | दत्स्व | ददाथाम् | दद्ध्वम् |
| उ० पु० | ददै | ददावहै | ददामहै |

( ७ ) √दा+लङ् ( =तिप्=ति, अट्, शप्=श्लु, द्वित्व, अभ्यास संज्ञा, ह्रस्व, इकार-लोप—'इतश्च' )=अददात् ।

**+दा धातु, लङ् लकार ( परस्मैपद ) के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अददात् | अदत्ताम् | अददुः |
| म० पु० | अददाः | अदत्तम् | अदत्त |
| उ० पु० | अददम् | अदद्व | अदद्म |

**( आत्मनेपद )**

| | | | |
|---|---|---|---|
| प्र० पु० | अदत्त | अददाताम् | अददत |
| म० पु० | अदत्थाः | अददाथाम् | अदद्ध्वम् |
| उ० पु० | अददि | अदद्वहि | अदद्महि |

( ८ ) विधिलिङ्—दद्यात् । आतमनेपद—ददीत । ( ९ ) आशीर्लिङ्—देयात् । आत्मनेपद-दासीष्ट । ( १० ) √दा+लुङ् ( =तिप्=ति, अट्, च्लि=सिच्='स्' 'दाधाघ्वदाप्' से घुसंज्ञा, 'गातिस्था०' से सिच् का लुक्, 'इ' का लोप—'इतश्च' )=अदात्, अदाताम्, अदुः ।

**( ७२६ ) पद**—स्थाघ्वोः, इत् च । **अनुवृत्ति**—कित्, सिच्, आत्मनेपदेषु । **विधिसूत्र ।**

अदित । अदास्यत् । अदास्यत । डुधाञ् धारणपोषणयोः । दधाति । ( ७२७ ) दधस्तथोश्च ८।२।३८ । द्विरुक्तस्य झषन्तस्य धाञो बशो भष्, तथयोः स्ध्वोश्च परतः । धत्तः । दधति । दधासि । धत्थः । धत्ते । दधाते । धत्से । धद्ध्वे । 'घ्वसोरि'त्येत्वम् ।

---

सिच्' इत्यतः सिजिति चानुवर्तते । अत आह—अनयोरित्यादिना । अदित इति । दाधातोर्लुङि, लुङः स्थाने आत्मनेपदे तप्रत्यये, च्लौ, च्लेः स्थाने सिचि 'दाधाघ्वदाप्' इति घुसंज्ञकत्वात् 'स्थाघ्वोरिच्चे'ति इदन्तादेशे सिच कित्त्वे च 'ह्रस्वादङ्गात्' इति सिचः सलोपे 'अदित' इति ।

( ७२७ ) दधस्तथोश्चेति । 'दधः' इति षष्ठ्यन्तम् । 'एकाचो बशो' इत्यतो 'बशो भष् झषन्तस्य स्ध्वोः' इत्यनुवर्तते । तदाह—द्विरुक्तस्येत्यादिना । धत्तः । धाधातोर्लटि, तत्स्थाने तसि, शपः श्लुत्वे 'श्लावि'ति द्वित्वेऽभ्यासत्वे, ह्रस्वे, 'अभ्यासे चर्चं' इति धकारस्य दकारे 'दधा तस्' इति जाते 'दधस्तथोश्चे'ति दस्य धत्वे 'श्नाभ्यस्तयोरातः' इत्याकारलोपे 'खरि चे'ति धस्य तत्वे सस्य रुत्वे विसर्गे च कृते 'धत्तः' इति । धेहि । धाधातोर्लोटि, मध्यमपुरुषैकवचने सिपि, 'सेर्ह्यपिच्चे'ति सेर्हि आदेशे, शपि, शपः

---

**मूलार्थ**—आत्मनेपद के परवर्ती रहने पर 'स्था' धातु और घुसंज्ञक धातु को इदन्त आदेश होता है और धातु से उत्तरवर्ती सिच् कित ( किद्वत् ) होता है । अदित इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'असंयोगाल्लिट्' ( १।२।५ ) से 'कित्' तथा 'हनः सिच्' ( १।२।१४ ) से 'सिच्' की अनुवृत्ति आती है । अतः 'स्था' और घुसंज्ञक धातुओं को इकार अन्तादेश होता है तथा सिच् कित् होता है, आत्मनेपदसंज्ञक प्रत्यय के परे रहते ।

**उदाहरण**—( १ ) √दा + लुङ् ( =त, च्लि, च्लि=सिच्, घुसंज्ञा, 'आ'='इ' 'सिच्' को कित्—'स्थाघ्वोरिच्च', 'स्' का लोप—'ह्रस्वादङ्गात' )=अदित । ( २ ) लृङ्—अदास्यत् । आत्मनेपद में—अदास्यत ।

√डुधाञ् ( धा ) धातु का अर्थ—'धारण करना, पोषण करना' है ।

( १ ) √धा + लट् ( =तिप्=ति, शप्=श्लु, द्वित्व—'श्लौ' अभ्यास संज्ञा, ह्रस्व, 'ध्'='द्'—'अभ्यासे चर्च' )=दधाति ।

**( ७२७ ) पद**—दधः, तथोः, च । **अनुवृत्ति**—बशो, भष्, झषन्तस्य, स्ध्वोः । **विधिसूत्र** ।

**मूलार्थ**—द्विरुक्त झषन्त 'धा' धातु के बश् के स्थान में भष् होता है; त-थ और स्-ध्व के परवर्ती रहते । धत्त इत्यादि ।

**विमर्श**—यहाँ 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' ( ८।२।३७ ) से 'बशो भष्, झषन्तस्य स्ध्वोः' की अनुवृत्ति आती है । सूत्र में 'दधः' डुधाञ् धातु का द्विर्वचन निर्देश है । तदनुसार—"द्विरुक्त ( जिसको द्वित्व किया गया हो ) झषन्त धाञ् धातु के बश् को भष् होता है; तकार, थकार; सकार और ध्व के परवर्ती रहने पर।"

**उदाहरण**—( १ ) √धा + लट् ( =तस्, शप्=श्लु, द्वित्व, अभ्यास संज्ञा, ह्रस्व, 'ध्'='द्'—'अभ्यासे चर्च' ) दधा + तस् ( 'द्'='ध्'—'दधस्तथोश्च', 'आ' का लोप 'श्नाभ्यस्तयोरातः', 'ध्'='त्'—'खरि च', स्=र्=ः )=धत्तः । ( २ ) लट् प्र० पु० बहुव०—दधति ( आकारलोप ) । यहाँ भष्भाव के अतिरिक्त अन्य रूपों की साधनिका 'दा' धातु के समान ही है ।

धेहि । अदधात् । अधत्ताम् । अदधुः । अदधाः । अधत्तम् । अधत्त । अदधाम् । अदध्व । अदध्म । अधत्त । अदधाताम् । अदधत । अधत्थाः । अदधाथाम् । अधद्ध्वम् । अदधि । अदध्वहि । अदध्महि । दध्यात् । दधीत । दधीयाताम् । धेयात् । धासीष्ट । अधात् । अधाताम् । अधित । अधिषाताम् । अधास्यत् । अधास्यत । णिजिर् शौच-पोषणयोः । (७२८) निजां त्रयाणां गुणः श्लौ ७।४।७५ । णिज्-विज्-विषाम-भ्यासस्य गुणः स्याच्छ्लौ । नेनेक्ति । नेनिक्तः । नेनिजति । नेनिक्ते । निनेज ।

---

श्लौ, द्वित्वेऽभ्यासत्वे ह्रस्वे 'दाधाघ्वदाप्' इति घुसंज्ञायाम् 'घ्वसोरेद्धावभ्यासलोपश्च' इत्यनेन अभ्यासलोपे अनभ्यासस्य एत्वे च कृते 'धेहि' इति सिद्धम् । अधादिति । दा-धातोर्लुङि तिपि, अटि, तिप इकारलोपे, च्लौ, च्लेः सिचि 'गातिस्थे'ति सिचो लोपे 'अधादि'ति ।

(७२८) निजामिति । 'अत्र लोपोऽभ्यासस्ये'त्यत 'अभ्यासस्ये'त्यनुवर्तते । निजामिति बहुवचनात् 'णिजिर्-विजिर्-विष्लृ' इति धातूनां ग्रहणम् । नेनेक्ति इति । णिजिर्धातोर्लटि, तिपि 'णो नः' इति णस्य नकारे 'इर इत्संज्ञा वाच्या' इति 'इर्' इत्यस्येत्संज्ञायां लोपे 'निज् + ति' इति जाते, शपि, शपः श्लौ, धातोर्द्वित्वेऽभ्यासकार्ये

---

**√धा धातु लट् लकार (परस्मैपद) के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | दधाति | धत्तः | दधति |
| म० पु० | दधासि | धत्थः | धत्थ |
| उ० पु० | दधामि | दध्वः | दध्मः |

**(आत्मनेपद)**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | धत्ते | दधाते | दधते |
| म० पु० | धत्से | दधाथे | दद्ध्वे |
| उ० पु० | दधे | दध्वहे | दध्महे |

(३) लोट् म० पु० एक०—देहि ('घ्वसोरेद्धावभ्यासलोपश्च' से एत्व तथा अभ्यास का लोप)। (४) लङ्—अदधात् इत्यादि । आत्मनेपद में—अधत्त इत्यादि । (५) विधिलिङ्, परस्मैपद—दध्यात् । आत्मनेपद—दधीत, दधीयाताम् इत्यादि । (६) आशीर्लिङ्, परस्मैपद—धेयात् । आत्मनेपद—धासीष्ट । (७) लुङ्, परस्मैपद—अधात्, अधाताम् इत्यादि । आत्मनेपद-अधित, अधिषाताम् इत्यादि । (८) लृङ्, परस्मैपद—अधास्यत् । आत्मनेपद—अधास्यत ।

**√णिजिर्** (निज्) धातु का अर्थ—'धोना तथा पोषण करना' है ।

**(७२८) पद**—निजाम्, त्रयाणाम्, गुणः, श्लौ । **अनुवृत्ति**—अभ्यासस्य । **विधिसूत्र** ।

**मूलार्थ**—श्लु के विषय में णिज्, विज् और विष् धातु के अभ्यास को गुण होता है ।

**विमर्श**—'अत्र लोपोऽभ्यासस्य' (७।४।५८) से 'अभ्यासस्य' पद की अनुवृत्ति आती है । सूत्रोक्त 'त्रयाणाम्' पद से 'विजिर् पृथग्भावे' (=अलग होना), 'णिजिर् शौचपोषणयोः' (=शुद्ध करना व पोषण करना) तथा 'विष्लृ व्याप्तौ' (व्याप्त होना) धातुओं का ग्रहण होता है । तदनुसार—"णिजिर् आदि तीन धातुओं के अभ्यास को श्लु होने पर गुण होता है ।"

निनिजे । नेक्ता२ । नेक्ष्यति । नेक्ष्यते । नेनेक्तु । नेनिग्धि । **( ७२९ ) नाभ्यस्तस्याचि पिति सार्वधातुके ७।३।८७ ।** अभ्यस्तस्याचि पिति सार्वधातुके लघूपधगुणो न । नेनिजानि । नेनिक्ताम् । अनेनेक् । अनेनिक्ताम् । अनेनिजुः । अनेनिजम् । अनेनिक्त । नेनिज्यात् । नेनिजीते । निज्यात् । निक्षीष्ट । अनिजत् । अनैक्षीत् । अनिक्त । अनेक्ष्यत् । अनेक्ष्यत । एवं विजिर् पृथग्भावे । विष्लृ व्याप्तौ । इति जुहोत्यादिः ।

इति जुहोत्यादिप्रकरणम् ।

---

'निजां त्रयाणां गुणः श्लौ' इत्यनेनाभ्यासस्य गुणे एकारे, 'चोः कुः' इति जस्य गत्वे, 'खरि च' इति गस्य कत्वे 'पुगन्तलघूपधस्य च' इति गुणे 'नेनेक्ति' इति ।

( ७२९ ) **नाभ्यस्तस्याचीति ।** 'पुगन्त०' इत्यतो लघूपधस्येति, 'मिदेर्गुणः' इत्यतो गुण इति चानुवर्तते । अत आह—**अभ्यस्तस्याचि इत्यादिना । नेनिजानि ।** निज्धातोर्लोटि, उत्तमपुरुषैकवचने मिपि, अनुबन्धलोपे 'मेर्निः' इति मेर्न्यादेशे 'आडुत्तमस्य पिच्च' इति आटि, शपः श्लौ, द्वित्वेऽभ्यासकार्ये जकारलोपे 'निजां त्रयाणां गुणः श्लौ' इत्यभ्यासस्याचो गुणे, 'पुगन्तलघूपधस्य च' इति गुणे प्राप्ते 'नाभ्यस्तस्याचि पिति

---

**उदाहरण**—( १ ) √णिजिर्+लट् ( 'इर्' की इत्संज्ञा, लोप—'इर इत्संज्ञा वाच्या' 'ण्'='न्'—'णो नः' ल्=तिप्=ति, शप्=श्लु, द्वित्व, अभ्यासकार्य )—निनिज् ति ( 'इ'='ए'—गुण—'निजां त्रयाणां गुणः श्लौ,' 'ज्'='ग्'—'चोः कुः' 'ग्'='क्'—'खरि च', गुण—'पुगन्त०' )=नेनेक्ति । ( २ ) लट् प्र० पु० द्वि० में—नेनिक्तः ( यहाँ 'तस्' के 'ङित्' होने से गुण नहीं होता ) । ( ३ ) लट्, प्र० पु० बहु० में—नेनिजति ( 'अदभ्यस्तात्' से 'झ्'='अत्' ) ।

**√णिजिर् धातु, लट् लकार ( परस्मैपद ) के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | नेनेक्ति | नेनिक्तः | नेनिजति |
| म० पु०— | नेनेक्षि | नेनिक्थः | नेनिक्थ |
| उ० पु०— | नेनेज्मि | नेनिज्वः | नेनिज्मः |

**( आत्मनेपद )**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | नेनिक्ते | नेनिजाते | नेनिजते |
| म० पु०— | नेनिक्षे | नेनिजाथे | नेनिग्ध्वे |
| उ० पु०— | नेनिज़े | नेनिज्वहे | नेनिज्महे |

( ४ ) लिट्, परस्मैपद—निनेज । आत्मनेपद—निनिजे । ( ५ ) लुट्—नेक्ता । ( ६ ) लृट्, परस्मैपद—नेक्ष्यति । **आत्मनेपद—नेक्ष्यते ।** ( ७ ) लोट्, परस्मैपद प्र० पु० एक०—नेनेक्तु, नेनिक्तात् । ( ८ ) लोट्, म० पु० एक०—नेनिग्धि ( झलन्त होने से 'हि'='धि'—'हुझल्भ्यो हेर्धिः' ) ।

**( ७२९ ) पद**—न, अभ्यस्तस्य, अचि, पिति, सार्वधातुके । **अनुवृत्ति**—लघूपधस्य, गुणः । **विधिसूत्र ।**

**मूलार्थ**—अजादि पित् सार्वधातुक के परवर्ती रहते अभ्यस्तसंज्ञक धातु को लघूपध गुण नहीं होता ।

# अथ दिवादिप्रकरणम्

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । (७३०) दिवादिभ्यः श्यन् ३।१।६९। दिवादिभ्यः श्यन्प्रत्ययः स्यात्कर्तरि सार्वधातुके । शपो-

---

सार्वधातुके' इति तन्निषेधे 'नेनिजानि' इति । अनिजर्दिति । निज्धातोर्लुङि तिपि, च्लौ, 'इरितो वा' इति विभाषया च्लेरङि तिप इकारलोपे 'अनिजत्' इति । अङभावपक्षे तु—च्लेः सिच्यनुबन्धलोपे 'अस्तिसिचोऽपृक्ते' इति ईटि, 'वदव्रजहलन्तस्याचः' इति वृद्धौ 'चोः कुः' इति कुत्वेन गत्वे, 'खरि चे'ति गस्य कत्वे, सिचः सस्य षत्वे, क्ष् संयोगे क्षकारे, अटि च 'अनैक्षीदि'ति ।

इति जुहोत्यादिः ।

---

अथ श्यन्विकरणान् धातून् निरूपयितुमुपक्रमते—

(७३०) दिवादिभ्य इति । 'कर्तरि शप्' इत्यतः कर्तरीति, 'सार्वधातुके यगि'-

---

**विमर्श**—यहाँ 'पुगन्तलघूपधस्य च' (७।३।८६) से 'लघूपधस्य' तथा 'मिदेर्गुणः' (७।३।८२) से 'गुणः' पद की अनुवृत्ति आती है । अतः "अजादि पित् सार्वधातुक के परे होने पर अभ्यस्त-संज्ञक धातु को लघूपध गुण नहीं होता ।"

**उदाहरण**—(१) √निज्+लोट् (=मिप्=मि=नि—'मेर्निः' 'आट्'='आ'—'आडुत्तमस्य पिच्च', शप्, शप्=श्लु, द्वित्व, अभ्यासकार्य='ज्' का लोप)—नि निज् आ नि ('इ'='ए'—गुण—'निजां त्रयाणाम्०', 'पुगन्तलघूपधस्य च' से प्राप्त गुण का 'नाभ्यस्तस्याचि०' से निषेध)=नेनिजानि ।

आत्मनेपद में—(१) नेनिक्ताम् । (२) लङ्, परस्मैपद प्र० पु०—अनेनेक्, अनेनिक्ताम्, अनेनिजुः । उ० पु० एक०—अनेनिजम् । आत्मनेपद—अनेनिक्त । (३) विधिलिङ्, परस्मैपद—नेनिज्यात् । आत्मनेपद—नेनिजीत । (४) आशीर्लिङ्, परस्मैपद—निज्यात् । आत्मनेपद—निक्षीष्ट । (५) √निज्+लुङ् (=तिप्=ति, च्लि, च्लि=अङ्='अ' विकल्प से—'इरितो वा' इकारलोप—'इतश्च')=अनिजत् । 'अङ्' के अभावपक्ष में (च्लि=सिच्='स्', ईट्, वृद्धि—'वदव्रजहलन्तस्याचः', 'ज्'='ग्'—'चोः कुः' 'ग्'='क्'—'खरि च' षत्व, क्+ष्=क्ष्, अट्)=अनैक्षीत् । आत्मनेपद में—√निज्+लुङ् (=त, अट्, च्लि, च्लि=सिच्='स्', 'स्' का लोप—'झलो झलि', 'ज्'='ग्'—'चोः कुः', 'ग्'='क्'—'खरि च')=अनिक्त । (६) लृङ्, परस्मैपद—अनेक्ष्यत् । आत्मनेपद—अनेक्ष्यत । इसी प्रकार विजिर् (=अलग होना) और विष्लृ (=व्याप्त होना) इत्यादि धातुओं के रूप भी जानने चाहिए ।

**जुहोत्यादि प्रकरण समाप्त ।**

---

'श्लु' विकरणवाली धातुओं की रूपसिद्धि प्रदर्शित करने के अनन्तर अब 'श्यन्' (य) विकरण वाली धातुओं के रूपों की साधनिका का विवेचन किया जा रहा है—

√दिवु (दिव्) धातु का अर्थ—"क्रीडा, जुआ खेलना, व्यवहार, चमकना, स्तुति करना, प्रसन्न होना, नशा करना, सोना, इच्छा करना और जाना है ।"

**(७३०) पद**—दिवादिभ्यः, श्यन् । **अनुवृत्ति**—कर्तरि, सार्वधातुके । **विधिसूत्र ।**

ऽपवादः । 'हलि चे'ति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् । एवं षिवु तन्तुसन्ताने ।

---

त्यतः सार्वधातुके इति चानुवर्तते । इत्यभिप्रेत्य आह—**दिवादिभ्यः श्यन्नित्यादि ।** दीव्यति । उकारेत्संज्ञक-दिवुधातोः लटि प्रथमपुरुषैकवचने तिप्यनुबन्धलोपे, प्राप्तं शपं प्रबाध्य 'दिवादिभ्यः श्यन्' इति श्यन्प्रत्ययेऽनुबन्धलोपे 'हलि चे'त्यनेन इकारस्य दीर्घे 'दीव्यति' इति सिद्धम् ।

---

**मूलार्थ**—कर्त्रर्थक सार्वधातुक के परवर्ती रहते दिवादिगण पठित धातुओं से श्यन् प्रत्यय होता है ।

**विमर्श**—प्रकृत सूत्र में 'कर्तरि शप्' (१।३।६८) से 'कर्तरि' तथा 'सार्वधातुके यक्' (१।३।६७) से 'सार्वधातुके' की अनुवृत्ति आती है । तदनुसार—"कर्त्रर्थक सार्वधातुक प्रत्यय के परे रहते दिवादिगण की धातुओं से श्यन् प्रत्यय होता है ।"

**उदाहरण**—(१) √दिव्+लट् (=तिप्=ति, सार्वधातुक संज्ञा, प्राप्त 'शप्' का बाधकर श्यन्='य'—'दिवादिभ्यः श्यन्', 'इ'='ई'—दीर्घ—'हलि च')=दीव्यति । इसी प्रकार—दीव्यतः, दीव्यन्ति इत्यादि रूप बनते हैं । (२) लिट् प्र० पु० एकव०—दिदेव ।

**√दिव् धातु लिट् लकार के रूप**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु० | दिदेव | दिदिवतुः | दिदिवुः |
| म० पु० | दिदेविथ | दिदिवथुः | दिदिव |
| उ० पु० | दिदेव, दिदिव | दिदिविव | दिदिविम |

सेट् धातु होने से वलादि आर्धधातुक को इट् का आगम होता है । (३) लुट्—देविता । (४) लृट्—देविष्यति । लोट्, लङ् और विधिलिङ् में श्यन् होने पर 'हलि च' से दीर्घ होता है । (५) लोट्—दीव्यतु । (६) लङ्—अदीव्यत् । (७) विधिलिङ्—दीव्येत् । (८) आशीर्लिङ्—दीव्यात् । (९) √दिव्+लुङ् (=तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्' इट्—'आर्धधातुकस्येड् वलादेः', ईट्='अस्तिसिचोऽपृक्ते', 'स्' का लोप—'इट ईटि' लघूपध गुण)=अदेवीत् ।

**√दिव् धातु लुङ् लकार के रूप**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु० | अदेवीत् | अदेविष्टाम् | अदेविषुः |
| म० पु० | अदेवीः | अदेविष्टम् | अदेविष्ट |
| उ० पु० | अदेविषम् | अदेविष्व | अदेविष्म |

(१०) लृङ्—अदेविष्यत् ।

**√षिवु** (=सिव्) धातु का अर्थ—'सिलाई करना, कपड़ा बुनना' है । इसके रूप भी पूर्वोक्त 'दिव्' धातु के समान बनते हैं । लट्—सीव्यति । लिट्—सिषेव । लुट्—सेविता । लृट्—सेविष्यति । लोट्—सीव्यतु । लङ्—असीव्यत् । विधिलिङ्—सीव्येत् । आशीर्लिङ्—सीव्यात् । लुङ्—असेवीत् । लृङ्—असेविष्यत् ।

**( ७३१ ) सिवादीनां वाऽड्व्यवायेऽपि ८।३।७१ ।** परिनिविभ्यः परेषामेषामड्व्यवायेऽपि वा सस्य षः । पर्यषीव्यत् । पर्यसीव्यत् । नृती गात्रविक्षेपे । नृत्यति । ननर्त । नर्तिता । **( ७३२ ) सेऽसिचि कृतचृतछृदतृदनृतः ७।२।५७ ।** एभ्यः सिज्भिन्नस्य सादेरार्धधातुकस्येड् वा स्यात् । नर्तिष्यति–नर्त्स्यति । नृत्यात् । अनर्तीत् । अनर्तिष्यत्–अनर्त्स्यत् । त्रसी उद्वेगे । 'वा भ्राशे'ति श्यन् वा । त्रस्यति–त्रसति । तत्रास ।

---

( ७३१ ) सिवादीनामिति । 'अपदान्तस्य मूर्द्धन्यः' इत्यधिकृतम् । 'परिनिविभ्यः' इत्यतः 'परिनिविभ्यः' इत्यनुवर्तते । तदाह—**सस्य ष इति । पर्यषीव्यदिति ।** 'परि + असीव्यत्' इत्यवस्थायां 'सिवादीनां वाऽड्व्यवायेऽपि' इति वैभाषिके सस्य षत्वे 'पर्यषीव्यत्' इति । षत्वाभावे—'पर्यसीव्यदि'ति ।

**( ७३२ ) सेऽसिचि इति ।** 'उदितो वा' इत्यतो वेति, 'आर्धधातुकस्येडि'ति चानुवर्तते । तदाह—**एभ्य इत्यादि । नर्तिष्यति इति ।** ईकारेत्संज्ञकनृतीधातोर्लृटि तत्स्थाने तिपि अनुबन्धलोपे 'स्यतासी लृलुटोः' इति स्यप्रत्यये 'नृत् स्य ति' इति जाते

---

**( ७३१ ) पद**—सिवादीनाम्, वा, अट्, व्यवाये, अपि । **अनुवृत्ति**—परिनिविभ्यः । **विधिसूत्र ।**

**मूलार्थ**—परि, नि और वि से परवर्ती सिवादि धातुओं के सकार को अट् के व्यवधान में भी विकल्प से षत्व होता है । पर्यषीव्यत इत्यादि ।

**विमर्श**—'अपदान्तस्य मूर्द्धन्यः' का अधिकार है । 'परिनिविभ्यः' ( ८।३।७१ ) से 'परिनिविभ्यः' की अनुवृत्ति आती है । तदनुसार—"परि, नि और वि' उपसर्गों से परे सिवादि ( सिवु, सह, सुट्, स्तु और स्वञ्ज ) के 'स्' के स्थान में विकल्प से 'अट्' के व्यवधान में भी षकार होता है ।"

**उदाहरण**—( १ ) परि+असीव्यत ( 'स्'='ष्'—विकल्प से—'सिवादीनाम्०' ) = पर्यषीव्यत । षत्व के अभावपक्ष में—पर्यसीव्यत ।

**√नृती** ( =नृत ) धातु का अर्थ 'नाचना' है । ( १ ) लट्—नृत्यति । ( २ ) नृत+लिट् ( =तिप्=णल्='अ', द्वित्व, अभ्यास संज्ञा, 'ऋ'='अ'—'उरत्' रपर, हलादिशेष )—न नृत अ ( गुण, रपर )=ननर्त । ( ३ ) लुट्—नर्तिता ( वलादि आर्धधातुक को इट् ) ।

**( ७३२ ) पद**—से, असिचि, कृतचृतछृदतृदनृतः । **अनुवृत्ति**—वा, आर्धधातुकस्येड् । **विधिसूत्र ।**

**मूलार्थ**—कृत, चृत, छृद्, तृद् तथा नृत धातुओं से परवर्ती सिच्-भिन्न सकारादि आर्धधातुक को विकल्प से 'इट्' का आगम होता है । नर्तिष्यति, नर्त्स्यति इत्यादि ।

**विमर्श**—'उदितो वा' ( ७।२।५६ ) से 'वा' तथा—'आर्धधातुकस्येड् वलादेः' ( ७।२।३५ ) से 'आर्धधातुकस्येड्' की अनुवृत्ति आती है । इस प्रकार—"कृती, चृती, उच्छृदिर्, उतृदिर् तथा नृती धातुओं से उत्तरवर्ती सिच्-भिन्न सकारादि आर्धधातुक को विकल्प से इट् का आगम होता है ।"

**उदाहरण**—( १ ) √नृत+लट् ( =तिप्=ति, स्य )—नृत स्य ति ( आर्धधातुक संज्ञा, विकल्प से इट्='इ', लघूपध गुण, रपर, षत्व )=नर्तिष्यति । इट् के अभावपक्ष में—नर्त्स्यति । ( २ ) आशीर्लिङ्—नृत्यात । ( ३ ) √नृत+लुङ् ( =तिप्=ति, च्लि=सिच्='स्' इट्,

**( ७३३ ) वा जृभ्रमुत्रसाम् ६।४।१२४ ।** एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा स्तः । त्रेसतुः-तत्रसतुः । त्रेसिथ-तत्रसिथ । त्रसिता । शो तनूकरणे ।
**( ७३४ ) ओतः श्यनि ७।३।७१ ।** ओतो लोपः स्यात् श्यनि । श्यति । श्यतः । श्यन्ति । 'आदेच उपदेशेऽशिति' । शशौ । शशतुः । शशुः । शाता । शास्यति । श्यतु । अश्यत् ।

---

आर्धधातुकसंज्ञायां 'सेऽसिचि कृतचृतछृदतृदनृतः' इत्यनेन विकल्पेन इडागमेऽनुबन्धलोपे 'पुगन्तलघूपधस्य चे'ति उपधागुणे रपरे, सस्य षत्वे 'नर्तिष्यति' इति । इडभावपक्षे—'नर्त्स्यति' इति सिद्धम् ।

( ७३३ ) **वा जृभ्रमुत्रसामिति ।** अत्र 'अत एकहल्मध्ये' इत्यतो लिटि इति, 'थलि च सेटि' इति, 'घ्वसोरेद्धावि'त्यत एदिति 'गमहन' इत्यतः कितीति चानुवर्तते । अत आह—**एषां कितीति । त्रेसतुरिति ।** त्रस्धातोर्लिटि तसि, तसः स्थानेऽतुसादेशे 'लिटि धातोरनभ्यासस्य' इति धातोर्द्वित्वेऽभ्यासत्वे हलादिशेषे 'वा जृभ्रमुत्रसामि'त्यनेन विभाषया एत्वेऽभ्यासलोपे च कृते सस्य रुत्वे विसर्गे 'त्रेसतुः' इति । पक्षे 'तत्रसतुः' इति ।

( ७३४ ) **ओतः श्यनीति ।** 'घोर्लोपो लेटि वा' इत्यस्माल्लोप इत्यनुवर्तते । तदाह—**ओतो लोप इति । श्यति ।** 'शो तनूकरणे' इत्यस्माद्धातोर्लटि तिपि 'दिवा-

---

'ति' के इकार का लोप—'इतश्च' ईट्—'अस्तिसिचोऽपृक्ते', 'स्' का लोप—'इट ईटि', अट्, गुण, रपर )=अनर्तीत् । ( ४ ) लृङ् में विकल्प से इट्—अनर्तिष्यत् । अनर्त्स्यत् ।

**√त्रसी** ( त्रस् ) धातु का अर्थ—'घबराना, डरना' है । ( १ ) त्रस्+लट् ( =तिप्=ति, प्राप्त शप् का बाधकर विकल्प से श्यन्=य—'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः' )=त्रस्यति । श्यन् के अभावपक्ष में—शप्—त्रसति । लिट्—तत्रास ।

**( ७३३ ) पद**—वा, जृभ्रमुत्रसाम् । **अनुवृत्ति**—लिटि, थलि च सेटि, एत्, अभ्यासलोपश्च, किति । **विधिसूत्र ।**

**मूलार्थ**—कित् लिट् और सेट् थल् के परवर्ती रहते जृ, भ्रम् और त्रस् धातु को विकल्प से एत्व और अभ्यास का लोप होता है । त्रेसतुः । तत्रसतुः ।

**विमर्श**—प्रकृत सूत्र में 'अत एकहल्मध्येऽनादेशादेर्लिटि' ( ६।४।१२० ) से लिटि, 'थलि च सेटि' ( ६।४।१२१ ) सूत्र 'घ्वसोरेद्धा०' ( ६।४।११९ ) से 'एत्, अभ्यासलोपश्च' तथा 'गमहन' ( ६।४।९८ ) से 'किति' पदों की अनुवृत्ति आती है । तदनुसार—"कित् लिट् तथा सेट् थल् के परे रहते जृ, भ्रमु और त्रस् के अकार के स्थान में एत्व और अभ्यास का लोप विकल्प से होता है ।"

**उदाहरण**—( १ ) त्रस्+लिट् ( =तस्, द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'अ'='ए' तथा अभ्यास का लोप विकल्प से—'वा जृभ्रमुत्रसाम्', स्—र्=ः ) त्रेसतुः । एत्व और अभ्यासलोप के अभावपक्ष में—तत्रसतुः । ( २ ) लिट् म० पु० एकव० में विकल्प से एत्व, अभ्यासलोप, इट्—त्रेसिथ, तत्रसिथ । ( ३ ) लुट्—त्रसिता ।

**√शो** धातु का अर्थ—'पतला करना, कम करना' है ।

**( ७३४ ) पद**—ओतः, श्यनि । **अनुवृत्ति**—लोपः । **विधिसूत्र ।**

**मूलार्थ**—'श्यन्' के परवर्ती रहते ओकार का लोप होता है । श्यति इत्यादि ।

श्येत् । शायात् । 'विभाषा घ्राधेडि'ति सिचो वा लुक् । अशात् । अशाताम् । लुगभावे-'यमरमे'ति इट्सकौ । अशासीत् । अशासिष्टाम् । अशास्यत् । छो छेदने । छ्यति । चच्छौ । चच्छतुः । षो अन्तकर्मणि । स्यति । ससौ । अभिष्यति । अभिससौ । साता । सास्यति । स्यतु । अभ्यष्यत् । सेयात् । दो अवखण्डने । द्यति । ददौ । प्रणिदाता । दास्यति । देयात् । अदात् । अदास्यत् । व्यध ताडने । 'ग्रहिज्ये'ति सम्प्रसा-

---

दिभ्यः श्यन्' इति श्यनि, अनुबन्धलोपे 'ओतः श्यनि' इति ओकारस्य लोपे 'श्यति' इति । **'अशादि'ति** । शोधातोर्लुङि, तत्स्थाने तिप्यनुबन्धलोपे, अटि, 'आदेच उपदेशेऽशिति' इत्यनेन ओकारस्य आकारादेशे, च्लौ, च्लेः सिचयनुबन्धलोपे, 'विभाषा घ्राधेट्शाच्छासः' इत्यनेन विकल्पेन सिचो लोपे 'इतश्च' इति इकारलोपे 'अशात्' इति । लोपाऽभावपक्षे—'अशा स् त्' इति जाते 'अस्तिसिचोऽपृक्ते' इत्यनेन ईटि, अनुबन्धलोपे 'अशासीत्' इति रूपम् ।

---

**विमर्श**—'यहाँ 'घोर्लोपो लेटि वा' ( ७।३।७० ) से 'लोपः' पद की अनुवृत्ति आ रही है । अतः "श्यन् ( य ) के परे रहते 'ओ' का लोप होता है ।"

**उदाहरण**—( १ ) शो+लट् ( =तिप्=ति, श्यन्='य', 'ओ' का लोप—'ओतः श्यनि' ) =श्यति । ( २ ) लट् प्र० पु० द्वि—श्यतः । ( ३ ) लट् प्र० पु० बहु०—श्यन्ति । ( ४ ) शो+लिट् ( =तिप्=णल्, 'ओ'='आ'—'आदेच उपदेशे०', द्वित्व, अभ्यास संज्ञा, ह्रस्व, 'णल्' ='औ'—'आत औ णलः' आ+औ='औ' वृद्धि—'वृद्धिरेचि' )=शशौ ।

### √शो धातु, लिट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | शशौ | शशतुः | शशुः |
| म० पु० | शशिथ, शशाथ | शशथुः | शश |
| उ० पु० | शशौ | शशिव | शशिम |

( ५ ) लुट्—शाता । ( ६ ) लृट्—शास्यति । ( ७ ) लोट्—श्यतु । ( ८ ) लङ्—अश्यत् । ( ९ ) विधिलिङ्—श्येत् । आशीर्लिङ्—शायात् । ( १० ) √शो+लुङ् ( =तिप्=ति, अट्, च्लि=सिच्='स' इकारलोप—'इतश्च' आत्व )—अ शा स् त् ( सिच्='स्' का विकल्प से लुक्—'विभाषा घ्राधेट्शाच्छासः' )=अशात् । लुक् के अभावपक्ष में ( 'यमरम' से इट् और सक्='स्' )—अ शा इ स् स् त् ( ईट्, स् का लोप—'इट ईटि' दीर्घ )=अशासीत् । ( ११ ) लुङ् प्र० पु० द्वि०—अशाताम् । लुक् के अभावपक्ष में—अशासिष्टाम् । ( १२ ) लृङ्—अशास्यत् ।

**√छो** धातु का अर्थ—'काटना' है । ( १ ) √छो+लट् ( =तिप्=ति, श्यन्, 'ओ' का लोप—'ओतः श्यनि' ) =छ्यति । ( २ ) लिट्—चच्छौ । ( ३ ) लिट् प्र० पु० द्विवचन—चच्छतुः ।

**√षो** ( =सो ) धातु का अर्थ—'नाश करना' है । ( १ ) √सो+लट् ( =तिप्=ति, श्यन्, ओकार का लोप—'ओतः श्यनि' )=स्यति । ( २ ) लिट्—ससौ । ( ३ ) अभि+स्यति ( षत्व )=अभिष्यति । ( ४ ) लुट्—साता । ( ५ ) लृट्—सास्यति ( ६ ) लोट्—स्यतु । ( ७ ) लङ्—'अस्यत्' अभि+अस्यत् ( यण्, षत्व )=अभ्यष्यत् । ( ८ ) आशीर्लिङ्—सेयात् ।

रणम् । विध्यति । विव्याध । विविधतुः । विविधुः । विव्यद्ध । विव्यधिथ–व्यद्ध । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् । पुष पुष्टौ । पुष्यति । पुपोष । पुपोषिथ । पोष्टा । पोक्ष्यति । 'पुषादी'त्यङ्–आपरस्मैपदात् । अपुषत् । अपोक्ष्यत् । शुष शोषणे । शुष्यति । शुशोष । शोष्टा । शोक्ष्यति । शुष्यतु । अशुष्यत् । अशुषत् । अशोक्ष्यत् ।

---

विव्याध इति । 'व्यध ताडने' इत्यस्माद्धातोर्लिटि, लिटः स्थाने तिपि, 'तिपो णल्यनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वेऽभ्यासत्वे, हलादिशेषे, 'व्य व्यध् अ' इति जाते 'लिटचभ्यासस्योभयेषाम्' इत्यभ्यासस्य सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'व्, इ् व्यध् अ' इति स्थिते 'अत उपधायाः' इति वृद्धौ 'विव्याध' इति । 'अपुषत्' इति । पुष्धातोर्लुङि, तत्स्थाने तिपि, अटि, तिप इकारलोपे, च्लौ, च्लेः स्थाने 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' इत्यनेन अङि अनुबन्धलोपे, ङित्त्वाद् गुणाभावे 'अपुषत्' इति ।

---

√दो धातु का अर्थ—'काटना' है। ( १ ) लट्—द्यति। ( २ ) लिट्—ददौ। ( ३ ) लुट्—प्रनि+दाता ( णत्व )=प्रणिदाता। ( ४ ) लृट्—दास्यति। ( ५ ) लिङ्—देयात् ( 'एर्लिङि' से एत्व )। ( ६ ) लुङ् में 'सिच्' का 'गातिस्था' से लुक्—अदात्। ( ७ ) लृङ्—अदास्यत्।

√व्यध् धातु का अर्थ—'बेधना' है। ( १ ) √व्यध्+लट् ( =तिप्=ति, श्यन्='य', श्यन् के अपित् होने से 'सार्वधातुकमपित्' से ङिद्वद्भाव, 'य्'='इ' सम्प्रसारण—'ग्रहिज्या०' 'अ'='इ' में सम्मिलित पूर्वरूप—'सम्प्रसारणाच्च' )=विध्यति। ( २ ) √व्यध्+लिट् ( =तिप्=णल्='अ', द्वित्व, अभ्यास संज्ञा, हलादिशेष )–व्य व्यध् अ ( अभ्यास के 'य्'='इ' सम्प्रसारण—'लिट्यभ्यासस्योभयेषाम्' पूर्वरूप )—वि व्यध् अ ( उपधावृद्धि—'अत उपधायाः' )=विव्याध। ( ३ ) अतुस् आदि कित् प्रत्ययों में 'सम्प्रसारणं तदाश्रयं च कार्यं बलवत्' परिभाषा के द्वारा द्वित्व से पूर्व सम्प्रसारण होने पर द्वित्व होकर—विविधतुः, विविधुः आदि रूप बनते हैं। ( ४ ) लिट् म० पु० एकवचन 'थल्' में भारद्वाज नियम से वैकल्पिक इट् होता है—विव्यधिथ। इट् के अभावपक्ष में 'थ्'='ध्'—'झषस्तथोर्धोऽधः' 'ध्'='द्'—जश्त्व )=व्यद्ध। ( ५ ) लृट्—व्यत्स्यति ( चर्त्व )। ( ६ ) विधिलिङ्—विध्येत्। ( ७ ) आशीर्लिङ्—विध्यात्। ( ८ ) √व्यध्+लुङ् ( =तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्=स्, ईट्, 'अ'='आ' वृद्धि—'वदव्रजहलन्तस्याचः', 'ध्'='त्'—'खरि च' )=अव्यात्सीत्।

√पुष धातु का अर्थ—पुष्ट होना है। ( १ ) √पुष्+लट् ( =तिप्=ति, शप् का बाधकर श्यन्='य' )=पुष्यति। ( २ ) लिट्—पुपोष। ( ३ ) लिट्—म० पु० एकवचन—पुपोषिथ। ( ४ ) लुट्—पोष्टा। ( ५ ) लृट्—पोक्ष्यति। ( ६ ) √पुष्+लुङ् ( =तिप्=ति, अट्, इकारलोप, च्लि=अङ्—'पुषादि०' )=अपुषत्। ( ७ ) लृङ्—अपोक्ष्यत्।

√शुष् धातु का अर्थ—'सूखना' है। ( १ ) लट्—शुष्यति। ( २ ) लिट्—शुशोष। ( ३ ) लुट्—शोष्टा ( 'पुगन्त०' से गुण )। ( ४ ) लृट्—शोक्ष्यति। ( ५ ) लोट्—शुष्यतु। ( ६ ) लङ्—अशुष्यत्। ( ७ ) लुङ्—अशुषत्। ( ८ ) लृङ्—अशोक्ष्यत्।

√णश् ( नश् ) धातु का अर्थ—'नाश होना' है। ( १ ) णश् ( 'ण्'='न्'—'णो नः' )—नश्+लट् ( =तिप्=ति, श्यन्='य' )=नश्यति। ( २ ) लिट्—ननाश। ( ३ ) ( लिट् के प्र० पु० द्विवचन तथा बहुवचन में 'अत एकहल्मध्ये०' से एत्व, अभ्य का लोप )—नेशतुः, नेशुः।

णश अदर्शने । नश्यति । ननाश । नेशतुः । नेशुः । (७३५) रधादिभ्यश्च ७।२।४५। रध्-नश्-तृप्-दृप्-द्रुह्-मुह्-ष्णुह्-ष्णिह्-एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात् । नेशिथ । (७३६) मस्जिनशोर्झलि ७।१।६०। मस्जिनशोर्नुम् स्याज्झलि । ननंष्ठ । नेशिव-नेश्व । नेशिम-नेश्म । नशिता-नंष्टा । नशिष्यति-नङ्क्ष्यति । नश्यतु । अनश्यत् । नश्येत् । नश्यात् । अनशत् । प्रणश्यति । (७३७) नशेः षान्तस्य ८।४।३६। षान्तस्य नशेर्णत्वं न स्यात् । प्रनंष्टा । अन्तग्रहणं भूतपूर्वप्रतिपत्त्यर्थम् । प्रनङ्क्ष्यति । रध हिंसा-

---

(७३५) रधादिभ्यश्चेति । 'आर्धधातुकस्येड् वलादेरि'त्यनुवर्तते । 'स्वरतिसूति०' इत्यतो वेति चानुवर्तते । अत आह—**रधनशित्यादिना** ।

(७३६) **मस्जिनशोर्झलीति** । 'इदितो नुम्' इत्यतो नुमित्यनुवर्तते । तदाह—**मस्जिनशोर्नुमिति । नेशिथ, ननंष्ठ** । नश्धातोर्लिटि मध्यमपुरुषैकवचने सिपि, सिपः थलादेशेऽनुबन्धलोपे धातोर्द्वित्वेऽभ्यासत्वे हलादिशेषे 'रधादिभ्यश्चे'त्यनेन विभाषया इडागमेऽनुबन्धलोपे 'थलि च सेटि' इति एत्वेऽभ्यासलोपे च कृते 'नेशिथ' इति । इडभावपक्षे—'न नश् थ' इति स्थिते 'मस्जिनशोर्झलि' इति नुमि 'व्रश्चभ्रस्ज०' इत्यादिना षत्वे, ष्टुत्वे अनुस्वारे च कृते 'ननंष्ठ' इति ।

---

**(७३५) पद**—रधादिभ्यः, च । **अनुवृत्ति**—वलादेः, अर्धधातुकस्य, इट्, वा । **विधिसूत्र** ।

**मूलार्थ**—रध् आदि धातुओं से परवर्ती वलादि आर्धधातुक को विकल्प से इट्='इ' का आगम होता है ।

**विमर्श**—सूत्रार्थ की पूर्ति हेतु—'आर्धधातुकस्येड् वलादेः' (७।२।३५) सूत्र तथा 'स्वरतिसूति०' (७।२।४४) से 'वा' की अनुवृत्ति आती है । तदनुसार—"रध् आदि आठ धातुओं से परवर्ती वलादि आर्धधातुक प्रत्यय को विकल्प से 'इट्' का आगम होता है ।"

**(७३६) पद**—मस्जिनशोः, झलि । **अनुवृत्ति—**नुम् । **विधिसूत्र** ।

**मूलार्थ**—झलादि प्रत्यय के परवर्ती रहते 'मस्ज्' तथा 'नश्' धातु को 'नुम्' का आगम होता है ।

**विमर्श**—'इदितो नुम् धातोः' (७।१।५८) से 'नुम्' की अनुवृत्ति आती है । तदनुसार पूर्वोक्त अर्थ होता है ।

**उदाहरण**—(१) √नश्+लिट् (=सिप्=थल्='थ' द्वित्व, अभ्यास संज्ञा, हलादिशेष, विकल्प से इट्='इ'—'रधादिभ्यश्च')—न नश् इ थ (एत्व, अभ्यास का लोप—'थलि च सेटि') =नेशिथ । 'इट्' के अभावपक्ष में—'न नश् थ' (नुम्='न्'—'मस्जिनशोर्झलि', न्=ं—अनुस्वार—'नश्चापदान्तस्य झलि', 'श्'='ष्'—षत्व, 'थ्'='ठ्'—ष्टुत्व)=ननंष्ठ । (२) लिट् उ० पु० द्विवचन तथा बहुवचन में विकल्प से इट्—नेशिव, नेश्व । नेशिम, नेश्म । (३) लुट्—नशिता, नंष्टा (विकल्प से इट्) । (४) लृट् इट् पक्ष में—नशिष्यति । इट् के अभावपक्ष में—नश् स्य ति (श्=ष्—'व्रश्चभ्रस्ज०', स्=ष्—षत्व, ष्=क्—'षढोः कः सि', क्+ष्=क्ष्, नुम्=ं=परसवर्ण)=नङ्क्ष्यति । (५) लोट्—नश्यतु । (६) लङ्—अनश्यत् । (७) विधिलिङ्—नश्येत् । (८) आशीर्लिङ्—नश्यात् । (९) लुङ् में—च्लि=अङ्—अनशत् । (१०) प्र+नश्यति (णत्व)=प्रणश्यति ।

**(७३७) पद**—नशेः, षान्तस्य । **अनुवृत्ति**—णः, न । **विधिसूत्र**।

संराद्धयोः । रध्यति । ( ७३८ ) **रधिजभोरचि ७।१।६१ ।** रधिजभोरचि नुम् स्यात् । ररन्ध । ररन्धतुः । ररन्धिथ–ररद्ध । ररन्धथुः । ररन्धिव–ररन्ध्व । ( ७३९ ) **नेट्यलिटि रधेः ७।१।६२ ।** लिड्वर्जे इटि रधेर्नुम् न स्यात् । रधिता–रद्धा । रधिष्यति–

---

( ७३७ ) **'नशेः षान्तस्ये'ति ।** 'रषाभ्यामि'त्यतो ण इति, 'न भाभूपू०' इत्यतः नेति चानुवर्तते । तदाह—**णत्वं न स्यादिति ।**

( ७३८ ) **रधिजभोरचीति ।** 'इदितो नुम्' इत्यस्मान्नुमीत्यनुवर्तते । अत आह—**नुम् स्यादिति ।**

( ७३९ ) **नेट्यलिटि रधेरिति ।** 'इदितो नुम् धातोः' इत्यतो नुमित्यनुवर्तते । तदाह—**लिड्वर्जे इटीति ।**

---

**मूलार्थ**—षान्त 'नश्' धातु को णत्व का निषेध होता है ।

**विमर्श**—'रषाभ्यां नो णः' से 'णः' तथा 'न भाभूपू०' ( ८।४।३३ ) से 'न' पदों की अनुवृत्ति आती है । अतः 'षकारान्त नश् धातु को णत्व नहीं होता ।'

**उदाहरण**—( १ ) प्र+नंष्टा ( 'उपसर्गादसमासेऽपि' से प्राप्त णत्व का 'नशेः षान्तस्य' से निषेध )=प्रनंष्टा ।

यहाँ शंका होती है कि सूत्र में अन्तग्रहण क्यों किया ? 'षान्तस्य' के स्थान में 'षस्य' होने पर भी 'पदस्य' का विशेषण होने से तदन्तविधि होकर 'षान्तस्य पदस्य' अर्थ हो सकता था । इसका समाधान है कि अन्त ग्रहण भूतपूर्व षान्त लाभार्थ है । अतः सम्प्रति षकारान्त न होने पर भी ( पूर्व में षकारान्त रहने पर भी ) नकार के स्थान में णकार आदेश का अभाव हुआ । 'प्र+नङ्क्ष्यति' यहाँ 'ष्'='क्' हो जाने पर भी भूतपूर्व षान्त होने से णत्व का अभाव हुआ ।

√रध् धातु का अर्थ—'हिंसा करना, सिद्ध होना' है । ( १ ) रध्+लट् ( =तिप्=ति, श्यन्='य' )=रध्यति ।

( ७३८ ) **पद**—रधिजभोः, अचि । **अनुवृत्ति**—नुम् । **विधिसूत्र ।**

**मूलार्थ**—अजादि प्रत्यय के परवर्ती रहते रध् और जभ् धातु को नुम् का आगम होता है ।

**विमर्श**—यहाँ 'इदितो नुम् धातोः' ( ७।१।५८ ) से 'नुम्' पद की अनुवृत्ति आती है ।

**उदाहरण**—( १ ) √रध्+लिट् ( =तिप्=णल्=अ, नुम्='न्'—'रधिजभोरचि' द्वित्व, अभ्यास संज्ञा, हलादिशेष )=ररन्ध । ( २ ) रध्+लिट् ( =तस्=अतुस् , नुम्, द्वित्व, अभ्यास संज्ञा, हलादिशेष, स्=र्=ः )=ररन्धतुः । ( ३ ) √रध्+लिट् ( =सिप्=थल्=थ, विकल्प से इट्—'रधादिभ्यश्च', नुम्—'रधिजभोरचि' द्वित्व, अभ्यास संज्ञा, हलादिशेष )= ररन्धिथ । इट् के अभावपक्ष में—रध्+थ ( द्वित्व, अभ्यास संज्ञा, हलादिशेष )—ररध् थ ( 'थ्'= 'ध्' 'ध्' 'द्' )=ररद्ध । ( ४ ) लिट् म० पु० द्विव०—ररन्धथुः । ( ५ ) लिट् उ० पु० द्विवचन में 'रधादिभ्यश्च' से विकल्प से इट्—ररन्धिव । इडभावपक्ष में—एत्व, अभ्यास का लोप—रेध्व ।

( ७३९ ) **पद**—न, इटि, अलिटि, रधेः । **अनुवृत्ति**—नुम् । **विधिसूत्र ।**

**मूलार्थ**—लिट्-भिन्न इट् के परवर्ती रहते रध् धातु को नुम् नहीं होता ।

**विमर्श**—प्रकृत सूत्र में 'इदितो नुम्०' ( ७।१।५८ ) से 'नुम्' की अनुवृत्ति आती है । तदनुसार—"लिट् सम्बन्धी इट् को छोड़कर अन्य इट् में रध् धातु को नुम् का आगम नहीं होता ।"

रत्स्यति । अङि नुम् । 'अनिदिताम्'िति नलोपः । अरधत् । तृप प्रीणने । तृप्यति । ततर्प । ततृपतुः । ततृपुः । रधादित्वाद्वेट् । ततर्पिथ–तत्रप्थ–ततर्प्थ । तर्पिता–तर्प्ता–त्रप्ता । * स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः * । अतर्पीत्–अत्राप्सीत्–अतार्प्सीत्–अतृपत् । दृप हर्ष-मोहनयोः । मोहनं गर्वः । दृप्यति इत्यादि । 'रधादित्वादिमौ वेट्कावमर्थमनुदात्तता ।' द्रुह जिघांसायाम् । द्रुह्यति । दुद्रोह । दुद्रुहतुः । दुद्रुहुः ।

---

अतर्पीदिति । 'तृप प्रीणने' इत्यस्माद्धातोः लुङि, तत्स्थाने प्रथमपुरुषैकवचने तिप्यनुबन्धलोपे, अडागमेऽनुबन्धलोपे 'अ तृप् ति' इति जाते च्लौ 'च्लेः सिच्' इति सिचि प्राप्ते 'स्पृशमृशकृषतृपां च्लेः सिज्वा वाच्यः' इति विकल्पेन सिचि, 'रधादिभ्यश्च' इति विकल्पेन इडागमेऽनुबन्धलोपे 'अस्तिसिचोऽपृक्ते' इत्यनेन ईटि, 'पुगन्तलघूपधस्य च' इत्यनेन उपधागुणे रपरे, 'इट ईटि' इत्यनेन सिचो लोपे 'इतश्च' इत्यनेन तिप इकारलोपे संयोगे च 'अतर्पीत्' इति । सिजभावपक्षे 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्'…

---

**उदाहरण**—( १ ) √रध्+लुट् ( =तिप्, तास्, तिप्=डा=आ )—रध् तास् आ ( विकल्प से इट्—'रधादिभ्यश्च' 'रधिजभोरचि' से प्राप्त नुम् का 'नेट्यलिटि रधेः' से निषेध, टिलोप )=रधिता । इट् के अभावपक्ष में—रध् ता ( 'त्'='ध्'—'झषस्तथोर्धोऽधः' 'ध्'='द्' )= रद्धा । ( २ ) ( लृट् में भी विकल्प से इट्, नुम् का निषेध )—रधिष्यति । इट् के अभावपक्ष में ( 'ध्'='त्' )—रत्स्यति । ( ३ ) रध्+लुङ् ( =तिप्=ति, अट्, इकारलोप 'च्लि'='अङ्'—'पुषादि०', नुम्—'रधिजभोरचि' 'न्' का लोप—'अनिदिताम्०' )=अरधत् ।

**√तृप्** धातु का अर्थ—'तृप्त होना' है । ( १ ) √तृप्+लट् ( =तिप्=ति, श्यन्='य' ) =तृप्यति । ( २ ) √तृप्+लिट् ( =तिप्=णल्='अ', द्वित्व, अभ्यास संज्ञा 'ऋ'='अ'—'उरत्', रपर, हलादिशेष, गुण, रपर ) =ततर्प । ( ३ ) लिट् प्र० पु० द्वि०—ततृपतुः । ( ४ ) लिट् प्र० पु० बहु०—ततृपुः । ( ५ ) √तृप्+लिट् ( =सिप्=थल्='थ', द्वित्व, अभ्यासकार्य, हलादिशेष )—त तृप् थ ( विकल्प से इट्—'रधादिभ्यश्च' गुण, रपर )=ततर्पिथ । इट् के अभावपक्ष में विकल्प से अम्='अ'—'अनुदात्तस्य', यण् )=तत्रप्थ । इट् तथा अम् के अभावपक्ष में—गुण, रपर—ततर्प्थ । ( ६ ) √तृप्+लुट् ( =तिप्=ति, तास्, ति=डा='आ' विकल्प से इट्—'रधादिभ्यश्च' )—तृप् इ तास् आ ( गुण, रपर, 'टि' का लोप—'डित्वसामर्थ्यादभस्यापि टेर्लोपः' )=तर्पिता । इट् के अभावपक्ष में विकल्प से अम्='अ' यण् )=त्रप्ता । इट् तथा अम् के अभावपक्ष में—तर्प्ता । ( ७ ) √तृप्+लुङ् ( =तिप्=ति, अट्, च्लि=सिच्='स्' विकल्प से—'स्पृशमृशकृषतृपां च्लेः सिज्वा वाच्यः', विकल्प से इट्—'रधादिभ्यश्च', ईट्, 'स्' का लोप—'इट ईटि' उपधागुण, रपर; इकारलोप )=अतर्पीत् । सिच् तथा इट् के अभावपक्ष में—विकल्प से अम्='अ'—'अनुदात्तस्य' )—अ तृ अ प् स् ई त ( यण्, उपधावृद्धि—'वदव्रज०' ) =अत्राप्सीत् । अम् तथा इट् के अभावपक्ष में—अ तृप् स् ई त ( उपधावृद्धि, रपर )—अतार्प्सीत् । सिच् के अभाव में ( च्लि=अङ्='अ'—'पुषादि०' )—अ तृप् अ त=अतृपत् ।

**√दृप्** धातु का अर्थ—'प्रसन्न होना, गर्व करना' है । ( १ ) लट्—दृप्यति । **रधादित्वादिति** । दोनों धातुओं ( तृप्, दृप् ) का रधादिगण में पाठ होने से ये दोनों धातु वेट् ( विकल्प से इट् वाली ) हैं । केवल आगम मात्र होने के लिए इनका अनुदात्त धातुओं में पाठ किया गया है ।

**√द्रुह** धातु का अर्थ—जिघांसा='नाश करने की इच्छा करना' है । ( १ ) लट्—द्रुह्यति ।

'वा द्रुहे'ति वा घः। पक्षे ढः। 'झषस्तथोर्धोऽधः' दुद्रोहिथ–दुद्रोग्ध–दुद्रोढ। दुद्रुहथुः। दुद्रुह। दुद्रोह। दुद्रुहिव। दुद्रुहिम। द्रोहिता–द्रोग्धा–द्रोढा। द्रोहिष्यति–ध्रोक्ष्यति। ढत्वघत्वयोस्तुल्यं रूपम्। अद्रुहत्। अद्रोहिष्यत्–अध्रोक्ष्यत्। मुह वैचित्ये। वैचित्यम् अविवेकः। मुह्यति। मुमोह। मुमुहतुः। मुमुहुः। मुमोहिथ–मुमोग्ध–मुमोढ। मोहिता–मोग्धा–मोढा। मोहिष्यति–मोक्ष्यति। मुह्यतु। अमुह्यत्। मुह्येत्। मुह्यात्। अमुहत्। अमोहिष्यत्–अमोक्ष्यत्। ष्णुह उद्गिरणे। स्नुह्यति। सुष्णोह। सुष्णुहतुः। सुष्णुहुः। सुष्णोहिथ–सुष्णोग्ध–सुष्णोढ। सुष्णुहथुः। सुष्णुह। सुष्णोह। सुष्णुहिव–

---

रस्याम्' इत्यनेन विकल्पेन अमागमे अनुबन्धलोपे 'रधादिभ्यश्च' इति इडभावपक्षे च 'अ तृ अ प् स ई त्' इति जाते 'इको यणचि' इति यणि 'वदव्रजहलन्तस्याचः' इति उपधावृद्धौ संयोगे **'अत्राप्सीत्'**। अमोऽभावपक्षे इडभावपक्षे च 'अतृप् स् ई त्' इति जाते, उपधावृद्धौ रपरत्वे संयोगे च कृते **'अतार्प्सीत्' इति**। सिजभावपक्षे च 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' इति च्लेरङादेशे **'अतृपत्'** इति चत्वारि रूपाणि भवन्तीति।

---

(२) लिट् में--दुद्रोह, दुद्रुहतुः, दुद्रुहुः--इत्यादि। (३) √द्रुह्+लिट् (=सिप्=थल्=थ, द्वित्व, अभ्यास संज्ञा, हलादिशेष)—दुद्रु ह् थ (विकल्प से इट्='इ'—'रधादिभ्यश्च', गुण 'उ'='ओ'—'पुगन्त०')=दुद्रोहिथ। इट् के अभावपक्ष में—'ह्'='घ्' विकल्प से—'वा द्रुह-मुहष्णुहष्णिहाम्', 'थ्'='ध्'--'झषस्तथोर्धोऽधः', 'घ्'='ग्'--'झलां जश् झशि')=दुद्रोग्ध। घत्व के अभावपक्ष में—दुद्रुह् थ ('ह्'='ढ्'--'हो ढः', 'थ्'='ध्'—'झषस्तथो०', 'ध्'='ढ्'—ष्टुत्व, 'ढ्' का लोप—'ढो ढे लोपः', 'उ'='ओ' गुण—'पुगन्त०')=दुद्रोढ।

### √द्रुह् धातु लिट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | दुद्रोह | दुद्रुहतुः | दुद्रुहुः |
| म० पु० | दुद्रोहिथ, दुद्रोग्ध, दुद्रोढ | दुद्रुहथुः | दुद्रुह |
| उ० पु० | दुद्रोह | दुद्रुहिव | दुद्रुहिम |

(४) लुट् में विकल्प से इट्--द्रोहिता। इट् के अभावपक्ष में—(पूर्ववत् विकल्प से 'ह्'='घ्', 'त'='ध्', 'घ्'='ग्' गुण)—द्रोग्धा। इट् तथा घत्व के अभावपक्ष में—द्रोढा। (५) लृट्—द्रोहिष्यति, ध्रोक्ष्यति। ढत्व और घत्व दोनों पक्ष में समान रूप बनते हैं। (६) लुङ् में—च्लि=अङ्, गुणाभाव—अद्रुहत्। (७) लृङ् में इट् विकल्प—अद्रोहिष्यत्, अध्रोक्ष्यत्।

**√मुह्** धातु—'अविवेक' अर्थ में है। (१) लट्—मुह्यति। (२) लिट् प्र० पु०—मुमोह, मुमुहतुः, मुमुहुः। (३) लिट् म० पु० एकव०—पूर्ववत् विकल्प से इट्—मुमोहिथ। इट् के अभाव पक्ष में विकल्प से घत्व, पूर्ववत् कार्य—मुमोग्ध। घत्व के अभाव में ढत्व—मुमोढ। (४) लुट्—मोहिता, मोग्धा, मोढा। (५) लृट्—मोहिष्यति, मोक्ष्यति। (६) लोट्—मुह्यतु। (७) लङ्—अमुह्यत्। (८) विधिलिङ्—मुह्येत्। (९) आशीर्लिङ्—मुह्यात्। (१०) लुङ् में अङ्—अमुहत्। (११) लृङ्—अमोहिष्यत्, अमोक्ष्यत्।

**√ष्णुह्** धातु उद्गिरण (वमन) अर्थ में है। (१) √ष्णुह् (ष्=स्—'धात्वादेः षः सः', 'ण्'='न्'—'णो नः')—स्नुह्+लट् (=तिप्=ति, श्यन्='य')=स्नुह्यति। (२) √स्नुह्

सुष्णुह्व । सुष्णुहिम–सुष्णुह्म । स्नोहिता–स्नोग्धा–स्नोढा । स्नोहिष्यति–स्नोक्ष्यति । स्नुह्यतु । अस्नुहत् । अस्नोहिष्यत्–अस्नोक्ष्यत् । ष्णिह प्रीतौ । स्निह्यति । सिष्णेह । सिष्णिहतुः । सिष्णिहुः । सिष्णेहिथ–सिष्णेग्ध–सिष्णेढ । स्नेहिता–स्नेग्धा–स्नेढा । स्नेहिष्यति–स्नेक्ष्यति । स्निह्यतु ।.अस्निहत् । अस्नेहिष्यत्–अस्नेक्ष्यत् । वृत् । रधादयः समाप्ताः । तुष तुष्टौ । तुष्यति । तुतोष । तोष्टा । तोक्ष्यति । तुष्यतु । दुष वैकृत्ये । दुष्यति । दुदोष । दोष्टा । दोक्ष्यति । दुष्यतु । श्लिष आलिङ्गने । श्लिष्यति ।

**( ७४० ) श्लिष आलिङ्गने ३।१।४६ ।** श्लिषश्च्लेः क्सः स्यादालिङ्गने । 'अश्लिक्षत् कन्यां देवदत्तः' । आलिङ्गने किम् ? समश्लिषज्जतु काष्ठम् । प्रत्यासत्ताविह श्लिषिः ।

---

**दुष वैकृत्ये ।** वैकृत्यं विकारः, दुष्यति विकृतो भवतीत्यर्थः ।

( ७४० ) **श्लिष इति ।** च्लेरिति, 'शल इगुपधादि'त्यतः क्स इत्यनुवर्तते । तदाह—'**श्लिषश्च्लेरिति ।** **अश्लिक्षदिति ।** श्लिष्धातोर्लुङि तत्स्थाने प्रथमपुरुषैकवचने

---

+लिट् ( =तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, हलादिशेष )—सुस्नुह् अ ( गुण, षत्व, णत्व )=सुष्णोह । ( ३ ) लिट् प्र० पु० द्विवचन—सुष्णुहतुः । ( ४ ) लिट् प्र० पु० बहुव०—सुष्णुहुः । ( ५ ) लिट् म० पु० एकव०—सुष्णोहिथ, सुष्णोग्ध, सुष्णोढ । ( ६ ) म० पु० द्विव०—सुष्णुहथुः । ( ७ ) म० पु० बहुव०—सुष्णुह । ( ८ ) लिट् उत्तमपुरुष—सुष्णोह, सुष्णुहिव–सुष्णुह्व, सुष्णुहिम–सुष्णुह्म ( इट् विकल्प ) । ( ९ ) लुट्—स्नोहिता, स्नोग्धा, स्नोढा । ( १० ) लृट्—स्नोहिष्यति, स्नोक्ष्यति । ( ११ ) लोट्—स्नुह्यतु । ( १२ ) लङ्—अस्नुहत । ( १३ ) लृङ्—अस्नोहिष्यत, अस्नोक्ष्यत ।

√**ष्णिह्** ( स्निह् ) धातु का अर्थ 'प्रीति करना' है । ( १ ) लट्—स्निह्यति । ( २ ) लिट् प्र० पु०—सिष्णेह, सिष्णिहतुः, सिष्णिहुः । ( ३ ) लिट् म० पु० एकवचन ( पूर्ववत् इट् विकल्प, पक्ष में विकल्प से घत्व )—सिष्णेहिथ, सिष्णेग्ध, सिष्णेढ । ( ४ ) लुट्—स्नेहिता, स्नेग्धा, स्नेढा । ( ५ ) लृट्—स्नेहिष्यति, स्नेक्ष्यति । ( ६ ) लोट्—स्निह्यतु । ( ७ ) लङ्—अस्निहत । ( ८ ) लृङ्—अस्नेहिष्यत, अस्नेक्ष्यत । **रधादिगण समाप्त हुआ ।**

√**तुष्** धातु का अर्थ—'सन्तुष्ट होना' है । ( १ ) लट्—तुष्यति । ( २ ) लिट्—तुतोष । ( ३ ) लुट्—तोष्टा । ( ४ ) √तुष्+लृट् ( =तिप्=ति, स्य )—तुष् स्य ति ( 'ष्'='क्' 'स्' ='ष्'—षत्व, क्+ष='क्ष्' गुण )=तोक्ष्यति । ( ५ ) लोट्—तुष्यतु ।

√**दुष्** धातु का अर्थ—'विकृत होना' है । ( १ ) लट्—दुष्यति । ( २ ) लिट्—दुदोष । ( ३ ) लुट्—दोष्टा । ( ४ ) लृट्—दोक्ष्यति । ( ५ ) लोट्—दुष्यतु ।

√श्लिष् धातु का अर्थ—'आलिङ्गन करना' है । ( १ ) लट्—श्लिष्यति ।

**( ७४० ) पद**—श्लिषः, आलिङ्गने । **अनुवृत्ति**—च्लेः, क्सः । **विधिसूत्र ।**

**मूलार्थ**—आलिङ्गन अर्थ में श्लिष् धातु से उत्तरवर्ती 'च्लि' के स्थान में क्स ( =स ) आदेश होता है । 'अश्लिक्षत' इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'च्लेः सिच्' ( ३।१।४४ ) से 'च्लेः' तथा 'शल इगुपधात' ( ३।१।४५ ) से 'क्सः' की अनुवृत्ति आ रही है । तदनुसार—"श्लिष् धातु से परे 'च्लि' के स्थान में 'क्स' आदेश होता है, आलिङ्गन अर्थ में ।"

**उदाहरण**—( १ ) √श्लिष्+लुङ् ( =तिप्=ति, इकारलोप—'**इतश्च**', च्लि, च्लि=क्स

क्रुध क्रोधे । क्रुध्यति । चुक्रोध । क्रोद्धा । क्रोत्स्यति । क्रुध्यतु । क्षुध बुभुक्षायाम् । क्षुध्यति । चुक्षोध । क्षोद्धा । क्षोत्स्यति । शुध शौचे । शुध्यति । शुशोध । शोद्धा । शोत्स्यति । षिधु संराद्धौ । सिध्यति । सिषेध । सेद्धा । सेत्स्यति । असिधत् । असेत्स्यत् । शमु उपशमे । ( ७४१ ) शमामष्टानां दीर्घः श्यनि ७।३।७४ । शम्-तम्-दम्-श्रम्-भ्रम्-क्षम्-क्लम्-मदामष्टो दीर्घः श्यनि । प्रणिशाम्यति । शशाम । शेमतुः । शेमुः ।

---

तिपि अनुबन्धलोपे 'इतश्चे'तीकारलोपे, अटि, च्लौ, 'श्लिष आलिङ्गने' इति क्सादेशेऽनुबन्धलोपे 'अश्लिष् स् त्' इति जाते 'षढोः कः सि' इति षस्य कत्वे 'आदेशप्रत्यययोः' इति सस्य षत्वे उभयोः संयोगेन क्षत्वे 'अश्लिक्षत्' इति रूपम् ।

( ७४१ ) शमामष्टानामिति । स्पष्टम् । शाम्यति । शम्धातोर्लटि, तत्स्थाने प्रथमपुरुषैकवचने तिप्यनुबन्धलोपे 'दिवादिभ्यः श्यन्' इति श्यनि, अनुबन्धलोपे 'शमा-

---

'स'—'श्लिष आलिङ्गने' अट्='अ' का आगम )—अ श्लिष् स त ( 'ष्'='क्'—'षढोः कः सि'='स्'='ष्'—'आदेशप्रत्यययोः', क्+ष्+क्ष् )=अश्लिक्षत्कन्यां देवदत्तः ( देवदत्त ने वात्सल्य से कन्या का आलिङ्गन किया । )

प्रत्युदाहरण—( १ ) सम् अश्लिषत् जतु काष्ठम् ( =लाख ने काठ के साथ संयोग किया । ) यहाँ संयोग सम्बन्धार्थक श्लिष् धातु का प्रयोग है । अतः प्रकृत सूत्र से 'क्स' नहीं हुआ । क्योंकि यहाँ अनालिङ्गन अर्थ है ।

√'क्रुध्' धातु का अर्थ—'क्रोध करना' है । ( १ ) √क्रुध्+लट् ( =तिप्=ति, श्यन्='य' )=क्रुध्यति । ( २ ) √क्रुध+लिट् ( =तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'क्'='च्'—'कुहोश्चुः', गुण )=चुक्रोध । ( ३ ) लुट्—क्रोद्धा । ( ४ ) लृट्—क्रोत्स्यति । ( ५ ) लोट्—क्रुध्यतु ।

क्षुध् धातु का अर्थ—'भूख लगना' है । ( १ ) लट्—क्षुध्यति । ( २ ) लिट्—चुक्षोध । ( ३ ) लुट्—क्षोद्धा । ( ४ ) लृट्—क्षोत्स्यति ।

√शुध् धातु का अर्थ—'पवित्र होना' है । ( १ ) लट्—शुध्यति । ( २ ) लिट्—शुशोध । ( ३ ) लुट्—शोद्धा । ( ४ ) लृट्—शोत्स्यति ।

√षिधु धातु का अर्थ—'सिद्ध होना' है । ( १ ) √षिध् ( 'ष्'='स्'—'धात्वादेः षः सः' )—सिध्+लट् ( =तिप्=ति, श्यन्='य' )=सिध्यति । ( २ ) लिट्—सिषेध । ( ३ ) लुट्—सेद्धा । ( ४ ) लृट्—सेत्स्यति । ( ५ ) √सिध्+लुङ् ( =तिप्=ति, इकारलोप, च्लि, च्लि=अङ्='अ', अट् )=असिधत् । ( ६ ) लृङ्—असेत्स्यत् ।

√शमु ( उकारेत्संज्ञक ) धातु—'शान्त होना' है ।

( ७४१ ) पद—शमाम्, अष्टानाम्, दीर्घः, श्यनि । विधिसूत्र ।

मूलार्थ—शम् आदि आठ धातुओं के अङ्ग को दीर्घ होता है, श्यन् के परवर्ती रहते । 'प्रणिशाम्यति' इत्यादि ।

उदाहरण—( १ ) √शम्+लट् ( =तिप्=ति, श्यन्='य' 'अ'='आ'—दीर्घ—'शमामष्टानां दीर्घः श्यनि' )=शाम्यति । प्रनि+शाम्यति ( णत्व—'नेर्गद०' )=प्रणिशाम्यति । ( २ ) लिट् प्र० पु० एकव०—शशाम । ( ३ ) लिट् प्र० पु० द्विव०—शेमतुः ( एत्व तथा अभ्यास का लोप ) । ( ४ ) लिट् प्र० पु० बहुव०—शेमुः । ( ५ ) लिट् म० पु० एकव०—शेमिथ ।

शेमिथ । शमिता । शमिष्यति । शाम्यतु । अशमत् । अशमिष्यत् । तमु काङ्क्षायाम् । ताम्यति । ततान । तमिता । तमिष्यति । ताम्यतु । अतमत् । अतमिष्यत् । दमु उपशमे । दाम्यति । ददाम । दमिता । दमिष्यति । दाम्यतु । अदमत् । अदमिष्यत् । श्रमु तपसि खेदे च । श्राम्यति । शश्राम । श्रमिता । श्रमिष्यति । श्राम्यतु । अश्रमत् । अश्रमिष्यत् । भ्रमु अनवस्थाने । 'वा भ्राशे'ति श्यन्वा । भ्राम्यति-भ्रमति । 'वा जॄभ्रमुत्रसाम्' । भ्रेमतुः-बभ्रमतुः । पुषादित्वादङ् । अभ्रमत् । शेषं भ्वादिवत् । क्षमू सहने । क्षाम्यति । चक्षाम । चक्षमतुः । चक्षमुः । चक्षमिथ-चक्षन्थ । चक्षमिव-चक्षण्व । चक्षमिम-चक्षण्म । क्षमिता-क्षन्ता । क्षमिष्यति-क्षंस्यति । क्षाम्यतु । अयं

---

मष्टानां दीर्घः श्यनि' इति दीर्घे 'शाम्यति' इति । **क्षमू सहने** । ऊदित्वात् थलि वमादौ च विकल्पेन इड् भवति । अत आह—**चक्षमिथ इत्यादि** । षित्वाऽषित्वयोः

---

( ६ ) लुट्—शमिता । ( ७ ) लृट्—शमिष्यति । ( ८ ) लोट्—शाम्यतु । ( ९ ) लुङ्—अशमत ( अङ् ) । ( १० ) लृङ्—अशमिष्यत ।

√तमु धातु का अर्थ—'आकाङ्क्षा करना' है । ( १ ) √तम्+लट् ( =तिप्=ति, श्यन् 'य', दीर्घ )=ताम्यति । ( २ ) लिट्—तमाम । ( ३ ) लुट्—तमिता । ( ४ ) लृट्—तमिष्यति । ( ५ ) लोट्—ताम्यतु । ( ६ ) लुङ्—अतमत । ( ७ ) लृङ्—अतमिष्यत ।

√**दमु** धातु का अर्थ—'शान्त करवाना' है । ( १ ) लट्—दाम्यति ( दीर्घ ) । ( २ ) लिट्—ददाम । ( ३ ) लुट्—दमिता । ( ४ ) लृट्—दमिष्यति । ( ५ ) लोट्—दाम्यतु । ( ६ ) लुङ्—अदमत । ( ७ ) लृङ्—अदमिष्यत ।

√श्रमु धातु—'तपस्या करना और खेद करना' अर्थ में है । ( १ ) लट्—श्राम्यति ( दीर्घ ) । ( २ ) लिट्—शश्राम । ( ३ ) लुट्—श्रमिता । ( ४ ) लृट्—श्रमिष्यति । ( ५ ) लोट्—श्राम्यतु । ( ६ ) लुङ्—अश्रमत ( अङ् ) । ( ७ ) अश्रमिष्यत ।

√भ्रमु धातु का अर्थ—'भ्रमण करना, घूमना' है । ( १ ) √भ्रमु ( उकार की इत्संज्ञा लोप ) —भ्रम्+लट् ( =तिप्=ति, श्यन्='य' विकल्प से—'वा भ्राश०' दीर्घ—'शमामष्टानाम्' ) =भ्राम्यति । 'श्यन्' के अभावपक्ष में शप्—भ्रमति । ( २ ) √भ्रम्+लिट् ( =तस्=अतुस्, द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'भ्'='ब्'—'अभ्यासे चर्च', एत्व अभ्यास का लोप विकल्प से—'वा जॄभ्रमुत्रसाम्' स्=र्=ः )=भ्रेमतुः । एत्व अभ्यासलोप के अभावपक्ष में—बभ्रमतुः । ( ३ ) √भ्रम्+लुङ् ( =तिप्=ति, इकारलोप, अट् च्लि=अङ्='अ' )=अभ्रमत । शेष रूप भ्वादिगण की तरह बनते हैं ।

√क्षम् ( ऊदित ) का अर्थ—'सहन करना' है । ( १ ) क्षम्+लट् ( =तिप्=ति, श्यन्='य', दीर्घ ) =क्षाम्यति । ( २ ) √क्षम्+लिट् ( =तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'क्'='च्'—'कुहोश्चुः' )—चक्षम् अ ( वृद्धि )—चक्षाम । ( ३ ) लिट् प्र० पु० द्विवचन—चक्षमतुः । ( ४ ) लिट् प्र० पु० बहुवचन—चक्षमुः । ( ५ ) √क्षम्+लिट् ( =सिप्=थल्=थ, द्वित्व, अभ्यास संज्ञा, हलादिशेष, चुत्व )—चक्षम् थ ( विकल्प से इट्='इ'—'स्वरतिसूति०' )=चक्षमिथ । इट् के अभावपक्ष में—अनुस्वार, परसवर्ण—चक्षन्थ । ( ६ ) √क्षम्+लिट् ( =वस्=व, द्वित्व, अभ्यासकार्य )—चक्षम् व ( विकल्प से इट् )=चक्षमिव । इट् के अभावपक्ष में ( म्=ं अनुस्वार='ण्' परसवर्ण )=चक्षण्व । ( ७ ) लिट् उ० पु० बहुवचन—चक्षमिम, चक्षण्म । ( ८ ) लुट्—क्षमिता, क्षन्ता ( विकल्प से इट् ) । ( ९ ) लृट्—क्षमिष्यति,

न षित्। 'अषितः क्षाम्यतेः क्षान्तिः क्षमूषः क्षमतेः क्षमा'। क्लमु ग्लानौ। 'ष्ठिवुक्लमु-चमामि'ति दीर्घः। क्लाम्यति। चक्लाम। क्लमिता। क्लमिष्यति। क्लाम्यतु। अक्लमत्। अक्लमिष्यत्। मदी हर्षे। माद्यति। ममाद। मदिता। अमदत्। असु क्षेपणे। अस्यति। आस। असिता। असिष्यति। (७४२) अस्यतेस्थुक् ७।४।१७। अस्यतेस्थुक् स्यात् अङि। 'अस्यती'त्यङ्। आस्थत्। यसु प्रयत्ने। (७४३) यसो-

---

फलभेदं श्लोकार्द्धेन सङ्गृह्णाति—अषित इति। अषितः क्षाम्यतेः = श्यन्विकरणपठितस्य क्षम्धातोः क्तिनि क्षान्तिरिति रूपम्। अषित्वात् 'षिद्भिदादिभ्यः' इत्यनेनाङ् न भवतीत्यर्थः। क्षमूषस्तु भौवादिकात् षितः क्तिनं प्रबाध्य षित्वादङि 'क्षमा' इति रूपम्।

(७४२) अस्यतेस्थुगिति। 'ऋदृशोऽङि' इत्यत 'अङि' इत्यनुवर्तते। अतः शेषं पूरयति—अङि पर इति।

---

क्षंस्यति। (१०) लोट्—क्षाम्यतु। यह धातु षित् नहीं है। भ्वादिगण पठित 'क्षमूष्' धातु षित् है।

अषित इत्यादि। अषित √क्षमू धातु का क्तिन् प्रत्यय से 'क्षान्तिः' रूप हुआ, 'अनुनासिकस्य०' से उपधादीर्घ। षकारेत्संज्ञक क्षमूष् का 'षिद्भिदादिभ्यः' से अङ् तथा स्त्रीत्व-विवक्षा में 'टाप्' होकर 'क्षमा' रूप बनता है।

√क्लमु धातु का अर्थ—'ग्लानि होना' है। (१) क्लम्+लट् (=तिप्=ति, श्यन्= ='य', 'ष्ठिवुक्लमुचमाम्०' से दीर्घ)=क्लाम्यति। (२) लिट्—चक्लाम। (३) लुट्—क्लमिता। (४) लृट्—क्लमिष्यति। (५) लोट्—क्लाम्यतु। (६) लुङ्—अक्लमत् (च्लि =अङ्)। (७) लृङ्—अक्लमिष्यत्।

√मदी धातु का अर्थ 'प्रसन्न होना' है। (१) मद् (ईकारेत्संज्ञक)+लट् (=तिप्= ति, श्यन्='य', दीर्घ—'शमामष्टानाम्०') =माद्यति। (२) लिट्—ममाद। (३) लुट्—मदिता। (४) लङ्—अमदत्।

√असु (उकारेत्संज्ञक) धातु का अर्थ—क्षेपण (=फेंकना) है। (१) √अस्+लट् (=तिप्=ति, श्यन्='य') =अस्यति। (२) अस्+लिट् (=तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, हलादिशेष)—अ अस् अ (अभ्यास के 'अ'='आ'—दीर्घ—'अत आदेः', आ+ अ='आ' सवर्णदीर्घ)—आस। (३) लुट्—असिता। (४) लृट्—असिष्यति।

(७४२) पद—अस्यतेः, थुक्। अनुवृत्ति—अङि। विधिसूत्र।

मूलार्थ—'अङ्' के परवर्ती रहते अस् धातु को थुक् का आगम होता है। आस्थत्।

विमर्श—यहाँ 'ऋदृशोऽङि गुणः' (७।४।१६) से 'अङि' पद की अनुवृत्ति आती है। तदनुसार—"अङ् के परे रहते 'अस्' धातु को थुक् (=थ) का आगम होता है।"

उदाहरण—(१) √अस्+लुङ् (=तिप्=ति, इकारलोप, आट्='आ'—'आडजादीनाम्', च्लि, च्लि=अङ्='अ')—आ अस् अ त ('थुक्'='थ्' का आगम—'अस्यतेस्थुक्' आ+अ='आ' वृद्धि—'आटश्च')=आस्थत्।

√यसु धातु का अर्थ—'प्रयत्न करना' है।

(७४३) पद—यसः, अनुपसर्गात्। अनुवृत्ति—वा, श्यन्। विधिसूत्र।

मूलार्थ—उपसर्ग रहित 'यस्' धातु से विकल्प से श्यन् प्रत्यय होता है।

ऽनुपसर्गात् ३।१।७१। (७४४) संयसश्च ३।१।७२। यसोऽनुपसर्गात्, संयसश्च श्यन्वा। यस्यति–यसति। संयस्यति–संयसति। अनुपसर्गात्किम्? प्रयस्यति। जसु मोक्षणे। जस्यति। जजास। अजसत्। तसु उपक्षये। दसु च। तस्यति। ततास। अतसत्। दस्यति। ददास। अदसत्। वसु स्तम्भे। वस्यति। 'न शसददे'ति निषेधः। ववास। ववसतुः। 'वशादिरि'ति मते तु–बेसतुः। बेसुः। व्युष विभागे। व्युष्यति। वुव्योष। विस प्रेरणे। विस्यति। विवेस। अविसत्। कुस संश्लेषणे। कुस्यति। चुकोस। कोसिता। अकुसत्। वुस उत्सर्गे। वुस्यति। वुवोस। अवुसत्। मुस खण्डने।

---

(७४३, ७४४) 'यसोऽनुपसर्गात्' 'संयसश्च' इति। सूत्रद्वयमिदम्। 'दिवादिभ्यः श्यन्' इत्यतः 'श्यन्' इति, 'वा भ्राश०' इत्यतः 'वे'ति चानुवर्तते। अनुपसर्गाद्यसः श्यन्वा स्यादिति प्रथमसूत्रार्थः। सम्पूर्वात् यशेर्नित्यमेव श्यनः प्राप्तौ वा श्यन्

---

**विमर्श**—यहाँ 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः' (३।१।७०) से 'वा' तथा 'दिवादिभ्यः श्यन्' (३।१।६९) से 'श्यन्' पदों की अनुवृत्ति आती है। तदनुसार—"अनुपसर्गक 'यस्' धातु से विकल्प से श्यन् प्रत्यय होता है।"

**(७४४) पद**—संयसः, च। **अनुवृत्ति**—वा, श्यन्। **विधिसूत्र।**

**मूलार्थ**—'सम्' पूर्वक 'यस्' धातु से श्यन् प्रत्यय विकल्प से होता है।

**विमर्श**—पूर्ववत् 'वा' तथा 'श्यन्' की अनुवृत्ति आ रही है। अतः 'सम्' उपसर्गपूर्वक यस् धातु से विकल्प से श्यन् (=य) होता है।

**उदाहरण**—(१) √यस्+लट् (=तिप्=ति, विकल्प से श्यन्='य्'—'यसोऽनुपसर्गात्') =यस्यति। श्यन् के अभावपक्ष में शप्='अ'—यसति। (२) सम्+यस्+लट् (=तिप् ति, विकल्प से श्यन्='य'—'संयसश्च')=संयस्यति। श्यन् के अभावपक्ष में शप्—संयसति।

**प्रत्युदाहरण**—प्र+यस्+लट् (=ति, 'यसोऽनुपसर्गात्' सूत्र द्वारा उपसर्ग रहित यस् धातु से विकल्प से श्यन् किये जाने से यहाँ (७४३ से) श्यन् नहीं हुआ, अपितु दिवादित्वात् नित्य श्यन्=य)=प्रयस्यति।

√जसु धातु का अर्थ—मोक्षण (छुड़ाना) है। (१) लट्—जस्यति। (२) लिट्—जजास। (३) लुङ्—अजसत् (अङ्)। **√तसु** (उदित्) धातु 'उपक्षय'=(क्षीण होना) अर्थ में है। (१) लट्—तस्यति। (२) लिट्—ततास। (३) लुङ्—अतसत्। **√दसु** (उकारेत्संज्ञक) धातु भी 'उपक्षय' अर्थ में है। (१) लट्—दस्यति। (२) लिट्—ददास। (३) लुङ्—अदसत्।

**√वसु** (उदित्) धातु स्तम्भ (रोकना) अर्थ में है। (१) लट्—वस्यति। (२) लिट्—ववास, ववसतुः (प्राप्त एत्वाभ्यास लोप का निषेध—'न शसददवादिगुणानाम्')। कुछ आचार्य वशादि मानकर एत्व और अभ्यास का लोप-विधान करते हैं। उनके मत में 'बेसतुः' 'बेसुः' रूप बनते हैं।

**√'व्युष'** धातु का अर्थ—'विभाग करना' है। (१) लट्—व्युष्यति। (२) लिट्—वुव्योष। **√विस्** का अर्थ 'प्रेरणा देना' है। (१) लट्—विस्यति। (२) लिट्—विवेस। (३) लुङ्—अविसत्। **√कुस्** का अर्थ—संश्लेषण (चिपकना) है। (१) लट्—कुस्यति। (२) लिट्—चुकोस। (३) लुट्—कोसिता (इट्, गुण)। (४) लुङ्—अकुसत्। **√वुस्**

बुस्यति । बुबोस । मसी परिणामे । परिणामो विकारः । मस्यति । ममास । अमसत् । लुठ विलोडने । लुठ्यति । लुलोठ । उच समवाये । उच्यति । गुणः । 'अभ्यासस्यासवर्णे' । उवङ् । उवोच । ऊचतुः । ऊचुः । मा भवानुचत् । भृशु भ्रंशु अधःपतने । भृश्यति । बभर्श । अभृशत् । 'अनिदिताम्'िति नलोपः । भ्रश्यति । बभ्रंश । अभ्रशत् । वृश वरणे । वृश्यति । ववर्श । अवृशत् । कृश तनूकरणे । कृश्यति । चकर्श । ञितृषा पिपासायाम् । तृष्यति । ततर्ष । हृष तुष्टौ । श्यन्ङौ भ्वादिकाद्विशेषः । हृष्यति । जहर्ष । अहृषत् । रुष रिष हिंसायाम् । रुष्यति । रुरोष । रिष्यति । रिरेष । 'तीषसहे'ति वेट् ।

---

भवतीति द्वितीयसूत्रस्यार्थः । उवोच । उच्धातोर्लिटि तिपि, तिपो णल्यनुबन्धलोपे द्वित्वेऽभ्यासत्वे हलादिशेषे 'अभ्यासस्यासवर्णे' इत्युवङि, गुणे 'उवोच' इति ।

अभ्रशदिति । भ्रंश्धातोर्लुङि तिपि, अनुबन्धलोपे, तिप इकारलोपे अडागमेऽनुबन्धलोपे 'अभ्रंश् त्' इति जाते, च्लौ, च्लेः स्थाने पुषादित्वादङि अनुबन्धलोपे, 'अनिदिताम्'िति नलोपे 'अभ्रशत्' इति रूपम् ।

---

धातु का अर्थ 'त्याग करना' है। (१) लट्—बुस्यति। (२) लिट्—बुबोस। (३) लुङ्—अबुसत्। √मुस् धातु का अर्थ—'खण्डन करना' है। (१) लट्—मुस्यति। (२) लिट्—मुमोस। √मसी धातु—'विकार' अर्थ में है। (१) लट्—मस्यति। (२) लिट्—ममास। (३) लुङ्—अमुसत्। √लुठ धातु का अर्थ विलोडन='मथना' है। (१) लट्—लुठ्यति। (२) लिट्—लुलोठ।

√उच धातु 'समवाय' अर्थ में है। (१) लट्—उच्यति। (२) √उच्+लिट् (=तिप्=णल्='अ' द्वित्व, अभ्यास संज्ञा, हलादिशेष)—उ उच् अ ('उ'='ओ'—गुण, उ=उवङ्='उव्'—'अभ्यासस्यासवर्णे')=उवोच। (३) √उच्+लिट् (=तस्=अतुस्, द्वित्व, अभ्यासकार्य)—उ उच् अतुस् (उ+उ='ऊ' दीर्घ, स्=र्=:) =ऊचतुः। (४) लिट् प्र० पु० बहु०—ऊचुः। (५) मा भवान् उचत् (लुङ्, अट् का निषेध)।

√भृशु तथा भ्रंशु धातु का अर्थ—'नीचे गिरना' है। (१) भृश्+लट् (=ति, श्यन्= ='य')=भृश्यति। (२) √भृश्+लिट् (=तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा 'ऋ'= 'अ'—'उरत्', रपर, हलादिशेष, 'भ्'='ब्'—अभ्यासे चर्च)—ब भृ श् अ (गुण, रपर)= बभर्श। (३) लुङ्—अभृशत्। (१) भ्रंश्+लट् (=ति, श्यन्, 'न्' का लोप—'अनिदिताम्')=भ्रश्यति। (२) लिट्—बभ्रंश। (३) लुङ्—अभ्रशत्। √कृश् धातु का अर्थ 'तनूकरण=दुर्बल होना' है। (१) लट्—कृश्यति। (२) लिट्—चकर्श।

√ञितृषा का अर्थ पिपासा='प्यास लगना' है। (१) √तृष्+लट् (=तिप्—ति, श्यन्—'य')=तृष्यति। (२) लिट्—ततर्ष।

√हृष् धातु का अर्थ—'प्रसन्न होना' है। यह धातु भ्वादिगण में भी पठित है, किन्तु दिवादि में इसका पाठ होने से 'श्यन्' विकरण होता है; लुङ् में च्लि के स्थान में 'अङ्' होता है। यही विशेष है। (१) लट्—हृष्यति। (२) √हृष्+लिट् (=तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, अत्व, रपर, हलादिशेष 'ह्'='झ्', 'झ्'='ज्' गुण, रपर)=जहर्ष। (३) लुङ्—अहृषत्।

√रुष, रिष धातु 'हिंसा' अर्थ में है। (१) लट्—रुष्यति। (२) लिट्—रुरोष। इसी प्रकार—रिष्यति। रिरेष। (३) लुट् में 'तीषसह०' से विकल्प से 'इट्' होता है—रोषिता,

रोषिता–रोष्टा। रेषिता–रेष्टा। कुप क्रोधे। कुप्यति। चुकोप। गुप व्याकुलत्वे। गुप्यति। जुगोप। लुभ गार्ध्ये। गार्ध्यमाकाङ्क्षा। लुभ्यति। लुलोभ। लोभिता–लोब्धा। लोभिष्यति। लुभ्यतु। भ्वादेरवृत्कृतत्वाल्लोभतीत्यप्याहुः। क्षुभ सञ्चलने। क्षुभ्यति। चुक्षोभ। णभ तुभ हिंसायाम्। क्लिदू आर्द्रीभावे। क्लिद्यति। चिक्लेद। चिक्लेदिथ–चिक्लेत्थ। चिक्लिदिव–चिक्लिद्व। चिक्लिदिम–चिक्लिद्म। क्लेदिता–क्लेत्ता। क्लेदिष्यति–क्लेत्स्यति। ञिमिदा स्नेहने। (७४५) मिदेर्गुणः ७।३।८२। मिदेरिको गुणः। स्यादित्संज्ञकशकारादौ प्रत्यये परे। मेद्यति। मिमेद। अमिदत्। ञिक्ष्विदा स्नेहन-मोचनयोः। क्ष्विद्यति। चिक्ष्वेद। ऋधु वृद्धौ। ऋध्यति। आनर्ध।

---

**भ्वादेरवृत्कृतत्वादिति।** भ्वादिगणस्याऽवृत्करणात्=समाप्तेरभावात् (भ्वादेराकृतिगणत्वात्) शपि 'लोभती'त्यपि रूपम्।

(७४५) **मिदेर्गुण इति।** 'इको गुणवृद्धी' इत्यत इक इति षष्ठ्यन्तमुपतिष्ठते। तदाह—**मिदेरिक इति। मेद्यति।** मिद्धातोर्लटि तिपि श्यनि, अनुबन्धलोपे 'मिदेर्गुणः' इति गुणे 'मेद्यति' इति।

---

रोष्टा। रेषिता, रेष्टा। **√कुप्** धातु का अर्थ—'क्रोध करना' है। (१) लट्—कुप्यति। (२) लिट्—चुकोप। **√गुप्** धातु का अर्थ—'व्याकुल होना' है। (१) लट्—गुप्यति। (२) लिट्—जुगोप।

**√लुभ** धातु 'आकाङ्क्षा' अर्थ में है। (१) लट्—लुभ्यति। (२) लिट्—लुलोभ। (३) लुट् में विकल्प से इट्—लोभिता। इट् के अभावपक्ष में—लोब्धा। (४) लृट्—लोभिष्यति। (५) लोट्—लुभ्यतु। भ्वादिगण की समाप्ति न होने से (आकृतिगण होने से) शप्='अ' विकरण, गुण—लोभति।

**√क्षुभ** धातु का अर्थ 'सञ्चलन' (=क्षुभित होना) है। (१) लट्—क्षुभ्यति। (२) लिट्—चुक्षोभ। **√णभ, तुभ** धातु 'हिंसा' अर्थ में हैं।

**√क्लिद्** धातु का अर्थ—'गीला होना' है। (१) लट्—क्लिद्यति। (२) लिट्—चिक्लेद। (३) √क्लिद्+लिट् (=सिप्=थल्=थ, द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'क्'='च्'—'कुहोश्चुः' विकल्प से इट्='इ'—'स्वरतिसूति', गुण)=चिक्लेदिथ। इट् के अभावपक्ष में—चिक्लेत्थ। (४) लिट् उ० पु० द्विव०—चिक्लिदिव, चिक्लिद्व (विकल्प से इट्)। (५) लिट् उ० पु० बहुव०—चिक्लिदिम, चिक्लिद्म। (६) लुट्—क्लेदिता, क्लेत्ता (विकल्प से इट्, गुण)। (७) लृट्—क्लेदिष्यति, क्लेत्स्यति।

**ञिमिदा** (=मिद्) धातु 'स्नेहन' अर्थ में है।

**(७४५) पद**—मिदेः, गुणः। **अनुवृत्ति**—शिति। **विधिसूत्र।**

**मूलार्थ**—इत्संज्ञक शकारादि प्रत्यय के परवर्ती रहते मिद् धातु सम्बन्धी 'इक्' को गुण होता है।

**विमर्श**—'ष्ठिवुक्लमुचमां शिति' (७।३।७५) से 'शिति' पद की अनुवृत्ति आती है। 'इको गुणवृद्धी' परिभाषा द्वारा षष्ठ्यन्त 'इकः' पद की उपस्थिति होती है। तदनुसार—'इत्संज्ञक शकारादि प्रत्यय के परे रहते मिद के इक् के स्थान में गुण होता है।"

**उदाहरण**—(१) √मिद्+लट् (=तिप्=ति, श्यन्='य' 'इ'='ए'—गुण—'मिदे-

आर्द्धत्। गृधु अभिकाङ्क्षायाम्। गृध्यति। जगर्द्ध। अगृधत्। वृत्। पुषादयः समाप्ताः। इति परस्मैपदिनः।

अथात्मनेपदिनः। षूङ् प्राणिप्रसवे। सूयते। सुषुवे। 'स्वरती'ति विकल्पं बाधित्वा 'श्र्युकः किती'ति निषेधे प्राप्ते। क्रादिनियमान्नित्यमिट्। सुषुविषे। सुषुविवहे। सुषुविमहे। सोता। सविता। सविष्यते। सोष्यते। दूङ् परितापे। दूयते। दुदुवे। दीङ् क्षये। दीयते। ( ७४६ ) दीङो युडचि क्ङिति ६।४।६३। दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् स्यात्। * वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ *। दिदीये। ( ७४७ )

---

सूयते। 'षूङ् प्राणिप्रसवे' इत्यस्माद्धातोः लटि तत्स्थाने आत्मनेपदे तप्रत्यये 'दिवादिभ्यः श्यन्' इति श्यनि, अनुबन्धलोपे 'टित आत्मनेपदानां टेरे' इति टेरेत्वे 'धात्वादेः षः सः' इति षस्य सत्वे 'सूयते' इति सिद्धम्।

( ७४६ ) दीङो युडचीति। 'आर्धधातुके' इत्यधिकृतमचा विशेष्यते, तेन तदादिविधिः। 'अची'त्यत्र षष्ठ्यर्थे सप्तमी। अत आह—**दीङः परस्येत्यादिना। दिदीये।** दीङ्धातोर्लिटि तत्स्थाने प्रथमपुरुषैकवचने तप्रत्यये. 'लिटस्तझयोरेशिरेच्' इति 'त'

---

गुणः' )=मेद्यति। ( २ ) लिट्—मिमेद ( ३ ) लुङ्—अमिदत् ( अङ् )। **√ञिक्ष्विदा** ( क्ष्विद् ) धातु 'स्नेहन एवं मोचनार्थक' है। ( १ ) लट्—क्ष्विद्यति। ( २ ) लिट्—चिक्ष्वेद।

**√ऋधु** धातु का अर्थ—'बढ़ना' है। ( १ ) लट्—ऋध्यति। ( २ ) √ऋध्+लिट् ( =तिप् =णल्=अ, द्वित्व, अभ्यासत्व, अत्व, रपर, हलादिशेष )—अ ऋ ध् अ ( अ='आ' दीर्घ—'अत आदेः' नुम्—'इजादेश्च', गुण, रपर )=आनर्ध। ( ३ ) लुङ्—आर्धत्। **'गृधु'** धातु 'अभिकाङ्क्षा' अर्थ में है। ( १ ) लट्—गृध्यति। ( २ ) लिट्—जगर्ध। ( ३ ) लुङ्—अगृधत् ( च्लि=अङ् )। **पुषादिगण समाप्त हुआ।** परस्मैपदी धातुओं के रूपों की सिद्धि-प्रक्रिया समाप्त हुई।

**√षूङ्**=( सू ) धातु का अर्थ 'पैदा होना' ( =जन्म लेना ) है। ( १ ) √षू ( 'ष्'='स्'—'धात्वादेः षः सः' )—सू+लट् ( =आत्मनेपद 'त' श्यन्='य'—'दिवादिभ्यः श्यन्' 'अ'='ए'—'टित आत्मनेपदानां टेरे' )=सूयते। ( २ ) √सू+लिट् ( =त=एश्=ए, द्वित्व, अभ्यास संज्ञा, ह्रस्व, उवङ्=उव्, षत्व )=सुषुवे। ( ३ ) √सू+लिट् ( =थास्=से—'थासः से', द्वित्व, अभ्यास संज्ञा, ह्रस्व )—सुसू से ( 'स्वरतिसूति' से विकल्प से प्राप्त इट् का 'श्र्युकः किति' से निषेध प्राप्त होने पर क्रादिनियम से नित्य इट्='इ', उवङ्, षत्व )=सुषुविषे। ( ४ ) लिट् उ० पु० द्विवचन, बहुवचन में क्रादिनियम से नित्य इट्—सुषुविवहे। सुषुविमहे। ( ५ ) सू+लुट् ( =त=डा=आ, तास् )—सू तास् आ ( विकल्प से इट्—'स्वरतिसूति०' 'उ'='ओ' गुण, 'ओ'='अव्' आदेश, टिलोप )=सविता। इट् के अभावपक्ष में—सोता। ( ६ ) लृट्—सविष्यते, सोष्यते ( विकल्प से इट् )।

**√दूङ्** ( =दू ) धातु का अर्थ 'दुःखी होना' है। इस धातु के रूप भी 'षूङ्' के समान ही बनते हैं। केवल विकल्प से इट् नहीं होता। यह धातु सेट् भी है। ( १ ) लट्—दूयते ( २ ) लिट्—दुदुवे।

**√दीङ्** धातु का अर्थ 'क्षय' ( =नाश होना ) है। ( १ ) लट्—दीयते।

**( ७४६ ) पद**—दीङः, युट्, अचि, क्ङिति। **अनुवृत्ति**—आर्धधातुके।

**मूलार्थ**—दीङ् धातु से परवर्ती अजादि कित ङित् आर्धधातुक को युट् का आगम होता है।

**मीनातिमिनोतिदीङां ल्यपि च ६।१।५०।** एषामात्वं ल्यपि, चाद् अशित्येज्निमित्ते। दाता। दास्यते। अदास्त। डीङ् विहायसा गतौ। डीयते। डिड्ये। पीङ् पाने। पीयते। पिप्ये। माङ् माने। मायते। ममे। माता। प्रीङ् प्रीतौ। अकर्मकः। प्रीयते।

---

इत्यस्य स्थाने एशादेशेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वेऽभ्याससंज्ञायाम् 'ह्रस्वः' इत्यनेन ह्रस्वत्वे 'दि दी ए' इति जाते, युटि प्राप्ते, परत्वात् 'एरनेकाचः' इति यणि प्राप्ते 'वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ' इति नित्यत्वात्—'दीङो युडचि क्ङिति' इत्यनेन युडागमेऽनुबन्धलोपे 'दिदीये' इति रूपम्।

(७४७) **मीनातिमिनोतीति।** 'आदेच उपदेशेऽशिति' त्यतः आदित्यनुवर्तते। तदाह—**एषामात्वं स्यादिति। अदास्त।** दीङ्धातोर्लुङि तत्स्थाने तादेशे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यनेन अडागमेऽनुबन्धलोपे 'मीनातिमिनोतिदीङां ल्यपि चे'त्यनेन ईकारस्य आत्वे 'च्लि लुङि' इति च्लौ, 'च्लेः सिच्' इत्यनेन सिच्यनुबन्धलोपे 'अदास्त' इति। अत्र 'दाधाघ्वदाप्' इति घुसंज्ञायां 'स्थाघ्वोरिच्चे'त्याकारस्य इदादेशे प्राप्ते 'स्थाघ्वोरित्वे प्रतिषेधो वाच्यः' इतीत्वनिषेधो भवति।

---

**विमर्श**—'आर्धधातुके' का अधिकार है। अतः "दीङ् धातु से परे अजादि कित् और ङित् आर्धधातुक को युट्='य्' का आगम होता है।"

(वा०) **वुग्युटाविति।** उवङ् और यण् के विषय में वुक् और युट् सिद्ध होते हैं।

**उदाहरण**—(१) √दी+लिट् (=त, द्वित्व, अभ्यास संज्ञा, ह्रस्व, त=एश्='ए'—'लिटस्तझयोरेशिरेच्', 'दीङो युडचि क्ङिति' से युट् प्राप्त होने पर, परत्वात् 'एरनेकाचः०' से यण् की प्राप्ति 'वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ' से युट् को सिद्ध विधान करने से 'यण्' का प्रतिषेध, युट्='य्')=दिदीये।

(७४७) **पद**—मीनातिमिनोतिदीङाम्, ल्यपि, च। **अनुवृत्ति**—आत्। **विधिसूत्र।**

**मूलार्थ**—मीञ् (हिंसा करना), नि (फेंकना) और दीङ् धातु को ल्यप् के परवर्ती रहने पर आत्व होता है। चकारात् एच्-निमित्तक अशित् प्रत्यय के विषय में भी आत्व होता है। दाता, दास्यते इत्यादि।

**विमर्श**—'आदेच उपदेशेऽशिति' (६।१।४४) से 'आत्' की अनुवृत्ति आती है। तदनुसार—"मीञ्, मिञ् और दीङ् धातु को 'ल्यप्' परवर्ती रहते आत्व होता है, चकारात् (सूत्र में 'च' पद होने से) शित्-भिन्न एच्-निमित्त प्रत्यय के परवर्ती रहते भी आत्व होता है।" यहाँ तास्, स्य आदि प्रत्यय शित्-भिन्न हैं तथा गुण, वृद्धि के हेतु भी हैं। अतः इनके परवर्ती रहते भी उक्त धातुओं को आकार आदेश होता है।

**उदाहरण**—(१) √दी+लुट् (=त=डा='आ' तास्)—दी तास् आ ('ई'='आ'—'मीनातिमिनोति०' टिलोप)=दाता। (२) लृट्—दास्यते। (३) √दी+लुङ् (=त, च्लि, च्लि=सिच्='स्', आत्व—'मीनातिमिनोतिदीङां ल्यपि च', 'स्थाघ्वोरिच्च' से प्राप्त इत्व का 'स्थाघ्वोरित्वे दीङः प्रतिषेधः' से निषेध, अट्)=अदास्त।

√डीङ् (=डी) धातु का अर्थ—'उड़ना' है। (१) लट्—डीयते। (२) √डी+लिट् (=त=एश्=ए, द्वित्व, अभ्यास संज्ञा, ह्रस्व)—डि डी ए ('ई'='य्'—यण्—'एरनेकाचः') =डिड्ये। **√पीङ्** धातु का अर्थ—'पीना' है। (१) लट्—पीयते। (२) लिट्—पिप्ये

पिप्रिये । जनी प्रादुर्भावे । ( ७४८ ) ज्ञाजनोर्जा ७।३।७९ । अनयोर्जादेशः स्यात् शिति परे । जायते । 'गमहनजने'त्युपधायाः लोपः । 'स्तोः श्चुना श्चुः' । जज्ञे । जनिता । जनिष्यते । ( ७४९ ) दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ३।१।६१ । एभ्यश्च्लेश्चिण्वा स्यादेकवचने तशब्दे परे । ( ७५० ) चिणो लुक् ६।४।१०४ । चिणः परस्य त-शब्दस्य लुक् स्यात् । 'अत उपधाया' इति वृद्धौ प्राप्तायाम् । ( ७५१ )

---

( ७४८ ) ज्ञाजनोर्जा । 'ष्ठिवुक्लमुचमामि'त्यतः शितीत्यनुवर्तते । तदाह—अनयोरित्यादि । जायते । जन्धातोर्लटि तादेशे टेरेत्वे 'दिवादिभ्यः श्यन्' इति श्यनि अनुबन्धलोपे 'ज्ञाजनोर्जा' इत्यनेन 'जन्' इत्यस्य स्थाने जादेशे 'जायते' इति ।

( ७४९ ) दीपजनेत्यादि । 'च्लेः सिच्' इत्यस्मात् च्लेरिति, 'चिण् ते पदः' इत्यस्मात् 'चिण् ते' इति चानुवर्तते । तदाह—एभ्यश्च्लेरिति ।

( ७५० ) चिणो लुगिति । स्पष्टम् ।

---

( यण् ) । √माङ् ( मा ) धातु का अर्थ—'मापना' है । ( १ ) लट्—मायते । ( २ ) लिट्—ममे । ( ३ ) लुट्—माता । √प्रीङ् ( प्री ) धातु का अर्थ 'प्रेम करना' है । ( १ ) लट्—प्रीयते । लिट्—पिप्रिये ( इयङ् ) ।

√जनी ( जन् ) धातु का अर्थ—'उत्पन्न होना' है ।

**( ७४८ ) पद**—ज्ञाजनोः, जा । **अनुवृत्ति**—शिति । **विधिसूत्र** ।

**मूलार्थ**—शित् प्रत्यय के परे रहते ज्ञा और जन् धातु को 'जा' आदेश होता है । जायते इत्यादि ।

**विमर्श**—'ष्ठिवुक्लमु०' ( ७।३।७५ ) से 'शिति' पद की अनुवृत्ति आ रही है । अतः "शकारेत्संज्ञक प्रत्यय के परवर्ती रहते ज्ञा और जनी धातु के स्थान में 'जा' आदेश हो जाता है ।"

**उदाहरण**—( १ ) √जन्+लट् ( =त, श्यन्='य', 'जन्'='जा'—'ज्ञाजनोर्जा' 'टि' को एत्व )=जायते । ( २ ) √जन्+लिट् ( =त, द्वित्व, अभ्यासत्व, हलादिशेष )—ज जन् त ( त=एश्='ए'—'लिटस्तझयोरेशिरेच्', उपधा 'अ' का लोप—'गमहन०' )—ज जन् ए ( 'न्' ='ञ्'—श्चुत्व—'स्तोः श्चुना श्चुः', ज्+ञ्=ज्ञ् )=जज्ञे । ( ३ ) लुट्—जनिता । ( ४ ) लृट्—जनिष्यते ।

**( ७४९ ) पद**—दीपजनबुधपूरितायिप्यायिभ्यः, अन्यतरस्याम् । **अनुवृत्ति**—च्लेः, चिण् ते । **विधिसूत्र** ।

**मूलार्थ**—दीप आदि धातुओं से उत्तरवर्ती च्लि को चिण् आदेश होता है, एकवचन त शब्द के परे विकल्प से ।

**विमर्श**—प्रकृत सूत्र में 'च्लेः सिच्' ( ३।१।४४ ) से 'च्लेः' तथा 'चिण् ते पदः' ( ३।१।६० ) से 'चिण् ते' पदों की अनुवृत्ति आती है । तदनुसार—"दीप् ( =चमकना ), जन् ( =उत्पन्न होना ), बुध् ( =जानना ), पूरी ( =भरना ), ताय् ( =फैलना ), प्याय् ( =फूलना ), इन धातुओं से परवर्ती च्लि के स्थान में विकल्प से चिण् ( ='इ' ) आदेश होता है, एकवचन 'त' शब्द के परे रहते ।

**( ७५० ) पद**—चिणः, लुक् । **विधिसूत्र** ।

**मूलार्थ**—चिण् से परवर्ती 'त' शब्द का लुक् होता है । 'अत उपधायाः' से वृद्धि प्राप्त होने पर··· ।

**जनिवध्योश्च ७।३।३५ ।** जनिवध्योश्च न वृद्धिश्चिणि, ञ्णिति कृति च । अजनि । अजनिष्ट । अजनिष्यत । दीपी दीप्तौ । दीप्यते । दिदीपे । दीपिता । अदीपि । अदीपिष्ट । अदीपिष्यत । पद गतौ । पद्यते । पेदे । पत्ता । पद्येत । पत्सीष्ट । ( ७५२ ) **चिण्ते पदः ३।१।६० ।** पदश्च्लेश्चिण् स्यात्तशब्दे परे । अपादि । अपत्साताम् ।

---

( ७५१ ) **जनिवध्योश्चेति ।** 'अत उपधायाः' इत्यत उपधाया इति 'मृजेर्वृद्धिः' इत्यतो वृद्धिरिति 'नोदात्तोपदेश०' इत्यतो नेति, 'आतो युक्' इत्यतः चिण्कृतोरिति 'अचो ञ्णिति' इत्यतो ञ्णिति चानुवर्तते । अत आह—**जनिवध्योरिति । अजनि, अजनिष्ट ।** 'जनी प्रादुर्भावे' इत्यस्माद्धातोर्लुङि तप्रत्यये अडागमेऽनुबन्धलोपे 'च्लि लुङि' इति च्लौ 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्' इति विभाषया च्लेश्चिणि अनुबन्धलोपे 'अ जन् इ त' इति जाते 'अत उपधायाः' इत्यनेन उपधावृद्धौ प्राप्तायाम् 'जनिवध्योश्च' इत्यनेन तन्निषेधे 'चिणो लुक्' इत्यनेन तप्रत्ययस्य लोपे 'अजनि' इति । चिणभावपक्षे च्लौ, च्लेः सिच्यनुबन्धलोपे 'आर्धधातुकस्येड् वलादेः' इत्यनेन इडागमेऽनुबन्धलोपे 'आदेशप्रत्यययोः' इत्यनेन सस्य षत्वे 'ष्टुना ष्टुः' इत्यनेन ष्टुत्वे 'अजनिष्ट' इति ।

( ७५२ ) **चिण्ते पद इति ।** 'च्लेस्सिच्' इत्यस्मात् च्लेरित्यनुवर्तते । तदाह—**पदश्च्लेरिति । अपादि ।** पदधातोर्लुङि तादेशे च्लौ 'चिण्ते पदः' इति च्लेः चिणादेशेऽनुबन्धलोपे 'चिणो लुक्' इति तलोपे, अटि, 'अत उपधायाः' इति वृद्धौ 'अपादि' इति ।

---

**( ७५१ ) पद**—जनिवध्योः, च । **अनुवृत्ति—**न, चिण्कृतोः, ञ्णिति, वृद्धिः । **विधिसूत्र ।**

**मूलार्थ**—चिण् और ञित, णित, कृत के परवर्ती रहते जन् और वध् को वृद्धि नहीं होती । अजनि, अजनिष्ट इत्यादि ।

**विमर्श**—सूत्रार्थ की पूर्णता हेतु 'नोदात्तोपदेशस्य' ( ७।३।३४ ) से 'न', 'आतो युक् चिण्कृतोः' ( ७।३।३३ ) से 'चिण्कृतोः', 'अचो ञ्णिति' ( ७।२।११५ ) से 'ञ्णिति' तथा 'मृजेर्वृद्धिः' ( ७।२।११४ ) से 'वृद्धिः' की अनुवृत्ति आती है । अतः "जन् और वध् धातुओं की उपधा को वृद्धि नहीं होती, चिण् तथा ञित् , णित् , कृत् प्रत्यय परे रहते ।"

**उदाहरण**—( १ ) √जन् + लुङ् ( =त, च्लि, च्लि=चिण्='इ' विकल्प से—'दीपजनबुध०', 'अत उपधायाः' से प्राप्त वृद्धि का 'जनिवध्योश्च' से निषेध, अट्='अ' का आगम, 'त' का लुक्—'चिण् ते पदः' )=अजनि । चिण् के अभावपक्ष में ( च्लि=सिच्='स्' )—अ जन् स् त ( इट्='इ'—'आर्धधातुकस्येड् वलादेः' षत्व, ष्टुत्व )=अजनिष्ट । ( २ ) लृङ्—अजनिष्यत ।

**√दीपी** ( =दीप् ) धातु का अर्थ—'चमकना' है । ( १ ) लट्—दीप्यते । ( २ ) लिट्—दिदीपे । ( ३ ) लुट्—दीपिता ( इट् ) । ( ४ ) लुङ् में विकल्प से च्लि=चिण्—अदीपि, अदीपिष्ट । ( ५ ) लृङ्—अदीपिष्यत ।

**√पद** धातु का अर्थ 'जाना' है । ( १ ) लट्—पद्यते । ( २ ) लिट्—पेदे ( एत्व, अभ्यास का लोप ) । ( ३ ) लुट्—पत्ता । ( ४ ) विधिलिङ्—पद्येत । ( ५ ) आशीर्लिङ्—पत्सीष्ट ।

**( ७५२ ) पद**—चिण् , ते, पदः । **अनुवृत्ति**—च्लेः । **विधिसूत्र ।**

**मूलार्थ**—'त' शब्द के परवर्ती रहते पद धातु से उत्तरवर्ती 'च्लि' के स्थान में 'चिण्' आदेश होता है । अपादि । अपत्साताम् इत्यादि ।

अपत्सत । खिद दैन्ये । खिद्यते । चिखेद । खेत्ता । खेत्स्यते । विद सत्तायाम् । विद्यते । विविदे । वेत्ता । वित्सीष्ट । अवित्त । बुध अवगमने । बुध्यते । बुबुधे । बोद्धा । 'एकाचो बशो भष् झषन्तस्ये'ति भष्भावः । भोत्स्यते । भुत्सीष्ट । अबोधि । अबुद्ध । अभुत्साताम् । अभोत्स्यत । युध सम्प्रहारे । युध्यते । युयुधे । योद्धा । अयुध्यत ।

---

बोद्धा । 'बुध अवगमने' इत्यस्माद्धातोर्लुटि तत्स्थाने तादेशे, तासि, 'लुटः प्रथमस्य डारौरसः' इति 'त' इत्यस्य स्थाने डादेशेऽनुबन्धलोपे टेर्लोपे 'झषस्तथोर्धोऽधः' इति तकारस्य धत्वे 'झलां जश् झशि' इति जश्त्वेन दकारे 'पुगन्तलघूपधस्य चे'त्यनेन गुणे 'बोद्धा' इति । अबोधि । बुध्धातोर्लुङि आत्मनेपदे 'त' प्रत्यये 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यडागमेऽनुबन्धलोपे 'च्लि लुङि' इति च्लौ 'दीपजनबुध०' इत्यादिना विकल्पेन च्लेः चिणादेशेऽनुबन्धलोपे लघूपधगुणे 'चिणो लुक्' इत्यनेन तप्रत्ययस्य लोपे संयोगे च कृते 'अबोधि' इति । चिणोऽभावपक्षे 'अ बुध् त' इति स्थिते, च्लौ 'च्लेः सिच्' इति सिच्यनुबन्धलोपे 'झलो झलि' इत्यनेन सिचः सकारलोपे 'झषस्तथोर्धोऽधः'

---

**विमर्श**—सूत्र में स्थानिवाचक पद का अभाव है। अतः 'च्लेः सिच्' से 'च्लेः' पद की अनुवृत्ति आती है। तदनुसार—"पद धातु से उत्तरवर्ती 'च्लि' के स्थान में 'चिण्' आदेश होता है, एकवचन 'त' शब्द के परे रहते।"

**उदाहरण**—(१) √पद्+लुङ् (=त, अट्, च्लि, च्लि=चिण्='इ'—'चिण्ते पदः') —अ पद् इ त ('त' का लोप—'चिणो लुक्', उपधावृद्धि)=अपादि। (२) √पद्+लुङ् (=आताम्, अट्, च्लि, च्लि=सिच्='स्', 'द्'='त्'—'चर्त्व')=अपत्साताम्। (३) √पद्+लुङ् ((=झ, अट्, च्लि, च्लि=सिच्='स', झ्=अत्—'आत्मनेपदेष्वनतः' 'द्'='त्')=अपत्सत।

**√खिद** धातु का अर्थ—'खिन्न होना' है। (१) लट्—खिद्यते। (२) लिट्—चिखेद। (३) लुट्—खेत्ता। (४) लृट्—खेत्स्यते।

**√विद** धातु का 'सत्ता' (होना) अर्थ है। (१) लट्—विद्यते। (२) लिट्—विविदे। (३) लुट्—वेत्ता। (४) √विद्+आशीर्लिङ् (=त, सीयुट्=सीय्, 'लिङ्सिचावात्मनेपदेषु' से सीयुट् के कित् हो जाने से प्राप्त गुण का निषेध, सुट्='स')—विद् सीय् स् त ('य्' का लोप—'लोपो व्योर्वलि', 'द्'='त्', षत्व, ष्टुत्व)=वित्सीष्ट। (५) लुङ्—अवित्त ('स्' का लोप)।

√बुध् धातु का अर्थ—'जानना' है। (१) लट्—बुध्यते। (२) लिट्—बुबुधे। (३) √बुध्+लुट् (=त, तास्, त=डा='आ'—'लुटः प्रथमस्य डारौरसः' 'टि'—आस् का लोप—'डित्वसामर्थ्यादभस्यापि टेर्लोपः', 'त'='ध्'—झषस्तथोर्धोऽधः' प्रथम 'ध्'='द्'—जश्त्व—'झलां जश् झशि' उ='ओ'—गुण—'पुगन्त०')=बोद्धा। (४) √बुध्+लृट् (=त, स्य)—बुध् स्य त ('ब्'='भ्' भष्भाव—'एकाचो बशो भष्०' आर्धधातुक संज्ञा, इट्='इ', लघूपध गुण, चर्त्व—'खरि च')=भोत्स्यते। (५) आशीर्लिङ्—भुत्सीष्ट। (६) √बुध्+लुङ् (=त, अट्, च्लि, च्लि=विकल्प से चिण्=इ, 'त' का लोप—'चिणो लुक्' लघूपध गुण)=अबोधि। 'चिण्' के अभावपक्ष में—'च्लि=सिच्='स्'—'अबुध् स त' ('स' का लोप—'झलो झलि', 'त'='ध्'—'झषस्तथोर्धोऽधः' 'ध्'='द्'—'झलां जश् झशि')=अबुद्ध।

युध्येत । युत्सीष्ट । अयुद्ध । अयुत्स्यत । कथं युध्यतीति । युधमिच्छतीति क्यच् । 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमि'ति वा । सृज विसर्गे । अकर्मकः । सृज्यते । ससृजे । 'सृजिदृशोर्झल्यमकिती'त्यमागमः । स्रष्टा । स्रक्ष्यते । स्रक्षीष्ट । 'लिङ्सिचावि'-ति कित्त्वम् । असृष्ट । असृक्षाताम् । मीङ् हिंसायाम् । हिंसाऽत्र प्राणवियोगः । मीयते । मिम्ये । मीयताम् । अमीयत । मीयेत । मेषीष्ट । अमेष्ट । अमेषाताम् ।

---

इत्यनेन तकारस्य धकारे 'झलां जश् झशि' इति जश्त्वेन धकारस्य दकारे 'अबुद्ध' इति ।

**स्रक्ष्यते** । सृजधातोर्लृटि तादेशे 'स्यतासी लृलुटोः' इति स्यप्रत्यये टेरेत्वे 'सृजि-दृशोर्झल्यमकिति' इत्यमि अनुबन्धलोपे 'मिदिचोऽन्त्यात्परः' इति मित्त्वेनाऽन्त्यादचः परोऽकारो जातः, 'सृ अ ज् स्य ते' इति स्थिते 'इको यणचि' इति यणि 'व्रश्चे'त्यादिना जकारस्य षकारे 'षढोः कः सि' इति कत्वे 'आदेशप्रत्यययोः' इति षत्वे क्-ष् संयोगे क्षे जाते, 'स्रक्ष्यते' इति ।

---

√बुध् धातु, लुङ् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अबोधि, अबुद्ध | अभुत्साताम् | अभुत्सत |
| म० पु० | अबुद्धाः | अभुत्साथाम् | अभुद्ध्वम् |
| उ० पु० | अबोधिषि | अभुत्स्वहि | अभुत्स्महि |

( ७ ) लृङ्—अभोत्स्यत ।

**√युध** धातु का अर्थ—'युद्ध करना' है । ( १ ) लट्—युध्यते । ( २ ) लिट्—युयुधे । ( ३ ) लुट्—योद्धा । ( ४ ) लङ्—अयुध्यत । ( ५ ) विधिलिङ्—युध्येत । ( ६ ) आशीर्लिङ्—युत्सीष्ट । ( ७ ) √युध्+लुङ् ( =त, अट्, च्लि, च्लि=सिच्='स्' 'लिङ्सिचावात्मनेपदेषु' से कित् होने से प्राप्त गुण का निषेध, 'स्' का लोप—'झलो झलि' )—अ युध् त ( 'त्'='ध्'—'झषस्तथोर्धोऽधः' प्रथम ध्'='त्' चर्त्व )=अयुद्ध । ( ८ ) लृङ्—अयुत्स्यत ।

**कथं युध्यतीति** । यहाँ आशंका होती है कि जब यह धातु आत्मनेपदी है, तो—'युध्यति' यह परस्मैपद प्रयोग कैसे हुआ ? इसके समाधान के लिए कहा गया है कि योधनं युध् में क्विप् प्रत्यय विधान कर कृदन्तत्वात् प्रातिपदिक संज्ञा, द्वितीया विभक्ति एकवचन में युधम् युधम् से क्यच्-'सुप आत्मनः क्यच्'=युध्यति ( =युद्ध करने की इच्छा करता है ) । इस प्रकार नामधातु का 'युध्यति' प्रयोग है । अथवा—'अनुदात्त की इत्संज्ञा-निमित्तक आत्मनेपद अनित्य है' ऐसा √चक्षिङ् के ङित्करण से ज्ञापन किया गया है । अतः यहाँ भी आत्मनेपदसंज्ञक तङ् नहीं हुआ, अपितु परस्मैपद—**युध्यति** ।

**√सृज्** धातु का अर्थ—'छोड़ना, त्यागना' है । ( १ ) लट्—सृज्यते । ( २ ) √सृज्+लिट् ( =त, त=एश्='ए', द्वित्व, अभ्यास संज्ञा, ऋ='अ'—'उरत्' रपर, हलादिशेष )=ससृजे । ( ३ ) √सृज्+लुट् ( =त=डा=आ, तास् )—सृज् तास् आ ( अम्='अ' आगम—'सृजि-दृशोर्झल्यमकिति' ऋ=र्—यण्, टिलोप 'ज्'='ष्'='व्रश्च०' 'त्'='ट्'—ष्टुत्व )=स्रष्टा । ( ४ ) √सृज्+लृट् ( =त, स्य, अम्='आ' 'सृजि०' )—सृ अ ज् स्य त ( 'ऋ'='र्'—यण्, ज्=ष्—व्रश्च०' 'ष्'='क्'—'षढोः कः सि', षत्व—'आदेशप्रत्यययोः', क्+ष्=क्ष् )—स्रक्ष्यत ( टि=एत्व )=स्रक्ष्यते । ( ५ ) √सृज्+आशीर्लिङ् ( =त, सीयुट्=सीय्, सुट्='स्'—

**रीङ् स्रवणे। रीयते। लीङ् श्लेषणे। लीयते। (७५३) विभाषा लीयतेः ६।१।५१। 'लीयतेरि'ति यका निर्देशो, न तु श्यना। 'लीलीङोरात्वं वा स्यादेज्विषये, ल्यपि च। लेता। लाता। लेष्यते। लास्यते। एज्विषये किम्? लीयते। लिल्ये। व्रीङ् वृणोत्यर्थे। व्रीयते। विव्रिये। इत्यात्मनेपदिनः।**

---

(७५३) **विभाषेति**। 'मीनातिमिनोती'त्यतः ल्यपीति, 'आदेच उपदेशे' इत्यतः 'आदि'ति, एच इति चानुवर्तते। तदाह—**लीलीङोरित्यादिना**। **लीयतेरिति**। 'सार्वधातुके यक्' इति विहितेन यका न तु श्यना निर्देशः, अन्यथा लीङित्येवं ब्रूयात्। तेन लीलीङोरुभयोरप्यात्वमिति भावः। **लेता इति**। 'लीङ् श्लेषणे' इत्यस्माद्धातोर्लुटि तप्रत्यये, 'लुटः प्रथमस्य डारौरसः' इत्यनेन तप्रत्ययस्य डादेशेऽनुबन्धलोपे 'स्यतासी लृलुटोः' इत्यनेन तास्प्रत्ययेऽनुबन्धलोपे डित्त्वादभस्यापि टेर्लोपे 'विभाषा लीयते' इत्यनेन विकल्पेन ईकारस्यात्वे 'लाता' इति। आत्वाऽभावपक्षे आर्धधातुकत्वात् 'सार्वधातुकार्धधातुकयोः' इति गुणे एकारे 'लेता' इति रूपम्।

---

'सुट् तिथोः')—सृज् सीय् स् त (ज='ष्'—'व्रश्च०', 'ष्'='क्'—'षढोः कः सि' 'य्' का लोप—'लोपो व्योर्वलि:०' 'स्'='ष्'—'आदेश०', क्+ष्='क्ष्', 'लिङ्सिचावात्मनेपदेषु' से कित् होने से गुणनिषेध—'क्ङिति च', ष्टुत्व)=सृक्षीष्ट। (६) √सृज्+लुङ् (=त, अट्, च्लि, च्लि=सिच्=स्' कित्वाद् गुण का निषेध, 'स्' का लोप—'झलो झलि', 'ज्'='ष्' 'व्रश्च०', ष्टुत्व)=असृष्ट।

**√मीङ्** धातु 'हिंसा' अर्थ में हैं। यहाँ हिंसा का अर्थ—'प्राणवियोग' है। (१) लट्—मीयते। (२) लिट्—मिम्ये (यण्)। (३) लोट्—मीयताम्। (४) लङ्—अमीयत। (५) विधिलिङ्—मीयेत। (६) आशीर्लिङ्—मेषीष्ट। (७) लुङ्—अमेष्ट। अमेषाताम् इत्यादि। **√रीङ्** धातु श्रवण (=सुनना) अर्थ में है। (१) लट्—रीयते।

**√लीङ्** धातु का अर्थ—श्लेषण (आलिङ्गन करना) है। (१) लट्—लीयते।

**(७५३) पद**—विभाषा, लीयतेः। **अनुवृत्ति**—ल्यपि, आदेचः। **विधिसूत्र**।

**मूलार्थ**—ली और और लीङ् धातु को विकल्प से आत्व होता है, एच् के विषय में तथा ल्यप् के परवर्ती रहते। लेता, लाता। लेष्यते। लास्यते इत्यादि।

**विमर्श**—प्रकृत सूत्र में 'आदेच उपदेशेऽशिति' (६।१।४४) से 'आदेचः' तथा 'मीनातिमिनोतिदीङां ल्यपि च'. (६।१।४९) से 'ल्यपि' की अनुवृत्ति आती है। तदनुसार—"ली तथा लीङ् धातु को ल्यप् परे रहते और एच् के विषय में विकल्प से आत्व होता है।" सूत्र में यक् प्रत्यय करके 'लीयते' यह निर्देश है। अतः 'लीङ् श्लेषणे' और क्र्यादिगण पठित 'ली श्लेषणे' दोनों धातुओं का आत्वविधान में ग्रहण किया जाता है।

**उदाहरण**—(१) √ली+लुट् (=त, तास्, त=डा=आ, टिलोप, 'इ'='आ'—विकल्प से—'विभाषा लीयतेः')=लाता। आत्व के अभावपक्ष में (गुण)—लेता। (२) लृट्—लास्यते, लेष्यते (षत्व)।

**प्रत्युदाहरण**—(१) सूत्र में 'एज्विषये' का ग्रहण किया गया है। अतः 'लीयते' में एज्विषयता के अभाव में आत्व नहीं हुआ।

(२) लिट्—लिल्ये (यण्)।

अथोभयपदिनः । मृष तितिक्षायाम् । मृष्यति । मृष्यते । ममर्ष । मर्मषिथ । ममृषे । ममृषिषे । मर्षितासि । मर्षितासे । मर्षिष्यति । मर्षिष्यते । मृष्यतु । णह बन्धने नह्यति । नह्यते । ननाह । नेहिथ । 'नहो धः' इति धः । ननद्ध । नेहे । नद्धा । नत्स्यति । नत्स्यते । अनात्सीत् । अनद्ध । रञ्ज रागे । 'अनिदिताम्' इति नलोपः । रज्यति । रज्यते । ररञ्ज । ररञ्जे । ररङ्क्थ । रङ्क्ता । शप आक्रोशे । शप्यति । शप्यते । शशाप । शेपतुः । शेपुः । शेपे । शेपाते । शक विभाषितो मर्षणे । विभाषित इति उभयपदीत्यर्थः । शक्यति, शक्यते हरिं द्रष्टुं भक्तः । शशाक । शेकिथ । शशक्थ । शेके । शक्ता । शक्ष्यति । शक्ष्यते । पुषादित्वादङ् । अशकत् । अशक्त । सेट्कोऽयमित्येके । तन्मते नाऽनिट्केषु लंदित्पठितः । शकिता । शकिष्यति । शकिष्यते ।

इति दिवादिप्रकरणम् ।

---

नेहिथ, ननद्ध इति । 'णह् बन्धने' इत्यस्माद्धातोर्लिटि 'णो नः' इति णस्य नत्वे लिटः स्थाने सिपि, सिपस्थलादेशेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वेऽभ्यासत्वे हलादिशेषे 'न नह थ' इति जाते 'ऋतो भारद्वाजस्ये'ति नियमाद् विकल्पेन

---

√व्रीङ् धातु का अर्थ--'वरण करना' है। (१) लट्--व्रीयते। (२) √व्री+लिट् (=ल=एश्='ए', द्वित्व, अभ्यास संज्ञा, ह्रस्व)--वि व्री ए (ई=इयङ्=इय्)=विव्रिये।

आत्मनेपदी धातुओं का विवेचन समाप्त हुआ। अब उभयपदी धातुओं के रूपों की साधनिका का निर्देश किया जा रहा है--

√मृष धातु का अर्थ--'सहन करना' है। स्वरितेत् होने से यह धातु उभयपदी है। (१) √मृष्+लट् (=तिप्=ति, श्यन्='य')=मृष्यति। आत्मनेपद में—मृष्+लट् (=त, श्यन् ='य', अ (टि)=एत्व) =मृष्यते। (२) √मृष्+लिट् (=तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, 'ऋ'='अ'--'उरत्' रपर, हलादिशेष, गुण--'पुगन्त', रपर)=ममर्ष। आत्मनेपद में—ममृषे। (३) म० पु० एकवचन (परस्मैपद)--ममर्षिथ (इट्)। (४) √मृष्+लिट् (=थास्='से', द्वित्व, अभ्यास संज्ञा, उरत्, रपर, हलादिशेष)--ममृष् से (क्रादिनियम से नित्य इट्, षत्व)--ममृषिषे। (५) लुट् म० पु० एकवचन--मर्षितासि। आत्मनेपद में--मर्षितासे। (६) लृट्--मर्षिष्यति, मर्षिष्यते। (७) लोट्--मृष्यतु।

√णह् ('णो नः' से 'ण्' 'न्')=नह् धातु का अर्थ--'बाँधना' है। (१) लट्--नह्यति। आत्मनेपद—नह्यते। (२) √नह्+लिट् (=तिप्=णल्='अ', द्वित्व, अभ्यासत्व, हलादिशेष)—ननह् अ (वृद्धि— अत उपधायाः')=ननाह। (३) √नह्+लिट् (=सिप्=थल्='थ' द्वित्व, अभ्यासकार्य)—न नह् थ (भारद्वाज नियम से वैकल्पिक इट्='इ', एत्व और अभ्यास का लोप—'थलि च सेटि')=नेहिथ। इट् के अभावपक्ष में--न नह् थ ('ह्'='ध्'—'नहो धः', 'थ्'='ध्'—'झषस्तथोर्धोऽधः', पूर्व 'ध्'='द्' जश्त्व)=ननद्ध। (४) आत्मनेपद में—√नह्+लिट् (त=एश्=ए, द्वित्व, अभ्यासकार्य)—न नह् ए (एत्व, अभ्यासलोप)=नेहे। नेहाते। नेहिरे इत्यादि। (५) √नह्+लुट् (=तिप्=डा=आ, तास्, टिलोप)—नह् ता ('ह्'='ध्'--'नहो धः', 'त्'='ध्'-'झषस्तथोर्धोऽधः', प्रथम 'ध्'='द्'—'जश्त्व')=नद्धा। (६) लृट्--नत्स्यति। नत्स्यते ('ह्'='ध्' 'ध्'='त्'—'चर्त्व')। (७) √नह्+

# अथ स्वादिप्रकरणम्

षुञ् अभिषवे । अभिषवः--स्नपनं, पीडनं, स्नानं सुरासन्धानं च । तंत्र स्नाने-ऽकर्मकः । ( ७५४ ) स्वादिभ्यः श्नुः ३।१।७३ । स्वादिभ्यः श्नुः स्यात् कर्तरि सार्व-

---

इटि 'झलि च सेटि' इत्येत्वेऽभ्यासलोपे च कृते 'नेहिथ' इति । इडभावपक्षे 'न नह् थ' इति स्थिते 'नहो धः' इति हकारस्य धकारे 'झषस्तथोर्धोऽधः' इत्यनेन थकारस्य धकारे 'झलां जश् झशि' इत्यनेन पूर्वधकारस्य दकारे संयोगे च 'ननद्ध' इति ।

इति दिवादिप्रकरणम् ।

---

श्यन्विकरणान् धातून्निरूप्येदानीं श्नुविकरणा धातवो निरूप्यन्ते—षुञ् अभिषव इति । षोपदेशोऽयं धातुः । अनिट् । ञित्वादुभयपदी ।

---

लुङ् ( तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्', ईट्='ई'—'अस्तिसिचो-ऽपृक्ते' )—अनह् स् ई त् ( वृद्धि—'वदव्रजहलन्तस्याचः', 'ह्'='ध्'—'नहो धः', 'ध्'='त्'—'खरि च' )=अनात्सीत । आत्मनेपद में—अनद्ध ( 'स्' का लोप ) ।

√रञ्ज धातु 'राग' अर्थ में है । ( १ ) √रञ्ज्+लट् ( =तिप्='ति', श्यन्='य' 'न्' का लोप--'अनिदिताम्'० )=रज्यति । आत्मनेपद में—रज्यते । धातु में झल् वर्ण परवर्ती रहते अनुस्वार अथवा वर्ग का पञ्चम वर्ण रहे तो वह नकार से जन्य होता है[1] । अतः यहाँ नकार का अनुस्वार एवं परसवर्ण से ञकार हुआ है । 'अनिदिताम्' सूत्र की दृष्टि में अनुस्वार एवं परसवर्ण असिद्ध होने से नकार मानकर उसका लोप हुआ : ( २ ) लिट्—ररञ्ज । आ० प०—ररञ्जे । ( ३ ) लिट् म० पु० एकव०—ररङ्क्थ । ( ४ ) लुट्—रङ्क्ता ।

√शप धातु का अर्थ 'आक्रोश' ( =निन्दा करना, शाप देना ) है । ( १ ) लट्—शप्यति । आ० प०—शप्यते । ( २ ) लिट् प० प०—शशाप, शेपतुः, शेपुः । आ० प०—शेपे, शेपाते, शेपिरे ।

√शक धातु का अर्थ 'सकना' 'समर्थ होना' है । यह धातु अमर्षण अर्थ में उभयपदी है । ( १ ) लट्—शक्यति, शक्यते हरिं द्रष्टुं भक्तः=भक्त हरि को देखने में समर्थ है । ( २ ) लिट् प० प०—शशाक । आ० पा०—शेके । ( ३ ) लिट् म० पु० एकवचन—शेकिथ ( विकल्प से इट्, एत्वाभ्यासलोप ) । इडभावपक्ष में—शशक्थ । ( ४ ) लुट्—शक्ता । ( ५ ) लृट्—शक्ष्यति । शक्ष्यते । ( ६ ) √शक्+लुङ् ( =तिप्=ति, इकारलोप, अट्, च्लि, च्लि=अङ्—'पुषादि०' ) =अशकत् । आत्मनेपद में—अशक्त ( 'स्' का लोप ) । कुछ आचार्य इस धातु को सेट् मानते हैं । उनके मत में—अनिट्-कारिका में 'शक्लृ' लृकारेत्संज्ञक ही पठित है । तदनुसार लुट्—शकिता । लृट्—शकिष्यति । शकिष्यते ।

दिवादि-प्रकरण समाप्त ।

---

दिवादि प्रकरण में 'श्यन्' विकरण वाली 'दिव्' आदि धातुओं के रूपों की साधनिका का विवेचन करने के अनन्तर प्रस्तुत प्रकरण में 'श्नु' विकरण वाली धातुओं के रूपों की प्रक्रिया प्रदर्शित की जा रही है—

---

१. 'नकारजावनुस्वारः पञ्चमो झलि धातुषु'—महाभाष्यम् ।

धातुके । शपोऽपवादः । सुनोति । सुनुतः । 'हुश्नुवोरि'ति यण् । सुन्वन्ति । सुनोषि । सुनुथः । सुनुथ । सुनोमि । 'लोपश्चास्ये'ति प्रत्ययोतो लोपः । सुन्वः-सुनुवः । सुन्मः-सुनुमः । सुनुते । सुन्वाते । सुन्वते । सुनुषे । सुन्वाथे । सुनुध्वे । सुन्वे । सुन्वहे-सुनुवहे । सुन्महे-सुनुमहे । सुषाव । सुषुवे । सोता । सोता । सोष्यति । सोष्यते । सुनोतु ।

---

( ७५४ ) स्वादिभ्यः श्नुरिति । 'कर्तरि', 'सार्वधातुके' इति चानुवर्तते । तेन कर्त्रर्थे सार्वधातुके परे स्वादिभ्यः श्नुः स्यादित्यर्थः । सुनोति । षुञ्धातोर्लटि तिपि, 'स्वादिभ्यः श्नुः' इति श्नुविकरणे शस्येत्संज्ञायां लोपे 'धात्वादेः षः सः' इति षस्य सकारे 'सार्वधातुकार्धधातुकयोः' इत्यनेन उकारस्य गुणे ओकारे 'सुनोति' इति रूपं सिद्धम् ।

---

√षुञ् ( =सु ) धातु का अर्थ—'अभिषव' है । अभिषव=स्नान करना, निचोड़ना, स्नान करना और सुरासन्धान ( सुरा उत्पन्न करना )। यह धातु उपदेशावस्था में षकारादि है, ञकारेत्संज्ञक है, अतः उभयपदी है । 'स्नान करना' अर्थ में यह धातु अकर्मक है । धातु के आदि मूर्धन्य षकार के स्थान में 'धात्वादेः षः सः' से सकार आदेश होता है ।

**( ७५४ ) पद**—स्वादिभ्यः, श्नुः । **अनुवृत्ति**—कर्तरि, सार्वधातुके । **विधिसूत्र** ।

**मूलार्थ**—कर्त्रर्थक सार्वधातुक के परवर्ती रहते स्वादिगण पठित धातुओं से 'श्नु' ( विकरण ) होता है । यह 'शप्' का अपवाद है । सुनोति । सुनुतः इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'कर्तरि शप्' ( ३।१।६८ ) से 'कर्तरि' तथा 'सार्वधातुके यक्' ( ३।१।६७ ) से 'सार्वधातुके' की अनुवृत्ति आती है । तदनुसार—"कर्तृरूपार्थक सार्वधातुक प्रत्यय के परवर्ती रहते स्वादिगणपठित धातुओं से श्नु ( =नु ) विकरण प्रत्यय होता है ।" यह 'श्नु' प्रत्यय शप् का बाधक है ।

**उदाहरण**—( १ ) √षु+लट् ( 'ष्'='स्'—'धात्वादेः षः सः' ल्=तिप्=ति, श्नु='नु'—'स्वादिभ्यः श्नुः', 'उ'='ओ' गुण—'सार्वधातुकार्धधातुकयोः' )=सुनोति । ( २ )=सु+लट् ( =तस्, श्नु='नु'—'स्वादिभ्यः श्नुः' )—सु नु तस् ( 'तस्' अपित् सार्वधातुक होने से ङिद्वत् है, अतः गुण का निषेध, स्=र्=ः ) =सुनुतः । ( ३ ) √सु+लट् ( =झि, 'झ्'='अन्त्'—'झोऽन्तः', श्नु='नु' )—सु नु अन्ति ( 'उ'='व्' यण्—'हुश्नुवोः सार्वधातुके' )=सुन्वन्ति । ( ४ ) लट् म० पु०—सुनोषि, सुनुथः, सुनुथ । ( ५ ) लट् उ० पु० एकव०—सुनोमि । ( ६ ) √सु+लट् ( =वस्, श्नु='नु' )—सु नु वस् ( 'उ' का विकल्प से लोप—'लोपश्चान्यतरस्यां म्वोः' स्=र्=ः )=सुन्वः । उकार के लोप के अभावपक्ष में—सुनुवः । ( ७ ) लट् उ० पु० बहुव०—सुन्मः, सुनुमः ।

**षु ( =सु ) धातु, लट् लकार के रूप ( परस्मैपद )**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | सुनोति | सुनुतः | सुन्वन्ति |
| म० पु० | सुनोषि | सुनुथः | सुनुथ |
| उ० पु० | सुनोमि | सुन्वः, सुनुवः | सुन्मः, सुनुमः |

आत्मनेपद में—( १ ) √सु+लट् ( =त, श्नु=नु, 'टि' को एत्व—'टित आत्मनेपदानां टेरे' )=सुनुते । ( २ ) √सु+लट् ( =आताम्, श्नु )—सु नु आताम् ( 'उ'='व्' यण्—'हुश्नुवोः', टि=एत्व )=सुन्वाते । ( ३ ) सु+लट् ( =झ, श्नु='नु', 'झ्'='अत्'—'आत्मने-

'उतश्चे'ति हेर्लुक् । सुनु । सुनवानि । सुनवाव । सुनवाम । सुनुताम् । सुनवै । सुनवावहै । सुनवामहै । असुन्वि । सुनुयात् । सूयात् । सोषीष्ट । ( ७५५ ) स्तुसुधूञ्भ्यः परस्मैपदेषु ७।२।७२ । एभ्यः सिच इट् स्यात्परस्मैपदे । असावीत् । असोष्ट ।

---

( ७५५ ) स्तुसुधूञ्भ्य इति । अत्र 'इडत्यर्ति' इत्यस्मात् इडित्यनुवर्तते । 'अञ्जेः सिची'त्यस्मात् सिजित्यनुवृत्तं षष्ठ्या विपरिणम्यते । अत आह—एभ्यः

---

पदेष्वनतः', यण् टि=एकार )=सुन्वते । उ० पु० द्विव० तथा बहुव० में 'उ' का विकल्प से लोप होकर दो रूप बनते हैं—सुन्वहे, सुनुवहे । सुन्महे, सुनुमहे ।

### √षु ( =सु ) धातु, लट् लकार के रूप ( आत्मनेपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | सुनुते | सुन्वाते | सुन्वते |
| म० पु० | सुनुषे | सुन्वाथे | सुनुध्वे |
| उ० पु० | सुन्वे | सुन्वहे, सुनुवहे | सुन्महे, सुनुमहे |

( १ ) सु+लिट् ( =तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, हलादिशेष )=सु सु अ ( उ='औ' 'वृद्धि'—'अचो ञ्णिति', 'औ'='आव्' आदेश, षत्व )=सुषाव । आत्मनेपद पक्ष में—√सु+लट् ( =त=एश्=ए, द्वित्व, अभ्यास संज्ञा )—सु सु ए ( षत्व, उ=उवङ्='उव्' ) =सुषुवे । इत्यादि । ( २ ) लट् प्र० एकव०—सोता ( दोनों पदों में ) । ( ३ ) लृट्—सोष्यति । आ० प०—सोष्यते । ( ४ ) लोट् प० प० में—सुनोतु, सुनुतात् । सुनुताम् । सुन्वन्तु । ( ५ ) सु +लोट् ( =सिप्='हि'—'सेर्ह्यपिच्च', श्नु=नु )—सु नु हि ( 'हि' का लोप—'उतश्च प्रत्ययाद-संयोगपूर्वात्' )=सुनु । ( ६ ) सु+लोट् ( मिप्=मि, श्नु='नु' 'मि'='नि'—'मेर्निः' आट्='आ'—आगम )—सु नु आ नि ( उ='ओ'—'गुण', 'ओ'='अव्' आदेश )=सुनवानि । ( ७ ) लोट् उ० पु० द्विव०, बहुव०—सुनवाव, सुनवाम । आत्मनेपद में—सुनुताम् । ( ८ ) सु+लोट् ( =इट्='इ', श्नु='नु', आट्='आ' का आगम, इ='ए'—'टित आत्मनेपदानाम्' )=सुनु आ ए ( 'ए'='ऐ'—'एत ऐ', आ+ऐ='ऐ'—'वृद्धि', उ='ओ'=गुण, 'ओ'='अव्' आदेश )=सुनवै ।

### √षु ( =सु ) धातु, लोट् लकार के रूप ( परस्मैपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | सुनोतु, सुनुतात् | सुनुताम् | सुन्वन्तु |
| म० पु० | सुनु | सुनुतम् | सुनुत |
| उ० पु० | सुनवानि | सुनवाव | सुनवाम |

### ( आत्मनेपद )

| | | | |
|---|---|---|---|
| प्र० पु० | सुनुताम् | सुन्वाताम् | सुन्वताम् |
| म० पु० | सुनुष्व | सुन्वाथाम् | सुनुध्वम् |
| उ० पु० | सुनवै | सुनवावहै | सुनवामहै |

( ९ ) लङ्—असुनोत्, असुनुताम्, असुन्वन् इत्यादि । ( १० ) विधिलिङ्—सुनुयात् । ( ११ ) आशीर्लिङ् में ( यासुट् होने पर 'स्' का संयोगादि लोप 'अ' को दीर्घ—'अकृत्सार्वधातुकयोः' )=सूयात् ( १२ ) आत्मनेपद आशीर्लिङ् में—सोसीष्ट ।

( ७५५ ) पद—स्तुसुधूञ्भ्यः, परस्मैपदेषु । अनुवृत्ति—इट्, सिचि । विधिसूत्र ।

अभिषुणोति । 'प्राक्सितादि'ति. षत्वम् । अभ्यषुणोत् । (७५६) सुनोतेः स्यसनोः ८।३।११७ । स्ये सनि च परे सुञः सस्य षो न स्यात् । विसोष्यति । षिञ् बन्धने । विसिनोति । सिनुते । सिषाय । सिष्ये । चिञ् चयने । प्रणिचिनोति । चिनुते । (७५७)

---

सिच इत्यादिना । असावीत् । षुधातोः 'धात्वादेः षः सः' इत्यनेन षस्य सत्वे, लुङि लकारे, तत्स्थाने परस्मैपदे प्रथमपुरुषैकवचने तिप्यनुबन्धलोपे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यनेनाडागमेऽनुबन्धलोपे 'इतश्च' इतीकारलोपे, च्लौ, 'च्लेः सिच्' इति सिच्यनुबन्धलोपे 'अ सु स् त्' इति जाते 'स्तुसुधूञ्भ्यः परस्मैपदेषु' इति सिच इटि अनुबन्धलोपे 'अस्तिसिचोऽपृक्ते' इतीडागमे 'इट ईटि' इति सिचो लोपे 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ, अवादेशे सवर्णदीर्घे संयोगे च कृते 'असावीत्' इति । आत्मनेपदे तु—'अ सु स् त' इति स्थिते, सिच आर्धधातुकत्वात् 'सार्वधातुकार्धधातुकयोः' इति गुणे ओकारे 'आदेशप्रत्यययोः' इत्यनेन षत्वे 'ष्टुना ष्टुः' इति ष्टुत्वे 'असोष्ट' इति ।

(७५६) सुनोतेः स्यसनोरिति । 'अपदान्तस्य मूर्धन्यः' इत्यधिकृतम् । 'न रपर' इत्यस्मान्नेत्यनुवर्तते । तदाह—स्ये सनीत्यादि । विसोष्यति । 'वि + सोष्यति' इत्यत्र

---

**मूलार्थ**—परस्मैपद के विषय में स्तु, सु, धू धातुओं से परवर्ती 'सिच्' को इट्='इ' होता है । असावीत् । असोष्ट इत्यादि ।

**विमर्श**—'इडत्यर्तिव्ययतीनाम्' (७।२।६६) से आगमवाचक पद 'इट्' तथा 'अञ्जेः सिचि' (७।२।७१) से 'सिचि' पद की अनुवृत्ति आती है । तदनुसार—'ष्टुञ्, षुञ् तथा धूञ् से परस्मैपद परे रहते सिच् को इट् (=इ) का आगम होता है' ।

**उदाहरण**—(१) √षु ('ष्'='स्'—'धात्वादेः')—सु+लट् (=तिप्=ति, अट्='अ', इकारलोप—'इतश्च' च्लि, च्लि=सिच्='स्', इट्='इ' आगम—'स्तुसुधूञ्भ्यः परस्मैपदेषु', ईट्='ई'—'अस्तिसिचोऽपृक्ते', 'स्' का लोप—'इट ईटि' 'उ'='औ' वृद्धि—'सिचि वृद्धिः' इ+ई='ई'—सवर्णदीर्घ)=असावीत् । आत्मनेपद में—असोष्ट (गुण, षत्व, ष्टुत्व) । (२) अभि+सुनोति ('स्'='ष्' षत्व—'उपसर्गात्सुनोति०', णत्व—'अट्कुप्वाङ्०')=अभिषुणोति । (३) अभि+असुनोत् (यण्, यहाँ अट् के व्यवधान में भी षत्व—'अडभ्यासव्यवायेऽपि' णत्व)=अभ्यषुणोत् ।

**(७५६) पद**—सुनोतेः, स्यसनोः । **अनुवृत्ति**—न । **विधिसूत्र (निषेध)** ।

**मूलार्थ**—'स्य' और 'सन्' के परवर्ती रहते 'सुञ्' धातु सम्बन्धी सकार को षत्व नहीं होता । विसोष्यति ।

**विमर्श**—'अपदान्तस्य मूर्द्धन्यः' का अधिकार है । 'न रपर०' (८।३।११०) से 'न' पद की अनुवृत्ति आती है । अतः "स्य प्रत्यय या सन् प्रत्यय के परवर्ती रहते उपसर्ग से परे 'सुञ्' धातु के अवयव सकार के स्थान में षकार आदेश नहीं होता ।"

**उदाहरण**—(१) वि+सोष्यति (लृट्)—यहाँ 'उपसर्गात्सुनोति' से प्राप्त षत्व का 'सुनोतेः स्यसनोः' से निषेध ।

√**'षिञ्'** धातु का अर्थ 'बाँधना' है । (१) √षि+लट् ('ष्'='स्'—'धात्वादेः', ल्=तिप्=ति, श्नु='नु' गुण)=सिनोति । वि+सिनोति (प्राप्त षत्व का 'सुनोतेः स्यसनोः' से निषेध)=विसिनोति । आत्मनेपद में—सिनुते । (२) √षि+लिट् (सत्व, ल्=तिप्=णल्='अ' द्वित्व, वृद्धि, 'आय्' आदेश, षत्व)=सिषाय । आत्मनेपद—सिष्ये ।

**विभाषा चेः ८।३।५८। अभ्यासाच्चेः कुत्वं वा स्यात्सनि लिटि च। चिकाय-चिचाय। चिक्ये-चिच्ये। अचैषीत्। अचेष्ट। स्तृञ् आच्छादने। स्तृणोति। स्तृणुते। तस्तार। तस्तरतुः। तस्तरुः। 'ऋतश्च संयोगादेरि'ति गुणः। तस्तरे। 'गुणोऽर्ती'ति**

---

'उपसर्गात्सुनोति' इत्यनेन प्राप्तं षत्वं 'सुनोतेः स्यसनोः' इत्यनेन निषिध्यते। **चिनोति।** 'चिञ् चयने' इत्यस्माद्धातोर्लटि, तिपि, 'स्वादिभ्यः श्नुः' इति श्नौ, शलोपे 'सार्वधातुकमपित्' इति ङित्त्वे गुणाभावे, श्नोरुकारस्य 'सार्वधातुकार्धधातुकयोः' इत्यनेन गुणे 'चिनोति' इति। आत्मनेपदे—'चिनुते' इति।

(७५७) **विभाषा चेरिति।** अत्र 'चजोः कुः घिण्ण्यतोः' इत्यतः कुग्रहणमनुवर्तते, 'अभ्यासाच्च' इत्यतः 'अभ्यासादि'ति 'सन्लिटोर्जेः' इत्यतः सन्लिटोरिति च। तदाह—**अभ्यासादिति। चिकाय, चिचाय।** चिधातोर्लिटि तत्स्थाने तिपि, तिपो णलादेशेऽनु-

---

√चिञ् (चि) धातु का अर्थ—'चुनना' है। (१) लट्—चिनोति। आ० प०—चिनुते।

**√चिञ् धातु, लट् लकार के रूप (परस्मैपद)**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु० | चिनोति | चिनुतः | चिन्वन्ति |
| म० पु० | चिनोषि | चिनुथः | चिनुथ |
| उ० पु० | चिनोमि | चिन्वः, चिनुवः, | चिन्मः, चिनुमः |

**(आत्मनेपद)**

| | | | |
|---|---|---|---|
| प्र० पु० | चिनुते | चिन्वाते | चिन्वते |
| म० पु० | चिनुषे | चिन्वाथे | चिनुध्वे |
| उ० पु० | चिन्वे | चिन्वहे, चिनुवहे | चिन्महे, चिनुमहे |

**(७५७) पद**—विभाषा चेः। **अनुवृत्ति**—कु, अभ्यासात्, सन्लिटोः।

**मूलार्थ**—अभ्यास से उत्तरवर्ती 'चि' धातु के अवयव चकार को विकल्प से कुत्व होता है, सन् और लिट् के परवर्ती रहते। चिकाय-चिचाय, चिक्ये इत्यादि।

**विमर्श**—प्रकृत सूत्र में—'चजोः कुः घिण्ण्यतोः' (७।३।५२) से 'कु', 'अभ्यासाच्च' (७।३।५५) से 'अभ्यासात्' और 'सन्लिटोर्जेः' (७।३।५७) से 'सन्लिटोः' की अनुवृत्ति आती है। तदनुसार—"अभ्यास से परवर्ती चि धातु के चकार को कुत्व (क-वर्ग) विकल्प से होता है, सन् तथा लिट् के परे रहते।"

**उदाहरण**—(१) √चि+लिट् (=तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, 'च्'='क्' आदेश विकल्प से—'विभाषा चेः')—चि कि अ ('इ'='ऐ' 'वृद्धि'—'अचो ञ्णिति', ऐ='आय्' आदेश)=चिकाय। कुत्व के अभावपक्ष में—चिचाय। आत्मनेपद में भी विकल्प से कुत्व—चिक्ये, चिच्ये।

**लुट्**—चेता। **लृट्**—चेष्यति, चेष्यते। **लोट्**—चिनोतु, चिनुताम्। **लङ्**—अचिनोत्। अचिनुत। **विधिलिङ्**—चिनुयात्। आ० प०—चिन्वीत। आशीर्लिङ्—चीयात्। आ० प०—चेषीष्ट। (२) √चि+लुङ् (=तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्=स)—अचि स् त (ईट्='ई', वृद्धि—'सिचि वृद्धिः परस्मैपदेषु', षत्व)=**अचैषीत्। आ० प० में—अचेष्ट (सिच्, गुण, षत्व, ष्टुत्व)।**

गुणः । स्तर्यात् । ( ७५८ ) **ऋतश्च संयोगादेः ७।२।४३ ।** ऋदन्तात्संयोगादेर्लिङ्सिचोरिड् वा स्यात् तङि । स्तरिषीष्ट—स्तृषीष्ट । अस्तरिष्ट—अस्तृत । धुञ् कम्पने । धुनोति । धुनुते । दुधाव । दुधुवे । अधौषीत् । अधोष्यत् । धूञ् कम्पने । धूनोति ।

---

बन्धलोपे 'लिटि धातोरनभ्यासस्ये'त्यनेन द्वित्वेऽभ्यासत्वे 'विभाषा चेः' इत्यनेन विकल्पेन कुत्वे 'अचो ञ्णिति' इति वृद्धौ आयादेशे च कृते 'चिकाय' इति । कुत्वाऽभावपक्षे तु 'चिचाय' इति रूपम् ।

( ७५८ ) **ऋतश्चेति** । 'लिङ्सिचोरात्मनेपदेषु' इत्यनुवर्तते, 'इट् सनि वे'त्यतः इड्वेति च । तदाह—**ऋदन्तादित्यादिना । स्तरिषीष्ट** । 'स्तृञ्धातोराशीर्लिङि त प्रत्यये 'लिङः सीयुट्' इत्यनेन सीयुटि अनुबन्धलोपे, 'सुट् तिथोः' इत्यनेन सुटचनुबन्धलोपे 'स्तृ सीय् स् त' इति जाते 'लोपो व्योर्वलि' इत्यनेन यकारलोपे 'ऋतश्च संयोगादेः' इति विकल्पेन इडागमेऽनुबन्धलोपे 'गुणोऽर्तिसंयोगाद्योः' इति गुणे रपरे, उभयोः सकारयोः

---

√स्तृञ् ( स्तृ ) धातु का अर्थ—आच्छादन ( =ढँकना ) है । ( १ ) √स्तृ+लट् ( =तिप् =ति, श्नु=नु, गुण, 'न्'='ण्'—णत्व—'ऋवर्णान्नस्य णत्वं वाच्यम्' )=स्तृणोति । आ० पद में—स्तृणुते । ( २ ) √स्तृ+लिट् ( =तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, 'ऋ'='अ'—'उरत्' रपर 'शर्पूर्वाः खयः' से खय् शेष, 'स्' का लोप—'हलादिः शेषः' )—त स्तृ अ ( 'ऋ'='अ'—गुण—'ऋतश्च संयोगादेर्गुणः' रपर, वृद्धि—'अत उपधायाः' )=तस्तार । तस्तरतुः । तस्तरुः । आत्मनेपद में—तस्तरे । तस्तराते । तस्तरिरे । ( ३ ) √स्तृ+आशीर्लिङ् ( =तिप्=ति, यासुट्='यास्' 'स्' का लोप, इकारलोप )—स्तृ या त् ( 'ऋ'='अ'—गुण—'गुणोऽर्तिसंयोगाद्योः', रपर )=स्तर्यात् ।

**( ७५८ ) पद**—ऋतः, च, संयोगादेः । **अनुवृत्ति**—लिङ्सिचोरात्मनेपदेषु, इट्, वा । **विधिसूत्र ।**

**मूलार्थ**—आत्मनेपद के विषय में संयोगादि ऋदन्त धातु से परवर्ती लिङ् और सिच् को विकल्प से 'इट्' का आगम होता है । स्तरिषीष्ट । स्तृषीष्ट । अस्तरिष्ट इत्यादि ।

**विमर्श**—यहाँ 'लिङ्सिचोरात्मनेपदेषु' ( ७।२।४२ ) सूत्र तथा 'इट् सनि वा' ( ७।२।४१ ) से 'इट्' और 'वा' पदों की अनुवृत्ति आती है । तदनुसार—"आत्मनेपद के विषय में संयोग है आदि में जिसके, ऐसे ऋकारान्त धातु से उत्तरवर्ती लिङ् सिच् को विकल्प से इट् ( =इ ) का आगम होता है ।"

**उदाहरण**—( १ ) √स्तृ+आशीर्लिङ् ( =त, सीयुट्='सीय्', सुट्='स्'—'सुट् तिथोः' यकारलोप )—स्तृ सी स् त ( विकल्प से इट्='इ'—ऋतश्च संयोगादेः' 'ऋ'='अ'—गुण—'गुणोऽर्तिसंयोगाद्योः' रपर, दोनों सकार के स्थान में षत्व, ष्टुत्व )=स्तरिषीष्ट । 'इट्' के अभावपक्ष में—स्तृषीष्ट ( 'उश्च' से कित् होने से गुण का अभाव ) । ( २ ) √स्तृ+लुङ् ( =तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्', ईट्—'अस्तिसिचोऽपृक्ते', वृद्धि—'वदव्रज०' रपर, षत्व )=अस्तार्षीत् । आत्मनेपद में—√स्तृ त ( च्लि, च्लि=सिच्='स्' अट्, गुण—'गुणोऽर्तिसंयोगाद्योः', विकल्प से इट्, षत्व, ष्टुत्व )=अस्तरिष्ट । इट् के अभावपक्ष में—अ स्तृ स् त ( 'स्' का लोप—'ह्रस्वादङ्गात्' कित् होने से गुण का अभाव )—अस्तृत ।

√धुञ् ( धू ) धातु का अर्थ—'कँपाना, हिलाना' है । ( १ ) लट्—प० प०—धुनोति । आ० प०—धुनुते । ( २ ) √धू+लिट् ( =तिप्=णल्='अ' द्वित्व, अभ्यास संज्ञा, 'ध्'='द्'—

**धूनुते । 'स्वरतिसूती'ति वेट् । दुधविथ-दुधोथ । किति लिटि तु । ( ७५९ ) श्र्युकः किति ७।२।११ । श्रिञ, एकाच उगन्ताच्च गित्किनोरिण्न स्यात् । इति प्राप्ते । क्रादिनियमान्नित्यमिट् । दुधुविव । दुधुविम । अधावीत् । अधविष्ट-अधोष्ट । कृञ् हिंसायाम् । कृणोति । कृणुते । चकार । चकर्थ । चक्रे । क्रियात् । कृषीष्ट । अकार्षीत् ।**

---

षत्वे 'ष्टुना ष्टुः' इत्यनेन ष्टुत्वे संयोगे च 'स्तरिषीष्ट' इति । इडभावपक्षे— 'स्तृषीष्ट' इति ।

( ७५९ ) **श्र्युकः कितीति** । 'एकाच उपदेशे' इत्यतः एकाच इति, 'नेड् वशि कृति' इत्यतो नेडित्यनुवर्तते । तदाह—**श्रिञ इत्यादिना । अधावीत् ।** धूञ्धातोर्लुङि तिप्यनुबन्धलोपे च्लौ, च्लेः स्थाने सिच्यनुबन्धलोपे 'स्तुसुधूञ्भ्यः परस्मैपदेषु' इत्यनेन इटि 'अस्तिसिचोऽपृक्ते' इत्यनेन ईटि, 'इट ईटि' इति सकारलोपे, 'इतश्चे'तीकारलोपे 'सिचि वृद्धिः परस्मैपदेषु' इति उकारस्य वृद्धौ आवादेशे सवर्णदीर्घे संयोगे च 'अधावीत्' इति सिद्धम् ।

---

'अभ्यासे चर्च' )—दु धू अ ( 'ऊ'='औ' वृद्धि—'अचो ञ्णिति', 'औ'='आव्' )=दुधाव । आ० पद में—दुधुवे ( उवङ् ) । ( ३ ) लुङ्—अधौषीत् । लृङ्—अधोष्यत् ।

√धूञ् धातु का भी 'कँपाना' अर्थ है । ( १ ) लट्—धूनोति । आ० प०—धूनुते । ( २ ) √धू+लिट् ( =सिप्=थल्=थ, द्वित्व, अभ्यास संज्ञा, ह्रस्व, 'ध्'='द्'—'अभ्यासे चर्च' )—दुधू थ ( विकल्प से इट्='इ'—'स्वरतिसूति०', गुण, अव् आदेश )—दुधविथ । 'इट्' के अभाव-पक्ष में—दुधोथ ।

**( ७९६ ) पद—**श्र्युकः, किति । **अनुवृत्ति**—एकाचः, न । **विधिसूत्र ( निषेध ) ।**

**मूलार्थ—**श्रिञ्, एकाच् और उगन्त धातुओं से परवर्ती गित् कित् प्रत्यय को इट् का आगम नहीं होता । निषेध की प्राप्ति होने पर क्रादिनियम से नित्य इट् । दुधुविव । दुधुविम । अधावीत् । अधविष्ट । अधोष्ट इत्यादि ।

**विमर्श—**यहाँ 'एकाच उपदेशे०' ( ७।२।१० ) से 'एकाचः' तथा 'नेड् वशि कृति' ( २।७।८ ) से 'न' पद की अनुवृत्ति आ रही है । अतः "श्रि और एकाच् उगन्त धातु से परवर्ती गित् कित् प्रत्यय को 'इट्' का आगम नहीं होता ।"

**उदाहरण**—( १ ) √धू+लिट् ( वस्=व, द्वित्व, अभ्यास संज्ञा, ह्रस्व, जश्त्व )—दु धू व ( 'स्वरति०' से वैकल्पिक इट् की प्राप्ति, 'श्र्युकः किति' से निषेध प्राप्त होने पर, उसका बाधकर क्रादिनियम से नित्य इट्='इ' उवङ्='उव्' )=दुधुविव । ( २ ) लिट् उ० पु० बहु०—दुधुविम । ( ३ ) √धू+लुङ् ( =तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्' )—अ धू स् त ( इट्='इ'—'स्तुसुधूञ्भ्यः', ईट्='ई', 'स्' का लोप—'इट ईटि' वृद्धि—'सिचि वृद्धि०' आव् आदेश )=अधावीत् । आत्मनेपद में—अधविष्ट । अधोष्ट । ( विकल्प से इट्—'स्वरतिसूति०' ) ।

√कृञ् ( कृ ) धातु का अर्थ—'हिंसा करना' है । ( १ ) √कृ+लट् ( =तिप्=ति, श्नु=नु, गुण, णत्व—'ऋवर्णान्नस्य णत्वं वाच्यम्' )=कृणोति । आ० प०—कृणुते ( २ ) लिट्—चकार । आ० प०—चक्रे । ( ३ ) लिट् म० पु० एकव०—चकर्थ । ( ४ ) आशीर्लिङ् ( प० प० )—क्रियात् । आ० प०—कृषीष्ट । ( ५ ) लुङ् प० प०—अकार्षीत् । आ० प०—अकृत ।

√वृञ् धातु का अर्थ—'वरण करना' है । ( १ ) लट् ( प० प० )—वृणोति । आ० प०—वृणुते ।

अकृत । वृञ् वरणे । वृणोति । वृणुते । (७६०) बभूथाऽऽततन्थजगृम्भववर्थेति निगमे ७।२।६४। एषां वेद इडभावो निपात्यते । तेन भाषायां थलीट् । ववरिथ-ववृथ । ववृव । ववृम । ववृवहे । 'वृतो वा' । वरीता-वरिता । (७६१) लिङ्सिचोरात्मनेपदेषु ७।२।४२। वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड् वा स्यात्तङि । (७६२) न लिङि ७।२।३९। वृतो लिङ इटो न दीर्घः । वरिषीष्ट-वृषीष्ट । अवारीत् । अवरिष्ट-

---

(७६०) बभूथेति । निगमो वेदः । वेदे—बभूथ, आततन्थ, जगृम्भ, ववर्थ एते निपाताः स्युरित्यर्थः ।

(७६१) लिङ्सिचोरिति । 'इट् सनि वे'त्यतः 'इड्वा' इति, 'वृतो वा' इत्यतः 'वृतः' इति चानुवर्तते । तदाह—वृङ्वृञ्भ्यामित्यादि ।

(७६२) न लिङीति । 'वृतो वे'त्यतः वृत इत्यनुवर्तते । 'लिङी'त्यत्र षष्ठ्यर्थे सप्तमी । 'आर्धधातुकस्येट्' इत्यत 'इडि'त्यनुवर्तते, तच्च षष्ठ्या विपरिणम्यते । 'ग्रहो-

---

**(७६०) पद**—बभूथाततन्थजगृम्भववर्थ इति, निगमे । **अनुवृत्ति**—थलि, न, इट् । **विधिसूत्र (निषेध)।**

**मूलार्थ**—बभूथ, आततन्थ, जगम्भ और ववर्थ—इन वेद के प्रयोगों में इट् का अभाव निपातित है । अतः लौकिक भाषा में थल् में इट् होता है । ववरिथ इत्यादि ।

**विमर्श**—यहाँ 'आर्धधातुकस्येड्०' (७।२।३५) से 'इट्', 'न वृद्भ्यः' (७।२।५९) से 'न' तथा 'अचस्तास्वत्०' (७।२।६१) से 'थलि' की अनुवृत्ति आती है । तदनुसार—'वेद के विषय में बभूथ आदि शब्द थल् परे रहते निपातित किये जाते हैं ।' अर्थात् 'बभूथ' आदि में क्रादिनियम से प्राप्त इट् का अभाव हो जाता है । इससे यह ज्ञात होता है कि भाषा में √वृ को थल् में इट्, नित्य होता है ।

**उदाहरण**—(१) √वृ+लिट् (=सिप्=थल्=थ, द्वित्व, अत्व, रपर, हलादिशेष, इट्, गुण, रपर)—व व र् इ थ (उक्त सूत्र द्वारा वेद-विषयक निपातन होने से यहाँ इट् का अभाव नहीं हुआ, अपितु क्रादिनियम से नित्य इट्)=ववरिथ । (२) लिट्—उ० पु० द्वि० व०, बहुव०—ववृव, ववृम । आ० प०—ववृवहे । (३) √वृ+लुट् (=तिप्=डा=आ, तास्)—वृ तास् आ (इट्='इ' गुण, रपर, टि का लोप)—वरिता ('वृतो वा' से विकल्प से दीर्घ)=वरीता । दीर्घ के अभावपक्ष में—वरिता ।

**(७६१) पद**—लिङ्सिचोः, आत्मनेपदेषु । **अनुवृत्ति**—वा, वृतः, इट् । **विधिसूत्र ।**

**मूलार्थ**—वृङ्, वृञ् तथा दीर्घ ऋकारान्त धातु से परवर्ती लिङ् और सिच् को विकल्प से इट् होता है, आत्मनेपद के विषय में ।

**विमर्श**—सूत्रार्थ की पूर्ति हेतु 'इट् सनि वा' (७।२।४१) से 'इट् वा' तथा 'वृतो वा' से 'वृतः' पद की अनुवृत्ति आती है । अतः "वृङ्, वृञ् तथा दीर्घ ऋकारान्त धातुओं से उत्तरवर्ती आत्मनेपद-परक लिङ् तथा सिच् को विकल्प से इट् का आगम होता है ।"

**(७६२) पद**—न, लिङि । **अनुवृत्ति**—वृतः, दीर्घः, इट् । **विधिसूत्र (निषेध)।**

**मूलार्थ**—वृङ्, वृञ् और दीर्घ ऋकारान्त धातु से परवर्ती लिङ् सम्बन्धी इट् को दीर्घ नहीं होता । वरिषीष्ट, वृषीष्ट इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'वृतो वा' (७।२।३८) से 'वृतः' 'आर्धधातुकस्येड्०' (७।२।३५)

**अवरोष्ट । अवृत । अवरिष्यत–अवरीष्यत । टुदु उपतापे । दुनोति । दुनुतः । दुन्वन्ति । दुदाव । दोता । हि गतौ वृद्धौ च । ( ७६३ ) हिनुमीना ४।८।१५ । उपसर्गस्थान्निमित्तात्परस्यैतयोर्नस्य णः स्यात् । प्रहिणोति । ( ७६४ ) हेरचङि ७।३।५६ । अभ्यासात् परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि । जिघाय । आप्लृ व्याप्तौ । आप्नोति ।**

---

ऽलिटि दीर्घः' इत्यस्माद् दीर्घ इत्यनुवर्तते । तदाह—**वृत इति । वरिषीष्ट ।** इट्पक्षे 'वृत्तो वे'ति प्राप्तो दीर्घो 'न लिङि' इत्यनेन निषिध्यते । वृषीष्टेति । इडभावपक्षे 'उश्चे'ति कित्त्वान्न गुणः ।

( ७६३ ) **हिनुमीना ।** 'रषाभ्यां नो णः' इत्यनुवर्तते, 'उपसर्गादसमासेऽपी'त्यत उपसर्गादिति च । अत आह—**उपसर्गस्थादिति ।**

( ७६४ ) **हेरचङीति ।** 'चजोः कुः' इत्यतः कुरित्यनुवर्तते; 'अभ्यासाच्चे'त्यत अभ्यासादिति, 'हो हन्तेरि'त्यत ह इति चानुवर्तते । तदाह—**अभ्यासात्परस्येति ।**

---

से 'इट्' तथा 'ग्रहोऽलिटि दीर्घः' ( ७।२।३७ ) से 'दीर्घः' पद की अनुवृत्ति आती है । तदनुसार—"वृङ्, वृञ् और दीर्घ ऋकारान्त धातुओं से परवर्ती लिङ् सम्बन्धी इट् को दीर्घ नहीं होता ।"

**उदाहरण**—( १ ) √वृ+आशीर्लिङ् ( =त, सीयुट्='सीय्', सुट्='स्', 'य्' का लोप )—वृ सी स् त ( विकल्प से इट्='इ'—'लिङ्सिचोरात्मनेपदेषु' गुण, रपर, दोनों 'स्' को षत्व, ष्टुत्व, 'वृतो वा' से प्राप्त दीर्घ का 'न लिङि' से निषेध )=वरिषीष्ट । इट् के अभावपक्ष में 'उश्च' से कित्त्व, गुण का अभाव—वृषीष्ट । ( २ ) लुङ् प० प०—अवारीत् । आ० पद में—अ वृ त ( च्लि=सिच्='स्' इट् विकल्प से—'लिङ्सिचो', गुण, रपर, षत्व, ष्टुत्व, विकल्प से दीर्घ—'वृतो वा' )=अवरीष्ट । दीर्घ के अभावपक्ष में—अवरिष्ट । इडागम के अभावपक्ष में ( कित्त्व, 'स्' का लोप, गुणाभाव )=अवृत । ( ३ ) लृङ् ( आ० पद )—अवरिष्यत । अवरीष्यत ( विकल्प से दीर्घ ) ।

√ टुदु ( =दु ) धातु का अर्थ—'उपताप' ( कष्ट देना ) है । 'टु' की इत्संज्ञा, लोप—'आदिर्ञिटुडवः' । ( १ ) √दु+लट् ( =तिप्=ति, श्नु='नु' गुण )=दुनोति । दुनुतः । दुन्वन्ति । ( २ ) लिट्—दुदाव । ( ३ ) लोट्—दोता ।

√हि धातु का अर्थ 'जाना, बढ़ना' है ।

**( ७६३ ) पद**—हिनुमीना । **अनुवृत्ति**—रषाभ्यां नो णः, उपसर्गस्थात । **विधिसूत्र ।**

**मूलार्थ**—उपसर्ग में स्थित निमित्त से परवर्ती 'हिनु' और 'मीना' सम्बन्धी नकार को णकार होता है । प्रहिणोति ।

**विमर्श**—'उपसर्गादसमासेऽपि०' ( ८।४।१४ ) से 'उपसर्गात्' तथा 'रषाभ्यां नो णः' (८।४।१) से 'रषाभ्यां नो णः' की अनुवृत्ति आती है । अतः "उपसर्ग में स्थित निमित्त ( र्, ष् ) से परवर्ती 'हिनु' तथा 'मीना' के नकार के स्थान में णकार आदेश होता है ।"

**उदाहरण**—( १ ) प्र+√हि+लट् ( =तिप्='ति', श्नु='नु' गुण, 'न्'='ण्' 'हिनुमीना' )=प्रहिणोति ।

**( ७६४ ) पद**—हेः, अचङि । **अनुवृत्ति**—अभ्यासात , हः, कुः । **विधिसूत्र ।**

**मूलार्थ**—अभ्यास से परवर्ती हिनोति ( हि ) धातु के हकार को कुत्व होता है, चङ् के परे कुत्व नहीं होता । जिघाय इत्यादि ।

आप्नुतः। आप्नुवन्ति। आप्नुवः। आप्ता। आप्नुहि। लृदित्त्वादङ्। आपत्। शक्लृ शक्तौ। शक्नोति। शशाक। अशकत्। राध साध संसिद्धौ। राध्नोति। (७६५) **राधो हिंसायाम् ६।४।१२३।** राधो हिंसायाम् एत्वाभ्यासलोपौ स्तः, किति, लिटि, सेटि थलि च। अपरेधतुः। अपरेधुः। रेधिथ। राद्धा। साध्नोति। ससाध। साद्धा। असात्सीत्। असाद्धाम्। असात्स्यत्। ञिधृषा प्रागल्भ्ये। धृष्णोति। दधर्ष। धर्षिता।

---

जिघाय। हिधातोर्लिटि तिपि, तिपो णलादेशेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्ये'ति द्वित्वेऽभ्यासत्वे 'अभ्यासे चर्चे'ति चर्त्वे 'हेरचङि' इति हकारस्य कुत्वेन घकारे वृद्धौ आयादेशे 'जिघाय' इति।

(७६५) **राधो हिंसायामिति।** 'घ्वसोरेद्धावभ्यासलोपश्चे'त्यत एदिति, अभ्यास-

---

**विमर्श**—सूत्रार्थ की पूर्णता के लिए 'अभ्यासाच्च' (७।३।५५) से 'अभ्यासात्', 'हो हन्तेर्ञ्णिन्नेषु' (७।३।५४) से 'हः' तथा 'चजोः कुः' (७।३।५२) से 'कुः' की अनुवृत्ति आ रही है। तदनुसार—"अभ्यास से उत्तरवर्ती 'हि' धातु के हकार को कवर्गादेश होता है; किन्तु चङ् परे हो तो कुत्व नहीं होता।"

**उदाहरण**—(१) √हि+लिट् (=तिप्=णल्='अ', द्वित्व—'लिटि धातोरनभ्यासस्य' अभ्यास संज्ञा, हलादिशेष, चर्त्व—'अभ्यासे चर्च')—जि हि अ ('ह्'='घ्'—कुत्व—'हेरचङि' वृद्धि, आय् आदेश)=जिघाय।

**√आप्लृ** (=आप्) धातु का अर्थ—'व्याप्त होना' है। (१) √आप्+लट् (=तिप्=ति, श्नु, गुण)=आप्नोति, आप्नुतः, आप्नुवन्ति इत्यादि। (२) लुट्—आप्ता। (३) लोट् म० पु० एकव०—आप्नुहि। (४) √आप्+लुङ् (=तिप्=ति, आट्, वृद्धि—'आटश्च', च्लि, च्लि=अङ्='अ' 'पुषादि०' इकारलोप)=आपत्।

**√शक्लृ** (=शक्) धातु का अर्थ—'सकना' है। (१) √शक्+लट् (=तिप्=ति, श्नु =नु, गुण)=शक्नोति। (२) लिट्—शशाक। (३) लुङ्—अशकत्।

√राध और साध का अर्थ—'सिद्ध होना' है।

(७६५) **पद**—राधः, हिंसायाम्। **अनुवृत्ति**—थलि, च, सेटि, अतः, लिटि, एत्, अभ्यासलोपश्च, किति। **विधिसूत्र।**

**मूलार्थ**—हिंसार्थक राध् धातु को एत्व और अभ्यास का लोप होता है, कित् लिट् सेट् थल् के परवर्ती रहते। अपरेधतुः, अपरेधुः इत्यादि।

**विमर्श**—प्रकृत सूत्र में 'थलि च सेटि' (६।४।१२१) सूत्र, 'अत एक०' (६।४।१२०) से 'अतः लिटि', 'घ्वसोरेद्धावभ्यासलोपश्च' (६।४।११९) से एत्, 'अभ्यासलोपश्च' तथा 'गमहन०' (६।४।९८) से 'किति' पदों की अनुवृत्ति आती है। तदनुसार—"कित् लिट् अथवा सेट् थल् के परवर्ती रहते हिंसार्थक राध् धातु को एत्व और अभ्यास का लोप होता है।"

**(वा०) श्रन्थि०**—श्रन्थ, ग्रन्थ, दम्भ और स्वञ्ज धातु से परवर्ती लिट् विकल्प से कित् होता है।

**(वा०) दम्भेश्च०**—कित् लिट् और सेट् थल् के परवर्ती रहते दम्भ् धातु को एत्व और अभ्यास का लोप होता है।

**उदाहरण**—(१) अप+√राध्+लिट् (=तस्=अतुस्, द्वित्व, अभ्यास संज्ञा, ह्रस्व, हलादिशेष)—र राध् अतुस् ('आ'='ए' एत्व और अभ्यास का लोप—'राधो हिंसायाम्', स्

दम्भु दम्भने । 'अनिदितामि'ति नलोपः । दभ्नोति । ददम्भ । * श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा * । कित्त्वपक्षे नलोपः । तस्याऽऽभीयत्वादसिद्धत्वेनैत्वाभ्यासलोपयोरप्राप्तौ । * दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ * । देभतुः । ददम्भतुः । देभुः । ददम्भुः । दम्भिष्यति । दभ्यात् । तृप प्रीणने । ( ७६६ ) **क्षुभ्नादिषु च ८।४।३९** । क्षुभ्नादिषु नस्य न णत्वम् । तृप्नोति । ततर्प । तर्पिता । अशू व्याप्तौ, सङ्घाते च । अश्नुते । ( ७६७ ) **अश्नोतेश्च ६।४।७२** । दीर्घादभ्यासावर्णात्परस्य नुम् स्यात् । आनशे । अशिता । 'व्रश्चे'ति षः । अष्टा । अशिष्यते–अक्ष्यते । अश्नुताम् । आश्नुत । अश्नुवीत । अक्षीष्ट । अशिषीष्ट । आशिष्ट–आष्ट । आक्षाताम् । आशिष्यत–आक्ष्यत ।

इति स्वादिप्रकरणम् ।

---

लोप इति, 'गमहन०' इत्यतः कितीति, 'अत एकहल्मध्ये' इत्यतः लिटीति 'थलि च सेटी'ति सूत्रं चानुवर्तते । अत आह—**एत्वेत्यादिना** ।

( ७६६ ) **क्षुभ्नादिषु चेति** । क्षुभ्नादिगणपठितानां धातूनां णत्वं न भवतीति सूत्रार्थः ।

( ७६७ ) **अश्नोतेश्चेति** । 'अत्र लोपोऽभ्यासस्ये'त्यत 'अभ्यासस्ये'त्यनुवर्तते ।

---

=र्=: )=अपरेधतुः । ( २ ) लिट् प्र० पु० बहुव०—अपरेधुः । ( ३ ) √राध्+लिट् ( सिप्=थल्=थ, द्वित्व, अभ्यास संज्ञा, ह्रस्व, हलादिशेष, क्रादिनियम से नित्य इट्='इ', एत्व, अभ्यास का लोप—'राधो हिंसायाम्' )=रेधिथ । ( ४ ) लुट्—राद्धा ।

( १ ) √साध्+लट् ( =तिप्=ति, श्नु='नु' गुण )=साध्नोति । ( २ ) लिट्—ससाध । ( ३ ) लुट्—साद्धा । ( ४ ) लुङ्—असात्सीत् । ( ५ ) लृङ्—असात्स्यत् ।

√ञिधृषा ( =धृष् ) धातु—'प्रागल्भ्य' अर्थ में है । ( १ ) √धृष्+लट् ( =तिप्=ति, श्नु=नु, गुण, णत्व )=धृष्णोति । ( २ ) लिट्—दधर्ष । ( ३ ) लुट्—धर्षिता ।

√दम्भु ( =दम्भ् ) का अर्थ 'दम्भ करना' है । ( १ ) √दम्भ्+लट् ( =तिप्=ति, श्नु=नु, गुण, 'न्' का लोप—'अनिदिताम्०' )=दभ्नोति । ( २ ) लिट्—ददम्भ । ( ३ ) √दम्भ्+लिट् ( =तस्=अतुस्, द्वित्व, अभ्यास संज्ञा, हलादिशेष )—द दम्भ् अतुस् ( विकल्प से कित्त्व—'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा', 'म्' का लोप—'अनिदिताम्०' नलोप-विधायक सूत्र आभीय होने के कारण असिद्ध होने से एत्वाभ्यास लोप की प्राप्ति न होने पर 'दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ' वार्तिक से एत्व और अभ्यास का लोप, स्=र्=: )=देभतुः । कित्त्व के अभावपक्ष में—द दम्भ् अतुस् ( स्=र्=: )=ददम्भतुः । ( ४ ) लिट् प्र० पु० बहुव०—देभुः, ददम्भुः । ( ५ ) लृट्—दम्भिष्यति । ( ६ ) आशीर्लिङ्—दभ्यात् ।

√तृप का अर्थ—'तृप्त होना' है ।

( ७६६ ) **पद**—क्षुभ्नादिषु च । **अनुवृत्ति**—न, रषाभ्यां नो णः । **विधिसूत्र** । ( निषेध ) ।

**मूलार्थ**—क्षुभ्नादि गण पठित शब्दों में नकार को णकार नहीं होता । तृप्नोति ।

**विमर्श**—'न भाभू०' ( ८।४।३३ ) से 'न' तथा 'रषाभ्यां नो णः समानपदे' ( ८।४।१ ) से 'रषाभ्यां नो णः' की अनुवृत्ति आती है । अतः "क्षुभ्नादिगण पठित शब्दों के नकार को भी णकार आदेश नहीं होता ।"

# अथ तुदादिप्रकरणम्

तुद व्यथने । **( ७६८ ) तुदादिभ्यः शः ३।१।७७ ।** शपोऽपवादः । तुदति । तुदतः । तुदते । तुतोद । तुतोदिथ । तुतुदे । तोत्ता । तोत्स्यति । तोत्स्यते । तुदतु ।

---

तस्मान्नुट्' इति च । तच्छब्देनात्र 'अत आदेः' इति कृतदीर्घ अकारः परामृश्यते । अत आह—**दीर्घादित्यादि । आनशे ।** अश्धातोर्लिटि तङि धातोर्द्वित्वेऽभ्याससंज्ञायां हलादिशेषे 'अत आदेः' इत्यभ्यासाकारस्य दीर्घे 'अश्नोतेश्च' इति नुटि 'लिटस्तझयोः' इत्यनेन 'त' इत्यस्य स्थाने एशादेशेऽनुबन्धलोपे 'आनशे' इति सिद्धम् ।

**इति स्वादिप्रकरणम् ।**

---

अथ शविकरणा धातवो निरूप्यन्ते—

**( ७६८ ) तुदादिभ्यः श इति ।** कर्त्रर्थे सार्वधातुके परे तुदादिभ्यः स्वार्थे शः

---

**उदाहरण**—( १ ) √तृप्+लट् ( =तिप्=ति, श्नु=नु, गुण, प्राप्त णत्व का 'क्षुभ्नादिषु च' से निषेध )=तृप्नोति । ( २ ) लिट्—ततर्प । ( ३ ) लुट्—तर्पिता ।

√अशू ( =अश् ) धातु का अर्थ—'व्याप्त होना व संघात' है । ( १ ) √अश्+लट् ( =त, श्नु='नु' 'टि' को एत्व )=अश्नुते ।

**( ७६७ ) पद**—अश्नोतेः, च । **अनुवृत्ति**—तस्मान्नुट्, अभ्यासस्य । **विधिसूत्र ।**

**मूलार्थ**—अश् धातु के अभ्यास सम्बन्धी दीर्घ आकार से परे नुट् का आगम होता है । आनशे । अशिता इत्यादि ।

**विमर्श**—यहाँ 'तस्मान्नुड् द्विहलः' ( ७।४।७१ ) से 'तस्मात्' तथा 'अत्र लोपोऽभ्यासस्य' ( ७।४।५८ ) से 'अभ्यासस्य' की अनुवृत्ति आती है । 'तत्' शब्द से 'अत आदेः' से विहित दीर्घ आकार का ग्रहण होता है । इस प्रकार—"अश् धातु के अवयव दीर्घ आकार से परे नुट् का आगम होता है ।"

**उदाहरण**—( २ ) √अश्+लिट् ( =त=एश्='ए', द्वित्व, अभ्यास संज्ञा, हलादिशेष, अभ्यास के 'अ'='आ' दीर्घ—'अत आदेः' )—आ अश् ए ( नुट्='न्'—'अश्नोतेश्च' )= आनशे । ( ३ ) लुट्—अशिता ( इट् विकल्प ) । ( ४ ) इट् के अभावपक्ष में—√अश्+लुट् ( =त=डा='आ', तास्, 'श्'='ष्'—'व्रश्च०' 'त्'='ट्'—ष्टुत्व, टिलोप )=अष्टा । ( ५ ) √अश्+लृट् ( =त, स्य, विकल्प से इट्—'स्वरतिसूति०' षत्व, 'टि' को एत्व )=अशिष्यते । इट् के अभावपक्ष में—अश् स्य ते ( 'श्'='ष्'—'व्रश्च', 'ष्'='क्'—'षढोः०' षत्व, क्+ष्= क्ष् )=अक्ष्यते । ( ६ ) लोट्—अश्नुताम् । ( ७ ) लङ्—आश्नुत । ( ८ ) विधिलिङ्—अश्नुवीत । ( ९ ) आशीर्लिङ् में विकल्प से इट्—अशिषीष्ट, अक्षीष्ट । ( १० ) लुङ् में विकल्प से इट्—आशिष्ट । इट् के अभावपक्ष में 'झलो झलि' से 'स्' का लोप—आष्ट । ( ११ ) लुङ् प्र० पु० द्वि०—आक्षाताम् । ( १२ ) लृङ् विकल्प से इट्—आशिष्यत, आक्ष्यत ।

**स्वादि-प्रकरण समाप्त ।**

---

प्रस्तुत प्रकरण में 'श' विकरण वाली धातुओं के रूपों की रचना-प्रक्रिया का निर्देशन किया जा रहा है ।

**तुदताम् । अतौत्सीत् । अतुत्त । णुद प्रेरणे । नुदति । नुदते । नुनोद । नुनुदे । नोत्ता । नोत्स्यति । नोत्स्यते । भ्रस्ज पाके । 'ग्रहिज्यावयी'ति सम्प्रसारणम् । सस्य श्चुत्वेन**

---

स्यादिति सूत्रार्थः । **तुदतीति** । तुद्धातोर्लटि तिपि, सार्वधातुकसंज्ञायां लघूपधगुणं बाधित्वा नित्यत्वात् 'तुदादिभ्यः शः' इत्यनेन शे कृते अनुबन्धलोपे, तस्य अपित्त्वात् 'सार्वधातुकमपित्' इति ङित्त्वाद् गुणाभावे 'तुदति' इति । आत्मनेपदे—तुदते इति ।

---

√तुद धातु का अर्थ—'पीडा पहुँचाना' है । 'स्वरितेत्' होने से यह धातु उभयपदी है ।

**( ७६८ ) पद्**—तुदादिभ्यः, शः । **अनुवृत्ति**—कर्तरि, सार्वधातुके । **विधिसूत्र** ।

**मूलार्थ**—तुदादिगण पठित धातुओं से 'श' विकरण होता है । यह शप् का अपवाद है । तुदति । तुदते इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'कर्तरि शप्' ( ३।१।६८ ) से 'कर्तरि' तथा 'सार्वधातुके यक्' ( ३।१।६७ ) से 'सार्वधातुके' की अनुवृत्ति आती है । तदनुसार—"कर्त्रर्थक सार्वधातुक के परवर्ती रहते तुदादिगण की धातुओं से श ( =अ ) प्रत्यय होता है ।"

**उदाहरण**—( १ ) √तुद्+लट् ( =तिप्=ति, शप् का बाधकर श='अ'—'तुदादिभ्यः शः', 'श' के अपित् होने से ङिद्वद्भाव—'सार्वधातुकमपित्' अतः गुण का निषेध )=तुदति । आत्मनेपद में 'टि' को एत्व—तुदते । ( २ ) √तुद्+लिट् ( =तिप्=णल्='अ' द्वित्व, अभ्यास संज्ञा, हलादिशेष, गुण )=तुतोद । आ० प० में—तुतुदे । ( ३ ) √तुद्+लिट् (=सिप्=थल्='थ', द्वित्व, अभ्यास संज्ञा, हलादिशेष )—तु तुद् थ ( क्रादिनियम से नित्य इट्='इ', गुण )= तुतोदिथ । ( ४ ) √तुद्+लुट् ( =तिप्=डा=आ, तास्, टिलोप, लघूपध गुण, 'द्'='त्' चर्त्व )=तोत्ता । ( ५ ) लृट् प० प०—तोत्स्यति । आ० प०—तोत्स्यते । ( ६ ) लोट्—तुदतु । आ० पद में—तुदताम् । ( ७ ) √तुद्+लुङ् ( =तिप्=ति, अट्, इकारलोप—'इतश्च' च्लि, च्लि=सिच्='स्' ईट्='ई'—'अस्तिसिचोऽपृक्ते' )—अ तुद् स् ई त् ( 'उ'='औ' वृद्धि—'वदव्रज०', 'द्'='त्'—चर्त्व—'खरि च' )=अतौत्सीत् । आत्मनेपद में—अतुत्त ।

**√तुद् धातु लुङ् लकार के रूप ( परस्मैपद )**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अतौत्सीत् | अतौत्ताम् | अतौत्सुः |
| म० पु० | अतौत्सीः | अतौत्तम् | अतौत्त |
| उ० पु० | अतौत्सम् | अतौत्स्व | अतौत्स्म |

**( आत्मनेपद )**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अतुत्त | अतुत्साताम् | अतुत्सत |
| म० पु० | अतुत्थाः | अतुत्साथाम् | अतुद्ध्वम् |
| उ० पु० | अतुत्सि | अतुत्स्वहि | अतुत्स्महि |

णुद् ( =नुद् ) धातु का अर्थ—'प्रेरणा देना' है । ( १ ) लट् प० प०—नुदति । आ० प०—नुदते । ( २ ) लिट् प० प०—नुनोद । आ० प०—नुनुदे । ( ३ ) लुट्—नोत्ता । ( ४ ) लृट्—नोत्स्यति । आ० प०—नोत्स्यते ।

√भ्रस्ज् धातु का अर्थ—'भूनना' है । यह धातु भी अनिट् है । ( १ ) √भ्रस्ज्+लट् ( =तिप्=ति, श='अ'—'तुदादिभ्यः शः', 'र्'='ऋ'—सम्प्रसारण—'ग्रहिज्या०', पूर्वरूप,

शः। तस्य जश्त्वेन जः। भृज्जति। भृज्जते। (७६९) **भ्रस्जो रोपधयो रमन्यतरस्याम्** ६।४।४७। भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके। मित्वादन्त्यादचः परः। स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः। बभर्ज। बभर्जतुः। बभर्जुः। बभर्जिथ–बभर्ष्ठ। रमभावपक्षे—बभ्रज्ज। बभ्रज्जतुः। बभ्रज्जुः। बभ्रज्जिथ। 'स्कोरि'ति सलोपः। 'व्रश्चे'ति षः। बभ्रष्ठ। बभर्जे। बभर्जाते। बभर्जिरे।

---

(७६९) **भ्रस्जो रोपधयोरिति।** 'भ्रस्जः' इत्यत्रावयवषष्ठी, 'रोपधयोरि'त्यत्र स्थानषष्ठी। रश्च उपधा च तयोरिति विग्रहः। रेफादकार उच्चारणार्थः। 'आर्धधातुके' इत्यधिकृतम्। तदाह—**'भ्रस्जे' इत्यादिना। बभर्ज।** भ्रस्ज्धातोर्लिटि, तत्स्थाने तिपि, तिपो णलादेशेऽनुबन्धलोपे धातोर्द्वित्वेऽभ्याससंज्ञायां हलादिशेषे 'अभ्यासे चर्च' इति भकारस्य बकारे 'ब भ्रस्ज् अ' इति जाते, 'भ्रस्जो रोपधयो रमन्यतरस्याम्' इति रेफस्य उपधाभूतसकारस्य च स्थाने रमि प्राप्ते, 'मिदचोऽन्त्यात्परः'

---

'स्'='श्'--श्चुत्व, 'श्'='ज्'--'झलां जश् झशि')=भृज्जति। आत्मनेपद पक्ष में 'टि' को एत्व—भृज्जते।

**(७६९) पद**—भ्रस्जः, रोपधयोः, रम्, अन्यतरस्याम्। **विधिसूत्र।**

**मूलार्थ**—आर्धधातुक के परवर्ती रहते 'भ्रस्ज्' धातु के रेफ और उपधा के स्थान में विकल्प से 'रम्' का आगम होता है। बभर्ज इत्यादि।

**विमर्श**—'आर्धधातुके' (६।४।४६) का अधिकार है। अतः "आर्धधातुक के परे रहते 'भ्रस्ज्' धातु के रेफ तथा उपधा दोनों के स्थान में विकल्प से 'रम्' का आगम होता है।"

**मित्वादिति।** 'मित्' होने के कारण 'रम्' अन्त्य अच् से परे होता है।

**स्थानषष्ठी**—सूत्रस्थ 'रोपधयोः' में स्थानषष्ठी है। अतः 'रम्' होने पर रेफ और उपधा सकार की निवृत्ति हो जाती है। अन्यथा स्थानषष्ठी का उच्चारण व्यर्थ हो जाता।

**उदाहरण**—(१) √भ्रस्ज्+लिट् (=तिप्=णल्='अ' द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'भ्'='ब्'—'अभ्यासे चर्च')—ब भ्रस्ज् अ (रम्='र्' का विकल्प से आगम, रकारोत्तरवर्ती अकार से परे और रेफ तथा उपधा सकार की निवृत्ति)=बभर्ज। रम् के अभावपक्ष में—ब भ्रस्ज् अ ('स्'='श्'—श्चुत्व, 'श्'='ज्'—'झलां जश् झशि')=बभ्रज्ज। (२) लिट् प्र० पु० द्विवचन में विकल्प से 'रम्' होने पर—बभर्जतुः। रम् के अभावपक्ष में—बभ्रज्जतुः। (३) लिट् प्र० पु० बहुवचन में 'रम्' होने पर—बभर्जुः। रम् के अभावपक्ष में—बभ्रज्जुः। (४) √भ्रस्ज्+लिट् (=सिप्=थल्='थ', द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'भ्'='ब्'—चर्त्व)—ब भ्रस्ज् थ (रम्='र्' का आगम विकल्प से, 'र्' 'स्' की निवृत्ति, भारद्वाज-नियम से इट्='इ')=बभर्जिथ। इट् के अभावपक्ष में—ब भ्रस्ज् थ ('ज्'='ष्'—'व्रश्च०', 'र्, स्'=रम्='र्'—'भ्रस्जो०')—ब भ र् ष् थ ('थ्'='ठ्'—ष्टुत्व)=बभर्ष्ठ। रम् के अभाव तथा इट् के अभाव पक्ष में—ब भ्रस्ज् थ (ज्='ष्'—'व्रश्च०', 'स्' का लोप—'स्कोः संयोगाद्योरन्ते च', 'थ्'='ठ्'—ष्टुत्व=बभ्रष्ठ। (५) आत्मनेपद में विकल्प से 'रम्' आगम होने पर—बभर्जे, बभर्जाते, बभर्जिरे। रम् के अभावपक्ष में—बभ्रज्जे, बभ्रज्जाते, बभ्रज्जिरे। (६) √भ्रस्ज्+लुट् (=तिप्=डा=आ, तास्, टिलोप)—भ्रस्ज् ता (विकल्प से रम्='र्' का आगम, रेफ सकार की निवृत्ति, 'ज्'='ष्'—'व्रश्च०', 'त्'='ट्'—ष्टुत्व)=भर्ष्टा। रम् के अभावपक्ष में—

बभ्रज्जे । बभ्रज्जाते । बभ्रज्जिरे । भर्ष्टा–भ्रष्टा । भर्क्ष्यति–भ्रक्ष्यति । * क्ङिति रमागमं बाधित्वा सम्प्रसारणं पूर्वविप्रतिषेधेन * । भृज्ज्यात् । भृज्ज्यास्ताम् । भृज्ज्यासुः । भर्क्षीष्ट–भ्रक्षीष्ट । अभार्क्षीत्–अभ्राक्षीत् । अभर्ष्ट–अभ्रष्ट । अभर्क्ष्यत्–अभ्रक्ष्यत् । अभर्क्ष्यत–अभ्रक्ष्यत । कृष विलेखने । कृषति । कृषते । चकर्ष । चकृषे । 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' । क्रष्टा–कर्ष्टा । कृक्षीष्ट । 'स्पृशमृशे'ति सिज्वा ।

---

इत्यकारात्परस्यैव रमागमेऽनुबन्धलोपे उपधायाः सस्य रेफस्य च निवृत्तौ 'बभर्ज' इति । रमोऽभावपक्षे तु—'भ्रस्ज् भ्रस्ज् अ' इति स्थिते हलादिशेषे 'अभ्यासे चर्च' इति भकारस्य बकारे, सस्य श्चुत्वेन शत्वे, 'झलां जश् झशि' इति शस्य जश्त्वेन जत्वे, बभ्रज्ज इति रूपम् । अक्राक्षीत् । कृषधातोर्लुङि तिपि अनुबन्धलोपे, तिप इकारलोपे अङ्गस्य अडागमेऽनुबन्धलोपे 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति नित्ये सिचि प्राप्ते, तं प्रबाध्य 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वक्तव्यः' इति वार्तिकेन विकल्पेन सिच्यनुबन्धलोपे 'अस्तिसिचोऽपृक्ते' इत्यनेन ईडागमे 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्'

---

भ्रस्ज् ता ('स्' का लोप—'स्कोः०' 'ज्'='ष्' ष्टुत्व)=भ्रष्टा। (६) लृट्—(विकल्प से 'रम्')—भर्क्ष्यति, भ्रक्ष्यति ।

वा०—कित्, ङित् आर्धधातुक के परवर्ती रहते रम् आगम का बाधकर पूर्वविप्रतिषेध से सम्प्रसारण ही होता है ।

(७) √भ्रस्ज्+आशीर्लिङ् (=तिप्=ति, इकारलोप, यासुट्=यास्)—भ्रस्ज् यास् त ('किदाशिषि' से यासुट् कित्, यहाँ सम्प्रसारण और रम् का आगम दोनों की प्राप्ति होती है । 'विप्रतिषेधे परं कार्यम्' सूत्र बल से 'रम्' आगम पर होने से बलवान् है । तथापि 'क्ङिति रमागमं बाधित्वा०' वार्तिक से पहले सम्प्रसारण होता है । 'स्'='श्'—श्चुत्व, 'श्'='ज्'—जश्त्व, स् का लोप)=भृज्ज्यात् । भृज्ज्यास्ताम्, भृज्ज्यासुः इत्यादि । (८) आत्मनेपद में—भ्रस्ज् सीय् त (सुट्='स्', 'य्' का लोप, विकल्प से रम्='र्' रेफ, सकार की निवृत्ति, ज्='ष्'—'व्रश्च०', 'ष्'='क्', षत्व, ष्टुत्व, क्+ष्='क्ष्')=भर्क्षीष्ट । रम् के अभावपक्ष में-भ्रक्षीष्ट । (९) √भ्रस्ज्+लुङ् (=तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्' विकल्प से रम्='र्'—'भ्रस्जो रोपधयो०' रेफ और सकार की निवृत्ति, 'ज्'='ष्'—'व्रश्च०', 'ष्'='क्'—'षढोः०', 'स्'='ष्'—'षत्व' ईट्='ई', वृद्धि—'वदव्रज०')=अभार्क्षीत् । रम् के अभावपक्ष में—अ भ्रस्ज् स् त ('स्' का लोप—'स्कोः संयोगाद्योरन्ते च', ईट्, 'ज्'='ष्', 'ष्'='क्', 'स्'='ष्'—षत्व, क्+ष्='क्ष्', वृद्धि)=अभ्राक्षीत् । (१०) आत्मनेपद में—अ भ्रस्ज् त (च्लि, च्लि=सिच्='स्', विकल्प से 'रम्', रेफ सकार की निवृत्ति, 'स्' का लोप—'झलो झलि' 'ज्'='ष्'—'व्रश्च०' ष्टुत्व)=अभर्ष्ट । रम् के अभावपक्ष में—अ भ्रस्ज् स् त ('स्' का लोप—'झलो झलि', 'ज्'='ष्'—'व्रश्च०' 'त्'='ट्'—ष्टुत्व, धातु के 'स्' का लोप—'स्कोः')=अभ्रष्ट । (११) लृङ् परस्मैपद में—अभर्क्ष्यत्, अभ्रक्ष्यत् (विकल्प से 'रम्')। आत्मनेपद में—अभर्क्ष्यत, अभ्रक्ष्यत ।

√कृष् धातु का अर्थ—'हल चलाना, खींचना' है । यह धातु स्वरितेत् होने से उभयपदी है । अनुदात्तोपदेश धातुओं में पाठ होने से यह अनिट् है । (१) √कृष्+लट् (तिप्=ति, श='अ', श के अपित् होने से ङिद्वद्भाव, गुण का निषेध)=कृषति । आ० प०—कृषते । (२) √कृष्+लिट् (=तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, ऋ=अत्='अ' रपर, हलादिशेष, 'क्'=

**पक्षे क्सः। सिचि अम्वा। अक्राक्षीत्-अकार्क्षीत्। अकृक्षत्-अकृष्ट। अकृक्षाताम्। अकृक्षत। क्सपक्षे—अकृक्षत। अकृक्षाताम्। अकृक्षन्त। मिल सङ्गमे। मिलति। मिलते। मिमेल। मिमिले। मेलिता। अमेलीत्। मुच्लृ मोक्षणे। (७७०) शे मुचादीनाम् ७।१।५९। मुच्लुप्विद्लिप्सिच्कृत्खिद्पिशां नुम्। मुञ्चति। मुञ्चते। मुमुचे।**

---

इत्यनेन विकल्पेन अमागमेऽनुबन्धलोपे—'अ क्र अ ष् स् ई त्' इति जाते 'इको यणची'त्यनेन ऋकारस्य स्थाने रकारे यणादेशे 'वदव्रज०' इत्यनेनोपधावृद्धौ 'षढोः कः सि' इति षस्य कत्वे, 'आदेशप्रत्यययोः' इति षत्वे, संयोगे कृते 'अक्राक्षीत्' इति। अमोऽभावपक्षे—'अ कृष् स् ई त्' इति स्थिते उपधावृद्धौ रपरत्वे, 'षढोः कः सि' इति षस्य कत्वे 'आदेशप्रत्यययोः' इति षत्वे संयोगे 'अकार्क्षीत्' इति। सिजभावपक्षे—'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशेऽनुबन्धलोपे 'अ कृष् स् त्' इति जाते, षस्य कत्वे सकारस्य षत्वे संयोगे च 'अकृक्षत्' इति।

**(७७०) शे मुचादीनामिति।** 'इदितो नुम्' इत्यतः 'नुमि'त्यनुवर्तते। तदाह—

---

'च्'—'कुहोश्चुः' 'ऋ'='अ'—गुण—'पुगन्त०' रपर)=चकर्ष। आ० पद में—√कृष्+लिट् (=त=एश्='ए', द्वित्व, अभ्यासकार्य, हलादिशेष, 'क्'='च्'—'कुहोश्चुः' 'ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन' से कित्व पहले हो जाने से गुण का अभाव)=चकृषे।

**अनुदात्तस्येति०**—उपदेशावस्था में अनुदात्त जो ऋदुपध धातु, उसको विकल्प से 'अम्' आगम होता है, झलादि कित्-भिन्न आर्धधातुक के परवर्ती रहते।

(३) √कृष्+लुट् (=तिप्=डा=आ, तास्, टिलोप)—कृष् ता (विकल्प से अम्='अ'—'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' 'ऋ'='र्'—यण्, 'त्'='ट्'—ष्टुत्व)=क्रष्टा। अम् के अभावपक्ष में—कृष् ता (आर्धधातुक-गुण, रपर, ष्टुत्व)=कर्ष्टा। (४) आत्मनेपद आशीर्लिङ् में—कृक्षीष्ट। (५) √कृष्+लुङ् (=तिप्=ति, अट्, इकारलोप, च्लि, प्राप्त सिच् का बाधकर वार्तिक से विकल्प से सिच्='स्'—'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः', विकल्प से अम्='अ'—आगम—'अनुदात्तस्य०')—अ कृ अ ष् स् त ('ऋ'='र्'—यण्, 'ष्'='क्'—'षढोः कः सि' 'स्'='ष्'—षत्व, ईट्='ई', वृद्धि—'वदव्रज०', क्+ष्='क्ष्')=अक्राक्षीत्। 'अम्' के अभावपक्ष में—हलन्तलक्षणा वृद्धि, रपर—अकार्क्षीत्। 'सिच्' के अभावपक्ष में (च्लि=क्स='स्' 'ष्'='क्', षत्व, गुणाभाव, क्+ष्='क्ष्')=अकृक्षत्। आत्मनेपद में—√कृष्+लुङ् (=त, च्लि, च्लि=सिच्='स्', 'स्' का लोप—'झलो झलि' 'त्'='ट्'—ष्टुत्व)=अकृष्ट। अकृक्षाताम्। अकृक्षत इत्यादि। सिच् के अभावपक्ष में 'क्स' होने पर—अकृक्षत। अकृक्षाताम्। अकृक्षन्त इत्यादि।

√मिल धातु का अर्थ—'मिलना' है। इस धातु का अनुदात्तोपदेश धातुओं में परिगणन नहीं किया है, अतः यह 'सेट्' है। (१) √मिल्+लट् (=तिप्=ति, श='अ')=मिलति। आत्मनेपद में—मिल् त (श='अ' 'टि' को एत्व)=मिलते। (२) लिट्—मिमेल। आ० पद—मिमिले। (३) लुट्—मेलिता। (४) √मिल्+लुङ् (=तिप्=ति, अट्, इकार-लोप, च्लि, च्लि=सिच्='स्', 'इ'='ए'—गुण—'पुगन्त०' इट्='इ', ईट्='ई', 'स्' का लोप—'इट ईटि')=अमेलीत्।

√मुच्लृ (=मुच्) धातु का अर्थ—'छोड़ना' है। यह अनिट् है।

**(७७०) पद—शे, मुचादीनाम्। अनुवृत्ति—नुम्। विधिसूत्र।**

**मोक्ता-२। मोक्ष्यति। मोक्ष्यते। मुच्यात्। 'लिङ्सिचावि'ति कित्त्वम्। मुक्षीष्ट। अमुचत्। अमुक्त। अमुक्षाताम्। लुप्लृ छेदने। लुम्पति। लुम्पते। लुलोप। लुलुपे। लोप्ता-२। लोप्स्यति। लोप्स्यते। अलुपत्। अलुप्त। विद्लृ लाभे। विन्दति। विन्दते। विवेद। व्याघ्रभूतिमते सेट्। वेदिता-२। वेदिष्यति। वेदिष्यते। भाष्य-**

---

**मुचित्यादि।** **मुञ्चति।** 'मुच्लृ मोक्षणे' इत्यस्माद्धातोर्लटि, तिपि, अनुबन्धलोपे 'तुदादिभ्यः शः' इति शेऽनुबन्धलोपे ङित्त्वाद् गुणाभावे, 'शे मुचादीनाम्' इति नुमि, अनुबन्धलोपे 'नश्चापदान्तस्य झलि' इति अनुस्वारे, परसवर्णे कृते 'मुञ्चति' इति। **अमुचदिति।** मुच्धातोर्लुङि तिप्यनुबन्धलोपे, अटि, च्लौ 'पुषादिद्युताद्य्लृदितः' इति च्लेरङि अनुबन्धलोपे, ङित्त्वाद् गुणाभावे 'इतश्चे'ति तिप इकारलोपे, अमुचत् इति। आत्मनेपदे—'अ मुच् त' इति स्थिते, च्लौ, च्लेः सिचयनुबन्धलोपे 'झलो झलि' इति सकारलोपे 'चोः कुः' इति चस्य कत्वे 'अमुक्त' इति।

---

**मूलार्थ—**'श' प्रत्यय के परवर्ती रहते मुचादि धातुओं को 'नुम्' का आगम होता है। मुञ्चति। मुञ्चते इत्यादि।

**विमर्श—**यहाँ 'इदितो नुम्धातोः' (७।१।५८) से 'नुम्' पद्र की अनुवृत्ति आती है। तदनुसार—"श प्रत्यय होने पर मुच् (त्यागना), लिप् (=लीपना), विद् (=प्राप्त करना), लुप् (=लोप करना), सिच् (=सींचना), कृत (=काटना), खिद् (=खिन्न करना) और पिश् (=पीसना) धातुओं को 'नुम्' का आगम होता है।"

**उदाहरण—**(१) √मुच्+लट् (=तिप्='ति', श='अ'—'तुदादिभ्यः शः')—मुच् अ ति (नुम्='न्'—'शे मुचादीनाम्', न्=ं-अनुस्वार—'नश्चापदान्तस्य झलि' ं='ञ्' परसवर्ण—'अनुस्वारस्य ययि०')=मुञ्चति। आत्मनेपद में 'टि' को एत्व—मुञ्चते। (२) लिट् परस्मैपद—मुमोच, मुमुचतुः, मुमुचुः इत्यादि। लिट् आत्मनेपद—मुमुचे, मुमुचाते, मुमुचिरे। (३) लुट्—मोक्ता (कुत्व)। (४) लृट् प० प०—मोक्ष्यति। आ० प०—मोक्ष्यते। (५) आशीर्लिङ् प० प०—मुच्यात्। आत्मनेपद में ('लिङ्सिचावात्मनेपदेषु' से सीयुट् के कित् नहीं होने से गुण नहीं होता, 'च्'='क्'—कुत्व, 'स्'='ष्'—षत्व, क्+ष्='क्ष्')=मुक्षीष्ट। (६) √मुच्=लुङ् (=तिप्='ति', अट्, इकारलोप, च्लि; च्लि=अङ्='अ'—'पुषादिद्युताद्य्लृदितः', ङित् होने से गुण का अभाव)=अमुचत्। आत्मनेपद में—अ मुच् त (च्लि=सिच्='स्', 'स्' का लोप—'झलो झलि', 'च्'='क्'—'चोः कुः')=अमुक्त। लुङ् प्र० पु० द्विवचन—अमुक्षाताम्।

√लुप्लृ (लुप्) धातु का अर्थ—'लोप करना' है। यह धातु भी अनिट् है। मुचादि में होने से 'शे मुचादीनाम्' से 'नुम्' होता है। (१) √लुप्+लट् (=तिप्='ति', श='अ', नुम्='न्'—'शे मुचादीनाम्' न्=ं-अनुस्वार='म्' 'परसवर्ण')=लुम्पति। आ० पद—लुम्पते। (२) लिट्—लुलोप। आ० प०—लुलुपे। (३) लुट्—लोप्ता। (४) लृट् प० प०—लोप्स्यति। आ० प०—लोप्स्यते। (५) लृदित् होने से लुङ् परस्मैपद में 'च्लि' के स्थान में अङ्='अ' होता है—अलुपत्। आत्मनेपद में—अलुप्त।

√विद्लृ (=विद्) धातु का अर्थ—'प्राप्त करना' है। इस धातु के रूप 'मुच्' के समान चलते हैं। यह भी उभयपदी है। व्याघ्रभूति आचार्य के मत में इसका अनुदात्तोपदेश धातुओं में पाठ होने से यह सेट् है। भाष्यकार के मत से यह अनिट् है। (१) √विद्+लट् (=तिप्

मतेऽनिट् । परिवेत्ता । परिवर्जने । ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानित्यर्थः । षिच क्षरणे । सिञ्चति । सिञ्चते । सिषेच । सिषिचे । 'लिपिसिचो'त्यङ् । असिचत् । तङि तु वा । असिचत-असिक्त । लिप उपदेहे । उपदेहो वृद्धिः । लिम्पति । लिम्पते । लिलेप । लिलिपे । लेप्ता । लेप्स्यति । लेप्स्यते । 'लिपिसिचिह्वश्चे'त्यङ् । अलिपत् । अलिपत-अलिप्त । इत्युभयपदिनः ।

अथ परस्मैपदिनः । कृती छेदने । कृन्तति । चकर्त्त । कर्तिता । 'सेऽसिचो'ति वेट् । कर्तिष्यति-कर्त्स्यति । अकर्तीत् । खिद परिदेवने । खिन्दति । चिखेद । खेत्ता ।

---

विद्लृ लाभ इति । चत्वारो विद्धातवः, तत्रैवं रूपभेदः—

"'वेत्ति' रूपं विद ज्ञाने 'विन्ते' विद विचारणे ।
'विद्यते' विद सत्तायाम्, विद्लृ लाभे च 'विन्दति' ॥"

---

='ति', श='अ', नुम्=न्=-अनुस्वार='न्'—परसवर्ण )=विन्दति । आ० प०—विन्दते । ( २ ) लिट्—विवेद ( ३ ) लुट्—वेदिता ( व्याघ्रभूति के मतानुसार इट् ) । ( ४ ) लृट् प० प०—वेदिष्यति । आ० प०—वेदिष्यते । ( ५ ) परि+विद्+लुट्—परिवेत्ता । ( भाष्यकार के मत में इट् का अभाव ) । 'परि' का यहाँ 'वर्जन' अर्थ है । ज्येष्ठ भ्राता का विवाह होने से पूर्व ही जो कनिष्ठ भ्राता विवाह कर लेता है, उसको 'परिवेत्ता' कहा जाता है ।

√षिच् ( =सिच् ) धातु का अर्थ—'सींचना' है । यह षोपदेश धातु है । धातु के आदि 'ष्'='स्'—'धात्वादेः षः सः' । ( १ ) √सिच्+लट् ( =तिप्=ति, श='अ', नुम्=-अनुस्वार='ञ्'—परसवर्ण )=सिञ्चति । आत्मनेपद में—सिञ्चते । ( २ ) लिट् प० पद—सिषेच ( षत्व ) । आ० पद—सिषिचे । ( ३ ) √सिच्+लुङ् ( =तिप्=ति, अट्, इकारलोप, च्लि, च्लि=अङ्='अ'—'लिपिसिचिह्वश्च' )=असिचत् । आत्मनेपद में—अ सिच् त ( च्लि, च्लि=विकल्प से अङ्='अ'—'आत्मनेपदेष्वन्यतरस्याम्' )=असिचत । अङ् के अभावपक्ष में ( च्लि=सिच्='स्' )—अ सिच् स् त ( 'स्' का लोप—'झलो झलि', 'च्'='क्'—'चोः कुः' ) =असिक्त ।

√लिप धातु का अर्थ—'लीपना' है । ( १ ) √लिप्+लट् ( =तिप्=ति, श='अ' नुम्, अनुस्वार, परसवर्ण )=लिम्पति । आ० प०—लिम्पते । ( २ ) लिट्—प० प०—लिलेप । आ० प०—लिलिपे । ( ३ ) लुट्—लेप्ता । ( ४ ) लृट् प० प०—लेप्स्यति । आ० प०—लेप्स्यते । ( ५ ) √लिप्+लुङ् ( =तिप्='ति' 'अट्', इकारलोप, च्लि, च्लि=अङ्='अ'—'लिपिसिचिह्वश्च' )=अलिपत् । आत्मनेपद पक्ष में विकल्प से अङ्—अलिपत । अङ् के अभावपक्ष में ( च्लि=सिच्='स्', 'स्' का लोप—'झलो झलि' )=अलिप्त ।

अब परस्मैपदी धातुओं के रूपों की साधनिका प्रदर्शित की जा रही है—

√कृती ( =कृत ) धातु का अर्थ—'काटना' है । ( १ ) √कृत+लट् ( =तिप्=ति, श='अ', नुम्='न्'—'शे मुचादीनाम्' अनुस्वार, परसवर्ण )=कृन्तति । ( २ ) √कृत+लिट् ( =तिप्=णल्='अ' द्वित्व, अभ्यासकार्य, 'क्'='च्'—'कुहोश्चुः', 'ऋ'='अ' गुण—'पुगन्त०' रपर, 'त्' को द्वित्व—'अचो रहाभ्यां द्वे' )=चकर्त्त । ( ३ ) लुट्—कर्तिता । ( ४ ) लृट्—कर्तिष्यति, कर्त्स्यति ( 'सेऽसिचि०' से विकल्प से इट् ) । ( ५ ) √कृत+लुङ् ( =तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्' इट्='इ', ईट्='ई'—'अस्तिसिचोऽपृक्ते' 'स्' का लोप—'इट ईटि', गुण—'पुगन्त०' रपर )=अकर्तीत् ।

खेत्स्यति । पिश अवयवे । पिंशति । पिपेश । पेशिता । ओव्रश्चू छेदने । 'ग्रहिज्या' । वृश्चति । 'लिटयभ्यासस्ये'ति सम्प्रसारणं रेफस्य ऋकारः । 'उरत्' । तस्य 'अचः परस्मिन्' इति स्थानिवद्भावात् 'न सम्प्रसारणे सम्प्रसारणमि'ति वस्योत्वं न । वव्रश्च । वव्रश्चिथ-वव्रष्ठ । व्रश्चिता-व्रष्टा । व्रश्चिष्यति-व्रक्ष्यति । वृश्चतु । वृश्च्यात् । अव्रश्चीत्-अव्राक्षीत् । व्यच व्याजीकरणे । विचति । विव्याच । विविचतुः । विविचुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्याचीत्-अव्यचीत् । 'व्यचेः कुटादित्वमनसी'ति तु नेह

---

वृश्चतीति । व्रश्च्धातोर्लटि, तिपि अनुबन्धलोपे 'तुदादिभ्यः शः' इति शेऽनुबन्धलोपे 'ग्रहिज्या०' इति सम्प्रसारणे पूर्वरूपे च कृते 'वृश्चति' इति । आनर्च्छ इति । ऋच्छ्धातोर्लिटि प्रथमपुरुषैकवचने तिपि, तिपः णलादेशेऽनुबन्धलोपे 'ऋच्छ् अ' इति जाते, धातोर्द्वित्वे 'उरत्' इत्यभ्यास ऋकारस्य अकारादेशे रपरत्वे हलादिशेषे 'अ ऋच्छ् अ' इति जाते 'अत आदेः' इत्यभ्यासस्य दीर्घे आत्वे 'तस्मान्नुड् द्विहलः' इति नुटयनुबन्धलोपे 'ऋच्छत्यृताम्' इति ऋकारस्य गुणे अकारे रपरे संयोगे कृते 'आनर्च्छ' इति ।

---

√खिद् धातु का अर्थ—'खिन्न करना' है। (१) √खिद्+लट् (=तिप्=ति, श='अ' नुम्, अनुस्वार, परसवर्ण)=खिन्दति। (२) लिट्—चिखेद। (३) लुट्—खेत्ता। (४) लृट्—खेत्स्यति।

√पिश का अर्थ—'पीसना' है। (१) √पिश्+लट् (=तिप्=ति, श='अ', नुम्, अनुस्वार)=पिंशति। (२) लिट्—पिपेश। (३) लुट्—पेशिता।

√ओव्रश्चू (=व्रश्च्) धातु का अर्थ—'काटना' है। (१) √व्रश्च्+लट् (=तिप्=ति, श='अ')—व्रश्च् अ ति ('श' के अपित् सार्वधातुक होने से ङिद्वद्भाव होने के कारण उसको निमित्त मानकर 'र्'='ऋ'—सम्प्रसारण—'ग्रहिज्या०', 'अ' का पूर्वरूप—'सम्प्रसारणाच्च')=वृश्चति। (२) √व्रश्च्+लिट् (=तिप्=णल्='अ', द्वित्व, अभ्यास संज्ञा, अभ्यास के 'र्'='ऋ' सम्प्रसारण—'लिट्यभ्यासस्योभयेषाम्' पूर्वरूप, 'ऋ'='अ' 'उरत्', रपर, हलादिशेष)=वव्रश्च। (यहाँ वकार को भी उकार सम्प्रसारण प्राप्त होता है, परन्तु 'उरत्' सूत्र से विहित अकार में 'अचः परस्मिन्०' से आरोप बोधन कर अकार रूप सम्प्रसारण यहाँ पर में है। अतः 'न सम्प्रसारणे सम्प्रसारणम्' से वकार के सम्प्रसारण का निषेध हो जाता है।) (३) √व्रश्च्+लिट् (=सिप्=थल्=थ, द्वित्व, अभ्यास संज्ञा, अभ्यास के 'र्' को सम्प्रसारण 'ऋ'—'लिटयभ्यासस्योभयेषाम्' पूर्वरूप)—वृश्च् व्रश्च् थ (ऋ='अ'—'उरत्', रपर, हलादिशेष, विकल्प से इट्='इ'—'स्वरतिसूति०')=वव्रश्चिथ। इट् के अभावपक्ष में—व व्रश्च् थ ('स्' का लोप—'स्कोः०', 'च्'='ष्' 'व्रश्चभ्रस्ज०' 'थ्'='ठ्'—ष्टुत्व)=वव्रष्ठ। (४) लुट्—व्रश्चिता (विकल्प से इट्)। इट् के अभावपक्ष में (स् का लोप, षत्व, ष्टुत्व)—व्रष्टा। (५) लृट्—व्रश्चिष्यति, व्रक्ष्यति। (६) लोट्—वृश्चतु। (७) लिङ्—वृश्च्यात्। (८) लुङ् इट् पक्ष में—अव्रश्चीत्। इट् के अभावपक्ष में—अव्राक्षीत्।

√व्यच धातु का अर्थ—'उगना' है। (१) √व्यच्+लट् (=तिप्=ति, श='अ', 'श' के अपित् होने से ङिद्वद्भाव—'सार्वधातुकमपित्' 'य्'='इ'—सम्प्रसारण—'ग्रहिज्या', पूर्वरूप—'सम्प्रसारणाच्च')=विचति। (२) √व्यच्+लिट् (=तिप्=णल्='अ', द्वित्व, अभ्यास

प्रवर्तते, 'अनसी'ति पर्युदासेन कृन्मात्रविषयत्वात्। उछि उञ्छे। 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलमि'ति यादवः। उञ्छति। उञ्छाञ्चकार। उञ्छिता। ऋछ गतीन्द्रियप्रलयमूर्तिभावेषु। 'छे च'। ऋच्छति। 'ऋच्छत्यृतामि'ति गुणः परत्वाण्णल्यपि भवति। द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट्। आनर्च्छ। आनर्च्छतुः। ऋच्छिता। उज्झ उत्सर्गे। उज्झति। उज्झाञ्चकार। लुभ विमोहने। लुभति। लुलोभ। 'तीषसहे'ति वेट्। लोभिता-लोब्धा। लोभिष्यति। तृप तृम्फ तृप्तौ।

---

**लोभिता, लोब्धा**। लुभधातोर्लुटि तिपि तासि प्रत्यये, तस्यार्धधातुकत्वे 'तीषसहलुभरुषरिषः' इति विकल्पेन इडागमेऽनुबन्धलोपे 'पुगन्तलघूपधस्य चे'ति गुणे 'लुटः प्रथमस्ये'ति तिपः स्थाने डादेशे अनुवन्धलोपे टिलोपे च लोभिता इति। इडभावे

---

संज्ञा, अभ्यास के 'य्'='इ' सम्प्रसारण--'लिट्यभ्यासस्योभयेषाम्', पूर्वरूप)—वि व्यच् अ (वृद्धि—'अत उपधायाः')=विव्याच। (३) लिट् प्र० पु० द्विव०--विविचतुः। (४) लिट् प्र० पु० बहु०--विविचुः। (५) लुट्--व्यचिता। (६) लृट्--व्यचिष्यति। (७) आशीर्लिङ्--विच्यात्। (८) √व्यच्+लुङ् (=तिप्=ति, अट्, च्लि, च्लि=सिच्='स्', इट्, इकारलोप—'इतश्च', ईट्='ई'--'अस्तिसिचो०' 'स्' का लोप—'इट ईटि', विकल्प से वृद्धि—'अतो हलादेर्लघोः')=अव्याचीत्। वृद्धि के अभावपक्ष में--अव्यचीत्।

**व्यचेरिति**—"व्यच धातु कुटादि है, अस्-भिन्न प्रत्यय के परवर्ती रहते।" यह वार्तिक अस्-भिन्न सिच् आदि प्रत्यय के स्थल में (अव्याचीत् आदि में) प्रवृत्त नहीं होता, क्योंकि 'अनसि' में नञ् पर्युदास है[1]। वह सदृशग्राही होता है। इसका विषय केवल कृत्प्रत्यय है। अर्थात् अस्-भिन्न अस् सदृश कृत्प्रत्यय परवर्ती हो तो कुटादि व्यच् धातु को मानकर 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' से ङिद्वद्भाव बोधन होता है। प्रकृत में नहीं।

**√उछि** धातु का अर्थ--'उञ्छवृत्ति से निर्वाह करना' है। यह धातु 'इदित्' है। अतः 'इदितो नुम्धातोः' से नुम् होकर, अनुस्वार परसवर्ण 'उञ्छ्' हो जाता है। "कण-कण का संग्रह करना 'उञ्छ' कहलाता है। इसी संग्रह को 'शिल' भी कहते हैं।" यह यादव-कोष का वचन है। (१) √उञ्छ्+लट् (=तिप्=ति, 'श'='अ')=उञ्छति। (२) लिट्—उञ्छाञ्चकार (आम्, √कृ का अनुप्रयोग आदि)।

**√ऋछ** धातु का अर्थ—'जाना, इन्द्रियों का नाश, तथा निश्चेष्ट होना' है। (१) √ऋछ+लट् (=तिप्=ति, श=अ, तुक्='त्'—'छे च', 'त्'='च्'--श्चुत्व)=ऋच्छति। (२) ऋच्छ्+लिट् (=तिप्=णल्='अ', द्वित्व, अभ्यास संज्ञा, 'ऋ'='अ'—'उरत्', रपर, हलादिशेष)—अ ऋच्छ् अ (अभ्यास को आत्व—'अत आदेः', 'ऋ'='अ' गुण--'ऋच्छत्यृताम्', रपर)—आ अ र् च्छ् अ ('तस्मान्नुड् द्विहलः' में 'द्विहल्' का उपादान एक से अधिक हल् बोधित करने के लिए होने से प्रकृत में नुट्='न्' का आगम)=आनर्च्छ। (३) लिट् प्र० पु० द्विव०--आनर्च्छतुः। (४) लुट्—ऋच्छिता।

---

१. पर्युदास और प्रसज्य भेद से नञ् दो प्रकार का होता है। पर्युदास सदृश का ग्रहण कराता है और प्रसज्य अभाव का बोध कराता है—

"द्वौ नञौ हि समाख्यातौ पर्युदासप्रसज्यकौ।
पर्युदासः सदृशग्राही प्रसज्यस्तु निषेधकृत्॥"

तृपति । ततर्प । तर्पिता । अतर्पीत् । तृम्फति । शस्य ङित्त्वादनिदितामिति नलोपः । * शे तृम्फादीनां नुम्वाच्यः * । आदिशब्दः प्रकारे । प्रकारो भेदसादृश्ये । तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । ततृम्फ । तृफ्यात् । मृड सुखने । पृड च । मृडति । पृडति । ममर्ड । शुन गतौ । शुनति । शुशोन । इष इच्छायाम् । 'इषुगमी'ति छः । इयेष । 'तीषे'ति वेट् । एषिता-एष्टा । एषिष्यति । इष्यात् । ऐषीत् । ऐषिष्यत् । कुट कौटिल्ये । 'गाङ्कुटादी'ति ङित्त्वम् । चुकुटिथ । चुकोट ।

---

'झषस्तथोर्धोऽधः' इति तस्य धत्वे 'झलां जश् झशि' इति भस्य बत्वे गुणे कृते 'लोब्धा' इति ।

---

√उज्झ का अर्थ—'छोड़ना' है । (१) लट्—उज्झति । (२) लिट्—उज्झाञ्चकार ।

√लुभ धातु का अर्थ—'मोहित होना, लोभ करना' है । (१) =लुभ्+लट् ( =तिप्=ति, श='अ' )=लुभति । (२) लिट्—लुलोभ । (३) √लुभ्+लुट् ( =तिप्=डा=आ, तास्, आर्धधातुक संज्ञा, विकल्प से इट्='इ'—'तीषसहलुभरुषरिषः', 'उ'='ओ'—गुण—'पुगन्त०', टिलोप )=लोभिता । इट् के अभावपक्ष में—लुभ् ता ( 'त'='ध्'—'झषस्तथो०' 'भ्'='ब्'—'झलां जश् झशि' गुण )=लोब्धा । (४) लृट्—लोभिष्यति ।

√तृप, तृम्फ का अर्थ—'तृप्ति करना' है । (१) √तृप्+लट् ( =तिप्=ति, 'श'='अ' )=तृपति । (२) लिट्—ततर्प । (३) लुट्—तर्पिता । (४) √तृप्+लुङ् ( =तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्', इट्='इ', ईट्='ई'—'अस्तिसिचो', 'स्' का लोप—'इट ईटि', इ+ई='ई'—दीर्घ, गुण, रपर )=अतर्पीत ।

(१) √तृम्फ्+लट् ( =तिप्=ति, 'श'='अ'—तृम्फति । यहाँ 'श' विकरण सार्वधातुकसंज्ञक होने से ङित है । अतः 'अनिदिताम्०' से नकार का लोप कर 'शे तृम्फादीनां नुम्वाच्यः' से नुम्='न्'=-अनुस्वार—'नश्चापदान्तस्य झलि' — = 'म्' परसवर्ण—'अनुस्वारस्य ययि' )=तृम्फति ।

**वार्तिकार्थ**—शप्रत्यय के परे रहते 'तृम्फ्' आदि धातुओं को नुम् का आगम होता है ।

प्रकृत वार्तिक में 'आदि' शब्द प्रकार अर्थात् सदृशवाचक है । अतः इस प्रकरण में जिन धातुओं के साथ नकार जुड़ा हो, वे सब तृम्फादि हैं । (२) लिट्—ततृम्फ । (३) आशीर्लिङ्—तृफ्यात ( नकारलोप—'अनिदिताम्०' ) ।

√मृड पृड धातु का अर्थ—'सुख देना' है । (१) लट्—मृडति । पृडति । (२) लिट्—ममर्ड । पपर्ड ।

√शुन धातु का अर्थ—'जाना' है । (१) लट्—शुनति । (२) लिट्—शुशोन ।

√इष धातु का अर्थ—'इच्छा करना' है । यह धातु सेट् है । (१) √इष्+लट् (=तिप्=ति, 'श'='अ', 'ष्'='छ्'—'इषुगमियमां छः', तुक्='त'—'छे च', 'त'='च्'—श्चुत्व )=इच्छति । (२) √इष्+लिट् ( =तिप्=णल्='अ', द्वित्व, अभ्यास संज्ञा, हलादिशेष )—इ इष् अ ( इ=इयङ्=इय—'अभ्यासस्यासवर्णे', गुण )=इयेष । (३) √इष्+लुट् ( =तिप्=डा='आ', तास्, विकल्प से इट्='इ'—'तीषसह०', गुण, टिलोप )=एषिता । इट् के अभावपक्ष में—एष् ता ( 'त्'='ट्'—ष्टुत्व )=एष्टा । (४) लृट्—एषिष्यति । (५) विधिलिङ्—इच्छेत । (६) आशीर्लिङ्—इष्यात । (७) लुङ्—ऐषीत , ऐषिष्टाम्, ऐषिषुः इत्यादि ।

√कुट का अर्थ—'कुटिलता करना' है । (१) लट्—कुटति । (२) √कुट्+लिट् ( =

चुकुट। कुटिता। पुट संश्लेषणे। पुटति। पुपोट। पुटिता। स्फुट विकसने। स्फुटति। पुस्फोट। स्फुटिता। स्फुर स्फुल सञ्चलने। स्फुरति। स्फुलति। (७७१) **स्फुरतिस्फुलत्योर्निर्निविभ्यः ८।३।७६।** निर्निविभ्यः परयोः स्फुरति स्फुलत्योः सस्य षत्वं वा स्यात्। निःष्फुरति-निःस्फुरतीत्यादि। णू स्तवने। 'परिणूतगुणोदयः'। नुवति। नुवतः। नुवन्ति। नुनाव। नुविता। इति कुटादयः। टुमस्जो शुद्धौ। मज्जति। ममज्ज। 'मस्जिनशोरि'ति नुम्। * मस्जेरन्त्यात्पूर्वो नुम्वाच्यः *। संयोगादिलोपः। ममङ्क्थ-ममज्जिथ। मङ्क्ता। मङ्क्ष्यति। 'चोः

---

**इच्छति इति।** इषधातोर्लटि तिपि शेऽनुबन्धलोपे 'इषुगमियमां छः' इति षकारस्य छकारे 'छे चे'ति तुक्यनुबन्धलोपे श्चुत्वेन तकारस्य चकारे 'इच्छति' इति रूपम्।

(७७१) **स्फुरतीत्यादि।** 'मूर्धन्यः' इत्यधिकृतम्। 'सिवादीनां वे'त्यतो 'वा' इत्यनुवर्तते। तदाह—**निर्निविभ्य इत्यादिना।** **निःष्फुरतीति।** निर्पूर्वकस्फुर्धातोर्लटि तिपि शेऽनुबन्धलोपे 'स्फुरतिस्फुलत्योर्निर्निविभ्यः' इति विकल्पेन सस्य षत्वे 'निःष्फुरति' इति। षत्वाभावे निःस्फुरति इति। **ममज्जिथ, ममङ्क्थ इति।** मस्ज्-

---

सिप्=थल=थ, द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'क्'='च्'—'कुहोश्चुः' इट्='इ', 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' से थल् के ङित् होने से प्राप्त गुण का 'क्ङिति च' से निषेध)=चुकुटिथ। (३) लुट्—कुटिता।

**√पुट्** का अर्थ—'जोड़ना' है। (१) लट्—पुटति। (२) लुट्—पुटिता (यहाँ कुटादि होने से 'गाङ्कुटादिभ्यः' से 'तास्' के 'ङित्' होने के कारण गुण का निषेध होता है।) **√स्फुट** का अर्थ—'खिलना' है। (१) लट्—स्फुटति। (२) लिट्—पुस्फोट। (३) लुट्—स्फुटिता।

**√स्फुर, स्फुल** का अर्थ='चेष्टा करना, हिलना-डुलना' है। (१) लट्—स्फुरति, स्फुलति।

**(७७१) पद**—स्फुरति-स्फुलत्योः, निर्निविभ्यः। **अनुवृत्ति**—वा मूर्धन्यः। **विधिसूत्र।**

**मूलार्थ**—निर्, नि और वि उपसर्ग से परवर्ती स्फुर् और स्फुल् धातुओं के सकार को विकल्प से षत्व होता है। निःष्फुरति, निःस्फुरति इत्यादि।

**विमर्श**—प्रकृत सूत्र में 'अपदान्तस्य मूर्धन्यः' का अधिकार है। 'सिवादीनां वाऽड्व्यवायेऽपि' से 'वा' पद की अनुवृत्ति आती है। तदनुसार—'निर्, नि तथा वि उपसर्ग से उत्तरवर्ती स्फुरति और स्फुलति के सकार को विकल्प से मूर्धन्य (ष्) आदेश होता है।'

**उदाहरण**—(१) निः+स्फुरति ('स्'='ष्' विकल्प से—'स्फुरतिस्फुलत्योः०') = निःष्फुरति। षत्व के अभावपक्ष में—निःस्फुरति।

**√णू** का अर्थ 'स्तुति करना' है।

**परिणूतेति**—'परिणूतः प्रशस्तः गुणानामुदयो यस्य' अर्थात् जिसके गुण प्रशंसा के योग्य हैं। (१) √णू ('ण्'='न्'—'णो नः')—नू+लट् (=तिप्=ति, श='अ' श के अपित् सार्वधातुक होने से ङिद्भाव और गुण का निषेध, ऊ=उवङ्='उव्'—'अचि श्नु०')=नुवति। (२) लट् प्र० पु० द्विव०—नुवतः। (३) लट् प्र० पु० बहुव०—नुवन्ति। (४) लिट्—नुनाव। (५) लुट्—नुविता। **कुटादि समाप्त।**

**√टुमस्जो** (मस्ज्) धातु का अर्थ—'शुद्ध करना, स्नान करना' है। (१) √मस्ज्+लट् (=तिप्=ति, श='अ', 'स्'='श्'—श्चुत्व, 'श्'='ज्'—'झलां जश् झशि')=मज्जति।

कुरि'ति कुत्वेन जस्य गः। तस्य 'खरि चे'ति कः। 'अनुस्वारस्य ययी'त्यनुस्वारस्य ङः। अमाङ्क्षीत्। अमाङ्क्ताम्। अमाङ्क्षुः। रुजो भङ्गे। रुजति। रुरोज। रोक्ता। रोक्ष्यति। अरौक्षीत्। भुजो कौटिल्ये। भुजति। बुभोज इत्यादि। रुजिवत्। विश प्रवेशने। विशति। विवेश। वेष्टा। अविक्षत्। मृश आमर्शने। आमर्शनं स्पर्शः।

---

धातोर्लिटि सिपि, सिपः स्थाने थलादेशेऽनुबन्धलोपे धातोर्द्वित्वेऽभ्यासत्वे हलादिशेषे 'ऋतो भारद्वाजस्ये'ति विभाषया इडागमेऽनुबन्धलोपे 'स्तोः श्चुना श्चुः' इति श्चुत्वेन सकारस्य शकारे 'झलां जश् झशि' इति जश्त्वेन जकारे 'ममज्जिथ' इति। इडभावपक्षे 'ममस्ज् थ' इति स्थिते 'मस्जेरन्त्यात् पूर्वो नुम्वाच्यः' इति वार्तिकबलेन 'मस्जिनशोर्झलि' इत्यनेन जकारात्पूर्वे नुमि अनुबन्धलोपे 'म मस्न् ज् थ' इति जाते 'स्कोः संयोगाद्योरन्ते चे'त्यनेन सकारलोपे 'चोः कुः' इति जस्य गकारे 'खरि चे'ति गकारस्य ककारे 'नश्चापदान्तस्य झलि' इत्यनेन

---

( २ ) √मस्ज्+लिट् ( =तिप्=णल्='अ', धातु को द्वित्व, अभ्यास संज्ञा, हलादिशेष )—म मस्ज् अ ( 'स्'='श्'—श्चुत्व, 'श्'='ज्'—जश्त्व—'झलां जश् झशि' )=ममज्ज।

**वा०**—'मस्ज्' धातु के अन्त्य ( जकार ) से पूर्व नुम्=( न् ) का आगम होता है।

**उदाहरण**—( ३ ) √मस्ज्+लिट् ( =सिप्=थल्='थ', द्वित्व, अभ्यास संज्ञा, हलादिशेष, भारद्वाज-नियम से विकल्प से इट्='इ' )—म मस्ज् इ थ ( 'स्'='श्'—श्चुत्व, 'श्'='ज्'—जश्त्व )=ममज्जिथ। इट् के अभावपक्ष में—म मस्ज् थ ( 'मिदचोऽन्त्यात्परः' के नियम द्वारा 'मस्जिनशोर्झलि' से अन्त्य अच् मकारोत्तरवर्ती अकार से परे नुम् प्राप्त हुआ, परन्तु—'मस्जेरन्त्यात्पूर्वो नुम्वाच्यः' वार्तिक से अन्त्य वर्ण 'ज्' से पूर्व नुम् होने पर )—म म स् न् ज् थ ( 'स्' का लोप—'स्कोः संयोगाद्योरन्ते च', 'ज्'='ग्'—'चोः कुः', 'ग्'='क्'—'खरि च' )—म मन् क् थ ( न्=ं-अनुस्वार—'नश्चापदान्तस्य झलि', ं='ङ्'—परसवर्ण—'अनुस्वारस्य०' )=ममङ्क्थ। ( ४ ) √मस्ज्+लुट् ( =तिप्=डा=आ, तास्, 'मस्जेरन्त्यात्पूर्वो नुम्वाच्यः' वार्तिक बल से 'मस्जिनशो०' से अन्त्य 'ज्' से पूर्व नुम्='न्', टिलोप )—मस् न्ज्ता ( 'स्' का लोप—'स्कोः०', 'ज्'='ग्'='क्' अनुस्वार, परसवर्ण )=मङ्क्ता। ( ५ ) √मस्ज्+लृट् ( =तिप्=ति, स्य, 'मस्जेरन्त्यात्पूर्वो नुम्वाच्यः' नियम से 'मस्जिनशोर्झलि' से 'ज्' से पूर्व नुम्='न्', 'स्' का लोप—'स्कोः' )—मन्ज्स्य ति ( 'ज्'='ग्'—कुत्व, 'ग्'='क्'—चर्त्व, न्=अनुस्वार='ङ्' —परसवर्ण, षत्व, क्+ष्='क्ष्' )=मङ्क्ष्यति। ( ६ ) √मस्ज्+लुङ् ( =तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्', ईट्='ई', 'मस्जेरन्त्यात्पूर्वो नुम्वाच्यः' वार्तिकबल से 'ज्' से पूर्व नुम्='न्' )—अ म स् न् ज् स् ई त् ( 'स्' का लोप—'स्कोः', 'ज्'='ग्'='क्', न्=ं-अनुस्वार—'नश्चापदान्तस्य०' ं='ङ्' परसवर्ण, 'स्'='ष्' षत्व—'आदेशप्रत्यययोः', क्+ष्='क्ष्', वृद्धि—'वदव्रज०' )=अमाङ्क्षीत्। ( ७ ) लुङ् प्र० पु० द्वि०—अमाङ्क्ताम्। ( ८ ) लुङ् प्र० पु० बहु०—अमाङ्क्षुः।

√रुज धातु का अर्थ—'तोड़ना' है। यह धातु अनिट् और ओदित् है। ( १ ) लट्—रुजति। ( २ ) लिट्—रुरोज। ( ३ ) √रुज्+लुट् ( =तिप्=डा='आ', तास्, टिलोप )—रु ज् ता ( 'उ'='ओ'—लघूपध गुण, 'ज्'='ग्'—कुत्व, 'ग्'='क्'—चर्त्व )=रोक्ता। ( ४ ) लृट्—रोक्ष्यति। ( ५ ) √रुज्+लुङ् ( =तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्', ईट्='ई', 'ज्'='ग्'—कुत्व, 'ग्'='क्'—'खरि च', षत्व, क्+ष्='क्ष्', 'उ'='औ' वृद्धि—

**मृशति । ममर्श । म्रष्टा–मर्ष्टा । म्रक्ष्यति–मर्क्ष्यति । मृशतु । अमृशत् । मृशेत् । मृश्यात् । 'अनुदात्तस्य चर्दुपधे'त्यम् । 'स्पृशमृशे'ति च्लेः सिज्वा । अम्राक्षीत्–अमार्क्षीत् । 'शल इगुपधे'ति क्सः । अमृक्षत् । षद्ऌ विशरणगत्यवसादनेषु । विशरणं**

---

अनुस्वारे 'अनुस्वारस्य ययि परसवर्णः' इत्यनेन परसवर्णे 'ममङ्क्थ' इति । **अरौक्षीदिति** । रुजधातोर्लुङि तिपि अनुबन्धलोपे, अटि, च्लौ, च्लेः स्थाने सिच्यनुबन्धलोपे 'अस्तिसिचोऽपृक्ते' इति ईटि 'चोः कुः' इति जस्य गत्वे 'खरि चे'ति गस्य कत्वे 'इतश्चे'ति तिप इकारलोपे सकारस्य षत्वे, क् + ष् संयोगे क्षत्वे 'वदव्रजहलन्तस्याचः' इति वृद्धौ 'अरौक्षीत्' इति रूपम् ।

**अम्राक्षीदिति** । मृशधातोर्लुङि, लः स्थाने तिप्यनुबन्धलोपे अटि, च्लौ 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः' इति वार्तिकेन विकल्पेन च्लेः स्थाने सिच्यनुबन्धलोपे 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इति वैकल्पिकेऽमि मकारलोपे, तिप इकारलोपे 'अ मृ अ श् स् त्' इति जाते, यणि 'व्रश्च०' इति शस्य षत्वे 'षढोः कः सि' इति षस्य कत्वे, सस्य षत्वे 'अस्तिसिचोऽपृक्ते' इति ईटि 'वदव्रज०' इति वृद्धौ 'अम्राक्षीत्' इति । अमोऽभावपक्षे—हलन्तलक्षणावृद्धौ रपरत्वे 'अमार्क्षीत्' इति । सिजभावे च 'शल इगुपधात्' इति च्लेः स्थाने क्सादेशेऽनुबन्धलोपे 'व्रश्च०' इति षत्वे 'षढोः कः सि' इति शस्य कत्वे क्-ष् संयोगे क्षे कृते 'अमृक्षदि'ति ।

---

'वदव्रज०' )=अरौक्षीत् । √भुज् धातु का अर्थ—'कुटिल होना' है । यह धातु ओदित् तथा अनिट् है । ( १ ) लट्—भुजति । ( २ ) लिट्—बुभोज इत्यादि । इसके रूप रुज् के समान चलते हैं ।

**√विश्** का अर्थ—'प्रवेश करना' है । ( १ ) लट्—विशति । ( २ ) लिट्—विवेश । ( ३ ) लुट्—वेष्टा । ( ४ ) लुङ्—अविक्षत् ।

**√मृश्** धातु का अर्थ—'स्पर्श करना' है । 'आमर्शन' स्पर्श को कहते हैं । ( १ ) लट्—मृशति । ( २ ) लिट्—ममर्श । ( ३ ) √मृश्+लुट् ( =तिप्=डा='आ', तास्, टिलोप )—मृश् ता ( विकल्प से अम्='अ'—'अनुदात्तस्य०' )—मृ अ श् ता ( 'ऋ'='र्'—यण्, 'श्'='ष्'—'व्रश्च०', 'त्'='ट्'—ष्टुत्व )=म्रष्टा । अम् के अभावपक्ष में ( 'ऋ'='अ' गुण—'पुगन्त०' रपर )=मर्ष्टा । ( ४ ) लट्—म्रक्ष्यति, मर्क्ष्यति ( विकल्प से अम् ) । ( ५ ) लोट्—मृशतु । ( ६ ) लङ्—अमृशत् । ( ७ ) विधिलिङ्—मृशेत् । आशीर्लिङ्—मृश्यात् । ( ८ ) √मृश्+लुङ् ( =तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्' विकल्प से—'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः', विकल्प से अम्='अ'—'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्० )—अ मृ अ श् स् त ( 'श्'='ष्'—'व्रश्च०', 'ष्'='क्'—'षढोः कः सि' 'स्'='ष्'—षत्व, ईट्='ई', 'ऋ'='र्'— यण्, वृद्धि—'वदव्रज०' )=अम्राक्षीत् । 'अम्' के अभाव में ( च्लि=वैकल्पिक सिच्, हलन्तलक्षणा वृद्धि, रपर )=अमार्क्षीत् । सिच् के अभावपक्ष में ( च्लि=क्स='स्'—'शल इगुपधादनिटः क्सः' 'श्'='ष्'—'व्रश्च०', 'ष्'='क्'—'षढोः०', षत्व, क्+ष्='क्ष्' )='अमृक्षत्' ।

**√षद्ऌ** ( =सद् ) धातु का अर्थ—'दुःखी होना, जाना, फटना' है । विशरण का अर्थ—'दुःख' है । ( १ ) √सद्+लट् ( =तिप्=ति, श='अ', षद्='सीद्'—'पाघ्राध्मा०' )=सीदति ।

दुःखम् । 'पाघ्राध्मे'ति सीदादेशः । सीदति । ( ७७२ ) **सदिरप्रतेः ८।३।६६** । निषीदति । न्यषीदत् । ( ७७३ ) **सदेः परस्य लिटि ८।३।११८** । सदेरभ्यासात्परस्य सस्य षत्वं न स्याल्लिटि । निषसाद । ससाद । सेदतुः । सेदुः । सेदिथ–ससत्थ । सत्ता । सत्स्यति । लृदित्त्वादङ्–असदत् । शद्लृ शातने ( ७७४ ) **शदेः शितः १।३।६०** । शिद्भाविनोऽस्मात्तङानौ स्तः । शीयते । शीयताम् । अशीयत । शीयेत । शशाद । शत्ता

---

( ७७२ ) 'अपदान्तस्य मूर्धन्यः' इत्यधिकृतम् । प्रतिभिन्नादुपसर्गात्सदेः सस्य षः स्यादित्यर्थः । **निषीदति** । निपूर्वकात् षद्धातोर्लटि तिपि शेऽनुबन्धलोपे 'पाघ्राध्मा०' इति धातोः सीदादेशे 'सीदति' इति । 'नि + सीदती'त्यत्र 'सदिरप्रतेः' इति सस्य षत्वे 'निषीदति' इति ।

( ७७३ ) **सदेः परस्येति** । 'मूर्धन्यः' इत्यधिकृतम् । 'न रपर' इत्यतः नेत्यनुवर्तते । तदाह—**सदेरभ्यासात्परस्येति** ।

( ७७४ ) **शदेः शित इति** । 'अनुदात्तङित' इत्यस्मादात्मनेपदमित्यनुवर्तते । श् इत् यस्य सः शित् । शिति विवक्षिते सतीत्यर्थः । तदाह—**शिद्भाविन इति** ।

---

**( ७७२ ) पद**—सदिः, अप्रतेः । **अनुवृत्ति**—उपसर्गात्, मूर्धन्यः । **विधिसूत्र** ।

**मूलार्थ**—प्रति-भिन्न उपसर्ग से परे सद् धातु के सकार को षत्व होता है । निषीदति इत्यादि ।

**विमर्श**—'अपदान्तस्य मूर्धन्यः' ( ८।३।५५ ) का अधिकार है । 'उपसर्गात्सुनोति०' ( ८।३।६५ ) से 'उपसर्गात्' की अनुवृत्ति आती है । तदनुसार—"प्रति-भिन्न उपसर्गस्थ निमित्त से परवर्ती सद् धातु के सकार को मूर्धन्य आदेश होता है ।"

**उदाहरण**—( १ ) सद्+लट् ( =तिप्=ति, शप्=अ, 'सद्'='सीद्'—पाघ्राध्मा०' )= सीदति । नि+सीदति ( 'स्'='ष्'—'सदिरप्रतेः' )=निषीदति । ( २ ) लङ्—न्यषीदत् ।

**( ७७३ ) पद**—सदेः, परस्य, लिटि । **अनुवृत्ति**—न, सः, मूर्धन्यः । **विधिसूत्र** ( निषेध ) ।

**मूलार्थ**—लिट् के परवर्ती रहते अभ्यास से परे सद् के सकार को षकार नहीं होता । निषसाद । ससाद इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'न रपर०' ( ८।३।११० ) से 'न', 'सहेः साडः सः' ( ८।३।५६ ) से 'सः' की अनुवृत्ति आती है । 'अपदान्तस्य मूर्धन्यः' का अधिकार है । तदनुसार—"लिट् के परवर्ती रहते षद् धातु के पर वाले सकार को मूर्धन्य आदेश नहीं होता ।"

**उदाहरण**—( १ ) लिट्—ससाद ( प्राप्त षत्व का 'सदेः परस्य लिटि' से निषेध ) । नि+ससाद ( षत्व—'सदिरप्रतेः' )=निषसाद । ( २ ) लिट्—प्र० पु० द्विव०—सेदतुः ( एत्वाभ्यासलोप ) । ( ३ ) लिट् प्र० पु० बहु०—सेदुः । ( ४ ) लिट् म० पु० ए० व०—सेदिथ, ससत्थ । ( ५ ) लुट्—सत्ता । ( ६ ) लृट्—सत्स्यति । ( ७ ) लुङ्—असदत् ( च्लि=अङ्—'पुषादि०' ) ।

**√शद्लृ** का अर्थ—'नाश होना' है ।

**( ७७४ ) पद**—शदेः, शितः । **अनुवृत्ति**—आत्मनेपदम् । **विधिसूत्र** ।

**मूलार्थ**—शिद्भावी शद् धातु से आत्मनेपद और 'आन' होता है । शीयते ।

**विमर्श**—'अनुदात्तङित आत्मनेपदम्' ( १।३।१२ ) से 'आत्मनेपदम्' की अनुवृत्ति आ रही है । अतः शिद्भावी अर्थात् शद् धातु से जब शित् ( शकारेत्संज्ञक ) प्रत्यय आने वाला हो तब उससे तङ् ( =आत्मनेपद ) और आन ( आत्मनेपद प्रत्यय ) आते हैं ।

शत्स्यति । अशदत् । अशत्स्यत् । कॄ विक्षेपे । ( ७७५ ) ॠत इद्धातोः ७।१।१०० । ॠदन्तस्य धातोरङ्गस्य इत्स्यात् । किरति । * इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन * । वृद्धिः । चकार । चकरतुः । चकरुः । 'वृतो वा' । करिता–करीता । 'हलि चे'ति दीर्घः । कीर्यात् । अकारीत् । ( ७७६ ) किरतौ लवने ६।१।१४० । उपात्किरतेः सुट् स्याच्छेदनेऽर्थे । उपस्किरति । * अडभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम् * । उपा-

---

( ७७५ ) ॠत इद्धातोरिति । 'ॠत्' इति धातोर्विशेषणम् । तदन्तविधिः । 'अङ्गस्ये'त्यधिकृतम् । तदाह—ॠदन्तस्येति । किरति । कॄधातोर्लटि, तिपि शेऽनुबन्धलोपे 'ॠत इद्धातोः' इति ॠत इदादेशे रपरे च कृते 'किरति' इति ।

( ७७६ ) किरताविति । 'उपात्प्रतियत्ने' इत्यतः 'उपादि'ति, 'सुट् कात्पूर्वः' इत्यतः 'सुट्' इति चानुवर्तते । अत आह—'उपात्किरतेः' इत्यादिना । उपस्किरतीति । 'उप + किरति' इत्यत 'किरतौ लवने' इति सुटयनुबन्धलोपे टित्त्वादाद्यावयवे 'उपस्किरति' इति ।

---

**उदाहरण**—( १ ) शद्+लट् ( 'शदेः शितः' से आत्मनेपदत्व 'त' 'श'='अ', 'शद्'='सीय्'–'पाघ्राध्मा०', टि=एत्व )=शीयते । ( २ ) लिट्—शशाद, शेदतुः, शेदुः । ( ३ ) लोट्—शीयताम् । ( ४ ) लङ्—अशीयत । ( ५ ) विधिलिङ्—शीयेत । ( ६ ) लुङ्—अशदत् ( च्लि=अङ्='अ'–'पुषादि०' ) । ( ७ ) लृङ–अशत्स्यत् ।

√कॄ धातु का अर्थ—'बिखेरना' है ।

**( ७७५ ) पद**—ॠतः, इत्, धातोः । **विधिसूत्र ।**

**मूलार्थ**—ॠदन्त धातु के अङ्ग को इत्व होता है । किरति ।

**विमर्श**—'अङ्गस्य' का अधिकार है । 'ॠतः' पद 'धातोः' का विशेषण होने से तदन्त विधि होती है । तदनुसार—"दीर्घ ॠकारान्त धातु के अङ्ग को 'इत्' आदेश होता है ।"

**उदाहरण**—( १ ) √कॄ+लट् ( =तिप्=ति, 'श'='अ', 'ॠ'='इ'–'ॠत इद्धातोः' रपर )=किरति ।

**वा०**—इत्व और उत्व की अपेक्षा पूर्वविप्रतिषेध से गुण और वृद्धि होती है ।

( २ ) कॄ+लिट् (=तिप्=णल्=अ, ॠ='अ' गुण—'ॠच्छत्यॄताम्' रपर, द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'अ'='आ' वृद्धि—'अत उपधायाः' )=चकार । ( ३ ) लिट् प्र० पु० द्विव०—चकरतुः । ( ४ ) लिट् प्र० पु० बहु०—चकरुः । ( ५ ) लुट्—करिता, करीता ( 'वृतो वा' से इट् को विकल्प से दीर्घ ) । ( ६ ) आशीर्लिङ् में यासुट् के कित् होने से 'ॠत इद्धातोः' से इत्व, रपर, 'हलि च' से दीर्घ—कीर्यात् । ( ७ ) √कॄ+लुङ् ( =तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्', आर्धधातुक संज्ञा, इट्='इ', ईट्='ई', 'स्' का लोप—'इट ईटि' इ+ई='ई' सवर्णदीर्घ, ॠ='आ' वृद्धि—'सिचि वृद्धिः परस्मैपदेषु', रपर )=अकारीत् ।

**( ७७६ ) पद**—किरतौ, लवने । **अनुवृत्ति**—उपात्, सुट् । **विधिसूत्र ।**

**मूलार्थ**—छेदन अर्थ में उप से परवर्ती 'कॄ' धातु को सुट् ( =स् ) होता है । उपस्किरति ।

**विमर्श**—यहाँ 'उपात्प्रतियत्न०' ( ६।१।१३४ ) से 'उपात्' तथा 'सुट् कात्पूर्वः' ( ६।१।१३१ ) से 'सुट्' की अनुवृत्ति आती है । तदनुसार—"लवन=काटने के अर्थ में उप उपसर्ग से परे 'कॄ' धातु को सुट् ( =स् ) का आगम होता है ।"

**स्किरत् । उपचस्कार । ( ७७७ ) हिंसायां प्रतेश्च ६।१।१४१ । उपात्प्रतेश्च किरतेः सुट् स्यात् हिंसायाम् । उपस्किरति । प्रतिस्किरति । गॄ निगरणे । ( ७७८ ) अचि विभाषा ८।२।२१ । गिरते रेफस्य लत्वं वा स्यादजादौ प्रत्यये परे । गिरति–गिलति । जगार–जगाल । जगरिथ–जगलिथ । गरिता–गरीता–गलिता–गलीता । प्रच्छ**

---

( ७७७ ) **हिंसायामिति** । चकारादुपादिति समुच्चीयते । 'सुट् कात्पूर्वः' इत्यतः सुडित्यनुवर्तते । तदाह—**उपादिति** ।

( ७७८ ) **अचि विभाषा** । 'ग्रो यङी'त्यतः 'ग्रः' इत्यनुवर्तते । 'कृपो रो लः' इत्यतः ल इति च । अत आह—**गिरते इति** ।

---

**उदाहरण**—( १ ) उप+किरति ( सुट्='स्'—'किरतौ लवने' )=उपस्किरति ।

**वा०**—अट् और अभ्यास के व्यवधान में भी उप से परवर्ती कॄ धातु को सुट् का आगम होता है । यह सुट् ककार से पूर्व होता है ।

**उदाहरण**—( १ )√कॄ+लङ् ( =तिप्=ति, अट्, श='अ', इकारलोप, अट्, ॠ='इ' 'ॠत इद्धातोः' रपर )=अकिरत । उप+अकिरत ( यहाँ वार्तिक से सुट्='स्' )=उपास्किरत । लिट् में—उपचस्कार ।

**( ७७७ ) पद**—हिंसायाम्, प्रतेः, च । **अनुवृत्ति**—किरतौ, उपात्, सुट् । **विधिसूत्र** ।

**मूलार्थ**—उप तथा प्रति उपसर्ग से परवर्ती कॄ धातु को हिंसा अर्थ में सुट् ( ='स्' ) आगम होता है । उपस्किरति इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'किरतौ लवने' ( ७७६ ) से 'किरतौ', 'उपात्प्रतियत्न०' ( ६।१।१३४ ) से 'उपात्' तथा 'सुट् कात्पूर्वः' ( ६।१।१३१ ) से 'सुट्' की अनुवृत्ति आती है । तदनुसार—"उप तथा प्रति उपसर्ग से कॄ धातु के परवर्ती रहते हिंसा के विषय में ककार से पूर्व सुट् ( ='स्' ) का आगम होता है ।"

**उदाहरण**—( १ ) उप+किरति ( सुट्='स्', ककार से पूर्व—'हिंसायां प्रतेश्च' )=उपस्किरति । ( २ ) प्रति+किरति ( सुट् )=प्रतिस्किरति ।

√गॄ धातु का अर्थ 'निगलना' है ।

**( ७७८ ) पद**—अचि, विभाषा । **अनुवृत्ति**—ग्रः, रो लः । **विधिसूत्र** ।

**मूलार्थ**—अजादि प्रत्यय के परवर्ती रहते गॄ धातु के रेफ को लत्व होता है । गिरति, गिलतीत्यादि ।

**विमर्श**—सूत्रार्थ की पूर्णता के लिए 'ग्रो यङि' ( ८।२।२० ) से 'ग्रः' तथा 'कृपो रो लः' ( ८।२।१८ ) से 'रो लः' की अनुवृत्ति आती है । इस प्रकार—"अजादि प्रत्यय के परे रहते गॄ धातु के रेफ को लत्व विकल्प से होता है ।"

**उदाहरण**—( १ ) √गॄ+लट् ( =तिप्='ति', श='अ', 'ॠ'='इ'—'ॠत इद्धातोः' रपर )—गिर् अ ति ( 'र्'='ल्' विकल्प से—'अचि विभाषा' )=गिलति । लत्व के अभावपक्ष में—गिरति । ( २ ) √गॄ+लिट् ( =तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, अत्व, रपर, हलादिशेष, वृद्धि, रपर, विकल्प से लत्व—'अचि विभाषा' )=जगाल । लत्व के अभावपक्ष में—जगार । ( ३ ) लिट् म० पु० एकव०—जगरिथ, जगलिथ ( विकल्प से लत्व ) । ( ४ ) लुट् प्र० पु० एकव० में इट् के दीर्घ विकल्प और रेफ के लत्व विकल्प से चार रूप बनते हैं—गलीता, गलिता । गरीता, गरिता ।

ज्ञीप्सायाम् । 'ग्रहिज्ये'ति सम्प्रसारणम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छुः । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् । इति परस्मैपदिनः ।

अथाऽऽत्मनेपदिनः । दृङ् आदरे । आद्रियते । आदद्रे । आदद्रिषे । आदर्ता । आदरिष्यते । धृङ् अवस्थाने । ध्रियते । दध्रे । मृङ् प्राणत्यागे । ( ७७९ ) म्रियतेर्लुङ्लिङोश्च १।३।६१ । लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङानौ, नान्यत्र । ङित्त्वं स्वरार्थम् । 'रिङ्शयग्लिङ्क्षु' । इयङ् । म्रियते । ममार । ममर्थ । मम्रिव । मम्रिम ।

---

पृच्छतीति । प्रच्छ्धातोर्लटि तिपि शेऽनुबन्धलोपे 'सार्वधातुकमपित्' इति ङित्त्वात् 'ग्रहिज्ये'ति सम्प्रसारणे ऋकारे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'पृच्छति' इति ।

( ७७९ ) म्रियतेर्लुङ्लिङोश्चेति । 'अनुदात्तङित आत्मनेपदमि'त्यत 'आत्मनेपदमि'त्यनुवर्तते । चकारेण 'शदेः शितः' इत्यस्मात् शित इत्यनुकृष्यते । प्रकृतिभूतादित्यध्याह्रियते । तदाह—लुङ्लिङोरिति । म्रियते । ङकारेत्संज्ञक-मृङ्धातोर्लटि

---

√प्रच्छ् धातु का अर्थ—'जानने की इच्छा, पूछना' है। ( १ ) √प्रच्छ्+लट् ( =तिप्=ति, श='अ' 'र्'='ऋ'—सम्प्रसारण—'ग्रहिज्या०', पूर्वरूप—'सम्प्रसारणाच्च' )=पृच्छति । ( २ ) लिट्—पप्रच्छ । ( ३ ) लिट् प्र० पु० द्विव०—पप्रच्छतुः । ( ४ ) लिट् प्र० पु० बहु०—पप्रच्छुः । ( ५ ) √प्रच्छ्+लुट् ( =तिप्=डा='आ', तास्, टिलोप )—प्रच्छ् ता ( 'च्छ्'='ष्'—'व्रश्चभ्रस्ज०' 'त्'='ट्'—ष्टुत्व )=प्रष्टा । ( ६ ) √प्रच्छ्+लृट् ( =तिप्=ति, स्य )—प्रच्छ् स्य ति ( 'च्छ्'='ष्' 'व्रश्च०', 'ष्'='क्'—'षढोः कः सि', 'स्'='ष्' षत्व, क्+ष्='क्ष्' )=प्रक्ष्यति । ( ७ ) √प्रच्छ्+लुङ् ( =तिप्='ति' अट्, च्लि, च्लि=सिच्='स्', इकारलोप, 'छ्'='ष्'—'व्रश्च०', 'ष्'='क्'—'षढोः कः सि' 'स्'='ष्'—षत्व, ईट्='ई'—'अस्तिसिचो', वृद्धि 'वदव्रज०' )=अप्राक्षीत् ।

अब आत्मनेपदी धातुओं के रूपों की सिद्धि प्रदर्शित की जा रही है—

√दृङ् धातु का अर्थ—'आदर करना' है। ( १ ) आ+√दृ+लट् ( =त, 'श'='अ', ऋ=रिङ्='रि'—'रिङ्शयग्लिङ्क्षु', इ=इयङ्='इय्', टि को एत्व—'टित आत्मनेपदानां टेरे' )=आद्रियते । ( २ ) आ+√दृ+लिट् ( =त=एश्='ए', द्वित्व, अभ्यास संज्ञा, अत्व, रपर, हलादिशेष )—आद दृ ए ( 'ऋ'='र्'—यण् )=आदद्रे । ( ३ ) लिट् म० पु० एकव०—आदद्रिषे । ( ४ ) लुट्—आदर्त्ता । ( ५ ) लृट्—आदरिष्यते । √धृङ् ( =धृ ) का अर्थ—'धारण करना' है । ( १ ) लट्—ध्रियते । ( २ ) लिट्—दध्रे ।

√मृङ् का अर्थ—'प्राणत्याग' ( =मरना ) है ।

**( ७७९ ) पद**—म्रियतेः, लुङ्लिङोः, च । **अनुवृत्ति**—आत्मनेपदम्, शितः । **नियमसूत्र** ।

**मूलार्थ**—लुङ्, लिङ् और शित् प्रत्यय के प्रकृतिभूत 'मृङ्' धातु से ही तङ् तथा आन ( आत्मनेपद ) हों, अन्यत्र नहीं । ङित्करण स्वर के लिए है । म्रियते । ममार इत्यादि ।

**विमर्श**—'अनुदात्तङित आत्मनेपदम्' ( १।३।१२ ) से 'आत्मनेपदम्' की अनुवृत्ति आती है । सूत्रस्थ चकार से—'शदेः शितः' से 'शितः' पद का लाभ होता है । 'प्रकृतिभूतात्' पद का अध्याहार किया जाता है । इस प्रकार—"लुङ्, लिङ् और शित् के प्रकृतिभूत अर्थात् सार्वधातुक के विषय में मृ धातु से आत्मनेपद होता है, अन्यत्र नहीं । अर्थात् मृङ् धातु से लट्, लोट्, लङ्, विधिलिङ्, आशीर्लिङ् और लुङ् में आत्मनेपद तथा लिट्, लुट्, लृट् और लृङ् में परस्मैपद होता है ।"

मर्ता । मरिष्यति । मृषीष्ट । अमृत । अमरिष्यत् । पृङ् व्यायामे । प्रायेणायं 'व्याङ्' पूर्वः । व्याप्रियते । व्यापप्रे । व्यापप्राते । व्यापरिष्यते । 'ह्रस्वादङ्गादि'ति सिज्लोपः । व्यापृत । व्यापृषाताम् । जुषी प्रीतिसेवनयोः । जुषते । जुजुषे । जोषिता । ओविजी भयसञ्चलनयोः । प्रायेणायमुत्पूर्वः । उद्विजते । ( ७८० ) विज इट् १।१।२ । विजेः पर इडादिप्रत्ययो ङिद्वत् स्यात् । उद्विजिता । उद्विजिष्यते । ओलजी ओलस्जी व्रीडायाम् । लजते । लेजे । लज्जते । ललज्जे ।

इति तुदादिप्रकरणम् ।

---

लः स्थाने 'म्रियतेर्लुङ्लिङोश्चे'ति आत्मनेपदे त प्रत्यये 'तुदादिभ्यः शः' इति शेऽनुबन्धलोपे 'रिङ्शयग्लिङ्क्षु' इति रिङादेशे 'अचि श्नुधातुभ्रुवामि'ति इयङि 'टित आत्मनेपदानां टेरे' इति टेरेत्वे 'म्रियते' इति ।

( ७८० ) विज इडिति । 'गाङ्कुटादिभ्यः' इत्यतः ङिदित्यनुवर्तते । अत आह— विजेः पर इत्यादिना । उद्विजिता । उत्पूर्वकाद्विज्धातोः लुटि तादेशे तासि, इटि, तिपः

---

**उदाहरण**—( १ ) √मृ+लट् ( 'ल' के स्थान में 'म्रियतेर्लुङ्लिङोश्च' से आत्मनेपद 'त', 'श'='अ', ऋ=रिङ्='रि'—'रिङ्शयग्लिङ्क्षु', इ=इयङ्='इय्'—'अचि श्नु०', टि को एत्व )=म्रियते । ( २ ) √मृ+लिट् ( =परस्मैपद तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, अत्व, रपर, हलादिशेष )—म मृ अ ( 'ऋ'='अ' गुण–'सार्वधातु०', रपर, वृद्धि—'अत उपधायाः' )= ममार । ( ३ ) लिट् म० पु० एकव०—ममर्थ । ( ४ ) लिट् उ० पु० द्विव०, बहु०—मम्रिव, मम्रिम । ( ५ ) लुट्—मर्ता । ( ६ ) लृट्—मरिष्यति । ( ७ ) आशीर्लिङ्—मृषीष्ट । ( ८ ) लुङ्—अमृत ( सिच् का लोप—'ह्रस्वादङ्गात्' )—( ९ ) लृङ्—अमरिष्यत् ।

√पृङ् धातु का अर्थ—'व्यायाम, चेष्टा करना' है । इस धातु के पूर्व में प्रायः वि और आङ् उपसर्ग जुड़ता है । ( १ ) वि+आ+√पृ+लट् ( =त, श='अ', ऋ=रिङ्='रि', इ= इयङ्=इय्—'अचि श्नु०', एत्व )=व्याप्रियते । ( २ ) व्या+√पृ+लिट् ( =त=एश्=ए, द्वित्व, अभ्यासत्व, अत्व, रपर, हलादिशेष )—व्या प पृ ए ( ऋ='र्'—यण् )=व्यापप्रे । ( ३ ) लिट् प्र० पु० द्विव०—व्यापप्राते । ( ४ ) लृट्—व्यापरिष्यते । ( ५ ) लुङ्—व्यापृत ( सिच् का लोप—'ह्रस्वादङ्गात्' ) । ( ६ ) लुङ्—प्र० पु० द्विव०—व्यापृषाताम् ।

√जुषी ( =जुष् ) का अर्थ—'प्रीति और सेवन करना' है । ( १ ) लट्—जुषते । ( २ ) लिट्—जुजुषे । ( ३ ) लुट्—जोषिता ।

√ओविजी ( विज् ) का अर्थ—'भय तथा काँपना' है । यह धातु ओदित् और ईदित् है । इसका प्रयोग प्रायः 'उत्' उपसर्गपूर्वक होता है । ( १ ) लट्—उद्विजते ।

**( ७८० ) पद**—विजः, इट् । **अनुवृत्ति**—ङित् । **अतिदेशसूत्र** ।

**मूलार्थ**—'विज्' धातु से परवर्ती इडादिप्रत्यय ङिद्वत् होते हैं । उद्विजिता इत्यादि ।

**विमर्श**—यहाँ 'गाङ्कुटादिभ्योऽञ्णिन्ङित् ' ( १।२।१ ) से 'ङित्' पद की अनुवृत्ति अपेक्षित है । तदनुसार—"विज् से परे इडादि प्रत्यय ङिद्वत् होता है ।" ङित् होने का फल गुण का निषेध होना है ।

**उदाहरण**—( १ ) उद्+√विज्+लुट् ( =त, तास्, इट्, त=डा=आ, टिलोप )—

# अथ रुधादिप्रकरणम्

**तत्रोभयपदिनः । रुधिर् आवरणे । ( ७८१ ) रुधादिभ्यः श्नम् ३।१।७८ । रुधादिभ्यः श्नम् स्यात् कर्त्रर्थे सार्वधातुके परे । शपोऽपवादः । मित्त्वादन्त्यादचः परः । नित्यत्वाद् गुणं बाधते । रुणद्धि । 'श्नसोरल्लोपः' । 'झरो झरी'ति धलोपः । णत्वस्या-**

---

स्थाने डादेशेऽनुबन्धलोपे ङित्त्वाट्टिलोपे, 'विज इट्' इति इटो ङिद्वद्भावे, तेन गुणनिषेधे 'उद्विजिता' इति ।

**इति तुदादिप्रकरणम् ।**

---

शविकरणान् धातून्निरूप्येदानीं श्नम्विकरणा धातवो निरूप्यन्ते—

( ७८१ ) **रुधादिभ्य इति ।** कर्त्रर्थे सार्वधातुके परे रुधादिभ्यः स्वार्थे श्नम्प्रत्ययः स्यादिति सूत्रार्थः । **रुणद्धि इति ।** 'रुधिर् आवरणे' इत्यस्माद्धातोर्लटि तिपि, प्राप्तं शब्विकरणं प्रबाध्य 'रुधादिभ्यः श्नम्' इति श्नमि अनुबन्धलोपे 'मिदचोऽन्त्यात्परः' इति अन्त्यादचः परे श्नमि 'रु न ध् ति' इति जाते 'अट्कुप्वाङ्' इत्यादिना णत्वे

---

'विज इट्' से ङित् होने से प्राप्त गुण का निषेध—'क्ङिति च' )—उद्विजिता । ( २ ) लृट्—उद्विजिष्यते ।

**√ओलजी, ओलस्जी** ( = लज्, लस्ज् ) धातुओं का अर्थ—'लज्जित होना' है । ( १ ) √लज्+लट् ( =त, श='अ' एत्व )=लजते । ( २ ) लिट्—लेजे । ( १ ) √लस्ज्+लट् ( =त, श='अ', 'स्'='श्'—श्चुत्व, 'श्'='ज्'—'झलां जश् झशि', 'टि' को एत्व )=लज्जते । ( २ ) लिट्—ललज्जे ।

**तुदादि-प्रकरण समाप्त ।**

---

तुदादिगण में 'श' विकरण वाली धातुओं की रूपसिद्धि प्रदर्शित करने के अनन्तर प्रस्तुत प्रकरण में 'श्नम्' विकरण वाली धातुओं के रूपों की प्रक्रिया बतलाई जा रही है—

√रुधिर् ( =रुध् ) धातु का अर्थ—'रोकना' है । यह 'इर्' इत्संज्ञक तथा अनिट् है ।

**( ७८१ ) पद**—रुधादिभ्यः, श्नम् । **अनुवृत्ति**—कर्तरि, सार्वधातुके । **विधिसूत्र ।**

**मूलार्थ**—कर्त्रर्थक सार्वधातुक के परवर्ती रहते रुधादिगण पठित धातुओं से श्नम् ( =न ) प्रत्यय होता है ।

**विमर्श**—प्रकृत सूत्र में—'कर्तरि शप्' ( ३।१।६८ ) से 'कर्तरि' तथा 'सार्वधातुके यक्' ( ३।१।६७ ) से 'सार्वधातुके' की अनुवृत्ति अपेक्षित है । तदनुसार—"कर्त्रर्थक सार्वधातुक प्रत्यय के परे रहते रुधादिगण पठित धातुओं से 'श्नम्' ( न ) विकरण होता है ।" यह 'श्नम्' शप् प्रत्यय का अपवाद है । 'श्नम्' में शकार, मकार की इत्संज्ञा लोप होता है । 'मित्' होने से 'मिदचोऽन्त्यात्परः' सूत्र से अन्त्य अच् से परे 'न' होता है । यह विकरण 'न' नित्य होने से लघूपध गुण का बाध करता है ।

**उदाहरण**—( १ ) √रुध्+लट् ( =तिप्=ति, श्नम्='न'—'रुधादिभ्यः श्नम्' अन्त्य अच् से परे—'मिदचोऽन्त्यात्परः' )—रु न ध् ति ( 'न्'='ण्'—णत्व—'अट्कुप्वाङ्०', 'त्'=

सिद्धत्वादनुस्वारः । परसवर्णः । तस्यासिद्धत्वाण्णत्वं न । 'न पदान्ते'ति सूत्रेणानुस्वार-परसवर्णयोरल्लोपो न स्थानिवत् । रुन्द्धः । रुन्धन्ति । रुणत्सि । रुन्द्धः । रुन्द्ध । रुणध्मि । रुन्ध्वः । रुन्ध्मः । रुन्धे । रुन्धाते । रुन्धते । रुन्त्से । रुन्धाथे । रुन्द्ध्वे । रुन्धे । रुन्ध्वहे । रुन्ध्महे । रुरोध । रुरुधे । रोद्धा । रोत्स्यति । रोत्स्यते । रुणद्धु-रुन्धात् । रुन्द्धाम् । रुन्धन्तु । रुन्धि । रुणधानि । रुणधाव । रुणधाम । रुन्धाम् । रुन्धाताम् । रुन्धताम् । रुन्त्स्व । रुणधै । रुणधावहै । रुणधामहै । अरुणत्-द् । अरुन्धाम् । अरुन्धन् । 'दश्चे'ति रुः । अरुणः-अरुणत्-द् । अरुन्धम् । अरुन्द्ध ।

---

'झषस्तथोर्धोऽधः' इति तस्य धत्वे 'झलां जश् झशि' इति धस्य दत्वे 'रुणद्धि' इति । अरुणत्, अरुणद् । रुध्धातोर्लङि, लः स्थाने तिपि, अटि, तिप इकारलोपे 'रुधादिभ्यः श्नम्' इति श्नमि अनुबन्धलोपे, मित्त्वादन्त्यादचः परे 'अ रु न ध् त्' इति जाते, णत्वे,

---

'ध्'—'झषस्तथोर्धोऽधः', 'ध्'='द्' 'झलां जश् झशि' )=रुणद्धि । ( २ ) √रुध्+लट् ( = तस्, श्नम्=न )—रु न ध् तस् ( अकार का लोप—'श्नसोरल्लोपः', 'त्'='ध्'—'झषस्तथो-र्धोऽधः', प्रथम 'ध्' का विकल्प से लोप—'झरो झरि सवर्णे', स्=र्=ः )=रुन्धः । यहाँ णत्व के असिद्ध होने से 'न्' के स्थान में 'नश्चापदान्तस्य' से अनुस्वार तथा 'अनुस्वारस्य ययि परसवर्णः' से परसवर्ण नकार होता है । परसवर्ण के असिद्ध होने से पुनः णत्व नहीं होता । धकारलोप के अभावपक्ष में—रु न् ध् ध् स् ( पूर्व 'ध्'='द्'—जश्त्व, स्=र्=ः )=रुन्द्धः । ( ३ ) √रुध् +लट् ( =झि, श्नम्='न', 'झ्'='अन्त्'—'झोऽन्तः' 'अ' का लोप—'श्नसोरल्लोपः' न्=ं-अनुस्वार='न्' परसवर्ण )=रुन्धन्ति । ( ४ ) √रुध्+लट् ( =सिप्=सि, श्नम्='न', णत्व, 'ध्'='त्'—चर्त्व )=रुणत्सि । ( ५ ) √रुध्+लट् ( =थस्, श्नम्='न', अकारलोप )—रु न् ध् थस् ( 'ध्'='ध्'—'झषस्तथो०', 'ध्' का लोप विकल्प से, स्=र्=ः )=रुन्धः । लोप के अभावपक्ष में—'ध्'='द्'—रुन्द्धः । ( ६ ) लट् म० पु० बहुव०—रुन्द्ध । ( ७ ) लट् उ० पु०—रुणध्मि, रुन्ध्वः, रुन्ध्मः । आत्मनेपद में—( ८ ) √रुध्+लट् ( =त, श्नम्='न' )—रु न ध् त ( अकारलोप—'श्नसोरल्लोपः' अ=एत्व—'टित आत्मनेपदानाम्०' 'त्'='ध्'—'झषस्तथो०' धकारलोप, अनुस्वार, परसवर्ण )=रुन्धे ।

### √रुधिर् ( रुध् ) धातु लट् लकार के रूप ( परस्मैपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | —रुणद्धि | रुन्द्धः | रुन्धन्ति |
| म० पु० | —रुणत्सि | रुन्द्धः | रुन्द्ध |
| उ० पु० | —रुणध्मि | रुन्ध्वः | रुन्ध्मः |

### ( आत्मनेपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | —रुन्धे | रुन्धाते | रुन्धते |
| म० पु० | —रुन्त्से | रुन्धाथे | रुन्द्ध्वे |
| उ० पु० | —रुन्धे | रुन्ध्वहे | रुन्ध्महे |

( ९ ) √रुध्+लिट् ( =तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'उ'='ओ'—गुण—'पुगन्त०' )=रुरोध । ( १० ) आत्मनेपद में—रुरुधे । ( ११ ) √रुध्+लुट् ( =तिप्=

**अरुणधम् । अरुन्ध्व । अरुन्ध्म । अरुन्द्ध । अरुन्धाताम् । अरुन्धत । अरुन्द्धाः । अरुन्धाथाम् । अरुन्ध्वम् । अरुन्धि । अरुन्ध्वहि । अरुन्ध्महि । समानाश्रये आभीयत्वेन अल्लोपस्यासिद्धत्वादनिदितामिति नलोपो न । रुन्ध्यात् । रुन्धीत । रुध्यात् । रुत्सीष्ट । अरुधत् । अरौत्सीत् । 'लिङ्सिचावि'ति कित्त्वम् । अरुद्ध । अरोत्स्यत् । अरोत्स्यत । भिदिर् विदारणे । भिनत्ति । भिन्ते । छिदिर् द्वैधीकरणे । छिनत्ति । छिन्ते । युजिर्**

---

'हल्ङ्याब्भ्यो०' इति तलोपे 'जलां जशोऽन्ते' इति धस्य दत्वे 'वाऽवसाने' इति विकल्पेन दकारस्य तकारे 'अरुणत्' इति । चर्त्वाभावपक्षे 'अरुणद्' इति । **युनक्ति** युज्धातोर्लटि तिपि, श्नमि, अनुबन्धलोपे 'चोः कुः' इति जकारस्य गकारे 'खरि चे'ति गकारस्य ककारे 'युनक्ति' इति । **चच्छर्द** । छृद्धातोर्लिटि तिपि, तिपो णलादेशेऽनुबन्ध-

---

डा=आ, तास् , टिलोप )—रुध् ता ( 'त्'='ध्'—'झषस्तथो०', 'ध्'='द्'—'जश्त्व', गुण )= रोद्धा । ( १२ ) लृट् प० प०—रोत्स्यति । आ० प०—रोत्स्यते । ( १३ ) √रुध्+लोट् ( =तिप् =ति, श्नम्='न' )—रु न ध् ति ( णत्व, 'त्'='ध्', 'ध्'='द्', 'इ'='उ'—'एरुः' )=रुणद्धु । तातङ् पक्ष में—रु न ध् तात् ( अकारलोप, अनुस्वार, परसवर्ण, 'त्'='ध्', 'ध्' का लोप ) =रुन्धात् । ( १४ ) लोट् प्र० पु० द्विव०—रुन्द्धाम् । ( १५ ) लोट् प्र० पु० बहुव०—रुन्धन्तु ।

### √रुध् धातु लोट् लकार के रूप ( परस्मैपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | रुणद्धु, रुन्धात् | रुन्द्धाम् | रुन्धन्तु |
| म० पु० | रुन्द्धि, रुन्धात् | रुन्द्धम् | रुन्द्ध |
| उ० पु० | रुणधानि | रुणधाव | रुणधाम |

### ( आत्मनेपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | रुन्द्धाम् | रुन्धाताम् | रुन्धताम् |
| म० पु० | रुन्त्स्व | रुन्धाथाम् | रुन्द्ध्वम् |
| उ० पु० | रुणधै | रुणधावहै | रुणधामहै |

( १६ ) √रुध्+लङ् ( =तिप्=ति, अट् , इकारलोप, श्नम्='न' )—अ रु न ध् त् ( 'न्' ='ण्'—णत्व—'अट्कुप्वाङ्०', 'त्' का लोप—'हल्ङ्याब्भ्यः०, 'ध्'='द्'—'झलां जशोऽन्ते', 'द्'='त्' विकल्प से—'वाऽवसाने' )=अरुणत् । तकार के अभावपक्ष में—अरुणद् ।

### √रुध् धातु लङ् लकार के रूप ( परस्मैपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अरुणत्, अरुणद् | अरुन्द्धाम् | अरुन्धन् |
| म० पु० | अरुणः, अरुणत्-द् | अरुन्द्धम् | अरुन्द्ध |
| उ० पु० | अरुणधम् | अरुन्ध्व | अरुन्ध्म |

### ( आत्मनेपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | अरुन्द्ध | अरुन्धाताम् | अरुन्धत |
| म० पु० | अरुन्द्धाः | अरुन्धाथाम् | अरुन्द्ध्वम् |
| उ० पु० | अरुन्धि | अरुन्ध्वहि | अरुन्ध्महि |

योगे । युनक्ति । युङ्क्ते । रिचिर् विरेचने । रिणक्ति । रिङ्क्ते । रिरेच । रिरिचे । रेक्ता अरिणक् । अरिचत् । अरैक्षीत् । अरिक्त । विचिर् पृथग्भावे । विनक्ति । विङ्क्ते । क्षुदिर् सम्पेषणे । क्षुणत्ति । क्षुन्ते । क्षोत्ता । अक्षुदत् । अक्षौत्सीत् । अक्षुत्त ।

---

लोपे धातोर्द्वित्वेऽभ्यासत्वे 'उरत्' इति ऋकारस्य अत्वे, रपरत्वे हलादिशेषे 'पुगन्त०' इति गुणे, रपरे 'अभ्यासे चर्चं' इति छस्य चर्त्वे 'छे च' इति तुक्यनुबन्धलोपे 'स्तोः श्चुना श्चुः' इति श्चुत्वेन तस्य चर्त्वे 'चच्छर्द' इति ।

---

(१७) √रुध्+विधिलिङ् (=तिप्=ति, यासुट्='यास्', इकारलोप, श्नम्='न', अकारलोप, 'स्' का लोप)=रुन्ध्यात् (यहाँ आभीयत्वेन अकारलोप के असिद्ध होने से 'अनिदिताम्०' से 'न्' का लोप नहीं होता)। आ० प०—रुन्धीत। (१८) आशीर्लिङ् प० प०—रुध्यात्। आ० प०—रुत्सीष्ट ('लिङ्सिचावात्मनेपदेषु' से 'सीयुट्' के कित् होने से गुण का निषेध)। (१९) √रुध्+लुङ् (=तिप्=ति, अट्, इकारलोप, च्लि, च्लि=अङ्='अ' विकल्प से—'इरितो वा')=अरुधत्। अङ् के अभावपक्ष में—(च्लि=सिच्=स्; ईट्='ई' वृद्धि 'ध्'='त)=अरौत्सीत्। आत्मनेपद पक्ष में—अ रुध् त (च्लि=सिच्='स्', 'स्' का 'झलो झलि' से लोप, 'त्'='ध्'—'झषस्तथो०' 'ध्'='द्'—जश्त्व)=अरुद्ध। (२०) लृट् प० प०—अरोत्स्यत्। आ० प०—अरोत्स्यत।

√भिदिर् (=भिद्) धातु का अर्थ—'तोड़ना' है। (१) √भिद्+लट् (=तिप्=ति, श्नम्='न', 'द्'='त्'—'खरि च')=भिनत्ति। आत्मनेपद में—भिन्ते।

√छिदिर् (=छिद्) का अर्थ—'काटना' है। (१) लट्—छिनत्ति। लट् आ० प०—छिन्ते।

प्रकृत धातु से उपसर्गों का योग होने पर—परिछिनत्ति=नापता है। उच्छिनत्ति=नाश करता है।

√युजिर् (=युज्) धातु का अर्थ—'मिलना' है। (१) √युज्+लट् (=तिप्=ति, श्नम्='न')—यु न ज् ति ('ज्'='ग्—'चोः कुः', 'ग्'='क्'—'खरि च')=युनक्ति। आ० प० में—युङ्क्ते।

उपसर्ग का योग होने पर—प्रयुङ्क्ते=प्रयोग करता है। उद्युङ्क्ते=उद्योग करता है। अनुयुङ्क्ते=प्रश्न करता है। वियुनक्ति=नियुक्त करता है। उपयुङ्क्ते=उपयोग करता है। वियुनक्ति=पृथक् होता है।

√रिचिर् (=रिच्) धातु का अर्थ 'रिक्त होना' है। (१) √रिच्+लट् (=तिप्=ति, श्नम्='न')—रि न च् ति ('च्'='क्'—'चोः कुः' 'न्'='ण्'—णत्व)=रिणक्ति। आ० पद में—रिच् त (एत्व, श्नम्='न' अकारलोप—'श्नसोरल्लोपः')—रि न् च् ते ('च्'='क्'—कुत्व, न्=-अनुस्वार='ङ्' परसवर्ण)=रिङ्क्ते। (२) लिट् प० प०—रिरेच। आ० पद—रिरिचे। (३) लुट्—रेक्ता। (४) √रिच्+लङ् (=तिप्=ति, अट्, इकारलोप, श्नम्='न' 'त्' का लोप—'हल्ङ्याब्भ्यो')—अ रि न च् (णत्व, 'च्'='क्'—'कुत्व')=अरिणक्। (५) √रिच्+लुङ् (=तिप्=ति, अट्, इकारलोप, च्लि, च्लि=अङ्='अ' विकल्प से—'इरितो वा')=अरिचत्। अङ् के अभावपक्ष में—(च्लि=सिच्='स्', ईट्, वृद्धि, 'च्'='क्' 'कुत्व, षत्व, क्+ष्='क्ष्')=अरैक्षीत्। आ० पद में—अरिक्त।

√विचिर् का अर्थ—'अलग होना' है। इसके रूप √'रिचिर्' के समान चलते हैं। (१) लट्—विनक्ति। आ० प०—विङ्क्ते।

उच्छृदिर् दीप्तिदेवनयोः। छृणत्ति। छृन्ते। चच्छर्द। 'सेसिचौ'ति वेट्। चच्छृदिषे-चच्छृत्से। छर्दिता। छर्दिष्यति-छर्त्स्यति। अच्छृदत्। अच्छर्दीत्। अच्छर्दिष्ट। उतृदिर् हिंसाऽनादरयोः। तृणत्ति। तृन्ते।

अथ परस्मैपदिनः। कृती वेष्टने। कृणत्ति। आर्द्धधातुके तौदादिकवत्। तृह हिसि हिंसायाम्। (७८२) तृणह इम् ७।३।९२। तृहः श्नमि कृते इम् स्याद्धलादौ पिति। तृणेढि। तृण्ढः। ततर्ह। तर्हिता। अतृणेट्। (७८३) श्नान्नलोपः ६।४।२३।

---

(७८२) तृणह इमिति। 'तृणह' इति कृतश्नमः तृह्धातोः षष्ठी। 'नाभ्यस्तस्ये'-त्यतः पितीति, 'उतो वृद्धिः' इत्यतः हलीति चानुवर्तते। तदाह—तृह इत्यादिना। तृणेढि। तृहधातोर्लटि तिपि अनुबन्धलोपे, प्राप्तं शपं प्रबाध्य 'रुधादिभ्यः श्नम्' इत्यनेन श्नमि अनुबन्धलोपे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इत्यनेन णत्वे 'तृ ण ह् ति' इति जाते 'तृणह इम्' इति इमागमेऽनुबन्धलोपे 'आद् गुणः' इति गुणे, 'झषस्तथो-र्धोऽधः' इत्यनेन तकारस्य धकारे 'हो ढः' इति हकारस्य ढकारे 'तृणेढ धि' इति जाते,

---

√क्षुदिर् का अर्थ 'संपेषण' (मसल डालना) है। (१) लट्—क्षुणत्ति। आ० प०—क्षुन्ते। (२) लुट्—क्षोत्ता। (३) लुङ्—अक्षुदत्, अक्षौत्सीद् (विकल्प से अङ्)। आ० पद में—अक्षुत्त (सिच् का लोप)।

√उच्छृदिर् (—छृद्) धातु का अर्थ—'चमकना, जुआ खेलना' है। (१) लट् प० प०—छृणत्ति। आ० प०—छृन्ते। (२) √छृद्+लिट् (=तिप्=णल्='अ', द्वित्व, अत्व, रपर, हलादिशेष, 'छ्'='च्'—'अभ्यासे चर्च')—च छृद् अ ('ऋ'='अ'—गुण—'पुगन्त०', रपर, तुक्='त्'—'छे च', 'त्'='च्'—श्चुत्व)=चच्छर्द। (३) √छृद्+लिट् (आत्मनेपद म० पु० एकव०—थास्='से', द्वित्व, अत्व, रपर, हलादिशेष, चर्त्व, विकल्प से इट्='इ'—'सेऽसिचिकृतचृतछृदतृदनृतः' तुक्, श्चुत्व, षत्व)=चच्छृदिषे। इट् के अभावपक्ष में—चच्छृत्से ('द्'='त्')। (४) लुट्—छर्दिता। (५) लृट्—छर्दिष्यति, छर्त्स्यति (विकल्प से ईट्)। (६) लुङ् प० प०—अच्छृदत् (विकल्प से अङ्)। अङ् के अभावपक्ष में (च्लि=सिच्='स्', गुण, ईट्)—अच्छर्दीत्। आ० पद—अच्छर्दिष्ट।

√उतृदिर् (=तृद्) का अर्थ—'हिंसा और अनादर करना' है। (१) √तृद्+लट् (=तिप्=ति, श्नम्='न')—तृ न द् ति (णत्व, 'द्'='त्'—'खरि च')=तृणत्ति। आत्मनेपद पक्ष में—तृ न द् त ('टि' को एत्व, 'अ' का लोप—'श्नसोरल्लोपः', 'द्'='त्'—'खरि च', 'त' का विकल्प से लोप—'झरो झरि सवर्णे')=तृन्ते।

√**कृती** (=कृत) धातु का अर्थ—'लपेटना, घेरना' है। (१) लट्—कृणत्ति।

√**तृह, हिसि** का अर्थ 'हिंसा करना' है।

**(७८२) पद**—तृणहः, इम्। **अनुवृत्ति**—हलि, पिति। **विधिसूत्र**।

**मूलार्थ**—हलादि पित् प्रत्यय के परवर्ती रहते तृह् धातु से श्नम् करने पर 'इम्' आगम होता है।

**विमर्श**—सूत्रार्थ की पूर्ति के लिए 'उतो वृद्धिर्लुकि हलि' (७।३।८९) से 'हलि' तथा 'नाभ्य-स्तस्य०' (७।३।८७) से 'पिति' की अनुवृत्ति आती है। तदनुसार—'श्नम्' विकरण सहित तृह् धातु से हलादि पित् के परे रहते इम्=('इ') आगम होता है।

श्नमः परस्य नस्य लोपः स्यात् । हिनस्ति । जिहिंस । हिंसिता । उन्दी क्लेदने । उनत्ति । उन्तः । उन्दन्ति । उन्दाञ्चकार । औनत् । औन्ताम् । औन्दन् । औनः-औनत् । औनदम् । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अञ्जन्ति ।

---

'ष्टुना ष्टुः' इति ष्टुत्वेन धकारस्य ढकारे 'ढो ढे लोपः' इत्यनेन पूर्वढकारस्य लोपे 'तृणेढि' इति सिद्धम् । अतृणेट् । तृह्धातोर्लङि तिपि, अटि, तिप इकारलोपे, श्नमि अनुबन्धलोपे 'तृणह इम्' इत्यनेन इमागमेऽनुबन्धलोपे, गुणे, णत्वे, 'हो ढः' इति हस्य ढत्वे 'हल्ङ्याब्भ्यः' इति तलोपे 'झलां जशोऽन्ते' इति ढस्य डत्वे 'वाऽवसाने' इति डस्य टत्वे 'अतृणेट्' इति ।

(७८३) श्नान्नलोप इति । 'श्नादि'ति पञ्चमी । नेति लुप्तषष्ठीकं पदम् । तदाह—श्नमः परस्येति । हिनस्ति । हिस्धातोर्लटि तिपि, श्नमि अनुबन्धलोपे 'इदितो नुम् धातोः' इति नुमि अनुबन्धलोपे 'श्नान्नलोपः' इति नकारस्य लोपे—'हिनस्ति' इति ।

औनत् । उन्द्धातोर्लुङि तिपि 'आडजादीनाम्' इत्यनेन आडागमेऽनुबन्धलोपे

---

उदाहरण—(१) √तृह्+लट् (=तिप्=ति, श्नम्='न', 'न्'—'ण्' णत्व—'ऋवर्णान्नस्य णत्वं वाच्यम्')—तृ ण ह् ति (इम्='इ' आगम—'तृणह इम्', अ+इ='ए'—गुण, 'ह्'='ढ्'—'हो ढः' 'त्'='ध्'—'झषस्तथोर्धोऽधः', 'ध्'='ढ्'—ष्टुत्व', पूर्व 'ढ्' का लोप—'ढो ढे लोपः')=तृणेढि ।-(२) लट् प्र० पु० द्विवचन=तृण्ढः (अकारलोप; शेष कार्य पूर्ववत्)।

√तृह् धातु लट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | —तृणेढि | तृण्ढः | तृंहन्ति |
| म० पु० | =तृणेक्षि | तृण्ढः | तृण्ढ |
| उ० पु० | —तृणेह्मि | तृंह्वः | तृंह्मः |

(३) लिट्—ततर्ह । (४) लुट्—तर्हिता (५) √तृह्+लङ् (=तिप्=ति, अट्, इकारलोप, श्नम्='न', इम्='इ' आगम—'तृणह इम्')—अ तृ न ह् त् (णत्व, अ+इ='ए'—गुण, 'ह्'='ढ्'—'हो ढः', 'त्' का लोप—'हल्ङ्याब्भ्यः०', 'ढ्'='ड्'—'झलां जशोऽन्ते', 'ड्'='ट्' विकल्प से—'वाऽवसाने')=अतृणेट् ।

(८८३) पद—श्नात्, नलोपः । विधिसूत्र ।

मूलार्थ—श्नम् से उत्तरवर्ती नकार का लोप होता है । हिनस्ति इत्यादि ।

विमर्श—'श्नात्' पञ्चम्यन्त पद है और 'न' पद लुप्तषष्ठ्यन्त है । अतः 'श्नम्' से परे नकार का लोप होता है ।

उदाहरण—(१) √हिसि (इदित्)—हिस्+लट् (=तिप्=ति, श्नम्='न', नुम्='न्'—'इदितो नुम् धातोः')—हि न न् स् ति ('न्' का लोप—'श्नान्नलोपः')=हिनस्ति ।

√हिसि धातु लट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | —हिनस्ति | हिंस्तः | हिंसन्ति |
| म० पु० | —हिनस्सि | हिंस्थः | हिंस्थ |
| उ० पु० | —हिनस्मि | हिंस्वः | हिंस्मः |

**आनञ्ज । आनञ्जिथ–आनङ्क्थ । अञ्जिता–अङ्क्ता । अङ्ग्धि । अनजानि । आनक् । ( ७८४ ) अञ्जेः सिचि ७।२।७१ । अञ्जेः सिचो नित्यमिट् । आञ्जीत् ।**

---

'आटश्चे'ति वृद्धौ, श्नमि अनुबन्धलोपे, 'औ न न् द् ति' इति जाते 'इतश्चे'ति तिप इकारलोपे 'श्नान्नलोपः' इति परनकारस्य लोपे 'हल्ङ्याब्भ्यः' इत्यादिना तकारस्य लोपे 'वाऽवसाने' इति विकल्पेन चर्त्वे 'औनत्' इति । पक्षे 'औनदि'ति ।

**( ७८४ ) अञ्जेः सिचीति ।** 'इडत्यर्ति' इत्यत 'इडि'त्यनुवर्तते । ऊदित्वादेव इट्

---

( २ ) लिट्—जिहिंस । ( ३ ) लुट्—हिंसिता ।

**√उन्दी** ( उन्द् ) धातु का अर्थ—'गीला करना' है । ( १ ) √उन्द्+लट् ( =तिप्=ति, श्नम्='न', 'न्' का लोप—'श्नान्नलोपः' 'द्'='त्'—'खरि च' )=उनत्ति । ( २ ) √उन्द्+लट् ( =तस्, श्नम्=न )—उ न न् द् तस् ( 'न्' का लोप—'श्नान्नलोपः', अकारलोप, 'द्' का लोप—'झरो झरि सवर्णे' स्=र्=: ) उन्तः । ( ३ ) लट् प्र० पु० बहुव०—उन्दन्ति । ( ४ ) लिट्—उन्दाञ्चकार ( इजादि गुरुमान् होने से आम्, तब √कृ का अनुप्रयोग आदि कार्य ) । ( ५ ) √उन्द्+लङ् ( =तिप्=ति, आट्='आ', वृद्धि—'आटश्च', श्नम्='न', इकारलोप )—औ न न् द् त् ( 'न्' का लोप—'श्नान्नलोपः', 'द्'='त्'—'खरि च', पूर्व तकार का लोप—'झरो झरि सवर्णे' )=औनत् ।

**√उन्द् धातु लङ् लकार के रूप**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु० | औनत्–द् | औन्ताम् | औन्दन् |
| म० पु० | औनः, औनत्–द् | औन्तम् | औन्त |
| उ० पु० | औनदम् | औन्द्व | औन्द्म |

√अञ्जू ( ऊदित ) धातु का अर्थ—'स्पष्ट होना, स्वच्छ होना, इच्छा करना और जाना' है । ( १ ) √अञ्ज्+लट् ( =तिप्=ति, श्नम्='न', 'न्' का लोप—'श्नान्नलोपः' )—अ न ज् ति ( 'ज्'='ग्'—'चोः कुः', 'ग्'='क्'—चर्त्व )—अनक्ति । ( २ ) √अञ्ज्+लट् ( =तस्, श्नम्='न' नकारलोप, अकारलोप )—अ न् ज् तस् ( 'ज्'='ग्'—कुत्व, 'ग्'='क्'—चर्त्व, न्=ं–अनुस्वार='ङ्'—परसवर्ण, स्=र्=: )=अङ्क्तः । ( ३ ) लट् प्र० पु० बहुव०—अञ्जन्ति ( श्नम्, नकारलोप, अनुस्वार, परसवर्ण । ) ( ४ ) अञ्ज्+लिट् ( =तिप्=णल्='अ', द्वित्व, अभ्यास संज्ञा, हलादिशेष )—अ अञ्ज् अ ( 'अ'='आ' दीर्घ—'अत आदेः', आ+अ='आ'—सवर्णदीर्घ, नुट्—'न्' आगम—'तस्मान्नुड् द्विहलः' )=आनञ्ज । ( ५ ) लिट् म० पु० एकवचन—आनञ्जिथ, आनङ्क्थ ( ऊदित होने से विकल्प से इट् ) । ( ६ ) लुट्—अञ्जिता, अङ्क्ता । ( ७ ) √अञ्ज्+लोट् ( =सिप्=हि='धि'—'हुझल्भ्यो०' श्नम्='न', 'न्' का लोप, अकारलोप )—अ न् ज् धि ( 'ज्'='ग्'—कुत्व, न्=ं–अनुस्वार=ङ्—'परसवर्ण' )=अङ्ग्धि । ( ८ ) लोट् उ० पु० एकव०—अनजानि ( यहाँ आट् के पित् होने से श्नम् के अकार का लोप नहीं हुआ ) । ( ९ ) √अञ्ज्+लङ् ( =तिप्=ति, आट्, वृद्धि, इकारलोप, श्नम्='न' धातु के 'न्' का लोप—'श्नान्नलोपः', 'त्' का लोप—'हल्ङ्याब्भ्य०', 'ज्'='ग्'—'चोः कुः', 'ग्'='क्'—'वाऽवसाने' )=आनक् ।

**( ७८४ ) पद—**अञ्जेः, सिचि । **अनुवृत्ति—**इट् । **विधिसूत्र ।**

तञ्चू सङ्कोचने । तनक्ति । तङ्क्ता–तञ्चिता । ओविजी भयसञ्चलनयोः । विनक्ति । विङ्क्तः । 'विज इडि'ति ङित्वम् । विविजिथ । विजिता । अविनक् । अविजीत् । शिष्ऌ विशेषणे । शिनष्टि । शिष्टः । शिंषन्ति । शिनक्षि । शिशेष । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः । जश्त्वम् । ष्टुत्वम् । 'झरो झरी'ति वा डलोपः । 'अनुस्वारस्य ययि परसवर्णः' । शिण्ढि–शिण्ड्ढि । शिनषाणि । अशिनट् । शिष्यात् । शिष्यात् ।

---

सिद्धे नित्यार्थमिदं सूत्रम् । तदाह—अञ्जेरित्यादिना । आञ्जीत् । अञ्ज्धातोर्लुङि, लः स्थाने तिप्यनुबन्धलोपे 'आडजादीनाम्' इत्याडागमेऽनुबन्धलोपे 'आटश्चे'ति वृद्धौ च्लौ, च्लेः स्थाने सिच्यनुबन्धलोपे 'अञ्जेः सिचि' इत्यनेन ईटि, अस्तिसिचोऽपृक्ते' इति इडागमेऽनुबन्धलोपे 'आञ्ज् इ स् ई ति' इति स्थिते, 'इट ईटि' इति सलोपे 'इतश्चे'ति तिप इकारलोपे सवर्णदीर्घे 'आञ्जीत्' इति ।

शिण्ढि । शिष्धातोर्लोटि तत्स्थाने सिप्यनुबन्धलोपे श्नमि अनुबन्धलोपे 'सेर्ह्यपिच्च' इति सेर्ह्यादेशे 'श्नसोरल्लोपः' इत्यकारलोपे 'हुझल्भ्यो हेर्धिः' इति हेर्धिभावे

---

**मूलार्थ**—'अञ्ज्' धातु से परवर्ती सिच् को नित्य इट् का आगम होता है। आञ्जीत् इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'इडत्त्यर्ति०' (७।२।६६) से 'इट्' पद की अनुवृत्ति आती है। तदनुसार—"अञ्ज् धातु से परे सिच् को नित्य इट्='इ' आगम होता है।" ऊदित् होने से विकल्प से प्राप्त इट् का प्रकृत सूत्र से नित्य विधान किया गया है ।

**उदाहरण**—(१०) √अञ्ज्+लुङ् (=तिप्=ति, आट्=आ, आ+अ='आ' वृद्धि—'आटश्च', च्लि, च्लि=सिच्='स्', तिप् के इकार का लोप—'इतश्च', ईट्='ई', नित्य इट्='इ'—'अञ्जेः सिचि', 'स्' का लोप—'इट ईटि', ई+'इ'='दीर्घ')=आञ्जीत् ।

√तञ्चू (ऊदित्) धातु का अर्थ—'संकुचित करना' है। (१) लट्—तनक्ति । (२) लुट्—तङ्क्ता । तञ्चिता (विकल्प से इट्) ।

√ओविजी (ओदित्, ईदित्) का अर्थ—'डरना और हिलना' है। (१) √विज्+लट् (=तिप्=ति, श्नम्='न', 'ज्'='ग्'—'चोः कुः', ग्='क्'—'खरि च')=विनक्ति। (२) लट् प्र० पु० द्वि०—विङ्क्तः। (३) √विज्+लिट् (=सिप्=थल्=थ, द्वित्व, अभ्यास संज्ञा, हलादिशेष, इट्='इ', 'विज इट्' से 'इट्' के ङित् होने से गुण का निषेध)=विविजिथ। (४) लुट्—विजिता। (५) लङ्—अविनक्। (६) √विज्+लुङ् (=तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्', इट्, ईट्, 'स्' का लोप—'इट ईटि', 'सिज्लोप एकादेशे सिद्धो वाच्यः' से स्लोप के सिद्ध होने पर—इ+ई='ई'—सवर्णदीर्घ)=अविजीत् ।

√शिष्ऌ (ऌदित्) धातु का अर्थ—'विशेषता बतलाना' है। (१) √शिष्+लट् (=तिप्=ति, श्नम्='न', 'त्'='ट्'—ष्टुत्व)=शिनष्टि ।

**√शिष् धातु लट् लकार के रूप**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | शिनष्टि | शिंष्टः | शिंषन्ति |
| म० पु० | शिनक्षि | शिंष्ठः | शिंष्ठ |
| उ० पु० | शिनष्मि | शिंष्वः | शिंष्मः |

लृदित्त्वादङ् । अशिषत् । अशेक्ष्यत् । एवं पिष्लृ सञ्चूर्णने । पिनष्टि । पिपेष । भञ्जो आमर्दने । भनक्ति । बभञ्ज । बभञ्जिथ-बभङ्क्थ । भङ्क्ता । भुज पालनाभ्यवहारयोः । भुनक्ति । बुभोज । भोक्ता । भोक्ष्यति । भुनक्तु । अभुनक् । ( ७८५ ) भुजोऽनवने १।३।६६ । भुजोऽनवने तङानौ स्तः । ओदनं भुङ्क्ते । अनवने किम् ? महीं भुनक्ति ।

---

'झलां जश् झशि' इति षस्य डत्वे 'ष्टुना ष्टुः' इति ष्टुत्वेन धस्य ढत्वे 'झरो झरि सवर्णे' इति डलोपे नस्यानुस्वारे परसवर्णे च कृते 'शिण्ढि' इति । बभञ्जिथ । भञ्जधातोर्लिटि सिपि, सिपः स्थाने थलि, धातोर्द्वित्वेऽभ्यासत्वे, हलादिशेषे 'अभ्यासे चर्चं' इति अभ्यासभकारस्य बकारे 'ऋतो भारद्वाजस्ये'ति नियमात् विभाषया इटि 'बभञ्जिथ' इति । इडभावे—'बभञ्ज् थ' इति स्थिते, जस्य गत्वे, गस्य कत्वे, अनुस्वारे परसवर्णे च कृते 'बभङ्क्थ' इति ।

( ७८५ ) भुजोऽनवने । अवनम्—रक्षणम्, ततोऽन्यत्र भुजधातोरात्मनेपदं स्यादित्यर्थः ।

भुङ्क्ते । भुज्धातोर्लटि 'भुजोऽनवने' इत्यात्मनेपदे तप्रत्यये, श्नमि अनुबन्धलोपे

---

( २ ) लिट् प्र० पु० एकव०—शिशेष । ( ३ ) लिट् म० पु० एकव०—शिशेषिथ । ( ४ ) लुट्—शेष्टा । ( ५ ) लृट्—शेक्ष्यति । ( ६ ) √शिष्=लोट् ( =सिप्=सि=हि, श्नम्= 'न्' )—शि न ष् हि ( 'अ' का लोप—'श्नसोरल्लोपः', 'हि'='धि'—'हुझल्भ्यो हेर्धिः', 'ष्'= 'ड्'—'झलां जश् झशि', 'ध्'='ढ्'-ष्टुत्व, 'ड्' का लोप—'झरो झरि सवर्णे', न्=ं-अनुस्वार ='ण्'—परसवर्ण )=शिण्ढि । 'ड्' के लोप के अभावपक्ष में—शिण्ड्ढि । ( ७ ) लोट् उ० पु० एकव०—शिनषाणि ( आट् के पित् होने से श्नम् के अकार का लोप नहीं होता ) ।

( ८ ) √शिष्+लङ् ( =तिप्=ति, अट्, इकारलोप, श्नम्='न', 'त्' का लोप—'हल्ङ्याब्भ्यो०' 'ष्'='ड्'-'झलां जशोऽन्ते', 'ड्'='ट्' विकल्प से—'वाऽवसाने' )=अशिनट्-ड् । ( ९ ) √शिष्+विधिलिङ् ( =तिप्=ति, श्नम्='न', यासुट्='यास्' )—शि न ष् यास् ति ( इकारलोप, यासुट् के ङित् होने से श्नम् के अकार का लोप, 'स्' का लोप, अनुस्वार )= शिंष्यात् । ( १० ) आशीर्लिङ् में आर्धधातुक होने से श्नम् नहीं होता—शिष्यात् । ( ११ ) √शिष् +लुङ् ( =तिप्=ति, अट्, इकारलोप, च्लि, च्लि=अङ्='अ'—'पुषादिद्युताद्य्०'=अशिषत् । ( १२ ) लृङ्—अशेक्ष्यत् ।

√पिष्लृ ( लृदित् ) धातु का अर्थ—'पीसना' है । इसके रूप शिष् धातु की तरह बनते हैं । ( १ ) लट्—पिनष्टि । ( २ ) लिट्—पिपेष ।

√भञ्ज् ( ओदित् ) धातु का अर्थ—'तोड़ना' है । ( १ ) लट्—भनक्ति । ( २ ) लिट् प्र० पु० एकव०—बभञ्ज । ( ३ ) √भञ्ज्+लिट् ( =सिप्=थल्=थ, द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'भ्'='ब्'—'अभ्यासे चर्च', प्राप्त इट् का 'उपदेशेऽत्वतः' से निषेध, 'ऋतो भारद्वाजस्य' नियम से विकल्प से इट्='इ' )=बभञ्जिथ । इट् के अभावपक्ष में ( 'ज्'='ग्' कुत्व, 'ग्'= 'क्'—चर्त्व, न्=ं-अनुस्वार='ङ्'—परसवर्ण )=बभङ्क्थ । ( ४ ) लुट्—भङ्क्ता ।

√भुज धातु का अर्थ 'पालन करना और खाना' है । यह धातु—'पालन करना' अर्थ में

**अथात्मनेपदिनः। ञिइन्धी दीप्तौ। इन्द्धे। इन्धाते। इन्धते। इन्त्से। इन्धाञ्चक्रे। इन्धिता। इन्द्धाम्। इन्धाताम्। इन्धताम्। इनधै। ऐन्ध। ऐन्धाताम्। ऐन्धत। ऐन्द्धाः। विद विचारणे। विन्ते। वेत्ता। खिद दैन्ये। खिन्ते। चिखिदे। खेत्ता। खेत्स्यते। खिन्ताम्। अखिन्त।**

**इति रुधादिप्रकरणम्।**

---

'श्नसोरल्लोपः' इत्यकारलोपे 'चोः कुः' इति कुत्वेन गकारे 'खरि चे'ति चर्त्वे, अनुस्वारे, परसवर्णे 'टित आत्मनेपदानां टेरे' इति टेरेत्वे 'भुङ्क्ते' इति।

**इति रुधादिप्रकरणम्।**

---

परस्मैपदी तथा 'खाना' अर्थ में आत्मनेपदी है। (१) √भुज्+लट् (=तिप्=ति, श्नम्='न', 'ज्'='ग्'—कुत्व—'चोः कुः', 'ग्'='क्'—'खरि च')=भुनक्ति।

**√भुज् धातु लट् लकार के रूप (परस्मैपदी)**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | भुनक्ति | भुङ्क्तः | भुञ्जन्ति |
| म० पु० | भुनक्षि | भुङ्क्थः | भुङ्क्थ |
| उ० पु० | भुनज्मि | भुञ्ज्वः | भुञ्ज्मः |

(२) लिट्—बुभोज। (३) लुट्—भोक्ता। (४) लृट्—भोक्ष्यति। (५) लोट्—भुनक्तु। (६) लङ्—अभुनक्।

**(७२९) पद**—भुजः, अनवने। **अनुवृत्ति**—आत्मनेपदम्। **विधिसूत्र।**

**मूलार्थ**—रक्षण से भिन्न अर्थ में भुज धातु से आत्मनेपद होता है। ओदनं भुङ्क्ते इत्यादि।

**विमर्श**—यहाँ 'अनुदात्तङित आत्मनेपदम्' (१।३।१२) से 'आत्मनेपदम्' की अनुवृत्ति आती है। अतः 'अनवन (=रक्षण, पालन से भिन्न भक्षण आदि अर्थों में) भुज् धातु से आत्मनेपद के प्रत्यय आते हैं'।

**उदाहरण**—'ओदनं भुङ्क्ते'। यहाँ √भुज धातु का अर्थ 'भोजन करना' है। अतः प्रकृत सूत्र से आत्मनेपद होता है। (१) √भुज्+लट् (='भुजोऽनवने' से आत्मनेपद त, श्नम्='न', 'अ' का लोप—'श्नसोरल्लोपः', 'ज्'='ग्'—'चोः कुः', 'ग्'='क्'—'खरि च', न्=ं अनुस्वार='ङ्' परसवर्ण, टि को एत्व)=भुङ्क्ते।

**प्रत्युदाहरण—अनवने किम्?** 'रक्षण से भिन्न अर्थ में आत्मनेपद होता है' ऐसा क्यों कहा? इसका समाधान ग्रन्थकार लिखते हैं—'महीं भुनक्ति' (=पृथ्वी का पालन करता है)। यहाँ रक्षण (पालन) अर्थ होने से प्रकृत सूत्र से आत्मनेपद नहीं हुआ।

अब आत्मनेपदी धातुओं की रूपसिद्धि का उल्लेख किया जा रहा है—

**√ञिइन्धी** (ञीदित, ईदित) धातु का अर्थ—'चमकना' है। (१) **√इन्ध्+लट्** (=त, श्नम्='न', नकारलोप, अकारलोप—'श्नसोरल्लोपः', 'त्'='ध्'—'झषस्तथोर्धोऽधः', पूर्व 'ध्' का विकल्प से लोप—'झरो झरि सवर्णे'; 'टि' को एत्व—'टित आत्मनेपदानाम्')=इन्धे। 'ध्' लोप के अभावपक्ष में (—पूर्व 'ध्'='द्'—जश्त्व)=इन्द्धे।

# अथ तनादिप्रकरणम्

( अथ स्वरितेतो, ञितश्च—उभयपदिनः )

तनु विस्तारे। ( ७८६ ) तनादिकृञ्भ्य उः ३।१।७९। तनादेः, कृञश्च उः प्रत्ययः स्यात् कर्त्रर्थे सार्वधातुके। तनोति। तनुते। ततान। तेने। तनिता। तनिष्यति।

---

अथ उविकरणान् धातून्निरूपयितुमुपक्रमते—अथ सप्त इति।

( ७८६ ) तनादिकृञ्भ्य उः। 'कर्तरि शप्' इत्यतः कर्तरीति 'सार्वधातुके यक्'

---

√इन्ध् धातु लट् लकार के रूप

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | इन्धे, इन्द्धे | इन्धाते | इन्धते |
| म० पु० | इन्त्से | इन्धाथे | इन्ध्वे |
| उ० पु० | इन्धे | इन्ध्वहे | इन्ध्महे |

( २ ) √इन्ध्+लिट् ( 'आम्'--'इजादेश्च०', लिट् का लुक्--'आमः' )--इन्धाम् ( लिट्-परक √कृ का अनुप्रयोग, ल्=त )--इन्धाम् कृ त ( धातु को द्वित्व, अत्व, रपर, हलादिशेष, 'क्'='च्'--'कुहोश्चुः, त=एश्='ए'--'लिटस्तझयोरेशिरेच्', 'ऋ'='र्'--यण्, म्=ं-अनुस्वार='ञ्'—परसवर्ण )=एधाञ्चक्रे। ( ३ ) लुट्--इन्धिता। ( ४ ) √इन्ध्+लोट् ( =त, श्नम्='न', नकारलोप--'श्नान्नलोपः' अकारलोप )--इ न् ध् त ( 'टि' को एत्व, 'त्'='ध्'—'झषस्तथो०' पूर्व 'ध्'='द्'—जश्त्व, ए='आम्'—'आमेतः' )=इन्द्धाम्। ( ५ ) लोट् प्र० पु० द्विव०--इन्धाताम्। ( ६ ) लोट् प्र० पु० बहु०—इन्धताम्। ( ७ ) लोट् उ० पु० एकवचन—इनधै ( श्नम्, धातु के नकार का लोप, आट्, वृद्धि )। ( ८ ) √इन्ध्+लङ् ( =त, आट्, वृद्धि, श्नम् 'न्' का लोप, श्नम् के अकार का लोप, 'त्'='ध्'—'झषस्तथो', पूर्व 'ध्' का लोप --'झरो झरि०' )=ऐन्ध। ( ९ ) लङ् प्र० पु० द्विव०—ऐन्धाताम्। ( १० ) लङ् प्र० पु० बहु-वचन--ऐन्धत। ( ११ ) √इन्ध्+लङ् ( =थास्, आट्, वृद्धि, श्नम्, धातु के 'न्' का लोप, 'श्नम्' के 'अ' का लोप, 'थ्'='ध्'—'झषस्तथो०', पूर्व 'ध्' का विकल्प से लोप--'झरो झरि सवर्णे', स्=र्=: )=ऐन्धाः। लोप के अभावपक्ष में—'ध्'='द्'--जश्त्व=ऐन्द्धाः।

**√विद्** धातु का अर्थ—'विचार करना' है। ( १ ) √विद्+लट् ( =त, श्नम्=न )—विन द् त ( 'अ' का लोप—'श्नसोरल्लोपः', 'द्'='त्'—'खरि च', पूर्व 'त' का लोप—'झरो झरि सवर्णे', टि को एत्व )=विन्ते। ( २ ) लुट्—वेत्ता।

**√खिद** धातु का अर्थ—'खिन्न होना, दुःखी होना' है। ( १ ) लट्—खिन्ते। ( २ ) लिट्--चिखिदे। ( ३ ) लुट्—खेत्ता। ( ४ ) लृट्—खेत्स्यते। ( ५ ) लोट्—खिन्ताम्। ( ६ ) लङ्—अखिन्त।

**रुधादि-प्रकरण समाप्त।**

---

पूर्व प्रकरण में 'श्नम्' विकरण वाली धातुओं का निरूपण करने के अनन्तर प्रस्तुत प्रकरण में 'उ' विकरण वाली धातुओं की रूपसिद्धि का निरूपण किया जा रहा है। प्रकरण के आरम्भ में उभयपदी धातुओं की रूपसिद्धि प्रदर्शित की जा रही है—√तनु ( उकारेत्संज्ञक ) धातु का अर्थ—'विस्तार करना, फैलाना' है।

**( ७८६ ) पद**—तनादिकृञ्भ्यः, उः। **अनुवृत्ति**—कर्तरि, सार्वधातुके। **विधिसूत्र।**

**तनिष्यते । तनोतु । तनुताम् । अतनोत् । अतनुत । तनुयात् । तन्वीत । तन्यात् । तनिषीष्ट । अतनीत् । अतानीत् । ( ७८७ ) तनादिभ्यस्तथासोः २।४।७९ । तनादेः**

इत्यतः 'सार्वधातुके' इति चानुवर्तते । तदाह—**तनादेरित्यादिना । तनोति ।** उकारेत्संज्ञक-तनुधातोर्लटि, तिपि, प्राप्तं शपं प्रबाध्य तनादिकृञ्भ्य उः' इत्युप्रत्यये 'सार्वधातुकार्धधातुकयोः' इत्युकारस्य गुणे ओकारे कृते 'तनोति' इति । आत्मनेपदे—**तनुते** इति । अत्र तप्रत्ययस्य सार्वधातुकत्वात् 'सार्वधातुकमपित्' इति ङित्त्वाद् गुणाभावः । **अतानीत् ।** तन्धातोर्लुङि तिपि, अटि, अनुबन्धलोपे 'च्लि लुङि' इति च्लौ, 'च्लेः सिच्' इति सिजादेशेऽनुबन्धलोपे, इटि, तिप इकारलोपे 'अस्तिसिचोऽपृक्ते' इतीडागमे 'इट ईटि' इत्यनेन सकारलोपे, सवर्णदीर्घे 'अतो हलादेर्लघोः' इति विकल्पेन वृद्धौ अतानीत् इति । वृद्धयभावपक्षे—अतनीत् इति ।

**मूलार्थ**—कर्त्रर्थक सार्वधातुक के परवर्ती रहते तनादिगण पठित और कृञ् धातु से 'उ' प्रत्यय होता है । तनोति । तनुते इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'कर्तरि शप्' ( ३।१।६८ ) से 'कर्तरि' तथा 'सार्वधातुके यक्' ( १।३।६७ ) से 'सार्वधातुके' पद की अनुवृत्ति आती है । तदनुसार—"कर्त्रर्थक सार्वधातुक के परे रहते तन् आदि धातु और कृ धातु से 'उ' प्रत्यय होता है ।"

**उदाहरण**—( १ ) √तन्+लट् ( =तिप्=ति, शप् का बाधकर 'उ' प्रत्यय—'तनादिकृञ्भ्य उः', 'उ'='ओ'—गुण—'सार्वधातुकार्धधातुकयोः' )=तनोति । ( २ ) √तन्+लट् ( =आत्मनेपद 'त', उ, 'त' के अपित् सार्वधातुक होने से ङिद्वत् हो जाने से गुण का निषेध—'सार्वधातुकमपित्', 'टि'='अ'='ए'—'टित आत्मनेपदानां टेरे' )=तनुते ।

**√तन् धातु लट् लकार के रूप ( परस्मैपद )**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | तनोति | तनुतः | तन्वन्ति |
| म० पु० | तनोषि | तनुथः | तनुथ |
| उ० पु० | तनोमि | तनुवः | तनुमः |

**( आत्मनेपद )**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | तनुते | तन्वाते | तन्वते |
| म० पु० | तनुषे | तन्वाथे | तनुध्वे |
| उ० पु० | तन्वे | तनुवहे | तनुमहे |

( ३ ) √तन्+लिट् ( =तिप्=णल्='अ', द्वित्व, अभ्यास संज्ञा, हलादिशेष, उपधावृद्धि ) =ततान । आत्मनेपद—√तन्+लिट् ( =त, द्वित्व, अभ्यासत्व, हलादिशेष, एत्व, अभ्यासलोप, त=एश्='ए' )=तेने ।

**√तन् धातु लिट् लकार के रूप ( परस्मैपद )**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | ततान | तेनतुः | तेनुः |
| म० पु० | तेनिथ | तेनथुः | तेन |
| उ० पु० | ततान | तेनिव | तेनिम |

सिचो वा लुक् स्यात्तथासोः। 'अनुदात्तोपदेशे'ति नलोपः। अतत-अतनिष्ट। अतथाः-अतनिष्ठाः। अतनिष्यत्। अतनिष्यत। षणु दाने। सनोति। सनुते। 'ये विभाषे'-

( ७८७ ) तनादिभ्य इति। 'गातिस्थे'त्यतः सिच इति, 'ण्यक्षत्रियार्ष' इत्यतः लुगिति, 'विभाषा घ्राधेट्' इत्यतो विभाषेति चानुवर्तते। अत आह—तनादेरित्यादिना।

अतत। तन् धातोर्लुङि, तत्स्थाने आत्मनेपदे तप्रत्यये, अडागमेऽनुबन्धलोपे 'च्लि लुङि' इति च्लौ, 'चलेः सिच्' इति-सिजादेशेऽनुबन्धलोपे 'तनादिभ्यस्तथासोः' इति विभाषया सिचो लुकि, 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति'

( आत्मनेपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | तेने | तेनाते | तेनिरे |
| म० पु० | तेनिषे | तेनाथे | तेनिध्वे |
| उ० पु० | तेने | तेनिवहे | तेनिमहे |

( ४ ) लुट्—तनिता। ( ५ ) लृट्—तनिष्यति। आ० पद—तनिष्यते। ( ६ ) लोट् प० प०—तनोतु। आ० पद—तनुताम्। ( ७ ) लङ् प० पद—अतनोत्। आ० पद—अतनुत। ( ८ ) विधिलिङ् प० पद—तनुयात्। आ० पद—तन्वीत। ( ९ ) आशीर्लिङ् प० पद—तन्यात्। आ० पद—तनिषीष्ट। ( १० ) √तन्+लुङ् ( =तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्', इट्, ईट्='ई'—'अस्तिसिचोऽपृक्ते', 'स्' का लोप—'इट ईटि', इ+ई='ई'—सवर्णदीर्घ, 'अ'='आ' विकल्प से वृद्धि—'अतो हलादेर्लघोः' )=अतानीत्। वृद्धि के अभावपक्ष में—अतनीत्।

( ७८७ ) **पद**—तनादिभ्यः, तथासोः। **अनुवृत्ति**—सिचः, लुक्, विभाषा। **विधिसूत्र**।

**मूलार्थ**—तनादि से परवर्ती सिच् का विकल्प से लुक् ( लोप ) होता है, 'त' और 'थास्' के परे रहते। अतत। अतनिष्ट इत्यादि।

**विमर्श**—'गातिस्था०' ( २।४।७७ ) से 'सिचः', 'ण्यक्षत्रियार्ष०' ( २।४।५८ ) से 'लुक्' तथा 'विभाषा घ्राधेट्' ( २।४।७८ ) से 'विभाषा' पद की अनुवृत्ति आती है। तदनुसार—"तन् आदि धातुओं से परे सिच् का विकल्प से लुक् होता है, 'त' और 'थास्' परे रहते।"

**उदाहरण**—( ११ ) √तन्+लुङ् ( =आत्मनेपद प्र० पु० एकव०—त, अट्, च्लि, च्लि=सिच्='स्', 'स्' का विकल्प से लुक्—'तनादिभ्यस्तथासोः', 'न्' का लोप—'अनुदात्तोपदेश०' )=अतत। सिच् लोप के अभावपक्ष में—अ तन् स् त ( इट्='इ', 'स्'='ष्'—षत्व, 'त्'='ट्'—ष्टुत्व )=अतनिष्ट। ( १२ ) √तन्+लुङ् ( =म० पु० ए० व०—थास्, च्लि=सिच्='स्', 'स्' का विकल्प से लुक्, स्=र्=: )—अतथाः। सिच् लोप के अभावपक्ष में—अ तन् स् थास् ( इट्='इ', षत्व, ष्टुत्व, स्=र्=: )=अतनिष्ठाः। ( १३ ) लृङ्—अतनिष्यत। अतनिष्यत।

√षणु ( सन् ) धातु का अर्थ 'दान देना' है। ( १ ) √षण्+लट् ( 'ष्'='स्'—'धात्वादेः षः सः', 'ण्'='न्'—'णो नः', ल्=प्र० पु० ए० व० तिप्=ति, उ, गुण )=सनोति। आ० पद—√सन् त ( 'उ', 'टि' को एत्व )=सनुते। ( २ ) √षण्+आशीर्लिङ् ( 'ष्'='स्', 'ण्'='न्' ल्=तिप्=ति, यासुट्=यास्, 'स्' का लोप—'स्कोः०', 'ति' के इकार का लोप—'इतश्च', 'न्'='आ'—'ये विभाषा', सवर्णदीर्घ )=सायात्। आत्व के अभावपक्ष में—सन्यात्।

त्यात्वम् । सायात् । सन्यात् । (७८८) जनसनखनां सञ्झलोः ६।४।४२। एषामाकारोऽन्तादेशः स्याज्झलादौ सनि, झलादौ क्ङिति च। असात-असनिष्ट । असाथाः-असनिष्ठाः । क्षणु हिंसायाम् । क्षणोति । क्षणुते । 'ह्म्यन्ते'ति न वृद्धिः। अक्षणीत् । अक्षत-अक्षणिष्ट । अक्षथाः-अक्षणिष्ठाः । क्षिणु च । उप्रत्यये लघूपधगुणो वा । क्षिणोति-क्षेणोति । क्षेणिता । अक्षेणीत् । अक्षित-अक्षेणिष्ट । तृणु

---

इत्यनुनासिकनकारस्य लोपे 'अतत' इति । लोपाभावपक्षे—'अतन् स् त' इति स्थिते, इटि, सस्य षत्वे ष्टुत्वे च कृते—'अतनिष्ट' इति ।

(७८८) **जनसनखनामिति** । 'विड्वनोरि'त्यतः आदित्यनुवर्तते । 'अनुदात्तोपदेश' इत्यतः 'झलि क्ङिती'त्यनुवर्तते । तत्र 'झली'त्यनेन सन् विशेष्यते । तदादिविधिः । 'क्ङिती'त्यनुवृत्तं तु झला विशेष्यते, तेन तदादिविधिः । तदाह—**एषामित्यादि । असात्** । षण्धातोः 'धात्वादेः षः सः' इत्यनेन षस्य सत्वे 'निमित्तापाये नैमित्तिकस्याप्यपायः' इत्यनेन णस्य नत्वे लुङि, लः स्थाने आत्मनेपदे त-प्रत्यये, अडागमेऽनुबन्धलोपे, च्लौ, च्लेः सिच्यनुबन्धलोपे 'तनादिभ्यस्तथासोः' इति विकल्पेन सिचो लोपे

---

**(७८८) पद**—जनसनखनाम्, सञ्झलोः । **अनुवृत्ति**—आत्, झलि, क्ङिति । **विधिसूत्र** ।

**मूलार्थ**—जन्, सन् और खन् धातु को आकारान्त आदेश होता है; झलादि सन् और झलादि कित् ङित् प्रत्यय के परवर्ती रहते । असात । असनिष्ट इत्यादि ।

**विमर्श**—सूत्रार्थ की पूर्ति हेतु 'विड्वनोरनुनासिकस्यात्' (६।४।४१) से 'आत्' तथा 'अनुदात्तोपदेश०' (६।४।३७) से मण्डूकप्लुतया 'झलि, क्ङिति' पदों की अनुवृत्ति आती है। इस प्रकार—'झलादि सन् और झलादि कित् ङित् प्रत्यय के परवर्ती रहते जन्, सन् और खन् धातुओं को आकार अन्तादेश होता है।'

**उदाहरण**—(१) √षण् (सन्)+लुङ् (=आ० पद—त, अट्, च्लि, च्लि=सिच्='स्', सिच् का लुक्—'तनादिभ्यस्तथासोः', 'न्'='आ'—'जनसनखनां सञ्झलोः', अ+आ='आ'—सवर्णदीर्घ)=असात । सिच् लुक् के अभावपक्ष में—अ सन् स् त (इट्='इ'—'आर्धधातुकस्येड् वलादेः' षत्व, ष्टुत्व)=असनिष्ट । (२) लुङ् म० पु० एकवचन—असाथाः, असनिष्ठाः (विकल्प से सिच् का लुक्, शेष कार्य पूर्ववत्)।

**√क्षणु** (उदित) धातु का अर्थ—'हिंसा करना' है। (१) लट् प० पद—क्षणोति । आ० पद—क्षणुते । (२) √क्षण्+लुङ् (=तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्', इट्, ईट्, 'स्' का लोप—'इट ईटि', सवर्णदीर्घ, 'वदव्रज०' से प्राप्त हलन्तलक्षणा वृद्धि का 'नेटि' से निषेध । पुनः 'अतो हलादेर्लघोः' से प्राप्त वैकल्पिक वृद्धि का 'ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्' से निषेध)=अक्षणीत । आत्मनेपद—अ क्षण् त (च्लि=सिच्='स्', 'स्' का वैकल्पिक लोप—'तनादिभ्यस्तथासोः', 'ण्' का लोप—'अनुदात्तोपदेश०')=अक्षत । सिच् लोप के अभावपक्ष में (इट्, षत्व, ष्टुत्व)—अक्षणिष्ट । (३) लुङ् आ० पद० म० पु० एकव०—अक्षथाः, अक्षणिष्ठाः ।

**√क्षिणु** (उदित) धातु का अर्थ—'हिंसा करना' है। 'उ' प्रत्यय परे रहते लघूपध गुण विकल्प से होता है। तात्पर्य यह है कि 'ओर्गुणः' सूत्र में 'ओरव्' न्यास करते, पुनः गुण ग्रहण सामर्थ्य से 'संज्ञापूर्वको विधिरनित्यः' (संज्ञानिमित्तक विधि अनित्य होती है) परिभाषा

अदने । तृणोति–तर्णोति । तृणुते–तर्णुते । घृणु दीप्तौ । घृणोति–घर्णोति । डुकृञ् करणे । करोति । 'अत उत्सार्वधातुके' । कुरुतः । 'हलि चे'ति दीर्घे प्राप्ते—।

**( ७८९ ) न भकुर्छुराम् ८।२।७९।** भस्य कुर्छुरोश्चोपधाया न दीर्घः । कुर्वन्ति ।

**( ७९० ) नित्यं करोतेः ६।४।१०८।** करोतेः प्रत्ययोकारस्य नित्यं लोपो, म्वोः ।

---

'जनसनखनां सञ्झलोः' इत्यात्वे सवर्णदीर्घे च कृते 'असात' इति । सिचो लोपाभावे 'अ सन् स् त' इति स्थिते, इडागमेऽनुबन्धलोपे, सस्य षत्वे, तकारस्य ष्टुत्वेन टकारे 'असनिष्ट' इति ।

**करोति ।** कृधातोर्लटि तिपि 'तनादिकृञ्भ्य उः' इत्युप्रत्यये 'सार्वधातुकार्धधातुकयोः' इत्यनेन ऋकारस्य गुणे, रपरत्वे, तिप्रत्ययस्य सार्वधातुकत्वात् उकारस्य गुणे ओकारे 'करोति' इति ।

( ७८९ ) **न भकुर्छुरामिति ।** 'र्वोरुपधायाः' इत्यत उपधाया इति, दीर्घ इति चानुवर्तते । तदाह—**'भस्ये'त्यादिना ।**

( ७९० ) **नित्यं करोतेरिति ।** 'उतश्च प्रत्ययात्' इत्यनुवर्तते, 'लोपश्चान्यतरस्याम्' इत्यतो लोपः, म्वोः इति च । तदाह—**करोतेरिति । कुर्वः ।** कृधातोर्लटि, लः स्थाने

---

ज्ञापित होती है । 'पुगन्तलघूपधस्य च' विधि भी उपधासंज्ञा निमित्तक होने से अनित्य है, अतः गुण नहीं होता । परन्तु यह अनित्यता भाष्य में प्रतिपादित न होने से गुण भी होता है । इस प्रकार लघूपध गुण विकल्प से होता है । ( १ ) लट्—क्षिणोति, क्षेणोति । ( २ ) लुट्—क्षेणिता । ( ३ ) लुङ् प० पद—अक्षेणीत् । आ० पद में—अक्षित । अक्षेणिष्ट । ( विकल्प से सिच् का लुक् ) ।

**√तृणु** ( उदित ) धातु का अर्थ—'खाना' है । ( १ ) लट्—तृणोति, तर्णोति ( विकल्प से लघूपध गुण ) । आत्मनेपद में—तृणुते, तर्णुते । **√घृणु** धातु का अर्थ—'चमकना' है । ( १ ) लट्—घृणोति, घर्णोति ।

√डुकृञ् ( 'डु' इत, ञित ) धातु का अर्थ 'करना' है । ( १ ) √कृ+लट् ( =तिप्=ति, 'उ'—तनादिकृञ्भ्य उः', 'ऋ'='अ' गुण, रपर, 'उ'='ओ' गुण—'सार्वधातु०' )=करोति । ( २ ) √कृ+लट् ( =तस्, उ, 'ऋ'='अ' गुण, रपर )—क र् उ तस् ( अपित सार्वधातुक होने के कारण 'अ'='उ'—'अत उत्सार्वधातुके', स्=र्=ः )=कुरुतः ।

**( ७८९ ) पद**—न, भकुर्छुराम् । **अनुवृत्ति**—उपधायाः, दीर्घः । **विधिसूत्र ।**

**मूलार्थ**—भसंज्ञक और कुर्, छुर् की उपधा को दीर्घ नहीं होता ।

**विमर्श**—यहाँ 'र्वोरुपधाया दीर्घ इकः' ( ८।२।७६ ) से 'उपधायाः' और 'दीर्घः' पदों की अनुवृत्ति आती है । तदनुसार—"भसंज्ञक, तथा 'कुर्' और 'छुर्' की उपधा को दीर्घ नहीं होता ।"

**उदाहरण**—( ३ ) √कृ+लट् ( =झि, उ, 'झ्'='अन्त्' आदेश, ऋ='अ' गुण, रपर, 'अ'='उ'—'अत उत्सार्वधातुके', 'हलि च' से प्राप्त दीर्घ का 'न भकुर्छुराम्' से निषेध, 'उ'='व्'—यण् )=कुर्वन्ति ।

**( ७९० ) पद**—नित्यम्, करोतेः । **अनुवृत्ति**—लोपः, म्वोः, उतः प्रत्ययात् । **विधिसूत्र ।**

**मूलार्थ**—वकार, मकार के परवर्ती रहते कृ धातु के प्रत्यय सम्बन्धी उकार का नित्य लोप होता है । कुर्वः । कुर्मः इत्यादि ।

**कुर्वः । कुर्मः । कुरुते । चकार । चकर्थ । चकृव । चकृम । चक्रे । कर्ता । करिष्यति । करिष्यते । करोतु । कुरुताम् । अकरोत् । अकुरुत । ( ७९१ ) ये च ६।४।१०९ । कृञ उलोपो, यादौ प्रत्यये । कुर्यात् । कुर्वीत । क्रियात् । कृषीष्ट । अकार्षीत् । अकृत ।**

---

'वस्' इत्यादेशे उविकरणे, तस्यार्धधातुकत्वात् 'सार्वधातु०' इत्यनेन ऋकारस्य गुणे, रपरे 'अत उत्सार्वधातुके' इत्यनेनाकारस्य उकारे 'लोपश्चान्यतरस्याम्' इत्युकारस्य लोपविकल्पे प्राप्ते 'नित्यं करोतेः' इत्यनेन उकारस्य नित्यलोपे, सस्य रुत्वे विसर्गे च कृते 'कुर्वः' इति ।

( ७९१ ) **ये चेति ।** 'लोपश्चान्यतरस्याम्' इत्यतो लोप इति, अस्येति, 'नित्यं करोते' इत्यतः करोतेरिति चानुवर्तते । अस्येत्यनेन उत इति परामृश्यते । अङ्गाक्षिप्तः प्रत्ययो यकारेण विशेष्यते, तेन तदादिविधिस्तदाह—**कृञ इत्यादिना । कुर्यात् ।**

---

**विमर्श**—सूत्रार्थ की पूर्णता हेतु 'लोपश्चान्यतरस्यां म्वोः' (६।४।१०७) से 'लोपः' और 'म्वोः' तथा 'उतश्च प्रत्ययात्०' ( ६।४।१०६ ) से 'उतः प्रत्ययात्' की अनुवृत्ति आती है । तदनुसार—"वकारादि, मकारादि प्रत्यय के परे रहते कृ धातु से उत्तरवर्ती उकार का नित्य लोप होता है ।"

**उदाहरण**—( ४ ) √कृ+लट् ( =वस्, उ, ऋ='अ'—गुण, रपर )—क र् उ व स् ( 'अ'='उ'—'अत उत्सार्वधातुके', 'उ' का लोप—'नित्यं करोतेः', स्=र्=: )=कुर्वः । ( ५ ) लट् उ० पु० बहुव०—कुर्मः । ( ६ ) √कृ+लट् ( =आत्मनेपद—त, उ, 'ऋ'='अ'—गुण, रपर, 'अ'='उ'—'अत उत्सार्वधातुके', 'टि' को एत्व )=कुरुते ।

### √कृ धातु लट् लकार के रूप ( परस्मैपदी )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | करोति | कुरुतः | कुर्वन्ति |
| म० पु०— | करोषि | कुरुथः | कुरुथ |
| उ० पु०— | करोमि | कुर्वः | कुर्मः |

### ( आत्मनेपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | कुरुते | कुर्वाते | कुर्वते |
| म० पु०— | कुरुषे | कुर्वाथे | कुरुध्वे |
| उ० पु०— | कुर्वे | कुर्वहे | कुर्महे |

( ७ ) √कृ+लिट् ( =तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, ऋ='अ'—'उरत्' रपर, हलादिशेष, 'क्'='च्'—'कुहोश्चुः' )—च कृ अ ( ऋ='आ'—वृद्धि, रपर )=चकार । ( ८ ) लिट् म० पु० एकव०—चकर्थ । ( ९ ) लिट् उ० पु० द्विव०, बहुव०—चकृव, चकृम । ( १० ) लिट् आत्मनेपद—चक्रे, चक्राते, चक्रिरे इत्यादि । ( ११ ) लुट्—कर्ता । ( १२ ) लृट् प० पद—करिष्यति । आ० पद—करिष्यते । ( १३ ) लोट् प० पद—करोतु । लोट् आ० पद—कुरुताम् । ( १४ ) लङ् प० पद—अकरोत् । आ० पद—अकुरुत ।

**( ७९१ ) पद**—ये, च । **अनुवृत्ति**—नित्यं करोतेः, लोपः, अस्य । **विधिसूत्र ।**

**मूलार्थ**—यकारादि प्रत्यय के परवर्ती रहते कृ धातु सम्बन्धी उकार का लोप होता है । कुर्यात् । कुर्वीत इत्यादि ।

**विमर्श**—'नित्यं करोतेः' ( ७९० ) सूत्र तथा 'लोपश्चान्यतरस्याम्०' ( ६।४।१०७ ) से 'लोपः'

अकरिष्यत् । अकरिष्यत । **( ७९२ ) सम्परिभ्यां करोतौ भूषणे ६।१।१३७ । ( ७९३ ) समवाये च ६।१।१३८ ।** आभ्यां परस्य करोतेः सुट्, भूषणे सङ्घाते चार्थे । संस्करोति । अलङ्करोतीत्यर्थः । संस्कुर्वन्ति । सङ्घीभवन्तीत्यर्थः । सम्पूर्वस्य क्वचिदभूषणेऽपि सुट् । 'संस्कृतं भक्षाः' इति ज्ञापकात् । **( ७९४ ) उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च ६।१।१३९ ।** कृञः सुट् स्याच्चात्प्रागुक्तयोरर्थयोः । प्रतियत्नो गुणाधानम् ।

---

कृधातोर्विधिलिङि तिपि, अनुबन्धलोपे, इकारलोपे उविकरणे गुणे, रपरे 'अत उत्सार्वधातुके' इत्यकारस्य उकारे, यासुटि अनुबन्धलोपे 'लिङः सलोपोऽनन्त्यस्ये'ति सकारलोपे 'कु रु या त्' इति जाते, 'ये च' इति उकारस्य लोपे कृते 'कुर्यात्' इति ।

( ७९२ ) **सम्परिभ्यामिति** । ( ७९३ ) **समवाये चेति** । उभयत्र 'सुट्कात्पूर्वः' इत्यतः सुडिति अनुवर्तते । अत आह—**आभ्यां परस्येति** । **संस्करोति** । सम्पूर्वकस्य कृधातोः 'सम्परिभ्यां करोतौ भूषणे' इति सुटि अनुबन्धलोपे 'संस्करोति' इति ।

( ७९४ ) **उपात्प्रतियत्न इति** । 'सुडिति' 'करोतेः' इति चानुवर्तते । तदाह—

---

और 'अस्य' की अनुवृत्ति आती है । अनुवृत्त 'अस्य' पद से 'उतः प्रत्ययात्' का ग्रहण होता है । तदनुसार—"यकारादि प्रत्यय के परवर्ती रहते भी कृ धातु से परे उ प्रत्यय का लोप होता है ।"

**उदाहरण**—( १५ ) √कृ+विधिलिङ् ( =तिप्=ति, इकारलोप, उ, गुण, रपर, 'अ'= 'उ'—'अत उत्सार्वधातुके', यासुट्=यास्, 'स्' का लोप—'लिङः सलोपोऽनन्त्यस्य', 'उ' का लोप —'ये च' )=कुर्यात् । आ० पद—कुर्वीत । ( १६ ) √कृ+आशीर्लिङ् (=तिप्, यासुट्=यास्, सकार का लोप, ऋ=रिङ्='रि'—'रिङ्शयग्लिङ्क्षु', इकारलोप )=क्रियात् । आ० पद—कृषीष्ट ( 'उश्च' से सीयुट् के कित् होने से गुण-निषेध ) । ( १७ ) √कृ+लुङ् (=तिप्=ति, अट्, च्लि, च्लि=सिच्='स्', इट् की प्राप्ति, उसका 'एकाच उपदेशे' से निषेध, इकारलोप, ईट्='ई', ऋ= 'आ'—वृद्धि—'सिचि वृद्धिः परस्मैपदेषु' रपर, षत्व )=अकार्षीत् । आत्मनेपद में—अकृत । ( सिच् का लोप—'ह्रस्वादङ्गात्' ) । ( १८ ) लृङ् प० पद—अकरिष्यत् । आ० पद—अकरिष्यत ।

**( ७९२ ) पद**—सम्परिभ्याम्, करोतौ, भूषणे । **अनुवृत्ति**—सुट् । **विधिसूत्र** ।

**मूलार्थ**—सम् और परि पूर्वक कृ धातु को भूषण अर्थ में सुट् होता है ।

**( ७९३ ) पद**—समवाये, च । **अनुवृत्ति**—सम्परिभ्याम् सुट्, करोतेः । **विधिसूत्र** ।

**मूलार्थ**—सम् और परिपूर्वक कृ धातु को संघात अर्थ में भी सुट् होता है ।

**विमर्श**—उक्त सूत्रों में 'सुट्कात्पूर्वः' ( ६।१।१३१ ) से 'सुट्' की अनुवृत्ति आती है । तदनुसार दोनों सूत्रों का अर्थ इस प्रकार है—"सम् तथा परि उपसर्ग से उत्तरवर्ती कृ धातु को ( 'क्' से पूर्व ) सुट् ( =स् ) का आगम होता है, भूषण और संघात अर्थ में ।"

**उदाहरण**—( १ ) सम्+करोति ( यहाँ भूषण अर्थ होने से सुट्='स्'—'सम्परिभ्यां करोतौ भूषणे' )=संस्करोति ( सजाता है ) । ( २ ) सम्+कुर्वन्ति ( संघात अर्थ में सुट्— 'समवाये च' )=संस्कुर्वन्ति ( एकत्रित होते हैं ) ।

**सम्पूर्वस्येति**—सम् पूर्वक √कृ को कहीं भूषण से भिन्न अर्थ में भी सुट् हो जाता है । 'संस्कृतं भक्षाः' ( ४।२।१६ ) सूत्र के ज्ञापक से यह ज्ञात होता है । क्योंकि उक्त सूत्र में भूषण अर्थ नहीं, अपितु संस्कार करना अर्थ है । अतः 'अन्नं संस्करोति' में भी सुट् हो जाता है ।

**( ७९४ ) पद**—उपात्, प्रतियत्नवैकृतवाक्याध्याहारेषु, च । **अनुवृत्ति**—करोतौ, सुट्, भूषणे, समवाये । **विधिसूत्र** ।

विकृतमेव वैकृतं–विकारः। वाक्याध्याहारः—आकाङ्क्षितैकदेशपूरणम्। उपस्कृता कन्या। उपस्कृता ब्राह्मणाः। एधोदकस्योपस्कुरुते। उपस्कृतं भुङ्क्ते। उपस्कृतं ब्रूते।

( अथ द्वावनुदात्तेतौ ) वनु याचने। वनुते। ववने। मनु अवबोधने। मनुते। मेने। मनिता। मनिष्यते। मनुताम्। अमनुत। मन्वीत। मनिषीष्ट।

इति तनादिप्रकरणम्।

---

उपात्कृञ इत्यादिना। उपस्कुरुते। गुणान् आधत्ते इत्यर्थः। उपपूर्वकात् कृधातोः लटि, आत्मनेपदे त प्रत्यये 'तनादिकृञ्भ्य उः' इत्युविकरणे टेरेत्वे, ऋकारस्य गुणे रपरे 'अत उत्सार्वधातुके' इति अकारस्य उकारे 'उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च' इत्यनेन सुटि अनुबन्धलोपे 'उपस्कुरुते' इति।

मन्वीत। मन्धातोर्विधिलिङि, लः स्थाने तादेशे 'तनादिकृञ्भ्य उः' इत्युविकरणे, सीयुटि, अनुबन्धलोपे 'लिङः सलोपोऽनन्त्यस्ये'ति सलोपे 'लोपो व्योर्वलि' इति यलोपे 'मन् उ ई त' इति जाते 'इको यणचि' इति यणि कृते 'मन्वीत' इति।

इति तनादिप्रकरणम्।

---

**मूलार्थ**—प्रतियत्न आदि अर्थों में, चकारात् भूषण और सङ्घात अर्थ में उप उपसर्ग से परे कृ धातु को सुट् ( =स् ) होता है।

**विमर्श**—प्रकृत सूत्र में 'सुट्कात्पूर्वः' ( ६।१।१३१ ) से सुट्, 'सम्परिभ्याम्' ( ७९२ ) से 'करोतौ, भूषणे' और 'समवाये च' ( ७९३ ) से 'समवाये' की अनुवृत्ति आती है। तदनुसार—"उप उपसर्ग से परवर्ती कृ धातु को सुट् का आगम होता है, प्रतियत्न ( =गुण ग्रहण करना ), वैकृत ( =विकार ) और वाक्याध्याहार ( =वाक्य में जिसकी आकांक्षा हो उस एकदेश ( भाग ) को पूर्ण करना ) अर्थों में। चकार से पूर्वोक्त भूषण और संघात अर्थों में भी सुट् होता है।"

**उदाहरण**—( १ ) उपस्कृता कन्या ( सजाई गई कन्या )। यहाँ भूषण अर्थ होने से उक्त सूत्र से सुट् हुआ। ( २ ) उपस्कृताः ब्राह्मणाः ( ब्राह्मण एकत्रित हुए )। यहाँ संघात अर्थ होने से उप से परे √कृ को सुट् हुआ। ( ३ ) एधोदकस्योपस्कुरुते ( लकड़ी जल में रंग उत्पन्न करती है )। यहाँ गुण का आधान होने से सुट् हुआ। ( ४ ) उपस्कृतं भुङ्क्ते ( विकृत वस्तु को खाता है )। यहाँ विकार अर्थ में उप+√कृ को सुट् हुआ। ( ५ ) उपस्कृतं ब्रूते ( वाक्य का अध्याहार करते हुए बोलता है )। यहाँ वाक्याध्याहार में उप+√कृ को सुट् हुआ।

अब दो अनुदात्तेत ( =आत्मनेपदी ) धातुओं की रूपसिद्धि बतलायी जा रही है—

√वनु ( उदित ) धातु का अर्थ 'माँगना' है। ( १ ) लट्—वनुते ( २ ) √वन्+लिट् ( =त=एश्=ए, द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'अत एकहल्मध्ये' से प्राप्त एत्वाभ्यासलोप का 'न शशददवादिगुणानाम्' से निषेध )=ववने।

√मनु ( उदित ) धातु का अर्थ—'जानना' है। ( १ ) लट्—मनुते। ( २ ) √मन्+लिट् =( त=एश्=ए, द्वित्व, अभ्यास संज्ञा, हलादिशेष, एत्व, अभ्यास लोप )=मेने। ( ३ ) लुट्—मनिता। ( ४ ) लृट्—मनिष्यते। ( ५ ) लोट्—मनुताम्। ( ६ ) लङ्—अमनुत। ( ७ ) √मन्+विधिलिङ् ( =त, उ, सीयुट्=सीय्, 'स्' का लोप—'लिङः सलोपोऽनन्त्यस्य', 'य्',

# अथ क्र्यादिप्रकरणम्

डुक्रीञ् द्रव्यविनिमये (७९५) **क्र्यादिभ्यः श्ना ३।१।८१।** क्र्यादिभ्यः श्ना स्यात्, कर्त्रर्थे सार्वधातुके परे। शपोऽपवादः। क्रीणाति। 'ई हल्यघोः'। क्रीणीतः। 'श्नाभ्यस्तयोरातः'। क्रीणन्ति। क्रीणासि। क्रीणीथः। क्रीणीथ। क्रीणामि। क्रीणीवः। क्रीणीमः। क्रीणीते। क्रीणाते। क्रीणते। क्रीणीषे। क्रीणाथे। क्रीणीध्वे। क्रीणे। क्रीणीवहे। क्रीणीमहे। चिक्राय। चिक्रियतुः। चिक्रियुः। चिक्रयिथ–चिक्रेथ। चिक्रिये।

---

अथ श्नाविकरणधातवो निरूप्यन्ते—डुक्रीञिति।

(७९५) **क्र्यादिभ्य इति।** कर्त्रर्थे सार्वधातुके परे क्र्यादिभ्यः श्ना स्यात्स्वार्थे इत्यर्थः। **क्रीणाति।** क्रीधातोर्लटि, तिपि, शपि प्राप्ते, तं प्रबाध्य 'क्र्यादिभ्यः श्ना' इति श्नाप्रत्ययेऽनुबन्धलोपे, ईकारस्य गुणे प्राप्ते 'सार्वधातुकमपित्' इति ङित्त्वात् 'क्ङिति चे'त्यनेन गुणनिषेधे, नकारस्य णत्वे कृते 'क्रीणाति' इति। **चिक्राय।** क्रीधातोर्लिटि, लः स्थाने तिपि, तिपो णलादेशेऽनुबन्धलोपे धातोर्द्वित्वेऽभ्याससंज्ञायां 'ह्रस्वः'

---

का लोप—'लोपो व्योर्वलि')—मनु ई त ('उ'='व्'—यण्)=मन्वीत। (८) आशीर्लिङ्—मनिषीष्ट।

**तनादि-प्रकरण समाप्त।**

---

√डुक्रीञ् (ड्वित, ञित, उभयपदी) धातु का अर्थ—'खरीदना' है।

**(७९५) पद**—क्र्यादिभ्यः, श्ना। **अनुवृत्ति**—कर्तरि, सार्वधातुके। **विधिसूत्र।**

**मूलार्थ**—कर्त्रर्थक सार्वधातुक प्रत्यय के परवर्ती रहते क्र्यादिगण पठित धातुओं से 'श्ना' प्रत्यय होता है। यह शप् का अपवाद है। 'श्ना' में शकार इत् है। क्रीणाति इत्यादि।

**विमर्श**—इस सूत्र में 'कर्तरि शप्' (३।१।६८) से 'कर्तरि' तथा 'सार्वधातुके यक्' (३।१।६७) से 'सार्वधातुके' की अनुवृत्ति आती है। तदनुसार—"क्री आदि धातुओं से 'श्ना' विकरण होता है, कर्त्रर्थक सार्वधातुक के परे रहते।"

**उदाहरण**—(१) √क्री+लट् (=तिप्=ति, प्राप्त शप् का बाधकर—श्ना='ना'—'क्र्यादिभ्यः श्ना', 'सार्वधातुकमपित्' से ङिद्वत् होने से प्राप्त गुण का 'क्ङिति च' से निषेध, णत्व)=क्रीणाति। (२) √क्री+लट् (=तस्, श्ना='ना'—'क्र्यादिभ्यः श्ना' 'आ'='ई'—'ई हल्यघोः', णत्व, स्=र्=ः)=क्रीणीतः। (३) √क्री+लट् (=झि, 'झ्'='अन्त्', श्ना='ना'—'क्र्यादिभ्यः 'श्ना', 'आ' का लोप—'श्नाभ्यस्तयोरातः', णत्व)=क्रीणन्ति। थस्, थ, वस् और मस् अपित्सार्वधातुक होने से 'ङिद्वत्' हो जाने पर 'श्ना' के आकार के स्थान में 'ई हल्यघोः' से ईत्व)='क्रीणीथः' इत्यादि।

**आत्मनेपद में**—(४) √क्री+लट् (=त, श्ना='ना'—'क्र्यादिभ्यः श्ना', 'आ'='ई'—'ई हल्यघोः', णत्व, 'टि' को एत्व—'टित आत्मनेपदानां टेरे')=क्रीणीते। (५) √क्री+लट् (=आताम्, श्ना='ना', 'आ' का लोप—'श्नाभ्यस्तयोरातः', 'टि' को एत्व, णत्व)=क्रीणाते। (६) √क्री+लट् (=झ, झ्='अत्', श्ना='ना', एत्व, 'आ' का लोप, णत्व)=क्रीणते। अजादि प्रत्यय के परवर्ती रहते आकार का लोप होकर अन्य रूप भी बनते हैं।

**क्रेता । क्रेष्यति । क्रेष्यते । क्रीणातु । क्रीणीतात् । क्रीणीताम् । क्रीणाताम् । क्रीणताम् । क्रीणीयात् । क्रीणीत । क्रीयात् । क्रेषीष्ट । अक्रैषीत् । अक्रेष्ट । अक्रेष्यत् । अक्रेष्यत । प्रीञ् तर्पणे, कान्तौ च । प्रीणाति । प्रीणीते । श्रीञ् पाके । श्रीणाति । श्रीणीते । मीञ् हिंसायाम् । प्रमीणाति । प्रमीणीते । 'हिनुमीना' इति णत्वम् । 'मीनाती'त्यात्वम् ।**

---

इति ह्रस्वे, हलादिशेषे 'कुहोश्चुः' इति चुत्वे, वृद्धौ 'एचोऽयवायावः' इत्यायादेशे च कृते 'चिक्राय' इति । आत्मनेपदे तु 'चिक्रिये' इति रूपम् ।

**अक्रैषीत्** । क्रीधातोर्लुङि, लः स्थाने तिप्यनुबन्धलोपे, अडागमे च्लौ, च्लेः सिच्यनुबन्धलोपे षत्वे, 'इतश्चे'त्यनेन इकारलोपे 'अस्तिसिचोऽपृक्ते' इति ईटि, 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ 'अक्रैषीत्' इति । आत्मनेपदे—'अ क्री त' इति स्थिते, च्लौ, च्लेः स्थाने सिचि अनुबन्धलोपे, गुणे, सस्य षत्वे, ष्टुत्वे च कृते 'अक्रेष्ट' इति । **ममौ ।**

---

**√क्री धातु लट् लकार के रूप ( परस्मैपद )**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | क्रीणाति | क्रीणीतः | क्रीणन्ति |
| म० पु० | क्रीणासि | क्रीणीथः | क्रीणीथ |
| उ० पु० | क्रीणामि | क्रीणीवः | क्रीणीमः |

**( आत्मनेपद )**

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | क्रीणीते | क्रीणाते | क्रीणते |
| म० पु० | क्रीणीषे | क्रीणाथे | क्रीणीध्वे |
| उ० पु० | क्रीणे | क्रीणीवहे | क्रीणीमहे |

( ७ ) √क्री + लिट् ( = तिप् = णल् = 'अ', धातु को द्वित्व—'लिटि धातो०' अभ्यास संज्ञा, अभ्यास की ई = 'इ' ह्रस्व—'ह्रस्वः', 'क्' = 'च्'—'कुहोश्चुः' हलादिशेष )—चि क्री अ ( 'ई' = 'ऐ'—वृद्धि, 'ऐ' = 'आय्' आदेश—'एचोऽयवायावः' ) = चिक्राय । ( ८ ) √क्री + लिट् ( = तस् = अतुस्, द्वित्व, अभ्यास संज्ञा, ह्रस्व, चुत्व, हलादिशेष )—चि क्री अतुस् ( 'असंयोगाल्लिट् कित्' से कित् होने से गुण का निषेध, ई = इयङ् = 'इय्', स् = र् = : ) = चिक्रियतुः । ( ९ ) लिट् प्र० पु० बहुव०—चिक्रियुः । ( १० ) √क्री + लिट् ( = सिप् = थल् = 'थ', द्वित्व, अभ्यास संज्ञा, ह्रस्व, हलादिशेष, चुत्व, भारद्वाज नियम से विकल्प से इट् = 'इ', गुण, अय् आदेश ) = चिक्रयिथ । इट् के अभावपक्ष में—'चिक्रेथ' । ( ११ ) √क्री + लिट् ( = आत्मनेपद—त, द्वित्व, अभ्यास संज्ञा, ह्रस्व, हलादिशेष, चुत्व )—चि क्री त ( त = एश् = 'ए', ई = इयङ् = 'इय्'—'अचि श्नु०' ) = चिक्रिये । ( १२ ) लुट्—क्रेता । ( १३ ) लृट्—क्रेष्यति । आ० पद—क्रेष्यते । ( १४ ) **लोट् परस्मैपद**—क्रीणातु, क्रीणीतात् । क्रीणीताम् । क्रीणन्तु इत्यादि । **लोट् आत्मनेपद**—क्रीणीताम्, क्रीणाताम्, क्रीणताम् इत्यादि । ( १५ ) विधिलिङ् प० पद—क्रीणीयात ( 'यासुट्' के ङित् होने से 'श्ना' के आ = ई—'ई हल्यघोः' ) । **आत्मनेपद**—क्रीणीत ( 'श्ना' के आकार का 'श्नाभ्यस्तयोरातः' से लोप ) । ( १६ ) आशीर्लिङ् प० पद—क्रीयात । आत्मनेपद—क्रेषीष्ट । ( १७ ) √क्री + लुङ् ( = तिप् = ति, अट्, इकारलोप, च्लि, च्लि = सिच् = 'स्', ईट् = 'ई'—'अस्तिसिचोऽपृक्ते', वृद्धि—'सिचि वृद्धिः परस्मैपदेषु', षत्व ) = अक्रैषीत । ( १८ ) √क्री + लुङ् ( = आ० पद प्र० पु० एकव०—त, अट्, च्लि, च्लि = सिच् = 'स्', 'ई' = 'ए' गुण,

**ममौ । मिम्यतुः । ममिथ-ममाथ । मिम्ये । माता । मास्यति । मीयात् । मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त । षिञ् बन्धने । सिनाति । सिनीते । सिषाय । सिष्ये । सेता । स्कुञ् आप्रवणे । ( ७९६ ) स्तन्भु-स्तुन्भु-स्कम्भु-स्कुम्भु-स्कुञ्भ्यः श्नुश्च ३।१।८२ । स्तन्भ्वादिभ्यः श्नुः स्यात् । चात् श्ना । स्कुनोति । स्कुनुते । स्कुनाति ।**

---

मीधातोर्लिटि तिपि, तिपो णलादेशे 'मीनातिमिनोतिदीङां ल्यपि चे'त्यनेन मीधातोरात्वे द्वित्वेऽभ्याससंज्ञायां ह्रस्वे, हलादिशेषे, 'आत औ णलः' इति णल औकारे 'वृद्धिरेचि' इति वृद्धौ 'ममौ' इति ।

( ७९६ ) **स्तन्भु-स्तम्भ्विति ।** 'क्र्यादिभ्यः श्ना' इत्यतः श्ना इत्यनुवर्तते । अत आह—**स्तन्भ्वादिभ्य इति । स्कुनोति ।** ञकारेत्संज्ञक-स्कुञ्धातोर्लटि, तिपि, शपि प्राप्ते,

---

'स्'='ष्' षत्व, 'त्'='ट्'—ष्टुत्व )=अक्रेष्ट । ( १९ ) लृङ् प० पद—अक्रेष्यत् । आ० पद—अक्रेष्यत ।

**√प्रीञ्** ( ञित् ) धातु का अर्थ 'प्रसन्न करना और इच्छा करना' है । इसके रूप भी 'क्री' धातु के समान बनते हैं । ( १ ) √प्री+लट् ( =तिप्=ति, श्ना—'क्र्यादिभ्यः श्ना', णत्व ) =प्रीणाति । ( २ ) आ० पद लट् प्र० पु० एक०—प्रीणीते । **√श्रीञ्** ( ङित, उभयपदी ) धातु का अर्थ—'पकाना' है । ( १ ) लट् प० पद—श्रीणाति । लट् आ० पद—श्रीणीते ।

**√मीञ्** ( ञित, उभयपदी ) धातु का अर्थ—'हिंसा करना' है । ( १ ) प्र+√मी+लट् ( =तिप्=ति, श्ना='ना'—'क्र्यादिभ्यः श्ना', 'न्'='ण्' णत्व—'हिनुमीना' )=प्रमीणाति । आ० पद—प्रमीणीते । ( २ ) √मी+लिट् ( =तिप्=णल्, ई='आ' आत्व—'मीनातिमिनोतिदीङां ल्यपि च', द्वित्व, अभ्यास संज्ञा, ह्रस्व, हलादिशेष, णल्='औ'—'आत औ णलः' )—म मा औ ( आ+औ='औ' वृद्धि—'वृद्धिरेचि' )=ममौ । ( ३ ) √मी+लिट् ( =तस्=अतुस्, द्वित्व, अभ्यास संज्ञा, ह्रस्व, हलादिशेष, 'ई'='य्'—यण्, स्=र्=ः )=मिम्यतुः । ( ४ ) √मी+लिट् ( =सिप्=थल्=थ, आत्व—'मीनातिमिनोति०', द्वित्व, अभ्यास संज्ञा, ह्रस्व, हलादिशेष )—म मा थ ( इट् विकल्प से—'ऋतो भारद्वाजस्य', 'आ' का लोप—'आतो लोप इटि च' ) =ममिथ । इट् के अभावपक्ष में—ममाथ । ( ५ ) √मी+लिट् ( =आ० पद० प्र० पु० एकव०—त=एश्='ए', द्वित्व, अभ्यास संज्ञा, ह्रस्व, हलादिशेष, 'ई'='य्'—यण् )=मिम्ये । ( ६ ) लुट्—माता ( आत्व ) । ( ७ ) लृट्—मास्यति । ( ८ ) आशीर्लिङ्—प० प०—मीयात् । आ० पद—मासीष्ट । ( ९ ) √मी+लुङ् ( =तिप्=ति, अट्, इकारलोप, आत्व—'मीनाति०', च्लि, च्लि=सिच्=स्, इट्='इ' और सक्=स्—'यमरमनमातां सक् च', ईट्, सिच् का लोप, दीर्घ )=अमासीत् । ( १० ) लुङ् प्र० पु० द्विव०—अमासिष्टाम् । ( ११ ) √मी+लुङ् ( =आत्मनेपद प्र० पु० एकव०—त, अट्, आत्व, च्लि=सिच्='स्' )=अमास्त ।

**√षिञ्** ( ञित, उभयपदी ) धातु का अर्थ—'बाँधना' है । ( १ ) √षि+लट् ( =तिप्=ति, 'ष्'='स्'—'धात्वादेः षः सः', श्ना='ना'—'क्र्यादिभ्यः श्ना' )=सिनाति । आ० पद में ( ईत्व, टि को एत्व )=सिनीते । ( २ ) लिट् प० प०—सिषाय । आ० पद—सिष्ये । ( ३ ) लुट्—सेता ।

**√स्कुञ्** ( ञित, उभयपदी ) धातु का अर्थ—'चारों ओर कूदना' है ।

**( ७९६ ) पद**—स्तन्भु-स्तुन्भु-स्कन्भु-स्कुन्भु-स्कुञ्भ्यः, श्नुः, च । **अनुवृत्ति**—श्ना । **विधिसूत्र ।**

**मूलार्थ**—स्तन्भु आदि धातुओं से श्नु प्रत्यय होता है । चकारात् श्ना प्रत्यय भी होता है । स्कुनोति । स्कुनुते । स्कुनाति इत्यादि ।

स्कुनीते । चुस्काव । चुस्कुवे । स्कोता । अस्कौषीत् । अस्कोष्ट । **स्तन्भ्वादयश्चत्वारः सौत्राः सर्वे रोधनार्थाः परस्मैपदिनः ।**

अथोभयपदिनः । (७९७) **हलः श्नः शानज्झौ ३।१।८३ ।** हलः परस्य श्नः शानजादेशः स्याद्धौ परे । स्तभान । (७९८) **जॄ-स्तन्भु-म्रुचु-म्लुचु-ग्रुचु-ग्लुचु-ग्लुञ्चु-श्विभ्यश्च**

---

तं प्रबाध्य 'स्तन्भु-स्तुन्भु-स्कम्भु-स्कुम्भु-स्कुञ्भ्यः श्नुश्चे'त्यनेन श्नुप्रत्यये श्नाप्रत्यये च, क्रमशः 'स्कु नु ति, स्कु ना ति' इति जाते, सार्वधातुकसंज्ञायां 'सार्वधातुकार्धधातुकयोः' इत्यनेन उकारस्य गुणे ओकारे 'स्कुनोति' इति । श्नापक्षे—'स्कुनाति' इति ।

( ७९७ ) हलः श्न इति । स्पष्टम् । **स्तभान ।** उकारेत्संज्ञक-स्तन्भुधातोर्लोटि, लः स्थाने सिपि 'सेर्ह्यपिच्च' इत्यनेन सेर्ह्यादेशे, शपं प्रबाध्य 'स्तन्भु-स्तुन्भु-स्कन्भु-स्कुन्भु-स्कुञ्भ्यश्च' इत्यनेन श्नुप्रत्ययेऽनुबन्धलोपे श्नाप्रत्यये च कृते, तत्र श्नापक्षे 'हलः श्नः शानज्झौ' इत्यनेन 'श्ना' इत्यस्य स्थाने शानजादेशेऽनुबन्धलोपे 'अनिदितां हल उपधाया क्ङिति' इति नलोपे 'अतो हेः' इति हेर्लुकि 'स्तभान' इति । श्नुप्रत्ययपक्षे—'स्तम्भ् नु हि' इति स्थिते 'अनिदिताम्०' इति नकारलोपे 'स्तभ्नुहि' इति ।

---

**विमर्श**—सूत्रस्थ चकार से 'क्र्यादिभ्यः श्ना' ( ७९५ ) से 'श्ना' की अनुवृत्ति यहाँ आ रही है । अतः "स्तन्भु, स्तुन्भु, स्कन्भु, स्कुन्भु और स्कुञ् धातुओं से श्नु विकरण होता है और श्ना भी ।" इस प्रकार √स्कुञ् धातु के रूप स्वादि और क्र्यादि दोनों के समान बनते हैं ।

**उदाहरण**—( १ ) √स्कु+लट् ( =परस्मैपद प्र० पु० एकव०—तिप्=ति, श्नु='नु'—'स्तन्भुस्तुन्भु०', उ='ओ' गुण—'सार्वधातुकार्धधातुकयोः' )=स्कुनोति । चकारात् श्ना='ना' पक्ष में—स्कुनाति । आत्मनेपद में—√स्कु+लट् ( =त, श्नु='नु'—'स्तन्भु०' 'टि' को एत्व, ङित् होने से गुणनिषेध )=स्कुनुते । 'श्ना' पक्ष में—आ='ई' ईत्व—'ई हल्यघोः'—स्कुनीते । ( २ ) √स्कु+लिट् ( =तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, हलादिशेष, चुत्व ) चुस्कु अ ( वृद्धि, औ='आव्' आदेश )=चुस्काव । आ० पद पक्ष में—चु स्कु त ( 'त'=एश्='ए' उ=उवङ्='उव्' )=चुस्कुवे । ( ३ ) लुट्—स्कोता । ( ४ ) √स्कु+लुङ् ( =तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्', ईट् , षत्व, वृद्धि—'सिचि वृद्धिः०' )=अस्कौषीत् । आत्मनेपद में—अ स्कु स् त ( गुण, षत्व, ष्टुत्व )=अस्कोष्ट ।

**स्तन्भ्वादयः०**—स्तन्भु आदि चार सौत्र धातुएँ हैं । अर्थात् इन चार धातुओं का उल्लेख सूत्र में ही हुआ है, धातुपाठ में नहीं । ये चार धातुओं का अर्थ 'रोकना' है तथा ये परस्मैपदी हैं ।

**( ७९७ ) पद**—हलः, श्नः, शानच्, झौ । **विधिसूत्र ।**

**मूलार्थ**—'हल्' से परे 'श्ना' के स्थान में 'शानच्' आदेश होता है, 'हि' के परवर्ती रहते । स्तभान ।

**उदाहरण**—( १ ) √स्तन्भ्+लोट् ( =सिप्='सि', श्ना='ना', सि='हि'—'सेर्ह्यपिच्च', 'न्' का लोप—'अनिदितां हल उपधायाः क्ङिति', 'श्ना'='शानच्'='आन'—'हलः श्नः शानज्झौ', 'हि' का लुक्—'अतो हेः' )=स्तभान ।

३।१।५८। एभ्यश्च्लेरङ् वा। व्यष्टभत्। अस्तम्भीत्। युञ् बन्धने। युनाति। युनीते। योता। क्नूञ् शब्दे। क्नूनाति। क्नूनीते। क्नविता। द्रूञ् हिंसायाम्। द्रूणाति। द्रूणीते। पूञ् पवने। (७९९) प्वादीनां ह्रस्वः ७।३।८०। पूञ्-लूञ्-स्तॄञ्-कॄञ्-वृञ्-धूञ्-शॄ-पॄ-वॄ-भॄ-मॄ-दॄ-जॄ-झॄ-धॄ-नॄ-कॄ-ऋ-गॄ-ज्या-री-ली-ब्ली-प्ली एषां चतुर्विंशतेर्ह्रस्वः स्यात् शिति।

---

(७९८) जॄस्तन्भु इति। अत्र 'च्लेः सिच्' इत्यस्माच्च्लेरिति, 'अस्यतिवक्ति०' इत्यस्मादङिति, 'इरितो वे'त्यस्माद् वेति चानुवर्तते। तदाह—एभ्यश्च्लेरिति। व्यष्टभत्। विपूर्वकात् स्तन्भ्धातोर्लुङि, तिपि अटि अनुबन्धलोपे, च्लौ, च्लेः सिचि प्राप्ते, तं प्रबाध्य 'जॄस्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्चे'त्यनेन विकल्पेन अङि कृते 'अनिदिताम्'इति नलोपे 'स्तन्भेः' इति सस्य षत्वे ष्टुत्वे कृते, तिप इकारलोपे, यणि 'व्यष्टभत्' इति। अङोऽभावपक्षे—च्लेः सिचि अनुबन्धलोपे, इटि, ईटि च 'इट ईटि' इति सलोपे दीर्घे 'अस्तम्भीत्' इति।

(७९९) प्वादीनामिति। 'ष्ठिवुक्लमुचमामि'त्यतः शितीत्यनुवर्तते। तदाह—

---

**(७९८) पद**—जॄ-स्तन्भु-म्रुचु-म्लुचु-ग्रुचु-ग्लुचु-ग्लुञ्चु-श्विभ्यः, च। **अनुवृत्ति**—च्लेः, अङ्, वा। **विधिसूत्र**।

**मूलार्थ**—जॄ आदि धातुओं से परवर्ती 'च्लि' के स्थान में विकल्प से 'अङ्' आदेश होता है। व्यष्टभत्। अस्तम्भीत् इत्यादि।

**विमर्श**—प्रकृत सूत्र में 'च्लेः सिच्' (३।१।४४) से 'च्लेः', 'अस्यतिवक्तिख्यातिभ्योऽङ्' (३।१।५२) से 'अङ्' तथा 'इरितो वा' (३।१।५७) से 'वा' पदों की अनुवृत्ति आती है। तदनुसार—"जॄष्, स्तम्भु, म्रुचु, म्लुचु, ग्रुचु, ग्लुचु, ग्लुञ्चु और श्वि धातुओं से उत्तरवर्ती 'च्लि' के स्थान में विकल्प से 'अङ्' (=अ) आदेश होता है।"

**उदाहरण**—(२) वि+√स्तम्भ्+लुङ् (=तिप्=ति, अट्, च्लि, प्राप्त सिच् का बाधकर 'च्लि'='अङ्'='अ' विकल्प से—'जॄस्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च', 'न्' का लोप—'अनिदिताम्०', 'स्'='ष्'—षत्व—'स्तन्भेः', ष्टुत्व, इकारलोप—'इतश्च', यण्)=व्यष्टभत्। अङ् के अभावपक्ष में (च्लि=सिच्='स्')—अ स्तम्भ् स् त (इट्, ईट्, 'स्' का लोप—'इट ईटि', इ+ई='ई' सवर्णदीर्घ)=अस्तम्भीत्।

**√युञ्** धातु (ञित्) का अर्थ 'बाँधना' है। (१) लट् प० पद—युनाति। आ० पद—युनीते। (२) लुट्—योता।

**√क्नूञ्** (ञित्) धातु का अर्थ—'शब्द करना' है। (१) लट् प० पद—क्नूनाति। आ० पद—क्नूनीते। (२) लुट्—क्नविता।

**√द्रूञ्** (ञित्) धातु का अर्थ—'हिंसा करना' है। लट् प० पद—द्रूणाति। आ० पद—द्रूणीते।

**√पूञ्** (ञित्) धातु का अर्थ 'पवित्र करना' है।

**(७९९) पद**—प्वादीनाम्, ह्रस्वः। **अनुवृत्ति**—शिति। **विधिसूत्र**।

**मूलार्थ**—शित् प्रत्यय के परवर्ती रहते पूञ् आदि धातुओं को ह्रस्व होता है। पुनाति। पुनीते इत्यादि।

**पुनाति । पुनीते । पविता । लूञ् छेदने । लुनाति । लुनीते । स्तॄञ् आच्छादने । स्तृणाति । स्तृणीते । तस्तार । तस्तरतुः । तस्तरे । स्तरिता-स्तरीता । स्तृणीयात् । स्तृणीत । 'ॠत इद्धातोः' । स्तीर्यात् । स्तरिषीष्ट-स्तीर्षीष्ट । 'सिचि च परस्मैपदेषु' । अस्तारीत् । अस्तारिष्टाम् । अस्तारिषुः । अस्तरिष्ट-अस्तीर्ष्ट । कॄञ् हिंसायाम् । कृणाति ।**

---

**पूञ्लूञ् इत्यादिना । पुनाति ।** ञकारेत्संज्ञक-पूञ्धातोर्लटि, तिपि, शपं प्रबाध्य 'क्र्यादिभ्यः श्ना' इति श्नाविकरणेऽनुबन्धलोपे 'प्वादीनां ह्रस्वः' इति ह्रस्वे 'पुनाति' इति ।

**स्तरिषीष्ट, स्तीर्षीष्ट ।** स्तॄधातोराशीर्लिङि, लः स्थाने तप्रत्यये, सीयुटि अनुबन्धलोपे, 'सुट् तिथोः' इत्यनेन सुटि अनुबन्धलोपे 'स्तॄ सीय् स् त' इति जाते, 'लोपो

---

**विमर्श**—यहाँ 'ष्ठिवुक्लमुचमां शिति' ( ७।३।७५ ) से 'शिति' पद की अनुवृत्ति आती है। तदनुसार—"पूञ् ( पवित्र करना ), लूञ् ( काटना ), स्तॄञ् ( ढकना ), कॄञ् ( हिंसा करना ), वॄञ् ( =वरण करना ), धूञ् ( कँपाना ), शॄ ( हिंसा करना ), पॄ ( पालन करना ), भॄ ( भरना ), मॄ ( मरना ), दॄ ( हिंसा करना ), जॄ ( जीर्ण होना ), झॄ ( जीर्ण होना ), धॄ ( धारण करना ), नॄ ( विनाश करना ), कॄ ( हिंसा करना ), ॠ ( जाना ), गॄ ( निगलना ), ज्या ( वृद्ध होना ), री ( हिंसा करना ), ली ( मिलना ), व्ली ( स्वीकार करना ) और प्ली ( जाना ), इन चौबीस धातुओं को ह्रस्व होता है, शित् प्रत्यय के परवर्ती रहते।"

**उदाहरण**—( १ ) √पू+लट् ( =तिप्=ति, श्ना='ना', 'ऊ'='उ' ह्रस्व—'प्वादीनां ह्रस्वः' )=पुनाति । आ० पद— पू ना त ( 'ऊ'='उ'—'प्वादीनां ह्रस्वः', आ='ई' ईत्व, 'टि' को एत्व )=पुनीते । ( २ ) लुट्—पविता ।

√लूञ् ( ञित् ) धातु का अर्थ—'काटना' है। ( १ ) लट् प० पद—लुनाति । आ० पद—लुनीते ( ह्रस्व )।

√स्तॄञ् ( ञित् ) धातु का अर्थ—'ढकना' है। ( १ ) √स्तॄ+लट् ( =तिप्=ति, श्ना=ना, ह्रस्व—'प्वादीनां ह्रस्वः', णत्व )=स्तृणाति । आ० पद—स्तृणीते । ( २ ) √स्तॄ+लिट् ( =तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, 'शर्पूर्वाः खयः' से अभ्यास में खर ( त ) शेष, उत्तर भाग ॠ='अ' गुण—'ॠच्छत्यॄताम्', रपर, वृद्धि—'अत उपधायाः' )=तस्तार । ( ३ ) लिट् प्र० पु० द्विव०—तस्तरतुः । आत्मनेपद—तस्तरे । ( ४ ) √स्तॄ+लुट् ( =तिप्=डा=आ, तास्, टिलोप, इट्='इ', गुण, रपर, दीर्घ विकल्प से 'वॄतो वा' )=स्तरीता । दीर्घ के अभावपक्ष में—स्तरिता । ( ५ ) विधिलिङ् प० पद—स्तृणीयात् ( ह्रस्व, ईत्व )। आ० पद—स्तृणीत । ( ६ ) √स्तॄ+आ० लिङ् ( =तिप्=ति, यासुट्=यास्, 'ॠ'='इर्'—'ॠत इद्धातोः', 'इ'='ई' दीर्घ—'हलि च', 'स्' का लोप, इकारलोप )=स्तीर्यात् । ( ७ ) √स्तॄ+आ० लिङ् ( =आ० पद—त, सीयुट्='सीय्', 'य्' का लोप—'लोपो व्योर्वलि', सुट्='स्'—'सुट् तिथोः' विकल्प से इट्='इ'—'लिङ्सिचोरात्मनेपदेषु' ॠ='अ' गुण, रपर, 'वॄतो वा'—से प्राप्त दीर्घ का 'न लिङि' से निषेध, दोनों 'स्'='ष्' षत्व, ष्टुत्व )=स्तरिषीष्ट । इट् के अभावपक्ष में—स्तॄ सी स् त ( इत्व-'ॠत इद्धातोः' रपर, इ='ई' दीर्घ-'हलि च', 'उश्च' से कित् होने से गुण का निषेध, षत्व, ष्टुत्व ) =स्तीर्षीष्ट । ( ८ ) √स्तॄ+लुङ् (=तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्', इट्, ईट्, 'स्' का लोप—'इट ईटि', 'वॄतो वा' से इट् को प्राप्त दीर्घ का 'सिचि च परस्मैपदेषु' से निषेध, इ+ई='ई' सवर्णदीर्घ, वृद्धि, रपर )=अस्तारीत् । ( ९ ) प्र० पु० द्विव०, बहुव०—अस्तारिष्टाम्,

कृणीते । चकार । चकरे । वृञ् वरणे । वृणाति । वृणीते । ववार । ववरे । वरिता-वरीता । 'उदोष्ठ्ये'त्युत्वम् । वूर्यात् । वरिषीष्ट-वूर्षीष्ट । अवारीत् । अवारिष्टाम् । अवरिष्ट-अवरीष्ट-अवूर्ष्ट । धूञ् कम्पने । धुनाति । धुनीते । दुधविथ-दुधोथ । दुधुविव । धोता-धविता । 'स्तुसुधूञ्भ्यः परस्मैपदेषु' । अधावीत् । अधविष्ट-अधोष्ट ।

---

व्योर्वलि' इति यकारलोपे 'लिङ्सिचोरात्मनेपदेषु' इति विकल्पेन इटि 'सार्वधातुकार्धधातुकयोः' इत्यनेन गुणे रपरे 'आदेशप्रत्यययोः' इत्युभयोः सकारयोः षत्वे 'ष्टुना ष्टुः' इति ष्टुत्वे 'स्तरिषीष्ट' इति । इडभावपक्षे 'उश्चे'त्यनेन कित्त्वाद् गुणाभावे 'ॠत इद्धातोः' इत्यनेन ॠकारस्य इकारे रपरे च 'हलि चे'त्यनेन इकारस्य दीर्घे 'स्तीर्षीष्ट' इति सिद्धम् ।

---

अस्तारिषुः । ( १० ) √स्तॄ+लुङ् ( =आ० पद प्र० पु० एकव०—त, अट्, च्लि, च्लि=सिच्=‘स्', विकल्प से इट्='इ'—'लिङ्सिचोरात्मनेपदेषु', ॠ='अ' गुण, रपर, 'इ'='ई' दीर्घ विकल्प से—'वृतो वा' षत्व, ष्टुत्व )=अस्तरीष्ट । दीर्घ के अभाव में—अस्तरिष्ट । इट् के अभावपक्ष में ( 'उश्च' से कित् होने से गुण का निषेध, ॠ='इ'—'ॠत इद्धातोः', रपर, दीर्घ—'हलि च', षत्व, ष्टुत्व )=अस्तीर्ष्ट ।

√कॄञ् धातु का अर्थ—'हिंसा करना' है । ( १ ) √कॄ+लट् ( =तिप्=ति, श्ना=ना, ह्रस्व—'प्वादीनां ह्रस्वः', णत्व )=कृणाति । आ० पद—कृणीते । ( २ ) लिट् प० पद—चकार । आ० पद—चकरे ।

√वृञ् ( ञित् ) धातु का अर्थ—'वरण करना' है । इसके रूप भी स्तॄञ् के समान बनते हैं । ( १ ) लट् प० पद—वृणाति । आ० पद—वृणीते । ( २ ) लिट् प० प०—ववार । आ० पद—ववरे । ( ३ ) √वॄ+लुट् ( =तिप्=डा=आ, तास्, डित्त्वात् टि का लोप, इट्='इ', 'ॠ'='अ' गुण—'सार्वधातु०', रपर, दीर्घ विकल्प से—'वृतो वा' )=वरीता । दीर्घ के अभावपक्ष में—वरिता । ( ४ ) √वॄ+आशीर्लिङ् ( =तिप्=ति, यासुट्=यास्, इकारलोप, 'स्' का लोप—'स्कोः०', यासुट् के कित् होने से गुण का अभाव, 'ॠ'='उ'—'उदोष्ठ्यपूर्वस्य', दीर्घ—'हलि च' )=वूर्यात् । ( ५ ) आशीर्लिङ् आ० पद—वरिषीष्ट ( विकल्प से इट्—'लिङ्सिचोरात्मनेपदेषु' ) । इट् के अभाव पक्ष में—वॄ सी स् त ( ॠ='उ'—'उदोष्ठ्यपूर्वस्य' रपर, दीर्घ—'हलि च' षत्व, ष्टुत्व )=वूर्षीष्ट । ( ६ ) लुङ् परस्मैपद—अवारीत्, अवारिष्टाम् इत्यादि । आत्मनेपद में—( स्तॄञ् के समान ) अवरीष्ट, अवरिष्ट, अवूर्ष्ट ।

√धूञ् ( ञित् ) धातु का अर्थ—'कँपाना' है । ( १ ) लट् प० पद—धुनाति । आ० पद—धुनीते । ( २ ) लिट् म० पु० एकव०—दुधविथ, दुधोथ ( विकल्प से इट्—'स्वरतिसूति०' ) । ( ३ ) लुट्—धविता, धोता । ( ४ ) √धू+लुङ् ( =प० पद प्र० पु० एकव०—तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्', नित्य इट्='इ'—'स्तुसुधूञ्भ्यः परस्मैपदेषु', ईट्='ई', 'स्' का लोप—'इट ईटि' सवर्णदीर्घ, वृद्धि, 'औ'='आव्' आदेश )=अधावीत् । आत्मनेपद में विकल्प से इट्—अधविष्ट । अधोष्ट । √ग्रह् धातु का अर्थ—'ग्रहण करना' है ।

( १ ) √ग्रह्+लट् ( =तिप्=ति, श्ना=ना, शित्त्वात् सार्वधातुक संज्ञा, 'सार्वधातुकमपित्' से ङिद्वद्भाव—'र्' = 'ऋ'—सम्प्रसारण—'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' पूर्वरूप—'सम्प्रसारणाच्च' णत्व )—गृह्णाति । आ० पद—गृह्णीते ।

ग्रह उपादाने । गृह्णाति । गृह्णीते । जग्राह । जगृहे । ( ८०० ) ग्रहोऽलिटि दीर्घः ७।२।३७ । एकाचो ग्रहो विहितस्येटो दीर्घो, न तु लिटि । ग्रहीता । गृह्णातु । गृहाण । गृह्यात् । ग्रहिषीष्ट । 'ह्म्यन्ते'ति न वृद्धिः । अग्रहीत् । अग्रहीष्टाम् । अग्रहीष्ट । अग्रहीषाताम् । इत्युभयपदिनः ।

---

( ८०० ) ग्रहोऽलिटि दीर्घ इति । 'आर्धधातुकस्येड् वलादेः' इत्यतः इडित्यनुवर्तते, तच्च षष्ठ्यन्ततया विपरिणम्यते । 'एकाच उपदेशे' इत्यस्मात् एकाच इति चानुवर्तते । अत आह—एकाच इत्यादिना । ग्रहीता । ग्रहधातोर्लुटि, लः स्थाने तिपि, तिपो डादेशेऽनुबन्धलोपे, डित्वाट्टिलोपे 'आर्धधातुकस्येड् वलादेः' इतीडागमे 'ग्रहोऽलिटि दीर्घः' इति इटो दीर्घे 'ग्रहीता' इति ।

---

√ग्रह धातु लट् लकार के रूप ( परस्मैपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | गृह्णाति | गृह्णीतः | गृह्णन्ति |
| म० पु० | गृह्णासि | गृह्णीथः | गृह्णीथ |
| उ० पु० | गृह्णामि | गृह्णीवः | गृह्णीमः |

( आत्मनेपद )

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु० | गृह्णीते | गृह्णाते | गृह्णते |
| म० पु० | गृह्णीषे | गृह्णाथे | गृह्णीध्वे |
| उ० पु० | गृह्णे | गृह्णीवहे | गृह्णीमहे |

( २ ) लिट्—जग्राह । आ० पद—जगृहे ।

**( ८०० ) पद**—ग्रहः, अलिटि, दीर्घः । **अनुवृत्ति**—इट्, एकाचः । **विधिसूत्र** ।

**मूलार्थ**—लिट् को छोड़कर एकाच् ग्रह धातु से विहित 'इट्' को दीर्घ होता है । ग्रहीता इत्यादि ।

**विमर्श**—'आर्धधातुकस्येड् वलादेः' ( ७।२।३५ ) से 'इट्' की अनुवृत्ति आती है, जो षष्ठ्यन्त में परिवर्तित हो जाता है । 'एकाच उपदेशे०' ( ७।२।१० ) से 'एकाचः' की अनुवृत्ति आती है । तदनुसार—"एकाच् ग्रह धातु से विहित इट्=( इ ) को दीर्घ होता है, परन्तु लिट् परे रहते दीर्घ नहीं होता ।"

**उदाहरण**—( १ ) √ग्रह्+लुट् ( =तिप्=डा=आ, तास्, टिलोप, इट्='इ'—'आर्धधातुकस्येड् वलादेः', इ='ई' दीर्घ—'ग्रहोऽलिटि दीर्घः' )=ग्रहीता । ( २ ) लृट्—ग्रहीष्यति । आ० पद—ग्रहीष्यते । ( ३ ) लोट् प० पद—गृह्णातु, गृह्णीताम्, गृह्णन्तु इत्यादि । लोट् आ० पद—गृह्णीताम्, गृह्णाताम्, गृह्णताम् इत्यादि । ( ४ ) √ग्रह्+लोट् ( =प० पद म० पु० एकव०—सिप्=सि='हि'—'सेर्ह्यपिच्च', श्ना=ना, 'र्'='ऋ'—सम्प्रसारण, पूर्वरूप, श्ना=शानच्='आन', णत्व, 'हि' का लुक्—'अतो हेः' )=गृहाण । ( ५ ) √ग्रह+लुङ् (=तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्='स्', इट्, ईट्, स् का लोप, सवर्णदीर्घ, 'अतो हलादेर्लघोः' से प्राप्त वृद्धि का 'ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्' से निषेध )=अग्रहीत् । ( ६ )

**अथ परस्मैपदिनः । कुष निष्कर्षे । कुष्णाति । कोषिता । ( ८०१ ) निरः कुषः ७।२।४६ । निरुपपदात् कुषो वलादेरार्द्धधातुकस्येड् वा स्यात् । निष्कोषिता–निष्कोष्टा । निरकोषीत् । 'शल इगुपधादि'ति क्सः । निरकुक्षत् । अश भोजने । अश्नाति । आश । अशिता । अशिष्यति । अश्नातु । अशान । ज्ञा अवबोधने । 'ज्ञाजनोरि'ति जादेशः । जानाति । जज्ञौ । 'वाऽन्यस्ये'त्येत्वम् । ज्ञेयात् । ज्ञायात् । पॄ पालनपूरणयोः । पृणाति ।**

---

( ८०१ ) **निरः कुष इति ।** 'स्वरतिसूती'त्यतः वेति, 'आर्धधातुकस्येड् वलादेरि'ति चानुवर्तते । तदाह—**निरुपपदादित्यादिना । निष्कोषिता ।** निरुपपदात्कुषधातोर्लुटि, तिपि, तसि, तिपः स्थाने डादेशेऽनुबन्धलोपे डित्त्वाट्टिलोपे 'निरः कुषः' इति विभाषया इटि अनुबन्धलोपे 'पुगन्त०' इति लघूपधगुणे, रस्य विसर्गे 'इदुपधस्ये'ति षत्वे 'निष्कोषिता' इति । इडभावपक्षे षत्वे ष्टुत्वे च कृते 'निष्कोष्टा' इति ।

---

लुङ् प्र० पु० द्विव०—अग्रहीष्टाम् । ( ७ ) लुङ् आ० पद—अग्रहीष्ट, अग्रहीषाताम्, अग्रहीषत इत्यादि । उभयपदी धातुओं की रूपसिद्धि समाप्त हुई ।

**√कुष** धातु का अर्थ—'निष्कर्ष निकालना' है । ( १ ) लट्—कुष्णाति । ( २ ) लुट्—कोषिता ।

**( ८०१ ) पद**—निरः, कुषः । **अनुवृत्ति**—वा, आर्धधातुकस्येड् वलादेः । **विधिसूत्र ।**

**मूलार्थ**—निर् उपसर्गपूर्वक 'कुष्' धातु से परवर्ती वलादि आर्धधातुक को विकल्प से इट् का आगम होता है । निष्कोषिता । निष्कोष्टा इत्यादि ।

**विमर्श**—प्रकृत सूत्र में—'स्वरतिसूतिसूयतिधूञूदितो वा' ( ७।२।४४ ) से 'वा' पद तथा 'आर्धधातुकस्येड् वलादेः' ( ७।२।३५ ) सूत्र की अनुवृत्ति आने से—"निर् पूर्वक √कुष् से उत्तरवर्ती वलादि आर्धधातुक को विकल्प से इट् ( =इ ) का आगम होता है ।"

**उदाहरण**—( १ ) निर्+√कुष्+लुट् ( =तिप्=डा=आ, तास्, टिलोप, विकल्प से इट् ='इ'—'निरः कुषः', 'उ'='ओ'—गुण—'पुगन्त०', र्=ः=ष्—'इदुपधस्य चाप्रत्ययस्य' )= निष्कोषिता । इट् के अभावपक्ष में—निर् कुष् ता ( गुण, र्=ः=ष्, 'त्'='ट्'—ष्टुत्व )= निष्कोष्टा । ( २ ) निर्+कुष्+लुङ् ( =तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्=स, विकल्प से इट्—'निरः कुषः', ईट्='ई', 'स्' का लोप—'इट ईटि' )—निर् कुष् इ ई त ( इ+ ई='ई'—सवर्णदीर्घ, 'उ'='ओ'—गुण—'पुगन्त०' )=निरकोषीत् । इट् के अभावपक्ष में च्लि =क्स='स'—'शल इगुपधात्०' 'ष्'='क्'—'षढोः कः सि' )—निर कुक् स त ( 'स्'='ष्'-षत्व, क्+ष्='क्ष्' )=निरकुक्षत् ।

**√अश** धातु का अर्थ—'भोजन करना' है । ( १ ) लट्—अश्नाति । ( २ ) लिट्—आश । ( ३ ) लुट्—अशिता । ( ४ ) लृट्—अशिष्यति । ( ५ ) लोट्—अश्नातु । ( ६ ) √अश्+ लोट् ( =म० पु० एकव०—सिप्=सि, सि=हि—'सेर्ह्यपिच्च', श्ना, श्ना=शानच्=आन— 'हलः श्नः शानज्झौ', 'हि' का लुक्—'अतो हेः' )=अशान ।

**√ज्ञा** धातु का अर्थ 'जानना' है । ( १ ) √ज्ञा+लट् ( =तिप्=ति, श्ना='ना', 'ज्ञा' ='जा'—'ज्ञाजनोर्जा' )=जानाति । ( २ ) लिट्—जज्ञौ । ( ३ ) √ज्ञा+आशीर्लिङ् ( =तिप् =ति, यासुट्=यास्, इकारलोप )—ज्ञा यास् त ( 'आ'='ए' एत्व विकल्प से—'वाऽन्यस्य संयोगादेः' 'स्' का लोप—स्कोः०' )=ज्ञेयात् । एत्व के अभावपक्ष में—ज्ञायात् ।

शॄ हिंसायाम् । शृणाति । 'शॄदॄप्रां ह्रस्वो वे'ति ह्रस्वपक्षे यण् । शश्रतुः । शशरतुः । दॄ विदारणे । दृणाति । दद्रतुः । ददरतुः । जॄ वयोहानौ । जृणाति । मुष स्तेये । मुष्णाति । मोषिता । पुष पुष्टौ । पुष्णाति । पोषिता । बन्ध बन्धने । बध्नाति । बबन्ध । बबन्धिथ–बबन्द्ध । बन्द्धा । भन्त्स्यति । अभान्त्सीत् । अबान्धाम् । अभान्त्सुः । क्लिशू विबाधने । क्लिश्नाति । क्लेशिता–क्लेष्टा । अक्लेशीत्–अक्लिक्षत् । इति परस्मैपदिनः ।

अथात्मनेपदिनः । वृङ् सम्भक्तौ । वृणीते । वव्रे । ववृषे । ववृढ्वे । वरिता–वरीता । अवरिष्ट–अवरीष्ट । अवृत ।

इति क्र्यादिप्रकरणम् ।

---

अक्लेशीत् । क्लिश्धातोर्लुङि तिपि, अटि, च्लौ, च्लेः स्थाने सिच्यनुबन्धलोपे 'इतश्चे'तीकारलोपे, 'स्वरतिसूतिसूयतिधूञूदितो वे'ति विकल्पेन इटि, 'अस्तिसिचोऽपृक्ते' इति ईटि 'इट ईटि' इति सलोपे सवर्णदीर्घे 'पुगन्त०' इति गुणे 'अक्लेशीत्' इति । इडभावपक्षे 'शल इगुपधादनिटः क्सः' इति च्लेः स्थाने क्सादेशेऽनुबन्धलोपे 'व्रश्चे'त्यादिना शकारस्य षत्वे 'षढोः कः सि' इत्यनेन षकारस्य ककारे 'आदेशप्रत्यययोः' इति सस्य मूर्धन्यादेशे 'अक्लिक् षत्' इति जाते, संयोगे कृते 'अक्लिक्षत्' इति ।

इति क्र्यादिप्रकरणम् ।

---

√पॄ धातु का अर्थ—'पालन करना' है। (१) √पॄ+लट् ( =तिप्=ति, श्ना='ना' ॠ=ऋ—ह्रस्व—'प्वादीनां ह्रस्वः', णत्व )=पृणाति ।

√शॄ धातु का अर्थ—'हिंसा करना' है। (१) लट्—शृणाति । (२) लिट् प्र० पु० द्विव०—शश्रतुः, शशरतुः ( 'शॄदॄप्रां ह्रस्वो वा' से विकल्प से ह्रस्व, ह्रस्व पक्ष में यण् ) ।

√दॄ धातु का अर्थ—'विदीर्ण करना' है। (१) लट्—दृणाति । (२) लिट्—प्र० पु० द्विव०—दद्रतुः, ददरतुः ( वि० से ह्रस्व, यण् ) ।

√जॄ धातु का अर्थ—'जीर्ण होना' है । (१) लट्—जृणाति ।

√मुष धातु का अर्थ—'चुराना' है । (१) लट्—मुष्णाति । (२) लुट्—मोषिता ।

√पुष धातु का अर्थ—'पुष्ट करना' है । (१) लट्—पुष्णाति । (२) लुट्—पोषिता ।

√बन्ध् धातु का अर्थ—'बाँधना' है । (१) लट्—बध्नाति । (२) लिट् प्र० पु० एकव०—बबन्ध । (३) लिट् म० पु० एकव०—बबन्धिथ ( भारद्वाज-नियम से विकल्प से इट् ) । इट् के अभावपक्ष में—बबन्ध् थ ( 'थ्'='ध्'—'झषस्तथो०' 'ध्'='द्' जश्त्व )=बबन्द्ध । (४) लुट्—बन्द्धा । (५) लृट्—भन्त्स्यति । (६) √बन्ध्+लुङ् ( =तिप्=ति, अट्, इकारलोप, च्लि, च्लि=सिच्=स्, ईट='ई' )—अ बन्ध् स् त ( 'भ्'='ब्'—'एकाचो बशो भष्०', उपधावृद्धि—'वदव्रज०', 'ध्'='त्'—'खरि च' ) =अभान्त्सीत् । (७) लुङ् प्र० पु० द्विव०—अबान्धाम् । (८) लुङ् प्र० पु० बहुव०—अभान्त्सुः ।

# अथ चुरादिप्रकरणम्

**चुर स्तेये। (८०२) सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ३।१।२५। एभ्यो णिच् स्यात्स्वार्थे। 'पुगन्ते'ति गुणः। 'सनाद्यन्ता'**

---

अथ स्वार्थिकणिजन्ताः चुरादिगणधातवो निरूप्यन्ते—

( ८०२ ) **सत्यापपाशेति**। सत्याप, पाश, रूप, वीणा, तूल, श्लोक, सेना, लोमन्, त्वच, वर्मन्, वर्ण, चूर्ण, चुरादि एषां द्वन्द्वात्पञ्चमी। तदाह—एभ्य इत्यादि। चोरयति। चुर्धातोः 'सत्यापपाशरूपवीणा०' इति चुरादित्वात् स्वार्थे णिच्यनुबन्धलोपे 'आर्धधातुकं शेषः' इत्यार्धधातुकसंज्ञायां 'पुगन्तलघूपधस्य चे'त्यनेन उपधागुणे 'चोरि' इति जाते, 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां, धातुत्वाल्लटि, तिपि, सार्वधातुकसंज्ञायां

---

**√क्लिश्** धातु का अर्थ—'क्लेश होना' है। (१) लट्—क्लिश्नाति। (२) लुट्—क्लेशिता। क्लेष्टा (विकल्प से इट्)। (३) √क्लिश्+लुङ् (=तिप्='ति', अट्, इकारलोप, च्लि, च्लि=सिच्='स्', ईट्='ई', विकल्प से इट्='इ'—'स्वरतिसूति०', 'स्' का लोप—'इट ईटि', उपधागुण—'पुगन्त०')=अक्लेशीत्। इट् के अभावपक्ष में—च्लि=क्स='स', 'श्'='ष्'—'व्रश्च०' 'ष्'='क्'—'षढोः कः सि' 'स्'='ष्' षत्व—'आदेशप्रत्यययोः', क्+ष्='क्ष्')=अक्लिक्षत्।

आत्मनेपदी धातुओं की रूपसिद्धि प्रदर्शित की जा रही है—

**√वृङ्** (=वृ) धातु का अर्थ—'सेवा करना' है। (१) √वृ+लट् (=त, श्ना='ना', 'आ'='ई' ईत्व, टि को एत्व, णत्व)=वृणीते। (२) लिट्—वव्रे। (३) √वृ+लिट् (=म० पु० एकव० थास्=से, द्वित्व, ऋ='अ'—'उरत्' रपर, हलादिशेष, षत्व)=ववृषे। (४) लिट् म० पु० बहुव०—ववृढ्वे। (प्राप्त इट् का 'कृसृभृवृ०' से निषेध)। (५) √वृ+लुङ् (=त, अट्, च्लि, च्लि=सिच्='स्')—अ वृ स् त (इट् विकल्प से—'लिङ्सिचावात्मनेपदेषु'। ऋ='अ' गुण, रपर, 'इ'='ई' दीर्घ विकल्प से—'वृतो वा', षत्व, ष्टुत्व)=अवरीष्ट। दीर्घ के अभावपक्ष में—अवरिष्ट। इट् के अभावपक्ष में—अ वृ स् त ('स्' का लोप—'ह्रस्वादङ्गात्')=अवृत। इस प्रकार तीन रूप बनते हैं।

**क्र्यादि-प्रकरण समाप्त।**

---

क्र्यादिगण में 'श्ना' विकरण वाली धातुओं की रूपसिद्धि प्रदर्शित करने के पश्चात् प्रस्तुत चुरादि-प्रकरण में स्वार्थिक णिजन्त धातुओं के रूपों की रचना-प्रक्रिया बतलाई जा रही है—

**√चुर** धातु का अर्थ 'चोरी करना' है।

**( ८०२ ) पद**—सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यः, णिच्। **विधिसूत्र।**

**मूलार्थ**—सत्याप आदि शब्दों से तथा चुरादिगण पठित धातुओं से णिच् प्रत्यय होता है। चोरयति इत्यादि।

णिच् में णकार और चकार इत्संज्ञक हैं। इकार शेष रहता है।

**उदाहरण**—(१) √चुर्+णिच् (='इ', उपधा उ='ओ' गुण—'पुगन्तलघूपधस्य च')

**इति धातुत्वम् । तिप्शबादि । गुणायादेशौ । चोरयति । ( ८०३ ) णिचश्च १।३।७४ । णिजन्तादात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले । चोरयते । चोरयामास । चोरयिता । चोर्यात् । चोरयिषीष्ट । 'णिश्रि'ति चङ् । 'णौ चङी'ति ह्रस्वः । 'चङी'ति द्वित्वम् । 'हलादिः शेषः' । 'दीर्घो लघोरि'त्यभ्यासस्य दीर्घः । अचूचुरत् । चिति स्मृत्याम् ।**

---

'कर्तरि शप्' इति शप्यनुबन्धलोपे 'सार्वधातुकार्धधातुकयोः' इति इकारस्य गुणे एकारे 'एचोऽयवायावः' इत्ययादेशे 'चोरयति' इति ।

( ८०३ ) **णिचश्चेति** । 'अनुदात्तङित०' इत्यस्मादात्मनेपदमिति, 'स्वरितञितः०' इत्यस्मात्कर्त्रभिप्राये क्रियाफले इति चानुवर्तते । प्रत्ययग्रहणपरिभाषयाऽत्र णिजन्तादिति लभ्यते । अत आह—**णिजन्तादित्यादिना** । **अचूचुरत्** । चुर्धातोः 'सत्यापपाशे'त्यादिना स्वार्थे णिच्यनुबन्धलोपे, उपधाया गुणे 'चोरि' इति जाते, धातुत्वाल्लुङि, लः स्थाने तिप्यनुबन्धलोपे, अटि, 'इतश्चे'ति तिप इकारलोपे, च्लौ;

---

=चोरि ( धातुसंज्ञा—'सनाद्यन्ता धातवः' )—चोरि+लट् ( =तिप्=ति, शप्='अ'—'कर्तरि शप्', 'इ'='ए'—गुण—'सार्वधातुकार्धधातुकयोः', 'ए'='अय्' आदेश—'एचोऽयवायावः' )= चोरयति ।

**( ८०३ ) पद**—णिचः, च । **अनुवृत्ति**—आत्मनेपदम्, कर्त्रभिप्राये क्रियाफले । **विधिसूत्र ।**

**मूलार्थ**—कर्तृगामी क्रियाफल के होने पर णिजन्त से आत्मनेपद होता है । चोरयते । चोरयामास इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'अनुदात्तङित आत्मनेपदम्' ( १।३।१२ ) से 'आत्मनेपदम्' तथा 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' ( १।३।७२ ) से 'कर्त्रभिप्राये, क्रियाफले' की अनुवृत्ति आती है । 'णिच्' से 'प्रत्ययग्रहणे तदन्तग्रहणम्' परिभाषा द्वारा तदन्त ( णिजन्त ) का ग्रहण होता है । तदनुसार—"जब क्रिया का फल कर्तृगामी हो, तब णिजन्त से आत्मनेपद होता है ।"

**उदाहरण**—( १ ) णिजन्त √'चोरि' से 'णिचश्च' से आत्मनेपद+त, शप्=अ, गुण, अय् आदेश, टि='अ'='ए'—एत्व=चोरयते ।

**√चुर धातु लट् लकार के रूप ( परस्मैपद )**

| | **एक०** | **द्वि०** | **बहु०** |
|---|---|---|---|
| प्र० पु० | चोरयति | चोरयतः | चोरयन्ति |
| म० पु० | चोरयसि | चोरयथः | चोरयथ |
| उ० पु० | चोरयामि | चोरयावः | चोरयामः |

**( आत्मनेपद )**

| | | | |
|---|---|---|---|
| प्र० पु० | चोरयते | चोरयेते | चोरयन्ते |
| म० पु० | चोरयसे | चोरयेथे | चोरयध्वे |
| उ० पु० | चोरये | चोरयावहे | चोरयामहे |

( २ ) √चुर्+णिच्='इ' ( स्वार्थ में—'सत्यापपाश०', गुण )—चोरि ( धातुसंज्ञा, लिट्, आम्—'कास्यनेकाच आम्वक्तव्यः' आर्धधातुक संज्ञा, 'इ'='ए'—गुण, 'अय्' आदेश, 'लिट्' का लुक्—'आमः' )—चोरयाम् ( लिट्-परक √अस् का अनुप्रयोग—'कृञ्चानुप्रयुज्यते लिटि' )—चोरयाम् अस् लिट् (=तिप्=णल्=अ, द्वित्व, अभ्यास संज्ञा, अ='आ' दीर्घ—'अत आदेः', आ

**चिन्तयति । अचिचिन्तत् । 'चिन्ते'ति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम् । तेन 'चिन्त्यादि'त्यादौ नलोपो न । चिन्तति । चिन्तेत्यादि । यत्रि सङ्कोचे । यन्त्रयति । 'यन्त्रे'ति पठितुं शक्यम् । यत्तु 'इदित्करणाद्यन्त्रती'ति माधवेनोक्तं, तच्चिन्त्यम् । एवं—कुद्रि अनृतभाषणे । तत्रि कुटुम्बधारणे । मत्रि गुप्तपरिभाषणे । तन्त्रयते । मन्त्रयते ।**

---

'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेः स्थाने चङि अनुबन्धलोपे, 'णेरनिटि' इति णिलोपे, स्थानिवद्भावेन 'णौ चङ्युपधाया ह्रस्वः' इत्यनेन उपधाया ह्रस्वे 'अ चुर् अ त्' इति जाते, 'चङि' इति 'चुर्' इत्यस्य द्वित्वेऽभ्याससंज्ञायां हलादिशेषे 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावे 'दीर्घो लघोः' इत्यभ्यासोकारस्य दीर्घे ऊकारे 'अचूचुरत्' इति ।

**चिन्तयति ।** इकारेत्संज्ञक-चितिधातोः इदित्वान्नुमि 'सत्यापपाश०' इति णिच्यनुबन्धलोपे 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां लटि तिपि, शपि अनुबन्धलोपे गुणेऽयादेशे 'चिन्तयति' इति । कर्तृगामिनि क्रियाफले तु आत्मनेपदम्—'चिन्तयते' इति ।

---

+अ='आ'-सवर्णदीर्घ)=चोरयामास। (३) लुट्—चोरयिता। (४) √चुर्+णिच् (='इ'-'सत्यापपाश०' गुण)—चोरि (धातुसंज्ञा, आशीर्लिङ्=तिप्='ति', यासुट्='यास्', इकारलोप, 'स्' का लोप, णिच्='इ' का लोप—'णेरनिटि')=चोर्यात्। आत्मनेपद में—√चोरि+आशीर्लिङ् (=त, सीयुट्='सीय्', सुट्='स्', 'य्' का लोप, इ='ए' गुण, अय् आदेश, षत्व, ष्टुत्व) =चोरयिषीष्ट। (५) √चुर्+णिच्=('इ' गुण)—चोरि (धातुसंज्ञा, लुङ्—तिप्='ति', अट्, इकारलोप—'इतश्च', च्लि, च्लि=चङ्='अ'—'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्', णि='इ' का लोप—'णेरनिटि', णिलोप के स्थानिवद्भाव से उपधा 'ओ'='उ' ह्रस्व—'णौ चङ्युपधाया ह्रस्वः')—अ चुर् अ त (धातु को द्वित्व—'चङि', अभ्यास संज्ञा, हलादिशेष, सन्वद्भाव—'सन्वल्लघुनि चङ्परेऽनग्लोपे', अभ्यास के 'उ'='ऊ'—दीर्घ—'दीर्घो लघोः')=अचूचुरत्। आत्मनेपद में—अचूचुरत।

### √चुर धातु लुङ् लकार के रूप (परस्मैपद)

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | अचूचुरत् | अचूचुरताम् | अचूचुरन् |
| म० पु०— | अचूचुरः | अचूचुरतम् | अचूचुरत |
| उ० पु०— | अचूचुरम् | अचूचुराव | अचूचुराम |

### (आत्मनेपद)

| | एक० | द्वि० | बहु० |
|---|---|---|---|
| प्र० पु०— | अचूचुरत | अचूचुरेताम् | अचूचुरन्त |
| म० पु०— | अचूचुरथाः | अचूचुरेथाम् | अचूचुरध्वम् |
| उ० पु०— | अचूचुरे | अचूचुरावहि | अचूचुरामहि |

√चिति धातु का अर्थ—'चिन्तन करना, सोचना' है।

(१) √चिति (इदित, नुम्='न्'—'इदितो नुम् धातोः')—चिन्त्+णिच् (='इ'—'सत्यापपाश०' धातुसंज्ञा, लट्=तिप्=ति, शप्='अ' गुण, 'ए'='अय्' आदेश)=चिन्तयति। कर्तृगामी क्रियाफल रहने पर 'णिचश्च' से आत्मनेपद—चिन्तयते। (२) √चिन्त्+णिच्='इ'

( एतौ आत्मनेपदिनौ ) । स्फुडि परिहासे । स्फुण्डयति । पीड अवगाहे । ( ८०४ ) भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ७।४।३ । एषामुपधाया ह्रस्वो वा, चङ्परे णौ । अपीपिडत्-अपिपीडत् । प्रथ प्रख्याने । प्रथयति ( ८०५ ) अत्स्मृदॄत्वर-

---

( ८०४ ) **भ्राज-भास इति ।** 'णौ चङ्युपधाया ह्रस्वः' इति सूत्रमनुवर्तते । नित्ये ह्रस्वे प्राप्तेऽनेन विकल्पो विधीयते । **अपिपीडत् ।** पीडधातोः 'सत्यापपाश०' इत्यादिना णिचि 'पीडि' इति जाते, धातुसंज्ञायां लुङि, लः स्थाने तिप्यनुबन्धलोपे, अटि, 'इतश्चे'ति इकारलोपे, च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि अनुबन्धलोपे 'अ पीड् इ इ अत्' इति जाते 'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्' इत्यनेन विकल्पेन ह्रस्वे 'णेरनिटि' इति इलोपे, प्रत्ययलक्षणमाश्रित्य 'चङि' इति द्वित्वे, पूर्वस्य अभ्याससंज्ञायां, हलादिशेषे 'सन्वल्लघुनि०' इति सन्वद्भावे 'दीर्घो लघोः' इति दीर्घे 'अपीपिडत्' इति । उपधाह्रस्वाभावपक्षे—'अपिपीडत्' इति ।

---

—चिन्ति+धातुसंज्ञा, लुङ् ( =तिप्=ति, अट् , च्लि, च्लि=चङ्='अ', द्वित्व, अभ्यास संज्ञा, हलादिशेष )—अ चि चिन्त् अ त्=अचिचिन्तत् ।

यहाँ यह शंका होती है कि धातुपाठ में 'चिन्त' ऐसा ही पाठ किया जाता, पुनः 'चिति' पाठ कर इदित्करण क्यों किया ? वह इदित्करण व्यर्थ होकर ज्ञापन करता है कि यहाँ णिच् विकल्प से होता है । अतः आशीर्लिङ् में 'चिन्त्यात्' यह णिच् रहित रूप बनता है । यहाँ 'अनिदिताम्' से नकार का लोप नहीं हुआ । णिच् के अभावपक्ष में—चिन्तति । वि० लि०—चिन्तेत् इत्यादि ।

**√यत्रि** ( इदित् ) धातु का अर्थ—'संकोच करना' है । ( १ ) लट्—यन्त्रयति । 'यन्त्र' ऐसा भी पाठ किया जा सकता था । माधव ने णिच् विकल्प करके 'यन्त्रति' प्रयोग सिद्ध किया है, वह चिन्त्य है । √कुद्रि ( इदित्, नुम् ) धातु का अर्थ—असत्य बोलना है ।

√तत्रि ( इदित् ) का अर्थ 'कुटुम्ब धारण' है । लट्—तन्त्रयते । √मत्रि ( इदित् ) का अर्थ—'गुप्त सम्भाषण करना' है । लट्—मन्त्रयते । उक्त दोनों धातुएँ आत्मनेपदी हैं ।

√स्फुडि ( इदित् ) धातु का अर्थ—'परिहास करना' है । लट्—स्फुण्डयति, स्फुण्डति ।

√पीड धातु का अर्थ—'अवगाहन ( स्नान ) करना' है ।

**( ८०४ ) पद**—भ्राज-भास-भाष-दीप-जीव-मील-पीडाम् , अन्यतरस्याम् । **अनुवृत्ति**—णौ, चङि, उपधायाः, ह्रस्वः । **विधिसूत्र ।**

**मूलार्थ**—चङ्परक णि के परवर्ती रहते भ्राज आदि धातुओं की उपधा को विकल्प से ह्रस्व होता है ।

**विमर्श**—प्रकृत सूत्र में 'णौ चङ्युपधाया ह्रस्वः' ( ७।४।१ ) सूत्र की अनुवृत्ति आती है । तदनुसार—"भ्राज, भास, भाष, दीप, जीव, मील और पीड धातुओं की उपधा को विकल्प से ह्रस्व होता है, चङ्परक णि के परे रहते ।"

**उदाहरण**—( १ ) √पीड+णिच् ( ='इ' धातुसंज्ञा )—पीडि+लुङ् (=तिप्=ति, अट् , इकारलोप, च्लि, च्लि=चङ्='अ'—'णिश्रिद्रुस्रुभ्यः', ई='इ' उपधा को विकल्प से ह्रस्व—'भ्राजभासभाष०', 'इ' का लोप—'णेरनिटि', प्रत्ययलक्षण का आश्रयण कर धातु को द्वित्व—'चङि', अभ्यास संज्ञा, हलादिशेष, सन्वद्भाव—'सन्वल्लघुनि०', 'इ'='ई'—दीर्घ—'दीर्घो लघोः' ) =अपीपिडत् । ह्रस्व के अभावपक्ष में—सन्वद्भाव की अप्राप्ति, दीर्घ का अभाव—अपिपीडत् ।

**√प्रथ** धातु का अर्थ—'प्रख्यान' है । ( १ ) लट्—प्रथयति ।

**प्रथम्रदस्तृस्पशाम् ७।४।९५।** एषामभ्यासस्याकारश्चङ्परे णौ। इत्वापवादः। अपप्रथत्। पृथ प्रक्षेपे। पर्थयति। ( ८०६ ) **उर्ऋत् ७।४।७।** उपधाया ऋवर्णस्य ऋद्वा, चङ्परे णौ। इररारामपवादः। अपीपृथत्–अपपर्थत्। लुण्ठ स्तेये। लुण्ठयति।

---

( ८०५ ) अत्स्मृदृत्वरेति। 'अत्र लोपोऽभ्यासस्ये'त्यतः अभ्यासस्येति, 'सन्वल्लघुनि चङ्परे' इत्यतः चङ्परे इति चानुवर्तते। **अपप्रथत्।** प्रथ्धातोः स्वार्थे णिच्यनुबन्धलोपे 'प्रथि' इत्यस्य धातुसंज्ञायां, लुङि तिपि अनुबन्धलोपे अटि, इकारलोपे, च्लौ, 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेः चङ्यनुबन्धलोपे 'णेरनिटि' इति णिलोपे तस्य स्थानिव-

---

**( ८०५ ) पद**—अत, स्मृ-दृ-त्वर-प्रथ-म्रद-स्तृ-स्पशाम्। **अनुवृत्ति**—'अभ्यासस्य', चङ्परे। **विधिसूत्र।**

**मूलार्थ**—चङ्परक णि के परवर्ती रहते स्मृ, दृ आदि धातुओं के अभ्यास को अकारान्त आदेश होता है। यह सूत्र इत्व का बाधक है। अपप्रथत् इत्यादि।

**विमर्श**—सूत्रार्थ की पूर्ति हेतु 'अत्र लोपोऽभ्यासस्य' ( ७।४।५८ ) से 'अभ्यासस्य' तथा 'सन्वल्लघुनि चङ्परे' ( ७।४।९३ ) से 'चङ्परे' की अनुवृत्ति आती है। इस प्रकार—"स्मृ, दृ, ञित्वरा, प्रथ, म्रद, स्तृञ्, स्पश धातुओं के अभ्यास को अकारादेश होता है, चङ्परक णि के परे रहते।"

**उदाहरण**—( १ ) √प्रथ+णिच्=इ=प्रथि ( धातुसंज्ञा, लुङ्=तिप्=ति, अट्, इकार-लोप, च्लि, च्लि=चङ्='अ'—'णिश्रिद्रुस्रुभ्यः', 'णि' का लोप—'णेरनिटि', स्थानिवद्भाव से धातु को द्वित्व, अभ्यास संज्ञा, हलादिशेष )—अ प प्रथ् अ त ( सन्वद्भाव, 'सन्यतः' से प्राप्त इत्व का बाधकर अभ्यास को अकारान्त आदेश—'अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्' )=अपप्रथत्।

√**पृथ** का अर्थ—'फेंकना' है। लट्—पर्थयति।

**( ८०६ ) पद**—उः, ऋत्। **अनुवृत्ति**—णौ, चङि, उपधायाः, वा। **विधिसूत्र।**

**मूलार्थ**—चङ्परक णि के परवर्ती रहते उपधा ऋ वर्ण को विकल्प से ऋत् ( ऋ ) आदेश होता है। यह सूत्र इर्, अर् और आर् का अपवाद है। अपीपृथत्।

**विमर्श**—यहाँ 'णौ चङ्युपधाया' ( ७।४।१ ) से 'णौ, चङि, उपधायाः' तथा 'जिघ्रतेर्वा' ( ७।४।६ ) से 'वा' की अनुवृत्ति आती है। तदनुसार—"चङ्परक णि के परे रहते उपधा ऋ वर्ण के स्थान में ऋत ( ऋकारादेश ) होता है।" ऋकार के स्थान में ऋकार विधान क्यों किया? इस शंका के निवारण के लिए ग्रन्थकार ने लिखा है कि यह सूत्र इर्, अर, आर् का अपवाद है। प्रकृत सूत्र में ऋकारोपध धातुओं के ऋकार को गुण होकर 'अर्' प्राप्त था, उसको बाधकर 'अत्' हुआ।

**उदाहरण**—( १ ) √पृथ्+णिच् (=इ+लुङ्=तिप्=ति, अट्, इकारलोप, च्लि, च्लि=चङ्='अ'—'णिश्रिद्रुस्रुभ्यः०', 'इ' का लोप—'णेरनिटि', णिच् का आश्रयण कर प्राप्त गुण का बाधकर विकल्प से 'ऋ'='ऋ'—'उर्ऋत्', द्वित्व—'चङि', पूर्व की अभ्यास संज्ञा, 'ऋ'='अ'—'उरत्' रपर, हलादिशेष, सन्वद्भाव, 'अ'='इ'—'सन्यतः' दीर्घ—'दीर्घो लघोः' )=अपीपृथत्। ऋत्व के अभावपक्ष में—गुण, रपर—अपपर्थत्।

√**लुण्ठ्** धातु का अर्थ—'लूटना' है। ( १ ) लट्—लुण्ठयति। ( २ ) लुङ्—अलुलुण्ठत्।

√**तड्** धातु का अर्थ—'पीटना' है। √तड्+णिच् ( ='इ', वृद्धि, 'अत उपधायाः' )—ताडि+लट्=( तिप्=ति, शप्='अ', गुण, अयादेश )=ताडयति। ( २ ) लुङ्—अतीतडत्।

अलुलुण्ठत् । तड आघाते । ताडयति । अतीतडत् । मडि भूषायां हर्षे च । मण्डयति अममण्डत् । भडि कल्याणे । भण्डयति । अबभण्डत् । छर्द वमने । छर्दयति । अचच्छर्दत् । चुद सञ्चोदने । चोदयति । अचूचुदत् । पाल रक्षणे । पालयति । अपीपलत् । पूज पूजायाम् । पूजयति । अपूपुजत् । कृत संशब्दने । ( ८०७ ) उपधायाश्च ७।१। १०१ । धातोरुपधाया ऋत इत् । रपरत्वम् । 'उपधायां चे'ति दीर्घः । कीर्त्तयति ।

---

त्वात् 'चङि' इति द्वित्वेऽभ्यासकार्ये, सन्वद्भावे 'सन्यतः' इत्यभ्यासस्य इत्वे प्राप्ते 'अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्' इत्यनेन अत्वे 'अपप्रथत्' इति ।

( ८०६ ) उर्ऋत् इति । उरिति षष्ठ्यन्तम् । 'णौ चङ्युपधाया ह्रस्वः' इत्यतः 'णौ चङ्युपधायाः' इत्यनुवर्तते । 'जिघ्रतेर्वा' इत्यतो वेति चानुवर्तते । तदाह— उपधाया इति ।

अपीपृथत् । पृथ्धातोः स्वार्थे णिचि धातुसंज्ञायां लुङि तिपि अडागमेऽनुबन्धलोपे, तिप इकारलोपे, च्लौ, च्लेश्चङि अनुबन्धलोपे, 'णेरनिटि' इति इकारलोपे 'उर्ऋत्' इति विकल्पेन ऋवर्णस्य ऋदादेशे 'चङि' इति द्वित्वेऽभ्यासत्वे 'उरत्' इत्यत्वे रपरे, हलादिशेषे सन्वद्भावे 'सन्यतः' इति इत्वे 'दीर्घो लघोः' इति दीर्घे 'अपीपृथत्' इति । ऋदादेशाभावे णिचमाश्रित्य लघूपधगुणे रपरे 'अपपर्थत्' इति ।

( ८०७ ) उपधायाश्चेति । 'ऋत इद्धातोः' इत्यनुवर्तते । तदाह—धातोरित्यादि ।

---

√मडि ( इदित ) धातु 'सजाना, प्रसन्न होना' है । ( १ ) √मडि ( इकार की इत्संज्ञा लोप, इदित्वात् नुम्=न्, अनुस्वार, परसवर्ण, णिच्=इ )—मण्डि+लट् ( =तिप्=ति, शप्='अ', गुण, अय् आदेश )=मण्डयति । ( २ ) लुङ्—अममण्डत् ।

√भडि ( इदित, नुम् ) धातु का अर्थ—'कल्याण करना' है । ( १ ) लट्—भण्डयति । ( २ ) लुङ्—अबभण्डत् ।

√छर्द धातु का अर्थ—'वमन करना' है । ( १ ) लट्—छर्दयति । ( २ ) लुङ्—अचच्छर्दत् ।

√चुद धातु का अर्थ—'प्रेरित करना' है । ( १ ) √चुद्+णिच् (='इ', 'उ'='ओ'—गुण—'पुगन्त०' )—चोदि+लट् ( =तिप्=ति, शप्='अ' गुण, अयादेश )=चोदयति । ( २ ) लुङ्—अचूचुदत् ।

√पाल धातु का अर्थ 'रक्षा करना' है । ( १ ) लट्—पालयति । ( २ ) लुङ्—अपीपलत् ।

√पूज धातु का अर्थ—'पूजा करना' है । ( १ ) लट्—पूजयति । ( २ ) लुङ्—अपूपुजत् ( 'भ्राजभास०' से ह्रस्व ) ।

√कृत धातु का अर्थ—'संशब्दन, कीर्तन करना' है ।

**( ८०७ ) पद**— उपधायाः, च । **अनुवृत्ति**—ऋतः, इद् धातोः । **विधिसूत्र** ।

**मूलार्थ**—धातु के उपधा में स्थित ऋकार के स्थान में इत् आदेश होता है । 'उपधायां च' से दीर्घ । कीर्तयति ।

**विमर्श**—सूत्रार्थ की स्पष्टता हेतु 'ऋत इद्धातोः' ( ७।१।१०० ) सूत्र की अनुवृत्ति आती है । तदनुसार—"धातु के उपधा ऋकार के स्थान में इकारादेश होता है ।"

**उदाहरण—( १ ) √कृत् + णिच्** ( ='इ', 'ऋ'='इ'—'उपधायाश्च' रपर, 'इ'='ई'—

अचीकृतत्–अचिकीर्त्तत् । म्लेच्छ अव्यक्तायां वाचि । म्लेच्छयति । अमिम्लेच्छत् । ईड स्तुतौ । ईडयति । ऐडिडत् । पिडि सङ्घाते । पिण्डयति । रुध रोषे । रोषयति । अरूरुषत् । तुल उन्माने । तोलयति । अतूतुलत् । शुल्ब माने । शुल्बयति । अशुशुल्बत् । घुषिर् विशब्दने । घोषयति । अजूघुषत् । पट पुट लुट तुजि मिजि पिजि लुजि भजि लघि त्रसि पिसि कुसि दसि कुशि घट घटि बृहि बर्ह बल्ह गुप धूप विच्छ चीव पुथ लोकृ लोचृ णद कुप तर्क वृतु वृधु भाषार्थाः । पाटयति । पोट-

---

कीर्त्तयति । कृतधातोर्णिचि धातुसंज्ञायां लटि, तिपि अनुबन्धलोपे 'उपधायाश्चे'त्यनेन इत्वे रपरत्वे 'उपधायां च' इति दीर्घे शपि गुणेऽयादेशे 'कीर्तयति' इति सिद्धम् ।

---

'दीर्घ—'उपधायां च' )=कीर्त्ति+लट् ( =तिप्=ति, शप्='अ', 'इ'='ए' गुण, ऐ='अय्' आदेश )=कीर्तयति । ( २ ) लुङ् में 'उर्ऋत्' से विकल्प से ऋकार आदेश—अचीकृतत् । ऋत्व के अभावपक्ष में 'उपधायाश्च' से इत्व—अचिकीर्तत् ।

√म्लेच्छ धातु का अर्थ—'अस्पष्ट बोलना' है । ( १ ) लट्—म्लेच्छयति । ( २ ) लुङ्—अमिम्लेच्छत् ।

√ईड धातु का अर्थ—'स्तुति करना' है । ( १ ) लट्—ईडयति । ( २ ) लुङ्—ऐडिडत् ।

√पिडि ( इदित, नुम् ) धातु का अर्थ 'संघात' है । ( १ ) लट्—पिण्डयति ।

√रुष धातु का अर्थ—'क्रोध करना' है । ( १ ) लट्—रोषयति । ( २ ) लुङ्—अरूरुषत् ।

√तुल धातु का अर्थ—'तौलना' है । ( १ ) लट्—तोलयति । ( २ ) लुङ्—अतूतुलत् ।

√शुल्ब धातु का अर्थ—'मान करना' है । ( १ ) लट्—शुल्बयति । ( २ ) लुङ्—अशुशुल्बत् ।

√घुषिर् ( इरित्संज्ञक ) धातु का अर्थ—'घोषणा करना' है । ( १ ) लट्—घोषयति । ( २ ) लुङ्—अजूघुषत् ।

√पट्, पुट्, लुट्, तुजि ( इदित ), मिजि, पुजि, लुजि, भजि, लघि, त्रसि, पिसि, कुसि, दसि, कुशि ( इदित ), घट्, घटि, बृहि ( इदित ), बर्ह, वल्ह्, गुप्, धूप्, विच्छ्, चीव्, पुथ्, लोकृ ( ऋदित ), लोचृ ( ऋदित ), णद्, कुप्, तर्क्, वृतु ( उदित ), वृधु ( उदित )—ये सभी धातुएँ भाषा अर्थ में हैं । ( १ ) √पट्+णिच्, वृद्धि=पाटि+लट् ( =तिप्=ति, शप्, गुण, अयादेश ) =पाटयति । ( २ ) √पुट्—पोटयति । ( ३ ) √लुट्—लोटयति । ( ४ ) √तुजि—तुञ्जयति, तुञ्जति । ( ५ ) √मिजि—मिञ्जयति, मिञ्जति । ( ६ ) √पिजि—पिञ्जयति, पिञ्जति । ( ७ ) √लुजि—लुञ्जयति, लुञ्जति । ( ८ ) √भजि—भञ्जयति, भञ्जति । ( ९ ) √लघि—लङ्घयति, लङ्घति । ( १० ) √त्रसि—त्रंसयति, त्रंसति । ( ११ ) √पिसि—पिंसयति, पिंसति । ( १२ ) √कुसि—कुंसयति, कुंसति । ( १३ ) √दसि—दंसयति, दंसति । ( १४ ) √कुशि—कुंशयति, कुंशति । ( १५ ) √घट्—घाटयति । ( १६ ) √घटि—'घण्टयति, घण्टति । ( १७ ) √बृहि—बृंहयति, बृंहति । ( १८ ) √बर्ह—बर्हयति । ( १९ ) √बल्ह्—बल्हयति । ( २० ) √गुप्—गोपयति । ( २१ ) √धूप—धूपयति । ( २२ ) √विच्छ्–विच्छयति । ( २३ ) √जीव—जीवयति । ( २४ ) √पुथ—पोथयति । ( २५ ) √लोकृ—लोकयति । ( २६ ) √लोचृ—लोचयति । ( २७ ) √णद्—नादयति । ( २८ ) √कुप्—कोपयति । ( २९ ) √तर्क—तर्कयति । ( ३० ) √वृतु—वर्तयति, वर्तति । ( ३१ ) √वृधु—वर्धयति, वर्धति । लिट् आदि अन्य लकारों में पूर्ववत् रूप बनते हैं ।

यति । लोटयति । तुञ्जयति । एवं परेषाम् । घाटयति । घण्टयति । ( ८०८ ) नाग्लोपिशास्वृदिताम् ७।४।२ । णिच्यग्लोपिनः शास्तेर्ऋदितां चोपधाया ह्रस्वो न, चङ्परे णौ । अलुलोकत् । अलुलोचत् । वर्तयति । वर्द्धयति । 'आ धृषाद्वा' ( ग० ) । इत ऊर्ध्वं विभाषितणिचो, धृषधातुमभिव्याप्य । युज पृच संयमने । योजयति–योजति । अयौक्षीत् । पर्चयति–पर्चति । पर्चिता । अपर्चीत् । अर्च पूजायाम् । अर्चयति । षह मर्षणे । साहयति । 'स एवायं नागः सहति कलभेभ्यः परिभवम्' । वृञ् आवरणे । वारयति ।

---

( ८०८ ) नाग्लोपीति । 'णौ चङ्युपधाया ह्रस्वः' इति सूत्रमनुवर्तते । णावित्यावर्तते । तच्चाग्लोपिन इत्यत्रान्वेति । तदाह—णिच्यग्लोपिन इत्यादि । अलुलोकत् । ऋकारेत्संज्ञक-लोकृधातोः स्वार्थे णिच्यनुबन्धलोपे, 'लोकि' इत्यस्य धातुसंज्ञायाम्, लुङि तिपि अटि अनुबन्धलोपे 'इतश्चे'ति इकारलोपे, च्लौ, सिचि प्राप्ते, तं प्रबाध्य 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इत्यनेन च्लेः चङादेशेऽनुबन्धलोपे 'चङि' इति धातोर्द्वित्वेऽभ्यासत्वे 'ह्रस्वः' इत्यभ्यासस्य ह्रस्वे 'णौ चङ्युपधाया ह्रस्वः' इत्युपधाह्रस्वे प्राप्ते

---

**( ८०८ ) पद**—न, अग्लोपिशास्वृदिताम् । **अनुवृत्ति**—णौ, चङ्युपधायाः, ह्रस्वः । **विधिसूत्र ।**

**मूलार्थ**—णिच्परक अग् लोप युक्त धातु, शास् धातु तथा ऋदित् धातु की उपधा को ह्रस्व नहीं होता, चङ्परक णि के परे रहते । अलुलोकत् । अलुलोचत् इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'णौ चङ्युपधाया ह्रस्वः' ( ७।४।१ ) की अनुवृत्ति आती है । अनुवृत्त 'णौ' पद की आवृत्ति की जाती है । प्रथम 'णौ' पद 'अग्लोपिनः' पद के साथ अन्वित होता है । द्वितीय निषेध में परनिमित्त होता है । तदनुसार—"णिच् परे रहते अक् लोप युक्त धातु, शास् धातु तथा ऋकारान्त धातु की उपधा को ह्रस्व नहीं होता, चङ्परक णि के परवर्ती रहते ।"

**उदाहरण**—( १ ) √लोकृ ( ऋदित् )+णिच् (=इ )—√लोकि, धातुसंज्ञा+लुङ् (=तिप्=ति, अट्, इकारलोप, च्लि, प्राप्त सिच् का बाधकर च्लि=चङ्='अ'—'णिश्रिद्रुस्रुभ्यः', धातु को द्वित्व—'चङि', अभ्यास संज्ञा, ह्रस्व, हलादिशेष, 'णौ चङ्युपधाया ह्रस्वः' से प्राप्त ह्रस्व का 'नाग्लोपिशास्वृदिताम्' से निषेध, 'णि' का लोप—'णेरनिटि' )=अलुलोकत् । ( २ ) √लोचृ लुङ् प्र० पु० एकव०—अलुलोचत् । ( ३ ) √वृतु ( उदित् )+णिच्='इ', गुण, रपर=वर्ति+धातुसंज्ञा, लट् ( =तिप्=ति, शप्='अ' गुण, अय् आदेश )=वर्तयति । ( ४ ) √वृधु+लट्=वर्धयति ।

**आधृषाद्वा**—'युज पृच संयमने' से लेकर 'धृष प्रहसने' तक सभी धातुओं से विकल्प से णिच् होता है ।

√युज्, √पृच् धातुओं का अर्थ 'संयमन करना, जोड़ना' है । ( १ ) लट्—योजयति, योजति । ( २ ) लुङ्—अयौक्षीत् । ( ३ ) √पृच्+लट्=पर्चयति, पर्चति ( विकल्प से णिच् ) । ( ४ ) पृच्+लुङ्—अपर्चीत् ।

√अर्च का अर्थ 'पूजा करना' है । ( १ ) लट्—अर्चयति, अर्चति ।

√षह् धातु का अर्थ—'सहन करना' है । ( १ ) षह् ( 'ष्'='स्'='धात्वादेः षः सः' )+णिच्=इ, वृद्धि—साहि+लट् ( =तिप्=ति, शप्, गुण, अयादेश )=साहयति, सहति ( विकल्प से णिच् ) ।

**वारयते । वरति । वरते । जॄ वयोहानौ । जारयति–जरति । शिष असर्वोपयोगे । शेषयति–शेषति । शेष्टा । अशिक्षत् । तप दाहे । तापयति–तपति । तप्ता । तृप तृप्तौ । तर्पयति–तर्पति । हिसि हिंसायाम् । हिंसयति–हिंसति । अर्ह पूजायाम् । आर्हयति । छद्र अपवारणे । छादयति–छदति । छदते । धूञ् कम्पने । * धूञ्-प्रीञो-र्नुक् * णौ । धूनयति–धवति । धवते । केचित्तु 'धूञ्प्रीणोरि'ति पठित्वा प्रीणाति-साहचर्याद् धूनातेरेव नुकमाहुः । धावयति । अयं स्वादौ, क्र्यादौ तुदादौ च । स्वादौ ह्रस्वश्च । तथा च कविरहस्ये—**

---

'नाग्लोपिशास्वृदिताम्' इत्यनेन निषेधे 'णेरनिटि' इति णेर्लोपे 'अलुलोकत्' इति । **षह मर्षणे ।** साहयति, सहति । धातोरस्य विभाषितणिच्त्वम् । यथोक्तं **'स एवायं नागः सहति' इत्यादिना ।**

**अर्ह पूजायाम् । आर्हयति ।** लुङि आर्हिहत्—अत्र णिचा सह द्वित्वात्सन्वद्भावो न भवति, तेन तद्विषये विहितो यो 'दीर्घो लघोरि'ति दीर्घः, स न प्रवर्तते ।

---

'यहाँ विकल्प से णिच् होता है ।' इसका समर्थन ग्रन्थकार उदाहरण द्वारा करते हैं—"स एवायं नागः सहति कलभेभ्यः परिभवम् ।" ( यह वह हाथी है, जो अपने बच्चों से अपना पराभव सहन करता है ! )

**√वृञ्** धातु का अर्थ 'आवरण, ढँकना' है । ( १ ) लट्—वारयति । आ० पद—वारयते ( विकल्प से णिच् ) । णिच् के अभावपक्ष में—वरति । वरते ।

जॄ धातु का अर्थ—'वय हानि, वृद्ध होना' है । ( १ ) √जॄ+णिच्=( इ, वृद्धि, रपर )= जारि+धातुसंज्ञा, लट् ( =तिप्=ति, शप् , गुण, अय् आदेश )=जारयति । णिच् के अभावपक्ष में—जरति ।

**√शिष्** धातु 'असर्व उपयोग' ( शेष रहना ) अर्थ में है । ( १ ) लट्—शेषयति । शेषति । ( २ ) लुट्—शेष्टा । ( ३ ) लुङ्—अशिक्षत् ।

**√तप्** धातु का अर्थ—'तपाना' है । ( १ ) लट्—तापयति, तपति ( विकल्प से णिच् ) । ( २ ) लुट्—तप्ता ।

**√तृप** धातु का अर्थ 'तृप्त होना' है । ( १ ) लट्—तर्पयति । तर्पति ।

**√हिसि** ( इदित्, नुम् ) धातु का अर्थ 'हिंसा करना' है । ( १ ) लट्—हिंसयति, हिंसति ( णिच् विकल्प ) ।

**√अर्ह्** धातु का अर्थ 'पूजा करना' है । ( १ ) लट्—अर्हयति, अर्हति ।

**√छद्** धातु का अर्थ 'ढँकना' है । ( १ ) लट्—छादयति, छदति ( णिच् विकल्प ) । आत्मनेपद—छदते ।

**√धूञ्** ( ञिदित् ) धातु का अर्थ—'कम्पित करना' ( कँपाना ) है ।

**वा०**—णिच् के परवर्ती रहते धूञ् और प्रीञ् धातु को नुक् का आगम होता है ।

( १ ) √धू+णिच् विकल्प से ( नुक्='न्'—'धूञ्प्रीञोर्नुक्' )=धूनि, धातुसंज्ञा+लट् ( =तिप्=ति, शप्='अ' गुण, 'अय्' आदेश )=धूनयति । णिच् के अभावपक्ष में—धवति । आ० पद—धवते ।

कोई आचार्य—"धूञ्प्रीणोः' ऐसा पाठ मानकर प्री धातु के साहचर्य से श्ना विकरण वाली

**द्वादश। अजूहवत्। अजुहावत्। पाययति। (८२५) लोपः पिबतेरीच्चाभ्यासस्य ७।४।४। पिबतेरुपधाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ। अपीप्यत्। * पातेर्णौ लुग्वक्तव्यः *। पुकोऽपवादः। पालयति। (८२६) वो विधूनने जुक्**

---

(८२५) **लोपः पिबतेरिति।** 'णौ चङ्युपधाया ह्रस्वः' इत्यतः णौ चङीति अनुषज्यते। तदाह– **पिबतेरुपधाया इत्यादि। अपीप्यदिति।** पाधातोर्णिचि अनुबन्धलोपे 'शाच्छासाह्वाव्यावेपां युक्' इति युगागमेऽनुबन्धलोपे 'पायि' इत्यस्य धातुसंज्ञायां लुङि तिपि अनुबन्धलोपे 'इतश्चे'ति इकारलोपे च्लौ, 'णिश्रिद्रुस्रुभ्यः०' इति च्लेश्चङि अनुबन्धलोपे अङ्गस्याडागमे 'अ पायि अ त्' इति जाते, 'णेरनिटि' इति णेर्लोपे 'चङि' इत्यनेन द्वित्वेऽभ्यासत्वे हलादिशेषे 'लोपः पिबतेरीच्चाभ्यासस्ये'त्यनेनाभ्यासस्य इदादेशे धातोश्चोपधालोपे 'अपीप्य् अ त्' इति जाते, संयोगे कृते अपीप्यदिति।

(८२६) **वो विधूनन इति।** 'अर्तिह्री०' इत्यतो णावित्यनुवर्तते। **वाजयति–** 'वा

---

ये छः धातुएँ भाष्य में पढ़ी गई हैं। उक्त छः के अतिरिक्त ह्वायि, वाणि, लोटि और लोपि (ण्यन्त) चार धातुओं का पाठ न्यास में मिलता है। चाणि और लोठि दो धातुएँ अन्यत्र पठित हैं। इस प्रकार काण्यादि १२ धातुएँ हैं।

**उदाहरण–** (१) ✓ ह्वे + णिच् (= इ, आत्व, युक् = 'य्'–'शाच्छासा०')–ह्वायि (धातुसंज्ञा, लुङ् = तिप् = ति, इकारलोप, अट्, च्लि, च्लि = चङ् = 'अ')–अ ह्वा इ अ त् ('व्' = 'उ' सम्प्रसारण–'ह्वः सम्प्रसारणम्', पूर्वरूप–'सम्प्रसारणाच्च', 'हु' का द्वित्व–'चङि', अभ्याससंज्ञा, हलादिशेष, 'उ' = 'औ'–वृद्धि, 'औ' = 'आव्' आदेश, उपधा को विकल्प से ह्रस्व–'काण्यादीनां वेति वक्तव्यम्' 'उ' = 'ऊ'–दीर्घ) = अजूहवत्। ह्रस्व के अभावपक्ष में–अजुहावत्। (२) ✓ पा + णिच् (= इ, युक् = 'य्'–'शाच्छासा०')–पायि (धातुसंज्ञा, लट् = तिप् = ति, शप् = अ, 'इ' = 'ए'–गुण 'ए' = 'अय्' आदेश) = पाययति।

(८२५) **पद–** लोपः, पिबतेः, ईत्, च, अभ्यासस्य। **अनुवृत्ति–**णौ चङि। **विधिसूत्र।**

**मूलार्थ–** चङ्परक णि के परवर्ती रहते पा धातु की उपधा का लोप होता है और अभ्यास को ईकारान्त आदेश होता है। अपीप्यत्।

**विमर्श–** यहाँ 'णौ चङ्युपधाया ह्रस्वः' (७।४।१) से 'णौ चङ्युपधायाः' की अनुवृत्ति आ रही है। तदनुसार– ''चङ्परक णि (इ) के परे रहते पा धातु की उपधा का लोप होता है और अभ्यास को 'ईत्' अन्तादेश होता है।''

**उदाहरण–** (१) ✓ पा + णिच् (= 'इ', युक् = 'य्'–'शाच्छासाह्वाव्यावेपां युक्')–पायि (धातुसंज्ञा, लुङ् = तिप् = ति, च्लि, च्लि = चङ् = 'अ'–'णिश्रिद्रु०', अट् = 'अ', णि = 'इ' का लोप–'णेरनिटि', धातु को द्वित्व–'चङि', अभ्याससंज्ञा, हलादिशेष)–अ पा पाय् अ ति (अभ्यास के आ = ईत् = 'ई', उपधा 'आ' का लोप–'लोपः पिबतेरीच्चाभ्यासस्य')–अ पी प् य् अ ति ('इ' का लोप–'इतश्च') = अपीप्यत्।

(वा०) 'पा धातु को लुक् का आगम होता है, णि के परे रहते'।

**उदाहरण–** (१) ✓ पा + णिच् (= 'इ', पुक् का बाध कर लुक् = 'ल्'–'पातेर्णौ लुग्वक्तव्यः')–पालि (धातुसंज्ञा, लट् = तिप् = ति, शप् = 'अ', 'इ' = 'ए'–गुण, अय् आदेश) = पालयति।

(८२६) **पद–** वः, विधूनने, जुक्। **अनुवृत्ति–** णौ। **विधिसूत्र।**

**७।३।३८ । वातेर्जुक् स्याण्णौ कम्पेऽर्थे। वाजयति। विधूनने किम्? केशान्वापयति। (८२७) सदेरगतौ तः ७।३।४२ । शदेर्णौ तोऽन्तादेशः स्यान्न तु गतौ। शातयति। गतौ तु– गाः शादयति गोविन्दः। गमयतीत्यर्थः। (८२८) रुहः पोऽन्यतरस्याम् ७।३।४३ । रुहः पकारोऽन्तादेशो वा स्याण्णौ। रोपयति। रोहयति। (८२९) दोषो णौ**

---

गतिगन्धनयोरि'त्यस्माद्धातोर्णौ 'वो विधूनने जुक्' इति जुगागमेऽनुबन्धलोपे 'वाजि' इत्यस्य धातुत्वे लटि तिपि शपि गुणेऽयादेशे 'वाजयति' इति रूपम्। केशान्वापयतीति। अत्र न जुक् विधूननाभावात्। यतो हि नात्र विधूननं = कम्पनम् अर्थः, किन्तु सुगन्धीकरणं छेदनं वार्थः।

(८२७) **सदेरगताविति**। अत्र णावित्यनुवर्तते। तदाह–**शदेर्णाविति**। **शातयति**– 'शद्लृ विशरणगत्यवसादनेषु' इत्यस्माद्धातोः णिचि 'शदेरगतौ तः' इत्यनेन दस्य स्थाने तकारादेशे उपधादीर्घे 'शाति' इत्यस्य धातुसंज्ञायां लटि, तिपि, शपि अनुबन्धलोपे गुणेऽयादेशे 'शातयति' इति रूपम्।

(८२८) **रुह इति**। णावित्यनुवर्तते। **रोपयति**– रुह्धातोर्णिचि अनुबन्धलोपे 'रुहः

---

**मूलार्थ**– णि के परवर्ती रहते 'वा' धातु को विधूनन (कम्पन) अर्थ में जुक् (ज्) का आगम होता है। वाजयति इत्यादि।

**विमर्श**– 'अर्तिह्रीव्लीरी०' (८२०) सूत्र से 'णौ' पद की अनुवृत्ति आती है। तदनुसार–"विधूनन (कम्पन) अर्थ में विद्यमान 'वा' धातु को णि के परे रहते जुक् (ज्) का आगम होता है।"

**उदाहरण**– ✓ वा + णिच् (= 'इ', जुक् = 'ज्'–'वो विधूनने जुक्')–वाजि (धातुसंज्ञा, लट् = तिप् = ति, शप् = 'अ' 'इ' = 'ए'–गुण, अय् आदेश) = वाजयति।

**प्रत्युदाहरण**– सूत्र में विधूनन (कम्पन) पद का ग्रहण क्यों किया गया? उक्त पद का ग्रहण होने से कम्पन के अतिरिक्त अन्य अर्थ में जुक् का आगम नहीं होता। 'केशान्वापयति' (केशों को कटवाता है या सुगन्धित कराता है।) यहाँ कम्पन अर्थ न होने से जुक् नहीं हुआ।

(८२७) **पद**– सदेः, अगतौ, तः। **अनुवृत्ति**– णौ। **विधिसूत्र**।

**मूलार्थ**– णि के परवर्ती रहते गति से भिन्न अर्थ में शद्लृ (शद्) धातु को तकार अन्तादेश होता है। शातयति। गति अर्थ में– 'गाः शादयति गोविन्दः'।

**विमर्श**– प्रकृत सूत्र में 'अर्तिह्रीव्लीरी०' (८२०) सूत्र से 'णौ' पद की अनुवृत्ति आती है। तदनुसार–'णि' के परवर्ती रहने पर अगति (गति अर्थ से भिन्न) अर्थ में वर्तमान शद् धातु को तकार अन्तादेश होता है।

**उदाहरण**– ✓ शद् + णिच् (= 'इ', 'द्' = 'त्'–'शदेरगतौ तः', 'अ' = 'आ'–उपधादीर्घ–'अत उपधायाः')–शाति, (धातुसंज्ञा, लट्, तिप् = ति, शप् = 'अ', 'इ' = 'ए'–गुण, 'ए' = 'अय्' आदेश) = शातयति। गति अर्थ में–शादयति।

(८२८) **पद**– रुहः, पः, अन्यतरस्याम्। **अनुवृत्ति**–णौ। **विधिसूत्र**।

**मूलार्थ**– 'णि' के परवर्ती रहने पर रुह् धातु को विकल्प से पकारान्त आदेश होता है। रोपयति, रोहयति।

**विमर्श**– पूर्ववत् 'णौ' पद की अनुवृत्ति आ रही है। अतः "णि के परे रहते रुह् धातु के हकार के स्थान में विकल्प से पकार आदेश होता है।"

**६।४।९०। दुष्यतेरुपधाया ऊत्स्याण्णौ। दूषयति। (८३०) वा चित्तविरागे ६।४।९१। दुष्यतेरुपधाया ऊत्स्याद्वा णौ चित्तविरागे। विरागोऽप्रीतता। दुष वैकृत्ये। चित्तं दूषयति, दोषयति वा कामः। (८३१) उभौ साभ्यासस्य ८।४।२१। साभ्यासस्यानितेरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति। प्राणिणत्। (८३२) णौ**

---

पोऽन्यतरस्याम्' इत्यनेन हस्य पत्वे गुणे 'रोपि' इत्यस्य धातुत्वे लटि तिपि शपि गुणेऽयादेशे 'रोपयति' इति।

(८२९) **दोषो णाविति।** दुष्धातोरुपधाया ऊदादेशः स्याण्णौ परत इति सूत्रार्थः।

(८३०) **वा चित्तविराग इति।** 'दोषो णावि'ति सूत्रमनुवर्तते। तदाह–**दुष्यतेरुपधाया इत्यादि।**

(८३१) **उभौ साभ्यासस्येति।** 'रषाभ्यां नो णः' इत्यधिकृतम्। अनितेरित्यनुवर्तते, 'उसर्गादसमासेऽपी'त्यतः उपसर्गादित्यनुवर्तते। तदाह–**साभ्यासस्येति।**

---

**उदाहरण–** ✓ रुह् + णिच् (= इ, 'ह्' = 'प्'–विकल्प से–'रुहः पोऽन्यतरस्याम्' 'उ' = 'ओ'–गुण–'पुगन्त०' + लट् = तिप् = 'ति', शप् = 'अ', 'इ' = 'ए'–गुण, 'ए' = 'अय्' आदेश) = रोपयति। पकारान्त आदेश के अभाव पक्ष में–रोहयति।

(८२९) **पद–** दोषः, णौ। **अनुवृत्ति–** ऊत्, उपधायाः। **विधिसूत्र।**

**मूलार्थ–** णि के परे रहते 'दुष्' धातु की उपधा को 'ऊत्' आदेश होता है। दूषयति।

**विमर्श–** यहाँ 'ऊदुपधाया गोहः' (६।४।८९) से 'ऊत्' और 'उपधायाः' पदों की अनुवृत्ति आती है। तदनुसार– ''णि के परवर्ती रहने पर दुष् धातु की उपधा को ऊत् (ऊ) आदेश होता है।''

**उदाहरण–** ✓ दुष् + णिच् = 'इ', 'उ' = 'ऊ'–'दोषो णौ' + लट् = तिप् = 'ति', शप् = 'अ', 'इ' = 'ए'–गुण, 'ए' = 'अय्'–आदेश) = दूषयति।

(८३०) **पद–** वा, चित्तविरागे। **अनुवृत्ति–** दोषो णौ, ऊत्, उपधायाः। **विधिसूत्र।**

**मूलार्थ–** णि के परे रहते चित्तविराग अर्थ में दुष् धातु की उपधा को विकल्प से ऊत्व होता है। विराग का अर्थ अप्रीति (विकार) है। 'चित्तं दूषयति दोषयति वा कामः' (काम चित्त को दूषित कराता है = विकार उत्पन्न कराता है)।

**विमर्श–** सूत्रार्थ की पूर्ति हेतु 'ऊदुपधाया गोहः' (६।४।८९) से 'ऊदुपधायाः' तथा 'दोषो णौ' (८२९) की अनुवृत्ति आती है। अतः ''चित्त के विराग (अप्रीति, विकार) अर्थ में दुष् की उपधा को णि के परे रहते विकल्प से ऊकार आदेश होता है।''

**उदाहरण–** ✓ दुष् + णिच् (= 'इ', 'उ' = 'ऊ' विकल्प से चित्तविराग अर्थ में–'वा चित्तविरागे' + लट् = तिप् = ति, शप् = 'अ', 'इ' = 'ए'–गुण, अय् आदेश) = दूषयति। 'ऊत्' के अभाव पक्ष में–दोषयति।

(८३१) **पद–** उभौ साभ्यासस्य। **अनुवृत्ति–** अनितेः, उपसर्गात् रषाभ्यां नो णः। **विधिसूत्र।**

**मूलार्थ–** उपसर्ग में स्थित निमित्त से परे अन् धातु के अभ्यास सहित दोनों नकारों को णत्व होता है। प्राणिणत्।

**विमर्श–** 'रषाभ्यां नो णः समानपदे' (८।४।१) से 'रषाभ्यां नो णः', 'उपसर्गादसमासेऽपि' (८।४।१४) से 'उपसर्गात्' तथा 'अनितेरन्तः' (८।४।१९) से 'अनितेः' की अनुवृत्ति आती है। तदनुसार–

**गमिरबोधने २।४।४६ ।** इणो गमिः स्याण्णावबोधने। गमयति। बोधने तु– प्रत्याययति। घट चेष्टायाम्। (ग०) घटादयो मितः जनीजृष्क्नसुरञ्जोऽमन्ताश्च। एते मितः। (ग०) ज्वलह्वलह्मलनमामनुपसर्गाद्वा। अनुपसर्गादेषां मित्वं वा। ग्लास्नावनुवमां च। अनुपसर्गादेषां मित्वं वा। न कम्यमिचमाम्। अमन्तत्वात्प्राप्तं मित्वमेषां न। यमोऽपरिवेषणे। यच्छतेर्भोजनतोऽन्यत्र मित्वं न। स्खदिखपरिभ्यां च। स्खदिखपरिभ्यां परीभूतो मित् न।

**(८३३) मितांह्रस्वः ६।४।९२ ।** घटादीनां ज्ञपादीनां च णावुपधाया ह्रस्वः। घटयति।

---

(८३२) **णौ गमिरिति।** अत्र 'इणो गा लुङि' इत्यतः इण इत्यनुवर्तते। अत आह–**इणो गमिरिति। गमयति–** इण् धातोर्णिचि अनुबन्धलोपे 'णौ गमिरबोधने' इति इणः गम्यादेशे, धातुसंज्ञायां लटि तिपि शप्यनुबन्धलोपे गुणेऽयादेशे संयोगे 'गमयति' इति।

**घटादय इति।** घटादिगणपठिता धातवो मित्संज्ञका भवन्ति। एतदाद्यानि सप्तगणसूत्राणि मूले पठितानि।

(८३३) **मितां ह्रस्व इति।** णावित्यनुवर्तते। तदाह–**ज्ञपादीनामिति। अजिज्ञपदिति।**

---

''उपसर्ग में स्थित निमित्त र् और ष् से परवर्ती अभ्यास सहित अन् धातु के दोनों नकारों को णकार आदेश होता है।''

**उदाहरण–** प्र + ✓ अन् + णिच् (= 'इ' + लुङ् = तिप् = ति, च्लि, च्लि = चङ् = 'अ')– प्र अन् इ अ ति ('नि' को द्वित्व, अभ्याससंज्ञा, 'णि' का लोप–'णेरनिटि', आट् = 'आ', आ + अ = 'आ'–वृद्धि, अ + आ = 'आ' दीर्घ, दोनों 'न्' = 'ण्'–'उभौ साभ्यासस्य', 'इ' का लोप– 'इतश्च') = प्राणिणत्।

(८३२) **पद–** णौ, गमिः, अबोधने। **अनुवृत्ति–** इणः। **विधिसूत्र।**

**मूलार्थ–** अवबोधन से भिन्न अर्थ में 'णि' के परवर्ती रहते 'इण्' धातु को 'गम्' आदेश होता है। गमयति। बोधन अर्थ में– प्रत्याययति। घट धातु चेष्टा अर्थ में है।

(ग०) **घटादय इति–** भ्वाद्यन्तर्गत घटादिगणपठित धातुएँ मित्संज्ञक हैं।

**जनीजृष्०–** जनी, जृष्, क्नसु, रञ्ज् धातुएँ और अमन्त धातुएँ मित्संज्ञक होती हैं।

(ग०) **ज्वलह्वल०–** उपसर्ग रहित ज्वल्, ह्वल्, ह्मल् धातुएँ विकल्प से मित्संज्ञक होती हैं।

**ग्लास्ना०–** अनुपसर्गक (उपसर्ग रहित) ग्ला, स्ना आदि धातुएँ विकल्प से मित हैं।

**न कम्य०–** अमन्त होने पर भी कम्, चम् धातुएँ मित् नहीं हैं।

**यमो०–** अपरिवेषण (परिवेषण से भिन्न) अर्थ में यम् धातु मित् नहीं है।

**स्खदि०–** अव और परि उपसर्ग से परे स्खद् धातु मित् नहीं है।

**विमर्श–** यहाँ 'इणो गा लुङि' (२।४।४५) से 'इणः' पद की अनुवृत्ति आती है। अतः ''णि के परवर्ती रहते इण् धातु को अवबोधन से भिन्न अर्थ में 'गम्' आदेश होता है।''

**उदाहरण–** ✓ इण् + णिच् (= 'इ' (प्रेरणा अर्थ में), 'इण्' = 'गम्'–'णौ गमिरबोधने', धातुसंज्ञा, लट् = तिप् = ति, शप् = 'अ', 'इ' = 'ए'–गुण, 'ए' = 'अय्' आदेश) = गमयति। (२) बोधन अर्थ में–प्रति ✓ इण् + णिच् (= इ, 'इणो यण्' से परत्वात् यण् का बाध कर 'इ' = 'ऐ'– वृद्धि, ऐ = आय्)–प्रति आय् इ + लट् (= तिप् = 'ति', शप् = 'अ' 'इ' = 'ए'–गुण, 'ए' = 'अय्'– आदेश, इ = य्–'यण्') = प्रत्याययति।

(८३३) **पद–**मिताम्, ह्रस्वः। **अनुवृत्ति–**णौ उपधायाः। विधिसूत्र।

**अजीघटत्। ज्ञप ज्ञाने ज्ञापने च। ज्ञपयति। अजिज्ञपत्। (८३४) रभेरशब्लिटोः ७।१।६३। रभेर्नुमचि, न तु शब्लिटोः। (८३५) लभेश्च ७।१।६४। लभेर्नुम् स्यादचि, न तु शब्लिटोः। अररम्भत्। अललम्भत्। ईर्ष्ययति। * ईर्ष्यतेस्तृतीयस्येति**

---

ज्ञप्धातोर्णिचि उपधावृद्धौ 'मितां ह्रस्वः' इति ह्रस्वे धातुसंज्ञायां लुङि तिपि, तिप इकारलोपेऽटि च्लौ, च्लेश्चङि 'णेरनिटि' इत्यनेन णिलोपे 'चङि' इति द्वित्वेऽभ्यासकार्ये, सन्वद्भावे 'सन्यतः' इत्यभ्यासाकारस्येत्वे लघुत्वाभावाद्दीर्घाभावे 'अजिज्ञपत्' इति।

(८३४) **रभेरशब्लिटोरिति।** 'इदितो नुम्धातोः' इत्यतो नुमित्यनुवर्तते, 'रधिजभोरची'त्यतः अचि इत्यनुवर्तते। अत आह– **रभेर्नुमचीति।**

(८३५) **लभेश्चेति।** नुम्, अचि चेत्यनुवर्तेते। पूर्वसूत्रादशब्लिटोरित्यनुवर्तते। तदाह–

---

**मूलार्थ–** णि के परवर्ती रहते ज्ञपादि और घटादि मित्संज्ञक धातुओं की उपधा को ह्रस्व होता है। घटयति। अजीघटत् इत्यादि।

**विमर्श–** प्रकृत सूत्र में 'ऊदुपधाया गोहः' (६।४।८९) से 'उपधायाः' तथा 'दोषो णौ' (८२९) से 'णौ' पद की अनुवृत्ति आती है। तदनुसार–''ज्ञपादि और घटादि मित्संज्ञक धातुओं की उपधा को ह्रस्व होता है, णि के परे रहते।''

**उदाहरण–** (१) ✓ घट् + णिच् (= 'इ', उपधावृद्धि, 'आ' = 'अ'–ह्रस्व–'मितां ह्रस्वः')–ज्ञपि (धातुसंज्ञा, लट् = तिप् = ति, शप् = 'अ', 'इ' = 'ए'–गुण, 'ए' = 'अय्') = घटयति। (२) ✓ घट् + णिच् (= 'इ', 'अ' = 'आ'–उपधावृद्धि–'अत उपधायाः', मित्व–'घटादयो मितः', 'आ' = 'अ'–ह्रस्व–'मितां ह्रस्वः')–घटि (धातुसंज्ञा, लुङ् = प्र० पु० ए० व०–तिप् = ति, अट् = 'अ' आगम, च्लि, च्लि = चङ् = 'अ')–अ घटि अ ति (णि = 'इ' का लोप–'णेरनिटि', द्वित्व–'चङि', अभ्याससंज्ञा, हलादिशेष, 'घ्' = 'झ्'–'कुहोश्चुः', 'झ्'–'ज्'–'अभ्यासे चर्च')–अ ज घट् अ ति (सन्वद्भाव, 'अ' = 'इ' इत्व–'सन्यतः', 'इ' = 'ई'–दीर्घ–'दीर्घो लघोः', इकारलोप–'इतश्च') = अजीघटत्। (३) ✓ ज्ञप् + णिच् (= 'इ', उपधावृद्धि, मित्व–'ज्ञप मिच्च', 'आ' = 'अ'–ह्रस्व–'मितां ह्रस्वः', धातुसंज्ञा, लट् = तिप् = ति, शप् = 'अ' 'इ' = 'ए'–गुण, 'ए' = 'अय्' आदेश) = ज्ञपयति। (४) ✓ ज्ञप् + णिच् (= इ, उपधावृद्धि, मित्वात् 'आ' = 'अ'–ह्रस्व–'मितां ह्रस्वः')–ज्ञपि (धातुसंज्ञा, + लुङ् = तिप् = ति, अट् = 'अ', च्लि, च्लि = चङ् = 'अ', णि = 'इ' का, लोप–'णेरनिटि' द्वित्व–'चङि', अभ्याससंज्ञा, हलादिशेष)–अ ज ज्ञप् अ ति (सन्वद्भाव, 'अ' = 'इ'–'सन्यतः', 'ति' की 'इ' का लोप–'इतश्च') = 'अजिज्ञपत्'।

(८३४) **पद**–रभेः, अशब्लिटोः। **अनुवृत्ति**–अचि, नुम्। **विधिसूत्र।**

**मूलार्थ–** शप् और लिट् सम्बन्धी से भिन्न अजादि प्रत्यय के परवर्ती रहते रभ् धातु को नुम् का आगम होता है।

**विमर्श–** सूत्रार्थ की स्पष्टता के लिए 'इदितो नुम् धातोः' (७/१/५८) से 'नुम्' तथा 'रधिजभोरचि' (७/१/६१) से 'अचि' पदों की अनुवृत्ति आती है। तदनुसार–''शप् और लिट् वर्जित अजादि प्रत्यय के परे रहते रभ् को नुम् (= न्) का आगम होता है।''

(८३५) **पद–** लभेः, च। **अनुवृत्ति–** अशब्लिटोः, अचि, नुम्। **विधिसूत्र।**

**मूलार्थ–** शप् और लिट् से भिन्न अजादि प्रत्यय के परे रहते लभ् धातु को भी नुम् का आगम होता है। अररम्भत्। अललम्भत्। ईर्ष्ययति इत्यादि।

**वक्तव्यम्*। तृतीयव्यञ्जनस्य तृतीयैकाच इति वार्थः। आद्ये षकारस्य द्वित्वं वारयितुमिदम्। द्वितीये त्वजादेर्द्वितीयस्येत्यस्याऽपवादतया सन्नन्ते प्रवर्तते। ऐर्ष्यियत्। द्वितीयव्याख्यायां णिजन्ताच्चङि षकार एवाभ्यासे श्रूयते, हलादिःशेषात्। द्वित्वं तु द्वितीयस्यैव तृतीयभावेन प्रकृतवार्तिकाऽप्रवृत्तेः। ऐर्षिष्यत्।**

**इति ण्यन्तप्रकरणम् ।**



---

**लभेर्नुमिति। ऐर्ष्यियदिति–** ईर्ष्यधातोर्णिचि अनुबन्धलोपे धातुत्वाल्लुङि तिपि 'इतश्चे'ति तिप इकारलोपे 'आडजादीनामि'त्यनेन आडागमेऽनुबन्धलोपे, च्लौ, च्लेश्चङि अनुबन्धलोपे 'आ ईर्ष्य् इ अ त' इति जाते षकारविशिष्टस्य द्वितीयस्यैकाचो द्वित्वे प्राप्ते 'ईर्ष्यतेस्तृतीयस्येति वाच्यम्' इति वार्तिकेन यकारविशिष्टेकारस्य द्वित्वे 'णेरनिटि' इति णेर्लोपे 'आ ईर्ष्यि य् अ त्' इति जाते 'आटश्चे'ति वृद्धौ संयोगे 'ऐर्ष्यियत्' इति। यदा षकारविशिष्टस्य द्वित्वमिति पक्षः स्वीक्रियते, तदा–'आ ईर्ष्यि ष्यि अ त्' इति जाते हलादिशेषे यकारलोपे णेर्लोपे 'आटश्चे'ति वृद्धौ 'ऐर्षिष्यत्' इति रूपम्।



---

**विमर्श–** पूर्वसूत्र (८३४) से 'अशब्लिटोः' तथा पूर्ववत् 'अचि' और 'नुम्' पदों की अनुवृत्ति आ रही है। अतः ''शप् तथा लिट् से भिन्न अजादि प्रत्ययों के परवर्ती रहते लभ् धातु को भी नुम् (='न्') का आगम होता है।''

**उदाहरण–** (१) ✓ रभ् + णिच् (='इ', नुम् = 'न्' आगम–'रभेरशब्लिटोः')–र न् भ् इ (न् = अनुस्वार–'नश्चापदान्तस्य झलि', = 'म्'– परसवर्ण–'अनुस्वारस्य ययि परसवर्णः')–रम्भि (धातुसंज्ञा, लुङ् = तिप् = ति, अट्, च्लि, च्लि = चङ् = 'अ', णि = 'इ' का लोप–'णेरनिटि', द्वित्व–'चङि', अभ्याससंज्ञा, हलादिशेष)– अ र रम्भ् अ ति ('इ' का लोप–'इतश्च') = अररम्भत्। (२) ✓ लभ् + णिच् (= 'इ', नुम् = 'न्'–'लभेश्च', अनुस्वार, परसवर्ण)–लम्भि (लुङ् = तिप् = ति, अट्, च्लि, च्लि = चङ् = 'अ', णि' = 'इ' का लोप, द्वित्व, अभ्याससंज्ञा, हलादिशेष, 'इ' का लोप–'इतश्च') = अललम्भत्। (३) ✓ ईर्ष्य + णिच् (= 'इ'–ईर्ष्यि (धातुसंज्ञा, लट् = तिप् = 'ति', शप् = 'अ', 'इ' = 'ए'–गुण, 'ए' = 'अय्') = ईर्ष्ययति।

**(वा०)** 'ईर्ष्ययति' के तृतीय व्यञ्जन या तृतीय एकाच् को द्वित्व होता है। षकारविशिष्ट के द्वित्व का निषेध करने के लिए यह वार्तिक है। द्वितीय अर्थ से इस वार्तिक की यहाँ प्रवृत्ति नहीं होती। क्योंकि यहाँ तृतीय एकाच् का अभाव है, किन्तु 'अजादेर्द्वितीयस्य' का अपवाद होने से यह वार्तिक सन्नन्त में प्रवृत्त होता है।

**उदाहरण–** (१) ✓ ईर्ष्य + णिच् (= 'इ')–ईर्ष्यि (धातुसंज्ञा + लुङ् = तिप् = ति, आट् = 'आ'–'आडजादीनाम्', च्लि, च्लि = चङ् = 'अ')–आ ईर्ष्य इ अ ति (षकारविशिष्ट द्वितीय एकाच् के द्वित्व की प्राप्ति होने पर–'यि' का द्वित्व–'ईर्ष्यतेस्तृतीयस्येति वाच्यम्', णि = 'इ' का लोप, आ + इ = ऐ–वृद्धि–'आटश्च' इकारलोप) = ऐर्ष्यियत्। जब तृतीय का अभाव होने से प्रकृत वार्तिक की प्रवृत्ति नहीं होती तो षकारविशिष्ट का ही द्वित्व होता है। इस पक्ष में–आ ईर्ष्यि ष्यि अ त् ('य्' का लोप–'हलादिः शेषः', णि = 'इ' का लोप, आ + ई = 'ऐ'–वृद्धि–'आटश्च') = 'ऐर्षिष्यत्'।

**ण्यन्त-प्रकरण समाप्त।**



## अथ सन्नन्तप्रकरणम्

**(८३६) धातोः कर्मणः समानकर्तृकादिच्छायां वा ३।१।७ ।** इषिकर्मणो धातोरिषिणैककर्तृकात्सन्वेच्छायाम्। धातोर्विधेरिह सन आर्द्धधातुकत्वम्। पठ व्यक्तायां वाचि। इट्। **(८३७) सन्यङोः ६।१।९ । सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य।** 'सन्यतः'। पठितुमिच्छति पिपठिषति। कर्मणः किम्? गमनेनेच्छति इति करणान्मा भूत्। समानकर्तृकात् किम्? 'शिष्याः पठन्त्वि'तीच्छति गुरुः। 'वा'ग्रहणात्पक्षे वाक्यमपि—

---

हेतुमण्णिचो निरूपणानन्तरं सन्प्रक्रिया निरूप्यन्ते—

(८३६) **धातोः कर्मण इति।** अत्र 'गुप्तिज्किद्भ्यः' इत्यतः सन्नित्यनुवर्तते। इच्छायाः श्रुतत्वात्तां प्रत्येव कर्मत्वं विवक्षितम्। समानकर्तृत्वमपि इच्छानिरूपितमेव विवक्षितम्। तथा च इषिणैककर्तृत्वादिषिकर्मीभूतव्यापारवाचकाद् धातोरिच्छायां सन् वा स्यादित्यर्थः। तदाह— **इषिकर्मण इति। पिपठिषति।** पठ्धातोः 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति विकल्पेन सनि अनुबन्धलोपे आर्धधातुकसंज्ञायाम्, 'आर्धधातुकस्येड् वलादेः' इतीडागमेऽनुबन्धलोपे 'सन्यङोरि'ति द्वित्वेऽभ्यासत्वे हलादिशेषे 'प पठ् इ स' इति जाते 'सन्यतः' इत्यभ्यासस्येत्वे 'आदेशप्रत्यययोः' इति सकारस्य षत्वे 'सनाद्यन्ता धातवः' इति धातुत्वाल्लटस्तिपि शपि अनुबन्धलोपे 'अतो गुणे' इति पररूपे '**पिपठिषति**' इति रूपम्।

(८३७) **सन्यङोरिति।** 'एकाचो द्वे प्रथमस्य' 'अजादेर्द्वितीयस्य' इत्यधिक्रियेते, अत आह— **सन्नन्तस्येति।**

**शैषिकादिति।** शेषाधिकारे विहितः शैषिकः। भवार्थे अध्यात्मादित्वात् ठञ्।

---

णिच्प्रत्ययान्त धातुओं की साधनिका निरूपित करने के बाद इच्छार्थक सन्प्रत्ययान्त धातुओं के रूपों की प्रक्रिया का निर्देश किया जा रहा है—

(८३६) **पद–** धातोः, कर्मणः, समानकर्तृकात्, इच्छायाम्, वा। **अनुवृत्ति–** सन्। **विधिसूत्र।**

**मूलार्थ–** इच्छा क्रिया के कर्मीभूत और इच्छा के साथ एक कर्ता वाले धातु से इच्छा अर्थ में विकल्प से सन् प्रत्यय होता है।

**विमर्श–** प्रकृत सूत्र में 'गुप्तिज्किद्भ्यः सन्' (३।१।५) से 'सन्' पद की अनुवृत्ति आती है। तदनुसार– ''इच्छा क्रिया के कर्म का अवयव जो धातु इच्छा क्रिया का समानकर्तृक (अर्थात् इच्छा का जो कर्ता हो वही उस धातुवाच्य क्रिया का हो) धातु से इच्छा अर्थ में विकल्प से सन् (= स) प्रत्यय होता है।''

✓ पठ् धातु का अर्थ– 'पढ़ना, स्पष्ट उच्चारण करना' है।

(८३७) **पद–** सन्यङोः। **अनुवृत्ति–** एकाचो द्वे प्रथमस्य, अजादेर्द्वितीयस्य। **विधिसूत्र।**

**मूलार्थ–** सन्नन्त और यङन्त धातुओं के प्रथम एकाच् अवयव को द्वित्व होता है तथा अजादि धातुओं के द्वितीय एकाच् अवयव को द्वित्व होता है। पठितुमिच्छति (पढ़ना चाहता है) पिपठिषति इत्यादि।

**शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ।**
**सरूपः प्रत्ययो नेष्टः, सन्नन्तान्न सनिष्यते ॥**

**तेन पिपठिषितुमिच्छतीति वाक्यमेव।'लुङ्सनोर्घस्लृ'।(८३८) सः स्यार्द्धधातुके**

---

शैषिकात् = शेषाधिकारभवप्रत्ययान्तात्, शैषिकः सरूपः = समानरूपः प्रत्ययो न भवति। यथा-शालायां भवः 'शालीयः' इत्यत्र 'वृद्धाच्छः' इति शैषिकश्छः। ततश्च शालीये भव इत्यर्थे शालीय-शब्दात्पुनः शैषिकश्छो न भवति, तेन शालीये भव इति वाक्यमेव। विरूपस्तु भवत्येव। अहिच्छत्रे भवः 'आहिच्छत्रः' इत्यत्र भवार्थेऽण्। तदन्तादाहिच्छत्रे भव इति वाक्यार्थे वृद्धाच्छो भवति, आहिच्छत्रीयः। एवम् मतुबर्थीयात् सरूपो मतुबर्थकः प्रत्ययो न भवति। यथा-धनमस्यास्तीति 'धनवान्' इत्यत्र मतुप्। ततश्च धनवानस्यास्तीति मतुबन्तात्सरूपो मतुब् न। विरूपस्तु स्यादेव। यथा— दण्डोऽस्यास्तीति 'दण्डी'त्यत्र इनिप्रत्ययः। ततश्च दण्डिनः सन्त्यस्यां शालायामित्यर्थे 'दण्डिमती' इत्यत्र इन्नन्तान्मतुब् भवत्येव। एवं सन्नन्तात्सरूपः सन्नेष्यते। अतः पिपठिषितुमिच्छतीति वाक्यमेव। स्वार्थसन्नन्तादिच्छासन् तु विरूपत्वात्स्यादेव। यथा— जुगुप्सिषते, मीमांसिषते इति।

---

**विमर्श**– 'एकाचो द्वे प्रथमस्य' (६।१।१) तथा 'अजादेर्द्वितीयस्य' (६।१।२) का अधिकार है। तदनुसार ''सन्नन्त और यङन्त धातु के प्रथम एकाच् को और अजादि धातु के द्वितीय एकाच् को द्वित्व होता है।''

**पठितुमिति**– 'पठितुमिच्छति' यह सन्नन्त प्रयोग का विग्रह = अर्थ है। जिस धातु से सन् प्रत्यय किया जाता है उसके तुमुन् प्रत्ययान्त रूप के साथ 'इच्छति' क्रिया जोड़ कर सन्प्रत्ययान्त रूप का अर्थ प्रकट किया जाता है।

**उदाहरण**– (१) ✓ पठ् + सन् (= स – 'धातोः कर्मणः ०') – पठ् स (आर्धधातुकसंज्ञा, इट् = 'इ' – 'आर्धधातुकस्येड्वलादेः', धातु को द्वित्व-'सन्यङोः')– पठ् पठ् इ स (अभ्याससंज्ञा, हलादिशेष-'ठ्' का लोप, 'अ' = 'इ'-'सन्यतः' 'स्'='ष्' षत्व-'आदेशप्रत्यययोः', धातुसंज्ञा-'सनाद्यन्ता धातवः', लट् = ल् = तिप् = ति, शप् = 'अ')-पिपठिष अ ति (अ + अ = 'अ'-पररूप-'अतो गुणे') = पिपठिषति। सन् प्रत्यय की आर्धधातुक संज्ञा होती है। सन्नन्त धातु के लिट् आदि लकारों में इस प्रकार के रूप बनते हैं— .

लिट्- पिपठिषाञ्चकार, पिपठिषाम्बभूव, पिपठिषामास। लुट्-पिपठिषिता। लृट्-पिपठिषिष्यति। लोट्-पिपठिषतु। लङ्-अपिपठिषत्। वि० लिङ्-पिपठिषेत्। आ० लिङ्-पिपठिष्यात्। लुङ्-अपिपठिषीत्। लृङ्-अपिपठिषिष्यत्।

**कर्मण इति**। सूत्र में ''इच्छा का कर्म जब धातु हो तब उससे सन् प्रत्यय होता है'' कहा गया है। अतः 'गमनेनेच्छति' (जाने के द्वारा चाहता है।) यहाँ गमन क्रिया का कर्म नहीं अपितु करण है। अतः सन् प्रत्यय नहीं होता।

**समानकर्तृकादिति**– सूत्र में 'समानकर्तृकात्' ग्रहण से इच्छा का कर्ता और सन्प्रत्यय के प्रकृतिभूत धातु का कर्ता समान (एक) होना चाहिए, अतः ''शिष्याः पठन्तु इतीच्छति गुरुः'' इस वाक्य में ✓ पठ् से सन् नहीं होगा। क्योंकि यहाँ पठ् क्रिया इच्छा का कर्म तो है, परन्तु इच्छा का कर्ता गुरु है और पठन का कर्ता-शिष्य। अतः समानकर्तृक (एक कर्ता) न होने से यहाँ 'सन्' नहीं होता।

**७।४।४९। सस्य तः स्यात्सादावार्द्धधातुके। अत्तुमिच्छति जिघत्सति। 'ईर्ष्यतेस्तृतीय-स्ये'ति यिसनोर्द्वित्वम्। ईर्ष्यियिषति। 'एकाच' इति नेट्। (८३९) अज्झनगमां सनि**

---

(८३८) **सः स्यार्धधातुक इति।** 'अच उपसर्गात्तः' इत्यस्मात्त इत्यनुवर्तते। तदाह- **'सस्ये'त्यादिना। जिघत्सति**- अत्तुमिच्छतीत्यर्थे अद्धातोः 'धातोः कर्मणः' इति सन्प्रत्यये 'लुङ्सनोर्घस्लृ' इत्यदो घस्लादेशेऽनुबन्धलोपे आर्धधातुकत्वे 'आर्धधातुकस्येड्वलादेः' इतीडागमे प्राप्ते 'एकाच उपदेशेऽनुदात्तात्' इति तन्निषेधे 'सन्यङोरि'ति द्वित्वेऽभ्यासत्वे, अभ्यासकार्ये 'जघस' इति जाते 'सः स्यार्द्धधातुके' इत्यनेन अभ्याससकारस्य तकारे 'सनाद्यन्ताः' इति धातुसंज्ञायां लटि तिपि शपि अनुबन्धलोपे 'अतो गुणे' इति पररूपे कृते 'जिघत्सति' इति रूपम्।

(८३९) **अज्झनगमामिति।** अच्, हन्, गम् इत्येषां द्वन्द्वः। 'अङ्गस्ये'त्यधिकृतम्

---

**वा ग्रहणादिति।** सूत्र में वा ग्रहण से सन् प्रत्यय विकल्प से होता है। अतः पक्ष में वाक्य का भी प्रयोग होगा-'पठितुमिच्छति'।

**शैषिकादिति-** ''शैषिक प्रत्ययान्त से पुनः समानरूप शैषिक प्रत्यय नहीं होता और मत्वर्थिक मतुप् आदि प्रत्ययान्त से भी सरूप मत्वर्थीय प्रत्यय नहीं होता तथा सन्नन्त से पुनः सरूप सन् प्रत्यय नहीं होता।''

सन्नन्त से पुनः समानरूप सन्प्रत्यय न होने से 'पिपठिषितुमिच्छति' वाक्य ही रहता है, सन् प्रत्यय नहीं होता।

(८३८) **पद-** सः, सि, आर्धधातुके। **अनुवृत्ति-** तः। **विधिसूत्र।**

**मूलार्थ-** सकारादि आर्धधातुके के परे रहते सकार के स्थान में तकार आदेश होता है। जिघत्सति इत्यादि।

**विमर्श-** प्रकृत सूत्र में 'अच उपसर्गात्तः' (७।४।४७) से आदेशवाचक पद 'तः' की अनुवृत्ति आ रही है। अतः ''सकारादि आर्धधातुक के परवर्ती रहते सकार को तकार आदेश होता है।''

**उदाहरण-** (१) अत्तुमिच्छति (खाना चाहता है) ✓ अद् + सन् (= 'स'—'धातोः कर्मणः०', अद् = घस्लृ = 'घस्'-'लुङ्सनोर्घस्लृ', आर्धधातुक संज्ञा, 'आर्धधातुकस्येड्०' से प्राप्त इट् का 'एकाच उपदेशेऽनुदात्तात्' से निषेध, धातु को द्वित्व-'सन्यङोः', अभ्याससंज्ञा, हलादिशेष, इत्व)-जघस् स (अभ्यास के 'स'='त्'-'सः स्यार्द्धधातुके')-जिघत्स (धातुसंज्ञा, लट् = ल् = तिप् = 'ति', शप् = 'अ', अ + अ = 'अ' पररूप-'अतो गुणे') = जिघत्सति।

**ईर्ष्यतेरिति।** 'ईर्ष्यतेस्तृतीयस्य' वार्तिक के अनुसार 'तृतीय व्यञ्जन को द्वित्व होता है, पक्ष में-'य्' को द्वित्व होकर-ईर्ष्यियिषति। 'तृतीय एकाच् को द्वित्व होता है।' इस पक्ष में स को द्वित्व होकर-'ईर्ष्यिषिषति'।

(८३९) **पद-** अज्झनगमां सनि। **अनुवृत्ति-** दीर्घः। **विधिसूत्र।**

**मूलार्थ-** अजन्त धातु, हन् और अजादेश गम् धातु को दीर्घ होता है, झलादि सन् के परे रहते।

**विमर्श-** 'अङ्गस्य' का अधिकार है। यहाँ अजादि धातु (इण्, इक्, इङ्) धातु के स्थान में आदेश गम् का ग्रहण होता है। 'ढ्रलोपे पूर्वस्य' से 'दीर्घः' पद की अनुवृत्ति आती है। इस प्रकार ''अजन्त तथा हन् धातु और अजादि धातु के स्थान में आदेश 'गम्' को झलादि सन् के परे रहते दीर्घ होता है।

**६।४।१६ । अजन्तानां हन्तेरजादेशगमेश्च दीर्घो, झलादौ सनि। ( ८४० ) इको झल् १।२।९ । इगन्ताज्झलादिः सन् कित्स्यात्। कर्तुमिच्छति चिकीर्षति। जिघांसति। ( ८४१ ) सनि च २।४।४७ । इणो गमिः स्यात्सनि, न तु बोधने। जिगमिषति। बोधने तु**

---

अचस्तद्विशेषणत्वात्तदन्तविधिः। गम्धातुरिह अजादेश एव विवक्षित इति प्रकृतसूत्रस्य भाष्ये स्पष्टम्। 'ढ्रलोपे पूर्वस्य' इत्यस्माद्दीर्घ इत्यनुवर्तते। तदाह—**अजन्तानामिति।**

(८४०) **इको झल्।** अत्र 'रुदविदमुष०' इत्यतः 'संः' इति, 'असंयोगाल्लिट् कित्' इत्यतः कित् इति चानुवर्तेते। सना आक्षिप्तधातुविशेषणत्वात्तदन्तविधिस्तदाह-**इगन्तादित्यादिना। चिकीर्षति**- कर्तुमिच्छतीत्यर्थे कृधातोः 'धातोः कर्मणः' इत्यादिना सनि आर्धधातुकसंज्ञायाम्, इडागमे प्राप्ते 'एकाच उपदेशेऽनुदात्तात्' इतीण्निषेधे 'अज्झनगमां सनि' इति दीर्घे, गुणे प्राप्ते 'इको झल्' इति कित्त्वाद्गुणाभावे 'ऋत इद्धातोः' इति इत्वे रपरे 'किर् स' इति जाते, द्वित्वेऽभ्यासकार्ये 'हलि चे'ति दीर्घे षत्वे च कृते 'चिकीर्ष' इत्यस्य धातुसंज्ञायां, लटि तिपि शपि अनुबन्धलोपे 'अतो गुणे' इति पररूपे च कृते 'चिकीर्षति' इति।

(८४१) **सनि चेति।** 'णौ गमिरबोधने' इति सूत्रमत्रानुवर्तते, 'इणो गा लुङि' इत्यत इण इति च। तदाह-**इणो गमि इत्यादि।**

---

(८४०) **पद**–इकः, झल्। **अनुवृत्ति**–संः, कित्। **अतिदेशसूत्र।**

**मूलार्थ**– इगन्त धातु से परवर्ती झलादि सन् कित् होता है।

**विमर्श**– सूत्रार्थ की पूर्ति हेतु 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च' (१।२।८) से 'संः' तथा 'असंयोगाल्लिट् कित्' (१।२।५) से 'कित्' पद की अनुवृत्ति आती है। तदनुसार ''इक् अन्त वाले धातु से परवर्ती झलादि सन् किद्वत् होता है।''

**उदाहरण**– (१) ✓ कृ + सन् ( = 'स'–'धातोः कर्मणः०' आर्धधातुक संज्ञा, प्राप्त इट् का 'एकाच उपदेशे०' से निषेध, 'ऋ'='ॠ' दीर्घ–'अज्झनगमाम्०', 'इको झल्' से किद्वद्भाव होने से गुण का अभाव, 'ॠ'='इ'–'ऋत इद्धातोः', रपर)–किर् स (द्वित्व, अभ्यास संज्ञा, हलादिशेष, 'क्' = 'च्'–'कुहोश्चुः', 'इ'='ई'–दीर्घ–'हलि च', षत्व)–चिकीर्ष (धातुसंज्ञा, लट्=ल्=तिप्='ति', शप् = 'अ', अ + अ = 'अ'–पररूप) = चिकीर्षति। (२) 'हन्तुमिच्छति' विग्रह में ✓ हन् + सन् ( = स, उपधादीर्घ–'अज्झनगमाम्०', धातु को द्वित्व–'सन्यडोः', अभ्याससंज्ञा, हलादिशेष, 'ह्'='झ्'– 'कुहोश्चुः', 'झ्'='ज्'–'अभ्यासे चर्च', 'ह्' = 'घ्'–'अभ्यासाच्च', न् = ं अनुस्वार–'नश्चा०')–जिघांस (धातुसंज्ञा, लट्=ल्=तिप्=ति, शप्='अ', अ + अ = 'अ'–पररूप) = जिघांसति।

(८४१) **पद**– सनि, च। **अनुवृत्ति**– इणः, गमिः, अबोधने। **विधिसूत्र।**

**मूलार्थ**– सन् के परे रहते इण् को 'गम्' आदेश होता है, किन्तु बोधन अर्थ में नहीं होता। जिगमिषति।

**विमर्श**– सूत्रार्थ की स्पष्टता हेतु इस सूत्र में 'इणो गा लुङि' (२।४।४५) से 'इणः' तथा 'णौ गमिरबोधने' (२।४।४६) से 'गमिरबोधने' की अनुवृत्ति आ रही है। तदनुसार–''सन् प्रत्यय के परवर्ती रहते भी अबोधनार्थक इण् धातु को 'गम्' आदेश होता है।''

**उदाहरण**– (१) ✓ इण् (इ) + सन् ( = स, इ = गम्–'सनि च', धातु को द्वित्व–'सन्यडोः', अभ्यास संज्ञा, हलादिशेष, अभ्यास के 'ग्' = 'ज्', 'अ' = 'इ'–'सन्यतः', इट् = 'इ' —

**प्रतीषिषति। (८४२) इङश्च २।४।४८ । इणो गमिः स्यात्सनि। अधिजिगांसते। (८४३) रुदविदमुषग्रहिस्वपिप्रच्छः संश्च १।२।८ । एभ्यः संश्च, क्त्वा च कितौ स्तः। रुरुदिषति। विविदिषति। मुमुषिषति। (८४४) सनि ग्रहगुहोश्च ७।२।१२ ।**

---

(८४२) **इङश्चेति**। 'णौ गमिः' इत्यतः 'गमिः' इति, 'सनि चे'त्यतः सनि इति चानुवर्तते। अत आह-**इङो गमिरिति**। **अधिजिगांसते**- अधिपूर्वकादिङ्धातोः 'धातोः कर्मणः' इति सनि 'इङश्चे'ति गमादेशे 'सन्यङोरि'ति द्वित्वे पूर्वस्याभ्यासत्वे हलादिशेषे 'अभ्यासे चर्च' इति चर्त्वेन गकारस्य जत्वे 'सन्यतः' इति इत्वे 'अधिजिगम् स' इति जाते 'नश्चापदान्तस्य झलि' इत्यनुस्वारे 'अज्झन०' इति दीर्घे 'अधिजिगांस' इति धातुत्वाल्लटि 'पूर्ववत्सनः' इत्यात्मनेपदत्वेन तङि 'टित आत्मनेपदानां टेरे' इति टेरेत्वे, शपि पररूपे 'अधिजिगांसते' इति रूपम्।

(८४३) **रुदविदेति**। 'असंयोगाल्लिट् कित्' इत्यतः किदित्यनुवर्तते। अत आह- **एभ्य इत्यादिना**।

---

'आर्धधातुकस्येड्वलादेः', षत्व)-जिगमिष (धातुसंज्ञा, लट् = तिप् = ति, शप् = 'अ', अ + अ = 'अ') = जिगमिषति।

**बोधने तु**- 'सनि च' सूत्र द्वारा बोधन अर्थ से भिन्न अर्थ में ही इण् को गम् आदेश होता है। अतः बोधन अर्थ में इण् को गम् नहीं होता। उदा०-प्रतीषिषति।

(८४२) **पद**- इङः, च। **अनुवृत्ति**- गमिः, सनि। **विधिसूत्र**।

**मूलार्थ**- 'सन्' के परवर्ती रहते 'इङ्' धातु को भी 'गम्' आदेश होता है। अधिजिगांसते।

**विमर्श**- सूत्र में आदेशवाचक व निमित्तवाचक पदों का अभाव है। अतः 'णौ गमिरबोधने' (२।४।४६) से 'गमिः' तथा 'सनि च' (२।४।४७) से 'सनि' की अनुवृत्ति आती है। इस प्रकार ''सन् प्रत्यय के परे रहते 'इङ्' धातु के स्थान में भी 'गम्' आदेश हो जाता है।''

**उदाहरण**- (१) अधि + ✓ इङ् (इ) + सन् (= स, 'इ' = 'गम्'-'इङश्च', द्वित्व-'सन्यङोः', अभ्याससंज्ञा, हलादिशेष, 'ग्' = 'ज्', 'अ' = 'इ' इत्व-'सन्यतः')-अधिजिगम् स (म् = ं अनुस्वार-'नश्चा०', 'अ' = 'आ' दीर्घ-'अज्झनगमां०')-अधिजिगांस (धातुसंज्ञा-लट्, आत्मनेपदत्व-'पूर्ववत्सनः' ल् = त, 'अ' = 'ए'-एत्व-'टित आत्मनेपदानां टेरे', शप् = 'अ' पररूप) = अधिजिगांसते।

(८४३) **पद**- रुदविदमुषग्रहिस्वपिप्रच्छः, संः, च। **अनुवृत्ति**- क्त्वा, कित्। **अतिदेशसूत्र**।

**मूलार्थ**- रुद् आदि धातुओं से परवर्ती सन् और क्त्वा कित् होते हैं। रुरुदिषति इत्यादि।

**विमर्श**- प्रकृत सूत्र में 'असंयोगाल्लिट् कित्' (१।२।५) से 'कित्' तथा 'मृडमृदगुधकुष०' (१।२।७) से 'क्त्वा' की अनुवृत्ति आ रही है। तदनुसार- ''रुद्, विद्, मुष्, ग्रह्, स्वप् तथा प्रच्छ् धातुओं से परवर्ती सन् और क्त्वा प्रत्यय किद्वत् होते हैं।''

**उदाहरण**- (१) ✓ रुद् + सन् (= स, इट् = 'इ', द्वित्व-'सन्यङोः', अभ्याससंज्ञा, हलादिशेष, षत्व)-रुरुदिष (धातुसंज्ञा, लट्=ल्=तिप्=ति, शप्='अ', पररूप) = रुरुदिषति। (२) इसी प्रकार 'वेदितुमिच्छति'- विविदिषति।

(३) मोषितुमिच्छति- मुमुषिषति। यहाँ प्राप्त लघूपध गुण का 'रुदविदमुष०' से सन् के किद्वद् होने से 'क्ङिति च' से निषेध हो जाता है।

**ग्रहेर्गुहेरुगन्ताच्च सन इण्न स्यात्। 'ग्रहिज्ये'ति सम्प्रसारणम्। सनः षत्वस्यासिद्धत्वाद्भष्भावः। जिघृक्षति। ( ८४५ ) हलन्ताच्च १।२।१० । इक्समीपाद्धलः परो झलादिः सन्कित्।**

---

(८४४) **सनिग्रहगुहोश्चेति।** 'श्र्युकः किति' इत्यस्मात् 'उकः' इत्यनुवर्तते। 'नेड् वशि कृति' इत्यतः नेडिति चानुवर्तते। तदाह–**ग्रहेरित्यादिना। जिघृक्षति**–ग्रह् धातोः सनि 'रुदविदमुष०' इत्यादिना सनः कित्त्वे 'ग्रहिज्या' इति सम्प्रसारणेन रेफस्य ऋत्वे 'ग्रह् स' इति जाते 'हो ढः' इत्यनेन हकारस्य ढकारे 'एकाचो बशो भष्०' इति भष्भावेन गकारस्य घकारे 'षढोः कः सि' इत्यनेन ढस्य ककारे, सस्य षत्वे 'सन्यङोः' इति द्वित्वे, अभ्याससंज्ञायां हलादिशेषे 'उरत्' इति चर्त्वेन गकारे 'कुहोश्चुः' इति चुत्वेन जकारे 'सन्यतः' इत्यनेनेत्वे 'जिघृक् ष' इति संयोगे जिघृक्ष इति जाते 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां, लटि तिपि शपि अनुबन्धलोपे 'अतो गुणे' इति पररूपे संयोगे कृते 'जिघृक्षति' इति सिद्धम्।

(८४५) **हलन्ताच्चेति।** हलिति लुप्तपञ्चमीकं पदम्। अन्तपदं समीपार्थकम्। 'इको झल्' इति सूत्रमत्रानुवर्तते, 'रुदविद०' इत्यतः सनिति, 'असंयोगाल्लिट् कित्' इत्यतः किदिति च। अत आह– **इक्समीपादित्यादि। जुघुक्षति–** गूहितुमिच्छतीति विग्रहे गुहू धातोः सनि अनुबन्धलोपे

---

(८४४) **पद–** सनि, ग्रहगुहोः, च। **अनुवृत्ति–** उकः, नेट्। **विधिसूत्र** (निषेध)।

**मूलार्थ–** ग्रह्, गुह् और उगन्त धातुओं से परवर्ती 'सन्' को 'इट्' नहीं होता। जिघृक्षति।

**विमर्श–** यहाँ पूर्वसूत्र 'श्र्युकः किति' (७।२।११) से 'उकः' तथा 'नेड् वशि कृति' (७।२।८) से 'नेट्' पदों की अनुवृत्ति आती है। अतः "ग्रह्, गुह् तथा उगन्त धातुओं के सन् के परवर्ती रहते इट् (इ) आगम नहीं होता।"

**उदाहरण** (१) 'ग्रहीतुमिच्छति' विग्रह में ✓ ग्रह् + सन् (= 'स', सन् को किद्वद्भाव-'रुदविदमुष०', 'र्' = 'ऋ'–सम्प्रसारण–'ग्रहिज्या०', 'ह्' = 'ढ्'–'हो ढः', 'ग्'='घ्'–भष्भाव-'एकाचो बशो भष्०', 'ढ्' = 'क्'–'षढोः कः सि', षत्व–'आदेशप्रत्यययोः')–घृक् ष (द्वित्व-'सन्यङोः', अभ्याससंज्ञा, हलादिशेष, अभ्यास ऋ='अ'–'उरत्', रपर, हलादिशेष, 'घ्'='ग्'–चर्त्व, 'ग्'='ज्'–'कुहोश्चुः', 'अ'='इ' इत्व–'सन्यतः', क्+ष=क्ष)–जिघृक्ष (धातुसंज्ञा, लट्=ल्=तिप् = ति, शप् = 'अ', अ + अ = 'अ'–पररूप)= जिघृक्षति।

(८४५) **पद–** हलन्तात्, च। **अनुवृत्ति–** इको झल्, सन्, कित्। **अतिदेशसूत्र।**

**मूलार्थ–** इक्-समीप हल् से परवर्ती झलादि सन् कित् होता है। जुघुक्षति इत्यादि।

**विमर्श–** प्रकृत सूत्र में 'इको झल्' (१।२।९) सूत्र, 'रुदविदमुष' (१।२।८) से 'सन्' तथा 'असंयोगाल्लिट् कित्' (१।२।५) से 'कित्' की अनुवृत्ति आती है। सूत्र में प्रयुक्त अन्त शब्द समीपार्थक है, अवयवार्थक नहीं। अतः "इक् के समीप जो हल्, उससे परवर्ती झलादि सन् कित्वत् होता है।

**उदाहरण–** (१) 'गूहितुमिच्छति' विग्रह में ऊदित ✓ गुहू + सन् (= 'स', प्राप्त गुण का 'हलन्ताच्च' से किद्वद्भाव होने से 'क्ङिति च' से निषेध, 'स्वरति०' से विकल्प से इट् प्राप्त, उसका 'सनि ग्रहगुहोश्च' से निषेध)–गुह् स ('ह्' = 'ढ्'–'हो ढः', 'ढ्' = 'क्'–'षढोः कः सि', 'स्' = 'ष्'–षत्व, 'ग्' = 'घ्'–भष्भाव–'एकाचो०', द्वित्व, अभ्याससंज्ञा, हलादिशेष)–घु घुक् ष ('घ्' = 'झ्'–'कुहोश्चुः', 'झ्' = 'ज्'–'अभ्यासे चर्च', धातुसंज्ञा, लट् = ल् = तिप् = 'ति', शप् = 'अ')–जुघुक्ष अ ति (अ + अ = 'अ'–पररूप–'अतो गुणे') = जुघुक्षति। (२) ✓ स्वप् + सन् (= स,

**गुहू संवरणे। जुघुक्षति। सुषुप्सति। ( ८४६ ) किरश्च पञ्चभ्यः ७।२।७५ । कृ गृ दृ धृङ् प्रच्छ एतेभ्यः सन इट्। पिपृच्छिषति। चिकरिषति। जिगरिषति। जिगलिषति। अत्रेटो दीर्घो नेष्टः। ( ८४७ ) पूर्ववत्सनः १।३।६२ । सनः पूर्वो यो धातुस्तेन तुल्यं**

---

'हलन्ताच्चे'त्यनेन सनः कित्त्वेन गुणाऽभावे ऊदित्वात् 'स्वरतिसूतिसूयति०' इत्यादिना विकल्पेन इटि प्राप्ते 'सनि ग्रहगुहोश्चे'ति निषेधे 'हो ढः' इति हस्य ढत्वे 'षढोः कः सि' इति ढस्य ककारे षत्वे 'एकाचो०' इत्यनेन भष्भावेन गस्य घत्वे 'सन्यङोः' इति द्वित्वेऽभ्यासत्वे, हलादिशेषे 'कुहोश्चुः' इति घकारस्य झकारे 'अभ्यासे चर्च' इति चर्त्वेन जकारे 'जुघुक् ष' इत्यस्य धातुसंज्ञायां, लटि तिपि शपि अनुबन्धलोपे 'अतो गुणे' इति पररूपे 'जुघुक्षति' इति।

(८४६) **किरश्चेति।** किर इति पञ्चमी। 'स्मिपूङ्रञ्ज्वशां सनि' इत्यतः सनि इति 'इडत्त्यर्ति' इत्यतश्च इडित्यनुवर्तेते। तदाह– **कृ गृ इत्यादिना। पिपृच्छिषतीति।** प्रच्छ्धातोः सनि 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्चे'ति सनः कित्त्वात् 'ग्रहिज्या०' इति सम्प्रसारणे पूर्वरूपे 'सन्यङोः' इत्यनेन द्वित्वेऽभ्यासत्वे अभ्यासे 'उरत्' इत्यत्वे रपरे हलादिशेषे 'सन्यतः' इतीत्वे, लटि तिपि शपि पररूपे 'किरश्च पञ्चभ्यः' इति सन इडागमेऽनुबन्धलोपे षत्वे 'पिपृच्छिषती'ति रूपम्।

(८४७) **पूर्ववत्सन इति।** 'अनुदात्तङित' इत्यत आत्मनेपदमित्यनुवर्तते। पूर्वपदेनात्र धातुर्गृह्यते। अत आह–**सन इति।**

---

'रुदविद०' से कित्त्व होने पर 'व्' = 'उ' सम्प्रसारण–'वचिस्वपि०', पूर्वरूप, द्वित्व, अभ्याससंज्ञा, हलादिशेष, षत्व)–सुषुप्स (धातुसंज्ञा, लट् = ल् = तिप् = 'ति', शप् = 'अ', पररूप) = **सुषुप्सति।**

(८४६) **पद–** किरः, च, पञ्चभ्यः। **अनुवृत्ति–** सनि, इट्। **विधिसूत्र।**

**मूलार्थ–** कृ आदि पाँच धातुओं से परवर्ती सन् को इट् होता है। पिपृच्छिषति इत्यादि।

**विमर्श–** सूत्रार्थ की पूर्ति हेतु 'स्मिपूङ्रञ्ज्वशां सनि' (७।२।७४) से सनि तथा 'इडत्त्यर्तिव्ययतीनाम्' (७।२।६६) से 'इट्' पद की अनुवृत्ति आती है। तदनुसार– ''कृ, गृ, दृङ्, धृङ् और प्रच्छ् से परवर्ती सन् को इट् होता है।''

**उदाहरण–** (१) ✓ प्रच्छ् + सन् (= स, 'रुदविद०' से सन् के कित्वत् होने से 'र्' = 'ऋ' सम्प्रसारण–'ग्रहिज्या०', पूर्वरूप, द्वित्व–'सन्यङोः', अभ्याससंज्ञा, 'ऋ'='अ'–'उरत्', रपर, हलादिशेष, 'अ' = 'इ'–इत्व–'सन्यतः', इट्='इ'–'किरश्च पञ्चभ्यः', धातुसंज्ञा, लट् = ल् = तिप् = 'ति', शप् 'अ', पररूप, षत्व) = पिपृच्छिषति। (२) ✓ कृ + सन् (= स, द्वित्व, अभ्याससंज्ञा, अत्व, रपर, हलादिशेष, 'क्' = 'च्')–चकृ स (इट् = 'इ' –'किरश्च पञ्चभ्यः', 'ॠ' = 'अ'–गुण–'सार्वधातु०', रपर, इत्व, षत्व)–चिकरिष (धातुसंज्ञा, लट् = ल् = तिप् = ति, शप् = 'अ', पररूप)= चिकरिषति। (३) ✓ 'गृ' से–जिगरिषति। यहाँ 'अचि विभाषा' से विकल्प से 'र्' = 'ल्' लत्व = जिगलिषति। यहाँ 'वृतो वा' से प्राप्त वैकल्पिक दीर्घ नहीं होता।

(८४७) **पद–** पूर्ववत्, सनः। **अनुवृत्ति–** आत्मनेपदम्। **विधिसूत्र।**

**मूलार्थ–** सन् की प्रकृतिभूत धातु के तुल्य ही सन्नन्त से आत्मनेपद होता है। दिदरिषते इत्यादि।

**विमर्श–** 'अनुदात्तङित आत्मनेपदम्' (१।३।१२) से 'आत्मनेपदम्' की अनुवृत्ति आ रही है। अतः ''सन् प्रत्यय के आने से पूर्व जो धातु आत्मनेपदी रही हो, तो सन्नन्त से भी आत्मनेपद होता है।''

सन्नन्तादप्यात्मनेपदं स्यात्। दिदरिषते। दिधरिषते। बुभूषति। (८४८) **सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ७।२।४९ ।** इवन्तेभ्य ऋधादिभ्यश्च सन इड् वा। इडभावे– 'हलन्ताच्चे'ति कित्त्वम्। (८४९) **च्छ्वोः शूडनुनासिके च ६।४।१९ ।** सतुक्कस्य छस्य वस्य च क्रमात् श् ऊठ् एतावादेशौ स्तोऽनुनासिके, क्वौ, झलादौ क्ङिति च। यण्। द्वित्वम्। दुधूषति। दिदेविषति। (८५०) **स्तौतिण्योरेव**

---

(८४८) **सनीवन्तर्ध०।** इवन्त, ऋध, भ्रस्ज, दम्भु, श्रि, स्वृ, यु, ऊर्णु, भर, ज्ञपि, सन् एषां द्वन्द्वः। 'स्वरति' इत्यतः वेति, 'इण्निष्ठायाम्' इत्यत इडिति चानुवर्तते। तदाह– **इवन्तेभ्य इत्यादि।**

(८४९) **च्छ्वोः शूडेति।** चकारेण तुगागमोऽनुमीयत अत आह–**सतुक्कस्येति। दिदेविषति**– दिव्धातोः सनि 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' इत्यनेन विकल्पेन इटि 'सन्यडोः' इति द्वित्वेऽभ्यासत्वे, हलादिशेषे 'सन्यतः' इतीत्वे 'पुगन्त०' इति गुणे, षत्वे लटि तिपि शपि अनुबन्धलोपे पररूपे 'दिदेविषति' इति। इडभावपक्षे तु 'च्छ्वोः शूडनुनासिके च' इति वस्य ऊठि यणि 'द्यू स' इति जाते द्वित्वेऽभ्यासादिकार्ये 'दु द्यू स' इत्यवस्थायां षत्वे धातुसंज्ञायां लटि तिपि शपि अनुबन्धलोपे 'अतो गुणे' इति पररूपे 'दुद्यूषति' इति सिद्धम्।

---

**उदाहरण**– (१) ✓ दृङ् (ङित्) + सन् (= 'स', इट् = 'इ'–'किरश्च०', द्वित्व, अभ्यास-संज्ञा, अत्व, रपर, हलादिशेष, 'अ' = 'इ' इत्व–'सन्यतः', गुण, रपर, षत्व)–दिदरिष (लट् 'पूर्ववत्सनः' से आत्मनेपद, ल् = त, शप् = 'अ', 'अ' = 'ए'–एत्व–टित आत्मनेपदानाम्०', पररूप) = दिदरिषते। (२) ✓ धृङ्–दिधरिषते। (३) ✓ भू + सन् = बुभूषति।

(८४८) **पद**– सनि, इवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्। **अनुवृत्ति**–वा, इट्। **विधिसूत्र।**

**मूलार्थ**– इवन्त और ऋधु आदि धातुओं से परवर्ती 'सन्' को विकल्प से 'इट्' होता है।

**विमर्श**– यहाँ 'स्वरतिसूति०' (७।२।४४) से 'वा' तथा 'इण्निष्ठायाम्' (७।२।४७) से 'इट्' की अनुवृत्ति आती है। तदनुसार–''इवन्त धातुओं से तथा ऋधु वृद्धौ, भ्रस्ज पाके, दम्भु दम्भे, श्रिञ् सेवायाम्, स्वृ शब्दोपतापयोः, यु मिश्रणे, ऊर्णुञ् आच्छादने, भृञ् भरणे, ज्ञपि, सन् (षणु दाने तथा षण सम्भक्तौ) धातुओं से परवर्ती 'सन्' को विकल्प से इट् का आगम होता है।''

(८४९) **पद**– च्छ्वोः, शूठ्, अनुनासिके, च। **अनुवृत्ति**– क्विझलोः, क्ङिति। **विधिसूत्र।**

**मूलार्थ**– तुक् सहित छकार और वकार को क्रमशः 'श्' और 'ऊठ्' आदेश होते हैं, यदि अनुनासिक अथवा क्विप् या झलादि कित् ङित् परे हो तो। दुधूषति इत्यादि।

**विमर्श**– प्रकृत सूत्र में 'अनुनासिकस्य०'(६।४।१५) से 'क्विझलोः' तथा 'क्ङिति' पदों की अनुवृत्ति आती है। तदनुसार– ''तुक् (त्) सहित छकार को और वकार को क्रम से 'श्' और 'ऊठ्' आदेश अनुनासिक वा क्विप् अथवा झलादि कित् ङित् के परवर्ती रहते होते हैं।''

**उदाहरण**– (१) ✓ दिव् + सन् (= स, विकल्प से इट् = 'इ'–'सनीवन्तर्द्ध०', 'इ' = 'ए'–गुण–'पुगन्त०')–देव् इ स (द्वित्व–'सन्यडोः', अभ्याससंज्ञा, हलादिशेष, ह्रस्व, षत्व)–दिदेविष (धातुसंज्ञा, लट् = तिप् = ति, शप् = 'अ', पररूप) = दिदेविषति। इट् के अभावपक्ष में–दिव् स (व् = ऊ–'च्छ्वोः शूडनुनासिके च', 'इ' = 'य्'–यण्)–द्यू स (द्वित्व, अभ्याससंज्ञा, हलादिशेष, ह्रस्व, षत्व)–दु द्यू ष (लट् = तिप् = 'ति', शप् = 'अ', अ + अ = 'अ'–पररूप) = दुद्यूषति।

**षण्यभ्यासात् ८।३।६१ ।** अभ्यासेण: परस्य स्तौतिण्यन्तयोरेव सस्य ष:, षभूते सनि, नान्यस्य। तुष्टूसति। 'द्युतिस्वाप्योः सम्प्रसारणम्' इत्युत्वम्। सुष्वापयिषति। सिसाधयिषति। स्तौतिण्योः किम्? सुस्यूषति। सिसेविषति। **( ८५१ ) आप्ज्ञप्यृधामीत् ७।४।५५ ।** एषामच ईत्स्यात्सादौ सनि। **( ८५२ ) अत्र लोपोऽभ्यासस्य ७।४।५८ ।** 'सनि मीमे'-

---

(८५०) **स्तौतिण्योरेवेति।** 'अपदान्तस्य मूर्द्धन्य:' इत्यधिकृतम् 'इण्को:' इति च।

(८५१) **आप्ज्ञप्यृधामिति।** 'सनि मीमाघुरभ' इत्यत: सनीति अच इति चानुवर्तते। 'स: स्यार्द्धधातुके' इत्यत: सीत्यनुवृत्तं पदं सनो विशेषणम्, तेन तदादिविधिस्तदाह-**एषामच इत्यादिना।**

(८५२) **अत्र लोप इति।** अत्रेत्यनेन पूर्वसूत्रचतुष्टयविहितकार्यं परामृश्यते। अयमर्थ:-

---

(८५०) **पद–** स्तौतिण्यो:, एव, षणि, अभ्यासात्। **अनुवृत्ति**–स:। **विधिसूत्र।**

**मूलार्थ–** षभूत 'सन्' के परवर्ती रहते अभ्यास सम्बन्धी इण् से परे स्तु धातु और ण्यन्त धातु के ही सकार को षत्व होता है, अन्य धातु के सकार को षत्व नहीं होता। तुष्टूसति इत्यादि।

**विमर्श–** 'इण्को:' (८।३।५७) तथा 'अपदान्तस्य मूर्द्धन्य:' (८।३।५५) का अधिकार है। 'सहे: साड: स:' (८।३।५६) सूत्र से 'स:' पद की अनुवृत्ति आ रही है। अत: ''अभ्यास के इण् से उत्तरवर्ती स्तु (ष्टुञ्) तथा ण्यन्त धातुओं के आदेश सकार को ही षत्वभूत सन् के परवर्ती रहते मूर्द्धन्य आदेश होता है।''

**उदाहरण–** (१) ✓ स्तु + सन् (= 'स', 'स्' = 'ष्' षत्व–'स्तौतिण्यो:०', 'त्' = 'ट्'–ष्टुत्व, द्वित्व, अभ्याससंज्ञा, हलादिशेष, 'उ' = 'ऊ'–दीर्घ–'अज्झन०', षत्व)–तुष्टूष (धातुसंज्ञा, लट् = तिप् = 'ति', शप् = 'अ', पररूप) = तुष्टूषति। (२) ण्यन्त ✓ स्वप्–स्वाप् इ + सन् (= स, द्वित्व, अभ्याससंज्ञा, ह्रस्व, 'व्' = 'उ'–सम्प्रसारण–'द्युतिस्वाप्यो: सम्प्रसारणम्', इट् = 'इ', 'इ' = 'ए'–गुण, ए = 'अय्', 'स्' = 'ष्'–षत्व–'स्तौतिण्यो:०')–सुष्वापयिष (धातुसंज्ञा, लट् = तिप् = 'ति', शप् = 'अ', पररूप) = सुष्वापयिषति। (३) ण्यन्त ✓ साध् इ + सन् (= स, द्वित्व–'सन्यडो:', अभ्याससंज्ञा, ह्रस्व, हलादिशेष, 'अ' = 'इ' इत्व–'सन्यत:', इट् = इ, 'इ' = 'ए'–गुण, 'ए' = 'अय्' आदेश, षत्व– 'स्तौतिण्योरेव०')–सिसाधयिष (लट् = तिप् = 'ति', शप् = 'अ', पररूप) = सिसाधयिषति।

**प्रत्युदाहरण–** प्रकृत सूत्र में स्तु और ण्यन्त धातु का ग्रहण किया गया है, अत: 'सुस्यूषति' और 'सिसेविषति' सन्नन्त प्रयोगों में षत्व नहीं होता।

(८५१) **पद–** आप्ज्ञप्यृधाम्, ईत्। **अनुवृत्ति–** अच:, सनि, स:। **विधिसूत्र।**

**मूलार्थ–** सकारादि सन् के परवर्ती रहते आप्, ज्ञप् और ऋध धातुओं के अच् को ईत्व होता है।

**विमर्श–** सूत्रार्थ की स्पष्टता के लिए 'सनि मीमाघुर०' (७।४।५४) से 'सनि' और 'अच:' तथा 'स: स्यार्धधातुके' (७।४।४९) से 'स:' पद की अनुवृत्ति आती है। तदनुसार– ''सकारादि सन् प्रत्यय के परे रहते आप्, ज्ञप् तथा ऋध् धातुओं के अच् के स्थान में (ईत्) ईकार आदेश होता है।''

(८५२) **पद–** अत्र, लोप:, अभ्यासस्य। **विधिसूत्र।**

**मूलार्थ–** 'सनि मीमा०' सूत्र से लेकर जो चार (इस, ईत्व, इत्, गुण) कार्य कहे गये हैं, वहाँ (उन कार्यों के होने पर) अभ्यास का लोप होता है। आप्तुमिच्छति–ईप्सति इत्यादि।

**त्यारभ्य यदुक्तं तत्राभ्यासस्य लोपः स्यात्। आप्सुमिच्छति ईप्सति। अर्द्धितुमिच्छति ईर्त्सति। अर्दिधिषति। बिभ्रज्जिषति। बिभर्जिषति। बिभ्रक्षति। बिभर्क्षति। (८५३) दम्भ इच्च ७।४।५६ । दम्भेरच इत्स्यात्, ईच्च सादौ सनि। 'हलन्तादि'त्यत्र हल्ग्रहणं जातिपरम्।**

---

'सनि मीमे'ति सूत्रम्, 'आप्ज्ञप्यृधामीत्' इति सूत्रम्, 'दम्भ इच्च' इति सूत्रम्, 'मुचोऽकर्मकस्य' इति सूत्रञ्च यत्र प्रवर्तते तत्राऽभ्यासस्य लोपो भवति। **ईप्सति–** 'आप्सुमिच्छति' इति विग्रहे आप्लृधातोः सनि अनुबन्धलोपे 'सन्यडोः' इति द्वित्वात्पूर्वं 'आप्ज्ञप्यृधामीत्' इतीत्वे, द्वित्वेऽभ्यासादिकार्ये 'ई ईप् स' इति जाते 'अत्र लोपोऽभ्यासस्ये'ति अभ्यासलोपे 'ईप्स' इत्यस्य धातुसंज्ञायां, लटि तिपि शपि अनुबन्धलोपे पररूपे संयोगे 'ईप्सति' इति।

(८५३) **दम्भ इच्च इति।** 'सनि सीमा' इत्यतः सनि अच इति चानुवर्तते। चकारात् 'आप्ज्ञप्यृधामि'त्यत ईदिति समुच्चीयते। 'सः सी'त्यतः सीत्यनुवृत्तं सनो विशेषणम्। तेन

---

**विमर्श–** सूत्रोक्त 'अत्र' पद 'सनिमीमा०' (७।४।५४ से लेकर 'मुचोऽकर्मकस्य (७।४।५७) तक सूत्रों द्वारा विहित चार कार्यों (इस, ईत्, इत् और गुण) का बोधक है। इस प्रकार "यहाँ सन् के परवर्ती रहते जो कार्य कहा है अर्थात् पूर्वोक्त चार सूत्रों द्वारा इस्, ईत् आदि का विधान किया गया है, उनके अभ्यास का लोप होता है।"

**उदाहरण–** (१) ✓ आप् + सन् (= स, 'सन्यडोः' से प्राप्त द्वित्व से पूर्व–'आ' = 'ई' ईत्व–'आप्ज्ञप्यृधामीत्', द्वित्व, अभ्याससंज्ञा, हलादिशेष)– ई ईप् स ('ई', अभ्यास का लोप–'अत्र लोपोऽभ्यासस्य')–ईप्स (धातुसंज्ञा, लट् = ल् = तिप् = ति, शप् = 'अ', अ + अ = 'अ'–पररूप) = ईप्सति।

(२) ✓ ऋध् + सन् (= स, इट् = 'इ'–विकल्प से–'सनीवन्तर्ध०', आर्धधातुकसंज्ञा, 'ऋ' = 'अ'–गुण–'पुगन्त०', रपर)–अर्धिस (धि का द्वित्व–'सन्यडोः', अभ्याससंज्ञा, 'ध्' = 'द्'–चर्त्व–'अभ्यासे चर्च')–अर् दि धि स (षत्व)–अर्दिधिष (धातुसंज्ञा, लट् = तिप् = 'ति', शप् = 'अ', पररूप) = अर्दिधिषति। **इट् के अभाव पक्ष में–** ऋध् स ('ऋ' = 'ई'–'आप्ज्ञप्यृधामीत्', रपर, 'ध्' = 'त्'–'खरि च')– ईर्त्स ('नन्द्राः संयोगादयः' से रेफ का द्वित्व-निषेध होने से 'त्स' का द्वित्व, अभ्याससंज्ञा, अभ्यास का लोप–'अत्र लोपः०')–ईर्त्स (धातुसंज्ञा, लट्=तिप्='ति', शप् = 'अ', अ + अ = 'अ' –पररूप–'अतो गुणे') = ईर्त्सति।

(३) ✓ भ्रस्ज् + सन् (= 'स', विकल्प से इट् = 'इ'–'सनीव०', द्वित्व, अभ्याससंज्ञा, हलादिशेष, 'भ्' = 'ब्'–'अभ्यासे चर्च', 'अ' = 'इ'–'सन्यतः', 'स्' = 'श्'–श्चुत्व, श् = 'ज्'–जश्त्व, षत्व)– बिभ्रज्ज् इ ष (धातुसंज्ञा, लट् = ल् = तिप् = 'ति', शप् = 'अ', पररूप) = बिभ्रज्जिषति। 'भ्रस्जो रोपधयोः०' से पाक्षिक रम् = 'र्' आगम होने पर– बिभर्जिषति। इट् तथा रमागम के अभाव पक्ष में–बिभ्रक्षति। रम् आगम पक्ष तथा इडभावपक्ष में– **बिभर्क्षति।**

(८५३) **पद–** दम्भः, इत्, च। **अनुवृत्ति–** ईत्, अचः, सनि, सः। **विधिसूत्र।**

**मूलार्थ–** सकारादि सन् के परवर्ती रहते 'दम्भ्' धातु के 'अच्' को इत्व होता है, पक्ष में ईत् भी होता है। "हलन्ताच्च" सूत्र में हल् ग्रहण जातिपरक है, अतः यहाँ भी सन् किद्वत् हो जाता है। फलतः 'न्' का लोप– धिप्सति, धीप्सति इत्यादि।

**विमर्श–** पूर्वसूत्र (८५१) से 'ईत्', 'सनि मीमा०' (७।४।५४) से 'अचः' तथा 'सनि' और

**तेन सनः कित्त्वान्नलोपः। धिप्सति। धीप्सति। दिदम्भिषति। शिश्रीषति। शिश्रयिषति। 'उदोष्ठ्ये'त्युत्वम्। सुस्वूर्षति। सिस्वरिषति। युयूषति। यियविषति। 'विभाषोर्णोः' इति ङित्।**

---

तदादिविधिस्तदाह- **दम्भेरच इति। धिप्सति-** दम्भधातोः सनि 'सनीवन्तर्ध०' इत्यादिना विकल्पेन इटि 'सन्यङोः' इत्यनेन द्वित्वेऽभ्यासादिकार्ये 'सन्यतः' इत्यभ्यासाकारस्य इत्वे, षत्वे 'दिदम्भिष' इति जाते, धातुसंज्ञायां लटि तिपि शपि अनुबन्धलोपे पररूपे 'दिदम्भिषति' इति।

---

'सः स्या०' (७।४।४९) से 'सः' की अनुवृत्ति आती है।

तदनुसार- ''सकारादि सन् प्रत्यय के परे रहते 'दम्भ्' के अच् के स्थान में 'इत्' (इकार आदेश) होता है। चकार से 'ईत्' (ईकार) आदेश भी होता है।''

**उदाहरण-** (१) ✓ दम्भ् + सन् (= स, विकल्प से इट् = 'इ'-'सनीवन्तर्ध०', द्वित्व-सन्यङोः', अभ्याससंज्ञा, हलादिशेष, अभ्यास 'अ' = 'इ'-इत्व-'सन्यतः', षत्व)-दिदम्भिष (धातुसंज्ञा, लट् = तिप् = 'ति', शप् = 'अ', पररूप) = दिदम्भिषति। **इट् के अभाव पक्ष में-** दम्भ् स ('अ' = 'इ' इत्-'दम्भ इच्च', 'हलन्ताच्च' से कित्त्व होने पर 'न्' का लोप, 'द्' = 'ध्'-'एकाचो बशो भष्०', 'भ्' = 'प्'-'खरि च')-धिप् स (द्वित्व, अभ्यासकार्य)-धि धिप् स ('धि' अभ्यास का लोप-'अत्र लोपोऽभ्यासस्य')-धिप्स (धातुसंज्ञा, लट् = तिप् = 'ति', शप् = 'अ', पररूप) = धिप्सति। ईत्व पक्ष में-धीप्सति।

(२) ✓ श्रिञ् (श्रि) + सन् (= स, विकल्प से इट् = 'इ'-'सनीव०', 'इ')- श्रि इ स (द्वित्व, अभ्याससंज्ञा, हलादिशेष)- शि श्रि इ स ('इ' = 'ए'-गुण, ए = अय् आदेश, षत्व)- शिश्रयिष (धातुसंज्ञा, लट् = तिप् = 'ति', शप् = 'अ', पररूप) = शिश्रयिषति। इट् के अभाव पक्ष में- श्रि स (द्वित्व, अभ्याससंज्ञा, हलादिशेष)- शिश्रि स ('इ' = 'ई'-दीर्घ-'अज्झन०', षत्व, लट् = तिप् = 'ति', शप् = 'अ', अ + अ = 'अ'-पररूप) = शिश्रीषति।

(३) ✓ स्वृ + सन् (= 'स', विकल्प से इट्, द्वित्व, अभ्याससंज्ञा, 'ऋ' = 'अ'-'उरत्' रपर, हलादिशेष, 'अ' = 'इ'-'सन्यतः')- सि स्वृ इ स ('ऋ' = 'अ' गुण, रपर, षत्व, धातुसंज्ञा, लट् = तिप् = ति, शप् = 'अ' पररूप) = सिस्वरिषति। इट् के न होने पर पक्ष में स्वृ स, द्वित्व, अभ्याससंज्ञा, 'ऋ' = 'उ'-'उदोष्ठ्यपूर्वस्य', रपर, 'उ' = 'ऊ' दीर्घ- 'उपधायां च', लट् = तिप् = 'ति', शप् = 'अ', पररूप) = सुस्वूर्षति।

(४) ✓ यु + सन् (= 'स', विकल्प से इट् = 'इ'-'सनीव०', 'यु' का द्वित्व-'सन्यङोः', अभ्याससंज्ञा)- यु यु इ स ('उ' = 'ओ'-गुण, 'ओ' = 'अव्'-आदेश, अभ्यास के 'उ' = 'इ'-'ओः पुयण्ज्यपरे', षत्व)- यियविष (धातुसंज्ञा, लट् = तिप् = 'ति', शप् = 'अ', पररूप) = यियविषति। **इट् के न होने पर पक्ष में-** यु स ('उ' = 'ऊ'-दीर्घ-'अज्झन०', द्वित्व, अभ्याससंज्ञा, ह्रस्व, षत्व)-यु यूष (लट् = तिप् = 'ति', शप् = 'अ', पररूप) = युयूषति।

(५) ✓ ऊर्णुञ् (ऊर्णु) + सन् (= **'स'**, विकल्प से इट् = 'इ'-'सनीव०', ङित्व-'विभाषोर्णोः', 'नु' का द्वित्व, अभ्याससंज्ञा, उ = उवङ् = 'उव्', षत्व)- उर्णुनुविष (लट् = तिप् = 'ति', शप् = 'अ' पररूप)-ऊर्णुनुविषति। **ङिद्वद्भाव के अभाव पक्ष में-** गुण, अव् आदेश- उर्णुनविषति। **इट् के अभाव पक्ष में-** 'अज्झन०' से दीर्घ, 'इको झल्' से सन् के कित्वत् होने से गुण का निषेध-ऊर्णुनूषति।

(६) ✓ भृञ् (भृ) + सन् (= 'स', विकल्प से इट् = 'इ', द्वित्व, अभ्याससंज्ञा, 'ऋ' =

ऊर्णुनूषति। ऊर्णुनुविषति। ऊर्णुनविषति। बुभूर्षति। बिभरिषति। ज्ञीप्सति। जिज्ञपयिषति। सिषासति। सिसनिषति। * आशङ्कायां सन्वक्तव्यः *। श्वा मुमूर्षति। * तनिपतिदरिद्रातिभ्यः सनो वेड् वाच्यः *। **(८५४) तनोतेर्विभाषा ६।४।१७** । तनोतेरुपधाया दीर्घो

---

इडभावपक्षे- 'दम्भ स' इति स्थिते 'दम्भ इच्च' इत्यनेन इत्वे 'हलन्ताच्च' इति सनः कित्त्वे 'अनुनासिकस्ये'त्यादिना मलोपे 'एकाचो बशो भष्' इति भष्भावेन दस्य धत्वे 'खरि चे'ति चर्त्वेन भस्य पत्वे द्वित्वेऽभ्यासादिकार्ये 'अत्र लोपः' इत्यभ्यासलोपे संयोगे 'धिप्स' इत्यस्य धातुसंज्ञायां, लटि तिपि शपि अनुबन्धलोपे पररूपे 'धिप्सति' इति। 'दम्भ इच्च' इति ईत्वपक्षे 'धीप्सति' इति।

**आशङ्कायामिति।** आशङ्काविषयक्रियावृत्तेर्धातोः स्वार्थे सन्नित्यर्थः।

(८५४) **'तनोतेर्विभाषे'ति।** 'नोपधायाः' इत्यतः 'उपधायाः' इति, 'ढ्रलोपे पूर्वस्ये'-त्यतः 'दीर्घः' इति चानुवर्तते। 'अनुनासिकस्ये' त्यतः झलीति 'अज्झन०' इत्यतश्च सनीत्यनुवर्तेते। तदाह-**तनोतेरुपधाया इति। तितांसतीति।** तनितुमिच्छतीति विग्रहे 'तनु विस्तारे' इत्यस्माद्धातोः

---

'अ'-'उरत्', रपर, हलादिशेष, 'भ्' = 'ब्'-'अभ्यासे चर्च', 'अ' = 'इ'- 'सन्यतः')- बि भृ इ स ('ऋ' = 'अ'-गुण, रपर, षत्व)-बिभरिष (धातुसंज्ञा, लट् = ल् = तिप् = 'ति', शप् = 'अ', पररूप) = बिभरिषति। **इट् के अभाव पक्ष में-** भृ स ('ऋ' = 'ॠ'-दीर्घ-'अज्झन०', 'ॠ' = 'उ'-'उदोष्ठ्यपूर्वस्य', रपर, द्वित्व, अभ्याससंज्ञा, हलादिशेष, 'उ' = 'ऊ'-दीर्घ, षत्व)- बुभूर्ष (लट् = ल् = तिप् = ति, शप् = 'अ', अ + अ = 'अ' पररूप) = बुभूर्षति।

(७) ✓ ज्ञपि + सन् (= स, विकल्प से इट् = 'इ', द्वित्व, अभ्याससंज्ञा, हलादिशेष, 'अ' = 'इ' इत्व- 'सन्यतः', 'इ' = 'ए'-गुण, 'ए' = 'अय्' आदेश, षत्व)- जिज्ञपयिष (धातुसंज्ञा, लट् = तिप् = 'ति', शप् = 'अ' पररूप) = जिज्ञपयिषति। इट् के न होने पर पक्ष में- ज्ञप् स (अ = 'ई' ईत्-'आप्ज्ञप्यृधामीत्', द्वित्व, अभ्याससंज्ञा, अभ्यास का लोप-'अत्र लोपः')- ज्ञीप्स (लट् = तिप् = 'ति', शप् = 'अ' पररूप) = ज्ञीप्सति।

(८) ✓ सन् + सन् (= स, विकल्प से इट् = 'इ'-'सनीव', द्वित्व, अभ्याससंज्ञा, हलादिशेष, 'अ' = 'इ'-'सन्यतः', षत्व)- सिसनिष (लट् = तिप् = ति, शप् = 'अ' पररूप) = सिसनिषति। इट् के अभावपक्ष में (आत्व-'जनसन०', द्वित्व, अभ्याससंज्ञा, ह्रस्व, 'अ' = इत्व-'इ' षत्व) सिषास (धातुसंज्ञा, लट् = तिप् = ति, शप् = 'अ' पररूप) = सिषासति।

**(वा० )-** आशङ्का अर्थ में भी धातु से सन् प्रत्यय होता है, ऐसा कहना चाहिए।

**उदाहरण- श्वा मुमूर्षति।** ✓ मृङ् (मृ) + सन् (= 'स'- 'आशङ्कायां सन्वक्तव्यः', 'ऋ' = ऊठ् = 'ऊ', रपर, द्वित्व, अभ्यासंज्ञा, हलादिशेष, ह्रस्व, षत्व)- मुमूर्ष (धातुसंज्ञा, लट् = ल् = तिप् = 'ति', शप् = 'अ', पररूप) = मुमूर्षति।

**(वा० )-** तन्, पत् और दरिद्रा धातु से परवर्ती सन् को विकल्प से इट् = 'इ' होता है।

(८५४) **पद-** तनोतेः, विभाषा। **अनुवृत्ति-** सनि, झलि, उपधायाः, दीर्घः। **विधिसूत्र।**

**मूलार्थ-** झलादि सन् के परवर्ती रहते तन् धातु की उपधा को विकल्प से दीर्घ होता है। तितांसति। तितंसति। तितनिषति। कूलं पिपतिषति।

**विमर्श-** सूत्रार्थ की पूर्ति हेतु 'अज्झनगमां सनि' (६।४।१६) से 'सनि', 'अनुनासिकस्य०'

वा स्याज्झलादौ सनि। तितांसति। तितंसति। तितनिषति। कूलं पिपतिषति। ( ८५५ ) **सनि मीमाघुरभलभशकपतपदामच इस् ७।४।५४** । एषामच इस् स्यात् सादौ सनि। अभ्यासलोपः। सलोपः। पित्सति। दिदरिद्रिषति। दिदरिद्रासति। ( ८५६ ) **मुचोऽकर्मकस्य**

---

'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इत्यनेन सनि अनुबन्धलोपे 'तनिपतिदरिद्रातिभ्यः सनो वा इड् वाच्यः' इति वैकल्पिके इटि 'सन्यडोः' इति द्वित्वेऽभ्यासत्वे, हलादिशेषे 'त तन् इ स्' इति जाते 'सन्यतः' इत्यनेन अभ्यासाकारस्येत्वे, षत्वे 'तितनिष्' इत्यस्य धातुसंज्ञायां, लटि तिपि शप्यनुबन्धलोपे पररूपे 'तितनिषति' इति रूपम्। **इडभावपक्षे**–'तनोतेर्विभाषा' इत्युपधादीर्घे, द्वित्वेऽभ्यासत्वे 'सन्यतः' इत्यनेन इत्वे 'तितान् स' इति जाते, नस्यानुस्वारे लटि तत्स्थाने प्रथमपुरुषैकवचने तिपि शपि पररूपे 'तितांसति' इति। **दीर्घाभावे इडभावे च** 'तितंसती'ति तृतीयं रूपम्।

(८५५) **सनि मीमेति**। अत्र 'सः स्यार्द्धधातुके' इत्यतः 'सि' इत्यनुवर्तते। अत आह– **एषामच इत्यादिना। पित्सतीति**। पत् धातोः सनि 'तनिपतिदरिद्रातिभ्यः०' इति वेटि द्वित्वेऽभ्याससंज्ञायां हलादिशेषे 'सन्यतः' इतीत्वे षत्वे लटि तिपि शपि पररूपे च कृते 'पिपतिषति' इति। इडभावपक्षे तु– 'सनि मीमे'त्यनेन अचः स्थाने इसादेशे द्वित्वे 'अत्र लोपोऽभ्यासस्ये'ति अभ्यासलोपे 'स्कोरि'ति सलोपे 'पित्स' इति जाते लटि तिपि शपि पररूपे 'पित्सति' इति रूपम्।

---

(६।४।१५) से 'झलि', 'नोपधायाः' (६।४।६) सूत्र से 'उपधायाः' तथा 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (६।३।११०) से 'दीर्घः' पद की अनुवृत्ति आती है। 'अङ्गस्य' का अधिकार है। तदनुसार–''झलादि सन् के परवर्ती रहते तन् धातु के अङ्ग की उपधा को विकल्प से दीर्घ होता है।''

**उदाहरण**– (१) ✓ तन् + सन् (= 'स', इट् = 'इ' विकल्प से–'तनिपतिदरिद्रातिभ्यः०')– तन् इ स (द्वित्व, अभ्याससंज्ञा, हलादिशेष, 'अ' = 'इ'–इत्व–'सन्यतः', षत्व)– तितनिष् (धातुसंज्ञा, लट् = तिप् = ति, शप् = 'अ', अ + अ = 'अ'–पररूप) = तितनिषति। इट् के अभाव पक्ष में (उपधादीर्घ विकल्प से, न् = ं अनुस्वार, लट् = तिप् = ति, शप् = 'अ', पररूप) = तितांसति। दीर्घ और इट् के अभाव पक्ष में–'तितंसति'।

(८५५) **पद**– सनि, मीमाघुरभलभशकपतपदाम्, अचः, इस्। **अनुवृत्ति**–सि। **विधिसूत्र**।

**मूलार्थ**– सकारादि 'सन्' के परवर्ती रहते मी आदि धातुओं के अच् के स्थान में 'इस्' (=इ) आदेश होता है। पित्सति। दिदरिद्रिषति। दिदरिद्रासति।

**विमर्श**– प्रकृत सूत्र में 'सः स्यार्द्धधातुके' (७।४।४९) सूत्र से 'सि' पद की अनुवृत्ति आती है। अतः ''सकारादि सन् प्रत्यय के परे रहते मी, मा तथा घुसंज्ञक एवं रभ, लभ, शक्, पत् और पद के 'अच्' के स्थान में 'इस्' (='इ') आदेश होता है।

**उदाहरण**– (१) ✓ पत् + सन् (= **स**, विकल्प से इट् = 'इ'–'तनिपति०', द्वित्व, अभ्याससंज्ञा, हलादिशेष, 'अ' = 'इ'–'सन्यतः', षत्व)–पिपतिष (लट् = तिप् = ति, शप् = 'अ', पररूप) = पिपतिषति। **इट् के अभाव पक्ष में**– पत् स ('अ' = 'इ'–'सनि मीमा०', द्वित्व, अभ्याससंज्ञा, अभ्यास का लोप–'अत्र लोपः०', 'स्' का लोप–'स्कोः०')–पित्स (लट् = तिप् = ति, शप् = 'अ', अ + अ = 'अ') = पित्सति। (२) ✓ दरिद्रा + सन् (=स, विकल्प से इट् = 'इ'–'तनिपति०', 'आ'

**गुणो वा ७।४।५७ ।** मुचोऽकर्मकस्य गुणो वा स्यात्सादौ सनि। अभ्यासलोपः। मोक्षते मुमुक्षते वा वत्सः स्वयमेव। अकर्मस्य किम्? मुमुक्षति वत्सं कृष्णः। **( ८५७ ) इट् सनि वा ७।२।४१ ।** वृङ्वृञ्भ्यामृदन्ताच्च सन इड् वा। विवरिषते। विवरीषते। वुवूर्षते।

---

(८५६) **मुचोऽकर्मकस्ये'ति।** 'सः स्यार्द्धधातुके' इत्यतः सि इति 'सनि मीमे'त्यतः सनीति चानुवर्तते। तदाह–**मुचोऽकर्मकस्येति। मोक्षत इति।** मुच्लृधातोः सनि 'मुचोऽकर्मकस्य गुणो वा' इति विकल्पेन गुणे द्वित्वे 'अत्र लोपोऽभ्यासस्ये'ति अभ्यासलोपे 'चोः कुः' इति कुत्वेन चकारस्य ककारे, सस्य षत्वे संयोगेन क्षत्वे लटि 'पूर्ववत्सनः' इत्यात्मनेपदे तङि टेरेत्वे, शपि पररूपे च कृते 'मोक्षते' इति रूपम्। गुणाभावपक्षे तु अभ्यासलोपाभावे 'मुमुक्षते' इति। सूत्रेऽकर्मकस्येत्युक्ते कर्मणः कर्तृत्वविवक्षायामयं विकल्पोऽन्यत्र तु 'मुमुक्षति वत्सं कृष्णः'।

(८५७) **इट् सनीति।** 'वृतो वे'त्यतः 'वृतः' इत्यनुवर्तते। तदाह– **वृङ्वृञ्भ्यामिति। विवरिषते–** वृङ्धातोः सनि 'इट् सनि वे'ति वैभाषिके इटि गुणे रपरत्वे द्वित्वेऽभ्यासत्वे हलादिशेषे 'सन्यतः' इतीत्वे षत्वे तङि टेरेत्वे शपि पररूपे 'विवरिषते' इति। 'वृतो वा' इति दीर्घपक्षे– 'विवरीषते' इति रूपम्। इडागमाभावपक्षे– 'उदोष्ठ्यपूर्वस्ये'ति उत्वे 'हलि चे'ति दीर्घे द्वित्वेऽभ्यासत्वे ह्रस्वे हलादिशेषे षत्वे लटि तङि शपि टेरेत्वे पररूपत्वे 'वुवूर्षते' इति। परस्मैपदे तु विवरिषति, विवरीषति, वुवूर्षति इति।

---

का लोप–'आतो लोप इटि च', द्वित्व, 'अ' = 'इ'–'सन्यतः', षत्व)–दिदरिद्रिष (लट् = तिप् = ति, शप् = 'अ' पररूप) = दिदरिद्रिषति। **इडागम के अभाव पक्ष में–** दिदरिद्रासति।

(८५६) **पद–** मुचः, अकर्मकस्य, गुणः, वा। **अनुवृत्ति–** सनि, सः। **विधिसूत्र।**

**मूलार्थ–** सकारादि सन् के परवर्ती रहते अकर्मक मुच् धातु को विकल्प से गुण होता है। मोक्षते, मुमुक्षते वा वत्सः स्वयमेव।

**विमर्श–** पूर्वसूत्र (८५५) से 'सनि' तथा 'सः स्यार्द्धधातुके' (७।४।४९) से 'सि' की अनुवृत्ति आती है। तदनुसार– ''सकारादि सन् प्रत्यय के परे रहते अकर्मक मुच्लृ धातु को विकल्प से गुण होता है।''

**उदाहरण–** (१) ✓ मुच् + सन् (=स, 'उ' = 'ओ'–गुण विकल्प से–'मुचोऽकर्मकस्य०', द्वित्व, अभ्याससंज्ञा, अभ्यास का लोप–'अत्र लोपः०', 'च्' = 'क्'– 'चोः कुः', षत्व, क् + ष् = क्ष्)– मोक्ष (लट् = आत्मनेपद त, शप् = 'अ', एत्व) = मोक्षते। गुण के अभावपक्ष में अभ्यासलोप भी नहीं होता– मुमुक्षते।

**प्रत्युदाहरण–** सूत्र में 'अकर्मकस्य' पद का ग्रहण होने से अकर्मक ✓ मुच् को ही गुण होता है। 'मुमुक्षति वत्सं कृष्णः' वाक्यघटक सकर्मक 'मुमुक्षति' में गुण नहीं होता।

(८५७) **पद–** इट्, सनि, वा। **अनुवृत्ति–** वृतः। **विधिसूत्र।**

**मूलार्थ–** वृङ्, वृञ् और ॠदन्त धातुओं से परवर्ती सन् को विकल्प से इट् होता है। विवरिषते। विवरीषते। वुवूर्षते इत्यादि।

**विमर्श–** 'वृतो वा' (७।२।३८) से 'वृतः' पद की अनुवृत्ति आ रही है। तदनुसार ''वृ तथा ॠकारान्त धातु से परे सन् को विकल्प से इट् (इ) का आगम होता है।''

**उदाहरण–** (१) ✓ वृञ् + सन् (= 'स', विकल्प से इट् = 'इ', 'ऋ' = 'अ'–'गुण',

विवरिषति। तितरिषति। तितरीषति। तितीर्षति। **(८५८) स्मिपूङ्रञ्ज्वशां सनि ७।२।७४ ।** स्मिङ्-पूङ्-ऋ-अञ्जु-अश्-एभ्यः सन इट्। सिस्मयिषते। पिपविषते। अरिरिषति। अञ्जिजिषति। अशिशिषति। गुप गोपने। तिज निशाने। कित निवासे रोगापनयने च। मान पूजायाम्। बध बन्धने। दान खण्डने। शान तेजने। **(८५९) गुप्तिज्किद्भ्यः सन् ३।१।५ । (८६०) मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य**

---

(८५८) **स्मिपूङिति।** 'इडत्यर्तिव्ययतीनामि'त्यतः इडित्यनुवर्तते। अत आह-'**स्मिपूङि**'-त्यादिना। **सिस्मयिषते**- स्मिङ्धातोः सनि 'स्मिपूङ्रञ्ज्वशां सनि' इति इटि, गुणेऽयादेशे द्वित्वेऽभ्यासकार्ये 'सन्यतः' इतीत्वे षत्वे लटि तङि टेरेत्वे शपि पररूपे 'सिस्मयिषते' इति।

(८५९) **गुप्तिज्किद्भ्यः सन्।** स्पष्टम्।

(८६०) **मान्बधेति।** 'गुप्तिज्०' इत्यतः सनिति अनुकृष्यते। मान्बधदान्शान्भ्यो धातुभ्यः

---

रपर, हलादिशेष, 'अ' = 'इ'-'सन्यतः' षत्व, विकल्प से दीर्घ)-विवरिष + लट् (= आत्मनेपद 'त', शप् = 'अ', टि' को एत्व, पररूप) = विवरिषते। 'वृतो वा' से दीर्घ के अभाव पक्ष में- विवरिषते। परस्मैपद पक्ष में- विवरीषति। विवरिषति। इडागम के अभाव पक्ष में- वृ स ('ऋ' = 'उ'-'उदोष्ठ्यपूर्वस्य' रपर, 'उ' = 'ऊ'-दीर्घ-'हलि च' द्वित्व, अभ्याससंज्ञा, ह्रस्व, हलादिशेष, षत्व)-वुवूर्ष + लट् (= 'त', शप् = 'अ', टि को एत्व, पररूप) = वुवूर्षते। परस्मैपद पक्ष में- वुवूर्षति।

(२) ✓ तृ + सन् (= स, विकल्प से 'इट्'-'इट्'-'इट् सनि वा', गुण, रपर, द्वित्व, हलादिशेष, इत्व, विकल्प से दीर्घ-'इ' = 'ई'-'वृतो वा')- तितरीष (लट् = तिप् = 'ति', 'शप्' = 'अ', पररूप) = तितरीषति। दीर्घ के अभावपक्ष में-तितरिषति। इडागम के अभाव पक्ष में- तृ + स ('ऋ' = 'इ'-'ॠत इद्धातोः', रपर, द्वित्व, अभ्याससंज्ञा, हल् का लोप, दीर्घ)-तितीर्ष (लट् = तिप् = 'ति', शप् = 'अ', पररूप) = तितीर्षति।

(८५८) **पद**- स्मिपूङ्रञ्ज्वशाम्, सनि। **अनुवृत्ति**- इट्। **विधिसूत्र।**

**मूलार्थ**- स्मिङ् आदि धातुओं से परवर्ती 'सन्' को इट् (= इ) का आगम होता है। सिस्मयिषते इत्यादि।

**विमर्श**- यहाँ 'इडत्त्यर्तिव्ययतीनाम्' (७।२।६६) से 'इट्' की अनुवृत्ति आती है। अतः "स्मिङ्, पूङ्, ऋ, अञ्जू और अशू धातुओं के सन् को इट् (इ) का आगम होता है।"

**उदाहरण**- (१) ✓ स्मिङ् + सन् (= स, इट्-'स्मिपूङ्०', 'इ' = 'ए'-गुण, 'ए' = 'अय्', द्वित्व, अभ्याससंज्ञा, हलादिशेष, 'अ' = 'इ' इत्व, षत्व)- सिस्मयिष (लट् = आत्मनेपद-'पूर्ववत्सनः'-'त', शप् = 'अ' एत्व, पररूप) = सिस्मयिषते। (२) ✓ पू + सन् (= स, इट्-'स्मिपूङ्०' गुण, अव् आदेश, द्वित्व, हलादिशेष, इत्व)-पिपविष (लट् = 'त', शप् = अ, एत्व, पररूप पिपविषते। (३) ✓ ऋ + सन् (= स, इट् = 'इ'-'स्मिपूङ्' ऋ = 'अ'-गुण, रपर, 'रि' को द्वित्व, षत्व)-अरिरिष (लट् = तिप् = ति, शप् = 'अ' पररूप) = अरिरिषति। (४) ✓ अञ्ज् + सन् (पूर्ववत् प्रक्रिया) = अञ्जिजिषति। (५) ✓ अश् + सन् = अशिशिषति।

(८५९) **पद**- गुप्तिज्किद्भ्यः, सन्। **विधिसूत्र।**

**मूलार्थ**- गुप्, तिज् और कित् धातुओं से सन् प्रत्यय होता है।

(८६०) **पद**- मान्बधदान्शान्भ्यः, दीर्घः, च, अभ्यासस्य। **अनुवृत्ति**-सन्। **विधिसूत्र।**

**३।१।६ । सूत्रद्वयोक्तेभ्यः सन् स्यात् मानादीनामभ्यासस्येकारस्य दीर्घश्च। गुपेर्निन्दायाम्। तिजेः क्षमायाम्। कितेर्व्याधिप्रतीकारे, निग्रहे, अपनयने, नाशने संशये च। मानेर्जिज्ञासायाम्। बधेश्चित्तविकारे। दानेरार्जवे। शानेर्निशाने। गुपिप्रभृतयः किद्भिन्ना निन्दाद्यर्थका एवानुदात्तेतो, दानशानौ तु स्वरितेतौ। एष्वर्थेषु एते नित्यसन्नन्ताः। अर्थान्तरे त्वननुबन्धकाश्चुरादयः। अनुबन्धस्य केवलेऽचरितार्थत्वात् सन्नन्तात् पदव्यवस्था।**

---

सन् स्यात्सनि चाभ्यासस्य दीर्घः स्यादित्यर्थः। **अनुबन्धस्येति**। केवले ह्यचरितार्थं लिङ्गं समुदायोपकारकं भवतीति न्यायात् सन्नन्तेभ्यः तत्तदनुबन्धानुसारं पदव्यवस्था आत्मनेपदं परस्मैपदं वेति। **जुगुप्सते–** गुप्धातोर्निन्दायां 'गुप्तिज्किद्भ्यः सन्' इत्यनेन सनि 'हलन्ताच्च' इति कित्त्वाद्गुणाभावे द्वित्वेऽभ्यासकार्ये च 'गुगुप् स' इति जाते 'कुहोश्चुः' इति गस्य जत्वे धातुसंज्ञायां 'पूर्ववत्सनः' इत्यात्मनेपदे लटि तप्रत्यये शपि टेरेत्वे पररूपे च कृते 'जुगुप्सते'

---

**मूलार्थ–** मान्, बध, दान् और शान् धातुओं से सन् प्रत्यय होता है और अभ्यास के इकार को दीर्घ होता है।

**विमर्श–** पूर्वसूत्र (८५९) से 'सन्' पद की अनुवृत्ति आती है। तदनुसार–"मान्, बध, दान् और शान् धातुओं से सन् (= स) प्रत्यय होता है तथा अभ्यास के इकार को दीर्घ आदेश हो जाता है।"

सूत्र (८५९) में पठित ✓ गुप् धातु से निन्दा अर्थ में, ✓ तिज् से क्षमा अर्थ में, ✓ कित् से रोग के दूरीकरण अर्थ में तथा निग्रह (पकड़ना), हटाना, नष्ट करना और संशय अर्थ में सन् प्रत्यय होता है। इसी प्रकार प्रकृत सूत्र में पठित धातु ✓ मान् से जिज्ञासा अर्थ में, ✓ बध से चित्तविकार अर्थ में, ✓ दान् से आर्जव (सरलता) अर्थ में तथा ✓ शान् से तेज करना अर्थ में सन् होता है। ✓ गुप् इत्यादि कित् से भिन्न निन्दाद्यर्थक ही अनुदात्तेत् हैं। दान् और शान् स्वरितेत् हैं। उक्त अर्थों में ही ✓ गुप् आदि धातुओं से सन् प्रत्यय होता है, इच्छा अर्थ में नहीं। तत्तदर्थ-विशेष में अनुबन्ध रहित धातुएँ चुरादिगण-पठित हैं। सन्नन्त से तत्तद् अनुबन्ध के अनुसार ही आत्मनेपद या परस्मैपद की व्यवस्था की जाती है। यह सन् धातु से विहित नहीं है। अतः आर्द्धधातुक संज्ञा न होने से इट् और गुण नहीं होता।

**उदाहरण–** (१) ✓ गुप् + सन् (= 'स' निन्दा अर्थ में– 'गुप्तिज्किद्भ्यः सन्', द्वित्व, अभ्याससंज्ञा, हलादिशेष, 'ग्' = 'ज्'–चर्त्व, 'हलन्ताच्च' से कित् होने के कारण प्राप्त गुण का 'क्ङिति च' से निषेध)–जुगुप्स + लट् (= आत्मनेपद 'त' शप् = 'अ', 'टि' को एत्व, पररूप) = जुगुप्सते। (२) ✓ तिज् + सन् (= स, द्वित्व, अभ्याससंज्ञा, हलादिशेष, कित्त्व होने से गुणाभाव, 'ज्' = 'क्' कुत्व–'चोः कुः', षत्व, क् + ष् = क्ष्)– तितिक्ष + लट् (= त, शप् = अ, पररूप, एत्व) = तितिक्षते। (३) ✓ कित् + सन् (=स, द्वित्व, अभ्यासकार्य, कुत्व, कित्त्व होने से गुणाभाव)– चिकित्स (लट् = तिप् = 'ति', शप् = 'अ', पररूप) = चिकित्सति। (४) ✓ मान् + सन् (= 'स'– जिज्ञासा अर्थ में– 'मान्बध०' द्वित्व, अभ्याससंज्ञा, हलादिशेष, ह्रस्व, 'अ' = 'इ'–'सन्यतः', दीर्घ–'मान्बधदान्०', अनुस्वार)– मीमांस (+ लट् = 'त', शप् = 'अ', पररूप, एत्व) = मीमांसते। (५) ✓ बध् + सन् (= 'स'–चित्तविकार अर्थ में, द्वित्व, अभ्याससंज्ञा, हलादिशेष, इत्व–'सन्यतः', दीर्घ–'मान्बध०', 'ब्' = 'भ्'–भष्भाव–'एकाचो०', 'ध्' = 'त्'–चर्त्व–'खरि च')–बीभत्स (लट् = 'त', शप् = 'अ',

**'धातोरि'त्यविहितत्वात्सनोऽत्र नार्द्धधातुकत्वम्। तेनेड्गुणौ न। जुगुप्सते। तितिक्षते। चिकित्सति। मीमांसते। बीभत्सते। दीदांसति। दीदांसते। शीशांसति। शीशांसते। णिचि तु गोपायति। गोपायते इत्यादि।**

**इति सन्नन्तप्रकरणम् ।**



---

इति रूपम्। **मीमांसते–** मान्धातोर्जिज्ञासायां 'मान्बधदान्शान्भ्य:' इति सनि, द्वित्वेऽभ्यासत्वे ह्रस्वे हलादिशेषे 'सन्यत:' इतीत्वे 'मान्बधे'ति दीर्घे, लटि तङि शपि टेरेत्वे पररूपे 'मीमांसते' इति। एवं बीभत्सते इत्यादि।

**इति सन्नन्तप्रकरणम् ।**



---

पररूप, एत्व) = बीभत्सते। (६) ✓ दान् धातु से लट् में– दीदांसते, दीदांसति। (७) ✓ शान् से— लट् आ० प०–शीशांसते। प० प०–शीशांसति। (८) ✓ गुप् धातु से णिच् प्रत्यय होने पर लट् लकार में– गोपायते। गोपायति।

**सन्नन्त-प्रकरण समाप्त ।**



## अथ यङन्तप्रकरणम्

**(८६१) धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३।१।२२ ।** पौनःपुन्ये भृशार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ्। **(८६२) गुणो यङ्लुकोः ७।४।८२ ।** अभ्यासस्य 'सनाद्यन्ता' इति धातुत्वाल्लडादयः। ङिदन्तत्वादात्मनेपदम्। पुनः पुनरतिशयेन वा भवति बोभूयते। बोभूयाञ्चक्रे। अबोभूयिष्ट। धातोः किम्? आर्द्धधातुकत्वं

---

सन्प्रक्रियां निरूप्येदानीं यङन्तप्रकरणमारभते–

(८६१) **धातोरेकाच इति। द्योत्य इति**। क्रियासमभिव्याहारे भृशार्थे द्योत्ये इति मूलार्थकथनम्। अन्यथा वाच्यत्वे प्रत्ययवाच्यस्य प्रधानतया सन्नन्ते इच्छया इव तस्य विशेष्यत्वं स्यादिति भावः।

(८६२) **गुणो यङ्लुकोरिति**। 'अत्र लोपोऽभ्यासस्य' इत्यस्मादभ्यासस्येत्यनुवर्तते। तदाह–**अभ्यासस्येति। बोभूयते**— पुनः पुनरतिशयेन वा भवतीत्यस्मिन्विग्रहे भूधातोः 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इत्यनेन यङ्प्रत्ययेऽनुबन्धलोपे 'सन्यङोः' इति द्वित्वेऽभ्यासकार्ये, बु भू य इति जाते 'गुणो यङ्लुकोः' इत्यनेनाभ्यासस्य गुणे 'बोभूय' इत्यस्य

---

सन्नन्त-प्रकरण के अनन्तर यङन्त धातुरूपों की साधनिका बतायी जा रही है–

(८६१) **पद**– धातोः, एकाचः, हलादेः, क्रियासमभिहारे, यङ्। **विधिसूत्र**।

**मूलार्थ**– पौनःपुन्य (बार-बार) और भृशार्थ (अत्यधिकता) के द्योत्य होने पर एकाच् हलादि धातु से 'यङ्' प्रत्यय होता है।

**विमर्श**– एकाच् और हलादि धातु से विधान होने के कारण अनेकाच् और अजादि धातुओं से 'यङ्' प्रत्यय नहीं होता। 'यङ्' का विकल्प से विधान होने के कारण धातु के साथ 'पुनः-पुनः' या 'भृशम्' को जोड़कर भी अर्थ प्रकट किया जाता है। जैसे– 'बोभूयते' के स्थान पर 'पुनः पुनर्भवति, अतिशयेन भृशं वा भवति' का भी प्रयोग किया जाता है।

(८६२) **पद**– गुणः, यङ्लुकोः। **अनुवृत्ति**– अभ्यासस्य। **विधिसूत्र**।

**मूलार्थ**– 'यङ्' के परवर्ती रहते और यङ्लुक् के विषय में अभ्यास को गुण होता है।

**विमर्श**– यहाँ 'अत्र लोपोऽभ्यासस्य' (७।४।५८) से 'अभ्यासस्य' पद की अनुवृत्ति आ रही है। सूत्रस्थ 'लुक्' पद से समीपस्थ यङ् के लुक् का ही ग्रहण होता है। अतः ''यङ् के परे रहते तथा 'यङ्लुक्' के विषय में अभ्यास को गुण होता है।''

**उदाहरण**– (१) ✓ भू + यङ् (= 'य'–'धातोरेकाचो हलादेः०', द्वित्व–'सन्यङोः', अभ्यास संज्ञा, ह्रस्व, 'भ्' = 'ब्'–चर्त्व, अभ्यास के 'उ' = 'ओ'–गुण–'गुणो यङ्लुकोः')– बोभूय (धातुसंज्ञा, 'यङ्' के ङित् होने से आत्मनेपद लट् = 'त', शप् = 'अ')– बोभूय अ त ('अ' = 'ए' एत्व– 'टित आत्मनेपदानां टेरे', अ + अ = 'अ' पररूप) = बोभूयते। (२) ✓ भू + यङ् (= 'य', द्वित्व, अभ्यासकार्य पूर्ववत्)– बोभूय + लिट् (आम् प्रत्यय, लिट् का लुक्, लिट्परक कृ का अनुप्रयोग 'कृञ्चानुप्रयुज्यते लिटि' लिट् = त = एश् = 'ए')– बोभूयाम् कृ ए (द्वित्व, अत्व, रपर, हलादिशेष, चर्त्व, अनुस्वार, परसवर्ण, 'ऋ' = 'र्'–यण्) = बोभूयाञ्चक्रे। (३) ✓ भू + यङ् (= 'य', द्वित्व,

**यथा स्यात्। तेन 'ब्रुवो वचिरि'त्यादि। एकाचः किम्? पुनः पुनर्जागर्ति। हलादेः किम्? भृशमीक्षते। ( ८६३ ) नित्यं कौटिल्ये गतौ ३।१।२३ । गत्यर्थात् कौटिल्ये एव यङ् न तु क्रियासमभिहारे। ( ८६४ ) दीर्घोऽकितः ७।४।८३ । अकितोऽभ्यासस्य दीर्घो, यङ्यङ्लुकोः। कुटिलं व्रजति वाव्रज्यते। ( ८६५ ) यस्य हलः ६।४।४९ । यस्येति**

---

'सनाद्यन्ता धातवः' इति धातुसंज्ञायां ङित्त्वादात्मनेपदे लटि तत्स्थाने तप्रत्यये शप्यनुबन्धलोपे 'टित आत्मनेपदानां टेरे' इति टेरेत्वे 'अतो गुणे' इति पररूपे संयोगे कृते 'बोभूयते' इति।

(८६३) **नित्यमिति**। 'धातोरेकाच' इत्यतः धातोरिति यङिति चानुवर्तते। अत आह- **गत्यर्थादित्यादिना**।

(८६४) **दीर्घोऽकितः**। 'अत्र लोपः' इत्यस्मादभ्यासस्येति, 'गुणो यङ्लुकोः' इत्यतः 'यङ्लुकोः' इति चानुवर्तते। तदाह-**अकितोऽभ्यासस्येति**। **वाव्रज्यते**- व्रजधातोः 'नित्यं कौटिल्ये गतौ' इति यङ्प्रत्यये द्वित्वेऽभ्यासादिकार्ये 'दीर्घोऽकितः' इत्यभ्यासाकारस्य दीर्घे

---

अभ्यासकार्य, गुण पूर्ववत्)-बोभूय + लुङ् (= आत्मनेपद 'त', अट् = 'अ' का आगम)-अबोभूय त (च्लि, च्लि = सिच् = 'स्', आर्धधातुकसंज्ञा, 'अ' का लोप-'अतो लोपः', इट् = 'इ'- 'आर्धधातुकस्येड्वलादेः', 'स्' = 'ष्'-षत्व, 'त्' = 'ट्'-ष्टुत्व) = अबोभूयिष्ट।

**प्रत्युदाहरण**- (१) **धातोः किम्?** —सूत्र (८६१) में 'धातोः' पद का ग्रहण आर्धधातुकत्व के लिए है। क्यों? आर्धधातुकसंज्ञा में धातु से विहित व्याख्यान मिलता है। अतः 'ब्रुवो वचिः' सूत्र द्वारा आर्धधातुक के विषय में ब्रूञ् धातु को 'वच्' आदेश होता है। (२) **एकाचः किमिति**- 'पुनः पुनर्जागर्ति' सूत्र में एकाच् धातु से यङ् का विधान होने से अनेकाच् ✓ 'जागृ निद्राक्षये' से यङ् नहीं होता। (३) **हलादेः किमिति**- 'भृशमीक्षते'। सूत्रस्थ 'हलादेः' पद का ग्रहण होने से अजादि 'ईक्ष्' धातु से यङ् नहीं होता।

(८६३) **पद**- नित्यम्, कौटिल्ये, गतौ। **अनुवृत्ति**- धातोः, यङ्। **विधिसूत्र**।

**मूलार्थ**- गत्यर्थक धातुओं से कौटिल्य (वक्रगति) अर्थ में ही यङ् होता है; क्रियासमभिहार अर्थ में यङ् नहीं होता।

**विमर्श**- सूत्रार्थ की स्पष्टता हेतु (८६१) सूत्र से 'धातो' और 'यङ्' पदों की अनुवृत्ति आती है। तदनुसार ''गत्यर्थक धातुओं से वक्रगति गम्यमान होने पर ही 'यङ्' प्रत्यय होता है। क्रियासमभिहार (बार-बार, भृशार्थ) में नहीं।''

(८६४) **पद**- दीर्घः, अकितः। **अनुवृत्ति**- यङ्लुकोः, अभ्यासस्य। **विधिसूत्र**।

**मूलार्थ**- यङ् के परवर्ती रहते और यङ्लुक् के विषय में कित्-भिन्न अभ्यास को दीर्घ होता है। वाव्रज्यते।

**विमर्श**- पूर्वसूत्र (८६२) से 'यङ्लुकोः' की तथा 'अत्र लोपोऽभ्यासस्य' (७।४।५८) से 'अभ्यासस्य' पद की अनुवृत्ति आ रही है। अतः ''यङ् तथा यङ्लुक् के परे रहते कित्-भिन्न अभ्यास को दीर्घ होता है।''

**उदाहरण**- (१) ✓ व्रज् + 'यङ्' (= 'य'-'नित्यं कौटिल्ये गतौ', द्वित्व, अभ्याससंज्ञा, हलादिशेष, अभ्यास के 'अ' = 'आ' दीर्घ-'दीर्घोऽकितः')- वाव्रज्य (धातुसंज्ञा, लट् = 'त', शप् = 'अ', अ + अ = 'अ'-पररूप, टि 'अ' = 'ए'-एत्व) = वाव्रज्यते।

**सङ्घातग्रहणम्। हलः परस्य यशब्दस्य लोपः स्यादार्द्धधातुके। 'आदेः परस्य'। 'अतो लोपः'। वाव्रजाञ्चक्रे। वाव्रजिता। (८६६) रीङृतः ७।४।२७ । अकृद्यकारे असार्वधातुकयकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः। डुकृञ् करणे। चेक्रीयते।**

---

'वाव्रज्य' इत्यस्य धातुसंज्ञायां, लटि प्रथमपुरुषैकवचने तप्रत्यये टेरेत्वे शपि पररूपे 'वाव्रज्यते' इति।

(८६५) **यस्येति**। 'आर्धधातुके' इत्यधिकृतम्। 'अतो लोपः' इत्यतः 'लोपः' इत्यनुवर्तते। तदाह मूले- **हलः परस्येत्यादिना। वाव्रजाञ्चक्रे**- व्रज्धातोः यङि द्वित्वेऽभ्यासादिकार्ये 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घे 'वाव्रज्य' इत्यस्य धातुसंज्ञायां, लिटि अनेकाच्त्वादाम्प्रत्यये 'आदेः परस्ये'ति सूत्रबलात् 'यस्य हलः' इत्यनेन यकारलोपे 'अतो लोपः' इत्यकारलोपे 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इत्यनेन कृञोऽनुप्रयोगे लिटि तत्स्थाने तप्रत्यये तस्य 'लिटस्तझयोरेशिरेचि'त्यनेन एशादेशेऽनुबन्धलोपे द्वित्वेऽभ्यासकार्ये, वाव्रजाम् च कृ ए इति जाते, मस्यानुस्वारे परसवर्णे ऋकारस्य यणादेशे संयोगे च 'वाव्रजाञ्चक्रे' इति।

(८६६) **रीङृत्त इति**। रीडित्यादेशकथनम्। अत्र 'च्वौ चे'त्यतः 'च्वावि'ति, 'अकृत्सार्वधातुकयोः' इत्यतः 'अकृत्सार्वधातुकयोः' इति 'अयङ् यि' इत्यतश्च 'यि' इति पदमनुवर्तते। 'ऋतः' इति षष्ठी। अत आह- **अकृद्यकार इत्यादि। चेक्रीयते**-पुनः पुनः करोतीति

---

(८६५) **पद**- यस्य, हलः। **अनुवृत्ति**- लोपः, आर्द्धधातुके। **विधिसूत्र**।

**मूलार्थ**- आर्धधातुक के परवर्ती रहते हल् से उत्तरवर्ती 'य' का लोप होता है। वाव्रजाञ्चक्रे। वाव्रजिता।

**विमर्श**- 'आर्द्धधातुके' (६।४।४६) का अधिकार है। 'अतो लोपः' (६।४।४८) से 'लोपः' की अनुवृत्ति आ रही है। तदनुसार- ''हल् से उत्तर स्थित 'य' का लोप होता है, आर्द्धधातुक के परे रहते।''

**उदाहरण**- (१) ✓ व्रज् + यङ् (= 'य', द्वित्व, अभ्याससंज्ञा, हलादिशेष, अभ्यास 'अ' = 'आ' दीर्घ)- वाव्रज्य + लिट् (अनेकाच् होने से 'आम्' प्रत्यय-'कास्यनेकाच०', 'य्' का लोप- 'यस्य हलः', 'अ' का लोप, लिट् का लुक्-'आमः')- वाव्रजाम् (लिट्परक ✓ कृ का अनुप्रयोग- 'कृञ्चानुप्रयुज्यते लिटि', लिट् = त = एश् = 'ए', धातु को द्वित्व, 'ऋ' = 'अ', रपर, हलादिशेष, 'क्' = 'च्'- चर्त्व, म् = ं अनुस्वार, ं = 'ञ्'-परसवर्ण, 'ऋ' = 'र्'-यण्) = वाव्रजाञ्चक्रे। (२) ✓ व्रज् + यङ् (= 'य', द्वित्व, अभ्यासकार्य, दीर्घ)-वाव्रज्य + लुट् (= त = डा = आ, तास्, 'य्' का लोप-'यस्य हलः', 'अ' का लोप, इट्, टि 'आस्' का लोप) = वाव्रजिता।

(८६६) **पद**- रीङ्, ऋतः। **अनुवृत्ति**- च्वौ, अकृत्सार्वधातुकयोः, यि। **विधिसूत्र**।

**मूलार्थ**- कृद्-भिन्न यकार तथा असार्वधातुक यकार तथा च्वि प्रत्यय के परवर्ती रहते ऋदन्त अङ्ग को 'रीङ्' आदेश होता है। चेक्रीयते।

**विमर्श**- प्रकृत सूत्र में 'च्वौ च' (७।४।२६) से 'च्वौ', 'अकृत्सार्वधातुकयोर्दीर्घः' (७।४।२५) से 'अकृत्सार्वधातुकयोः' तथा 'अयङ् यि०' (७।४।२२) से 'यि' पद की अनुवृत्ति आती है। इस प्रकार ''कृत्-भिन्न एवं सार्वधातुक-भिन्न यकार अथवा 'च्वि' प्रत्यय के परे रहते ऋकारान्त अङ्ग को रीङ् (री) आदेश होता है।

**(८६७) रीगृदुपधस्य च ७।४।९०।** ऋदुपधस्य धातोरभ्यासस्य रीगागमो यङ्यङ्लुकोः। वरीवृत्यते। वरीवृताञ्चक्रे। वरीवृतिता। 'क्षुभ्नादिषु च'। एषु णत्वं न। नरीनृत्यते। जरीगृह्यते। * रीगृत्वत इति वाच्यम् *। वरीवृश्च्यते। (८६८)

---

विग्रहे कृधातोः यङि 'रीङ् ऋतः' इति ऋकारस्य स्थाने रीङादेशेऽनुबन्धलोपे द्वित्वेऽभ्यासत्वे हलादिशेषे ह्रस्वे चर्त्वे 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणे 'चेक्रीय' इत्यस्य धातुसंज्ञायां, लटि आत्मनेपदे तप्रत्यये टेरेत्वे शपि अनुबन्धलोपे पररूपे 'चेक्रीयते' इति रूपम्।

(८६७) **रीगृदुपधस्येति**। अत्र 'गुणो यङ्लुकोः' इत्यस्माद्यङ्लुकोरिति, 'अत्र लोपः' इत्यस्मादभ्यासस्येति चानुवर्तते। तदाह–**ऋदुपधस्येति**। **वरीवृत्यते**– 'पुनः पुनरतिशयेन भृशं वा वर्तते' इत्यस्मिन् विग्रहे वृत्धोतोर्यङि द्वित्वेऽभ्याससंज्ञायाम् 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे 'ववृत् य' इति जाते 'रीगृदुपधस्य चे'त्यनेनाभ्यासस्य रीगागमेऽनुबन्धलोपे धातुत्वे लटि प्रथमपुरुषैकवचने तप्रत्यये टेरेत्वे शपि अनुबन्धलोपे पररूपे 'वरीवृत्यते' इति रूपम्।

---

**उदाहरण–** (१) ✓ कृ + यङ् (= 'य', 'ऋ' = रीङ् = 'री', 'क्री' को द्वित्व, अभ्यासकार्य, ह्रस्व, 'क्' = 'च्'– 'कुहोश्चुः' अभ्यास-स्थित 'इ' = 'ए'–गुण–'गुणो यङ्लुकोः')–चेक्रीय (धातुसंज्ञा, लट् = आत्मनेपद 'त', एत्व, शप् = 'अ', पररूप) = चेक्रीयते।

(८६७) **पद–** रीक्, ऋदुपधस्य। **अनुवृत्ति–** यङ्लुकोः, अभ्यासस्य। **विधिसूत्र**।

**मूलार्थ–** यङ् और यङ्लुक् के विषय में ऋदुपध धातु के अभ्यास को रीक् (=री) का आगम होता है। वरीवृत्यते। वरीवृताञ्चक्रे। वरीवृतिता इत्यादि।

**विमर्श–** पूर्वसूत्र (८६२) से 'यङ्लुकोः' तथा 'अत्र लोपः०' (७।४।५८) से 'अभ्यासस्य' की अनुवृत्ति आती है। तदनुसार– ''ऋकारोपध धातुं के अभ्यास को रीक् (= री) का आगम होता है, यङ् के परवर्ती रहते और यङ्लुक् के विषय में।''

**उदाहरण–** ✓ (१) वृत् + यङ् (= 'य', द्वित्व, अभ्याससंज्ञा, 'ऋ' = 'अ'–'उरत्', रपर, हलादिशेष, रीक् = 'री' का आगम)– वरीवृत्य (धातुसंज्ञा, लट् = 'त', शप् = 'अ', पररूप, 'अ' = 'ए'–एत्व) = वरीवृत्यते। (२) ✓ वृत् + यङ् (= 'य', द्वित्व, अभ्यासत्व, अत्व, रपर, हलादिशेष, रीक् = 'री' का आगम–'रीगृदुपधस्य च')–वरीवृत्य (+ धातुसंज्ञा, लिट्, अनेकाच्त्वात् आम्, 'य्' का लोप–'यस्य हलः', अकारलोप–'अतो लोपः', लिट् का लुक्–'आमः', लिट्परक ✓ कृ का अनुप्रयोग, लिट् = त = एश् = 'ए', द्वित्व, अत्व, रपर, हलादिशेष, चुत्व)– वरीवृताम् च कृ ए म् (=ं = 'ञ्' परसवर्ण, 'ऋ' = 'र्'–यण्) = वरीवृताञ्चक्रे। (३) लुट्–वरीवृतिता। (४) ✓ नृत् + यङ् (= 'य' द्वित्व, अभ्याससंज्ञा, अत्व, रपर, हलादिशेष)– न नृत्य (रीक् = 'री'–'रीगृदुपधस्य च' धातुसंज्ञा, लट् = 'त', शप् = 'अ', अ + अ = 'अ' पररूप (एत्व) = नरीनृत्यते। यहाँ 'अट्कुप्वाङ्नुम्व्यवायेऽपि' से प्राप्त 'न्' = 'ण्' णत्व का 'क्षुभ्नादिषु च' से निषेध हो जाता है। (५) ग्रह् + यङ् (= 'य', 'र्' = 'ऋ'–सम्प्रसारण, पूर्वरूप–'सम्प्रसारणाच्च')– गृह् य (द्वित्व, अभ्यासत्व, अत्व, रपर, हलादिशेष, चर्त्व, रीक् = 'री' का आगम)–जरीगृह्य (धातुसंज्ञा, लट् = 'त', शप् = 'अ' पररूप, एत्व) = जरीगृह्यते।

**(वा०)**– 'ऋकारवान् धातु के अभ्यास को रीक् आगम होता है' ऐसा कहना चाहिए।

**उदाहरण–** ✓ ओ व्रश्चू (व्रश्च्) + यङ् (= 'य', 'र्' = 'ऋ'–सम्प्रसारण–'ग्रहिज्या०', पूर्वरूप–

**लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् ३।१।२४।** एभ्यो धात्वर्थगर्हायामेव यङ् स्यात्। गर्हितं लुम्पति लोलुप्यते। सासद्यते। **(८६९) चरफलोश्च ७।४।८७।** अनयोरभ्यासस्याऽतो नुक् यङ्यङ्लुकोः। 'नुगि'त्यनेनानुस्वारो लक्ष्यते। स च पदान्तवद्वाच्यः। 'वा पदान्तस्ये'ति यथा स्यात्। **(८७०) उत्परस्यातः ७।४।८८।**

---

(८६८) **लुपसदचरेति**। 'धातोरेकाचः' इत्यतः 'यङि' त्यनुवर्तते। भावः धात्वर्थः, तद्गता गर्हा = निन्दा, भावगर्हा, तस्यामित्यर्थः। **लोलुप्यते**– 'गर्हितं लुम्पती'त्यर्थे लुप्धातोः 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायामि'त्यनेन यङि, द्वित्वेऽभ्यासत्वे हलो लोपे, 'गुणो यङ्लुकोः' इति गुणे 'लोलुप्य' इत्यस्य धातुसंज्ञायां, लटि तङि टेरेत्वे शपि अनुबन्धलोपे पररूपे च कृते 'लोलुप्यते' इति।

(८६९) **'चरफलोश्चे'ति**। 'अत्र लोपः' इत्यस्मादभ्यासस्येत्यनुवर्तते। 'नुगितोऽनुनासिकान्तस्ये'त्यतः नुगिति, 'गुणो यङ्लुकोः' इत्यतः यङ्लुकोरिति चानुवर्तते। अत आह– **अनयोरभ्यासस्येत्यादिना**।

(८७०) **उत्परस्येति**। अत्र 'चरफलोश्चे'ति सूत्रम्, पूर्ववदभ्यासस्येति यङ्लुकोरिति चानुवर्तेते। अनुवृत्तमभ्यासस्येति पदं पञ्चम्यन्ततया विपरिणम्यते। तदाह– **चरफलोरित्यादि**।

---

'सम्प्रसारणाच्च', द्वित्व, अत्व, रपर, हलादिशेष)– व वृश्च्य (रीक् = 'री' का आगम–'रीगृत्वत इति वाच्यम्' + लट् = 'त', शप् = 'अ', पररूप, एत्व) = वरीवृश्च्यते।

(८६८) **पद**– लुप-सद-चर-जप-जभ-दह-दश-गृभ्यः, भावगर्हायाम्। **अनुवृत्ति**– यङ्। **विधिसूत्र**।

**मूलार्थ**– लुप्, सद् आदि धातुओं से धात्वर्थ निन्दा अर्थ में ही 'यङ्' होता है। लोलुप्यते। सासद्यते।

**विमर्श**– पूर्वसूत्र (८६१) से 'धातोः' तथा 'यङ्' पदों की अनुवृत्ति आ रही है। तदनुसार– ''लुप्, सद्, चर्, जप्, जभ्, दह, दश और गृ धातुओं से भावगर्हा (धात्वर्थ निन्दा) अर्थ में ही 'यङ्' प्रत्यय होता है।'' लोलुप्यते (=काटता है) में काटने की क्रिया खराब ढंग से करता है, वही भावगर्हा है।

**उदाहरण**– (१) ✓ लुप् + यङ् (= 'य'–'लुपसदचर०' द्वित्व, अभ्याससंज्ञा, हलादिशेष, 'उ' = 'ओ'–गुण–'गुणो यङ्लुकोः')–लोलुप्य (लट् = 'त', शप् = 'अ', पररूप, एत्व) = लोलुप्यते। (२) ✓ सद् + यङ् (= 'य' भावगर्हा अर्थ में– 'लुपसदचर', द्वित्व, अभ्याससंज्ञा, हलादिशेष, 'अ'= 'आ'–दीर्घ–'दीर्घोऽकितः')– सा सद् य (लट् = 'त', शप् = 'अ', पररूप, एत्व) = सासद्यते।

(८६९) **पद**– चरफलोः च। **अनुवृत्ति**– अभ्यासस्य, नुक्, यङ्लुकोः। **विधिसूत्र**।

**मूलार्थ**– 'यङ्' के परवर्ती रहते और यङ्लुक् के विषय में चर् और फल् सम्बन्धी अभ्यास के 'अत्' को नुक् (= न्) का आगम होता है। 'नुक्' से यहाँ अनुस्वार लक्षित होता है। 'वा पदान्तस्य' से विकल्प से परसवर्ण हो जाता है।

**विमर्श**– प्रकृत सूत्र में 'अत्र लोपः'० (७।४।५८) से 'अभ्यासस्य', 'नुगितोऽनुनासिकान्तस्य' (७।४।८५) से 'नुक्' तथा (८६२) सूत्र से 'यङ्लुकोः' की अनुवृत्ति आती है। तदनुसार– ''यङ् तथा यङ्लुक् के परे रहते चर् और फल के अभ्यास को भी 'नुक्' का आगम होता है।''

(८७०) **पद**– उत्, परस्य, अतः। **अनुवृत्ति**– चरफलोः, यङ्लुकोः, अभ्यासस्य। **विधिसूत्र**।

चरफलोरभ्यासात्परस्याऽत उत्स्याद्यङ्यङ्लुकोः। 'हलि चे'ति दीर्घः। चञ्चूर्यते। पंफुल्यते पम्फुल्यते। **( ८७१ ) जपजभदहदशभञ्जपशां च ७।४।८६ ।** एषामभ्यासस्य नुक् स्याद्यङ्यङ्लुकोः। गर्हितं जपति जञ्जप्यते। **( ८७२ ) न कवतेर्यङि ७।४।६३ ।**

---

**चञ्चूर्यते**–चर्धातोर्यङि द्वित्वेऽभ्यासकार्ये च चर् य इति जाते 'चरफलोश्चे'ति नुगागमेऽनुबन्धलोपे 'नुगि'त्यनेनानुस्वारो लक्ष्यते स पदान्तवद्वाच्यः इत्यनेन पदान्तत्वे 'वा पदान्तस्ये'त्यनेन विकल्पेन परसवर्णे 'चञ्चर् य' इति जाते 'उत्परस्याऽतः' इत्यनेनोपधाऽकारस्य उकारे 'हलि चे'त्यनेन दीर्घे संयोगे धातुसंज्ञायां लटि तप्रत्यये शप्यनुबन्धलोपे पररूपे टेरेत्वे 'चञ्चूर्यते' इति। परसवर्णाभावपक्षे– 'चंचूर्यते' इति।

(८७१) **जपजभेति**। 'चरफलोश्चे'ति सूत्रे यदनुवृत्तं तत्सर्वमेवात्रापि अनुवर्तते। तदाह– **'एषामभ्यासस्ये'ति**।

(८७२) **न कवतेर्यङिति**। 'कुहोश्चुरि'त्यतः चुरिति, 'अत्र लोपः' इत्यत अभ्यासस्येति

---

**मूलार्थ**– यङ् और यङ्लुक् के विषय में ✓ चर् और फल् सम्बन्धी अभ्यास के 'अत्' के स्थान में 'उत्' आदेश होता है। चञ्चूर्यते। चंचूर्यते इत्यादि।

**विमर्श**– सूत्रार्थ की स्पष्टता के लिए पूर्वसूत्र (८६९) से 'चरफलोः' (८६२) से 'यङ्लुकोः' तथा 'अत्र लोपः' (७।४।५८) से 'अभ्यासस्य' की अनुवृत्ति आती है। तदनुसार– ''यङ् अथवा यङ्लुक् के परे रहते चर् तथा फल् धातुओं के अभ्यास से परवर्ती अत् (अकार) के स्थान में उत् (उकार) आदेश होता है।''

**उदाहरण**– (१) ✓ चर् + यङ् (= 'य', द्वित्व, अभ्याससंज्ञा, हलादिशेष)–च चर् य (नुक् = 'न्'–'चरफलोश्च', न् = ं 'अनुस्वार' = 'ञ्'–परसवर्ण, विकल्प से–'वा पदान्तस्य', अभ्यास के परवर्ती 'अ' = 'उ'–'उत्परस्याऽतः', 'उ' = 'ऊ'–दीर्घ–'हलि च')– चञ्चूर्य (लट् = 'त', शप् = 'अ', अ + अ = 'अ' पररूप, एत्व) = चञ्चूर्यते। परसवर्ण के अभावपक्ष में-चंचूर्यते। (२) ✓ फल् + यङ् (= 'य', द्वित्व, अभ्यासत्व, हलादिशेष, चर्त्व)– प फल् य (नुक् = 'न्' का आगम, न् = अनुस्वार = 'म्' विकल्प से परसवर्ण, अभ्यास से उत्तर 'अ' = 'उ'– 'उत्परस्याऽतः') पम्फुल्य (लट् = 'त', शप् = 'अ', पररूप, एत्व) = पम्फुल्यते। परसवर्ण के अभाव पक्ष में- पंफुल्यते।

(८७१) **पद**– जप-जभ-दह-दश-भञ्ज-पशाम्, च। **अनुवृत्ति**– नुक्, यङ्लुकोः, अभ्यास। **विधिसूत्र**।

**मूलार्थ**– यङ् तथा यङ्लुक् के विषय में जप्, जभ् आदि धातुओं के अभ्यास को 'नुक्' का आगम होता है। जञ्जप्यते।

**विमर्श**– पूर्ववत् 'अभ्यासस्य', 'नुक्' तथा 'यङ्लुकोः' पदों की अनुवृत्ति आ रही है। तदनुसार– 'यङ्' तथा 'यङ्लुक्' के परवर्ती रहते जप्, जभ्, दह्, दश्, भञ्ज् और पश् धातुओं के अभ्यास को नुक् (= 'न्' का) आगम होता है।''

**उदाहरण**– (१) ✓ जप् + यङ् (= 'य'–'लुपसदचर०' द्वित्व, अभ्यासकार्य)– ज ज प् य (नुक् = 'न' का आगम–'जपजभ०', अनुस्वार, परसवर्ण)–जञ्जप्य (लट् = 'त', शप् = 'अ', पररूप, एत्व) = जञ्जप्यते। परसवर्ण के अभाव पक्षं में-जंजप्यते।

(८७२) **पद**– न, कवतेः, यङि। **अनुवृत्ति**– चुः, अभ्यासस्य। **विधिसूत्र**।

**कवतेरभ्यासस्य चुत्वं न स्याद्यङि। कोकूयते। कौतिकुवत्योस्तु चोकूयते। ( ८७३ ) ग्रो यङि ८।२।२० । गिरते रेफस्य लत्वं स्यात् यङि। गर्हितं गिलति जेगिल्यते। * सूचिसूत्रिमूत्र्यटत्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः *। सोसूच्यते। सोसूत्र्यते। मोमूत्र्यते।** अट

---

चानुवर्तते। अत आह- **कवतेरभ्यासस्येति। जञ्जप्यते**- गर्हितं जपतीति विग्रहे जप्धातोर्यङि द्वित्वेऽभ्याससंज्ञायां हलो लोपे 'जपजभदहदशभञ्जपशां चे'ति सूत्रेणाभ्यासस्य नुगागमेऽनुबन्धलोपे, पदान्तत्वे विभाषया परसवर्णे धातुत्वे लटि तप्रत्यये शपि अनुबन्धलोपे पररूपे टेरेत्वे 'जञ्जप्यते' इति। परसवर्णाभावे-'जंजप्यते' इति।

(८७३) **ग्रो यडीति**। 'ग्रः' इति षष्ठ्येकवचनम्। 'कृपो रो लः' इत्यतः 'रो लः' इत्यनुवर्तते। तदाह- **गिरते इत्यादिना। जेगिल्यते**- गृधातोर्यङि 'ॠत इद्धातोः' इति इत्वे रपरत्वे द्वित्वेऽभ्यासादिकार्ये हलादिशेषे 'कुहोश्चुरि'त्यनेन गकारस्य जकारे 'गुणो यङ्लुकोः' इत्यनेनाभ्यासस्य गुणे 'ग्रो यङि' इत्यनेन रेफस्य लकारे 'जेगिल्य' इत्यस्य धातुसंज्ञायां, लटि प्रथमपुरुषैकवचने 'त'प्रत्यये शपि पररूपे टेरेत्वे 'जेगिल्यते' इति रूपम्।

---

**मूलार्थ**- 'यङ्' के परवर्ती रहते 'कु' धातु के अभ्यास को चुत्व नहीं होता। कोकूयते।

**विमर्श**- प्रकृत सूत्र में 'कुहोश्चुः' (७।४।६२) से 'चुः' तथा 'अत्र लोपः'० (७।४।५८) से 'अभ्यासस्य' की अनुवृत्ति आती है। अतः ''कुङ् धातु के अभ्यास को यङ् परे रहते चवर्ग आदेश नहीं होता।''

**उदाहरण**- (१) ✓ कु + यङ् (= 'य', द्वित्व, अभ्याससंज्ञा, अभ्यास के 'उ' = 'ओ'-गुण) को कुय (उ = ऊ = दीर्घ-'अकृत्सार्व०', 'कुहोश्चुः' से प्राप्त 'क्' = 'च्' चुत्व का 'न कवतेर्यङि' से निषेध)-कोकूय (लट् - 'त', शप् = 'अ', पररूप, एत्व) कोकूयते।

(प्रकृत सूत्र में 'कवतेः' निर्देश होने से शप् विकरण वाली धातु का ही ग्रहण किया गया है। लुग् विकरण और श विकरण वाली धातुओं का यहाँ ग्रहण नहीं होता। कौति (लुग्विकरण) और कुवति (श-विकरण) सम्बन्धी कु धातु में चुत्व का निषेध भी नहीं होता। चोकूयते।

(८७३) **पद**- ग्रः, यङि। **अनुवृत्ति**- 'रो लः'। **विधिसूत्र**।

**मूलार्थ**- 'यङ्' के परवर्ती रहते गृ धातु के रेफ को लत्व ('र्' = 'ल्') होता है। जेगिल्यते।

**विमर्श**- सूत्र में स्थानी व आदेश वाचक पदों का अभाव है। अतः 'कृपो रो लः' (८।२।१८) सूत्र से 'रो ल' की अनुवृत्ति आती है। तदनुसार- ''यङ् के परे रहते गृ धातु सम्बन्धी रेफ (र्) के स्थान में 'ल्' आदेश हो जाता है।''

**उदाहरण**- ✓ गृ + यङ् (= 'य'- 'लुपसदचर०', 'ॠ' = 'इ' इत्व-'ॠत इद्धातोः', रपर, द्वित्व, अभ्याससंज्ञा, हलादिशेष)- गि गिर् य ('ग्' = ज्'-'कुहोश्चुः', अभ्यास-स्थित 'इ' = 'ए'-गुण-'गुणो यङ्लुकोः', 'र्' = 'ल्'-'ग्रो यङि')- जेगिल्य (लट् = 'त', शप् = 'अ', पररूप, एत्व) = जेगिल्यते।

**( वा० )**- सूचि, सूत्रि आदि धातुओं से अनेकाच् और अजादि होने पर भी क्रियासमभिहार अर्थ में 'यङ्' हो जाता है।

**उदाहरण**- (१) ✓ सूचि + यङ् (= 'य'-'सूचिसूत्रि०' वार्तिक से, द्वित्व, अभ्यासत्व, हलादिशेष, ह्रस्व, 'उ' = 'ओ'-गुण-'गुणो यङ्लुकोः')- सोसूच्य (लट् = 'त', शप् = 'अ', पररूप,

पट गतौ। अटाट्यते। **( ८७४ ) यङि च ७।४।३० ।** अर्तेः संयोगादेश्च ऋदन्ताङ्गस्य गुणो यङि। यकारपरस्य रेफस्य न द्वित्वनिषेधः। 'अरार्यते' इति भाष्योदाहरणात्। अरारिता। आशाश्यते। ऊर्णोनूयते। **( ८७५ ) सिचि यङि ८।३।११२ ।** सिचः सस्य

---

(८७४) **यङि चेति**। अत्र 'गुणोऽर्तिसंयोगाद्योः' इति सूत्रमनुवर्तते, 'रीङ् ऋतः' इत्यस्मात् ऋत इति च। अत आह– **अर्तेरित्यादि**। **अरार्यते**– ऋधातोर्यङि 'यङि चे'त्यनेन गुणे अकारे रपरे 'सन्यङोः' इत्यनेन रेफविशिष्टस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'दीर्घोऽकितः' इति दीर्घे धातुसंज्ञायां, लटि तङि शपि पररूपे टेरेत्वे संयोगे च कृते 'अरार्यते' इति।

(८७५) **सिचो यङीति**। 'अपदान्तस्य मूर्धन्यः' इत्यधिकृतम्। 'सहेः साडः सः' इत्यस्मात्स इति 'न रपर०' इत्यस्माच्च न इति चानुवर्तते। तदाह– **सिचः सस्येति**। **निसेसिच्यते** –

---

एत्व) = सोसूच्यते। इसी प्रकार (२) ✓ सूत्रि + यङ् (उक्तवत् कार्य) = सोसूत्र्यते। (३) ✓ मूत्रि + यङ् = मोमूत्र्यते। (४) ✓ अट् + यङ् = अटाट्यते।

(८७४) **पद**– यङि, च। **अनुवृत्ति**– गुणोऽर्तिसंयोगाद्योः, ऋतः। **विधिसूत्र**।

**मूलार्थ**– 'ऋ' धातु और संयोगादि ऋदन्त अङ्ग को गुण होता है, 'यङ्' के परवर्ती रहते। 'धातोरेकाचः' सूत्र के भाष्य में 'अरार्यते' उदाहरण दृष्टिगोचर होने से यह ज्ञात होता है कि यकारपरक रेफ ('र्') के द्वित्व का निषेध नहीं होता। अरारिता। आशाश्यते। ऊर्णोनूयते।

**विमर्श**– प्रकृत सूत्र में 'अङ्गस्य' का अधिकार है। 'गुणोऽर्तिसंयोगाद्योः' (७।४।२९) सम्पूर्ण सूत्र की अनुवृत्ति आती है। 'रीङ् ऋतः' (७।४।२७) से 'ऋतः' पद की अनुवृत्ति आती है। इस प्रकार "यङ् के परवर्ती रहते 'ऋ' तथा संयोगादि ऋकारान्त अङ्ग को भी गुण होता है।"

**उदाहरण**– (१) ✓ ऋ + यङ् (= 'य', 'ऋ' = 'अ'–गुण–'यङि च', रपर, रेफ-विशिष्ट **यकार** को द्वित्व–'सन्यङोः')– अ र्य रय (हलादिशेष, 'अ' = 'आ'–दीर्घ–'दीर्घोऽकितः')–अरार्य (लट् = 'त', शप् = 'अ', पररूप, एत्व) - अरार्यते। (यहाँ 'अजादेर्द्वितीयस्य' से द्वितीय एकाच् 'रय' को द्वित्व प्राप्त होने पर 'नन्द्राः संयोगादयः' से 'र्' को छोड़कर केवल 'य' को द्वित्व प्राप्त हुआ, परन्तु 'अरार्यते' यह महाभाष्य में प्रयोग होने से यहाँ यकारपरक रेफ को द्वित्व का निषेध नहीं हुआ।) (२) ✓ ऋ + यङ् (पूर्ववत् कार्य)–अरार्य (+ धातुत्व लुट् = डा = 'आ', तास्, टि का लोप)–अरार्य ता ('य्' का लोप–'यस्य हलः', अ का लोप, इट् = 'इ' आगम) = अरारिता। (३) ✓ अश् + यङ् (= 'य', द्वित्व, अभ्याससंज्ञा, हलादिशेष)– अ श श् य (दीर्घ, धातुसंज्ञा, लट् = 'त', शप् = 'अ', पररूप, एत्व) = अशाश्यते। (४) ✓ ऊर्णुञ् (ऊर्णु) + यङ् (= 'य', 'नु' को द्वित्व, अभ्याससंज्ञा, हलादिशेष, 'उ' = 'ओ'–गुण–'गुणो यङ्लुकोः', णत्व, अभ्यास के 'उ' = 'ऊ'–दीर्घ)– ऊर्णोनूय (धातुत्व लट् = 'त', शप् = 'अ', पररूप, एत्व) = ऊर्णोनूयते।

(८७५) **पद**– सिचः, यङि। **अनुवृत्ति**– अपदान्तस्य मूर्द्धन्यः, सः न। **विधिसूत्र**।

**मूलार्थ**– 'यङ्' के परवर्ती रहते 'सिच्' धातु सम्बन्धी सकार को षत्व नहीं होता। निसेसिच्यते इत्यादि।

**विमर्श**– 'अपदान्तस्य मूर्द्धन्यः' का अधिकार है। 'सहेः साडः सः' (८।३।५६) सूत्र से 'सः' तथा 'न रपरसृपिसृजि०' (८।३।११०) से 'न' पद की अनुवृत्ति आती है। तदनुसार– "यङ् के परे रहते 'सिच्' के सकार को मूर्द्धन्य आदेश (षत्व) नहीं होता।"

षो न स्याद्यङि। निसेसिच्यते। * हन्तेर्हिंसायां यङि हनीभावो वाच्यः *। जेघ्नीयते। **( ८७६ ) नुगतोऽनुनासिकान्तस्य ७।४।८५** । अनुनासिकान्तस्य अदन्ताभ्यासस्य नुक् स्याद्यङ्यङ्लुकोः। जङ्घन्यते। **( ८७७ ) अयङ् यि क्ङिति ७।४।२२** ।

---

'सिचिर् क्षरणे' इत्यस्माद्धातोर्यङि रूपम्। अत्र अभ्याससकारस्य 'उपसर्गात्सुनोति०' इत्यनेन ततः परस्य च 'स्थादिष्वभ्यासस्य चे'त्यनेन प्राप्तं षत्वमनेन निषिध्यते।

(८७६) **नुगत इति**। अङ्गस्येत्यधिकृतम्। 'अत्र लोपः' इत्यत अभ्यासस्येति, 'गुणो यङ्लुकोः' इत्यतः 'यङ्लुकोः' इति चानुवर्तते। तदाह-**अनुनासिकान्तस्येत्यादिना**। **जङ्घन्यत इति**। हन्धातोर्यङि द्वित्वेऽभ्यासत्वे 'कुहोश्चुः' इति चुत्वेन हस्य झकारे 'अभ्यासे चर्च' इति चर्त्वे 'अभ्यासाच्च' इति हस्य कुत्वेन घकारे 'नुगतोऽनुनासिकान्तस्ये'ति नुगागमेऽनुबन्धलोपे 'नश्चापदान्तस्ये'ति अनुस्वारे परसवर्णे कृते 'जङ्घन्य' इत्यस्य धातुत्वे, लटि तङि शपि पररूपे टेरेत्वे कृते 'जङ्घन्यते' इति।

(८७७) **अयङ् यीति**। 'शीङः सार्वधातुके' इत्यस्मात् 'शीङः' इति पदमनुवर्तते। अत आह-**शीङोऽयङादेश इति**। **शाशय्यते**- शीङ्धातोर्यङि 'अयङ् यि क्ङिति' इत्यनेन अयङादेशे

---

**उदाहरण**- (१) नि + ✓ सिच् + यङ् ( = 'य', द्वित्व, अभ्यासत्व, हलादिशेष, 'इ' = 'ए'-गुण-'गुणो यङ्लुकोः')- नि + सेसिच्य (धातुसंज्ञा, लट् = 'त', शप् = 'अ', पररूप, एत्व) = निसेसिच्यते। (यहाँ 'उपसर्गात्०' से प्राप्त षत्व का 'सिचो यङि' से निषेध हो जाता है।

**( वा० )**- 'यङ्' के परवर्ती रहते हिंसा अर्थ में 'हन्' धातु के स्थान में 'हनी' आदेश होता है ।

**उदाहरण**- (१) ✓ हन् + यङ् ( = 'य', 'हन्' = 'हनी'-'हन्तेर्हिंसायां यङि हनीभावो वाच्यः' द्वित्व, अभ्याससंज्ञा, ह्रस्व, 'घ्' = 'झ्'-'कुहोश्चुः', 'झ्' = 'ज्'-'अभ्यासे चर्च')- जि घ्नी य ('इ' = 'ए'-गुण-'गुणो यङ्लुकोः', धातुसंज्ञा, लट् = 'त', शप् = 'अ', पररूप, एत्व) = जेघ्नीयते। हनीभाव केवल हिंसा अर्थ में ही होता है। हिंसा के अतिरिक्त अन्य अर्थ में-जङ्घन्यते।

(८७६) **पद**- नुक्, अतः, अनुनासिकान्तस्य। अनुवृत्ति- यङ्लुकोः, अभ्यासस्य। **विधिसूत्र**।

**मूलार्थ**- यङ् और यङ्लुक् के विषय में अनुनासिकान्त अङ्ग के अदन्त अभ्यास को नुक् ('न्') का आगम होता है। जङ्घन्यते।

**विमर्श**- प्रकृत सूत्र में 'गुणो यङ्लुकोः' (७।४।८२) से 'यङ्लुकोः' तथा 'अत्र लोपः०' (७।४।५८) से 'अभ्यासस्य' की अनुवृत्ति आ रही है। अतः ''यङ् तथा यङ्लुक् के परे रहते अनुनासिकान्त अङ्ग का जो अकारन्त अभ्यास, उसको नुक् (न्) का आगम होता है।''

**उदाहरण**- (१) ✓ हन् + यङ् ( = 'य', द्वित्व, अभ्याससंज्ञा, हलादिशेष, 'ह्' = 'झ्'-'कुहोश्चुः', 'झ्' = 'ज्'-'अभ्यासे चर्च', 'ह्' = 'घ्'-कुत्व-'अभ्यासाच्च', नुक् = 'न्' का आगम-'नुगतो०', न् = ं अनुस्वार-'नश्चा०', परसवर्ण)-जङ्घन्य (धातुसंज्ञा, लट् = 'त', शप् = 'अ', पररूप, एत्व) = जङ्घन्यते।

(८७७) **पद**- अयङ्, यि, क्ङिति। **अनुवृत्ति**- शीङः। **विधिसूत्र**।

**मूलार्थ**- यकारादि कित्-ङित् प्रत्यय के परवर्ती रहते 'शीङ्' को 'अयङ्' आदेश होता है। शाशय्यते।

**शीङोऽयङादेशः स्याद् यादौ क्ङिति। शाशय्यते। ( ८७८ ) स्वपिस्यमिव्येञां यङि ६।१।१९ । स्वपिस्यमिव्येञां यङि सम्प्रसारणं स्यात्। सोषुप्यते। सेसिम्यते। वेवीयते। ( ८७९ ) न वशः ६।१।२० । वशः सम्प्रसारणं न स्याद्यङि। वावश्यते। ( ८८० )**

---

अनुबन्धलोपे 'सन्यङोः' इति द्वित्वेऽभ्यासकार्ये 'श श य्' इति जाते 'दीर्घोऽकितः' इत्यभ्यासदीर्घे, लटि तङि शपि अनुबन्धलोपे, पररूपे टेरेत्वे 'शाशय्यते' इति।

(८७८) **स्वपिस्यमीति**। अत्र 'ष्यङः सम्प्रसारणम्' इत्यतः सम्प्रसारणमिति लभ्यते। तदेवाह–**स्वपिस्यमिव्येञामिति**। **सोषुप्यत इति**। स्वप्धातोर्यङि 'स्वपिस्यमिव्येञां यङि' इति सम्प्रसारणे पूर्वरूपे द्वित्वे अभ्याससंज्ञायां हलादिशेषे अभ्यासस्य गुणे षत्वे 'सोषुप्य' इत्यस्य धातुत्वे लटि तङि, शपि, पररूपे टेरेत्वे 'सोषुप्यते' इति रूपम्।

(८७९) **न वश इति**। पूर्वसूत्राद्यङीति 'ष्यङः सम्प्रसारणमि'त्यतः सम्प्रसारणमिति चानुवर्तते। 'ग्रहिज्ये'ति प्राप्तं सम्प्रसारणमनेन निषिध्यते।

---

**विमर्श**– सूत्र में स्थानीवाचक पद का अभाव है। अतः 'शीङः सार्वधातुके गुणः' (७।४।२१) से 'शीङः' पद की अनुवृत्ति आती है। तदनुसार ''यकारादि कित्-ङित् प्रत्यय के परे रहते शीङ् धातु के ईकार के स्थान में 'अयङ्' (अय्) आदेश हो जाता है।''

**उदाहरण**– (१) ✓ शी + यङ् (= 'य', ई = अयङ् = 'अय्')–शय् य (द्वित्व–'सन्यङोः', अभ्यासत्व, हलादिशेष, अभ्यास को दीर्घ–'दीर्घोऽकितः')– शाशय्य (धातुसंज्ञा, लट् = 'त', शप् = 'अ', पररूप, एत्व) = शाशय्यते।

(८७८) **पद**– स्वपि-स्यमि-व्येञाम्, यङि। **अनुवृत्ति**– सम्प्रसारणम्। **विधिसूत्र**।

**मूलार्थ**– 'यङ्' के परवर्ती रहते स्वप्, स्यम् और व्येञ् धातु को सम्प्रसारण होता है। सोषुप्यते। सेसिम्यते इत्यादि।

**विमर्श**– यहाँ 'ष्यङः सम्प्रसारणम्' (६।१।१३) से 'सम्प्रसारणम्' पद की अनुवृत्ति आती है। अतः ''यङ् के परवर्ती रहते स्वप्, स्यम् तथा व्येञ् धातु को सम्प्रसारण हो जाता है।''

**उदाहरण**– (१) ✓ स्वप् + यङ् (= 'य', 'व्' = 'उ'–सम्प्रसारण, पूर्वरूप–'सम्प्रसारणाच्च', द्वित्व, अभ्याससंज्ञा, हलादिशेष, अभ्यास को गुण, षत्व)–सोषुप्य (धातुसंज्ञा, लट् = 'त', शप् = 'अ', पररूप, एत्व) = सोषुप्यते। (२) ✓ स्यम् + यङ् (= 'य', 'य्' = 'इ'–सम्प्रसारण–'स्वपिस्यमि०', पूर्वरूप, द्वित्व, अभ्याससंज्ञा, हलादिशेष, 'इ' = 'ए'–गुण)– सेसिम्य (धातुसंज्ञा, लट् = 'त', शप् = 'अ', पररूप, एत्व) = सेसिम्यते। (३) ✓ व्ये + यङ् (= 'य', 'य्' = 'इ'–सम्प्रसारण–'स्वपिस्यमि०', पूर्वरूप, दीर्घ, द्वित्व, अभ्याससंज्ञा, ह्रस्व, अभ्यास को गुण)– वे वीय (धातुत्व लट् = 'त', शप्, पूर्वरूप, एत्व) = वेवीयते।

(८७९) **पद**– न, वशः। **अनुवृत्ति**– यङि, सम्प्रसारणम्। **विधिसूत्र**।

**मूलार्थ**– 'यङ्' के परवर्ती रहते वश् को सम्प्रसारण नहीं होता। वावश्यते।

**विमर्श**– पूर्वसूत्र (८७८) से 'यङि' तथा 'ष्यङः सम्प्रसारणम्' (६।१।१३) से '**सम्प्रसारणम्**' की अनुवृत्ति आती है। तदनुसार ''यङ् परे रहते वश् धातु को सम्प्रसारण नहीं होता।

**उदाहरण**– (१) ✓ वश् + यङ् (= 'य', 'ग्रहिज्या०' से प्राप्त सम्प्रसारण का 'न वशः' से निषेध, द्वित्व, अभ्याससंज्ञा, हलादिशेष, 'अ' = 'आ' दीर्घ–'दीर्घोऽकितः')–वावश्य (धातुसंज्ञा, लट् = 'त', शप्, पररूप, एत्व) = वावश्यते।

**चायः की ६।१।२१ ।** चायः की स्याद्यङि। चेकीयते। **( ८८१ ) ई घ्राध्मोः ७।४।३१ ।** अनयोरीत्स्याद्यङि। जेघ्रीयते। देध्मीयते। **( ८८२ ) नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ७।४।८४ ।** एषामभ्यासस्य नीगागमः स्याद्यङ् यङ्लुकोः। 'अकित'

---

(८८०) **चायः कीति**। 'यङी'ति लभ्यते। तदाह–**चाय इति**। **चेकीयत इति**। 'चिञ् चयने' इत्यस्माद्धातोः यङि 'चायः की' इत्यनेन 'की' इत्यादेशे, द्वित्वे अभ्याससंज्ञायां ह्रस्वे हलादिशेषे 'कुहोश्चुः' इत्यनेन चकारस्य ककारे 'गुणो यङ्लुकोः' इत्यभ्यासगुणे धातुसंज्ञायां लटि तप्रत्यये शपि अनुबन्धलोपे पररूपे टेरेत्वे 'चेकीयते' इति।

(८८१) **ई घ्राध्मोरिति**। 'यङी'ति अनुवर्तते। **जेघ्रीयत इति**। घ्राधातोर्यङि 'ई घ्राध्मोः' इत्यनेन आकारस्य 'ई' इत्यादेशे द्वित्वेऽभ्यासत्वे हलादिशेषे 'कुहोश्चुः' इति चुत्वे 'अभ्यासे चर्च' इत्यनेन चर्त्वेन जकारे ह्रस्वे गुणे धातुसंज्ञायां लटि तङि शपि पररूपे टेरेत्वे 'जेघ्रीयते' इति।

(८८२) **नीग्वञ्चु इति**। 'अत्र लोपः' इत्यतोऽभ्यासस्येत्यनुवर्तते। तदाह–**एषामिति**। **वनीवच्यते**– वञ्चुधातोर्यङि अनुबन्धलोपे ङित्त्वात् 'अनिदितामि'ति नलोपे द्वित्वेऽभ्यासकार्ये 'ववच् य' इति जाते 'नीग्वञ्चुस्रंसु०' इत्यादिना अभ्यासस्य नीगागमेऽनुबन्धलोपे 'वनीवच्य'

---

(८८०) **पद**– चायः, की। **अनुवृत्ति**– 'यङि'। **विधिसूत्र**।

**मूलार्थ**– 'यङ्' के परवर्ती रहते 'चाय्' धातु को 'की' आदेश होता है। चेकीयते।

**विमर्श**– पूर्ववत् 'यङि' की अनुवृत्ति आ रही है। तदनुसार उक्त अर्थ निष्पन्न होता है।

**उदाहरण**– (१) चायृ (चाय्) + यङ् (= 'य', 'चाय्' = 'की'–'चायः की', द्वित्व, अभ्यासत्व, ह्रस्व, 'क्' = 'च्'–'कुहोश्चुः', 'इ' = 'ए'–गुण)– चेकीय (धातुसंज्ञा, लट् = त, शप्, पररूप, एत्व) = चेकीयते।

(७८१) **पद**– ई, घ्राध्मोः। **अनुवृत्ति**– यङि। **विधिसूत्र**।

**मूलार्थ**– 'यङ्' के परवर्ती रहते 'घ्रा' और 'ध्मा' धातु को ईकार अन्तादेश होता है। जेघ्रीयते। देध्मीयते।

**विमर्श**– यहाँ 'यङि च' (७।४।३०) से 'यङि' पद की अनुवृत्ति आती है। तदनुसार– ''घ्रा' और 'ध्मा' धातु को ईत् अन्तादेश होता है, यङ् के परे रहते।''

**उदाहरण**– (१) ✓ घ्रा + यङ् (= 'य', 'आ' = ईत् = 'ई'–'ई घ्राध्मोः', द्वित्व, अभ्याससंज्ञा, हलादिशेष, ह्रस्व, 'घ्' = 'झ्'–'कुहोश्चुः', 'झ्' = 'ज्'–'अभ्यासे चर्च', गुण)–जेघ्रीय (धातुत्व, लट् = 'त', शप्, पररूप, एत्व) = जेघ्रीयते। (२) ✓ ध्मा + यङ् (पूर्ववत् कार्य)–देध्मीयते।

(७८२) **पद**– नीक्, वञ्चु-स्रंसु-ध्वंसु-भ्रंसु-कस-पत-पद-स्कन्दाम्। **अनुवृत्ति**– यङ्लुकोः, अभ्यासस्य। **विधिसूत्र**।

**मूलार्थ**– 'यङ्' के परवर्ती रहते तथा 'यङ्लुक्' के विषय में वञ्चु आदि धातुओं के अभ्यास को नीक् (नी) का आगम होता है। वनीवच्यते इत्यादि।

**विमर्श**–'गुणो यङ्लुकोः' (८६२) सूत्र से 'यङ्लुकोः' की तथा 'अत्र लोपः' (७।४।५८) से 'अभ्यासस्य' की अनुवृत्ति आ रही है। तदनुसार–''यङ् तथा यङ्लुक् के परे रहते वञ्चु, स्रंसु, ध्वंसु, भ्रंसु, कस, पत्लृ, पद और स्कन्दिर् धातुओं के अभ्यास को 'नीक्' का आगम होता है।

**इत्युक्तेर्न दीर्घः। नलोपः। वनीवच्यते। सनीस्रस्यते। दनीध्वस्यते। बनीभ्रस्यते। चनीकस्यते। पनीपत्यते। पनीपद्यते। चनीस्कद्यते।**

**इति यङन्तप्रकरणम् ।**



---

इत्यस्य धातुत्वे लटि तप्रत्यये शपि अनुबन्धलोपे पररूपे टेरेत्वे संयोगे 'वनीवच्यते' इति। एवं सनीस्रस्यते, दनीध्वस्यते इति।

**इति यङन्तप्रकरणम् ।**



---

**उदाहरण–** (१) ✓ वञ्चु + यङ् (= 'य', अनुनासिक का लोप–'अनिदितां हल०', द्वित्व, अभ्याससंज्ञा, हलादिशेष, अभ्यास को नीक् = 'नी' का आगम)– वनीवच्य (धातुसंज्ञा, लट् = 'त', शप्, पररूप, एत्व) = वनीवच्यते। ('दीर्घोऽकितः' सूत्र में 'अकितः' (कित्-भिन्न) पद का ग्रहण होने से प्रकृत प्रयोग में अभ्यास को दीर्घ नहीं होता। क्योंकि यहाँ अभ्यास का अवयव 'नीक्' कित् है।) (२) ✓ स्रंस् + यङ् (= 'य', अनुनासिकलोप, द्वित्व, अभ्यासत्व, हलादिशेष, अभ्यास को नीक् = 'नी' आगम)–सनीस्रस्य (धातुसंज्ञा, लट् = त, शप्, पररूप, एत्व) = सनीस्रस्यते। (३) ✓ ध्वंसु + यङ् (पूर्ववत् प्रक्रिया) = दनीध्वस्यते। (४) ✓ भ्रंसु + यङ् (पूर्ववत् प्रक्रिया) = बनीभ्रस्यते। (५) ✓ कस् + यङ् = चनीकस्यते। (६) ✓ पत् + यङ् = पनीपत्यते। (७) ✓ पद् + यङ् = पनीपद्यते। (८) ✓ स्कन्द् + यङ् = चनीस्कद्यते।

**यङन्त-प्रकरण समाप्त ।**



# अथ यङ्लुगन्तप्रकरणम्

**(८८३) यङोऽचि च २।४।७४** । यङोऽचि प्रत्यये लुक् स्यात्, चकारात्तं विनापि क्वचित्। अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति। ततः प्रत्यक्षलक्षणेन यङन्तत्वाद् द्वित्वम्। अभ्यासकार्यम्। धातुत्वाल्लडादयः। 'शेषात्कर्तरि परस्मैपदम्'। 'चर्करीतं चे'त्यादौ पाठाच्छपो लुक्। **(८८४) यङो वा ७।३।९४** । यङन्तात्परस्य हलादेः पितः

---

यङन्तप्रकरणानन्तरं यङ्लुगन्तप्रक्रियां निरूपयितुमुपक्रमते–

(८८३) **यङोऽचीति**। 'ण्यक्षत्रियार्ष' इत्यतो लुगित्यनुवर्तते, 'बहुलं छन्दसी'त्यतो बहुलमिति च। 'अची'त्यत्र प्रत्ययग्रहणं न तु प्रत्याहारग्रहणं यङः साहचर्यात् 'सहचरितासहचरितयोर्मध्ये सहचरितस्यैव ग्रहणं भवती'ति न्यायात्। तदाह–**यङोऽचीत्यादि**। **चकारात्तं विनापीति**। अच्प्रत्ययाऽभावेऽपीत्यर्थः। **तत इति**। यङो लुगन्तरमित्यर्थः।

(८८४) **यङो वेति**। 'ब्रुव ईट्' इत्यत ईट् इत्यनुवर्तते। 'नाभ्यस्तस्याची'त्यतः 'पिति सार्वधातुके' इति 'उतो वृद्धिर्लुकि हलि' इत्यतः 'हलि' इति चानुवर्तते। तदाह–'**यङन्तात्परस्ये**'–

---

यङन्त-प्रक्रिया का निरूपण करने के बाद अब यङ्लुगन्त-प्रकरण का आरम्भ किया जा रहा है–

(८८३) **पद**– यङः, अचि, च। **अनुवृत्ति**– बहुलम्, लुक्। **विधिसूत्र**।

**मूलार्थ**– 'अच्' प्रत्यय के परवर्ती रहते 'यङ्' प्रत्यय का लुक् (अदर्शन) होता है। चकार से कहीं अच् प्रत्यय के बिना भी लुक् होता है।

**विमर्श**– प्रकृत सूत्र में 'बहुलं छन्दसि' (२।४।७३) से 'बहुलम्' पद की अनुवृत्ति आती है। 'ण्यक्षत्रियार्ष०' (२।४।५८) से 'लुक्' पद की अनुवृत्ति आती है। तदनुसार– "अच् प्रत्यय के परे रहते यङ् का लुक् हो जाता है। चकार से बहुल करके अच् परे न भी हो तो भी लुक् हो जाता है।"

**अनैमित्तिक इति**– अनैमित्तिक होने से अन्तरङ्ग होने के कारण यह पहले हो जाता है। अर्थात् यङ् प्रत्यय का लुक् निमित्त के बिना होता है, अतः यह अनैमित्तक होने से अन्तरङ्ग है। सर्वप्रथम यङ् का लुक् हो जाता है। 'यङ्' का लोप होने पर 'प्रत्ययलोपे प्रत्ययलक्षणम्' से धातु यङन्त ही रहता है। तदनन्तर द्वित्व और अभ्यासकार्य होते हैं, उसके बाद धातुसंज्ञा होकर लट् आदि आते हैं।

'यङ्' के ङित्व का आश्रयण कर यङ्लुगन्त से आत्मनेपद नहीं होता। ङित्व के प्रत्ययाऽप्रत्यय साधारण होने से यङ्लुगन्त में प्रत्ययलक्षण की प्रवृत्ति नहीं होती। अतः यहाँ 'शेषात्कर्तरि परस्मैपदम्' से परस्मैपद के ही प्रत्यय आते हैं। इसलिए यह ध्यान रखना आवश्यक है कि यङ्लुक् के प्रयोग केवल परस्मैपद में ही होते हैं।

**चर्करीतमिति**– 'चर्करीत' यङ्लुक् को कहते हैं। इसका अदादिगण में पाठ किया गया है। अतः 'यङ्लुक्' में शप् का लोप हो जाता है।

(८८४) **पद**– यङः, वा। **अनुवृत्ति**– ईट्, हलि, पिति, सार्वधातुके। **विधिसूत्र**।

**मूलार्थ**– यङ्लुगन्त से परे हलादि पित् सार्वधातुक को विकल्प से ईट् का आगम होता है।

**विमर्श**– सूत्रार्थ की स्पष्टता हेतु 'ब्रुव ईट्' (७।३।९३) से 'ईट्', 'उतो वृद्धिर्लुकि हलि'

**सार्वधातुकस्य ईड् वा स्यात्। 'भूसुवोरि'ति निषेधो यङ्लुकि भाषायां न, 'बोभूतु तेतिक्ते' इति छन्दसि निपातनात्। बोभवीति। बोभोति। बोभूतः। बोभुवति। बोभवीषि। बोभोषि। बोभूथः। बोभूथ। बोभवीमि। बोभोमि। बोभूवः। बोभूमः। बोभवाञ्चकार। बोभवाम्बभूव।**

---

**त्यादिना। निपातनादिति।** वैदिकप्रक्रियायां 'छन्दसी'त्यनुवृत्तौ 'दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्ते' इत्यादिसूत्रे भूधातोर्यङ्लुगन्तस्य गुणाभावो निपात्यते। तत्र 'भूसुवोरि'त्येव गुणनिषेधे सिद्धे पुनः गुणाभावनिपातनं नियमार्थम् 'यङ्लुकि छन्दस्येवायं गुणाभाव' इति। अतो लोके भूधातोर्यङ्लुकि गुणो भवतीति विज्ञायते। **बोभवीति–** पुनः पुनरतिशयेन भृशं वा भवतीति विग्रहे भूधातोर्यङि 'यङोऽचि च'त्यनेन यङो लुकि, पुनः प्रत्ययलक्षणेन यङन्तत्वमादाय द्वित्वादिकार्ये 'बुभू' इति जाते 'गुणो यङ्लुकोः' इत्यभ्यासगुणे 'बोभू' इत्यस्य धातुसंज्ञायां, लटि तिपि शपि अनुबन्धलोपे 'चर्करीतञ्च' इत्यत्र यङ्लुगन्तस्यादादौ पाठात् 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि 'यङो वा' इत्यनेन पाक्षिके ईटि अनुबन्धलोपे 'दाधर्तिदर्धर्ति०' इत्यादिसूत्रे छन्दसि निपातनात्

---

(७।३।८९) से 'हलि' तथा 'नाभ्यस्तस्याचि पिति सार्वधातुके' (७।३।८७) से 'पिति, सार्वधातुके' की अनुवृत्ति आती है। तदनुसार– ''यङ् से उत्तरवर्ती हलादि पित् सार्वधातुक को विकल्प से ईट् (= ई) का आगम होता है।''

**भूसुवोरिति–** 'भूसुवोस्तिङि' से होने वाला गुण का निषेध यङ्लुक् में एवं भाषा में नहीं होता। क्योंकि 'बोभूतुतेतिक्ते' इत्यादि सूत्र में 'छन्दसि' की अनुवृत्ति आने से भू धातु को यङ्लुक् में गुण-निषेध (गुणाभाव) का निपातन किया गया है। आशय यह है कि यदि उक्त सूत्र से गुण-निषेध हो जाता, तो निपातन की आवश्यकता नहीं रहती। अतः निपातन से यह ज्ञात होता है कि उक्त गुणनिषेध भाषा में और यङ्लुक् में नहीं होता।

**उदाहरण–** (१) ✓ भू + यङ् ('यङ्' का लुक्–'यङोऽचि च', प्रत्ययलक्षण से यङन्त मानकर धातु को द्वित्व–'सन्यङोः', अभ्याससंज्ञा, ह्रस्व, 'भ्' = 'ब्'–'अभ्यासे चर्च', गुण–'गुणो यङ्लुकोः')– बोभू (धातुसंज्ञा, लट् = तिप् = ति, शप् = 'अ', 'चर्करीतञ्च' यङ्लुगन्त का अदादि में पाठ होने से शप् का लुक्– 'अदिप्रभृतिभ्यः शपः', विकल्प से ईट् = 'ई'–'यङो वा', यङ्लुक् में गुणनिषेध की प्रवृत्ति न होने से 'ऊ' = 'ओ'–गुण, 'ओ' = 'अव्' आदेश) = बोभवीति। ईट् के अभाव पक्ष में– 'बोभोति'। (२) ✓ भू + यङ् ('यङ्' का लुक्–'यङोऽचि च', प्रत्ययलक्षण से यङन्त होने से द्वित्व, अभ्याससंज्ञा, ह्रस्व, चर्त्व, गुण)– बोभू (धातुसंज्ञा, लट् = प्र० पु० द्वि० व० 'तस्' स् = र् = :) = बोभूतः। यहाँ अपित् सार्वधातुक होने से 'तस्' ङिद्वत् है, अतः गुण नहीं हुआ। (३) ✓ भू + यङ् (यङ् का लुक्, पूर्ववत् द्वित्व, अभ्यासकार्य)– बोभू (धातुसंज्ञा, लट् = प्र० पु० ब० व० 'झि', 'झ' = अत्–'अदभ्यस्तात्', अपित् सार्वधातुक होने से गुण का अभाव, ऊ = उवङ् = 'उव्'– 'अचि श्नु०') = बोभुवति।

**✓ भू धातु लट् लकार (यङ्लुगन्त) के रूप**

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| प्र० पु० – | बोभवीति, बोभोति | बोभोतः | बोभुवति |
| म० पु० – | बोभवीषि, बोभोषि | बोभूथः | बोभूथ |
| उ० पु० – | बोभवीमि, बोभोमि | बोभूवः | बोभूमः |

**बोभवामास। बोभविता। बोभविष्यति। बोभवीतु। बोभोतु। बोभूतात्। बोभूताम्। बोभुवतु। बोभूहि। बोभूतात्। बोभवानि। बोभवाव। बोभवाम। अबोभवीत्। अबोभोत्। अबोभूताम्। अबोभवुः। बोभूयात्। बोभूयाताम्। बोभूयुः। बोभूयात्। बोभूयास्ताम्। बोभूयासुः।**

---

'भूसुवोस्तिङि' इति गुणनिषेधस्य यङ्लुकि भाषायामप्रवृत्त्या सार्वधातुकत्वाद् गुणे अवादेशे 'बोभवीती'ति। ईडभावपक्षे-'बोभोति' इति रूपम्।

**अबोभूवीदिति।** भूधातोर्यङि 'यङोऽचि च' इत्यनेन यङो लुकि प्रत्ययलक्षणेन यङन्तत्वात् 'सन्यङोः' इति द्वित्वेऽभ्यासत्वे 'हलादिः शेषः' इत्यादिहलः शिष्टे, ह्रस्वे, चर्त्वे अभ्यासस्य गुणे 'बोभू' इत्यस्य धातुसंज्ञायां लुङि प्रथमपुरुषैकवचने तिपि अडागमेऽनुबन्धलोपे 'च्लि लुङि' इति च्लौ, 'च्लेः सिच्' इति सिचि, इचि गते, 'गातिस्थे'त्यादिना सिचो लुकि 'यङो वे'ति विभाषया ईडागमेऽनुबन्धलोपे गुणं प्रबाध्य नित्यत्वाद् 'भुवो वुग्लुङ्लिटोः' इति वुगागमे अनुबन्धलोपे 'इतश्चे'त्यनेन तिप इकारलोपे 'अबोभूवीत्' इति। इडभावपक्षे गुणे-'अबोभोत्' इति। **जङ्गमीति-** गम्धातोर्यङि 'यङोऽचि चे'ति तस्य लुकि प्रत्ययलक्षणेन यङन्तत्वात् 'सन्यङोः' इति द्वित्वेऽभ्यासकार्ये 'नुगतोऽनुनासिकान्तस्ये'ति नुगागमेऽनुबन्धलोपे-ऽनुस्वारे परसवर्णे धातुत्वे लटि तिपि शपि यङ्लुगन्तस्य अदादौ पाठाच्छपो लुकि 'यङो वा' इति पाक्षिके ईडागमेऽनुबन्धलोपे 'जङ्गमीति' इति। इडागमाभावपक्षे 'जङ्गन्ति' इति रूपम्।

---

(४) भू + यङ् (यङ् का लुक्, द्वित्वादि अभ्यासकार्य)- बोभू (धातुसंज्ञा, लिट्, अनेकाच्त्वात्-'आम्', लिट् का लुक्-'आमः', लिट्परक ✓ कृ का अनुप्रयोग, लिट् = तिप् = णल् = 'अ', गुण, अवादेश)- बोभवाम् कृ अ (द्वित्व, अत्व, रपर, हलादिशेष, चुत्व, ऋ = 'आ'-वृद्धि, रपर, म् = अनुस्वार = 'ञ्'-परसवर्ण) = बोभवाञ्चकार। भू के अनुप्रयोग में- बोभवाम्बभूव। 'अस्' के अनुप्रयोग में-बोभवामास। (५) भू + यङ् (यङ् का लुक्, द्वित्व, अभ्यासकार्य पूर्ववत्)-बोभू (धातुसंज्ञा, लुट् = तिप् = डा = 'आ', तास्, इट् = 'इ', 'ऊ' = 'ओ'-गुण, ओ = 'अव्' टि का लोप) = बोभविता।

(६) भू + यङ् ('यङ्' का लुक्, द्वित्व, अभ्याससंज्ञा, अभ्यासकार्य)- बोभू (धातुसंज्ञा, लृट् = तिप् = ति, स्य, इट् = 'इ', गुण, अवादेश, षत्व) = बोभविष्यति। (७) ✓ भू + यङ् (यङ्-लुक्, द्वित्व, पूर्ववत् अभ्यासकार्य)- बोभू (धातुसंज्ञा, लोट् = तिप् = ति, शप् = 'अ', विकल्प से ईट् = 'ई'-'यङो वा' 'ऊ' = 'ओ'-गुण, ओ = अव्) = बोभवीति ('इ' = 'उ'-'एरुः') = बोभवीतु। ईट् के अभावपक्ष में-बोभोतु। तु = तातङ् = 'तात्'-विकल्प से। अतः 'तातङ्' पक्ष में-बोभूतात्।

**✓ भूधातु यङ्लुडन्त लोट् लकार के रूप**

| | एकव० | द्विव० | बहुव० |
|---|---|---|---|
| प्र० पु०- | बोभवीतु, बोभोतु, बोभूतात् | बोभूताम् | बोभुवतु |
| म० पु०- | बोभूहि, बोभूतात् | बोभूतम् | बोभूत |
| उ० पु०- | बोभवानि | बोभवाव | बोभवाम |

(८) ✓ भू + यङ् (यङ् का लुक्-'यङोऽचि च', द्वित्व, पूर्ववत् अभ्यासकार्य)- बोभू (धातुसंज्ञा, लङ् = तिप् = ति, शप्, 'शप्' का लुक्-'अदिप्रभृतिभ्यः शपः', विकल्प से ईट् = 'ई'-'यङो वा', 'ऊ' = 'ओ'-गुण-'सार्वधातु०', 'ओ' = 'अव्'-आदेश, 'इ' का लोप-'इतश्च', अट् का

'गातिस्थे'ति सिचो लुक्। 'यङो वे'तीट्पक्षे गुणं बाधित्वा नित्यत्वाद् वुक्। अबोभूवीत्। अबोभोत्। अबोभूताम्। अबोभुवुः। अबोभविष्यत्। जङ्गमीति। जङ्गन्ति। 'अनुदात्तस्ये'-त्यनुनासिकलोपः। जङ्गतः। जङ्ग्मति। 'म्वोश्च'। जङ्गन्मि। जङ्गन्वः।

''श्तिपा शिपाऽनुबन्धेन निर्दिष्टं यद्गणेन च।
यत्रैकाज्ग्रहणं चैव, पञ्चैतानि न यङ्लुकि॥१॥''

---

**श्तिपा शपेति।** 'इक्श्तिपौ धातुनिर्देशे' इत्यादिना निर्दिष्टम्। श्तिपा निर्दिष्टं यङ्लुकि न, यथा 'जङ्घहि' इति। शपा निर्दिष्टं यङ्लुकि न, यथा-'भवतेरः' इत्यादि। यच्चानुबन्धेन निर्दिष्टं तत्र यङ्लुकि, यथा- 'अजङ्गमीत्' इत्यत्र लृकारानुबन्धनिर्दिष्टत्वाच्च्लेरङ् न। गणनिर्दिष्टमपि यङ्लुकि न, यथा-'न वृद्भ्यश्चतुर्भ्यः' इतीनिण्णषेधो न। ववर्तिष्यति। यत्रैकाज्ग्रहणं तदपि

---

आगम) = अबोभवीत्। ईट् आगम के अभाव में-अबोभोत्। (९) ✓ भू + यङ् (यङ् का लुक्, द्वित्व, अभ्यासकार्य)- बोभू (धातुत्व, लङ् = प्र० पु० द्वि० व०-'तस्' = 'ताम्', अट्, अपित् सार्वधातुक 'तस्' के ङिद्वत् होने से गुण का निषेध) = अबोभूताम्। (१०) ✓ भू + यङ् (यङ्लुक्, द्वित्व, अभ्यासकार्य)- बोभू (धातुसंज्ञा, लङ् = प्र० पु० ब० व०-'झि', 'झि' = 'जुस्' = 'उस्'- 'सिजभ्यस्तविदिभ्यश्च', ऊ = उवङ् = 'उव्', स् = र् = :, अट्) = अबोभुवुः। (११) यङ्लुगन्त ✓ बोभू (विधिलिङ् प्र० पु० ए० व० तिप् = 'ति', शप्, अदादित्वात् शप् का लुक्, यासुट् = यास्, इकारलोप-'इतश्च', 'स्' का लोप-'लिङः सलोपोऽनन्त्यस्य') = बोभूयात्। (१२) वि० लि० प्र० पु० द्वि० व०-बोभूयाताम्। (१३) वि० लि० प्र० पु० ब० व०-बोभूयुः। (१४) यङ्लुगन्त बोभू (आशीर्लिङ् = तिप् = ति, यासुट् = 'यास्', इकारलोप, 'स्' का लोप-'स्कोः संयोगाद्योरन्ते च') = बोभूयात्। (१५) आ० लि० प्र० पु० द्वि० व०-बोभूयास्ताम्। (१६) आ० लि० प्र० पु० ब० व०-बोभूयासुः। (१७) यङ्लुगन्त बोभू (धातुसंज्ञा, लुङ् = तिप् = ति, च्लि, च्लि = सिच् = 'स्')-बोभू स् ति (इकारलोप-'इतश्च' सार्वधातुकसंज्ञा, सिच् के 'स्' का लोप-'गातिस्था०', विकल्प से ईट् = 'ई', वुक् = 'व्' का आगम, अट् = 'अ' का आगम) = अबोभूवीत्। ईट् के अभावपक्ष में- अबोभोत्। (१८) लुङ् प्र० पु० द्वि० व०-अबोभूताम्। (१९) लुङ् प्र० पु० ब० व०-अबोभुवुः। (२०) लृङ्-अबोभविष्यत्। (२१) ✓ गम् + यङ् ('यङ्' का लुक्-'यङोऽचि च', प्रत्ययलक्षण से धातु को द्वित्व-'सन्यङोः', अभ्याससंज्ञा, हलादिशेष, 'ग्' = 'ज्'-'कुहोश्चुः', नुम् = 'न्' आगम- 'नुगतो०', न् = ं अनुस्वार = 'ङ्' परसवर्ण)-जङ्गम् (धातुसंज्ञा, लट् = तिप् = ति, शप्, शप् का लुक्-'अदिप्रभृतिभ्यः', विकल्प से ईट्-'यङो वा') = जङ्गमीति। ईट् के अभाव पक्ष में-जङ्गम् ति (न् = ं अनुस्वार-'नश्चा०', परसवर्ण) = जङ्गन्ति। (२२) यङ्लुगन्त ✓ जङ्गम् (लट् = प्र० पु० द्वि० व० 'तस्', अनुनासिकलोप-'अनुदात्तोपदेश'०, स् = र् = :) = जङ्गतः। (२३) यङ्लुगन्त ✓ जङ्गम् (लट् = प्र० पु० ब० व० 'झि', 'झ्' = 'अत्'-'अदभ्यस्तात्', शप् का लुक्, उपधा 'अ' का लोप-'गमहन०') = जङ्ग्मति।

**✓ गम् धातु यङ्लुगन्त लट् लकार के रूप**

| | एकव० | द्विव० | बहुव० |
|---|---|---|---|
| प्र० पु०- | जङ्गमीति, जङ्गन्ति | जङ्गतः | जङ्ग्मति |
| म० पु०- | जङ्गमीषि, जङ्गंसि | जङ्गथः | जङ्गथ |
| उ० पु०- | जङ्गमीमि, जङ्गन्मि | जङ्गन्वः | जङ्गन्मः |

इति वचनान्न इणिनषेधः। जङ्गमिता। अनुनासिकलोपस्याऽऽभीयत्वेनाऽसिद्धत्वान्न हेर्लुक्। जङ्गहि। 'मो नो धातोः'। अजङ्गन्। अनुबन्धनिर्देशान्न च्लेरङ्–अजङ्गमीत्।

**(८८५) रुग्रिकौ च लुकि ७।४।९१** । ऋदुपधस्य धातोरभ्यासस्य रुक्, रिक्, रीक्–एते स्युर्यङ्लुकि। **(८८६) ऋतश्च ७।४।९२** । ऋदन्ताद्धातोरपि तथा। वर्वृतीति। वरिवृतीति। वरीवृतीति। वर्वर्ति। वरिवर्ति। वरीवर्ति। वर्वृतः ३। वर्वृतति ३।

---

यङ्लुकि न, यथा–'जङ्गमिते'त्यत्र 'एकाच उपदेशे' इतीण्निषेधो न। तेन सर्वेऽप्यनिट्का धातवो यङ्लुकि सेट्का भवन्तीति।

(८८५) **रुग्रिकाविति**। 'रीगृदुपधस्य चे'त्यतः 'ऋदुपधस्ये'त्यनुवर्तते, चकारेण 'रीगि'-त्यपि। 'अत्र लोपः' इत्यस्मादभ्यासस्येत्यनुवर्तते। तदाह–**ऋदुपधस्येत्यादिना**।

(८८६) **ऋतश्चेति**। पूर्ववत् 'रुग्रिकौ, लुकि, रीक्, अभ्यासस्ये'ति पदान्यत्रानुवर्तन्ते। अभ्यासस्य रुक्-रिक्-रीक् इत्यागमा भवन्तीत्यर्थः। **वर्वृतीति**– 'पुनः पुनः अतिशयेन वा वर्तते'

---

**शितपाशपेति**– शितप्-निर्दिष्ट कार्य, शप् से निर्दिष्ट कार्य, अनुबन्ध-निर्दिष्ट, गण-निर्दिष्ट और जिसमें एकाच् ग्रहण हो ऐसे सूत्र से निर्दिष्ट कार्य– ये पाँचों कार्य यङ्लुक् में नहीं होते।

(२४) ✓ गम् (यङ्, यङ्लुक्, द्वित्व, अभ्यासकार्य, नुक्, अनुस्वार, परसवर्ण)– जङ्गम् (धातुसंज्ञा, लुट् = तिप् = डा = 'आ', तास्, इट्, टिलोप) = जङ्गमिता (यहाँ यङ्लुक् होने से उक्त कारिका के अनुसार 'एकाच उपदेशे०' से प्राप्त इट् का निषेध नहीं होता)। (२५) यङ्लुगन्त ✓ जङ्गम् (धातुसंज्ञा, लोट् = सिप् = सि = 'हि'–'सेर्ह्यपिच्च', 'म्' अनुनासिक का लोप–'अनुदात्तोपदेश०') = जङ्गहि। (यहाँ अकार से परे 'हि' होने से उसका 'अतो हेः' से लोप प्राप्त हुआ, परन्तु पूर्व में विहित 'म्' का लोप आभीयत्वेन असिद्ध होने के कारण (अकार से परे न होने से) 'हि' का लोप नहीं होता। (२६) ✓ गम् + यङ् (यङ्लुक्, द्वित्व, अभ्यासकार्य, नुक्, अनुस्वार, परसवर्ण)– जङ्गम् (धातुत्व, लङ् = तिप् = ति, शप्, शप् का लुक्, विकल्प से ईट् = 'ई', अट्, इकारलोप–'इतश्च') = अजङ्गमीत्। ईट् न होने पर–'अजङ्गम् त्' ('त्' का लोप–'हल्ङ्याब्भ्यः', 'म्' = 'न्'–'मो नो धातोः') = अजङ्गन्। (२७) ✓ गम् (यङ्लुक्, पूर्ववत् कार्य)– जङ्गम् (धातुसंज्ञा, लुङ् = तिप् = ति, अट्, इकारलोप)– अजङ्गम् त् (च्लि, च्लि = सिच् = 'स्', इट् = 'इ' आगम, ईट् = 'ई' का आगम–'अस्तिसिचोऽपृक्ते', 'स्' का लोप–'इट ईटि', इ + ई = 'ई'–दीर्घ) = अजङ्गमीत्।

(८८५) **पद**– रुग्रिकौ, च, लुकि। **अनुवृत्ति**– ऋदुपधस्य, रीक्, अभ्यासस्य। **विधिसूत्र**।

**मूलार्थ**– यङ्लुक् के विषय में ऋकारोपध धातु के अभ्यास को क्रमशः रुक्, रिक् और रीक् का आगम होता है।

**विमर्श**– यहाँ 'रीगृदुपधस्य च' (७।४।९०) सूत्र तथा 'अत्र लोपः' (७।४।५८) से 'अभ्यासस्य' की अनुवृत्ति आती है। तदनुसार– ''यङ्लुक् में ऋकार उपधा वाले अङ्ग के अभ्यास को क्रम से रुक् (= र्), रिक् (= रि) तथा रीक् (= री) आगम होते हैं।''

(८८६) **पद**– ऋतः, च। **अनुवृत्ति**– रुग्रिकौ, लुकि, रीक्, अभ्यासस्य। **विधिसूत्र**।

**मूलार्थ**– ऋदन्त धातु के अभ्यास को भी यङ्लुक् में रुक्, रिक् और रीक् आगम होते हैं। वर्वृतीति, वरीवृतीति, वरीवर्ति इत्यादि।

**विमर्श**– पूर्वसूत्र (८८५) से 'रुग्रिकौ, लुकि', 'रीगृदुपधस्य च' (७।४।९०) से 'रीक्' तथा

**वर्वर्तामास ३। वर्वर्तिता ३। गणनिर्दिष्टत्वान्न वृद्भ्यश्चतुर्भ्य इति न। वर्वर्तिष्यति ३। अवर्वृतीत् ३। अवर्वर्त ३। सिपि 'दश्चे'ति रुत्वपक्षे– 'रो रि'। अवर्वाः ३। गणनिर्दिष्टत्वादङ् न। अवर्वर्तीत् ३। चर्करीति। चरिकरीति। चरीकरीति। चर्कर्ति।**

---

इत्यस्मिन्नर्थे 'वृतु' धातोर्यङि, 'यङोऽचि चे'त्यनेन यङो लुकि द्वित्वेऽभ्यासत्वे 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे 'रुग्रिकौ च लुकि' इत्यनेन क्रमशः रुक्, रिक्, रीगागमे जाते पूर्वं रुगागमेऽनुबन्धलोपे प्रत्ययलक्षणेन धातुत्वे लटि प्रथमपुरुषैकवचने तिपि शपि अनुबन्धलोपे 'चर्करीतञ्चे'ति अदादौ पाठात् 'अदिप्रभृतिभ्यः शपः' इत्यनेन शपो लुकि 'यङो वा' इति विभाषया ईटि अनुबन्धलोपे–'वर्वृतीति' इति। रिक्पक्षे–'वरिवृतीति' इति रूपम्। रीक्पक्षे 'वरीवृतीति' इति त्रीणि रूपाणि भवन्ति। 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति निषेधान्नात्र 'पुगन्ते'ति गुणः। ईडभावपक्षे–'पुगन्तलघूपधस्य चे'त्यनेन उपधागुणे रपरे सति रुक्पक्षे 'वर्वर्ति' इति, रिक्पक्षे- 'वरिवर्ति' इति, रीक्पक्षे च–'वरीवर्ति' इति त्रीणि रूपाणि भवन्ति। इत्थं षड्रूपाणि जायन्ते। **चर्करीति इति**। कृधातोर्यङि यङ्लुकि द्वित्वे उरदत्वे रपरत्वे हलादिशेषे चर्त्वे 'ऋतश्चे'त्यनेन

---

'अत्र लोपः०' (७।४।५८) से 'अभ्यासस्य' की अनुवृत्ति आ रही है। तदनुसार– ''ऋकारान्त धातु के अभ्यास को भी यङ्लुक् होने पर रुक्, रिक् तथा रीक् का आगम होता है।''

**उदाहरण**– (१) ✓ वृतु (वृत्) + यङ् (यङ् का लुक्–'यङोऽचि च', द्वित्व, अभ्याससंज्ञा, 'ऋ' = 'अ'–'उरत्' रपर, हलादिशेष, 'रुक्' = 'र्' का आगम–'रुग्रिकौ च लुकि')– वर्वृत् (धातुसंज्ञा, लट् = तिप् = 'ति', शप्, शप् का लुक्–'अदिप्रभृतिभ्यः', विकल्प से ईट् = 'ई'–'यङो वा') = वर्वृतीति। रिक् (= रि) पक्ष में–वरिवृतीति। रीक् (= री) पक्ष में– वरीवृतीति। यहाँ 'नाभ्यस्तस्याचि पिति सार्वधातुके' से निषेध होने से 'पुगन्तलघूपधस्य च' से गुण नहीं होता। ईट् के अभावपक्ष में (उपधागुण, रपर, रुक् होने पर)–वर्वर्ति। रिक् पक्ष में–वरिवर्ति। रीक् पक्ष में–वरीवर्ति। (२) ✓ वृत् (यङ्लुक्, द्वित्व, अभ्याससंज्ञा, अत्व, रपर, हलादिशेष, रुक् (= र्) का आगम)– वर्वृत् (धातुसंज्ञा, लट् = तस्, स् = र् = :) = वर्वृतः। रिक्पक्ष में–वरिवृतः। रीक्पक्ष में– वरीवृतः। इस प्रकार तीन रूप सिद्ध होते हैं। (३) ✓ वृत् (यङ्लुक्, अभ्यासकार्य होकर)– ववृत् (धातुसंज्ञा, लट् = 'झि' 'झ्' = 'अत्', रुक् 'र्' का आगम–'रुग्रिकौ च लुकि') = वर्वृतति। रिक्पक्ष में–वरिवृतति। रीक्पक्ष में– वरीवृतति। (४) लिट् में– वर्वर्तामास, वरिवर्तामास तथा वरीवर्तामास। (५) लुट् में– वर्वर्तिता, वरिवर्तिता, वरीवर्तिता। (६) लृट् प्र० पु० ए० व० में– वर्वर्तिष्यति, वरिवर्तिष्यति तथा वरीवर्तिष्यति (यहाँ वृतादिगण गण-निर्दिष्ट होने के कारण 'न वृद्भ्यश्चतुर्भ्यः' से इट् का निषेध नहीं होता।) (७) ✓ ववृत् (यङ्लुगन्त, धातुसंज्ञा, लङ् = तिप् = ति, अट्, इकारलोप, 'रुक्' = 'र्' का आगम, शप्, शब्लुक्, विकल्प से ईट् = 'ई') = अवर्वृतीत्। ईट् के अभावपक्ष में (गुण, रपर)–अवर्वर्त। (उक्तवत् तीन-तीन रूप बनते हैं।) (८) ✓ वृत् (यङ्लुक्, प्रत्ययलक्षण से यङन्त होने से द्वित्व, अत्व, रपर, हलादिशेष)–ववृत् (धातुसंज्ञा, लङ् = सिप् = 'सि', अट् = 'अ', शप्, शप् का लुक्, अभ्यास को रुक् = 'र्' का आगम–'रुग्रिकौ च लुकि', 'ऋ' = 'अ'–उपधागुण, रपर)–अ वर् वर्त् सि ('त्' = 'द्'–जश्त्व, द् = रु = र्–विकल्प से–'दश्च')– अ व र् व र् र् सि (पूर्व 'र्' का लोप–'रो रि', इकारलोप–'इतश्च', 'स्' का लोप–'हल्ङ्याब्भ्यः', अ = आ–दीर्घ–'ढ्रलोपे पूर्वस्य०', र् = :) = अवर्वाः। रिक्पक्ष में–अवरिवाः। रीक्पक्ष में– अवरीवाः। 'द्' के स्थान में रुत्व के अभावपक्ष में

**चरिकर्ति। चरीकर्ति। चर्कृतः ३। चर्क्रति ३। चर्कराञ्चकार ३। चर्करिता ३। अचर्करीत् ३। अचर्कः ३। चर्कृयात् ३। आशिषि रिङ्- चर्क्रियात् ३। अचर्कारीत् ३। 'ऋतश्चे'ति तपरत्वान्नेह- कॄ विक्षेपे। चाकर्ति। चाकरीति। चाकीर्तः। चाकीर्हि। चाकराणि।**

---

क्रमशः 'रुक् रिक् रीक्' इत्यागमेषु पूर्वं रुगागमेऽनुबन्धलोपे, प्रत्ययलक्षणेन धातुत्वाल्लटि तिपि, शपि अनुबन्धलोपे, शब्लुकि 'यङो वे'त्यनेन पाक्षिके ईटि अनुबन्धलोपे 'चर्करीति' इति। रिक्पक्षे-चरिकरीति, रीक्पक्षे च-'चरीकरीति' इति। ईडभावपक्षे गुणे रपरे कृते चर्कति, चरिकर्ति चरीकर्ति च रूपत्रयम्।

**अचाकारीत्**। कॄधातोर्यङि यङो लुकि प्रत्ययलक्षणेन द्वित्वेऽभ्यासत्वे उरदत्वे रपरे हलादिशेषे चुत्वे 'दीर्घोऽकितः' इति दीर्घे 'चाकॄ' इत्यस्य धातुत्वे लुङि तिपि अनुबन्धलोपे,

---

विकल्प से चर्त्व-अवर्वर्त्, अवरिवर्त्, अवरीवर्त्। अवर्वर्द्, अवरिवर्द्, अवरीवर्द् रूप बनते हैं। (९) लुङ् प्र० पु० ए० व० में-अवर्वर्तीत्, अवरिवर्तीत्, अवरीवर्तीत्। 'पुषादिद्युतादि०' सूत्र में गण-निर्दिष्ट होने से ✓ वृत् का द्युतादि में पाठ होने से यहाँ च्लि के स्थान में 'अङ्' नहीं होता। (१०) ✓ कृ + यङ्लुक् (द्वित्व, अभ्याससंज्ञा, अत्व, रपर, हलादिशेष, 'क्' = 'च्'-'कुहोश्चुः')-चकृ (धातुसंज्ञा, लट् = तिप् = 'ति', शप्, शप् का लुक्, विकल्प से ईट् = 'ई'-'यङो वा', रुक् = 'र्', रिक् = 'रि', रीक् = 'री' का क्रमशः आगम-'ऋतश्च' गुण, रपर) = चर्करीति। रिक्पक्ष में-चरिकरीति। रीक्पक्ष में-चरीकरीति। ईट् के अभाव पक्ष में- चर्कर्ति, चरिकर्ति, चरीकर्ति। (११) लट् प्र० पु० द्विवचन-चर्कृतः, चरिकृतः, चरीकृतः। (१२) लट् प्र० पु० बहुवचन-चर्क्रति, चरिक्रति, चरीक्रति। (१३) लिट् प्र० पु० एकवचन-चर्कराञ्चकार, चरिकराञ्चकार, चरीकराञ्चकार। (१४) लुट् प्र० पु० ए० व०-चर्करिता, चरिकरिता, चरीकरिता। (१५) लङ् प्र० पु० ए० व०-अचर्करीत्। ईट् के अभाव पक्ष में- अचर्करत् ('त्' का लोप-'हल्ङ्यादिभ्यः', र् = :) = अचर्कः। (१६) विधिलिङ्-चर्कृयात्, चरिकृयात्, चरीकृयात्। (१७) आशीर्लिङ्-चर्क्रियात्, चरिक्रियात्, चरीक्रियात्। (१८) लुङ् प्र० पु० एकवचन-अचर्कारीत्, अचरिकारीत्, अचरीकारीत्।

'ऋतश्च' सूत्र में तपरकरण होने से दीर्घ ॠकारान्त 'कॄ विक्षेपे' इत्यादि धातुओं के अभ्यास को रुक्, रिक् तथा रीक् का आगम नहीं होता। यथा- (१) ✓ कॄ ( यङ्लुक्, द्वित्व, अभ्याससंज्ञा, अत्व, रपर, हलादिशेष, 'क्' = 'च्'-चुत्व-'कुहोश्चुः', 'अ' = 'आ'-दीर्घ-'दीर्घोऽकितः')- चाकॄ (धातुसंज्ञा, लट् = तिप् = ति, शप्, विकल्प से ईट् = 'ई'-'यङो वा', 'ॠ' = 'अ'-गुण, रपर, शप् का लुक्) = चाकरीति। ईट् के अभावपक्ष में-चाकर्ति। (२) ✓ कॄ + (यङ्, यङ्लुक्, द्वित्व, पूर्ववत् अभ्यासकार्य, दीर्घ)-चाकॄ (धातुसंज्ञा, लट् = तस्, शप, शब्लुक्, 'तस्' के ङित् होने से गुण का निषेध-'सार्वधातुकमपित्', 'ॠ' = 'इत्'-इत्व, रपर, 'इ' = 'ई'-दीर्घ-'हलि च', स् = र् = :) = चाकीर्तः। (३) लट् प्र० पु० बहुवचन-चाकिरति। (४) लोट् म० पु० एकवचन-चाकीर्हि। (५) लोट् उ० पु० एकवचन-चाकराणि (६) ✓ कॄ + यङ्लुक् (द्वित्व, पूर्ववत् अभ्यासकार्य, दीर्घ)-चाकॄ (धातुसंज्ञा, लङ् = तिप् = ति, अट्, शप्, शप् का लुक्, 'ईट्' = 'ई'-विकल्प से-'यङो वा', 'ॠ' = 'अ'-गुण, रपर, इकारलोप-'इतश्च')-अचाकरीत्। ईट् के अभाव पक्ष में- अ चा क र् त् ('त्' का लोप-'हल्ङ्यादिभ्यः', र् = :) = अचाकः। (७) यङ्लुगन्त चाकॄ (लङ् = तस् = 'ताम्', अट्, शप्, लुक्, ङित्त्वात् गुणाभाव, 'ॠ' = 'इ' इत्व, रपर, दीर्घ) = अचाकीर्ताम्। (८) पूर्ववत् यङ्लुगन्त चाकॄ (धातुसंज्ञा, लङ् = झि = जुस् = 'उस्'-'सिजभ्यस्तविदिभ्यश्च', शप्, लुक्, 'ॠ' = 'अ'-

अचाकरीत्। अचाकः। अचाकीर्ताम्। अचाकरुः। अचाकारीत्। अचाकारिष्टाम्। अचाकारिषुः। तातर्त्ति। तातरीति इत्यादि।

इति यङ्लुगन्तप्रकरणम् ।



---

अडागमे, च्लौ, च्लेः सिच्यनुबन्धलोपे 'अ चा कृ स ति' इति जाते, 'सिचि वृद्धिः परस्मैपदेषु' इति ऋकारस्य वृद्धौ रपरे 'आर्धधातुकस्ये'त्यनेन इटि, 'अस्तिसिचोऽपृक्ते' इतीटि 'इट ईटि' इत्यनेन सिचो लोपे 'इतश्चे'त्यनेन इकारलोपे–'अचाकारीत्' इति।

इति यङ्लुगन्तप्रकरणम् ।



---

गुण, रपर, स् = र् = :) = अचाकरुः। (९) ✓ कृ + पूर्ववत् यङ्लुगन्त चाकृ (धातुसंज्ञा, लुङ् = तिप् = 'ति', अट्, च्लि, च्लि = सिच् = 'स्', इकारलोप)– अ चाकृ स् त् (इट्, ईट् = 'ई'– 'अस्तिसिचः०', 'ऋ' = 'आ'–वृद्धि–'सिचि वृद्धिः परस्मैपदेषु', 'स्' का लोप–'इट ईटि', इ + ई = 'ई'–दीर्घ) = अचाकारीत्। (१०) लुङ् प्र० पु० द्विवचन–अचाकारिष्टाम्।

(१) ✓ तृ प्लवनतरणयोः (यङ्, यङ्लुक्, द्वित्व, अभ्यासत्व, अत्व, रपर, हलादिशेष, 'अ' = 'आ'–दीर्घ–'दीर्घोऽकितः')–तातृ (धातुसंज्ञा, लट् = तिप् = 'ति', शप्, शप् का लुक्, विकल्प से ईट् = 'ई'–'यङो वा', 'ऋ' = 'अ'–गुण, रपर) = तातरीति। ईट् के अभाव पक्ष में–तातर्ति।

यङ्लुगन्त-प्रकरण समाप्त ।



# अथ नामधातुप्रकरणम्

**(८८७) सुप आत्मनः क्यच् ३।१।८ ।** इषिकर्मण एषितुरात्मसम्बन्धिनः, सुबन्तादिच्छायामर्थे क्यज्वा स्यात्। **(८८८) सुपो धातुप्रातिपदिकयोः २।४।७१ ।** एतयोरवयवस्य सुपो लुक् स्यात्। **(८८९) क्यचि च ७।४।३३ ।** अवर्णस्य ईत्स्यात्। आत्मनः पुत्रमिच्छति पुत्रीयति। * मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यज्न *। किमिच्छति।

---

अथेदानीं नामधातुरूपाणां प्रक्रिया प्रोच्यते–

(८८७) **सुप आत्मन इति**। 'सुपः' इति पदात्प्रत्ययग्रहणपरिभाषया सुबन्तादिति लभ्यते। 'धातोः कर्मणः समानकर्तृकादिच्छायां वे'त्यतः 'कर्मणः, इच्छायां वा' इत्यनुवर्तते। 'कर्मणः' इति पञ्चमी। आत्मन्शब्दोऽत्र स्वपर्यायः। स्वश्चेच्छायां सन्निधापितत्वादेषितैव विवक्षितः। तदाह– **इषिकर्मण इत्यादि**।

(८८८) **सुपो धातुप्रातिपदिकयोरिति**। 'ण्यक्षत्रियार्ष०' इत्यतो लुगित्यनुवर्तते। तदाह– **एतयोरित्यादि**।

(८८९) **क्यचि चेति**। 'ई घ्राध्मोरि'त्यत 'ई' इति, 'अस्य च्वौ' इत्यतः 'अस्ये'ति चानुवर्तते। अत आह–**अवर्णस्येति**। **पुत्रीयति**– आत्मनः पुत्रमिच्छतीत्यर्थे द्वितीयान्तपुत्रशब्दात् 'सुप आत्मनः क्यच्' इत्यनेन क्यचि 'सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञायां 'सुपो

---

यङन्त और यङ्लुगन्त धातुरूपों की साधनिका के अनन्तर नाम(शब्द)धातुरूपों की प्रक्रिया प्रदर्शित की जा रही है।

(८८७) **पद**– सुपः, आत्मनः, क्यच्। **अनुवृत्ति**– कर्मणः, इच्छायां वा। **विधिसूत्र**।

**मूलार्थ**– इष् धातु के कर्म और इच्छा कर्ता के सम्बन्धी के वाचक सुबन्त से इच्छा अर्थ में विकल्प से 'क्यच्' (= य) होता है।

**विमर्श**– यहाँ (८३६) सूत्र से 'कर्मणः', 'इच्छायाम्' और 'वा' पदों की अनुवृत्ति आती है। 'प्रत्ययग्रहणे तदन्तग्रहणम्' परिभाषा के द्वारा 'सुपः' पद से 'सुबन्ताद्' अर्थ लिया जाता है। 'कर्मणः' पञ्चम्यन्त पद है। अतः ''इच्छा करने वाले के आत्म सम्बन्धी इच्छा के कर्म सुबन्त से इच्छा अर्थ में विकल्प से क्यच् प्रत्यय होता है।''

(८८८) **पद**– सुपः, धातुप्रातिपदिकयोः। **अनुवृत्ति**– लुक्। **विधिसूत्र**।

**मूलार्थ**– धातु और प्रातिपदिक के अवयव सुप् का लुक् होता है।

**विमर्श**– प्रकृत सूत्र में 'ण्यक्षत्रियार्ष०' (२।४।५८) सूत्र से 'लुक्' की अनुवृत्ति आती है। तदनुसार उक्त अर्थ सम्पन्न होता है।

(८८९) **पद**– क्यचि, च। **अनुवृत्ति**– अस्य, ई। **विधिसूत्र**।

**मूलार्थ**– क्यच् प्रत्यय के परवर्ती रहते अवर्ण के स्थान में ईकार अन्तादेश होता है। आत्मनः पुत्रमिच्छति–पुत्रीयति।

**विमर्श**– सूत्रार्थ की पूर्ति हेतु 'अस्य च्वौ' (७।४।३२) से 'अस्य' की तथा 'ई घ्राध्मोः' (७।४।३१) से 'ई' पद की अनुवृत्ति आती है। तदनुसार– ''क्यच् के परे रहते भी अवर्णान्त अङ्ग को ईकार आदेश होता है।''

**इदमिच्छति। (८९०) अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु ७।४।३४ ।** एते क्यजन्ता निपात्यन्ते बुभुक्षादिष्वर्थेषु। अशनायति। उदन्यति। धनायति। बुभुक्षादौ किम्? अशनीयति। उदनीयति। धनीयति। **(८९१) अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ७।१।५१ ।** एषां क्यचि असुक्। * अश्ववृषयोर्मैथुनेच्छायाम् *। अश्वस्यति

---

धातुप्रातिपदिकयो:' इत्यनेन सुपो (अमो) लुकि, 'लशक्वतद्धिते' इति ककारस्येत्संज्ञायां 'हलन्त्यमि'ति चस्येत्संज्ञायां 'तस्य लोप:' इति कचयोर्लोपे 'क्यचि चे'त्यनेन पुत्रशब्दे अकारस्य ईत्वे 'पुत्रीय' इति जाते, लटि तिपि शपि अनुबन्धलोपे 'अतो गुणे' इत्यनेन पररूपे 'पुत्रीयति' इति रूपम्।

(८९०) **अशनायेति**। क्यज्विशिष्टिमेतेषां निपातनं भवतीत्यर्थ:। 'सुप आत्मन: क्यच्' इत्यनेनैव सिद्धे उदकशब्दस्योदन्नादेशार्थं तथान्येषां दीर्घत्वनिपातनार्थमपि सूत्रमित्यवगन्तव्यम्। तच्च सूत्रनिर्दिष्टार्थेष्वेव नान्यार्थेषु। **अशनायति**– अशनमिच्छतीत्यर्थे 'अशनायोदन्यधनाया बुभुक्षा-पिपासागर्द्धेषु' इति निपातनात्क्यचि अनुबन्धलोपे 'सुपो धातुप्रातिपदिकयो:' इति सुब्लुकि निपातनादेव दीर्घे धातुसंज्ञायां लटि तिपि शपि अनुबन्धलोपे, पररूपे 'अशनायति' इति रूपम्।

(८९१) **अश्वक्षीरेति**। सूत्रेऽस्मिन् 'आज्जसेरसुक्' इत्यस्मादसुक् इत्यनुवर्तते। तदाह–

---

**उदाहरण**– आत्मन: पुत्रमिच्छति (अपना पुत्र चाहता है) अर्थ में द्वितीयान्त पुत्र + क्यच् (= 'य'–'सुप आत्मन: क्यच्', धातुसंज्ञा–'सनाद्यन्ता धातव:', सुप् का लुक्–'सुपो धातुप्रातिपदिकयो:')– पुत्र य ('अ' = 'ई'–'क्यचि च', लट् = तिप् = 'ति', शप् = 'अ', अ + अ = 'अ'–पररूप– 'अतो गुणे') = पुत्रीयति।

**(वा०)**– मकारान्त प्रकृतिक सुबन्त और अव्यय से क्यच् नहीं होता।

**उदाहरण**– किमिच्छति (क्या चाहता है)? इदमिच्छति (यह चाहता है)।

(८९०) **पद**– अशनायोदन्यधनाया:, बुभुक्षा-पिपासा-गर्द्धेषु। **अनुवृत्ति**– क्यचि। **विधिसूत्र**।

**मूलार्थ**– बुभुक्षा, पिपासा और गर्द्ध (निन्दा) अर्थ में क्रमश: अशनाय, उदन्य और धनाय-क्यजन्त निपातन होते हैं। अशनायति। उदन्यति। धनायति।

**विमर्श**– पूर्वसूत्र (८८९) से 'क्यचि' पद की अनुवृत्ति आ रही है। तदनुसार ''क्यच् परे रहते उक्त अर्थों में अशनाय, उदन्य और धनाय निपातित होते हैं।''

**उदाहरण**– (१) 'अशनम् इच्छति' (खाना चाहता है) इस अर्थ में– अशन + क्यच् (= 'य'–निपातनात्– 'अशनायोदन्यधनाया०', अम् (सुप्) का लुक्–'सुपो धातु०', 'अ' = 'आ'–निपातन से दीर्घ)–अशनाय + लट् (= तिप् = 'ति', शप् = 'अ', पररूप) = अशनायति। (२) उदक + क्यच् (= 'य', उदक् = 'उदन्')–उदन्य + लट् (= तिप् = 'ति', शप् = 'अ', पररूप) = उदन्यति। (३) धन + क्यच् (= 'य', दीर्घ–निपातन से)– धनाय + लट् (= तिप् = 'ति', शप् = 'अ', पररूप) = धनायति।

**प्रत्युदाहरण**– बुभुक्षादौ किमिति? प्रकृत सूत्र में बुभुक्षादि अर्थ का ग्रहण किया गया है, अत: इन अर्थों के अतिरिक्ति अर्थ में निपातन नहीं होता। वहाँ 'क्यचि च' से ईकारादेश होकर अशनीयति, उदनीयति, धनीयति रूप बनते हैं।

(८९१) **पद**– अश्वक्षीरवृषलवणानाम्, आत्मप्रीतौ, क्यचि। **अनुवृत्ति**– असुक्। **विधिसूत्र**।

वडवा। वृषस्यति गौः। * क्षीरलवणयोर्लालसायाम् *। क्षीरस्यति बालः। लवणस्यत्युष्ट्रः। * सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ *। दधिस्यति। दध्यस्यति। (८९२) **नः क्ये १।४।१५** । क्यचि क्यङि च नान्तमेव पदं स्यान्नान्यत्। 'न्'लोपः। राजीयति। नान्तमेवेति किम्? वाच्यति। 'हलि च'। गीर्यति। पूर्यति। 'धातोरि'त्येव। तेनेह न-

---

एषामिति। **अश्वस्यतीति**। वडवा मैथुनमिच्छतीत्यर्थे अश्वशब्दात् क्यचि अनुबन्धलोपे, 'अश्ववृषयोर्मैथुनेच्छायाम्' इति वार्तिकसहयोगेन 'अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि' इत्यनेनासुगागमे अनुबन्धलोपे 'अश्व + अस् + य' इति जाते, सवर्णदीर्घं प्रबाध्य 'अतो गुणे' इति पररूपे धातुसंज्ञायां लटि तिपि शपि अनुबन्धलोपे पररूपे कृते 'अश्वस्यति' इति।

(८९२) **नः क्ये इति**। 'सुप्तिङन्तं पदमि'त्यतः पदमित्यनुवर्तते। तेन क्यचि क्यङि च नान्तमेव पदं नान्यदिति नियमः। **राजीयति**– आत्मानं राजानमिच्छतीति विग्रहे क्यच्यनुबन्धलोपे धातुत्वे सुपो लुकि 'नः क्ये' इति नियमेन पदत्वे 'नलोपः प्रातिपदिकान्तस्ये'ति नकारलोपे 'क्यचि चे'त्यनेन अकारस्य ईत्वे, 'राजीय' इत्यस्य धातुत्वाल्लटि तिपि, शपि अनुबन्धलोपे, पररूपे 'राजीयति' इति।

---

**मूलार्थ**– आत्मप्रीति अर्थ में 'क्यच्' के परवर्ती रहते अश्व, क्षीर, वृष और लवण शब्दों से असुक् का आगम होता है।

**विमर्श**– इस सूत्र में 'आज्जसेरसुक्' (७।१।५१) से 'असुक्' की अनुवृत्ति आ रही है। तदनुसार– "आत्मा की प्रीति विषय में क्यच् के परे रहते अश्व, क्षीर, वृष तथा लवण शब्दों को 'असुक्' (= अस्) का आगम होता है।"

**उदाहरण**– (१) 'वडवा मैथुनमिच्छति' अर्थ में– अश्व + क्यच् (= 'य', असुक् = 'अस्' आगम–'अश्ववृषयोर्मैथुनेच्छायाम्' वार्तिक के सहयोग से 'अश्वक्षीरवृष०' से)–अश्व अ स् य (अ + अ = 'अ' पररूप–'अतो गुणे')– अश्वस्य (लट् = तिप् = 'ति', शप् = 'अ', पररूप) = अश्वस्यति। (२) वृष + क्यच् (= 'य', असुक् = 'अस्', पररूप)– वृषस्य (लट् = तिप् = 'ति', शप् = 'अ', पररूप) = वृषस्यति।

**(वा०)**– क्षीर और लवण शब्दों से लालसा अर्थ में 'असुक्' आगम होता है।

**उदाहरण**– (१) क्षीर + क्यच् (= 'य', असुक् = अस्–'क्षीरलवणयोर्लालसायाम्' वार्तिक के सहयोग से 'अश्वक्षीर०' से पररूप)– क्षीरस्य (लट् = तिप् = 'ति', शप् = 'अ' पररूप) = क्षीरस्यति। (२) लवण + क्यच् (= 'य', असुक् = 'अस्', पररूप)– लवणस्य (लट् = तिप् = 'ति', शप् = 'अ', पररूप) = लवणस्यति उष्ट्रः।

**(वा०)**– लालसा अर्थ में सभी प्रातिपदिकों से 'सुक्' और 'असुंक्' का आगम होता है।

**उदाहरण**– (१) दधि + क्यच् (= 'य', सुक् = 'स्' का आगम–'सर्वप्रातिपदिकानाम्०')– दधिस्य + लट् (= तिप् = 'ति', शप् = 'अ', पररूप) = दधिस्यति। असुक् पक्ष में– दधि अस् य ('इ' = 'य्'-यण्, लट् = तिप् = 'ति', शप् = 'अ', पररूप) = दध्यस्यति।

(८९२) **पद**– नः, क्ये। **अनुवृत्ति**– पदम्। **नियमसूत्र**।

**मूलार्थ**– 'क्यच्' और 'क्यङ्' के परवर्ती रहते नान्त शब्द की ही पदसंज्ञा होती है; अन्य की नहीं। नलोप। राजीयति।

**दिवमिच्छति दिव्यति। समिध्यति। ( ८९३ ) क्यस्य विभाषा ६।४।५० । हलः परयोः क्यच्क्यङोर्लोपो वाऽऽर्द्धधातुके। 'आदेः परस्य'। 'अतो लोपः'। तस्य**

---

(८९३) **क्यस्येति**। 'आर्धधातुके' इत्यधिकृतम्। 'अतो लोपः' इत्यतो लोप इति, 'यस्य हलः' इत्यतो हल इति चानुवर्तते। अत आह–**हलः परयोरित्यादि**। **समिधिता**– आत्मनः समिधमिष्टा इत्यस्मिन्विग्रहे क्यचि अनुबन्धलोपे धातुसंज्ञायां सुपो लुकि, धातुत्वाल्लुटि तिपि, 'स्यतासी लृलुटोः' इति तास्प्रत्यये, तिपः डादेशेऽनुबन्धलोपे, डित्त्वाट्टिलोपे 'आर्धधातुकस्येड् वलादेः' इत्यनेन इटि अनुबन्धलोपे 'क्यस्य विभाषे'ति विभाषया यकारलोपे 'अतो लोपः' इत्यकारलोपे 'समिधिता' इति। यलोपाऽभावपक्षे–'समिध्यिता' इति।

---

**विमर्श**– 'सुप्तिङन्तं पदम्' (१।४।१४) से 'पदम्' की अनुवृत्ति आती है। 'क्य' से क्यच् और क्यङ् का सामान्यतया ग्रहण किया जाता है। तदनुसार– ''क्यच् और क्यङ् के परे रहते नकारान्त शब्द की ही पदसंज्ञा होती है; अन्य की नहीं।''

**उदाहरण**– राजन् + क्यच् (= 'य'–'सुप आत्मनः क्यच्', धातुसंज्ञा, सुप् का लुक्)– राजन् य ('राजन्' की पदसंज्ञा–'नः क्ये', 'न्' का लोप–'नलोपः प्रातिपदिकान्तस्य', 'अ' = 'ई'– 'क्यचि च')– राजीय + लट् (= तिप् = ति, शप् = 'अ' पररूप) = राजीयति।

**नान्तमेवेति**। उक्त सूत्र में 'नः' से नान्त अर्थ लिया जाता है। तदनुसार नान्त पदों की ही पदसंज्ञा होने से 'वाच्यति' में 'वाच्' की पदसंज्ञा नहीं होती। अन्यथा यहाँ कुत्व और जश्त्व की प्रवृत्ति हो जाती।

**उदाहरण**– (१) 'आत्मनः गिरम् इच्छति' गिर् अम् + क्यच् (= 'य', धातुसंज्ञा, सुप् (अम्) का लुक्, 'इ' = 'ई'– उपधादीर्घ–'हलि च')– गीर्य + लट् (= तिप् = 'ति', शप् = 'अ', पररूप) = गीर्यति। (२) पुर् अम् + क्यच् (उक्तवत् प्रक्रिया)= पूर्यति। '**धातोरि**'त्येवेति– 'हलि च' सूत्र के द्वारा 'रेफ' और 'व्' अन्तवाले पदों की उपधा को दीर्घ विधान किया जाता है। परन्तु 'र्' और 'व्' दोनों वर्ण धातु के अवयव होने चाहिए। ✓ गॄ धातु से (क्विप्, इत्व, रपर) = गिर्। ✓ पॄ + क्विप् (उत्व, रपर) = पुर्। इनमें धातु का रेफ 'व्' होने से उसकी उपधा को दीर्घ हो जाता है। 'दिवमात्मन इच्छति' अर्थ में दिव् अम् सुबन्त से क्यच् (= 'य', सुप् का लुक्, लट् = तिप् = 'ति', शप् = 'अ', पररूप) = दिव्यति। धातु का वकार न होने से 'हलि च' से उपधादीर्घ नहीं हुआ।

(८९३) **पद**– क्यस्य, विभाषा। **अनुवृत्ति**– हलः, लोपः। **विधिसूत्र**।

**मूलार्थ**– आर्धधातुक के परवर्ती रहते हल् से परे क्यच् और क्यङ् का विकल्प से लोप होता है। समिधिता।

**विमर्श**– सूत्रार्थ की स्पष्टता हेतु 'यस्य हलः' (६।४।४९) से 'हलः' तथा 'अतो लोपः' (६।४।४८) से 'लोपः' की अनुवृत्ति आती है। तदनुसार– ''आर्धधातुक परे रहते हल् से उत्तरवर्ती 'क्यच्' और 'क्यङ्' (= **य**' का लोप विकल्प से होता है।''

**उदाहरण**– (१) आत्मनः समिधमिष्टा (अपनी समिधा चाहेगा) अर्थ में– समिध् अम् + क्यच् (= 'य', सुप् (अम्) का लुक्–'सुपो धातु०')– समिध् य + लुट् (= तिप् = डा = 'आ', तास्, डित्त्वात् टिलोप, इट् = 'इ'–'आर्धधातुकस्येड्०')– समिध् **य** इ ता ('य्' का विकल्प से लोप– 'आदेः परस्य' के निर्देश से 'क्यस्य विभाषा', 'अ' का लोप–'अतो लोपः') = समिधिता। 'य्' लोप के अभावपक्ष में ('अ' का लोप–'अतो लोपः') = समिध्यिता।

स्थानिवद्भावान्नोपधायाः गुणः। समिधिता। **(८९४) काम्यच्च ३।१।९।** उक्तविषये काम्यच्। पुत्रमात्मन इच्छति पुत्रकाम्यति। पुत्रकाम्यिता। **(८९५) उपमानादाचारे ३।१।१०।** उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् स्यात्। पुत्रमिवाचरति पुत्रीयति च्छात्रम्। विष्णूयति द्विजम्। * सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः *। 'अतो गुणे'। कृष्ण

---

(८९४) **'काम्यच्चे'ति**। 'धातोः कर्मणः' इत्यस्मात् 'कर्मणः, इच्छायां वे'त्यनुवर्तते, 'सुप आत्मनः' इत्यस्मात्सुप इति च। अत आह– **उक्तविषय इति**। **पुत्रकाम्यति**– आत्मनः पुत्रमिच्छतीत्यर्थे पुत्र अम् इति सुबन्तात् 'काम्यच्च' इत्यनेन काम्यच्प्रत्ययेऽनुबन्धलोपे धातुसंज्ञायाम् 'सुपो धातुप्रातिपदिकयोः' इति अमो लुकि 'पुत्रकाम्य' इति धातोर्लटि तिपि शपि अनुबन्धलोपे पररूपे 'पुत्रकाम्यति' इति।

(८९५) **उपमानादिति**। 'सुप आत्मनः क्यच्' इत्यतः 'सुपः, क्यच्' इत्यनुवर्तते। तदाह– **उपमानादिति**। **पुत्रीयति च्छात्रम्**– पुत्रमिवाचरतीति विग्रहे 'पुत्र अम्' इति उपमानवाचककर्मणः 'उपमानादाचारे' इत्यनेन क्यचि अनुबन्धलोपे, धातुसंज्ञायां सुपो लुकि, 'क्यचि चे'त्यनेन अकारस्य ईत्वे 'पुत्रीय' इति धातोर्लटि तिपि शपि 'अतो गुणे' इति पररूपे 'पुत्रीयति' इति।

**सर्वप्रातिपदिकेभ्य इति**। अयं क्विप् आचारेऽर्थे, कर्तरि, उपमानवाचकाद् भवति।

---

अकारलोप का स्थानिवद्भाव होने से यहाँ लघूपध गुण नहीं होता। क्योंकि स्थानिवद्भाव होने के कारण उपधा में लघु नहीं मिलता।

(८९४) **पद**– काम्यच्, च। **अनुवृत्ति**– सुपः, कर्मणः, इच्छायाम्। **विधिसूत्र**।

**मूलार्थ**– उक्त विषय अर्थात् 'क्यच्' के वषय में काम्यच् प्रत्यय भी होता है। पुत्रकाम्यति। पुत्रकाम्यिता।

**विमर्श**– पूर्वसूत्र (८८७) से 'सुपः' तथा 'धातोः कर्मणः०' (८३६) से 'कर्मणः' और 'इच्छायाम्' पदों की अनुवृत्ति आती है। तदनुसार– ''आत्मसम्बन्धी सुबन्त कर्म से इच्छा अर्थ में काम्यच् (= काम्य) प्रत्यय भी होता है।

**उदाहरण**– (१) पुत्रमात्मन इच्छति (अपना पुत्र चाहता है) अर्थ में– पुत्र अम् + काम्यच् (= काम्य–'काम्यच्च', धातुसंज्ञा, अम् (सुप्) का लोप–'सुपो धातुप्रातिपदिकयोः')– पुत्रकाम्य + लट् (= तिप् = 'ति', शप् 'अ', अ + अ = 'अ'– पररूप) = पुत्रकाम्यति। (२) नामधातु उक्तवत्– पुत्रकाम्य + लुट् (= तिप् = डा = 'आ', 'तास्'–'स्यतासी लृलुटोः', इट् = 'इ', 'अ' का लोप– 'अतो लोपः', डित्त्वाट्टिलोप) = पुत्रकाम्यिता।

(८९५) **पद**– उपमानात्, आचारे। **अनुवृत्ति**– सुपः, क्यच्, कर्मणः। **विधिसूत्र**।

**मूलार्थ**– उपमानवाचक कर्मसंज्ञक सुबन्त से 'आचार' अर्थ में क्यच् प्रत्यय होता है। पुत्रीयति च्छात्रम्। विष्णूयति द्विजम् इत्यादि।

**विमर्श**– उक्तसूत्रवत् यहाँ भी पूर्वसूत्रों से 'सुपः, क्यच् तथा कर्मणः' की अनुवृत्ति आ रही है। 'प्रत्ययः, परश्च' का अधिकार है। इस प्रकार ''उपमानवाची सुबन्त कर्म से आचार अर्थ में क्यच् (य) प्रत्यय होता है''। आचार का अर्थ– 'आचरण करना या व्यवहार करना है'। अतः सुबन्त को आचार का कर्म होते हुए उपमान भी होना चाहिए। पूर्वसूत्र 'सुप आत्मनः क्यच्' से विहित क्यच् को इच्छा-क्यच् और प्रकृत सूत्र द्वारा विहित क्यच् को आचार-क्यच् कहा जाता है।

**इवाचरति कृष्णाति। स्व इवाचरति स्वति। सस्वौ। ( ८९६ ) अनुनासिकस्य क्विझलोः क्ङिति ६।४।१५ । अनुनासिकान्तस्योपधाया दीर्घः स्यात् क्वौ, झलादौ क्ङिति च। इदमिवाचरति इदामति। राजेवाचरति राजानति। 'इन्हन्नि'ति नियमान्नेहोपधादीर्घः–पन्था**

---

(८९६) **अनुनासिकस्येति।** 'ढ्रलोपे' इत्यतः दीर्घ इति, 'नोपधायाः' इत्यत 'उपधायाः' इति चानुवर्तते। तदाह– **अनुनासिकान्तस्येति। इदामति–** इदमिवाचरतीत्यर्थे इदमिति प्रातिपदिकात् 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' इति क्विपि तस्य सर्वापहारे लोपे धातुसंज्ञायाम् 'अनुनासिकस्य क्विझलोः क्ङिति' इति उपधायाः दीर्घे, इदामितिधातोर्लटि तिपि, शपि अनुबन्धलोपे संयोगे कृते **इदामति इति।**

---

**उदाहरण–** (१) 'पुत्रमिव आचरति' (पुत्र के समान आचरण करता है) अर्थ में– पुत्र अम् + क्यच् (= 'य'–'उपमानादाचारे', धातुसंज्ञा, 'अम्' (सुप्) का लुक्, 'अ' = 'ई'–'क्यचि च')– पुत्रीय (लट् = तिप् = 'ति', शप् = 'अ', पररूप) = पुत्रीयति। (२) विष्णुमिवाचरति द्विजम् (ब्राह्मण के साथ विष्णु के समान आचरण करता है)– विष्णु अम् + (क्यच् = 'य', सुफ् का लुक्, 'उ' = 'ऊ'–दीर्घ–'अकृत्सार्वधातुकयोः') विष्णु अम् + क्यच् ( = 'य', सुप् का लुक्, 'उ' = 'ऊ'–दीर्घ– 'अकृत्सार्वधातुकयोः')– विष्णूय (लट् = तिप् = 'ति', शप् = 'अ', पररूप) = विष्णूयति।

**(वा०)**— सभी प्रातिपदिकों से आचार अर्थ में विकल्प से क्विप् प्रत्यय होता है।

('क्विप्' प्रत्यय का सर्वापहारी लोप हो जाता है। प्रत्ययगत ककार की 'लशक्वतद्धिते' से इत्संज्ञा, पकार की 'हलन्त्यम्' से और इकार की 'उपदेशेऽजनुनासिक इत्' से इत्संज्ञा हो जाती है। अतः 'तस्य लोपः' से लोप हो जाता है। अवशिष्ट वकार का 'वेरपृक्तस्य' से लोप हो जाता है। इस प्रकार सम्पूर्ण प्रत्यय का लोप हो जाने से केवल धातु का रूप ही शेष रह जाता है।)

**उदाहरण–** (१) 'कृष्ण इव आचरति' (कृष्ण के समान आचरण करता है) अर्थ में– कृष्ण + क्विप् (क्विप् का सर्वापहार लोप, धातुसंज्ञा, लट् = तिप् = तिप् = 'ति', शप् = 'अ', पररूप) = कृष्णति। (२) 'स्व इवाचरति' (अपने अथवा आत्मीय के समान आचरण करता है)– स्व + क्विप् (सर्वापहार लोप, धातुसंज्ञा, लट् = तिप् = 'ति', शप् = 'अ', पररूप) = कृष्णति। (३) क्विबन्त नामधातु ✓ स्व + लिट् ( = 'तिप्' = 'णल्', 'अ' = 'आ'–वृद्धि–'अचो ञ्णिति', 'णल्' = 'औ'– 'आत औ णलः', द्वित्व, अभ्याससंज्ञा– हलादिशेष, ह्रस्व)– सस्वा औ (आ + औ = 'औ'–वृद्धि) = सस्वौ।

(८९६) **पद–** अनुनासिकस्य, क्विझलोः, क्ङिति। **अनुवृत्ति–** उपधायाः, दीर्घः। **विधिसूत्र।**

**मूलार्थ–** क्विप् और झलादि कित्–डित् के परवर्ती रहते अनुनासिकान्त की उपधा को दीर्घ होता है। इदामति। राजानति।

**विमर्श–** सूत्रार्थ की स्पष्टता के लिए 'ढ्रलोपे पूर्वस्य०' (६।३।११०) से 'दीर्घः' और 'नोपधायाः' (६।४।७) से 'उपधायाः' की अनुवृत्ति आती है। तदनुसार– "क्वि और झलादि कित्–डित् के परे रहते अनुनासिकान्त अङ्ग की उपधा को दीर्घ रूप आदेश होता है।"

**उदाहरण–** (१) 'इदमिवाचरति' (इसके समान आचरण करता है।) अर्थ में–इदम् + 'क्विप्'– 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' (क्विप् का सर्वापहार लोप, प्रत्ययलक्षण से क्विबन्त मानकर धातुसंज्ञा, 'अ' = 'आ'–उपधादीर्घ–'अनुनासिकस्य०')–इदाम् + लट् ( = तिप् = 'ति', शप् = 'अ')

**इवाचरति पथीनति। मथीनति। (८९७) कर्तुः क्यङ् सलोपश्च ३।१।११ । उपमानात्कर्तुः सुबन्तादाचारेऽर्थे क्यङ् वा स्यात्, सान्तस्य कर्तृवाचकस्य लोपो वा स्यात्। 'क्यङ् वे'त्युक्तेः पक्षे वाक्यम्। 'सन्नियोगशिष्टानां सह वा प्रवृत्तिरि'ति क्यङ्सलोपयोः सहैव प्रवृत्तिः। लोपश्च व्यवस्थितः। * ओजसोऽप्सरसो नित्यमितरेषां विभाषया *। कृष्ण इवाचरति कृष्णायते। ओजायते। अप्सरायते। यशायते। यशस्यते।**

---

(८९७) **कर्तुरिति**। 'उपमानादाचारे' इति सूत्रम्, 'सुपो धातु०' इत्यतः सुप इति चानुवर्तेते। अत आह– **उपमानात्कर्तुरित्यादिना**। **कृष्णायते**– कृष्ण इवाचरतीत्यर्थे कृष्णशब्दात् 'कर्तुः क्यङ् सलोपश्चे'त्यनेन विभाषया क्यङि प्रत्यये अनुबन्धलोपे 'अकृत्सार्वधातुकयोर्दीर्घः' इत्यकारस्य दीर्घे 'कृष्णाय' इत्यस्य धातुत्वे लटि तप्रत्यये शपि अनुबन्धलोपे टेरेत्वे, पररूपे 'कृष्णायते' इति।

---

= इदामति। (२) 'राजेव आचरति' (राजा के समान आचरण करता है) अर्थ में– राजन् + क्विप् (सर्वापहार लोप, प्रत्ययलक्षणेन क्विबन्तत्वात् धातुसंज्ञा, उपधादीर्घ–'अनुनासिकस्य०')– राजान् (+ लट् = तिप् = 'ति', शप् = 'अ') = राजानति। (३) 'पन्था इवाचरति' (मार्ग के समान आचरण करता है) अर्थ में– पथिन् + क्विप् (सर्वापहार लोप, प्रत्ययलक्षणेन धातुसंज्ञा, उपधादीर्घ, लट् = तिप् = 'ति', शप् = 'अ') = पथीनति। (४) 'मन्था इवाचरति' (रई के डंडे के समान आचरण करता है) अर्थ में मथिन् + क्विप् (क्विप् का सर्वापहारलोप, प्रत्ययलक्षणेन धातुसंज्ञा, उपधादीर्घ)–मथीन् + लट् (= तिप् = 'ति', शप् = 'अ') = मथीनति।

**इन्हन्निति**– 'इन्हन्पूषार्यम्णां शौ' सूत्र के अनुसार इन्प्रत्ययान्त शब्दों की उपधा को 'शि' विभक्ति के परवर्ती रहते ही दीर्घ होता है। अतः इस नियम के अनुसार पथिन् और मथिन् (इन्प्रत्ययान्त) शब्दों की उपधा को दीर्घ नहीं होता। यह कुछ विद्वानों का मत है। अतः मतान्तर में दीर्घ के अभाव में गुण होकर 'पथेनति, मथेनति' प्रयोग होते हैं।

(८९७) **पद**– कर्तुः, क्यङ्, सलोपः, च। **अनुवृत्ति**– उपमानादाचारे, सुपः वा। **विधिसूत्र**।

**मूलार्थ**– उपमानवाची कर्तृसंज्ञक सुबन्त से आचार अर्थ में विकल्प से क्यङ् प्रत्यय होता है तथा सकारान्त कर्तृवाचक के सकार का लोप भी विकल्प से होता है। विकल्प से 'क्यङ्' का विधान होने से अभावपक्ष में वाक्य का ही प्रयोग होता है।

**सन्नियोगेति**– ''सन्नियोगशिष्टों की साथ ही प्रवृत्ति होती है और साथ ही निवृत्ति होती है।'' इस नियम के अनुसार 'क्यङ्' और सकारलोप की प्रवृत्ति साथ-साथ ही होती है, परन्तु लोप को अग्रिम वार्तिक द्वारा व्यवस्थित किया गया है।

**(वा०)** – 'ओजस्' तथा 'अप्सरस्' शब्द के सकार का नित्य लोप होता है। शेष (अन्य) सकारान्त शब्दों के सकार का विकल्प से लोप होता है।

कृष्ण इवाचरति कृष्णायते इत्यादि।

**विमर्श**– प्रकृत सूत्र में (८८७) से 'सुपः', 'धातोः कर्मणः०' (८३६) से 'वा' तथा 'उपमानादाचारे' (८९५) सूत्र की अनुवृत्ति आ रही है। तदनुसार– ''उपमानवाची सुबन्त कर्ता से आचार अर्थ में विकल्प से 'क्यङ्' (= य) प्रत्यय होता है तथा सकारान्त शब्दों के सकार का लोप भी विकल्प से होता है।''

**उदाहरण**– (१) 'कृष्ण इवाचरति' (कृष्ण के समान आचरण करता है) अर्थ में– कृष्ण + क्यङ् (= 'य', 'अ' = 'आ'–दीर्घ)– कृष्णाय + लट् (= 'त', शप् = 'अ', पररूप, एत्व) = कृष्णायते। (२) 'ओज इवाचरति' (ओजस्वी की तरह आचरण करता है) अर्थ में– ओजस् + क्यङ्

विद्वायते। व्रिद्वस्यते। * आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः *। वा-ग्रहणाद्वाक्यमपि। अवगल्भादयः पचाद्यजन्ताः। क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वं चाऽच्प्रत्ययस्य प्रतिज्ञायते। तेन तङ्। अवगल्भते। क्लीबते। होडते। भूतपूर्वादप्यनेकाच आम्, एतद्वार्तिकारम्भसामर्थ्यात्। अवगल्भाञ्चक्रे। क्लीबाञ्चक्रे। होडाञ्चक्रे। उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते। तेन

---

**भूतपूर्वादपीति**। अन्त्याकारस्येत्संज्ञायां लुप्तत्वात् क्विप्प्रत्यये धातूनामनेकाच्त्वात् कास्यनेकाच इत्यस्याऽप्रवृत्तेः, अवगल्भाञ्चक्रे, क्लीबाञ्चक्रे इत्यादौ कथमाम् (अवगल्भ इत्यत्र 'अव' इत्यस्य उपसर्गसमानाकारत्वेन पृथक्करणादनेकाच्त्वं नास्ति) अत आह–**भूतपूर्वादपीति**। 'साम्प्रतिकाभावे भूतपूर्वगतिरि'ति न्यायेन क्विप्प्रत्ययोत्पत्तेः प्राक्तनमेवाच्त्वमाश्रयणीयमिति।

---

(= 'य'–'कर्तुः क्यङ् सलोपश्च', 'ओजसोऽप्सरसोः नित्यमितरेषां विभाषया' इस वार्तिक-सहयोग से 'स्' का नित्य लोप, 'अ' = 'आ'–दीर्घ–'अकृत्सार्व०')– ओजाय (लट् = 'त', शप् = 'अ', एत्व, पररूप) = ओजायते। (३) अप्सरस + क्यङ् (प्रक्रिया ओजायतेवत्) = अप्सरायते। (४) 'यशस्वीवाऽऽचरते' (यशस्वी के समान आचरण करता है) अर्थ में–यशस् + क्यङ् (='य', 'स्' का विकल्प से लोप–'कर्तुः क्यङ् सलोपश्च', 'अ' = 'आ'–दीर्घ)–ओजाय (लट् = 'त', शप् = 'अ', पररूप, एत्व) = यशायते। सकारलोप के अभाव पक्ष में–यशस्यते। (५) 'विद्वानिवाचरति' (विद्वान् की तरह आचरण करता है)–विद्वस् + क्यङ् (= 'य', विकल्प से 'स्' का लोप, दीर्घ)– विद्वाय + लट् (= 'त', शप् = 'अ', एत्व, पररूप) = विद्वायते। 'स्' लोप के अभावपक्ष में–विद्वस्यते।

**(वा०) आचारे०**– आचार अर्थ में अवगल्भ, क्लीब और होड शब्द से विकल्प से 'क्विप्' प्रत्यय होता है। वा = विकल्प का ग्रहण होने से पक्ष में वाक्य का भी प्रयोग होता है। (अवगल्भ आदि पचादिगणपठित अजन्त पद हैं। क्विप् प्रत्यय के सन्नियोग से अन्त्य अकार (अच्प्रत्यय) को अनुदात्तत्व और अनुनासिकत्व की प्रतिज्ञा की जाती है। अतः अनुदात्तेत् होने से आत्मनेपद होता है।)

**उदाहरण**– (१) 'अवगल्भ इवाचरति' अर्थ में– अवगल्भ + क्विप् (विकल्प से–'आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः', क्विप् का सर्वापहार लोप)– अवगल्भ + लट् (= 'त', शप् = 'अ', एत्व, पररूप) = अवगल्भते। (२) 'क्लीब इवाचरति' (नपुंसक की तरह आचरण करता है) अर्थ में– क्लीब + क्विप् (सर्वापहार लोप, लट् = 'त', शप् = 'अ', पररूप, एत्व) = क्लीबते। (३) 'होड इवाचरति' अर्थ में– होड + क्विप् (लोप, लट् = 'त', शप्, पररूप, एत्व) = होडते।

अव + गल्भ आदि में अन्त्य अकार की इत्संज्ञा और लोप होने से 'क्विप्' होने पर धातु के अनेकाच् न होने से 'कास्यनेकाच्०' से 'आम्' नहीं होगा। 'आम्' न होने पर 'अवगल्भाञ्चक्रे', 'क्लीबाञ्चक्रे' और 'होडाञ्चक्रे' आदि लिट्–प्रयोगों की सिद्धि किस प्रकार होगी? इस प्रश्न की आशङ्का में ग्रन्थकार कहते हैं–.

**भूतपूर्वादपीति**। 'साम्प्रतिकाभावे भूतपूर्वगतिः' इस न्याय से 'क्विप्' प्रत्यय से पूर्व के अनेकाच्त्व का आश्रयण कर 'आम्' हो जायेगा। इसमें प्रमाण प्रकृत वार्तिक का आरम्भ ही है। क्योंकि 'सर्वप्रातिपदिकेभ्यः क्विब्वा' वार्तिक से क्विप् प्रत्यय का विधान कर 'अवगल्भते' आदि प्रयोगों की सिद्धि हो जाती। पुनः प्रकृत वार्तिक ('आचारेऽवगल्भ०') द्वारा क्विप् का विधान और क्विप्-सन्नियोग से अन्त्य वर्ण को अनुदात्त और अनुनासिक प्रतिज्ञान किया। वह ज्ञापित करता है कि "भूतपूर्व गति

'गल्भ'शब्दावतप्रागट्। अवागल्भत। अवागल्भिष्ट। **( ८९८ ) लोहितादिडाज्भ्यः क्यष् ३।१।१३ ।** लोहितादिभ्यो डाजन्ताच्च भवत्यर्थे क्यष् स्यात्। **( ८९९ ) वा क्यषः १।३।९० ।** क्यषन्तात्परस्मैपदं वा स्यात्। अलोहितो लोहितो भवति लोहितायति। लोहितायते। ननूच्चारणसामर्थ्यात् काम्यच इव क्यषोऽपि ककारः कुतो न श्रूयते? इति चेच्छृणु। तस्य भाष्ये प्रत्याख्यानात्। पटपटायति। पटपटायते। **( ९०० ) कष्टाय क्रमणे**

---

(८९८) **लोहितादिडाज्भ्य इति**। डाजन्ताल्लोहितादिगणात्क्यष् स्यादिति भावः।

(८९९) **वा क्यष इति**। 'शेषात्कर्तरि परस्मैपदमि'त्यतः परस्मैपदमित्यनुवर्तते। तदाह– **क्यषन्तादिति**। **लोहितायति**– 'अलोहितो लोहितो भवती'त्यर्थे लोहितशब्दात् 'लोहितादिडाज्भ्यः क्यष्' इत्यनेन क्यषि अनुबन्धलोपे 'अकृत्सार्वधातुकयोः' इति दीर्घे 'वा क्यषः' इति विभाषया परस्मैपदे लटि तिपि शपि अनुबन्धलोपे पररूपे 'लोहितायति'। परस्मैपदाभावे आत्मनेपदे– 'लोहितायते'।

---

से अनेकाच्त्व का आश्रयण किया जाता है।'' आम् होने पर–'अवगल्भाञ्चक्रे, क्लीबाञ्चक्रे और होडाञ्चक्रे लिट् में रूप बनते हैं।

क्विबन्त अवगल्भ शब्द से लङ् लकार में 'अव' से पूर्व अट् = 'अ' आगम की प्राप्ति होने पर उत्तर में कहा गया है– **उपसर्गसमानाकार इति**। ''धातुसंज्ञा के प्रयोजक सन्, णिच्, क्विप् इत्यादि प्रत्ययों का विधान करना इष्ट होने पर उपसर्ग के समानाकार पूर्व पद अलग कर दिया जाता है।'' इस नियम से यहाँ 'अवगल्भ' से क्विप् का विधान होने पर 'अव' को पृथक् करके 'गल्भ' मात्र की ही अङ्गसंज्ञा होती है और गल्भ से पूर्व ही 'अट्' आगम होता है। लङ् प्र०पु० एकव०–अवागल्भत। लुङ्–अवागल्भिष्ट।

(८९८) **पद**– लोहितादिडाज्भ्यः, क्यष्। **अनुवृत्ति**– भुवि। **विधिसूत्र**।

**मूलार्थ**– लोहितादि और डाजन्त पदों से 'भवति' अर्थ में क्यष् प्रत्यय होता है।

**विमर्श**– प्रकृत सूत्र में– 'भृशादिभ्यो०' (३।१।१२) से 'भुवि' की अनुवृत्ति आती है। तदनुसार– ''लोहितादि तथा डाजन्त शब्दों से भू धातु के अर्थ में क्यष् (=य) प्रत्यय होता है।''

(८९९) **पद**– वा, क्यषः। **अनुवृत्ति**– परस्मैपदम्। **विधिसूत्र**।

**मूलार्थ**– क्यष् प्रत्ययान्त से विकल्प से परस्मैपद होता है। लोहितायति, लोहितायते इत्यादि।

**विमर्श**– यहाँ 'शेषात्कर्तरि परस्मैपदम्' (१।३।७८) से 'परस्मैपदम्' की अनुवृत्ति आती है। अतः ''क्यषन्त से विकल्प से परस्मैपद होता है।'' **ननूच्चारणसामर्थ्यादिति**– ''जैसे उच्चारणसामर्थ्य से 'काम्यच्' प्रत्ययगत ककार का लोप नहीं होता, उसी तरह 'क्यष्' में भी ककार का लोप नहीं होना चाहिए। इसके उत्तर में ग्रन्थकार का कथन है कि महाभाष्य में क्यष् के ककार का प्रत्याख्यान किया गया है। यदि प्रयोगों में क्यष् के ककार का श्रवण भाष्यकार को इष्ट होता तो वह ककार का प्रत्याख्यान ही क्यों करते?''

**उदाहरण**– (१) 'अलोहितः लोहितो भवति' अर्थ में– लोहित + क्यष् (= 'य'– 'लोहितादिडाज्भ्यः क्यष्', 'अ' = 'आ'–दीर्घ)– लोहिताय + लट् (विकल्प से परस्मैपद– 'वा क्यषः', तिप् = 'ति', शप् = 'अ', पररूप) = लोहितायति। परस्मैपद के अभाव पक्ष में– आत्मनेपद–लोहितायते। (२) पटत् + डाच् (= 'आ', द्वित्व–'डाचि विवक्षिते द्वे बहुलम्')– पटत् पटत् आ (पूर्व 'त्' का पररूप 'नित्यमाम्रेडिते डाचि' डित्त्वात् टि = 'अत्' का लोप)–पटपटा + क्यष् (= 'य'–'लोहितादि०')

**३।१।१४।** चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात्। कष्टाय क्रमते कष्टायते। पापं कर्तुमुत्सहत इत्यर्थः। * सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम् *। कण्व पापम्। पापं चिकीर्षति– सत्रायते। कक्षायते। **( ९०१ ) कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ३।१।१५।** रोमन्थतपोभ्यां कर्मभ्यां क्रमेण वर्तनायां चरणे चार्थे क्यङ् स्यात्। रोमन्थं वर्तयति रोमन्थायते। * हनुचलन इति वाच्यम् *। चर्वितस्याऽऽकृष्य

---

(९००) **कष्टायेति**। अत्र स्वरितत्वात् 'कर्तुः क्यङि'त्यतः क्यङ एवानुवृत्तिर्न तु क्यषः। अत आह–**चतुर्थ्यन्तादिति**। **कष्टायते**– 'कष्ट ङे' इति चतुर्थ्यन्तात्क्रमते इत्यर्थे 'कष्टाय क्रमणे' इत्यनेन क्यङि अनुबन्धलोपे धातुसंज्ञायां सुपः = ङेर्लुकि, 'अकृत्सार्वधातुकयोः' इत्यजन्ताङ्गस्य दीर्घे 'कष्टाय' इति जाते, ङित्त्वादात्मनेपदे लटि 'त'प्रत्यये शपि अनुबन्धलोपे पररूपे टेरेत्वे 'कष्टायते' इति रूपम्।

(९०१) **कर्मणो रोमन्थ इति**। 'कर्तुः क्यङ् सलोपश्चे'त्यतः क्यङित्यनुवर्तते। **रोमन्थायते**– रोमन्थं वर्तयतीति विग्रहे रोमन्थपदात् 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इत्यनेन क्यङि अनुबन्धलोपे 'अकृत्सार्वधातुकयोः' इति अकारस्य दीर्घे धातुत्वाल्लटि ङित्त्वादात्मनेपदे तप्रत्यये शपि अनुबन्धलोपे पररूपे टेरेत्वे कृते 'रोमन्थायते' इति।

---

– पटपटाय (विकल्प से परस्मैपद, लट् = तिप् = 'ति', शप् = 'अ', पररूप) = पटपटायति। आत्मनेपद में–पटपटायते।

(९००) **पद**– कष्टाय, क्रमणे। **अनुवृत्ति**– क्यङ्। **विधिसूत्र**।

**मूलार्थ**– चतुर्थ्यन्त कष्ट शब्द से 'उत्साह' अर्थ में क्यङ् प्रत्यय होता है। कष्टाय क्रमते–कष्टायते (पाप कार्य करने के लिए उत्साहित होता है।)

**विमर्श**– प्रकृत सूत्र में 'कर्तुः क्यङ्०' (८९७) सूत्र से 'क्यङ्' पद की अनुवृत्ति आती है। तदनुसार– ''चतुर्थी विभक्त्यन्त शब्द से उत्साह अर्थ में क्यङ् प्रत्यय होता है।''

**पापं कर्तुमिति**– कष्ट का अर्थ यहाँ 'पाप' है। 'पाप करने के लिए उत्साह करता है' इस अर्थ में 'कष्ट' शब्द से क्यङ् (= 'य') प्रत्यय होता है।

**उदाहरण**– कष्ट ङे + क्यङ् (= 'य'–'कष्टाय क्रमणे', धातुसंज्ञा, सुप् (ङे) का लुक्, 'अ' = 'आ'-दीर्घ–'अकृत्०')–कष्टाय (लट् = आत्मनेपद 'त', शप् = 'अ' पररूप, एत्व) = कष्टायते।

**( वा० )**– सत्र, कक्ष, कष्ट, कृच्छ्र और गहन शब्दों से पापचिकीर्षा (पाप करने की इच्छा) अर्थ में क्यङ् (= 'य') प्रत्यय होता है।

**उदाहरण**– (१) 'कण्वं = पापं चिकीर्षति' इस अस्वपद विग्रह में– सत्र + क्यङ् (= 'य'– 'सत्रकक्ष०' वार्तिक से, 'अ' = 'आ' दीर्घ–'अकृत्०')–सत्राय + लट् (= 'त', शप् = 'अ', पररूप, एत्व) = सत्रायते। (२) कक्ष + क्यङ् (उक्तवत् प्रक्रिया) = कक्षायते।

(९०१) **पद**– कर्मणः, रोमन्थतपोभ्याम्, वर्तिचरोः। **अनुवृत्ति**– क्यङ्। **विधिसूत्र**।

**मूलार्थ**– कर्मभूत 'रोमन्थ' और 'तपस्' शब्द से वर्तना (वर्तयति) तथा चरण (चरति) अर्थ में 'क्यङ्' प्रत्यय होता है। रोमन्थायते।

**विमर्श**– पूर्ववत् (८८७) सूत्र से 'क्यङ्' की अनुवृत्ति आ रही है। अतः ''रोमन्थ' और 'तपस्' शब्द (जो कर्म हों) से क्रमशः 'वर्तन' तथा 'चरण' अर्थ में 'क्यङ्' प्रत्यय होता है।''

**पुनश्चर्वणे इत्यर्थः। नेह– कीटो रोमन्थं वर्तयति। * तपसः परस्मैपदञ्च *। तपश्चरति तपस्यति। (९०२) बाष्पोष्मभ्यामुद्वमने ३।१।१६ । आभ्यां कर्मभ्यां क्यङ् स्यादुद्वमने। बाष्पमुद्वमति बाष्पायते। ऊष्माणमुद्वमति ऊष्मायते। * फेनाच्चेति वक्तव्यम् *। फेनमुद्वमति फेनायते। (९०३) शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ३।१।१७ । एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात्। शब्दं करोति शब्दायते। * सुदिनदुर्दिननीहारेभ्यश्च *।**

---

(९०२) **बाष्पोष्मेति**। 'कर्मणः, क्यङ्' इत्यनुवर्तते। **बाष्पायते**– बाष्पमुद्वमतीति विग्रहे 'बाष्पोष्मभ्यामुद्वमने' इति क्यङि अनुबन्धलोपे 'अकृत्०' इति दीर्घे ङित्त्वादात्मनेपदे लटि तङि शपि अनुबन्धलोपे टेरेत्वे पररूपे कृते 'बाष्पायते' इति।

(९०३) **शब्दवैर इति**। 'कर्मणः, क्यङ्' इत्यनुवर्तते। तदाह– **एभ्यः कर्मभ्य इति**। **शब्दायते**– शब्दं करोतीत्यर्थे शब्दपदात् 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' इत्यनेन क्यङि

---

**उदाहरण**– (१) रोमन्थं वर्तयति (जुगाली करती है) अर्थ में– रोमन्थ अम् + क्यङ् (= 'य'–'कर्मणो रोमन्थ०', 'अ' = 'आ'–दीर्घ–'अकृत्०')–रोमन्थाय + लट् (= 'त', शप् = अ, पररूप, एत्व) = रोमन्थायते।

**(वा०)**– हनुचलन (चर्वित का पुनः चबाना अर्थात् 'जुगाली') अर्थ में ही 'रोमन्थ' शब्द से 'क्यङ्' होता है।

(२) 'कीटो रोमन्थं वर्तयति।' यहाँ 'कीट मल का भक्षण करता है' अर्थ में 'जुगाली' (चर्वित चर्वण) अर्थ न होने से 'क्यङ्' नहीं होता।

**(वा०)**– क्यङन्त 'तपस्' शब्द से परस्मैपद होता है।

**उदाहरण**– (३) 'तपः चरति' (तप का आचरण करता है) अर्थ में– तपस् अम् + क्यङ् (='य'–'कर्मणो०', सुप् का लुक्)–तपस् (परस्मैपद–'तपसः परस्मैपदं च', लट् = तिप् = 'ति', शप् = 'अ', पररूप) = तपस्यति।

(९०२) **पद**– बाष्पोष्मभ्याम्, उद्वमने। **अनुवृत्ति**– कर्मणः, क्यङ्। **विधिसूत्र**।

**मूलार्थ**– कर्मभूत बाष्प और ऊष्म शब्द से उद्वमन अर्थ में क्यङ् प्रत्यय होता है। बाष्पायते। ऊष्मायते इत्यादि।

**विमर्श**– 'धातोः कर्मणः०' (८३६) सूत्र से 'कर्मणः' तथा 'कर्तुः क्यङ्०'(८९७) से 'क्यङ्' पद की अनुवृत्ति आती है। इस प्रकार– ''बाष्प और ऊष्म पद (कर्मभूत) से उद्वमन (उगलना, निकालना) अर्थ में 'क्यङ्' प्रत्यय होता है।''

**उदाहरण**– (१) बाष्पमुद्वमति (भाप को ऊपर फेंकता है) अर्थ में–बाष्प + क्यङ् (= 'य', दीर्घ)–बाष्पाय + लट् (= 'त', शप् = 'अ', पररूप, एत्व) = बाष्पायते। (२) ऊष्माणम् उद्वमति (ऊष्मा को निकालता है) अर्थ में– ऊष्म + क्यङ् (= 'य' – 'बाष्पोष्म०', दीर्घ)– ऊष्माय + लट् (= 'त', शप्, पररूप, एत्व) = ऊष्मायते।

**(वा०)**– 'फेन शब्द से भी उद्वमन अर्थ में क्यङ् प्रत्यय होता है।' ऐसा कहना चाहिए।

**उदाहरण**– (३) 'फेनमुद्वमति' अर्थ में– फेन + क्यङ् (= 'य'–'फेनाच्चेति०', दीर्घ)–फेनाय + लट् (= 'त', शप् = 'अ', पररूप, एत्व) = फेनायते।

(९०३) **पद**– शब्द-वैर-कलहाभ्र-कण्व-मेघेभ्यः, करणे। **अनुवृत्ति**– कर्मणः, क्यङ्। **विधिसूत्र**।

सुदिनायते। दुर्दिनायते। नीहारायते। * प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च *। प्रातिपदिकाद्धात्वर्थे णिच्स्यात् इष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभाव-

---

अनुबन्धलोपे सुपो लुकि, अकारस्य दीर्घे धातुत्वाल्लटि तङि शपि अनुबन्धलोपे टेरेत्वे पररूपे 'शब्दायते' इति।

**अपीपटत्** इति। 'पटुमाचष्टे' इत्यर्थे पटुशब्दात् "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चे"ति वार्तिकेन णिचि, सुपो लुकि इष्ठवद्भावात्पूर्वं टिलोपे प्राप्ते तं प्रबाध्य परत्वात् 'अचो ञ्णिति' इति वृद्धौ सत्यां टे: = औकारस्य लोपे धातुत्वाल्लुङि तिपि अडागमेऽनुबन्धलोपे, च्लौ, च्ले: सिचि प्राप्ते तं प्रबाध्य 'णिश्रिद्रुस्रुभ्य: कर्तरि चङ्' इत्यनेन च्लेश्चङि अनुबन्धलोपे द्वित्वेऽभ्यासादिकार्ये 'अ प पट् इ अ ति' इति जाते 'सन्वल्लघुनि' इत्यनेन सन्वद्भावे 'सन्यत:' इत्यनेन अभ्यासस्य इत्वे 'दीर्घो लघो:' इति दीर्घे 'इतश्चे'त्यनेन तिप इकारलोपे 'अपीपटत्' इति। भाष्ये तु 'वृद्धेर्लोपो बलीयानि'ति निर्दिष्टत्वात् णौ वृद्धिं प्रबाध्य टे: = उकारस्यैव

---

**मूलार्थ**– कर्मभूत शब्द, वैर, कलह, अभ्र, कण्व और मेघ शब्द से 'करोति' अर्थ में 'क्यङ्' प्रत्यय होता है। शब्दायते।

**विमर्श**– उक्तवत् 'कर्मण:' तथा 'क्यङ्' पदों की अनुवृत्ति आती है। तदनुसार–''कर्मकारक-शब्द, वैर, कलह, अभ्र, कण्व और मेघ से करने (करोति) अर्थ में 'क्यङ्' प्रत्यय होता है।''

**उदाहरण**– (१) 'शब्दं करोति' (शब्द करता है) अर्थ में– शब्द अम् + क्यङ् (= 'य', धातुसंज्ञा, अम् (सुप्) का लुक्, 'अ' = 'आ'–दीर्घ)–शब्दाय (लट् = 'त', शप् = 'अ', पररूप, एत्व) = शब्दायते।

**(वा०)**– कर्मभूत सुदिन, दुर्दिन और नीहार शब्दों से भी 'करोति' अर्थ में 'क्यङ्' प्रत्यय होता है।

**उदाहरण**– (१) 'सुदिनं करोति' (सुहावना दिन करता है) अर्थ में– सुदिन अम् + क्यङ् (= 'य'–'सुदिनदुर्दिननीहारेभ्यश्च' वार्तिक से, सुप् (अम्) का लुक्, अ = 'आ'–दीर्घ–'अकृत्सार्व०')– सुदिनाय (लट्, ङित्त्वात् आत्मनेपद ल् = 'त', शप् = 'अ', पररूप, एत्व) = सुदिनायते। (२) दुर्दिन + क्यङ् (उक्तवत् प्रक्रिया) = दुर्दिनायते। (३) नीहार + क्यङ् = नीहारायते।

**(वा०)**– प्रातिपदिक से धातु के अर्थ में 'णिच्' प्रत्यय बहुलता से होता है और यह णिच् (= इ) इष्ठन् प्रत्यय के समान होता है। अर्थात् ''इष्ठन् (= इष्ठ) प्रत्यय के परवर्ती रहते प्रातिपदिक को पुंवद्भाव, रभाव, टिलोप, विन् और मतुप् का लोप, यणादिलोप तथा प्र, स्थ, स्फ आदि आदेश और भसंज्ञा आदि कार्य होते हैं।'' इसी प्रकार 'णिच्' के परे रहते भी ये कार्य होते हैं।

**उदाहरण**– (१) पटुमाचष्टे (पटु बनाता है) अर्थ में– पटु + णिच् (= 'इ'–'प्रातिपदिकाद्धात्व-र्थे बहुलमिष्ठवच्च' इष्ठवद्भाव, इ = ऐ– वृद्धि, इष्ठवद्भाव होने से टिलोप)– पट् इ (धातुसंज्ञा, लट् = तिप् = 'ति', शप् = 'अ', 'इ' = 'ए'–गुण, 'ए' = 'अय्' आदेश) = पटयति। (२) पटु अम् + णिच् (= 'इ'– 'प्रातिपदिकात्०' सुप् का लुक्, इष्ठवद्भाव, परत्वात् 'इ' = 'ऐ'–वृद्धि–'अचो ञ्णिति' टि = 'ऐ' का लोप)– पट इ (धातुसंज्ञा, लुङ्, तिप् = 'ति', अट् = 'अ' का आगम, च्लि, प्राप्त 'सिच्' का बाध कर च्लि = चङ् = 'अ', द्वित्व–'चङि', अभ्याससंज्ञा, हलादिशेष)– अ पपट् इ अ ति (सन्वद्भाव–'सन्वल्लघुनि०', 'अ' = 'इ'–'सन्यत:', 'इ' = 'ई'–दीर्घ–'दीर्घो लघो:', 'इ' का लोप–'इतश्च') = अपीपटत्। (महाभाष्य के कथन 'वृद्धेर्लोपो बलीयान्' (वृद्धि से लोप बलवान् होता

टिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः। पटुमाचष्टे पटयति। परत्वाद् वृद्धौ सत्यां टिलोपः। अपीपटत्। 'णौ चङी'त्यत्र भाष्ये तु 'वृद्धेर्लोपो बलीयानि'ति स्थितम्। अपपटत्। **(९०४) पुच्छभाण्डचीवराण्णिङ् ३।१।२०।** * पुच्छादुदसने, व्यसने पर्यसने च *। विविधं विरुद्धं चोत्क्षेपणं व्यसनम्। उत्पुच्छयते। परिपुच्छयते। विपुच्छयते। * भाण्डात्समाचयने *। सम्भाण्डयते। समवभाण्डत। * चीवरादर्जने परिधाने च *। सञ्चीवरयते भिक्षुः। **(९०५) मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ३।१।२१।** कृञर्थे। मुण्डं करोति

---

लोपस्तेनायं भवत्यग्लोपी, अतो न सन्वद्भावदीर्घौ। तत्र–'अपपटत्' इति।

(९०४) **पुच्छभाण्डेति**। स्पष्टम्। **उत्पुच्छयते**– उत्पुच्छशब्दात् 'पुच्छादुदसने' इति वार्तिकसहयोगेन 'पुच्छभाण्डचीवराण्णिङ्०' इति णिङि अतो लोपे 'उत्पुच्छि' इति जाते, तङि शपि अनुबन्धलोपे गुणेऽयादेशे टेरेत्वे 'उत्पुच्छयते' इति।

(९०५) **मुण्डमिश्रेति**। मुण्डादिभ्यः कृञर्थे णिच्भवतीत्यर्थः। **मुण्डयति**–मुण्डं करोतीति विग्रहे मुण्डशब्दात् 'मुण्डमिश्रश्लक्ष्ण०' इत्यादिना णिचि, सुपो लुकि इष्ठवद्भावात् टेर्लोपे 'मुण्डि'

---

है) के अनुसार 'णिच्' होने पर वृद्धि का बाध कर टि = उकार का ही लोप होता है। अतः अग्लोपी होने से यहाँ दीर्घ और सन्वद्भाव नहीं होते। तदनुसार लुङ् में 'अपपटत्' रूप भी बनता है।

(९०४) **पद**– पुच्छ-भाण्ड-चीवरात्, णिङ्। **विधिसूत्र**।

**मूलार्थ**–कर्मभूत पुच्छ, भाण्ड और चीवर शब्द से णिङ् (= इ) प्रत्यय होता है।

**(वा०)**– "पुच्छ शब्द से उदसन, व्यसन और पर्यसन अर्थ में णिङ् प्रत्यय होता है।" विविध अथवा विरुद्ध उत्क्षेपण (ऊपर फेंकना) को 'व्यसन' कहते हैं।

**उदाहरण**– (१) उत्पुच्छ् + णिङ् (= 'इ'–'पुच्छादुदसने' वार्तिक के सहयोग से– 'पुच्छभाण्ड०', 'अ' का लोप)– उत्पुच्छि (लट् = 'त', शप् = 'अ', 'इ' = 'ए'–गुण, 'ए' = 'अय्', एत्व) = उत्पुछयते। (२) परिपुच्छ + णिङ् (उक्तवत् प्रक्रिया) = परिपुच्छयते। (३) विपुच्छ + णिङ् = विपुच्छयते।

**(वा०)**– भाण्ड शब्द से समायाचन (एकत्रित करना या सजाकर रखना) अर्थ में ही 'णिङ्' प्रत्यय होता है।

**उदाहरण**– (४) संभाण्ड + णिङ् (= 'इ'–'भाण्डात्समायाचने' वार्तिक-सहयोग से 'पुच्छभाण्ड०' अकारलोप)– संभाण्डि (लट् = 'त', शप् = 'अ', 'इ' = 'ए' गुण, 'ए' = 'अय्' आदेश, एत्व) = संभाण्डयते। (५) लुङ्–समवभाण्डत (उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञानिमित्ते प्रत्यये चिकीर्षिते पृथक् क्रियते' नियम से भाण्ड से पूर्व अट् = 'अ' का आगम)।

**(वा०)**– 'चीवर' शब्द से अर्जन और परिधान अर्थ में ही णिङ् प्रत्यय होता है।

**उदाहरण**– (६) सं चीवर + णिङ् (= 'इ' 'चीवरात्०' वार्तिक-सहयोग से 'पुच्छभाण्ड०' 'अ' का लोप, लट् = 'त', शप् = 'अ', गुण, 'अय्' आदेश, एत्व) = संचीवरयते।

(९०५) **पद**– मुण्ड-मिश्र-श्लक्ष्ण-लवण-व्रत-वस्त्र-हल-कल-कृत-तूस्तेभ्यः, णिच्। **अनुवृत्ति**– कर्मणः, करणे। **विधिसूत्र**।

**मूलार्थ**– मुण्ड, मिश्र आदि शब्दों से कृधात्वर्थ (करोति) में णिच् (= 'इ') प्रत्यय होता है।

**मुण्डयति। * व्रताद्भोजनतन्निवृत्त्योः *। पयः शूद्रान्नं वा व्रतयति। * वस्त्रात्समाच्छादने *। संवस्त्रयति। * हल्यादिभ्यो ग्रहणे *। हलिकल्योरदन्तत्वं च निपात्यते। हलिं कलिं वा गृह्णाति हलयति। कलयति। महद्धलं हलिः। कृतं गृह्णाति कृतयति। तूस्तानि विहन्ति**

---

इत्यस्माद्धातोर्लटि तिपि शपि अनुबन्धलोपे सार्वधातुकगुणेऽयादेशे 'मुण्डयति' इति।

**सत्यापयति इति**। 'सत्यमाचष्टे' इति विग्रहे सत्यशब्दात् 'सत्यापपाश०' इत्यादिना णिचि अनुबन्धलोपे 'सत्यार्थवेदानामापुग्वक्तव्यः' इत्यनेन आपुगागमेऽनुबन्धलोपे, सुपो लुकि,

---

मुण्डयति इत्यादि।

**विमर्श**– प्रकृत सूत्र में 'धातोः कर्मणः०' (८३६) से 'कर्मणः' तथा 'शब्दवैर०' (९०३) से 'करणे' की अनुवृत्ति आती है। तदनुसार– ''कर्मभूत मुण्ड, मिश्र, श्लक्ष्ण, लवण, व्रत, वस्त्र, हल, कल, कृत, तूस्त शब्दों से 'करना' अर्थ में 'णिच्' प्रत्यय होता है।

**उदाहरण**– (१) 'मुण्डं करोति' (मुण्डन करता है) अर्थ में–मुण्ड अम् + णिच् (= 'इ'– 'मुण्डमिश्र०', सुप् का लुक्, 'अ' का लोप)– मुण्डि (+ लट् = तिप् = 'ति', शप् = 'अ', 'इ' = 'ए'–गुण, 'ए' = 'अय्'–आदेश) = मुण्डयति।

**(वा०)**– व्रत शब्द से 'भोजन' और 'भोजननिवृत्ति' दोनों अर्थों में णिच् प्रत्यय होता है।

**उदाहरण**– (२) व्रत अम् + णिच् (= 'इ'–'व्रताद्भोज०' वार्तिक-सहयोग से–'मुण्डमिश्र०', सुब्लुक्, 'अ' का लोप, लट् = तिप् = 'ति', शप् = 'अ', गुण, अय् आदेश) = व्रतयति पयः शूद्रान्नं वा (दूध का व्रत करता है अथवा शूद्रान्न का परित्याग करता है)।

**(वा०)**– 'वस्त्र' शब्द से समाच्छादन (ढकना) अर्थ में 'णिच्' होता है।

**उदाहरण**– (३) संवस्त्र + णिच् (= 'इ'–'वस्त्रात्समाच्छादने' वार्तिक-सहयोग से 'मुण्डमिश्र', सुब्लुक्, अकारलोप, लट् = तिप् = 'ति', शप् = 'अ', 'इ' = 'ए'–गुण, 'ए' = 'अय्') = संवस्त्रयति।

**(वा०)**– हल्यादि शब्दों से 'ग्रहण' अर्थ में 'णिच्' प्रत्यय होता है। हलि और कलि को निपातन से अदन्तत्व भी होता है।

**उदाहरण**– (४) हलि + णिच् (= 'इ', निपातन से अदन्त, टि = 'अ' का लोप)– हलि + लट् (= तिप् = 'ति', शप् = 'अ', 'इ' = 'ए'–गुण, 'ए' = 'अय्') = हलयति। (५) कलि + णिच् (= 'इ', निपातन से अदन्त 'इ' = 'अ', टिलोप, लट् = तिप् = 'ति', शप् = 'अ', गुण, अय् आदेश) = कलयति। महत् = बड़े हल को 'हलि' कहते हैं। (६) 'कृतं गृह्णाति' अर्थ में– कृत + णिच् (= 'इ', 'हल्यादिभ्यो ग्रहणे' वार्तिक-सहकार से– 'मुण्डमिश्र', अकारलोप, लट् = तिप् = 'ति', शप् = 'अ', गुण, अय् आदेश) = कृतयति (उपकार स्वीकार करता है)। (७) 'तूस्तानि विहन्ति' इस अर्थ में–वितूस्त + णिच् (= 'इ'–'मुण्डमिश्र०', 'अ' लोप, लट् = तिप् = 'ति', शप् = 'अ', गुण, अयादेश) = वितूस्तयति। कुछ आचार्य 'तूस्त' का अर्थ 'केश' करते हैं। कुछ आचार्यों के अनुसार तूस्त का अर्थ जटाओं से युक्त केश है तथा अन्य के अनुसार–'पाप' अर्थ है।

**(वा०)**–'णिच्' प्रत्यय के परवर्ती रहते सत्य, अर्थ और वेद शब्दों को आपुक् (= आप्) का आगम होता है।

**उदाहरण**– (८) 'सत्यमाचष्टे' (सत्य का आचरण करता है) अर्थ में– सत्य + अम् + णिच् (= 'इ'–'सत्यापपाश०', आपुक् = 'आप्'–'सत्यार्थवेदानामापुग्वक्तव्यः', सुप् (अम्) का लुक्)– सत्यापि (लट् = तिप् = 'ति', शप् = 'अ', 'इ' = 'ए'–गुण–'सार्वधातु०', 'ए' = 'अय्'–

 

वितूस्तयति। तूस्तं केशा इत्येके। जटीभूताः केशा इत्यन्ये। पापमित्यपरे। * सत्याऽर्थवेदानामापुग्वक्तव्यः *। सत्यापयति। अर्थापयति। वेदापयति। पाशं विमुञ्चति विपाशयति। रूपं पश्यति रूपयति। वीणयोपगायति उपवीणयति। तूलेनानुकृष्णाति अनुतूलयति तृणाग्रम्। तूलेनाऽनुघट्टयतीत्यर्थः। श्लोकैरुपस्तौति उपश्लोकयति। सेनयाऽभियाति अभिषेणयति। लोमान्यनुमार्ष्टि अनुलोमयति। त्वच संवरणे। पचाद्यच्। त्वचं गृह्णाति त्वचयति। वर्मणा सन्नह्यति संवर्मयति। वर्णं गृह्णाति वर्णयति। चूर्णैरवध्वंसते अवचूर्णयति।

इति नामधातुप्रकरणम् ।



सत्यापिधातोर्लटि तिपि शपि अनुबन्धलोपे सार्वधातुकगुणेऽयादेशे 'सत्यापयति' इति रूपम्।

**अनुतूलयतीति**। 'तूलेनानुकृष्णाति' इति विग्रहे अनुतूलपदात् 'सत्याप' इत्यादिना णिचि अकारलोपे, सुब्लुकि, धातुत्वाल्लटि तिपि शपि अनुबन्धलोपे गुणेऽयादेशे 'अनुतूलयति' इति।

**इति नामधातुप्रकरणम् ।**



'एचोऽयवायावः') = सत्यापयति। (९) 'अर्थं करोति आचष्टे वा' अर्थ में (णिच्, आपुक्, शेष पूर्ववत् प्रक्रिया) = अर्थापयति। (१०) 'वेदं करोति आचष्टे वा' अर्थ में = वेदापयति। (११) 'पाशं विमुञ्चति' (पाश = जाल को त्यागता है) अर्थ में– विपाश + णिच् (= 'इ'–'प्रातिपदिकात् धात्वर्थे', 'अ' का लोप)– विपाशि (लट् = तिप् = 'ति', शप् = 'अ', 'इ' = 'ए'–गुण, 'ए' = 'अय्') = विपाशयति। (१२) रूपं पश्यति (रूप को देखता है) अर्थ में– रूप + णिच् (= 'इ'–'सत्यापपाशरूप०', 'अ' का लोप)– रूपि (लट् = तिप् = 'ति', शप् = 'अ', 'इ' = 'ए'–गुण, 'ए' = 'अय्') = रूपयति। (१३) 'वीणया उपगायति' (वीणा से गाता है) अर्थ में– उपवीणा + णिच् (= 'इ'–'सत्याप०', टि 'आ' का लोप, लट् = तिप् = 'ति', शप् = 'अ', 'इ' = 'ए'– गुण, 'ए' = 'अय्') = उपवीणयति। (१४) 'तूलेन अनुकुष्णाति' (रुई से रगड़ता है) अर्थ में– अनुतूल + णिच् (= 'इ' – 'सत्याप०', 'अ' का लोप, लट् = तिप् = 'ति', शप् = 'अ', गुण, 'अय्' आदेश) = अनुतूलयति। (१५) 'श्लोकैः उपस्तौति' (श्लोकों से स्तुति करता है) अर्थ में– उप + श्लोक + णिच् (= 'इ'–'सत्याप०', 'अ' लोप, लट् = तिप् = ति, शप्, गुण, अयादेश) = उपश्लोकयति। (१६) 'सेनया अभियाति' (सेना के साथ अभियान करता है) अर्थ में– अभि + सेना + णिच् (= 'इ'–'सत्याप०', 'आ' का लोप, लट् = तिप् = 'ति', शप् = 'अ', 'इ' = 'ए'–गुण, 'अय्' आदेश, 'स्' = 'ष्'– षत्व–'उपसर्गात्सुनोति०', णत्व) = अभिषेणयति। (१७) 'लोमानि अनुमार्ष्टि' अर्थ में– अनुलोम + णिच् (= 'इ'–'सत्याप०', 'अ' लोप, लट् = तिप् = 'ति', शप् = 'अ', गुण, अय् आदेश) = अनुलोमयति। 'त्वच संवरणे' धातु से 'पचाद्यच्' से अच् होकर त्वच शब्द बनता है। (१८) 'त्वचं गृह्णाति' अर्थ में– त्वच + णिच् (= 'इ'–'सत्याप०', 'अ' का लोप, लट् = तिप् = 'ति', 'शप्' = 'अ', 'इ' = 'ए'–गुण, 'अय्' आदेश) = त्वचयति। (१९) 'वर्मणा सन्नह्यति' अर्थ में– संवर्म + णिच् ('इ'– 'सत्याप०', अलोप, लट् = तिप् = 'ति', शप् = 'अ', गुण, 'अय्' आदेश) = संवर्मयति। (२०) 'वर्णं गृह्णाति' अर्थ में– वर्ण + णिच् (= 'इ', 'अ' का लोप, लट् = तिप् = 'ति', 'शप्' = 'अ', गुण, अयादेश) = वर्णयति। (२१) 'चूर्णैरवध्वंसते' अर्थ में– अव + चूर्ण + णिच् (= 'इ', 'अ' लोप, लट् = तिप् = 'ति', शप् = 'अ', 'इ' = 'ए'–गुण, 'अय्' आदेश) = अवचूर्णयति।

**नामधातुप्रकरण समाप्त ।**

# अथ कण्ड्वादिप्रकरणम्

**( ९०६ ) कण्ड्वादिभ्यो यक् ३।१।२७** । एभ्यो धातुभ्यो नित्यं यक् स्यात् स्वार्थे। कण्डूञ् गात्रविघर्षणे। कण्डूयति। कण्डूयते इत्यादि।

**इति कण्ड्वादिप्रकरणम् ।**



---

(९०६) **कण्ड्वादिभ्य इति**। 'धातोरेकाच:' इत्यत: धातोरित्यनुवर्तते। तदाह–**एभ्य इत्यादि**। **नित्यमिति**। वाग्रहणस्य निवृत्त्यर्थं नित्यमिति। **कण्डूयति**– ञकारेत्संज्ञक 'कण्डूञ्' धातो: 'कण्ड्वादिभ्यो यक्' इत्यनेन यक्प्रत्यये 'कण्डूय' इत्यस्य धातुसंज्ञायां लटि तिपि, शपि अनुबन्धलोपे 'अतो गुणे' इति पररूपे कृते 'कण्डूयति' इति। आत्मनेपदे 'कण्डूयते' इति रूपम्।

**इति कण्ड्वादिप्रकरणम् ।**



---

क्रमप्राप्त कण्ड्वादि-प्रकरण का विवेचन किया जा रहा है–

(९०६) **पद**– कण्ड्वादिभ्य:, यक्। **अनुवृत्ति**– धातो:, नित्यम्। **विधिसूत्र**।

**मूलार्थ**– कण्ड्वादिगणपठित धातुओं से स्वार्थ में नित्य यक् (= य) प्रत्यय होता है। कण्डूञ् गात्रविघर्षणे (= शरीर ख़ुजलाना)। कण्डूयति। कण्डूयते।

**विमर्श**– 'धातोरेकाचो०' (३।१।२२) सूत्र से 'धातो:' पद की अनुवृत्ति आती है। 'धातो:' का ग्रहण होने से यहाँ कण्ड्वादि धातु ही ली जाती है। 'नित्य' पद की अनुवृत्ति 'नित्यं कौटिल्ये गतौ' (३।१।२३) से आ रही है। अत: ''कण्ड्वादि धातुओं से नित्य यक् (= य) प्रत्यय होता है।''

**उदाहरण**– (१) कण्डू + यक् (= 'य'–'कण्ड्वादिभ्यो यक्')–कण्डूय + लट् (= तिप् = 'ति', शप् = 'अ', अ + अ = 'अ'–पररूप) = कण्डूयति। 'ञ्' की इत्संज्ञा होने के कारण यह धातु उभयपदी है। अत: आत्मनेपद पक्ष में– कण्डूयते।

**कण्ड्वादि प्रकरण समाप्त ।**



# अथात्मनेपदप्रकरणम्

**(९०७) कर्तरि कर्मव्यतिहारे १।३।१४ ।** क्रियाविनिमये द्योत्ये कर्त्तर्यात्मनेपदं स्यात्। व्यतिलुनीते। अन्यस्य योग्यं लवनम् अन्यः करोतीत्यर्थः। **(९०८) न गतिहिंसार्थेभ्यः १।३।१५ ।** गतिहिंसार्थेभ्यः कर्मव्यतिहारे आत्मनेपदं न स्यात्।

---

(९०७) **कर्तरि कर्मेति**। 'अनुदात्तङित्त आत्मनेपदमि'त्यतः 'आत्मनेपदमि'त्यनुवर्तते। सूत्रे 'कर्मव्यतिहारः' इत्यत्र कर्मपदं क्रियापरं व्यतिहारपदं च विनिमयपरं च वर्तते। तदाह- **क्रियाविनिमये द्योत्य इति**। **व्यतिलुनीते**- वि + अतिपूर्वकात् लूञ्धातोः 'कर्तरि कर्मव्यतिहारे' इत्यनेनात्मनेपदं भवति। लटि प्रथमपुरुषैकवचने 'त'प्रत्यये 'क्र्यादिभ्यः श्ना' इति श्नाप्रत्ययेऽनुबन्धलोपे 'प्वादीनां ह्रस्वः' इत्यनेन ह्रस्वे, 'ई हल्यघोः' इत्यनेन आकारस्य ईत्वे टेरेत्वे संयोगे च 'व्यतिलुनीते' इति।

(९०८) **न गति इति**। 'अनुदात्तङित०' इत्यत आत्मनेपदम् 'कर्तरि कर्मव्यतिहारे' इत्यतः 'कर्मव्यतिहारे' इति चानुवर्तते। अत आह- **गतिहिंसार्थेभ्य इति**। **हरतेरिति**।

---

धातुओं (क्रियापदों) के आत्मनेपद तथा परस्मैपद से सम्बन्धित सामान्य नियमों की विशद चर्चा तिङन्त-प्रकरण (भ्वादिगण) के आरम्भ में की जा चुकी है। प्रकृत 'आत्मनेपद-प्रकरण' में आत्मनेपद के सम्बन्ध में कुछ विशेष नियमों का उल्लेख किया गया है। ये नियम मुख्यतया दो प्रकार के हैं- (१) उभयपदी धातुओं से परगामी क्रियाफल होने पर भी आत्मनेपद विधान करने का नियम। (२) परस्मैपदी धातुओं से उपसर्ग के योग में आत्मनेपद विधान करने का नियम।

उक्त नियमों का विवेचन प्रस्तुत किया जा रहा है-

(९०७) **पद**- कर्तरि, कर्मव्यतिहारे। **अनुवृत्ति**- आत्मनेपदम्। **विधिसूत्र**।

**मूलार्थ**- क्रिया का विनिमय (अदला-बदली) अर्थ द्योत्य हो तो कर्ता अर्थ में धातु से आत्मनेपद होता है। व्यतिलुनीते = दूसरे के योग्य काटने को काट रहा है। अर्थात् दूसरे के बदले काटने का कार्य कर रहा है। अतः यहाँ 'क्रिया-विनिमय' अर्थ द्योत्य है।

**विमर्श**- प्रकृत सूत्र में 'अनुदात्तङित्त आत्मनेपदम्' (१।३।१२) सूत्र से 'आत्मनेपदम्' की अनुवृत्ति आती है। तदनुसार- ''क्रिया के व्यतिहार (विनिमय) अर्थ में कर्तृवाच्य में धातु से आत्मनेपद होता है।'' यहाँ 'कर्म' पद क्रियावाची है।

**उदाहरण**- (१) वि + अति + लूञ् = लू (+ लट्, आत्मनेपद-'कर्तरि कर्मव्यतिहारे', लट् = 'त', श्ना = 'ना'-'क्र्यादिभ्यः श्ना', सार्वधातुकसंज्ञा, 'ऊ' = 'उ'-ह्रस्व-'प्वादीनां ह्रस्वः', 'आ' = 'ई'-'ई हल्यघोः', 'टि' को एत्व-'टित आत्मनेपदानाम्०', 'वि + अति' में 'इ' = 'य्'-यण्) = व्यतिलुनीते।

(९०८) **पद**- न, गतिहिंसार्थेभ्यः। **अनुवृत्ति**- कर्मव्यतिहारे, आत्मनेपदम्। **विधिसूत्र**।

**मूलार्थ**- 'क्रिया-विनिमय' अर्थ में गत्यर्थक और हिंसार्थक धातुओं से आत्मनेपद नहीं होता। व्यतिगच्छन्ति। व्यतिघ्नन्ति।

**विमर्श**- पूर्वसूत्र (९०७) से 'कर्मव्यतिहारे' तथा 'अनुदात्तङित०' (१।३।१२) से 'आत्मनेपदम्' की अनुवृत्ति आती है। अतः ''गत्यर्थक और हिंसार्थक धातुओं से कर्म-व्यतिहार (क्रिया-विनिमय)

व्यतिगच्छन्ति। व्यतिघ्नन्ति। * हरतेरप्रतिषेधः *। सम्प्रहरन्ते राजानः। **( ९०९ ) इतरेतरान्योऽन्योपपदाच्च १।३।१६ ।** * परस्परोपपदाच्चेति वक्तव्यम् *। इतरेतरस्याऽन्योऽन्यस्य, परस्परस्य वा व्यतिलुनन्ति। **( ९१० ) नेर्विशः १।३।१७ ।** नेर्विश

---

हरतेर्हिंसार्थस्य नात्मनेपदनिषेध इत्यर्थः। **सम्प्रहरन्ते राजानः–** सम्पूर्वकात् हृधातोर्लटि 'हरतेरप्रतिषेधः' इत्यनेन आत्मनेपदस्य निषेधाभावे आत्मनेपदे 'झि' प्रत्यये, झस्यान्तादेशे, शपि, गुणे, रपरत्वे 'सम्प्रहरन्ते' इति।

(९०९) **इतरेतरेति**। 'इतरेतरमन्योऽन्यमि'त्येतयोरुपपदयोः सतोः क्रियाविनिमये द्योत्ये धातोरात्मनेपदं नेत्यर्थः। **परस्परेति**। अस्मात्परस्मादपि धातोरात्मनेपदं न भवतीति भावः। इतरेतरस्य, अन्योऽन्यस्य परस्परस्य वा व्यतिलुनन्ति। अत्र 'कर्तरि कर्मव्यतिहारे' इत्यनेन प्राप्तस्यात्मनेपदस्य 'परस्पराच्चेति वक्तव्यमि'ति वार्तिकसहयोगेन 'इतरेतराऽन्योऽन्योपपदाच्चे'ति सूत्रेण निषेधो भवति। अतः परस्मैपदमेव।

(९१०) **नेर्विश इति**। 'आत्मनेपदम्' इति अनुवर्तते। तदाह– **नेर्विश इति**।

---

अर्थ में प्राप्त आत्मनेपद नहीं होता।''

**उदाहरण–**(२) वि + अति पूर्वक ✓ गम् + लट् प्र० पु० बहुवचन में– व्यतिगच्छन्ति। यहाँ क्रिया-विनिमय अर्थ में गत्यर्थक धातु ✓ गम् से 'कर्तरि कर्मव्यतिहारे' से प्राप्त आत्मनेपद का प्रकृत सूत्र 'न गति०' से निषेध हो जाता है। (३) वि + अति पूर्वक ✓ हन् + लट् प्र० पु० बहुवचन– व्यतिघ्नन्ति। उक्तवत् आत्मनेपद का निषेध।

**(वा०)** (सोपसर्गक हिंसार्थक) ✓ हृ धातु से उक्त अर्थ में आत्मनेपद का निषेध नहीं होता।

**उदाहरण–** (४) सम् + प्र + ✓ हृ + लट् प्र० पु० बहुवचन = 'सम्प्रहरन्ते राजानः'। यहाँ 'सं + प्र' उपसर्गपूर्वक ✓ हृ (हिंसार्थक) धातु से 'न गतिहिंसार्थेभ्यः' से प्राप्त आत्मनेपद के निषेध का 'हरतेरप्रतिषेधः' से प्रतिषेध हो जाता है। अतः आत्मनेपद ही होता है।

(९०९) **पद–** इतरेतरान्योऽन्योपपदात्, च। **अनुवृत्ति–** न, कर्मव्यतिहारे, आत्मनेपदम्। **विधिसूत्र** (निषेध)।

**मूलार्थ–** 'इतरेतर' और 'अन्योऽन्य' उपपदपूर्वक धातु से क्रियाविनिमय अर्थ में आत्मनेपद नहीं होता।

**विमर्श–** यहाँ पूर्वसूत्र (९०८) से 'न', (९०७) से 'कर्मव्यतिहारे' तथा 'अनुदात्तङित' से 'आत्मनेपदम्' की अनुवृत्ति आ रही है। तदनुसार– '''इतरेतर' तथा 'अन्योऽन्य' शब्द उपपद हों तो भी धातु से 'क्रिया-विनिमय' अर्थ में आत्मनेपद नहीं होता।''

**( वा० )–** 'परस्पर' उपपदक धातु से भी क्रिया-विनिमय अर्थ में आत्मनेपद नहीं होता।

**उदाहरण–** (१) इतरेतरस्य, अन्योऽन्यस्य परस्परस्य वा व्यतिलुनन्ति (एक-दूसरे का काटते हैं)– यहाँ 'कर्तरि कर्मव्यतिहारे' से प्राप्त आत्मनेपद का निषेध हुआ।

(९१०) **पद–** नेः, विशः। **अनुवृत्ति–** आत्मनेपदम्। **विधिसूत्र**।

**मूलार्थ–** 'नि' उपसर्गपूर्वक विश् धातु से आत्मनेपद होता है। निविशते।

**विमर्श–** 'अनुदात्तङित आत्मनेपदम्' (१।३।१२) से 'आत्मनेपदम्' की अनुवृत्ति आ रही है। तदनुसार उक्त अर्थ सम्पन्न होता है।

आत्मनेपदं स्यात्। निविशते। ( ९११ ) **परिव्यवेभ्यः क्रियः १।३।१८** । परिव्यवेभ्यः क्रिय आत्मनेपदं स्यात्। परिक्रीणीते। विक्रीणीते। अवक्रीणीते। ( ९१२ ) **विपराभ्यां जेः १।३।१९** । विपराभ्यां जेरात्मनेपदं स्यात्। विजयते। पराजयते। ( ९१३ ) **क्रीडोऽनुसंपरिभ्यश्च १।३।२१** । अनुसंपरिभ्यः क्रीडतेरात्मनेपदं स्यात्। चादाङः। अनुक्रीडते। संक्रीडते। परिक्रीडते। आक्रीडते। * **समोऽकूजने** *। संक्रीडते। कूजने तु

---

(९११) **परिव्यवेभ्य इति**। 'आत्मनेपदमि'त्यनुवर्तते। अत आह–**परिव्यवेभ्य इति**। उदाहरति– **परिक्रीणीते इत्यादि**।

(९१२) **विपराभ्यामिति**। 'आत्मनेपदमि'त्यनुवर्त्याह– **विपराभ्यां जेरित्यादि**। **विजयते**– विपूर्वकजिधातोर्लटः स्थाने 'विपराभ्यां जेः' इत्यात्मनेपदे 'त'प्रत्यये, शपि, गुणेऽयादेशे च टेरेत्वे 'विजयते' इति।

(९१३) **क्रीडोऽनुसमिति**।'अनु-सं-परि चकारादाङ्' इत्युपसर्गपूर्वकक्रीडधातोरात्मनेपदं स्यादित्यर्थः। **समोऽकूजने इति**। सम्पूर्वकात्क्रीड्धातोरकूजन एवात्मनेपदमन्यत्र परस्मैपदमेव। 'संक्रीडते' इति 'अकूजने' एव रूपम्। **आगमेरिति**। आङ्पूर्वकात् ण्यन्तात् गमिधातोः

---

**उदाहरण**– (१) नि + ✓ विश् + लट् प्र० पु० एकवचन = निविशते। (यहाँ 'नेर्विशः' से आत्मनेपद का विधान किया गया है। ✓ विश् परस्मैपदी है, 'नि' उपसर्ग के योग में प्रकृत सूत्र द्वारा आत्मनेपद का विधान है।)

(९११) **पद**– परिव्यवेभ्यः, क्रियः। **अनुवृत्ति**– आत्मनेपदम्। **विधिसूत्र**।

**मूलार्थ**– परि, वि और अव उपसर्गपूर्वक क्री धातु से आत्मनेपद होता है। परिक्रीणीते। विक्रीणीते। अवक्रीणीते।

**विमर्श**– 'अनुदात्तङित०' (१।३।१२) से 'आत्मनेपदम्' की अनुवृत्ति आ रही है। तदनुसार– "परि, वि और अव उपसर्गपूर्वक ✓ डुक्रीञ् (खरीदना, क्र्यादि उभ०) धातु से आत्मनेपद होता है।"

**उदाहरण**– (१) परि + ✓ क्री से 'परिव्यवेभ्यः क्रियः' से आत्मनेपद, लट् प्र० पु० एकवचन = परिक्रीणीते। (२) वि + ✓ क्री–आत्मनेपद, लट् प्र० पु० ए० व०–विक्रीणीते। (३) अव + ✓ क्री–आत्मनेपद, लट् प्र० पु० ए० व०–अवक्रीणीते।

(✓ डुक्रीञ् ञकारेत्संज्ञक होने से उभयपदी धातु है। अतः कर्तृगामी क्रियाफल में आत्मनेपद इससे सिद्ध है, परन्तु प्रकृत सूत्र से परि, वि और अव उपसर्गों के योग में परगामी क्रिया का फल होने पर भी आत्मनेपद का विधान किया गया है।)

(९१२) **पद**– विपराभ्याम्, जेः। **अनुवृत्ति**– आत्मनेपदम्। **विधिसूत्र**।

**मूलार्थ**– 'वि' और 'परा' उपसर्गपूर्वक 'जि' धातु से आत्मनेपद होता है।

**विमर्श**– उक्तवत् 'आत्मनेपदम्' की अनुवृत्ति आने से उक्त अर्थ होता है।

**उदाहरण**– (१) 'वि' + ✓ जि धातु से 'विपराभ्यां जेः' से आत्मनेपद, लट् प्र० पु० एकवचन– विजयते। (२) 'परा' + जि आत्मनेपद, लट् प्र० पु० ए० व०– पराजयते।

(९१३) **पद**– क्रीडः, अनुसम्परिभ्यः, च। **अनुवृत्ति**– आङः, आत्मनेपदम्। **विधिसूत्र**।

**मूलार्थ**– अनु, सम्, परि और आङ् उपसर्ग पूर्व रहते ✓ क्रीड् धातु से आत्मनेपद होता है। अनुक्रीडते। संक्रीडते। परिक्रीडते। आक्रीडते।

**संक्रीडति चक्रम्। * आगमेः क्षमायाम् *। ण्यन्तस्येदं ग्रहणम्। आगमयस्व तावत्। मा त्वरिष्ठा इत्यर्थः। * शिक्षेर्जिज्ञासायाम् *। धनुषि शिक्षते। धनुर्विषयज्ञाने शक्तो भवितुमिच्छतीत्यर्थः। (९१४) वृत्तिसर्गतायनेषु क्रमः १।३।३८। एष्वर्थेषु क्रम आत्मनेपदं स्यात्। वृत्तिरप्रतिबन्धः। ऋचि क्रमते बुद्धिः। सर्ग उत्साहः। अध्ययनाय क्रमते। क्रमन्तेऽस्मिञ्छास्त्राणि। स्फीतानि भवन्तीत्यर्थः। (९१५) आङ उद्गमने १।३।४०।**

---

तितिक्षायामात्मनेपदं भवतीत्यर्थः। **शिक्षते इति।** शिक्षधातोर्लटि 'शिक्षेर्जिज्ञासायामि'त्यात्मनेपदे तङि शपि टेरेत्वे रूपम्।

(९१४) **वृत्तिसर्गेति।** एतेष्वर्थेषु क्रमधातोरात्मनेपदं भवतीति भावः। **अध्ययनाय क्रमते–** 'क्रमु पादविक्षेपे' इति धातोः 'वृत्तिसर्गतायनेषु' इत्यनेन आत्मनेपदे लटि तप्रत्यये टेरेत्वे, शपि अनुबन्धलोपे संयोगे 'क्रमते' इति।

---

**विमर्श–** सूत्रस्थ चकार से पूर्वसूत्र 'आङो दोऽनास्यविहरणे' (१।३।२०) से 'आङः' तथा 'अनुदात्तङित०' (१।३।१२) से 'आत्मनेपदम्' की अनुवृत्ति आती है। तदनुसार– "अनु, सम्, परि और आङ् उपसर्गपूर्वक– ✓ क्रीड धातु से आत्मनेपद होता है।"

**उदाहरण–** (१) अनु + ✓ क्रीड् ('क्रीडोऽनुसम्परिभ्यश्च' से आत्मनेपद, लट् प्र० पु० एकवचन = अनुक्रीडते। (२) सं + ✓ क्रीड्– आत्मनेपद, लट् प्र० पु० एकवचन = संक्रीडते (३) परि + ✓ क्रीड् (आत्मनेपद, लट् प्र० पु० ए० व०)–परिक्रीडते। (४) आ + ✓ क्रीड् (आत्मनेपद, लट् प्र० पु० ए० व०)–आक्रीडते।

**(वा०)**– 'सम्' उपसर्गपूर्वक क्रीड् धातु से कूजन-भिन्न अर्थ में आत्मनेपद होता है।

**उदाहरण–** (५) संक्रीडते। 'कूजन' (= चहचहाना) अर्थ में– 'संक्रीडति चक्रम्'। यहाँ परस्मैपद ही हुआ।

**(वा०)**– क्षमा (= सहन) अर्थ में आङ् (आ) उपसर्गपूर्वक ण्यन्त गम् धातु से आत्मनेपद होता है।

**उदाहरण–** आ + ✓ गमि (ण्यन्त) (आत्मनेपद, लोट्, म० पु० ए० व०)–'आगमयस्व तावत्'।

**(वा०)**– सन्नन्त ✓ शक् धातु से जिज्ञासा अर्थ में आत्मनेपद होता है।

**उदाहरण–** ✓ शिक्ष (सन्नन्त)–आत्मनेपद, लट् प्र० पु० एकवचन–धनुषि शिक्षते (धनुर्विद्या के ज्ञान में समर्थ होना चाहता है।)

(९१४) **पद–** वृत्तिसर्गतायनेषु, क्रमः। **अनुवृत्ति–** आत्मनेपदम्। **विधिसूत्र।**

**मूलार्थ–** वृत्ति (अप्रतिबन्ध, बिना रुकावट), सर्ग (उत्साह) और तायन (वृद्धि) अर्थ में क्रम धातु से आत्मनेपद होता है। 'ऋचि क्रमते बुद्धिः' इत्यादि।

**विमर्श–** प्रकरण-प्राप्त 'आत्मनेपदम्' की अनुवृत्ति आ रही है। तदनुसार– "वृत्ति (= बिना रुकावट), सर्ग (= उत्साह) और तायन (= वृद्धि, विस्तार) अर्थ में विद्यमान ✓ क्रम धातु से आत्मनेपद होता है।"

**उदाहरण–** (१) ✓ क्रम (आत्मनेपद, लट् प्र० पु० एकवचन) = क्रमते। **'ऋचि क्रमते बुद्धिः** (ऋचाओं में इसकी बुद्धि खूब चलती है, रुकती नहीं)। (२) अध्ययनाय क्रमते (पढने में उत्साहित होता है)। (३) क्रमन्तेऽस्मिञ्छास्त्राणि (इसमें शास्त्र समृद्ध होते हैं)।

**आङः परस्मात्क्रम आत्मनेपदं स्यादुद्गमने। आक्रमते सूर्यः । * ज्योतिरुद्गमन इति वाच्यम् *। नेह– आक्रामति धूमो हर्म्यतलात्। ( ९१६ ) वेः पादविहरणे १।४।४१ । वेः परस्मात्क्रमतेरात्मनेपदं स्यात्पादविहरणे। साधु विक्रमते वाजी। ( ९१७ ) प्रोपाभ्यां समर्थाभ्याम् १।३।४२ । समर्थाभ्यां प्रोपाभ्यां परस्मात्क्रमतेरात्मनेपदं स्यात्। प्रारम्भेऽनयोस्तुल्यार्थता। प्रक्रमते। उपक्रमते। समर्थाभ्यां किम्? प्रक्रामति। गच्छतीत्यर्थः।**

---

(९१५) **आङ उद्गमने**। पूर्वसूत्रात्क्रम इत्यनुवर्तते। तदाह– **आङः परस्मादिति। आक्रमते सूर्य इति**। आङ्पूर्वकात्क्रमधातोः 'आङ उद्गमने' इत्यनेनात्मनेपदे शपि टेरेत्वे 'आक्रमते' इति।

(९१६) **वेः पादविहरण इति**। अत्र 'वृत्तिसर्गतायनेषु क्रमः' इत्यतः क्रम इति, 'अनुदात्तङित' इत्यत आत्मनेपदमिति चानुवर्तते। तदाह– **वेः परस्मादिति। साधु विक्रमते वाजी**– 'वि' इत्युपसर्गपूर्वक क्रमधातोरात्मनेपदे लटि 'त'प्रत्यये शपि अनुबन्धलोपे टेरेत्वे 'विक्रमते' इति। अश्वः सम्यक् पादसञ्चालनं करोतीत्यर्थः।

(९१७) **प्रोपाभ्यामिति**। क्रमः, आत्मनेपदमि'ति चानुवर्तते। समावर्थौ ययोस्तौ समर्थौ,

---

(९१५) **पद**– आङः, उद्गमने। **अनुवृत्ति**– क्रमः, आत्मनेपदम्। **विधिसूत्र**।

**मूलार्थ**– 'आङ्' उपसर्ग से परवर्ती क्रम धातु से उद्गमन (ऊपर उठना, जाना) अर्थ में आत्मनेपद होता है।

**विमर्श**– पूर्वसूत्र (९१४) से 'क्रमः' तथा 'अनुदात्तङित०' (१।३।१२) से 'आत्मनेपदम्' की अनुवृत्ति आती है। तदनुसार– ''आङ्पूर्वक क्रम धातु से उद्गमन अर्थ में आत्मनेपद होता है।''

**(वा०)**– ज्योति (प्रकाश) का उद्गमन (उदय) अर्थ में ही ✓ क्रम से आत्मनेपद होता है, ऐसा कहना चाहिए।

**उदाहरण**– आ + ✓ क्रम (आत्मनेपद, लट् प्र० पु० एकवचन) = आक्रमते सूर्यः। (सूर्योदय होता है।)

**प्रत्युदाहरण**– 'आक्रामति धूमो हर्म्यतलात्' (अट्टालिका से धुँआ निकलता है)– उक्त वार्तिक के अनुसार ज्योति (प्रकाश) के उद्गमन में ही आत्मनेपद विधान होने से यहाँ आत्मनेपद नहीं होता; क्योंकि धूम ज्योति नहीं है, अतः परस्मैपद ही हुआ।

(९१६) **पद**– वेः, पादविहरणे। **अनुवृत्ति**– क्रमः, आत्मनेपदम्। **विधिसूत्र**।

**मूलार्थ**– 'वि' उपसर्ग से परवर्ती क्रम् धातु से पाद-विहरण अर्थ में आत्मनेपद होता है। साधु विक्रमते वाजी (घोड़ा सुन्दर कदम उठाता है)।

**विमर्श**– प्रकृत सूत्र में 'वृत्तिसर्गता०' (९१४) से 'क्रमः' तथा 'अनुदात्तङित०' (१।३।१२) से 'आत्मनेपदम्' की अनुवृत्ति आती है। तदनुसार– ''पाद-विहरण (पैर उठाने) अर्थ में 'वि' पूर्वक क्रम धातु से आत्मनेपद होता है।''

**उदाहरण**– वि + ✓ क्रम (आत्मनेपद– 'वेः पादविहरणे', लट् = 'त', शप् = 'अ', 'टि को एत्व) = विक्रमते।

(९१७) **पद**– प्रोपाभ्याम्, समर्थाभ्याम्। **अनुवृत्ति**– क्रमः, आत्मनेपदम्। **विधिसूत्र**।

**मूलार्थ**– प्र तथा उप पूर्वक क्रम धातु से प्रारम्भ अर्थ में आत्मनेपद होता है। प्रक्रमते इत्यादि।

उपक्रामति। आगच्छतीत्यर्थः। **( ९१८ ) अनुपसर्गाद्वा १।३।४३ ।** अनुपसृष्टात्क्रमतेरात्मनेपदं वा स्यात्। क्रामति। क्रमते। **( ९१९ ) अपह्नवे ज्ञः १।३।४४ ।** अपह्नवे

---

ताभ्यामित्यर्थः। प्रारम्भेऽनयोस्तुल्यार्थता। तदाह- **समर्थाभ्यामित्यादि**। प्रक्रमते, उपक्रमते इति। तङि रूपे। प्रारभते इत्यर्थः।

(९१८) **अनुपसर्गाद्वेति**। 'क्रमः, आत्मनेपदमि'ति चानुवर्तते। तेन उपसर्गरहितात् क्रमधातोरात्मनेपदं वेति भावः। **क्रामति, क्रमते-** क्रमधातोः 'अनुपसर्गाद्वा' इति विकल्पेन आत्मनेपदे लटि 'त' प्रत्यये शपि अनुबन्धलोपे टेरेत्वे 'क्रमते' इति। आत्मनेपदाभावे लटः स्थाने तिपि शपि अनुबन्धलोपे 'क्रमः परस्मैपदेषु' इति दीर्घे 'क्रामति' इति रूपम्।

(९१९) **अपह्नवे ज्ञ इति**। अपपूर्वाज्ज्ञाधातोरात्मनेपदं स्यादपह्नवे = अपलापे गोपने इति भावः। **अपजानीते-** अपपूर्वकात् ज्ञाधातोः 'अपह्नवे ज्ञः' इत्यनेनात्मनेपदे 'त' प्रत्यये 'क्र्यादिभ्यः श्ना' इति श्नाविकरणे 'ज्ञाजनोर्जा' इति जादेशे 'ई हल्यघोः' इतीत्वे टेरेत्वे कृते 'अपजानीते' इति रूपम्।

---

**विमर्श-** उक्तवत् 'क्रमः' तथा 'आत्मनेपदम्' की अनुवृत्ति आ रही है। समौ = तुल्यौ अर्थौ ययोस्तौ समर्थौ ताभ्यां समर्थाभ्याम् = तुल्यार्थाभ्याम् इति। अर्थात् 'प्र' तथा 'उप' उपसर्ग यदि समानार्थक-तुल्य अर्थ वाले हों। प्रारम्भे० अर्थात् कार्य की प्रारम्भिक अवस्था को कहने में दोनों तुल्यार्थक होते हैं। अतः ''आरम्भ अर्थ में वर्तमान 'प्र' तथा 'उप' उपसर्गपूर्वक क्रम धातु से आत्मनेपद होता है।''

**उदाहरण-** (१) प्र + ✓ क्रम् (आत्मनेपद-'प्रोपाभ्याम्०' लट् = 'त्', शप् = 'अ', एत्व) = प्रक्रमते। (२) उप + ✓ क्रम् (आत्मनेपद-'प्रोपाभ्याम्०', लट् = 'त', शप् = 'अ', एत्व) = उपक्रमते (आरम्भ करता है।)

**प्रत्युदाहरण-** (१) **समर्थाभ्यां किमिति** - सूत्र में 'समर्थाभ्यां' का ग्रहण किया गया है, तदनुसार- प्रारम्भ अर्थ में ही प्र + ✓ क्रम् और उप + ✓ क्रम् से आत्मनेपद का विधान होने से 'गमन' अर्थ में आत्मनेपद नहीं होता, परस्मैपद होता है। प्रक्रामति। उपक्रामति। प्रकामति (= जाता है), उपक्रामति (= आता है)।

(९१८) **पद-** अनुपसर्गात्, वा। **अनुवृत्ति-** क्रमः, आत्मनेपदम्। **विधिसूत्र**।

**मूलार्थ-** उपसर्ग रहित क्रम् धातु से विकल्प से आत्मनेपद होता है। क्रामति। क्रमते।

**विमर्श-** 'क्रमः' तथा 'आत्मनेपदम्' की अनुवृत्ति यहाँ भी आ रही है। तदनुसार उक्त सूत्रार्थ होता है।

**उदाहरण-** (१) ✓ क्रम् (विकल्प से आत्मनेपद-'अनुपसर्गाद्वा', लट् = 'त', शप् = 'अ', एत्व) = क्रमते। आत्मनेपद के अभावपक्ष में परस्मैपद, लट् = तिप् = 'ति', शप् = 'अ', 'अ' = 'आ'-दीर्घ-'क्रमः परस्मैपदेषु') = क्रामति।

(९१९) **पद-** अपह्नवे, ज्ञः। **अनुवृत्ति-** आत्मनेपदम्।

**मूलार्थ-** अपह्नव (अपलाप) अर्थ में ज्ञा धातु से आत्मनेपद होता है। शतमपजानीते। (सौ रुपये के लिए झूठ बोलता है।)

**विमर्श-** 'आत्मनेपदम्' की अनुवृत्ति आ रही है। अतः ''अपलाप अर्थात् मिथ्या भाषण में वर्तमान ज्ञा धातु से आत्मनेपद होता है।''

**उदाहरण-** (१) अप + ✓ ज्ञा (आत्मनेपद- 'अपह्नवे ज्ञः', लट् = 'त', श्ना = 'ना'-

जानातेरात्मनेपदं स्यात्। शतमपजानीते। अपलपतीत्यर्थः। **(९२०) अकर्मकाच्च १।३।४५।** अकर्मकाज्ज्ञानातेरात्मनेपदं स्यात्। सर्पिषो जानीते। सर्पिषोपायेन प्रवर्त्तत इत्यर्थः। **(९२१) समवप्रविभ्यः स्थः १।३।२२।** एभ्यस्तिष्ठतेरात्मनेपदं स्यात्। सन्तिष्ठते। अवतिष्ठते। प्रतिष्ठते। वितिष्ठते। * आङः प्रतिज्ञायामुपसंख्यानम् *। शब्दं नित्यमातिष्ठते। **(९२२) प्रकाशनस्थेयाख्ययोश्च १।३।२३।** तिष्ठतेरात्मनेपदं

---

(९२०) **अकर्मकाच्चेति**। कर्मरहितादपि ज्ञाधातोरात्मनेपदे भवतीत्यर्थः।

(९२१) **समवप्रविभ्य इति**। 'सम्-अव-प्र-वि' इत्येतदुपसर्गपूर्वकात् स्थाधातोरात्मनेपदमित्यर्थः। **सन्तिष्ठते इति**। सम्पूर्वात् स्थाधातोः 'समवप्रविभ्यः स्थः' इत्यनेन आत्मनेपदे लटि 'त' प्रत्यये 'स्था' इत्यस्य तिष्ठादेशे शपि अनुबन्धलोपे मस्यानुस्वारे परसवर्णे च कृते 'सन्तिष्ठते' इति।

(९२२) **प्रकाशनेति**। 'समवप्रविभ्यः' इत्यतः 'स्थः' इति, आत्मनेपदं चानुवर्तते। तदाह–**तिष्ठतेरिति**। **तिष्ठते**– स्थाधातोः प्रकाशनार्थे 'प्रकाशनस्थेयाख्ययोश्चे'ति आत्मनेपदे 'त'-प्रत्यये तिष्ठादेशे शपि टेरेत्वे 'तिष्ठते' इति रूपम्।

---

क्र्यादिभ्यः श्ना', 'ज्ञा' = 'जा'–'ज्ञाजनोर्जा', 'आ' = 'ई'–'ई हल्यघोः', टि को एत्व) = अपजानीते।

(९२०) **पद**– अकर्मकात्, च। **अनुवृत्ति**– ज्ञः, आत्मनेपदम्। **विधिसूत्र**।

**मूलार्थ**– अकर्मक ज्ञा धातु से भी आत्मनेपद होता है। सर्पिषो जानीते (= घी समझ कर प्रवृत्त होता है)।

**विमर्श**– पूर्वसूत्र (९१९) से 'ज्ञः' तथा 'अनुदात्तङित०' (१।३।१२) से 'आत्मनेपदम्' की अनुवृत्ति आती है। तदनुसार– ''अकर्मक ज्ञा धातु से भी आत्मनेपद होता है।

**उदाहरण**– (१) ✓ ज्ञा (आत्मनेपद लट्, सिद्धि-प्रक्रिया पूर्ववत्) = जानीते।

(९२१) **पद**– समवप्रविभ्यः, स्थः। **अनुवृत्ति**– आत्मनेपदम्। **विधिसूत्र**।

**मूलार्थ**– सम्, अव, प्र तथा वि उपसर्ग से परवर्ती स्था धातु से आत्मनेपद होता है।

**विमर्श**– 'आत्मनेपद' की अनुवृत्ति आने से उक्त अर्थ निष्पन्न होता है।

**(वा०)**– आङ् (= आ) उपसर्गपूर्वक स्था धातु से प्रतिज्ञा अर्थ में भी आत्मनेपद होता है।

**उदाहरण**–(१) सम् + ✓ स्था (आत्मनेपद–'समवप्रविभ्यः स्थः', लट् = 'त', शप् = 'अ', 'स्था' = 'तिष्ठ' आदेश, म् = ं 'अनुस्वार' = 'न्'–परसवर्ण, एत्व) = सन्तिष्ठते (समाप्त होता है)। (२) अव + ✓ स्था (आत्मनेपद–'समवप्रविभ्यः', लट् = 'त', शप् = 'अ', 'स्था' = 'तिष्ठ' आदेश, 'टि' को एत्व) = अवतिष्ठते (अवस्थित होता है)। (३) प्र + ✓ स्था (आत्मनेपद-प्रक्रिया उक्तवत्) = प्रतिष्ठते (प्रस्थान करता है)। (४) वि + ✓ स्था (आत्मनेपद लट् प्रक्रिया उक्तवत्) = वितिष्ठते (विशेष रूप से स्थित होता है)। (५) आ + ✓ स्था (आत्मनेपद– 'आङः प्रतिज्ञायामुपसंख्यानम्', लट् = 'त', शप् = 'अ', स्था = 'तिष्ठ'– 'पाघ्राध्मा०', एत्व) = आतिष्ठते।

(९२२) **पद**– प्रकाशनस्थेयाख्ययोः, च। **अनुवृत्ति**– स्थः, आत्मनेपदम्। **विधिसूत्र**।

**मूलार्थ**– प्रकाशन (= स्वाभिप्राय-प्रकाशन) और स्थेय (= विवाद पद-निर्णय) अर्थ में स्था धातु से आत्मनेपद होता है। गोपी कृष्णाय तिष्ठते (= गोपी कृष्ण को अपना आशय प्रकट करती है) इत्यादि।

**स्यादनयोरर्थयोः। गोपी कृष्णाय तिष्ठते। आशयं प्रकाशयतीत्यर्थः। 'संशय्य कर्णादिषु तिष्ठते यः'। कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः। ( ९२३ ) उदोऽनूर्ध्वकर्मणि १।३।२४। उदः परस्मात्तिष्ठतेरात्मनेपदं स्यादनूर्ध्वकर्मणि। मुक्तावुत्तिष्ठते। अनूर्ध्वेति किम्? पीठादुत्तिष्ठति। ( ९२४ ) उपान्मन्त्रकरणे १।३।२५। उपात्तिष्ठतेरात्मनेपदं स्यान्मन्त्रकरणे। आग्नेय्याऽऽग्नीध्रमुपतिष्ठते। मन्त्रकरणे किम्? भर्त्तारमुपतिष्ठति यौवनेन। * उपाद्देवपूजा-सङ्गतिकरणमित्रकरणपथिष्विति वाच्यम् *। आदित्यमुपतिष्ठते। गङ्गा यमुनामुपतिष्ठते।**

---

(९२३) **उदोऽनूर्ध्वकर्मणि इति**। 'स्थः' इत्यनुवर्तते, आत्मनेपदमिति च। तदाह- **उदः परस्मादिति। मुक्तावुत्तिष्ठते**- उत्पूर्वकात्स्थाधातोर्लटि तङि टेरेत्वे शपि तिष्ठादेशे रूपम्। मुक्ताविति विषयसप्तमी। गुरूपगमनादिना यतते इत्यर्थः।

(९२४) **उपादिति**। मन्त्रकरणार्थे गम्ये उपपूर्वात्स्थाधातोरात्मनेपदं भवतीति भावः।

---

**विमर्श**- पूर्वसूत्र (९२१) से 'स्थः' की अनुवृत्ति आती है। 'आत्मनेपदम्' की भी अनुवृत्ति पूर्ववत् आती है। तदनुसार- ''प्रकाशन = (अपने भाव के प्रकाशन में) तथा स्थेयाख्या (विवाद के निर्णय को कहने) अर्थ में भी स्था धातु से आत्मनेपद होता है।''

**उदाहरण**- (१) ✓ स्था (प्रकाशन अर्थ में आत्मनेपद- 'प्रकाशनस्थेया०', लट् = 'त', शप्, तिष्ठ आदेश, एत्व) = तिष्ठते गोपी कृष्णाय। (२) संशय्य कर्णादिषु तिष्ठते यः' (कर्ण आदि पर निर्णेता के रूप में आश्रित है)।

(९२३) **पद**- उदः, अनूर्ध्वकर्मणि। **अनुवृत्ति**- स्थः, आत्मनेपदम्। **विधिसूत्र**।

**मूलार्थ**- 'उत्' उपसर्गपूर्वक स्था धातु से ऊर्ध्वकर्म (ऊपर उठने से भिन्न अर्थ) में आत्मनेपद होता है। मुक्तावुत्तिष्ठते (= मुक्ति हेतु उन्नति करता है)।

**विमर्श**- यहाँ 'समवप्र०' (९२१) से 'स्थः' तथा 'अनुदात्तङित०' (१।३।१२) से 'आत्मनेपदम्' की अनुवृत्ति आती है। तदनुसार- ''ऊपर उठने से भिन्न अर्थ में वर्तमान 'उत्' पूर्वक स्था धातु से आत्मनेपद होता है।

**उदाहरण**- (१) उत् + ✓ स्था (आत्मनेपद-'उदोऽनूर्ध्वकर्मणि', लट् = 'त', शप् = 'अ', 'स्था' = तिष्ठ, एत्व) = उत्तिष्ठते। मुक्तावुत्तिष्ठते। 'मुक्तौ' पद में विषयसप्तमी है।

**प्रत्युदाहरण**- (१) अनूर्ध्वेति किम्? प्रकृत सूत्र में 'अनूर्ध्व' पद का ग्रहण क्यों किया गया? आशय यह है कि ऊपर उठने से भिन्न अर्थ में ही आत्मनेपद होता है। ऊर्ध्वकर्म (उठना) अर्थ में तो परस्मैपद ही होता है। 'पीठादुत्तिष्ठति' (चौकी से उठता है)।

(९२४) **पद**- उपात्, मन्त्रकरणे। **अनुवृत्ति**- स्थः, आत्मनेपदम्। **विधिसूत्र**।

**मूलार्थ**- 'उप' उपसर्गपूर्वक 'स्था' धातु से मन्त्रकरण (स्तुति) अर्थ में आत्मनेपद होता है। आग्नेय्या आग्नीध्रमुपतिष्ठते। इत्यादि।

**विमर्श**- पूर्ववत् 'स्थः' और 'आत्मनेपदम्' की अनुवृत्ति आ रही है। तदनुसार-''मन्त्रकरण (स्तुति) अर्थ में विद्यमान 'उप' पूर्वक 'स्था' धातु से आत्मनेपद होता है।''

**उदाहरण**- (१) उप + ✓ स्था (आत्मनेपद- 'उपान्मन्त्रकरणे', लट् = 'त', शप् = 'अ', स्था = तिष्ठ, एत्व) = उपतिष्ठते। आग्नेय्याऽऽग्नीध्रमुपतिष्ठते (अग्निदेवता वाली ऋचा का उच्चारण कर आग्नीध्र के पास जाता है)।

रथिकानुपतिष्ठते। मित्रीकरोतीत्यर्थः। पन्थाः स्रुघ्नमुपतिष्ठते। प्राप्नोतीत्यर्थः। * वा लिप्सायामिति वक्तव्यम् *। भिक्षुकः प्रभुमुपतिष्ठति उपतिष्ठते वा। **( ९२५ ) उद्विभ्यां तपः १।३।२७** । उद्विभ्यां तप आत्मनेपदं स्यात्। 'अकर्मकादि'त्येव। उत्तपते। वितपते। दीप्यत इत्यर्थः। * स्वाङ्गकर्मकाच्चेति वक्तव्यम् *। उत्तपते वितपते पाणिम्। नेह- सुवर्णमुत्तपति। **( ९२६ ) आङो यमहनः १।३।२८** । आङः पराभ्यामाभ्यामात्मनेपदं

---

(९२५) **उद्विभ्यामिति**। 'आत्मनेपदमि'त्यनुवर्तते। 'अकर्मकाच्चे'त्यतोऽकर्मकादिति अनुषज्यते। अत आह-**उद्विभ्यामित्यादि**। **उत्तपते**- उत्पूर्वात्तपधातोस्तङि शपि टेरेत्वे रूपम्।

(९२६) **आङो यमहन इति**। आत्मनेपदमित्यनुवर्तते। तदाह- **आङः पराभ्यामिति**। **आयच्छते**- आङ्पूर्वकात् यमधातोः 'आङो यमहनः' इत्यनेनात्मनेपदे लटि 'त'प्रत्यये शपि अनुबन्धलोपे 'इषुगमि०' इति छादेशे तुकि अनुबन्धलोपे जश्त्वे चर्त्वे कृते टेरेत्वे 'आयच्छते' इति।

---

**प्रत्युदाहरण**- (१) **मन्त्रकरणे किमिति**- सूत्र में 'मन्त्रकरणे' पद का ग्रहण होने से 'भर्त्तारमुपतिष्ठति यौवनेन' प्रयोग में आत्मनेपद नहीं होता। क्योंकि यहाँ मन्त्रकरण (वैदिक स्तुति) अर्थ नहीं है।

**(वा०)**- देवपूजा, संगतिकरण, मित्रकरण और मार्ग अर्थ में भी उपपूर्वक स्था धातु से आत्मनेपद होता है।

**उदाहरण**- (१) 'आदित्यमुपतिष्ठते' (सूर्य की उपासना करता है)। (२) गङ्गा यमुनामुपतिष्ठते (= गङ्गा यमुना का आलिङ्गन करती है)। (३) रथिकानुपतिष्ठते (मित्रता करता है)। (४) पन्थाः स्रुघ्नमुपतिष्ठते (मार्ग आगरा जाता है)।

**(वा०)**- 'उंप' पूर्वक 'स्था' धातु से लिप्सा अर्थ में विकल्प से आत्मनेपद होता है।

**उदाहरण**- (१) भिक्षुकः प्रभुमुपतिष्ठति, उपतिष्ठते वा (भिक्षुक स्वामी के पास जाता है)। यहाँ लिप्सा अर्थ में विकल्प से आत्मनेपद हुआ।

(९२५) **पद**- उद्विभ्याम्, तपः। **अनुवृत्ति**-अकर्मकात्, आत्मनेपदम्। **विधिसूत्र**।

**मूलार्थ**- 'उत्' और 'वि' उपसर्ग से परवर्ती अकर्मक तप धातु से आत्मनेपद होता है। उत्तपते। वितपते इत्यादि।

**विमर्श**- प्रकृत सूत्र में 'अकर्मकाच्च' (१।३।२६) से 'अकर्मकात्' तथा 'अनुदात्तङित०' १।३।१२) से 'आत्मनेपदम्' की अनुवृत्ति आती है। तदनुसार- "'उत्' तथा 'वि' पूर्वक अकर्मक तप धातु से आत्मनेपद होता है।"

**उदाहरण**- (१) उत् + ✓ तप् (आत्मनेपद- 'उद्विभ्यां तपः', लट् = 'त', शप् = अ, एत्व) = उत्तपते (अत्यन्त तपता है)। (२) वि + तप् = वितपते (विशेष रूप से गरम होता है)।

**(वा०)**- 'स्वाङ्गकर्मक और अकर्मक तप धातु से ही आत्मनेपद होता है' ऐसा कहना चाहिए।

**उदाहरण**- (१) उत्तपते वितपते पाणिम् (यहाँ कर्मकारक पाणि शब्द के अङ्गवाची होने से 'तप्' धातु से आत्मनेपद हुआ)।

'सुवर्णमुत्तपति' में 'स्वाङ्गकर्मक' तप् धातु न होने से आत्मनेपद नहीं हुआ। परस्मैपद-'उत्तपति'।

(९२६) **पद**- आङः, यमहनः। **अनुवृत्ति**- अकर्मकात्, आत्मनेपदम्। **विधिसूत्र**।

स्यात्। आयच्छते। आहते। 'अकर्मकात्स्वाङ्गकर्मकादि'त्येव। नेह-परस्य शिर आहन्ति। **(९२७) आत्मनेपदेष्वन्यतरस्याम् २।४।४४ ।** आत्मनेपदेषु परेषु हनो वधादेशो वा स्याल्लुङि। आऽवधिष्ट। आऽवधिषाताम्। आऽवधिषत। **(९२८) हनः सिच् १।२।१४ ।** हनः सिच् कित् स्यात्। अनुनासिकलोपः। आहत। आहसाताम्। आहसत।

---

(९२७) **आत्मनेपदेष्विति**। 'हनो वध लिङि' इत्यतः 'हनो वध' इति, 'लुङि च'त्यतः 'लुङी'ति चानुवर्तते। तदाह-**आत्मनेपदेषु परत इति। आवधिष्ट इति**। आङ्पूर्वात् हन्धातोः 'आङो यमहनः' इत्यात्मनेपदे लुङि तप्रत्यये च्लौ, च्लेः सिचि इटि अनुबन्धलोपे 'आत्मनेपदष्वन्यतरस्यामि'ति विकल्पेन हनो वधादेशे अडागमे 'आ + अ व ध् स् इ त' इति जाते सवर्णदीर्घे षत्वे ष्टुत्वे आवधिष्ट इति। वधादेशाऽभावपक्षे 'आ अ हन् स् त' इति स्थिते 'हनः सिच्' इत्यनेन सिचः कित्त्वात् 'अनुदात्तोपदेश' इत्यादिना नलोपे 'ह्रस्वादङ्गात्०' इत्यनेन सिचो लोपे सवर्णदीर्घे 'आहत' इति रूपम्।

(९२८) **हनः सिच्**। किदित्यनुवर्तते। अत आह-**हन इति**।

---

**मूलार्थ–** 'आङ्' उपसर्गपूर्वक यम् और हन् धातु से आत्मनेपद होता है। (यह आत्मनेपद अकर्मक और स्वाङ्गकर्मक से ही होता है' ऐसा कहना चाहिए।) आयच्छते। आहते।'

**विमर्श–** प्रकृत सूत्र में भी पूर्ववत् 'अकर्मकात्' और 'आत्मनेपदम्' की अनुवृत्ति आती है। तदनुसार ''अकर्मक आङ् उपसर्गपूर्वक यम् और हन् धातुओं से आत्मनेपद होता है।''

**उदाहरण–** (१) आ + यम् (आत्मनेपद-'आङो यमहनः', लट् = 'त', शप् = अ, 'म्' = 'छ्'-'इषुगमि०', तुक् = 'त्' का **आगम**, 'त्' = 'च्'-श्चुत्व, 'टि' को एत्व) = आयच्छते।

(२) आ + हन् (आत्मनेपद 'त', शप् = 'अ', शप् = 'अ' का लुक्-'अदिप्रभृतिभ्यः०', 'न्' का लोप-'अनुदात्तोपदेश०', एत्व) = आहते।

**प्रत्युदाहरण–** स्वाङ्गकर्मक का ग्रहण होने से 'परस्य शिर आहन्ति' (दूसरे के शिर पर मारता है) में आत्मनेपद नहीं होता।

(९२७) **पद–** आत्मनेपदेषु, अन्यतरस्याम्। **अनुवृत्ति–** हनो वधः, लुङि। **विधिसूत्र**।

**मूलार्थ–** लुङ्-सम्बन्धी आत्मनेपद में हन् धातु को विकल्प से 'वध' आदेश होता है। आवधिष्ट इत्यादि।

**विमर्श–** प्रकृत सूत्र में 'हनो वध लिङि' (२।४।४२) से 'हनो वधः' तथा 'लुङि च' (२।४।४३) से 'लुङि' पद की अनुवृत्ति आती है। तदनुसार- ''लुङ् लकार में आत्मनेपदसंज्ञक प्रत्यय के परवर्ती रहते विकल्प से हन् धातु को वध आदेश होता है।''

**उदाहरण–** (१) आ + ✓ हन् (आत्मनेपद-'आङो यमहनः', लुङ् = 'त', च्लि, च्लि = सिच् = 'स्', इट् = 'इ', विकल्प से 'हन्' = 'वध्'-'आत्मनेपदेष्वन्यतरस्याम्', अट् = 'अ' का आगम)- आ अ वध् इ स् त (आ + अ = 'आ'-सवर्णदीर्घ, 'स्' = 'ष्'-षत्व, 'त्' = 'ट्'- ष्टुत्व) = आवधिष्ट। (२) आ + ✓ हन (आत्मनेपद, लुङ् प्र० पु० द्विवचन)-आवधिषाताम्। (३) लुङ् प्र० पु० बहुवचन-आऽवधिषत।

(९२८) **पद–** हनः, सिच्। **अनुवृत्ति–** कित्। **अतिदेशसूत्र**।

**मूलार्थ–** हन् धातु से परवर्ती 'सिच्' कित् होता है। अनुनासिकलोप। आहत। आहसाताम्। इत्यादि।

**(९२९) यमो गन्धने १।२।१५ ।** यमः परः सिच् कित् स्याद्गन्धने। गन्धनं सूचनम्, परदोषाविष्करणम्। उदायत। गन्धने किम्? उदायंस्त पादम्। आकृष्टवानित्यर्थः।
**(९३०) समो गम्यृच्छिभ्याम् १।३।२९ ।** समो गम्यृच्छिभ्यामात्मनेपदं स्यात्।

---

(९२९) **यमो गन्धन इति**। 'असंयोगाल्लिट् कित्' इत्यतः किदिति, 'हनः सिच्' इत्यतः 'सिच्' इति चानुवर्तते। तदाह- **यमः पर इत्यादिना**।

**उदायतेति**। उदाङ्पूर्वकात् यमधातोः 'आङो यमहनः' इत्यात्मनेपदे लुङि तत्स्थाने 'त'-प्रत्यये च्लौ, च्लेः सिचि अनुबन्धलोपे 'यमो गन्धने' इति सिचः कित्त्वे 'अनुदात्तोपदेश०' इत्यादिना अनुनासिकलोपे 'ह्रस्वादङ्गादि'ति सिचो लोपे, यमः प्रगडागमेऽनुबन्धलोपे सवर्णदीर्घे 'उदायत' इति रूपम्।

(९३०) **सम इति**। आत्मनेपदमित्यनुवर्तते। 'अकर्मकाच्चे' त्यतोऽनुवृत्तमकर्मकादिति पदं विपरिणम्यते। तेन अकर्मकाभ्यां सम्पूर्वात् गम्यृच्छिभ्याम् आत्मनेपदं भवतीत्यर्थः। **सङ्गच्छते-**

---

**विमर्श-** सूत्रार्थ की पूर्ति हेतु 'असंयोगाल्लिट् कित्' (१।२।५) से 'कित्' पद की अनुवृत्ति आती है। अतः "हन् धातु से परे सिच् किद्वत् होता है।"

**उदाहरण-** (१) पूर्वसूत्र (९२७) से हन् = 'वध्' आदेश के अभाव पक्ष में- आ + ✓ हन् (आत्मनेपद-'आङो यमहनः', लुङ् = 'त', च्लि, च्लि = सिच् 'स्', किद्वद्भाव-'हनेः सिच्', 'न्' का लोप-'अनुदात्तोपदेश०', 'स्' का लोप- 'ह्रस्वादङ्गात्', अट् = 'अ' आगम, आ + अ = 'आ'-दीर्घ) = आहत। (२) लुङ् प्र० पु० द्विवचन (वधादेश के अभावपक्ष में)- आ अ हन् स् आताम् (कित्त्व-'हनः सिच्', 'न्' का लोप, दीर्घ) = आहसाताम्। (३) लुङ् प्र० पु० बहुवचन- आहसत।

(९२९) **पद-** यमः, गन्धने। **अनुवृत्ति-** सिच् कित्। **अतिदेशसूत्र**।

**मूलार्थ-** गन्धन (परदोषाविष्करण) अर्थ में यम धातु से परवर्ती सिच् कित् होता है। उदायत इत्यादि।

**विमर्श-** पूर्वसूत्र (९२८) से 'सिच्' तथा 'असंयोगाल्लिट् कित्' (१।२।५) से 'कित्' पदों की अनुवृत्ति आती है। तदनुसार- "गन्धन अर्थ में वर्तमान यम् धातु से परे 'सिच्' प्रत्यय किद्वत् होता है।" गन्धन का अर्थ- सूचना देना या परदोषाविष्करण = चुगली करना है।

**उदाहरण-** (१) उत् + आ + ✓ यम् (आत्मनेपद- 'आङो यमहनः' से गन्धन अर्थ में, लुङ् = 'त', च्लि, च्लि = सिच् = 'स्'- किद्वत्-'यमो गन्धने', 'म्' अनुनासिक का लोप- 'अनुदात्तोपदेश०', 'स्' का लोप-'ह्रस्वादङ्गात्', ✓ यम् से पूर्व अट् = 'अ' का आगम, आ + अ = 'आ'-सवर्णदीर्घ) = उदायत।

**प्रत्युदाहरण-** प्रकृत सूत्र में 'गन्धने' (गन्धन अर्थ में) पद का ग्रहण क्यों किया गया? उक्त पद के ग्रहण से गन्धन-भिन्न अर्थ में 'सिच्' को किद्वत् भाव नहीं होता। वहाँ 'अनुदात्तोपदेश०' से अनुनासिक का लोप भी नहीं होता। उदायंस्त पादम् (अनुस्वार) = 'पैर को खींचा' अर्थ है।

(९३०) **पद-** समः, गम्यृच्छिभ्याम्। **अनुवृत्ति-** अकर्मकात्, आत्मनेपदम्। **विधिसूत्र**।

**मूलार्थ-** 'सम्' उपसर्ग से परवर्ती अकर्मक 'गम्' और 'ऋच्छ्' धातु से आत्मनेपद होता है। सङ्गच्छते।

**'अकर्मकाभ्यामि'त्येव। सङ्गच्छते। (९३१) वा गमः १।२।१३ । गमः परौ झलादी लिङ्सिचौ वा कितौ स्तः। सङ्गसीष्ट। सङ्गंसीष्ट। समगत। समगंस्त। समृच्छते। अकर्मकाभ्यां किम्? ग्रामं सङ्गच्छति। * विदिप्रच्छिस्वरतीनामुपसंख्यानम् *। वेत्तेरेव**

---

सम्पूर्वाद् गम्धातोः 'समो गम्यृच्छिभ्यामि'त्यात्मनेपदे लटि तङि शपि अनुबन्धलोपे टेरेत्वे 'इषुगमियमां छः' इति छादेशे तुकि श्चुत्वे मकारस्यानुस्वारे परसवर्णे कृते 'सङ्गच्छते' इति।

(९३१) **वा गम इति**। 'लिङ् सिचौ' इत्यतो लिङ्सिचाविति, 'असंयोगादि' त्यतः किदिति, 'इको झल्' इत्यतः झलिति चानुवर्तन्ते। तदाह- **गमः पराविति। सङ्गसीष्ट इति।** सम्पूर्वाद् गम्धातोः 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदे लिङि तङि 'लिङः सीयुट्' इति सीयुडागमेऽनुबन्धलोपे 'सुट् तिथोः' इति सुटि, 'सम् गम् सी स् त' इति जाते 'वा गमः' इति लिङः कित्त्वे 'अनुदात्तोपदेश०' इत्यादिना गमो मकारलोपे, समो मस्यानुस्वारे षत्वे ष्टुत्वे परसवर्णे 'सङ्गषीष्ट' इति। किद्भावाऽभावपक्षे मलोपाभावादनुस्वारे 'सङ्गंषीष्ट' इति रूपम्।

---

**विमर्श**- सूत्र 'अकर्मकाच्च (९२०) से 'अकर्मकात्' तथा 'अनुदात्तङित आत्मनेपदम्' (१।३।१२) से 'आत्मनेपदम्' की अनुवृत्ति आती है। अतः 'सम्' उपसर्गपूर्वक अकर्मक 'गम्' तथा 'ऋच्छ्' धातुओं से आत्मनेपद होता है।''

**उदाहरण**- (१) सम् + ✓ गम् (आत्मनेपद- 'समो गम्यृच्छिभ्याम्', लट् = 'त', शप् = 'अ', 'म्' = 'छ्'-आदेश-'इषुगमियमां छः', तुक् = 'त्'-'छे च', 'त्' = 'च्'-श्चुत्व, टि = एत्व, म् = ं = 'ङ्'-परसवर्ण) = सङ्गच्छते।

(९३१) **पद**- वा, गमः। **अनुवृत्ति**- लिङ्सिचौ, झल् कित्। **अतिदेशसूत्र**।

**मूलार्थ**- गम् धातु से परवर्ती झलादि लिङ् और सिच् विकल्प से कित् होते हैं।

**विमर्श**- सूत्रार्थ की स्पष्टता हेतु 'लिङ्सिचावात्मनेपदेषु' (१।२।११) से 'लिङ्सिचौ', 'इको झल्' (१।२।९) से 'झल्' तथा 'असंयोगाल्लिट् कित्' (१।२।५) से 'कित्' पद की अनुवृत्ति आती है। तदनुसार- ''गम् धातु से परवर्ती झलादि लिङ् और 'सिच्' विकल्प से किद्वत् होता है।''

**उदाहरण**- (१) सम् + ✓ गम् (आत्मनेपद- '**समो गमि०**', लिङ् = 'त', सीयुट् = 'सीय्'- 'लिङः सीयुट्', सुट् = 'स्'-'सुट् तिथोः')- सम् गम् सीय् स् त (विकल्प से 'लिङ्' को कित्त्व, 'म्' का लोप-'अनुदात्तोपदेश०', 'य्' का लोप-'लोपो व्योर्वलि', म् = अनुस्वार, परसवर्ण, षत्व, ष्टुत्व) = सङ्गषीष्ट। किद्वत् के अभावपक्ष में 'म्' का लोप नहीं होता- सङ्गंषीष्ट (अनुस्वार)। (२) सम् + ✓ गम् (आत्मनेपद-'समो०', लुङ् = 'त', च्लि, च्लि = सिच् = 'स्', विकल्प से किद्वत्- 'वा गमः')- 'सम् गम् स् त' (धातु के 'म्' का लोप-'अनुदात्तोपदेश०', 'स्' का लोप-'ह्रस्वादङ्गात्', अट् = 'अ' का आगम) = समगत। (३) सम् + ✓ ऋच्छ् (आत्मनेपद, लट् = त, श = 'अ'- 'तुदादिभ्यः शः', टि को एत्व) = समृच्छते।

**प्रत्युदाहरण- (१) अकर्मकाभ्यां किमिति-** 'समो गम्यृच्छिभ्याम्' सूत्र में 'अकर्मकाभ्याम्' पद की अनुवृत्ति आती है। अतः सकर्मक ✓ गम् और ✓ ऋच्छ से आत्मनेपद नहीं होता। 'ग्रामं सङ्गच्छति' में परस्मैपद ही होता है।

**(वा०)**- 'सम्' उपसर्ग से परवर्ती 'विद्', 'प्रच्छ' और 'स्तृ' धातु से आत्मनेपद होता है। परस्मैपद के साहचर्य से 'विद् ज्ञाने' का ही यहाँ ग्रहण होता है।

ग्रहणम्। संवित्ते। संविदाते। **(९३२) वेत्तेर्विभाषा ७।१।७ ।** वेत्तेः परस्य झादेशस्याऽतो रुडागमो वा स्यात्। संविद्रते। संविदते। सम्पृच्छते। संस्वरते। [*** अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम् ***। 'अर्ति' इति द्वयोरेव ग्रहणम्। अङ्विधौ त्वियर्त्तेरेवेत्युक्तम्। मा समृत। मा समृषाताम्। मा समृषतेति। समार्त्त। समार्षाताम्।

---

(९३२) **वेत्तेर्विभाषेति**। अत्र 'झोऽन्तः' इत्यस्माज्झ इति, 'अदभ्यस्तादि'त्यस्मादत इति, 'शीङो रुट्' इत्यस्मात् रुडिति चानुवर्तन्ते। तदाह- **वेत्तेः परस्येति**। **संविद्रते**- सम्पूर्वाद्विद्धातोर्लटि 'विदिप्रच्छिस्वरतीनामुपसंख्यानमि'ति वार्तिकेनात्मनेपदे झप्रत्यये झस्य स्थाने अदादेशे 'वेत्तेर्विभाषा' इत्यनेन विभाषया रुडागमेऽनुबन्धलोपे टेरेत्वे 'संविद्रते' इति। रुडागमाभावपक्षे 'संविदते' इत्यपरं रूपम्। **अथाऽस्मिन्निति**। ननु 'आङो यमहनः' इत्यादौ 'अकर्मकादि'त्यनुवर्तते। तत्र हनिगम्यादीनां सकर्मकत्वात् कथमकर्मकतेति प्रश्नः समुदेति। तत्रोत्तरमुच्यते-**धातोरर्थान्तरे इति**। 'धातोरर्थान्तरे वृत्तेः, धात्वर्थेनोपसङ्ग्रहात्, प्रसिद्धेः,

---

**उदाहरण-** (१) सम् + ✓ विद् (आत्मनेपद-'विदिप्रच्छिस्वरतीनामुपसंख्यानम्', लट् =- 'त', शप्, शप् का लुक्-'अदिप्रभृतिभ्यः शपः', टि को एत्व, 'द्' = 'त्'-चर्त्व, 'म्' = अनुस्वार) = संवित्ते। (२) सम् + ✓ विद् (आत्मनेपद लट् प्र० पु० द्विव०) = संविदाते।

(९३२) **पद-** वेत्तेः, विभाषा। **अनुवृत्ति-** झः, अतः, रुट्। **विधिसूत्र**।

**मूलार्थ-** 'विद्' धातु से परवर्ती झादेश अत् को विकल्प से रुट् = 'र्' का आगम होता है।

**विमर्श-** सूत्रार्थ की स्पष्टता हेतु 'झोऽन्तः' (७।१।३) से 'झः', 'अदभ्यस्तात्' (७।१।४) से 'अतः' तथा 'शीङो रुट्' (७।१।६) से 'रुट्' की अनुवृत्ति आती है। तदनुसार- ''विद् धातु से परे झ् के स्थान में हुआ जो अत् आदेश, उसको विकल्प से रुट् (= र्) आगम होता है।''

**उदाहरण-** (१) सम् + ✓ विद् (आत्मनेपद-'विदिप्रच्छिस्वरतीनामुपसंख्यानम्', लट् = झ, शप्, शप् का लुक्-'अदिप्रभृतिभ्यः शपः', 'झ' = 'अत्' आदेश-'आत्मनेपदेष्वनतः', 'अत्' को विकल्प से रुट् = 'र्' का आगम-'वेत्तेर्विभाषा', 'टि' को एत्व, म् = अनुस्वार) = संविद्रते। 'रुट्' के अभावपक्ष में-संविदते। (२) सम् + ✓ प्रच्छ् (आत्मनेपद-'विदिप्रच्छि०', लट् = 'त', 'श' = 'अ', 'र्' = 'ऋ'-सम्प्रसारण-'ग्रहिज्या०', पूर्वरूप, एत्व, म् = अनुस्वार) = संपृच्छते। (३) सम् + ✓ स्वृ (आत्मनेपद लट् = 'त', शप् = 'अ', ऋ = 'अ'-गुण, रपर, एत्व, अनुस्वार) = संस्वरते।

**(वा०)-** ऋ, श्रु और दृश् धातु से भी (सम् उपसर्गपूर्वक होने पर) आत्मनेपद होता है। यहाँ 'अर्ति' पद से 'ऋ गतौ-भ्वादि तथा 'ऋ गतौ-जुहोत्यादि दोनों धातुओं का ग्रहण होता है। अङ्विधि (लुङ्) में इयर्ति (ऋ) जुहोत्यादि का ही ग्रहण होता है।

**उदाहरण-** (१) सम् + ✓ ऋ (आत्मनेपद लुङ्, 'मा' के योग में अट् का अभाव- 'न माङ्योगे', लुङ् = 'त', च्लि, च्लि = सिच् = 'स्' का लोप)- मा समृत। (२) लुङ् प्र० पु० द्वि०- मा समृषाताम्। (३) लुङ् प्र० पु० बहुव०-मा समृषत। जुहोत्यादि की ✓ 'ऋ गतौ' से (४) आत्मनेपद- मा समरत। मा समरेताम्। मा समरत। समारत। समारेताम्। समारन्त। (५) सम् + ✓ श्रु (आत्मनेपद लट्, प्र० पु० एकवचन) = संश्रृणुते। (६) सम् + दृश् (आत्मनेपद लट्, प्र० पु० एकवचन) = सम्पश्यते।

हन्, गम् आदि धातुओं के सकर्मक होने पर भी यहाँ ये धातुएँ अकर्मक कैसे होती हैं? इस प्रश्न के उत्तर में कहा गया है-**धातोरर्थान्तरेति**। धातोरर्थान्तरे वृत्तेः, धात्वर्थेनोपसंग्रहात्, प्रसिद्धेः, **अविवक्षातः कर्मणः अकर्मिका क्रिया भवतीत्यन्वयः।**

समार्षतेति च–भ्वादेः। इयर्त्तेस्तु–मा समरत। मा समरेताम्। मा समरन्त। समारत। समारेताम्। समारन्त इति। संशृणुते। सम्पश्यते।] अथाऽस्मिन्नकर्मकाधिकारे हनिगम्यादीनां कथमकर्मकते'ति चेत्, शृणु–

''धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात्।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया''॥

वहति भारम्। नदी वहति। स्यन्दत इत्यर्थः। जीवति। नृत्यति। प्रसिद्धिर्यथा–मेघो वर्षति। कर्मणोऽविवक्षातो यथा– 'हितान्न यः संशृणुते स किं प्रभुः'। (९३३) **सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः १।३।३६ ।** एष्वर्थेषु निय आत्मनेपदं स्यात्। शास्त्रे नयते। शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः। तेन

---

अविवक्षातः' इति वाक्यचतुष्टयम्। 'अकर्मिका क्रिये'ति सर्वत्र सम्बद्ध्यते। धातोरर्थान्तरे– धातुपाठपठितादन्यत्रार्थे वर्तनात्क्रिया अकर्मिका भवति। यथा–प्रापणार्थक-वह्धातोः 'भारं वहती'त्यादौ सकर्मकत्वेऽपि प्रस्रवणरूपार्थान्तरप्रयोगे 'नदी वहती'त्यादौ अकर्मकता भवति। धात्वर्थेनोपसङ्ग्रहात्–अर्थात् यस्य धातोः कर्म धात्वर्थान्तर्गतं स्यात्तस्याप्यकर्मकता, यथा– जीवति = प्राणान् धारयति। नृत्यति = गात्रं विक्षिपति। एवं कर्मणः प्रसिद्धेः क्रिया अकर्मिका भवति। यथा 'मेघो वर्षती'त्यादौ वर्षकर्मणो जलस्य प्रसिद्धत्वम्। तथा कर्मणोऽविवक्षातोऽपि क्रिया–या अकर्मकत्वं भवति। यथा–'हितान्न यः संशृणुते स किं प्रभुः' इति। स्वहितस्यात्र कर्मत्वेऽपि तस्याऽविवक्षयाऽकर्मकत्वमिति भावः।

(९३३) **सम्माननेति।** 'आत्मनेपदमि'त्यनुवर्तते। तदाह– **एष्वर्थेष्विति। नयते**– निधातोः सम्मानार्थे 'सम्माननोत्सञ्जनाचार्यकरण०' इत्यादिना आत्मनेपदे लटि तङि टेरेत्वे शपि अनुबन्धलोपे गुणेऽयादेशे 'नयते' इति।

---

(१) **धातोरर्थान्तरे वृत्तेः**– सकर्मक धातु यदि अर्थान्तर को कहने लगे तो वह अकर्मक हो जाती है। यथा 'भारं वहति' में प्रापणार्थक ✓ वह् सकर्मक है, परन्तु अर्थान्तर (प्रस्रवण = वहना) अर्थ में प्रवृत्त होकर अकर्मक हो जाती है। यथा– 'नदी वहति'।

(२) **कर्मणः धात्वर्थेनोपसंग्रहात्**– यदि कर्म धात्वर्थ के अन्तर्गत हो जाय तो भी धातु अकर्मक हो जाती है। जैसे–जीवति, नृत्यति। यहाँ ✓ जीव का अर्थ– प्राण धारण करना और ✓ नृत् का अर्थ– अङ्गविक्षेप करना (नाचना) है। दोनों धातुओं में कर्म–प्राणधारण और अङ्गविक्षेप रूप कर्म का धात्वर्थ में ही अन्तर्भाव हो जाता है। अतः दोनों धातु अकर्मक हैं।

(३) **कर्मणः प्रसिद्धेः**– कहीं कर्म के प्रसिद्ध रहने पर भी धातु अकर्मक हो जाती है। यथा– 'मेघो वर्षति' (= जलं वर्षति) यहाँ जल रूप कर्म प्रसिद्ध है, परन्तु धातु अकर्मक कही जाती है।

(४) **कर्मण अविवक्षातः**– कर्म की अविवक्षा से भी धातु अकर्मक हो जाती है। यथा– 'हितान्न यः संशृणुते स किं प्रभुः।' (= हितात्पुरुषात् यः न संशृणुते = स्वहितं न मन्यते स किं प्रभुः = कुत्सित इत्यर्थः)। यहाँ स्वहित रूप कर्म की अविवक्षा करने पर धातु अकर्मक हो जाती है।

(९३३) **पद**– सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु, नयः। **अनुवृत्ति**– आत्मनेपदम्। **विधिसूत्र।**

**मूलार्थ**– संमानन आदि अर्थों में भी धातु से आत्मनेपद होता है। शास्त्रे नयते इत्यादि।

शिष्यसम्माननं फलितम्। उत्सञ्जने–दण्डमुन्नयते। उत्क्षिपतीत्यर्थः। माणवकमुपनयते। विधिना आत्मसमीपं प्रापयतीत्यर्थः। उपनयनपूर्वकेणाध्यापनेन हि उपनेतरि आचार्यत्वं क्रियते। ज्ञाने तत्त्वं नयते। निश्चिनोतीत्यर्थः। कर्मकरानुपनयते। भृतिदानेन स्वसमीपं प्रापयतीत्यर्थः। विगणनमृणादेर्नियतिनम्। करं विनयते। राज्ञे देयं भागं परिशोधयतीत्यर्थः। शतं विनयते। धर्मार्थं विनियुङ्क्ते इत्यर्थः। * उपसर्गादस्यत्यूह्योर्वेति वाच्यम् *। बन्धान्निरस्यति। निरस्यते। समूहति। समूहते। **(९३४) उपसर्गाद्ध्रस्व ऊहतेः**

---

(९३४) **उपसर्गादिति**। 'अयङ् यि क्ङिति' इत्यतो 'यि क्ङिति' इत्यनुवर्तते। अत आह–
**उपसर्गादिति**। 'अयङ् यि क्ङिति' इत्यतो 'यि क्ङिति' इत्यनुवर्तते। अत आह–
**उपसर्गादूहतेरिति। ब्रह्म समुह्यादिति**। समुपसर्गक-ऊह्धातोः 'उपसर्गादस्यत्यूह्योर्वेति वाच्यम्' इत्यनेन विभाषया आत्मनेपदे लिङि 'सम् ऊह् या त्' इति जाते 'उपसर्गाद्ध्रस्वः' इति ह्रस्वे 'समुह्यादि'ति रूपम्।

---

**विमर्श–** यहाँ 'अनुदात्तङित आत्मनेपदम्' (१।३।१२) से 'आत्मनेपदम्' की अनुवृत्ति आती है। तदनुसार– ''संमानन (= पूजा), उत्सञ्जन (= उछालना), आचार्यकरण (= आचार्य क्रिया, संस्कार), ज्ञान (= तत्त्वनिश्चय), विगणन (= ऋणादि का चुकाना) और व्यय (= व्यय करना) अर्थों में वर्तमान णीञ् (नी) धातु से आत्मनेपद होता है।''

**उदाहरण–** (१) ✓ नी ('संमानन' अर्थ में आत्मनेपद, लट् = 'त', शप् = 'अ', 'ई' = 'ए'–गुण, 'ए' = 'अय्', एत्व) = नयते। शास्त्रे नयते (शास्त्र के सिद्धान्त को आचार्य शिष्य को प्राप्त कराता है।)– इससे यहाँ शिष्य का सम्मान फलित होता है। (२) दण्डमुन्नयते (दण्ड को उछालता है)– यहाँ उत्सञ्जन अर्थ में आत्मनेपद। (३) माणवकम् **उपनयते** (बच्चे का उपनयन करता है)– यहाँ आचार्य विधिपूर्वक बालक को अपने पास लाता है। उपनयन संस्कारपूर्वक अध्यापन करने से ही आचार्यत्व होता है। अतः यहाँ 'आचार्यकरण' अर्थ में आत्मनेपद हुआ। (४) 'तत्त्वं **नयते**' (तत्त्व का निश्चय करता है)– यहाँ 'ज्ञान' अर्थ में आत्मनेपद है। (५) कर्मकरानुपनयते (नौकरों को वेतनादि देकर अपने अनुकूल करता है)– यहाँ 'भृति' अर्थ में आत्मनेपद है। (६) 'विगणन' का अर्थ–'ऋणादि का चुकाना' है। 'करं विनयते' (राजा को देय भाग 'कर' चुकाता है) में 'विगणन' अर्थ में आत्मनेपद। (७) शतं विनयते (धमार्थ सौ रुपये देता है)– यहाँ 'व्यय' अर्थ में आत्मनेपद का प्रयोग है।

**(वा०)**– उपसर्ग से परवर्ती ✓ अस् और ✓ ऊह से विकल्प से आत्मनेपद होता है।

**उदाहरण–** (१) निर् + ✓ अस् (विकल्प से आत्मनेपद–'उपसर्गादस्यत्यूह्योर्वेति वाच्यम्', लट् = 'त', श्यन् = 'य'–'दिवादिभ्यः श्यन्', एत्व) = निरस्यते। आत्मनेपद के अभावपक्ष में– निरस्यति। (२) सम् + ✓ ऊह् (विकल्प से आत्मनेपद)–समूहते। समूहति।

(९३४) **पद–** उपसर्गात्, ह्रस्वः, ऊहतेः। **अनुवृत्ति–** यि क्ङिति। **विधिसूत्र**।

**मूलार्थ–**उपसर्ग से परवर्ती 'ऊह्' धातु के अच् को ह्रस्व होता है, यकारादि कित् ङित् प्रत्यय के परे रहते। ब्रह्म समुह्यात्। अग्निं समुह्य।

**विमर्श–** प्रकृत सूत्र में 'अयङ् यि क्ङिति' (७।४।२२) से 'यि क्ङिति' की अनुवृत्ति आती है। तदनुसार– ''यकारादि कित् ङित् प्रत्यय के परे रहते उपसर्ग से उत्तर 'ऊह्' के अच् को ह्रस्व होता है।''

'ऋच्छत्यृतामि'ति गुणः। आरे। सस्मरे। परत्वान्नित्यत्वाच्च गुणे, रपरे च कृतेऽजन्तत्वाभावेऽपि उपदेशग्रहणाच्चिण्वदिट्। आरिता। अर्त्ता। स्मारिता। स्मर्त्ता। नलोपः। स्रस्यते। सस्रंसे। इदितस्तु–नन्द्यते। इज्यते। **( ९६६ ) तनोतेर्यकि ६।४।४४।** तनोतेर्यकि

---

आत्मनेपदानां टेरे' इति टेरेत्वे कृते 'भाव्यते' इति। **बोभूय्यते**– यङन्ताद् भूधातोः भावे लटि आत्मनेपदे तप्रत्यये यकि 'आतो लोपः' इति यङोऽकारस्य लोपे टेरेत्वे 'बोभूय्यते' इति सिद्धम्। **अर्यत इति**। ऋधातोर्कर्मणि लटि आत्मनेपदे तप्रत्यये यकि अनुबन्धलोपे 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते 'क्ङिति चे'त्यनेन निषेधे 'गुणोऽर्त्तिसंयोगाद्योः' इत्यनेन गुणे अकारे रपरत्वे टेरेत्वे कृते 'अर्यते' इति।

(९६६) **तनोतेरिति**। अत्र 'विड्वनोरनुनासिकस्यात्' इत्यत आदिति, 'ये विभाषा' इत्यतः विभाषेति चानुवर्तते। तदाह– **आदन्तादेशो वेति**।

---

में–अस्तोषाताम्। (२८) ✓ ऋ + कर्मवाच्य में लट् (= आत्मनेपद 'त', यक् = 'य', सार्वधातुक संज्ञा, 'सार्वधातु०' से प्राप्त गुण का 'क्ङिति च' से निषेध, 'ऋ' = 'अ'–गुण–'गुणोऽर्तिसयोगाद्योः', रपर, टि को एत्व) = अर्यते (जाया जाता है)। (२९) ✓ स्मृ + कर्मवाच्य में लट् (= त, यक् = 'य', 'ऋ' = 'अ'–गुण–'गुणोऽर्ति०', रपर, एत्व) = स्मर्यते (= याद किया जाता है)। (३०) ✓ ऋ + कर्म में लिट्, प्र० पु० ए० व०–आरे। (३१) ✓ स्मृ + कर्म में लिट्, प्र० पु० ए० व०–सस्मरे।

**परत्वादिति**। ✓ ऋ धातु को कर्मणि लुट् में पर और नित्य होने से 'सार्वधातु०' से गुण, रपर होकर 'अर् ता'। इस स्थिति में अजन्त न होने पर भी उपदेशावस्था में अजन्त होने के कारण चिण्वद् इट् हो जाता है। क्योंकि 'स्यसिच्०' सूत्र से उपदेश में जो अच् तदन्त को चिण्वद् इट् का विधान किया गया है। यहाँ उपदेश अवस्था में ऋ धातु अच् रूप है और व्यपदेशिवद्भाव से तदन्त भी है। अतः विकल्प से चिण्वद् इट् होता है।

(३२) ✓ ऋ + लुट् (= 'त', तास्, त = डा = आ, डित्त्वात् टिलोप, 'ऋ' = 'अ'–गुण, रपर, उपदेश अवस्था में अजन्त होने से वैकल्पिक चिण्वद्भाव, इट् = 'इ' वृद्धि) = आरिता। चिण्वदिट् के अभाव पक्ष में–अर्ता। (३३) ✓ स्मृ + लुट् प्र० पु० ए० व०–स्मारिता। स्मर्ता (प्रक्रिया पूर्ववत्)। (३४) ✓ स्रंस् + भाववाच्य में लट् (= त, यक् = 'य', 'न्' अनुनासिकलोप–'अनिदिताम्०', एत्व) = स्रस्यते। (३५) ✓ स्रंस् + भाव में लिट् (प्र० पु० ए० व०)–सस्रंसे। **इदितस्तु**। इदित् धातुओं के 'न्' का लोप नहीं होता। क्योंकि 'अनिदितां हल उपधायाः क्ङिति' सूत्र में 'अनिदिताम्' पद द्वारा इदित् धातु के नकारलोप का निषेध कर दिया गया है। (३६) टुनदि (नदि) + कर्मवाच्य लट् (= 'त', इदित् होने से नुम् = 'न्', यक् = 'य', एत्व) = नन्द्यते। (३७) ✓ यज् + कर्मवाच्य लट् (= त, यक् = 'य', धातु के 'य्' = 'इ' सम्प्रसारण, पूर्वरूप, एत्व) = इज्यते।

(९६६) **पद**– तनोतेः, यकि। **अनुवृत्ति**– आत्, विभाषा। **विधिसूत्र**।

**मूलार्थ**– यक् के परवर्ती रहते तन् धातु को विकल्प से आकार अन्तादेश होता है। तायते। तन्यते।

**विमर्श**– प्रकृत सूत्र में 'ये विभाषा' (६।४।४३) से 'विभाषा' तथा 'विड्वनोरनुनासिकस्यात्' (६।४।४१) से 'आत्' की अनुवृत्ति आती है। तदनुसार– ''यक् के परे रहते विकल्प से तन् धातु को आकारान्त आदेश होता है।''

**उदाहरण**– ✓ तन् + कर्मवाच्य में लट् (= प्र० पु० ए० व०–त, यक् = 'य', 'न्' = 'आ'–

**अदन्तादेशो वा स्यात्। तायते-तन्यते। (९६७) तपोऽनुतापे च ३।१।६५। तपश्च्लेश्चिण्‌ न स्यात्, कर्मकर्तरि अनुतापे च। अन्वतप्त पापेन। 'घुमास्थे'तीत्वम्। दीयते। धीयते। ददे। दधे। (९६८) आतो युक् चिण्कृतोः ७।३।३३। आदन्तानां युगागमः स्याच्चिणि, ञ्णिति कृति च। दायिता। दाता। दायिषीष्ट। दासीष्ट। अदायि। अदायिषाताम्।**

---

(९६७) **तपोऽनुताप इति।** 'च्लेः सिच्' इत्यतः च्लेरिति, 'चिण्ते पदः' इत्यतः चिणिति, 'न रुधः' इत्यतो नेति चानुवर्तते। चकारात् 'अचः कर्मकर्तरि' इत्यस्मात्कर्मकर्तरीति समुच्चीयते। अत आह–**तपश्च्लेरित्यादिना। अन्वतप्त इति।** अनुपूर्वात् तपधातोः कर्मणि लुङि आत्मनेपदे तप्रत्यये अडागमे च्लौ 'चिण् भावकर्मणोः' इत्यनेन च्लेश्चिणि प्राप्ते 'तपोऽनुतापे चे'त्यनेन तन्निषेधे च्लेः सिचि अनुबन्धलोपे, 'अनु अ तप् स् त्' इति जाते; 'झलो झली'त्यनेन सकारलोपे यणादेशे 'अन्वतप्त' इति। 'अन्वतप्त पापेने'त्यत्र कर्तरि तृतीया।

(९६८) **आतो युगिति।** 'अङ्गस्ये'त्यधिकृतम्, विशेषणत्वात्तदन्तविधिः। ञ्णितीत्यनुवृत्तं

---

आदेश विकल्प से, दीर्घ, एत्व) = तायते। आकारान्तादेश के अभावपक्ष में–तन्यते।

(९६७) **पद–** तपः, अनुतापे, च। **अनुवृत्ति–** च्लेः, चिण्, न। **विधिसूत्र (निषेध)।**

**मूलार्थ–** कर्म, कर्ता में और अनुताप अर्थ में तप् धातु से परवर्ती च्लि के स्थान में चिण् आदेश नहीं होता। अन्वतप्त पापेन इत्यादि।

**विमर्श–** सूत्रार्थ की पूर्ति हेतु 'च्लेः सिच्' (३।१।४४) से च्लेः, 'चिण्ते पदः' (३।१।६०) से चिण्, 'न रुधः' (३।१।६४) से 'न' तथा चकार से 'अचः कर्मकर्तरि' (३।१।६२) से 'कर्मकर्तरि' की अनुवृत्ति आती है। तदनुसार–''कर्मकर्ता और अनुताप अर्थ में तप् धातु से उत्तर च्लि के स्थान में चिण् (= इ) आदेश नहीं होता।''

**उदाहरण–** (१) अनु + ✓ तप + कर्म में लुङ् (आत्मनेपद, ल् = त, च्लि, 'चिण्भावकर्मणोः' से प्राप्त च्लि = चिण् का 'तपोऽनुतापे च' से निषेध, च्लि = सिच् = 'स्', 'स्' का लोप–'झलो झलि', अट् का आगम, यण्) = अन्वतप्त पापेन (पापी द्वारा प्रायश्चित्त किया गया)। (२) ✓ दा + कर्मवाच्य में लट् (= आत्मनेपद–त, यक् = 'य', आ = 'ई'–'घुमास्थागापाजहातिसां हलि', टि को एत्व) = दीयते। (३) ✓ धा + कर्मवाच्य लट् (= 'त', यक् = 'य', आ = 'ई'–ईत्व, एत्व) = धीयते। (४) ✓ दा + कर्म में लिट् (प्र० पु० ए० व०) = ददे। (५) ✓ धा + कर्मवाच्य में लिट् (प्र० पु० ए० व०) = दधे।

(९६८) **पद–** आतः, युक्, चिण्कृतोः। **अनुवृत्ति–** ञ्णिति। **विधिसूत्र।**

**मूलार्थ–** चिण् और ञित् णित् कृत् प्रत्यय के परवर्ती रहते आदन्त धातुओं को युक् (य) का आगम होता है। दायिता। दाता इत्यादि।

**विमर्श–**प्रकृत सूत्र में 'अचो ञ्णिति' (७।२।११५) से 'ञ्णिति' की अनुवृत्ति आती है। तदनुसार– ''आकारान्त अङ्ग को चिण् तथा ञित्, णित् तथा कृत् प्रत्यय परे रहते युक् (य्) का आगम होता है।''

**उदाहरण–** (१) ✓ दा + कर्मवाच्य में लुट् (आत्मनेपद ल् = त, तास्, विकल्प से चिण्वद्भाव और इट् = 'इ', युक् = 'य्' का आगम, त = डा = 'आ', डित्त्वात् टिलोप) = दायिता। चिण्वदिट् के अभावपक्ष में– दाता। (२) ✓ दा + कर्म में आ० लिङ् (= 'त', सीयुट् = सीय्, सुट् = स्)– दा सीय् स् त (विकल्प से चिण्वद्भाव और इट् = 'इ'– 'स्यसिच्०', युक् = 'य्' का आगम–'आतो

'स्थाघ्वोरिच्चे'तीत्वम्। अदिषाताम्। शम्यते मोहो मुकुन्देन। **( ९६९ ) चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ६।४।९३** । चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यात्। **शामिता। शमिता। शमयिता। शामिष्यते। शमिष्यते। शमयिष्यते। ण्यन्तत्वाभावे–शम्यते मुनिना। ( ९७० ) नोदात्तोपदेशस्य मान्तस्यानाचमेः ७।३।३४** । उदात्तोपदेशस्य

---

कृत एव विशेषणम्, न तु चिणः; तस्य णित्त्वेनाव्यभिचारात्। तदाह– **आदन्तानामिति। दायितेति।** चिण्वद्भावादिटि युक्। चिण्वद्भावाभावपक्षे–दाता इति।

(९६९) **चिण्णमुलोरिति।** अत्र 'दोषो णावि'त्यतो णाविति, 'ऊदुपधाया गोहः' इत्यत उपधाया इति, 'मितां ह्रस्वः' इत्यतः मितामिति चानुवर्तते। अत आह– **चिण्पर इत्यादि। शामिता–** शम्धातोर्णिचि शमीत्यतो लुटि तङि 'लुटः प्रथमस्ये'त्यनेन डादेशेऽनुबन्धलोपे चिण्वदिटि, तासि प्रत्यये टेर्लोपे 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इत्यनेन विकल्पेन दीर्घे 'णेरनिटि' इति णेर्लोपे–शामिता। दीर्घाऽभावे–'शमिता' इति। चिण्वत्त्वाऽभावे वलादिलक्षणे इटि गुणेऽयादेशे कृते 'शमयिता' इति।

(९७०) **नोदात्तोपदेशस्येति।** 'मृजेर्वृद्धिरि'त्यतो वृद्धिरिति, 'अत उपधायाः' इत्यत

---

युक्०', 'सीय्' के 'य्' का लोप, षत्व, ष्टुत्व) = दायिषीष्ट। चिण्वदिट् के अभावपक्ष में–दासीष्ट। (३) ✓ दा + कर्म में लुङ् (= त, अट्, च्लि, च्लि = चिण् = 'इ'–'चिण् भावकर्मणोः', युक् = 'य्' आगम– 'आतो युक्०', 'त' का लुक्– 'चिणो लुक्') = अदायि। (४) ✓ दा + कर्म में लुङ् (= प्र० पु० द्वि० व०–आताम्, अट्, च्लि, च्लि = सिच् = 'स्', विकल्प से चिण्वद्भाव तथा इट् = 'इ', युक् = 'य्' आगम, 'स्' = 'ष्'–षत्व) = अदायिषाताम्। चिण्वदिट् के अभावपक्ष में–('स्थाघ्वोरिच्च' से 'आ' = 'इ'–इत्व होकर) = अदिषाताम्। (५) ✓ शम् + कर्मवाच्य में लट् (आत्मनेपद, ल् = त, यक् = 'य'–'सार्वधातुके यक्', टि को एत्व) = शम्यते मोहो मुकुन्देन (कृष्ण के द्वारा मोह दूर किया जाता है)।

(९६९) **पद–** चिण्णमुलोः, दीर्घः, अन्यतरस्याम्। **अनुवृत्ति–** मिताम्, उपधायाः, णौ। **विधिसूत्र।**

**मूलार्थ–** चिण्परक और णमुल्परक णि के परवर्ती रहते मित् धातुओं की उपधा को विकल्प से दीर्घ होता है। शामिता। शमिता। शमयिता। शामिष्यते इत्यादि।

**विमर्श–** सूत्रार्थ की स्पष्टता हेतु 'मितां ह्रस्वः' (६।४।९२) से 'मिताम्', 'ऊदुपधाया गोहः' (६।४।८९) से 'उपधायाः' तथा 'दोषो णौ' (६।४।९०) से 'णौ' की अनुवृत्ति आती है। अतः ''चिण्परक तथा णमुल्परक णि के परे रहते विकल्प से मित् धातुओं की उपधा को दीर्घ होता है।''

**उदाहरण–** (१) ✓ शम् + णिच् (= इ)–शमि (धातुसंज्ञा, कर्म में लुट् = 'त', तास्, त = डा = 'आ', टिलोप, विकल्प से चिण्वद्भाव, इट् = 'इ')– शमि इ ता (णि = 'इ' का लोप– 'णेर-निटि', मित्त्वात् विकल्प से दीर्घ–'चिण्णमुलोः') = शामिता। दीर्घ के अभाव पक्ष में– शमिता। चिण्वदिट् के अभाव पक्ष में (णिलोप का अभाव, गुण, 'अय्' आदेश) = शमयिता। (२) ✓ शम् + णिच् (= 'इ')–शमि (धातुसंज्ञा, कर्मणि लृट् = त, स्य, विकल्प से चिण्वद्भाव और इट् = 'इ')– शमि इ स्य त (णि = 'इ' का लोप–'णेरनिटि', विकल्प से दीर्घ–'चिण्णमुलोः', 'स्' = 'ष्'–षत्व, टि को एत्व) = शामिष्यते। दीर्घ के अभाव पक्ष में–शमिष्यते। चिण्वदिट् के अभाव पक्ष में (णिलोप का अभाव, गुण, अय् आदेश) = शमयिष्यते। ण्यन्त के अभाव में दीर्घ भी नहीं होता–शम्यते मुनिना।

(९७०) **पद–** न, उदात्तोपदेशस्य, मान्तस्य, अनाचमेः। **अनुवृत्ति–** चिण्कृतोः, ञ्णिति,

**मान्तस्य उपधाया वृद्धिर्न स्याच्चिणि, ञ्णिति कृति च, न त्वाचमेः। अशमि। अदमि। उदात्तोपदेशस्येति किम्? अगामि। मान्तस्येति किम्? अवादि। अनाचमेरिति किम्? आचामि। * अनाचमिकमिवमीनामिति वक्तव्यम् *। अकामि। अवामि। भज्यते। ( ९७१ )**

---

उपधाया इति, 'अचो ञ्णिति' इत्यतो ञ्णितीति, 'आतो युगि'त्यतश्चिण्कृतोः इति चानुवर्तते। तदाह- **उदात्तोपदेशस्येत्यादिना। अशमि इति।** शम्धातोर्लुङि आत्मनेपदे तप्रत्यये च्लौ, 'चिण् भावकर्मणोः' इति च्लेश्चिणि अडागमेऽनुबन्धलोपे 'अ शम् इ त' इति जाते 'चिणो लुक्' इति तलोपे 'अशमि' इति। अत्र 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' इति निषेधान्नोपधावृद्धिः।

---

वृद्धिः। **विधिसूत्र।**

**मूलार्थ–** चिण् के परवर्ती रहते और ञित् णित् कृत्प्रत्यय के परवर्ती रहते आङ्पूर्वक चम् धातु को छोड़कर उदात्तोपदेश मान्त धातु की उपधा को वृद्धि नहीं होती। अशमि। अदमि इत्यादि।

**विमर्श–** प्रकृत सूत्र में 'आतो युक्०' (९६८) से 'चिण्कृतोः', 'अचो ञ्णिति' (७।२।११५) से 'ञ्णिति' तथा 'मृजेर्वृद्धिः' (७।२।११४) से 'वृद्धिः' पद की अनुवृत्ति आती है।

**तदनुसार–** ''आङ्पूर्वक चर् धातु से भिन्न उपदेशावस्था में जो उदात्त तथा मकारान्त धातु, उसकी उपधा को चिण् तथा ञित् णित् कृत् प्रत्यय के परे रहते वृद्धि नहीं होती।''

**उदाहरण–** (१) ✓ शम् + कर्मवाच्य में लुङ् (आत्मनेपद 'ल्' = 'त', अट् = 'अ' आगम, च्लि, च्लि = चिण् = 'इ'–'चिण् भावकर्मणोः')– अ शम् इ त (त का लुक्–'चिणो लुक्', णित्त्वेन प्राप्त उपधावृद्धि का 'नोदात्तोपदेशस्य' से निषेध) = अशमि। (२) ✓ दम् + कर्म में लुङ् (प्र० पु० ए० व०, प्रक्रिया उक्तवत्) = अदमि।

**प्रत्युदाहरण--** (१) **उदात्तोपदेशस्येति किम्?**– प्रकृत सूत्र में 'उदात्तोपदेशस्य' पद के न होने पर गम् धातु, जो अनुदात्तोपदेश है, से भी चिण् में दीर्घ का अभाव होने से 'अगमि' रूप बनेगा। अतः अनिष्ट रूप के निवारण के लिए सूत्र में 'उदात्तोपदेशस्य' का पाठ किया गया है। 'अगामि' में प्रकृत से निषेध नहीं हुआ।

(२) **मान्तस्येति किमिति?**– सूत्र में 'मान्तस्य' पद का ग्रहण होने से उदात्तोपदेश मान्त धातु की उपधा को ही वृद्धि का निषेध होता है। ✓ वद् के मान्त न होने से वृद्धि का निषेध नहीं हुआ। अवादि।

(३) **अनाचमेरिति–** प्रकृत सूत्र में 'अनाचमेः' पद का ग्रहण करने से आङ्पूर्वक चम् धातु को छोड़कर उदात्तोपदेश मान्त धातु को वृद्धि का निषेध विधान किया गया है। अतः आ + ✓ चम् को वृद्धि का निषेध नहीं होता–आचामि।

**(वा०)**– 'आङ् उपसर्गपूर्वक चम्, कम् और वम् धातु से भिन्न जो मान्त उदात्तोपदेश धातु, उसकी उपधा को वृद्धि नहीं होती' ऐसा कहना चाहिए।

**उदाहरण–** (१) ✓ कम् + णिच् (= 'इ', 'नोदात्तोपदेशस्य' से प्राप्त उपधावृद्धि के निषेध का 'अनाचमि' वार्तिक से प्रतिषेध, 'अ' = 'आ'–वृद्धि–'अत उपधायाः')– कामि (आत्मनेपद, लुङ्–'त', अट् = 'अ', च्लि, च्लि = चिण् = 'इ', 'त' का लुक्–'चिणो लुक्', णि = 'इ' का लोप–'णेरनिटि') = अकामि। (२) ✓ वम् + णिच् + कर्म में लुङ् (प्र० पु० ए० व०, प्रक्रिया पूर्ववत्) = अवादि। (३) ✓ भञ्ज् कर्मवाच्य में लट् (= त, यक् = 'य', 'न्' अनुनासिकलोप–'अनिदिताम्', टि को एत्व) = भज्यते।

**भञ्जेश्च चिणि ६।४।३३ ।** भञ्जेश्च चिणि नलोपो वा स्यात्। अभाजि। अभञ्जि। लभ्यते।

**( ९७२ ) विभाषा चिण्णमुलोः ७।१।६९ ।** लभेर्नुम् वा स्याच्चिण्णमुलोः परतः। अलम्भि। अलाभि।

इति भावकर्मप्रकरणम् ।



---

(९७१) **भञ्जेश्चेति**। 'श्नान्न लोपः' इत्यतो नेति लोप इति चानुवर्तते। 'जान्तनशां विभाषा' इत्यतो विभाषेति च। अत आह–**भञ्जेश्चेत्यादि**। **अभाजि**– भञ्ज्धातोः कर्मणि लुङि आत्मनेपदे तप्रत्यये अडागमे, च्लौ 'चिण्भावकर्मणोः' इत्यनेन च्लेश्चिणि 'अ भञ्ज् इ त' इति जाते 'भञ्जेश्च चिणि' इत्यनेन विभाषया नलोपे उपधावृद्धौ 'चिणो लुक्' इत्यनेन तलोपे 'अभाजि' इति। नलोपाऽभावे–'अभञ्जि' इति।

(९७२) **विभाषेति**। 'लभेश्चे'त्यतो लभेरिति, 'इदितो नुम्' इत्यतो नुमिति चानुवर्तते। तदाह–**लभेर्नुमिति**।

इति भावकर्मप्रकरणम् ।



---

(९७१) **पद**– भञ्जेः, च, चिणि। **अनुवृत्ति**– न, लोपः, विभाषा। **विधिसूत्र**।

**मूलार्थ**– चिण् के परवर्ती रहते भञ्ज् धातु के नकार का लोप विकल्प से होता है। अभाजि। अभञ्जि इत्यादि।

**विमर्श**– इस सूत्र में 'जान्तनशां विभाषा' (६।४।३२) से 'विभाषा' तथा 'श्नान्न लोपः' (६।४।२३) से 'न लोपः' की अनुवृत्ति आती है। तदनुसार– ''णिच् प्रत्यय के परे रहते भञ्ज् धातु के नकार का लोप भी विकल्प से होता है।''

**उदाहरण**– (१) ✓ भञ्ज् + कर्म में लुङ् (आत्मनेपद, 'ल्' = 'त', च्लि, च्लि = चिण् = 'इ'–'चिण् भावकर्मणोः', 'त' का लुक्–'चिणो लुक्')– अ भञ्ज् इ (विकल्प से 'न्' का लोप– 'भञ्जेश्च चिणि', उपधावृद्धि) = अभाजि। 'न्' के लोप के अभावपक्ष में– अभाञ्जि। (२) ✓ लभ् + कर्मवाच्य लट् (प्र० पु० ए० व०) = लभ्यते।

(९७२) **पद**– विभाषा, चिण्णमुलोः। **अनुवृत्ति**– लभेः, नुम्। **विधिसूत्र**।

**मूलार्थ**– चिण् और णमुल् के परवर्ती रहते लभ् धातु को विकल्प से नुम् (= न्) का आगम होता है। अलम्भि। अलाभि।

**विमर्श**– यहाँ 'लभेश्च' (७।१।६४) से 'लभेः' तथा 'इदितो नुम् धातोः' (७।१।५८) से 'नुम्' की अनुवृत्ति आती है। तदनुसार– ''चिण् तथा णमुल् परे रहते लभ् धातु को विकल्प से 'नुम्' का आगम होता है।''

**उदाहरण**– (१) ✓ लभ् + कर्मवाच्य में लुङ् (= त, अट् = 'अ' आगम, च्लि, च्लि = चिण् = इ)– अ लभ् इ त ('त' का लुक्–'चिणो लुक्', विकल्प से नुम् = न् = ं = 'ञ्' परसवर्ण) = अलम्भि। 'नुम्' के अभावपक्ष में (णित्त्वात् उपधावृद्धि) = अलाभि।

**भावकर्म-प्रकरण समाप्त ।**



## अथ कर्मकर्तृप्रकरणम्

यदा कर्मैव कर्तृत्वेन विवक्षितं, तदा सकर्मकाणामप्यकर्मकत्वात्कर्त्तरि भावे च लकारः। (९७३) **कर्मवत्कर्मणा तुल्यक्रियः ३।१।८७** । **कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात्। कार्यातिदेशोऽयम्। तेन यक्, आत्मनेपदं, चिण्**

---

अथ कर्मकर्तृप्रक्रियायां कर्मणः कर्तृत्वं साधयितुमाह-**यदेति**। 'यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा कारकान्तराण्यपि स्वव्यापारे स्वतन्त्रत्वात् कर्तृसंज्ञां लभन्ते' इति सिद्धान्ते यदा कर्मैव कर्तृत्वेन विवक्षितं स्यात्तदा कर्माभावात्सकर्मका अपि धातवोऽकर्मका एव भवन्ति तेभ्यः कर्तरि भावे च लकारा भवन्ति।

(९७३) **कर्मवत्कर्मणेति**। 'कर्तरि शप्' इत्यतः 'कर्तरी'त्यनुवर्तते, तच्च प्रथमया विपरिणम्यते। तुल्या क्रिया यस्य सः तुल्यक्रियः कर्ता। 'कर्मणे'त्यनेन कर्मकारकस्था क्रिया विवक्षिता। तदाह- **कर्मस्थस्येत्यादिना। कार्यातिदेशोऽयमिति**। यद्यपि शास्त्राति-

---

भावकर्म-प्रक्रिया के अनन्तर कर्मकर्तृ-प्रक्रिया का निरूपण किया जा रहा है।

**यदेति**। जब कर्म को ही कर्ता कहना इष्ट हो अर्थात् सौकर्यातिशय (अत्यन्त सरलता) बताने के लिए कर्ता के व्यापार की अविवक्षा कर कर्म को ही अपने व्यापार में स्वतन्त्र मान कर कर्ता मान लिया जाता है, तब सकर्मक धातुएँ भी अकर्मक (कर्म न रहने से) हो जाती हैं और 'लः कर्मणि च भावे चाऽकर्मकेभ्यः' से लकार कर्ता या भाव अर्थ में होते हैं।

'क्रियां बड़ी सरलता से हो रही है' इस भाव को व्यक्त करने में जब कर्म ही कर्ता हो जाता है अर्थात् क्रिया का कर्तृत्व में कर्म में आरोपित हो जाता है, तो कर्मकर्ता में प्रथमा विभक्ति होती है। कर्म पद का अभाव हो जाता है तथा क्रिया का रूप कर्मवाच्य की क्रिया के समान होता है। यथा- 'पच्यते ओदनः स्वयमेव'।

(९७३) **पद**- कर्मवत्, कर्मणा, तुल्यक्रियः। **अनुवृत्ति**- कर्तरि। **अतिदेशसूत्र**।

**मूलार्थ**- कर्म में वर्तमान क्रिया के साथ समान क्रिया वाला कर्ता कर्मवत् होता है। यह अतिदेश कार्यातिदेश है। अतः कर्मवाच्य के समान यक्, आत्मनेपद, चिण्वदिट् यहाँ भी होंगे। पच्यते फलम्। भिद्यते काष्ठम् इत्यादि।

**विमर्श**- प्रकृत सूत्र में 'कर्तरि शप्' (३।१।६८) से 'कर्तरि' पद की अनुवृत्ति मण्डूकप्लुतगति से आ रही है, जिसका प्रथमा में विपरिणाम (कर्ता) हो जाता है। 'तुल्यक्रियः' में तुल्यपद समानता का वाचक है। तदनुसार- ''कर्म में स्थित जो क्रिया, उसके साथ तुल्य क्रियावाला कर्ता कर्मवत् (कर्म के सदृश) हो जाता है।''

जहाँ क्रिया द्वारा होने वाला व्यापार-विशेष कर्म में हो वहाँ क्रिया कर्मस्थ होती है। यथा 'पच्यते ओदनः' में पाक क्रिया के द्वारा होने वाला 'गल जाना' (विक्लित्ति) कर्म ओदन में है। अतः यहाँ क्रिया कर्मस्थ है। जब कर्म को कर्ता बनाया जाता है, तब जो क्रिया कर्मदशा में होती है वही कर्तृदशा में भी होती है। ऐसे तुल्य क्रियास्थलों में कर्मवद्भाव होता है।

इस कार्यातिदेश के चार प्रयोजन हैं- यक्, आत्मनेपद, चिण् और चिण्वद्भाव।

**चिण्वदिट् च स्युः। पच्यते फलम्। भिद्यते काष्ठम्। अपाचि। अभेदि। भावे–भिद्यते काष्ठेन। * भूषावाचिनां, किरादीनां सन्नन्तानां च यक्चिणौ चिण्वदिट् च नेति वक्तव्यम् *। अलङ्कुरुते कन्या। अलमकृत। अवकिरते हस्ती। अवाकीर्ष्ट। अवाकरिष्ट। गिरते। अगीर्ष्ट। अगरिष्ट। आद्रियते। आद्रित। किरादिस्तुदाद्यन्तर्गणः। चिकीर्षते कटः।**

---

देशकार्यातिदेशयोः न कोऽपि फलभेदस्तथापि शास्त्रातिदेशस्यापि कार्यातिदेशार्थत्वात् प्रामुख्यात्कार्यातिदेशपक्ष एवाश्रयणीय इत्यर्थः। **तेनेति**। तेन कार्यातिदेशेन कर्मणि प्रवर्तमानं यगात्मनेपदादि कर्मकर्तर्यपि प्रवर्तते इति। **पच्यते फलमिति**। 'कालः फलं पचती'त्यत्र यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते तदा फलरूपस्य कर्मण एव कर्तृत्वात् पच्धातुरकर्मकः। तस्मात् कर्तरि लटि कर्तुरुक्तत्वात्प्रथमायां 'कर्मवत् कर्मणा तुल्यक्रियः' इति कर्मवद्भावाद् 'भावकर्मणोः' इत्यनेनात्मनेपदे लः स्थाने तप्रत्यये 'सार्वधातुके यक्' इत्यनेन यकि अनुबन्धलोपे टेरेत्वे संयोगे च कृते 'पच्यते फलमि'ति।

---

**उदाहरण**– (१) **पच्यते फलम्** (फल स्वयं पक रहा है)– यहाँ 'कालेन फलं पच्यते' इस दशा में 'फल' कर्म था। सरलता का अतिशय बताने के लिए 'काल क्या पका रहा है? फल तो स्वयं ही पक रहा है।' यहाँ कर्म (फल) को कर्ता बना दिया। तब ✓ पच् से भाव और कर्ता में लकार की उत्पत्ति होती है। भाव में 'फलेन पच्यते' रूप बनेगा। कर्ता में लकार आने पर ✓ पच् + लट् (कर्मवद्भाव–'कर्मवत्कर्मणा तुल्यक्रियः', आत्मनेपद–'भावकर्मणोः', ल् = 'त', यक् = 'य'– 'सार्वधातुके यक्', 'अ' = 'ए' एत्व–टित आत्मने०') = पच्यते। कर्तृवाच्य होने से उक्त कर्ता में प्रथमा विभक्ति होती है–पच्यते फलम्।

(२) **भिद्यते काष्ठम्**– ''देवदत्तः काष्ठं भिनत्ति, किं देवदत्त? काष्ठन्तु स्वयमेव भिद्यते।'' (देवदत्त लकड़ी विदीर्ण करता है (फाड़ता है)। देवदत्त लकड़ी क्या फाड़ता है, लकड़ी तो स्वयं फटती है।) इस प्रकार सुगमता की अधिकता दिखाने के लिए कर्म 'काष्ठ' को कर्ता बना दिया जाता है। तदनुसार– ✓ भिद् से कर्ता में लकार लट् (कर्मवद्भाव, आत्मनेपद, लट् = ल् = 'त', यक् = 'य', टि को एत्व) = भिद्यते। (३) ✓ पच् + लुङ्–कर्मकर्तृवाच्य में (लुङ् = त, अट् = 'अ' आगम, च्लि, कर्मवद्भाव–'कर्मवत्कर्मणा०', 'च्लि' = 'चिण्' = 'इ', 'त' का लुक्–'चिणो लुक्', अ = 'आ'– वृद्धि) = अपाचि। (४) ✓ भिद् + कर्मकर्तृवाच्य में लुङ् (= त, अट् = 'अ', च्लि, कर्मवद्भाव, च्लि = चिण् = 'इ'–'चिण् भावकर्मणोः', त, का लुक्, 'इ' = 'ए'–गुण) = अभेदि। (५) भावे– **भिद्यते काष्ठेन**। भाव में लकार आने पर भाववाच्य के समान रूप बनता है। इसमें कर्ता के अनुक्त होने से उसमें तृतीया विभक्ति होती है। ✓ भिद् + भाव में लट् = भिद्यते (प्रक्रिया पूर्ववत्)।

**(वा०)**– भूषावाची धातु, किरादि धातु और सन्नन्त धातुओं से कर्मकर्ता में यक्, चिण् तथा चिण्वदिट् नहीं होते।

**उदाहरण**– (१) अलम् + कृ + कर्मकर्ता में लट् (कर्मवद्भाव, आत्मनेपद, लट् = त, प्राप्त यक् का–'भूषावाचिनां किरादीनाम्०' वार्तिक से निषेध, 'उ'–'तनादिकृञ्भ्य उः', ऋ = 'अ'–गुण, रपर, 'अ' = 'उ'–'अत उत्सार्वधातुके', टि को एत्व) = कुरुते (म् = ं = 'ङ्' परसवर्ण) = अलङ्कुरुते कन्या (कन्या स्वयं सजती है)। (२) अलम् + कृ + कर्मकर्ता में लुङ् (आत्मनेपद, लुङ् = त, अट् = 'अ', च्लि, प्राप्त च्लि = चिण् का 'भूषावाचिनाम्०' वार्तिक से निषेध, च्लि = सिच् = 'स्', 'स्'

अचिकीर्षिष्ट। **(९७४) तपस्तपःकर्मकस्यैव ३।१।८८ ।** तपःकर्मकस्यैव तपः कर्ता कर्मवत्स्यात्। तप्यते तपस्तापसः। अर्जयतीत्यर्थः। अतप्त। तपःकर्मकस्यैवेति किम्? उत्तपति सुवर्णं सुवर्णकारः। * **सकर्मकाणां प्रतिषेधो वक्तव्यः** *। अजा ग्रामं नयति।

---

**भूषावाचिनामिति**। कर्मवद्भावात्प्राप्तं यक्चिणादि वार्तिकेनानेन निषिध्यते। **अलङ्कुरुते कन्येति**। अन्यप्रयत्नं विना स्वयमेव भूषणक्रियावती इति तदर्थः। अत्र भूषावाचित्वात् यक् न भवति, कर्मकर्तरि आत्मनेपदमेव।

(९७४) **तपस्तप इति**। आद्यं 'तपः' इति पदं षष्ठ्यन्तम्। 'कर्तरि शप्' इत्यतः 'कर्तरी'त्यनुवृत्तं प्रथमान्ततया विपरिणम्यते। 'कर्मवत्कर्मणे'त्यतः कर्मवदिति अनुवर्तते। तदाह– **तपःकर्मकस्यैवेति। तप्यते तपस्तापस इति**। प्राजापत्यादि कृच्छ्राद्यात्मकं तपः सम्पादयतीत्यर्थः। सम्पादनस्यात्मकर्तृत्वात् तपोरूपकर्मस्थत्वाभावात् 'कर्मवत् कर्मणा तुल्यक्रियः' इत्यनेनाप्राप्तं कर्मत्वं 'तपस्तपः कर्मकस्यैवे'त्यनेन विधीयते। तेन आत्मनेपदत्वं यगादिकञ्च सिध्यतः।

---

का लुक्) = अलमकृत। (३) अव + कृ + कर्मकर्तृवाच्य में लट् (आत्मनेपद लट् = त, 'श' = 'अ'–'तुदादिभ्यः शः', 'ॠ' = 'इ'–'ॠत इद्धातोः', रपर, एत्व) = अवकिरते। (यहाँ प्राप्त यक् का 'भूषावाचिनाम्' वार्तिक से निषेध। (४) अव + कृ + कर्मकर्ता अर्थ में लुङ् (आत्मनेपद, 'ल्' = 'त', च्लि, च्लि = चिण् की प्राप्ति, उसका 'भूषावाचिनाम्' से निषेध, च्लि = सिच् = 'स्', विकल्प से इट् = 'इ'–'लिङ्सिचोरात्मनेपदे', 'ॠ' = 'अ'–गुण, रपर, 'स्' = 'ष्'–षत्व, 'त्' = 'ट्'–ष्टुत्व) = अकरिष्ट। अव + अकरिष्ट (अ + अ = 'आ') = अवाकरिष्ट। इट् के अभाव पक्ष में–'ॠ' = 'इ'– 'ॠत इद्धातोः' रपर, दीर्घ–'हलि च', षत्व, षटुत्व) = अवाकीर्ष्ट।

(५) गॄ + कर्मकर्तृवाच्य में लट्, (आत्मनेपद, लट् = 'त', प्राप्त यक् का वार्तिक 'भूषावा०' से निषेध, 'श' = 'अ', इत्व, रपर, एत्व) = **गिरते ओदनः स्वयमेव**। (६) गॄ + कर्मकर्ता में लुङ् (आत्मनेपद, ल् = 'त', अट्, च्लि, प्राप्त चिण् का वार्तिक से निषेध, च्लि = सिच् = 'स्', विकल्प से इट् = 'इ'–'लिङ्सिचोः', ॠ = 'अ'–गुण, रपर, षत्व, ष्टुत्व) = अगरिष्ट। इट् के अभावपक्ष में ('ॠ' = 'इ'–इत्व, रपर, दीर्घ, षत्व, ष्टुत्व) = अगीर्ष्ट। (७) आ + ✓ दृ + कर्मकर्तृवाच्य में लट् (आत्मनेपद, लट् = त, 'श' = 'अ'–'तुदादिभ्यः शः', ऋ = रिङ् = 'रि'–'रिङ्शयग्लिङ्क्षु', 'इ' = इयङ् = 'इय्', टि को एत्व) = आद्रियते। (८) आ + ✓ दृ (कर्मकर्तृवाच्य में लुङ्, आत्मनेपद 'ल्' = 'त', च्लि, प्राप्त चिण् का वार्तिक से निषेध, च्लि = सिच् = 'स्', अट् = 'अ', 'स्' का लुक्–'ह्रस्वादङ्गात्', आ + अ = 'आ'–दीर्घ) = आदृत। किरादि तुदादि के अन्तर्गत गण है।

(९) सन्नन्त ✓ चिकीर्ष + कर्मकर्ता में लट् (आत्मनेपद लट् = 'त', प्राप्त यक् का 'भूषावाचिनां०' वार्तिक से निषेध, 'श' = 'अ', पररूप, टि को एत्व) = चिकीर्षते कटः।

(१०) सन्नत ✓ चिकीर्ष + (कर्मकर्ता में लुङ् = आत्मनेपद 'त', अट् = 'अ', च्लि, प्राप्त च्लि = चिण् का वार्तिक से निषेध, च्लि = सिच् = 'स्', इट् = 'इ', षत्व, ष्टुत्व) = अचिकीर्षिष्ट।

(९७४) **पद–** तपः, तपःकर्मकस्य, एव। **अनुवृत्ति–** कर्मवत्। **अतिदेश (नियम) सूत्र**।

**मूलार्थ–** तपकर्मक तप् धातु का ही कर्ता कर्मवत् होता है, अन्यकर्मक तप् धातु का कर्ता कर्मवत् नहीं होता। तप्यते तपस्तापसः (तपस्वी तप को सम्पादित करता है)। अतप्त इत्यादि।

*** दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम् *। (९७५) न दुहस्नुनमां यक्चिणौ ३।१।८९ ।** एषां कर्मकर्त्तरि यक्चिणौ न स्तः। शप्। तस्य लुक्। गौः पयो दुग्धे। **(९७६) अचः कर्मकर्तरि ३।१।६२ ।** अजन्ताच्चलेश्चिण् वा स्यात्कर्मकर्तरि तशब्दे

---

(९७५) **न दुहेति।** 'कर्मवत्कर्मणे'त्यतः 'कर्मवदि'त्यनुवर्तते। फलितमाह- **'एषां कर्मकर्तरीति। गौ पयो दुग्धे-** गौः स्वयमेव पयः उत्सृजतीत्यर्थः। अत्र 'दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम्' इति कर्मकर्तृभूतायां गवि सत्यां दुह्धातोर्लटि 'भावकर्मणोः' इत्यात्मनेपदे तप्रत्यये यकि प्राप्ते 'न दुहस्नुनमां यक्चिणौ' इत्यनेन निषेधे, शपि, शब्लुकि टेरेत्वे 'झषस्तथोर्धोऽधः' इत्यनेन तकारस्य धकारे 'वा द्रुहमुह०' इति हकारस्य घकारे जश्त्वेन घस्य गकारे संयोगे 'दुग्धे' इति।

(९७६) **अच इति।** 'च्लेः सिच्' इत्यतः च्लेरिति, 'चिण्ते पदः' इत्यतश्चिण्ते इति

---

**विमर्श-** पूर्वसूत्र (९७३) से 'कर्मवत्' की अनुवृत्ति आती है। तदनुसार-''तप कर्मवाली 'तप सन्तापे' धातु के कर्ता को कर्मवद्भाव हो जाता है, अन्य कर्मवाली तप धातु को नहीं।''

**उदाहरण-** (१) 'तपांसि तापसं तपन्ति'- यहाँ ✓ तप् का कर्म 'तापसम्' जब पूर्वोक्त प्रक्रिया से कर्ता बन जाता है, तो 'तप्यते तपस्तापसः' (तपस्वी स्वयमेव स्वर्गादि कामना के लिए तप को प्राप्त करता है।)- यहाँ कर्मवद्भाव हो जाता है। ✓ तप् + कर्मकर्तृवाच्य (आत्मनेपद, लट् = त, कर्मवद्भाव-'तपस्तपः कर्मकस्यैव', यक् = 'य', टि को एत्व) = तप्यते तपस्तापसः। (पूर्वोक्त कर्म अवस्था में 'तपन्ति' का अर्थ- 'दुःख देना' है और कर्मकर्ता हो जाने पर 'प्राप्त होना' अर्थ है। अतः तुल्यक्रियत्व के अभाव में 'कर्मवत्कर्मणा०' से कर्मवद्भाव की यहाँ प्राप्ति नहीं थी। अतः प्रकृत सूत्र से 'कर्मवत्' का अप्राप्त विधान किया गया।) (२) ✓ तप् + कर्मकर्तृवाच्य लुङ् (आत्मनेपद, ल् = 'त', अट् = 'अ', च्लि, 'चिण्भावकर्मणोः' से प्राप्त 'च्लि' = 'चिण्' का 'तपोऽनुतापे च' से निषेध, च्लि = सिच् = 'स्', 'स्' का लोप-'झलो झलि') = अतप्त।

**प्रत्युदाहरण- तपः कर्मकस्यैवेति।** प्रकृत सूत्र में 'तपः कर्मकस्यैव' (तप कर्मवाले ✓ तप से ही) पद का ग्रहण होने से तप कर्म से अन्य कर्म वाले धातु के कर्ता को कर्मवत् नहीं होता। यथा- 'उत्तपति सुवर्णं सुवर्णकारः'। यहाँ तपकर्मक तप धातु नहीं है। अतः कर्मवत् नहीं होता।

**(वा०)-** सकर्मक धातुओं का कर्ता कर्मवत् नहीं होता।

**उदाहरण-** 'अजां ग्रामं नयति'-यहाँ ✓ नी के सकर्मक होने से प्राप्त कर्मवद्भाव का वार्तिक से निषेध हो जाता है। अतः यगादि भी नहीं होते।

**(वा०)-** सकर्मक दुह् और पच् धातु का कर्ता विकल्प से कर्मवत् होता है।

(९७५) **पद-** न, दुहस्नुनमाम्, यक्चिणौ। **अनुवृत्ति-** कर्मवत्। **अतिदेशसूत्र।**

**मूलार्थ-** दुह्, स्नु और नम् धातु से कर्मकर्ता से यक् और चिण् नहीं होते। **गौः पयो दुग्धे।**

**विमर्श-** यहाँ पूर्वसूत्र (९७३) से 'कर्मवत्' की अनुवृत्ति आती है। तदनुसार- ''कर्मकर्ता में दुह्, स्नु और नम् धातुओं से कर्मद्भाव से होने वाले यक् और चिण् नहीं होते।''

**उदाहरण-** ✓ दुह् + कर्मकर्तृवाच्य में लट् (कर्मवद्भाव, आत्मनेपद, ल् = त, प्राप्त यक् का 'न दुहस्नुनमां०' से निषेध, टि को एत्व, शप्, शप् का लुक्, 'त्' = 'ध्'-'झषस्तथोः', 'ह्' = 'घ्'-'वा द्रुह०', 'घ्' = 'ग्'-'झलां जश्०') = दुग्धे।

(९७६) **पद-** अचः कर्मकर्तरि। **अनुवृत्ति-** च्लेः, चिण्ते, अन्यतरस्याम्। **विधिसूत्र।**

**परे। अकारि। अकृत। ( ९७७ ) दुहश्च ३।१।६३ । तथा। अदोहि। पक्षे क्सः। अदुग्ध। 'लुग्वे'ति पक्षे लुक्। अधुक्षत। उदुम्बरः फलं पच्यते। ( ९७८ ) कुषिरजोः प्राचां**

---

'दीपजन' इत्यतोऽन्यतरस्यामिति चानुवर्तते। 'धातोरेकाचः' इत्यतोऽनुवृत्तं धातुग्रहणस्याचा विशेषणत्वात्तदन्तविधिस्तदाह–**अजन्तादित्यादिना**। **अकारि**– कटः स्वयमेवेति शेषः। कृधातोः कर्मकर्तरि लुङि तङि च्लौ 'अचः कर्मकर्तरि' इति विकल्पेन च्लेश्चिणि, णित्त्वाद् वृद्धौ 'चिणो लुक्' इति तलोपेऽटि कृते 'अकारि' इति। चिणभावपक्षे–'ह्रस्वादङ्गादि'ति सिचः सकारलोपे– 'अकृत' इति रूपम्।

(९७७) **दुहश्चेति**। अच इति वर्जं पूर्वसूत्रं तत्रानुवृत्तं चेहाप्यनुवर्तते। 'दुहेश्च्लेश्चिण्वा कर्मकर्तरि तशब्दे परे' इत्यर्थः। **अदोहि इति**। दुह्धातोः कर्मकर्तरि लुङ्लकारे तङि च्लौ 'दुहश्चे'ति विभाषया च्लेः स्थाने चिणि 'पुगन्त०' इति गुणेऽटि आगमे 'चिणो लुक्' इति 'त' इत्यस्य लुकि 'अदोहि' इति। चिणभावे 'शल इगुपधात्' इत्यनेन क्सादेशेऽनुबन्धलोपे 'दादेरि'ति घत्वे 'लुग्वे'ति क्सलुकि 'झषस्तथोः' इति तस्य धत्वे जश्त्वे–'अदुग्ध' इति।

---

**मूलार्थ**–कर्मकर्ता में अजन्त धातु से परवर्ती च्लि के स्थान में विकल्प से चिण् आदेश होता है त शब्द के परे रहते। अकारि। अकृत।

**विमर्श**– प्रकृत सूत्र में 'च्लेः सिच्' (३।१।४४) से 'च्लेः', 'चिण् ते पदः' (३।१।६०) से 'चिण्ते' तथा 'दीपजन०' (३।१।६१) से 'अन्यतरस्याम्' पद की अनुवृत्ति आती है। तदनुसार– ''अजन्त धातुओं से कर्मकर्ता में 'त' के परवर्ती रहते 'च्लि' के स्थान में 'चिण्' आदेश विकल्प से होता है।''

**उदाहरण**– (१) ✓ कृ + लुङ्– कर्मकर्ता में (आत्मनेपद, 'ल्' = 'त', च्लि, विकल्प से च्लि = चिण् = 'इ', 'ऋ' = 'आ'–वृद्धि, रपर, 'त' का लुक्–'चिणो लुक्', अट् = 'अ') = अकारि। चिण् के अभावपक्ष में (च्लि = सिच् = 'स्' 'स्' का लुक्–'ह्रस्वादङ्गात्') = अकृत।

(९७७) **पद**– दुहः, च। **अनुवृत्ति**– च्लेः, चिण्ते, अन्यतरस्याम्, कर्मकर्तरि। **विधिसूत्र**।

**मूलार्थ**–कर्मकर्ता में दुह् धातु से 'त' शब्द के परवर्ती रहते 'च्लि' के स्थान में विकल्प से 'चिण्' आदेश होता है। अदोहि। पक्ष में क्स। अदुग्ध इत्यादि।

**विमर्श**– पूर्वसूत्र (९७६) से 'कर्मकर्तरि' तथा उसमें अनुवृत्त 'चिण् ते', 'अन्यतरस्याम्' और 'च्लेः' पद की अनुवृत्ति आती है। अतः ''कर्मकर्ता में 'त' के परे रहते दुह् धातु से उत्तर 'च्लि' के स्थान में विकल्प से 'चिण्' आदेश होता है।''

**उदाहरण**– (१) ✓ दुह् + कर्मकर्ता में लुङ् (आत्मनेपद, 'ल्' = 'त', च्लि, च्लि = चिण् = 'इ'–विकल्प से– 'दुहश्च', 'उ' = 'ओ'–गुण, अट् = 'अ'–आगम, 'त' का लुक्– 'चिणो लुक्') = अदोहि। चिण् के अभाव पक्ष में (च्लि = 'क्स', क्स का विकल्प से लुक्–'लुग्वा०')– अ दुह् त ('त्' = 'ध'–'झषस्तथो०', 'ह्' = 'घ्'–'वा द्रुह०', 'घ्' = 'ग्'–जश्त्व) = अदुग्ध। 'क्स' के लुक् के अभाव पक्ष में– अ दुह् स त (ह् = 'क्'–'षढोः०', 'स्' = 'ष्'–षत्व, क् + ष् = 'क्ष्', 'ह्' = 'ध्'–भष्भाव) = अधुक्षत।

(२) **उदुम्बरः फलं पच्यते** (गूलर स्वयमेव फल को पकाता है)– यहाँ ✓ दुह् + कर्मकर्ता में लट् ('दुहिपच्योर्बहुलम्' से कर्मवद्भाव, आत्मनेपद, 'ल्' = '**त**', यक् = 'य', एत्व) = पच्यते।

(९७८) **पद**– कुषिरजोः, प्राचाम्, श्यन्, परस्मैपदम्, च। **अनुवृत्ति**– न यक्। **विधिसूत्र**।

**श्यन्परस्मैपदं च ३।१।९०** । अनयोः कर्मकर्तरि न युक्, किन्तु श्यन्परस्मैपदं च। आत्मनेपदापवादः। कुष्यति, कुष्यते पादः। रज्यति, रज्यते वस्त्रम्। यगविषये तु नास्य प्रवृत्तिः। कोषिषीष्ट। रंक्षीष्ट।

इति कर्मकर्तृप्रकरणम् ।



---

(९७८) **कुषिरजोरिति**। श्यन्नित्यनेन यग्वार्यते। प्राचां ग्रहणाद्विकल्पः स्यादत आह-- **अनयोरिति**। **कुष्यति, कुष्यते**। कुष् धातोः कर्मकर्तरि लटि 'कुषिरजोः प्राचां श्यन्परस्मैपदं चे'त्यनेन परस्मैपदत्वे तिपि श्यनि अनुबन्धलोपे 'कुष्यति' इति। तदुभयाभावे आत्मनेपदे यकि च-'कुष्यते' इति रूपम्।

**इति कर्मकर्तृप्रकरणम् ।**



---

**मूलार्थ**– कुष् और रञ्ज् धातु से कर्मकर्ता में यक् नहीं होता, किन्तु प्राचीन आचार्यों के मत में 'श्यन्' और परस्मैपद होता है। आत्मनेपद का अपवाद है। कुष्यति, कुष्यते पादः इत्यादि।

**विमर्श**– प्रकृत सूत्र में 'न दुह०' (९७५) से 'न' तथा 'यक्' की अनुवृत्ति आती है। तदनुसार– ''कर्मकर्ता में कुष् और रज् धातु से यक् नहीं होता, किन्तु विकल्प से (प्राचीन आचार्यों के मत में) परस्मैपद और 'श्यन्' हो जाता है।''

**उदाहरण**–(१) ✓ कुष् + लट् कर्मकर्ता में (प्राप्त यक् का निषेध, विकल्प से परस्मैपद, ल् = तिप् = 'ति', श्यन् = 'य'–'कुषिरजोः') = कुष्यति। परस्मैपद के अभाव पक्ष में आत्मनेपद– कुष्यते पादः (पैर स्वयं खींचता है।) (२) रज्यति, रज्यते वा वस्त्रम् (वस्त्र स्वयं रंगा जा रहा है।) (प्रक्रिया पूर्ववत्)।

**यगविषये इति**। प्राप्त यक् का निषेध कर उसके स्थान में श्यन् का विधान करने के कारण यक् के अविषय (जहाँ यक् का विषय नहीं है) में प्रकृत सूत्र की प्रवृत्ति नहीं होती।

**उदाहरण**– (३) ✓ कुष् + लिङ् कर्मकर्ता में (ल् = 'त', सीयुट् = 'सीय्', सुट् = 'स्')– कुष् सीय् स् त (इट्, 'य्' का लोप, 'उ' = 'ओ'–गुण, षत्व, ष्टुत्व) = कोषिषीष्ट। (४) ✓ रञ्ज् + लिङ् कर्मकर्ता में (आत्मनेपद, ल् = 'त', सीयुट् = 'सीय्', सुट् = 'स्', अनुस्वार, 'य्' का लोप, ज् = ग् = 'क्', 'स्' = 'ष्', क् + ष् = क्ष्) = रंक्षीष्ट।

**कर्मकर्तृ-प्रकरण समाप्त ।**



# अथ लकारार्थप्रकरणम्

**(९७९) अभिज्ञावचने लृट् ३।२।११२ ।** स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् स्यात्। लङोऽपवादः। वस निवासे। स्मरसि कृष्ण! गोकुले वत्स्यामः। एवं बुध्यसे, चेतयसे इत्यादिप्रयोगेऽपि। **(९८०) न यदि ३।२।११३ ।** यद्योगे उक्तं न

---

अथ लकारार्थप्रक्रिया निरूप्यते–

(९७९) **अभिज्ञावचन** इति। 'भूते' इत्यधिकृतम्। 'अनद्यतने लङ्' इत्यतोऽनद्यतने इत्यनुवर्तते। अभिज्ञा = स्मृतिः सा उच्यतेऽनेनेति अभिज्ञावचनं तस्मिन्, अर्थात् स्मृतिबोधके पदे समीपे प्रयुज्यमाने सति भूतानद्यतने धातोर्लृट् स्यादित्यर्थः। **स्मरसीति**। हे कृष्ण! गोकुले अवसामेति यत्तत् स्मरसीत्यर्थः। अत्र 'स्मरसि' इत्युपपदात् वस् धातोः 'अभिज्ञावचने लृट्' इति लृटि, मसि, स्यप्रत्यये 'सः स्यार्धधातुके' इत्यनेन सस्य तकारे, दीर्घे सस्य रुत्वे विसर्गे 'वत्स्यामः' इति।

(९८०) **न यदीति**। 'अभिज्ञावचने लृट्' इति लृट् न भवतीत्यर्थः। **अभिजानासीति**। 'अभुञ्ज्महो'त्यत्र 'न यदी'ति प्रतिषेधादुत्सर्गो लङ् प्रवर्तते।

---

लकारों के अर्थ-विशेष को प्रदर्शित करने के लिए लकारार्थ-प्रकरण का निरूपण किया जा रहा है–

(९७९) **पद**– अभिज्ञावचने, लृट्। **अनुवृत्ति**– अनद्यतने। **विधिसूत्र**।

**मूलार्थ**–स्मृतिबोधक पद के उपपद रहने पर भूत अनद्यतन अर्थ में धातु से लृट् लकार होता है। यह सूत्र लङ् का अपवाद है। स्मरसि कृष्ण गोकुले वत्स्यामः इत्यादि।

**विमर्श**– प्रकृत सूत्र में 'भूते' और 'धातोः' का अधिकार है। 'अनद्यतने लङ्' (३।२।१११) से 'अनद्यतने' की अनुवृत्ति आ रही है। तदनुसार– ''अभिज्ञावचन = स्मृतिबोधक (स्मृति को कहने वाला) कोई शब्द उपपद हो तो अनद्यतन भूतकाल में धातु से लृट् लकार होता है।''

**उदाहरण**– स्मरसि कृष्ण! गोकुले वत्स्यामः' (हे कृष्ण! आपको याद है–हम गोकुल में रहते थे।)– यहाँ स्मृतिबोधक 'स्मरसि' उपपद है। अतः ✓ वस् धातु से अनद्यतन भूत अर्थ में लृट् लकार का प्रयोग हुआ– वत्स्यामः (✓ वस् + लृट् उ० पु० बहुवचन)।

इसी प्रकार 'बुध्यसे, चेतयसे' इत्यादि स्मरणार्थक क्रियापदों के उपपद रहने पर भी प्रकृत सूत्र से अनद्यतन भूत अर्थ में लृट् लकार होगा।

(९८०) **पद**– न, यदि। **अनुवृत्ति**– अभिज्ञावचने, लट्, अनद्यतने। **विधिसूत्र**। (निषेध)

**मूलार्थ**– स्मृतिबोधक उपपद रहने पर 'यत्' शब्द के योग में धातु से अनद्यतन भूत में लृट् लकार नहीं होता। अभिजानासि कृष्ण! यद्वने अभुञ्ज्महि।

**विमर्श**–'भूते' और 'धातोः' का अधिकार है। 'अनद्यतने लङ्' (३।२।१११) से 'अनद्यतने' और 'अभिज्ञावचने लृट्' (९७९) की यहाँ अनुवृत्ति आती है। अतः '''यत्' के योग में स्मरणार्थक उपपद रहते धातु से अनद्यतन भूत अर्थ में लृट् लकार नहीं होता।''

**उदाहरण**– 'अभिजानासि कृष्ण! यद्वने अभुञ्ज्महि' (हे कृष्ण! तुम्हें स्मरण है कि हमने वन में खाया था।)– यहाँ 'यत्' का प्रयोग होने से 'अभिज्ञावचने लृट्' से प्राप्त लृट् का 'न यदि' से निषेध

स्यात्। अभिजानासि कृष्ण यद्वने अभुञ्ज्महि?। **( ९८१ ) विभाषा साकाङ्क्षे ३।२।११४ ।** उक्तविषये लृट् वा स्याल्लक्ष्यलक्षणभावेन साकाङ्क्षश्चेद्धात्वर्थः। स्मरसि कृष्ण वने वत्स्यामस्तत्र गाश्चारयिष्यामः?। वासो लक्षणं, चारणं लक्ष्यम्। पक्षे लङ्। परोक्षे लिट्। चकार। उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम्। 'सुप्तोऽहं किल विललाप'। अत्यन्तापह्नवे लिड् वक्तव्यः। कलिङ्गेष्ववात्सीः?। नाहं कलिङ्गान् जगाम। **( ९८२ ) प्रश्ने चाऽऽसन्नकाले ३।२।११७ ।** आसन्नकाले पृच्छ्यमानेऽर्थे लिड्विषये लङ्लिटौ स्तः।

---

(९८१) **विभाषेति**। 'अभिज्ञावचने लृट्' इति सूत्रम्, तत्र यदनुवृत्तं तदिहाप्यनुवर्तते। तदाह- **उक्तविषये इति**। **उत्तमपुरुष इति**। उत्तमपुरुषे अहमर्थस्य प्रत्यक्षत्वात् परोक्षत्वाभावेन लिट उत्तमपुरुषप्रयोगः कथं स्यादित्यत आह-**चित्तविक्षेपादिनेति**। **विललाप इति**। अत्र सुप्तावस्थायां चित्तस्य विक्षेपात्पारोक्ष्ये लिडिति भावः।

(९८२) **प्रश्ने चेति**। पञ्चवर्षातीतं कालमनासन्नकालमिति वृत्तिकाराः। प्रयोक्तुर्दृष्टि-

---

होने से यथाप्राप्त लङ् लकार का ही प्रयोग होगा। 'अभुञ्ज्महि'।

(९८१) **पद**– विभाषा, साकाङ्क्षे। **अनुवृत्ति**– अभिज्ञावचने, लृट्, अनद्यतने। **विधिसूत्र**।

**मूलार्थ**– लक्ष्य-लक्षणभाव से धात्वर्थ साकांक्ष हो तो स्मृतिबोधक उपपद रहने पर धातु से अनद्यतन भूत अर्थ में विकल्प से लृट् लकार होता है।

**विमर्श**– पूर्ववत् 'भूते' और 'धातोः' का अधिकार है। 'अभिज्ञावचने लृट्' और 'अनद्यतने' की अनुवृत्ति आती है। तदनुसार- "स्मृतिबोधक उपपद रहने पर उक्त अर्थ में धातु से विकल्प से लृट् लकार होता है, यदि धात्वर्थ लक्ष्य-लक्षणभाव से साकांक्षित हो।"

**उदाहरण**– 'स्मरसि कृष्ण! वने वत्स्यामस्तत्र गाश्चारयिष्यामः' (हे कृष्ण! तुम्हें स्मरण है कि हम लोग वन में रहते थे और गायें चराते थे।)- यहाँ वास = निवास लक्षण है और चारण लक्ष्य है। 'वन में रहते थे' यहाँ 'क्या करते थे?' यह बताने की आकांक्षा प्रयोक्ता को है। अतः उक्त वाक्य में लक्ष्य-लक्षणभाव से धात्वर्थ के साकांक्षित होने पर विकल्प से लृट्-वत्स्यामः। लृट् के अभाव-पक्ष में लङ्।

**परोक्षे लिट्**–अनद्यतन (= जो आज का न हो) परोक्ष (= जो अपनी इन्द्रिय आँखों से न देखा गया हो) अर्थ में वर्तमान धातु से लिट् लकार होता है। चकार (✓ कृ + लिट् प्र० पु० ए० व०)।

**उत्तमपुरुष इति**। उत्तमपुरुष में अहम् (स्व) अर्थ का प्रत्यक्ष होने से परोक्ष का अभाव होता है। अतः लिट् लकार में उत्तमपुरुष का प्रयोग कैसे होगा? इसके उत्तर में ग्रन्थकार ने कहा है- 'उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम्' अर्थात् उत्तमपुरुष में चित्त के विक्षेप आदि से स्वक्रिया स्वयं भी परोक्ष हो जाती है। अतः 'सुप्तोऽहं किल विललाप' में लिट् लकार होता है।

**(वा०)**- अत्यन्तापह्नव (= अत्यन्त छिपाना) अर्थ में धातु से लिट् लकार होता है, ऐसा कहना चाहिए।

**उदाहरण**– 'कलिङ्गेष्ववात्सीः' (तुमने कलिङ्ग में निवास किया था?)- इस प्रश्न के उत्तर में- **'नाहं कलिङ्गान् जगाम'** (मैं कलिङ्ग देश में गया ही नहीं)। यहाँ गमन के अभाव से वास का अभाव स्वतः सिद्ध हुआ। यह अत्यन्तापह्नवोक्ति है। अतः प्रकृत वार्तिक द्वारा लिट् लकार-जगाम।

(९८२) **पद**– प्रश्ने, च, आसन्नकाले। **अनुवृत्ति**– परोक्षे, अनद्यतने, लङ्, लिट्। **विधिसूत्र**।

अगच्छत्किम्? जगाम किम्? आसन्नकाले किम्? कंसं जघान किम्? **( ९८३ ) लट् स्मे ३।२।११८ ।** लिटोऽपवादः। यजति स्म युधिष्ठिरः। **( ९८४ ) अपरोक्षे च ३।२।११९ ।** अपरोक्षे भूतानद्यतने लट् स्यात्स्मयोगे। एवं स्म पिता ब्रवीति। **( ९८५ )**

---

पथातिक्रान्तत्वमनासन्नकालत्वमिति मनोरमाकाराभिमतम्। प्रश्ने = प्रष्टव्यविषये लिट्विषये लङ्लिटौ भवत इत्यर्थः।

(९८३) **लट् स्म इति**। स्मेत्यव्ययम्। तद्योगे लिड्विषये लट् भवतीत्यर्थः। **यजति स्मेति**। अत्र स्मशब्दो भूतकालद्योतकः, तद्योगे 'लट् स्मे' इत्यनेन लट् भवति।

(९८४) **अपरोक्षे चेति**। 'लट् स्मे' इत्यनुवर्तते। तदाह- **भूतानद्यतन इति**।

---

**मूलार्थ**– समीपकालिक प्रष्टव्य अर्थ में लिट् के विषय में लङ् और लिट् लकार होता है। अगच्छत् किम्? जगाम किम् इत्यादि।

**विमर्श**– सूत्रार्थ की पूर्ति के लिए 'अनद्यतने लङ्' (३।२।१११) से 'अनद्यतने', 'परोक्षे लिट्' (३।२।११५) से 'परोक्षे' और 'लिट्' तथा 'हशश्वतोर्लङ् च' से 'लङ्' की अनुवृत्ति आती है। तदनुसार– समीपकाल में पृच्छ्यमान (जिज्ञासाविषयीभूत) अर्थ में–लिट् के विषय में लङ् और लिट् लकार होते हैं।

**उदाहरण**– अगच्छत् किम्, जगाम किम्? (अभी गया क्या?)– यहाँ समीपकालिक प्रष्टव्य अर्थ होने से लङ् और लिट् दोनों का क्रमशः प्रयोग हुआ। अगच्छत्, जगाम।

**प्रत्युदाहरण– आसन्नकाले किमिति**। प्रकृत सूत्र में 'आसन्नकाले' (समीपकाल में) पद का ग्रहण होने से 'कंसं जघान किम्?' इस अनासन्नकालिक प्रयोग में प्रकृत सूत्र से लङ्, लिट् का प्रयोग नहीं होता। परोक्ष अर्थ में लिट् लकार ही होता है।

(९८३) **पद**– लट्, स्मे। **अनुवृत्ति**– परोक्षे, अनद्यतने। **विधिसूत्र**।

**मूलार्थ**–'स्म' के योग में लिट् का अपवाद लट् लकार होता है। यजति स्म इत्यादि।

**विमर्श**–पूर्ववत् 'परोक्षे' और 'अनद्यतने' पदों की यहाँ अनुवृत्ति आ रही है। तदनुसार–''परोक्ष अनद्यतन भूतकाल अर्थ में 'स्म' के योग में धातु से लट् लकार होता है।'' यह 'परोक्षे लिट्' से होने वाले लिट् का अपवाद है।

**उदाहरण**–'यजति स्म युधिष्ठिरः' (युधिष्ठिर ने यज्ञ किया)– यहाँ 'स्म' के योग में परोक्ष अनद्यतन भूत अर्थ में ✓ यज् से लट् लकार हुआ। यजति स्म।

(९८४) **पद**– अपरोक्षे, च। **अनुवृत्ति**– अनद्यतने, लट् स्मे। **विधिसूत्र**।

**मूलार्थ**– स्म के योग में अनद्यतनभूत अपरोक्षकालिक क्रियावाची धातु से लट् लकार होता है। एवं स्म पिता ब्रवीति।

**विमर्श**– यहाँ 'अनद्यतने लङ्' (३।२।१११) से 'अनद्यतने' तथा 'लट् स्मे' (९८३) की अनुवृत्ति आती है। अतः 'अपरोक्ष अनद्यतन भूतकाल में भी वर्तमान धातु से 'स्म' के योग में लट् लकार होता है।''

**उदाहरण**–एवं स्म पिता ब्रवीति (इस प्रकार पिता ने कहा था)–प्रकृत सूत्र से परोक्ष-भिन्न अनद्यतन भूतकाल में 'स्म' के योग में लट्।

**ननौ पृष्टप्रतिवचने ३।२।१२०** । ननावुपपदे पृष्टप्रतिवचने भूते लट् स्यात्। अकार्षीः किम्?। ननु करोमि भोः। **( ९८६ ) नन्वोर्विभाषा ३।२।१२१** । अकार्षीः किम्? न करोमि। नाकार्षम्। अहं नु करोमि। अहं न्वकार्षम्। **( ९८७ ) पुरि लुङ् चास्मे ३।२।१२२** । पुरायोगे भूतानद्यतने वा लुङ् स्याच्चाल्लट्, न तु स्मयोगे। पक्षे यथाप्राप्तम्। वसन्तीह पुरा छात्राः। अवात्सुः, अवसन्, ऊषुर्वा। अस्मे इति किम्? यजति स्म पुरा।

---

(९८५) **ननाविति**। भूतार्थे ननुप्रयोगे लट् स्यादित्यर्थः। **अकार्षीः किमिति** प्रश्नः, 'ननु करोमी'त्युत्तरम्। अत्र भूतार्थे 'ननु' इत्यस्य प्रयोगे लट्। अकार्षमित्यर्थः।

(९८६) **नन्वोरिति**। अत्र 'न, नु' इत्यनयोर्द्वन्द्वः। नशब्दे नुशब्दे च लट् वा स्यादित्यर्थः।

(९८७) **पुरि लुङिति**। अस्मे इतिच्छेदः पुरेत्याकारान्तमव्ययम्। पुरायोगे भूतानद्यतने वा लुङ् चाल्लडित्यर्थः।

---

(९८५) **पद**– ननौ, पृष्टप्रतिवचने। **अनुवृत्ति**– लट्। **विधिसूत्र**।

**मूलार्थ**– 'ननु' उपपदक भूतकालिक क्रियावाची धातु से पृष्टप्रतिवचन (प्रश्न का उत्तर) अर्थ में लट् लकार होता है। अकार्षीः किम्? ननु करोमि भोः।

**विमर्श**– पूर्वसूत्र (९८३) से 'लट्' पद की अनुवृत्ति आती है। अतः "'ननु' के योग में प्रत्युत्तर अर्थ में भूतकाल में वर्तमान धातु से लट् लकार होता है।"

**उदाहरण**– अकार्षीः कटं किम्? (क्या तुमने चटाई बना ली?)– इस प्रश्न के उत्तर में 'ननु करोमि भोः' (जी हाँ, बनायी है।) यह पृष्टप्रतिवचन हुआ। 'ननु' उपपद है, अतः प्रकृत सूत्र में लट् लकार हुआ–करोमि।

(९८६) **पद**– नन्वोः, विभाषा। **अनुवृत्ति**–पृष्टप्रतिवचने, लट्। **विधिसूत्र**।

**मूलार्थ**– पृष्टप्रतिवचन अर्थ में 'न' और 'नु' के योग में भूतकालिक क्रियावाची धातु से लट् लकार होता है। अकार्षीः किम्? न करोमि इत्यादि।

**विमर्श**– 'भूते' और 'धातोः' का अधिकार है। पूर्वसूत्र (९८५) से 'पृष्टप्रतिवचने' और 'लट् स्मे' (९८३) से 'लट्' की अनुवृत्ति आती है। तदनुसार– "प्रत्युत्तर अर्थ में 'न' तथा 'नु' उपपद रहते भूतकालिक धातु से विकल्प से लट् लकार होता है।"

**उदाहरण**– (१) अकार्षीः किम्? न करोमि। नाकार्षम् (क्या तुमने (कार्य) किया? हाँ, मैंने किया।)– यहाँ प्रत्युत्तर अर्थ में 'न' उपपद रहते ✓ कृ से प्रकृत सूत्र द्वारा विकल्प से लट् लकार–न करोमि। पक्ष में लुङ्–न अकार्षम्। (२) 'अहं नु करोमि, अहं नु अकार्षम्'– यहाँ 'नु' के उपपद रहते विकल्प से उक्त अर्थ में लट्।

(९८७) **पद**–पुरि, लुङ्, च, अस्मे। **अनुवृत्ति**–विभाषा, लट्। **विधिसूत्र**।

**मूलार्थ**– 'पुरा' के योग में अनद्यतन भूतकालिक क्रियावाची धातु से विकल्प से लुङ् लकार होता है। चकार से लट् भी होता है, किन्तु 'स्म' के योग में नहीं होता।

**विमर्श**– पूर्वसूत्र (९८६) से 'विभाषा' और 'लट् स्मे' (९८३) से लट् की अनुवृत्ति आती है। पूर्ववत् 'भूते' और 'धातोः' का अधिकार है। अतः "(अस्मे) = 'स्म' शब्द से रहित 'पुरा' पद के उपपद रहते अनद्यतन भूतकाल में धातु से लुङ् विकल्प से होता है। चकार से लट् भी होता है।

**उदाहरण**– वसन्तीह पुरा छात्राः। अवात्सुः, अवसन् ऊषुर्वा (यहाँ पहले छात्र रहते थे।)– प्रकृत

'भविष्यती'त्यनुवर्तमाने-( ९८८ ) **यावत्पुरानिपातयोर्लट्** ३।३।४ । अनयोरुपपदयोर्भविष्यति लट् स्यात्। यावद् भुङ्क्ते। पुरा भुङ्क्ते। निपातयोः किम्? यावद्दास्यते तावद्भोक्ष्यते। करणभूतया-पुरा यास्यति। ( ९८९ ) **विभाषा कदाकर्ह्योः** ३।३।५ । कदाकर्ह्योरुपपदयोर्भविष्यति लट् वा स्यात्। कदा कर्हि वा भुङ्क्ते, भोक्ष्यते, भोक्ता वा। ( ९९० ) **वर्तमानसामीप्ये वर्तमानवद्वा** ३।३।१३१ । वर्तमाने ये

(९८८) **यावदिति**। अनयोर्निपातयोर्योगे भविष्यदर्थे लट् स्यादित्यर्थः। **'यावद्भुङ्क्ते'** -अत्र यावद्योगे भविष्यति काले लट्प्रयोगः।

(९८९) **विभाषेति**। अत्र 'भविष्यति' इति लृट् इति चानुवर्तते। अत आह- **कदाकर्ह्योरिति। कदा कर्हि वा भुङ्क्ते, भोक्ष्यते भोक्ता वेति**। अत्र 'कदा, कर्हि' एतयोर्योगे 'विभाषा कदाकर्ह्योः' इत्यनेन विकल्पेन लटि 'भुङ्क्ते' इति। पक्षे लुट्लृटौ 'भोक्ता, भोक्ष्यते' इति।

(९९०) **वर्तमानसामीप्य इति**। समीपमेव सामीप्यम्। स्वार्थे ष्यञ्। 'वर्तमाने लट्'

सूत्र से विकल्प से लुङ्-अवात्सुः। चकार से लट्-वसन्ति। लुङ् के अभाव पक्ष में यथाप्राप्त लङ् और लिट्-अवसन्, ऊषुः।

**प्रत्युदाहरण- अस्म इति**। प्रकृत सूत्र में 'अस्मे' पद का ग्रहण होने से 'स्म' पद से रहित 'पुरा' के योग में ही विकल्प से लुङ् होता है। अतः 'यजति स्म पुरा' में लुङ् नहीं हुआ। 'लट् स्मे' से लट् होता है।

(९८८) **पद-** यावत्पुरानिपातयोः, लट्। **अनुवृत्ति-** भविष्यति। **विधिसूत्र**।

**मूलार्थ-** 'यावत्' और 'पुरा' निपातों के योग में धातु से भविष्यत् अर्थ में लट् लकार होता है। यावद् भुङ्क्ते। पुरा भुङ्क्ते इत्यादि।

**विमर्श-** प्रकृत सूत्र में 'भविष्यति गम्यादयः' (३।३।३) से 'भविष्यति' की अनुवृत्ति आती है। 'धातोः' का अधिकार है। तदनुसार-''यावत् और पुरा निपात के उपपद रहते भविष्यत् काल में धातु से लट् लकार होता है।''

**उदाहरण-** (१) यावद् भुङ्क्ते (जितना खायेगा)- प्रकृत सूत्र से 'यावत्' के योग में भविष्यत् अर्थ में लट्-भुङ्क्ते। (२) पुरा भुङ्क्ते (पहले खायेगा)-पुरा के योग में लट्।

**प्रत्युदाहरण-निपातयोः किमिति-** प्रकृत सूत्र में 'यावत्पुरानिपातयोः' का ग्रहण होने से इन निपातों से भिन्न के योग में लट् लकार नहीं होता। यथा-यावद्दास्यते तावद् भोक्ष्यते। करण तृतीयान्त 'पुरा' के योग में भी लट् नहीं होता-'पुरा यास्यति' (लृट्)।

(९८९) **पद-** विभाषा, कदाकर्ह्योः। **अनुवृत्ति-**लट्, भविष्यति। **विधिसूत्र**।

**मूलार्थ-** 'कदा' और 'कर्हि' के योग में भविष्यत् अर्थ में धातु से लट् लकार विकल्प से होता है। कदा कर्हि वा भुङ्क्ते, भोक्ष्यते भोक्ता वा।

**विमर्श-** पूर्वसूत्र (९८८) से 'लट्' तथा 'भविष्यति गम्यादयः' (३।३।३) से 'भविष्यति' की अनुवृत्ति आ रही है। 'धातोः' का अधिकार है। तदनुसार-''यदि कदा और कर्हि उपपद हों तो धातु से भविष्यत् काल में विकल्प से लट् लकार होता है।''

**उदाहरण-** कदा कर्हि वा भुङ्क्ते (कब खायेगा?)-यहाँ 'विभाषा कदाकर्ह्योः' से विकल्प से लट्-भुङ्क्ते। लट् के अभावपक्ष में लृट् तथा लुट्-भोक्ष्यते, भोक्ता।

(९९०) **पद-** वर्तमानसामीप्ये, वर्तमानवत्, वा। **विधिसूत्र**।

**प्रत्यया उक्तास्ते वर्तमानसमीपे भूते भविष्यति च वा स्युः। कदा आगतोऽसि? अयमागच्छामि, आगमं वा। कदा गमिष्यसि? एष गच्छामि गमिष्यामि वा। (९९१) आशंसायां भूतवच्च ३।३।१३२ । भविष्यत्काले भूतवद्वर्तमानवच्च प्रत्यया वा स्युराशंसायाम्। देवश्चेदवर्षीत्, वर्षति वर्षिष्यति वा धान्यमवाप्स्म, वपामो वप्स्यामो वा। (९९२) क्षिप्रवचने लृट् ३।३।१३३ । क्षिप्रपर्याये उपपदे पूर्वविषये लृट् स्यात्।**

---

इत्यारभ्य आपादसमाप्तेः 'उणादयो बहुलम्' इति तृतीयपदादिमसूत्रात् प्राक् वर्तमानाधिकारः। अस्मिन्नधिकारे येन विशेषणेन याभ्यः प्रकृतिभ्यो वर्तमाने प्रत्यया विहिताः, ते सर्वे तेनैव विशेषणेन ताभ्यः प्रकृतिभ्यो वर्तमानसमीपकाले, भूते भविष्यति च वा भवन्तीत्यर्थः।

(९९१) **आशंसायामिति**। अप्राप्तस्य प्रियस्य प्राप्तमिच्छा आशंसा। आशंसायां वर्तमानत्वेऽपि तद्विषयस्य भविष्यत्कालसम्बन्धाद्भविष्यत्काल इत्युक्तम्। अत आह– **भविष्यत्काल इत्यादिना।**

(९९२) **क्षिप्रवचन इति**। सूत्रे वचनग्रहणात्क्षिप्रपर्याये इति लभ्यते। **पूर्वविषय इति**। आशंसायामित्यर्थः।

---

**मूलार्थ**–वर्तमानकाल में जो प्रत्यय कहे गये हैं, वे वर्तमान के समीप भूत और वर्तमान के समीप भविष्यत् अर्थ में विकल्प से होते हैं। कदा आगतोऽसि? (कब आये?) अयमागच्छामि आगमं वा (अभी आया हूँ) इत्यादि।

**विमर्श**–'धातोः' का अधिकार है। अतः ''वर्तमानकाल में होने वाले प्रत्यय वर्तमान-समीप (निकट) भूत और भविष्यत्काल में भी विकल्प से होते हैं।''

**उदाहरण**– (१) कदा आगतोऽसि? (कब आये?) अयमागच्छामि आगमं वा (अभी आया हूँ)– यहाँ वर्तमान-समीप भूतकाल में प्रकृत सूत्र (९९०) से विकल्प से आ + ✓ गम् से लट् – आगच्छामि। पक्ष में भूतकाल में लङ्–आगमम्। (२) कदा गमिष्यसि? (कब जाओगे?) एष गच्छामि गमिष्यामि वा (अभी जाऊँगा)– यहाँ निकट भविष्यत् काल में विकल्प से लट्–गच्छामि। पक्ष में लृट्–गमिष्यामि।

(९९१) **पद**– आशंसायाम्, भूतवत्, च। **अनुवृत्ति**– वर्तमानवद्वा। **विधिसूत्र।**

**मूलार्थ**– आशंसा (अप्राप्त की प्राप्ति हेतु इच्छा) अर्थ गम्यमान रहते भविष्यत् काल में भूतवत् और वर्तमानवत् प्रत्यय विकल्प से होते हैं। देवश्चेदवर्षीत् वर्षति वर्षिष्यति वा धान्यमवाप्स्म, वपामो वप्स्यामो वा।

**विमर्श**–सूत्रार्थ की स्पष्टता के लिए पूर्वसूत्र (९९०) से 'वर्तमानवद्वा' की अनुवृत्ति आती है। अतः ''आशंसा अर्थ गम्यमान (प्रतीयमान) होने पर धातु से भविष्यत् काल में भूतकाल के समान तथा वर्तमानकाल के समान भी प्रत्यय विकल्प से होते हैं।'' अप्राप्त प्रिय वस्तु के प्राप्त करने की इच्छा को आशंसा कहते हैं।

**उदाहरण**– देवश्चेदवर्षीत्, वर्षति वर्षिष्यति वा धान्यमवाप्स्म वपामो वप्स्यामो वा (यदि देव वर्षा करेंगे तो धान बोयेंगे।)– यहाँ आशंसा अर्थ गम्यमान होने पर 'आशंसायां भूतवच्च' से भविष्यत् अर्थ में विकल्प से भूतवत्, चकार से वर्तमानवत् प्रत्यय होने पर–अवर्षीत्, वर्षति। पक्ष में–वर्षिष्यति अवाप्स्म, वपामः तथा वप्स्यामः।

(९९२) **पद**– क्षिप्रवचने, लृट्। **अनुवृत्ति**– आशंसायाम्। **विधिसूत्र।**

वृष्टिश्चेत्क्षिप्रमाशु त्वरितं वा आयास्यति, शीघ्रं धान्यं वप्स्यामः। **(९९३) आशंसावचने लिङ् ३।३।१३४ ।** आशंसावाचिन्युपपदे भविष्यति लिङ् स्यात्, न भूतवत्। गुरुश्चेदुपेयाद् आशंसे अधीयीय। **(९९४) हेतुहेतुमतोर्लिङ् ३।३।१५६ ।** भविष्यत्यर्थे हेतुहेतुमतोर्लिङ् वा स्यात्। कृष्णं नमेच्चेत्सुखं यायात्। कृष्णं नंस्यति चेत्सुखं यास्यति। * भविष्यत्येवेष्यते *। नेह–हन्तीति पलायते **(९९५) इच्छार्थेषु**

---

(९९३) **आशंसावचन इति।** आशंसायाः प्रतीच्छाया भूते असम्भवात् भविष्यतीति लभ्यते। तदाह- **आशंसावाचिनीति।** 'उपेयात्, अधीयीय' इत्यत्र लिङिति भावः।

(९९४) **हेतुहेतुमतोरिति।** कार्यकारणभावे द्योत्ये भविष्यत्यर्थे वा लिङ् स्यादित्यर्थः। **कृष्णं नंस्यति चेत्सुखं यास्यति-** अत्र कृष्णनतिः सुखप्राप्तौ हेतुः। अतः 'हेतुहेतुमतोर्लिङ्' इत्यनेन विभाषया लिङ्–नमेत्, यायादिति। पक्षे लृट्–नंस्यति, यास्यतीति।

---

**मूलार्थ–** आशंसा अर्थ गम्यमान हो तो क्षिप्र (शीघ्र) वाचक पद के उपपद रहने पर भविष्यत् काल में लृट् लकार होता है।

**विमर्श–** पूर्वसूत्र (९९१) से 'आशंसायाम्' पद की अनुवृत्ति आती है। 'धातोः' का अधिकार है। तदनुसार- ''यदि शीघ्रवाची पद उपपद हों तो आशंसा अर्थ गम्यमान होने पर धातु से लृट् लकार होता है।''

**उदाहरण–**वृष्टिश्चेत्क्षिप्रमाशु त्वरितं वा आयास्यति, शीघ्रं धान्यं वप्स्यामः (यदि वर्षा शीघ्र आयेगी तो हम शीघ्र धान बोयेंगे।)- यहाँ 'शीघ्र'वाची 'क्षिप्र', आशु और त्वरित पदों के उपपद रहते आशंसा अर्थ में लृट्–आयास्यति, वप्स्यामः।

(९९३) **पद–** आशंसावचने, लिङ्। **विधिसूत्र।**

**मूलार्थ–** आशंसावाचक उपपद रहने पर भविष्यत्काल में लिङ् लकार होता है। भूतवत् प्रत्यय नहीं होता।

**विमर्श–** 'धातोः' का अधिकार है। अतः ''आशंसावाची शब्द के उपपद रहते धातु से लिङ् लकार होता है।'' आशंसा के भविष्यत्काल–विषयक होने से प्रकृत सूत्र 'आशंसायां भूतवच्च' का अपवाद है।

**उदाहरण–** गुरुश्चेदुपेयाद् आशंसे अधीयीय (गुरुजी यदि आ जायेंगे तो आशा है- पढेंगे।)- यहाँ लिङ् लकार का प्रयोग हुआ–उपेयात्, अधीयीय।

(९९४) **पद–** हेतुहेतुमतोः, लिङ्। **अनुवृत्ति–** विभाषा। **विधिसूत्र।**

**मूलार्थ–** हेतुहेतुमद्भाव (कार्य-कारणभाव) अर्थ गम्यमान हो तो भविष्यत्काल में विकल्प से लिङ् लकार होता है। कृष्णं नमेच्चेत्सुखं यायात् इत्यादि।

**विमर्श–** 'विभाषा धातौ०' (३।३।१५५) से 'विभाषा' पद की यहाँ अनुवृत्ति आती है। तदनुसार- ''हेतुहेतुमत् अर्थ में वर्तमान धातु से लिङ् लकार विकल्प से होता है।''

**उदाहरण–** कृष्णं नमेच्चत् सुखं यायात्' (यदि कृष्ण को नमन करेगा तो सुख पावेगा)- यहाँ कार्य-कारणभाव अर्थ में विकल्प से लिङ्- नमेत्, यायात्। पक्ष में लृट्–कृष्णं नंस्यति चेत् सुखं यास्यति।

**भविष्यत्येवेति–** उक्त अर्थ में भविष्यत्काल में ही लिङ् होता है। अतः 'हन्तीति पलायते' (मारता है, अतः भागता है) में लिङ् नहीं होता।

**लिङ्लोटौ ३।३।१५७** । इच्छार्थेषूपपदेषु धातोर्लिङ् लोटौ वा स्तः। इच्छामि भुञ्जीत भुङ्क्तां वा भवान्। एवं कामये, प्रार्थये। * कामप्रवेदने इति वक्तव्यम् *। नेह—इच्छन्करोति।
**( ९९६ ) लिङ् च ३।३।१५९** । समानकर्तृकेषु इच्छार्थेषु उपपदेषु धातोर्लिङ् स्यात्। भुञ्जीयेतीच्छति। 'विधिनिमन्त्रणे'ति लिङ्। विधिः प्रेरणम्, भृत्यादेर्निकृष्टस्य प्रवर्तनम्। यजेत। निमन्त्रणं नियोगकरणम्, आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम्। इह भुञ्जीत। आमन्त्रणं कामचारानुज्ञा। इहाऽऽसीत। अधीष्टः—सत्कारपूर्वको व्यापारः।

---

(९९५) **इच्छार्थेष्विति**। 'विभाषा धातावि'त्यतः विभाषेत्यनुवर्तते। तदाह—**इच्छार्थेषूपपदेष्विति**। सर्वलकाराणामपवादः। 'लिङ् चे'त्यनेन समानकर्तृकेषु लिङो विधानादिह लिङ्-लोटावसमानकर्तृकेषु भवतः।

(९९६) **लिङ् चेति**। समानकर्तृकेष्विति इच्छार्थेष्विति चानुवर्तते। तदाह—**समानेत्यादि**। **भुञ्जीयेतीच्छतीति**। भोक्तुरेव इषिकर्तृत्वात्समानकर्तृत्वम्। अतः 'लिङ् चे'त्यनेन लिङ् भवति। **कामप्रवेदन इति**। परम्प्रति स्वकीयाभिप्रायाविष्करणं कामप्रवेदनम्।

---

(९९५) **पद**— इच्छार्थेषु, लिङ्लोटौ। **विधिसूत्र**।

**मूलार्थ**— इच्छार्थक शब्द के उपपद रहते विकल्प से लिङ् और लोट् लकार होते हैं। इच्छामि भुञ्जीत भुङ्क्तां वा भवान्। इत्यादि।

**विमर्श**— सूत्रार्थ स्पष्ट है।

**उदाहरण**— इच्छामि भुञ्जीत, भुङ्क्तां वा भवान् (मैं चाहता हूँ कि आप भोजन करें)—यहाँ प्रकृत सूत्र (९९५) से विकल्प से लिङ्—भुञ्जीत, लोट्—भुङ्क्ताम्। इसी प्रकार 'कामये' और 'प्रार्थये' उपपद रहने पर भी लिङ्, लोट् होते हैं।

**(वा०)**— 'कामप्रवेदन (दूसरों के प्रति अपने अभिप्राय का स्पष्टीकरण) अर्थ में ही लिङ्-लोट् होते हैं' ऐसा कहना चाहिए।)

**प्रत्युदाहरण—'इच्छन्करोति'** (इच्छा करता हुआ करता है) में कामप्रवेदन अर्थ न होने से लिङ्-लोट् का प्रयोग नहीं होता।

(९९६) **पद**— लिङ् च। **अनुवृत्ति**—समानकर्तृकेषु, इच्छार्थेषु। **विधिसूत्र**।

**मूलार्थ**— समानकर्तृक इच्छार्थक धातुओं के उपपद रहते लिङ् लकार होता है। 'भुञ्जीये'तीच्छति।

**विमर्श**— प्रकृत सूत्र में 'समानकर्तृकेषु तुमुन्' (३।३।१५८) से 'समानकर्तृकेषु' तथा (९९५) से 'इच्छार्थेषु' पदों की अनुवृत्ति आती है। तदनुसार—''समानकर्तृक इच्छार्थक धातुओं के उपपद रहते लिङ् लकार होता है।''

**उदाहरण**— 'भुञ्जीये'तीच्छति' (खाऊँ, ऐसा चाहता है)— यहाँ प्रकृत सूत्र (९९६) से लिङ् हुआ—'भुञ्जीय'।

**विधिनिमन्त्रणेति**— विधि, निमन्त्रण, आमन्त्रण, अधीष्ट, सम्प्रश्न और प्रार्थना अर्थों में धातु से लिङ् लकार होता है।

(१) **विधि**— विधि का अर्थ 'प्रेरणा' (अपने से छोटे भृत्य, शिष्य, पुत्र आदि को किसी कार्य में प्रवृत्त करना) है। यथा—यजेत (यज्ञ करो)—लिङ् लकार।

(२) **निमन्त्रण**— निमन्त्रण का अर्थ है— 'नियोगकरण'। नियोग = प्रवृत्ति का करण अर्थात्

पुत्रमध्यापयेत्। सम्प्रश्नः–सम्प्रधारणम्। किं भो वेदमधीयीय उत तर्कम्? प्रार्थनं-याच्ञा। भो भोजनं लभेय। एवं लोट्। **(९९७) प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ३।३।१६३।** एष्वर्थेषु कृत्यप्रत्ययाः स्युः। चाल्लोट्। प्रैषो विधिः। अतिसर्गः– कामचारानुज्ञा। भवता यष्टव्यम्। चाल्लोटोऽनुकर्षणं प्राप्तकालार्थम्। भवान् यजताम्। **(९९८) अर्हे कृत्यतृचश्च ३।३।१६९।** अर्हे कृत्यप्रत्ययः स्यात्तृच्प्रत्ययश्च। चाल्लिङ्।

---

(९९७) **प्रैषातिसर्गेति**। विधिग्रहणे कर्तव्ये प्रैषग्रहणं शिष्यबुद्धिवैशद्यार्थम्। 'कृत्याः' इत्यनेन तदधिकारस्थाः प्रत्यया उपलक्ष्यन्ते। चकाराल्लोट् भवतीति।

(९९८) **अर्हे इति**। योग्ये कर्तरि गम्ये कृत्यप्रत्ययस्तृच्प्रत्ययश्च भवति, चकाराल्लिङपि भवतीत्यर्थः। त्वं कन्यां वहेरिति। कन्या विवाहस्य योग्येत्यर्थः।

---

जनक। आवश्यक श्राद्ध के भोजन आदि में दौहित्र (कन्या के पुत्र) आदि की प्रवृत्ति करना। इस प्रकार की प्रेरणा को 'आग्रह' कहते हैं। यथा– भो भागिनेय! इह भुञ्जीत (लिङ्)।

(३) **आमन्त्रण**–आमन्त्रण का अर्थ है–'कामचारानुज्ञा'। अर्थात् आमन्त्रण उस प्रेरणा को कहते हैं जिसमें निमन्त्रण से कम बल रहता है। कामचार = प्रेर्यमाण व्यक्ति अपनी इच्छा से कार्य करता है। अतः आमन्त्रित व्यक्ति जिस कार्य के लिए आमन्त्रित किया गया है, उसमें सम्मिलित होना या न होना उसकी इच्छा पर निर्भर होता है। यथा–इहाऽऽसीत।

(४) **अधीष्ट**– अधीष्ट का अर्थ है– 'सत्कारपूर्वक किसी कार्य में प्रवृत्त होना'। जैसे किसी आचार्य से सम्मानपूर्वक कहा जाता है–'भवान् मम पुत्रमध्यापयेत्।'

(५) **सम्प्रश्न**– 'सम्प्रधारणं सम्प्रश्नः'। संप्रश्न में प्रेरणा के साथ परामर्श का भाव भी रहता है। सम्प्रधारणम् अर्थात् निश्चय के लिए कहना। यथा–किं भो वेदमधीयीय, उत तर्कम्? (मैं वेद पढ़ूँ या न्यायशास्त्र?)

(६) **प्रार्थना**–प्रार्थना अपने से बड़ों से की जाती है। इसमें याचना का भाव रहता है। यथा– भो भोजनं लभेय (भोजन चाहिए)।

इस प्रकार उक्त विधि आदि अर्थों में लिङ् और लोट् दोनों लकारों का प्रयोग होता है।

(९९७) **पद**– प्रैषातिसर्गप्राप्तकालेषु, कृत्याः, च। **अनुवृत्ति**–लोट्। **विधिसूत्र**।

**मूलार्थ**– प्रैष (विधि), अतिसर्ग (कामचारानुज्ञा) और प्राप्तकाल अर्थों में कृत्य प्रत्यय होते हैं और लोट् लकार भी होता है। 'भवता यष्टव्यम्' इत्यादि।

**विमर्श**– प्रकृत सूत्र में चकारात् 'लोट् च' (३।३।१६२) से 'लोट्' पद की अनुवृत्ति आती है। तदनुसार–''प्रैष (= प्रेरणा देना), अतिसर्ग (= कामचारपूर्वक आज्ञा देना) और प्राप्तकाल (= समय आ जाना) अर्थों में धातु से कृत्यसंज्ञक प्रत्यय होते हैं तथा लोट् लकार भी होता है।''

**उदाहरण**– 'भवता यष्टव्यम्' (आपको यज्ञ करना चाहिए)–यज् + तव्यत् (कृत्य प्रत्यय) –सूत्रस्थ चकार से प्राप्तकाल अर्थ के लिए लोट् की अनुवृत्ति आती है। अतः 'भवान् यजताम्' (आप यज्ञ करें) में लोट् का प्रयोग हुआ।

(९९८) **पद**– अर्हेः, कृत्यतृचः च। **अनुवृत्ति**– लिङ्। **विधिसूत्र**।

**मूलार्थ**– 'अर्ह' (योग्य) अर्थ में कृत्य प्रत्यय और तृच् प्रत्यय होता है और लिङ् लकार का प्रयोग भी होता है। त्वं कन्यां वहेः।

त्वं कन्यां वहेः। ( ९९९ ) **शकि लिङ् च ३।३।१७२** । शक्तौ लिङ् स्यात् चात्कृत्याः। त्वं भारं वहेः। ( १००० ) **धातुसम्बन्धे प्रत्ययाः ३।४।१** । धात्वर्थानां सम्बन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः। तिङन्तवाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः। वसन्ददर्श। भूते लट्। अतीतवासकर्तृकर्तृकं दर्शनमित्यर्थः। सोमयाज्यस्य पुत्रो भविता। सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृकं भवनम्। ( १००१ )

---

(९९९) **शकि लिङ् चेति**। शक् इति भावे क्विबन्तम्। शक्यार्थे गम्ये लिङ् चात्कृत्या इत्यर्थः। **त्वं भारं वहेरिति**। वोढुं शक्त इत्यर्थः। अत्र 'वहेरि'त्यत्र लिङ्।

(१०००) **धातुसम्बन्ध इति**। धातुपदेनात्र धात्वर्थो लक्ष्यते। सम्बन्धस्य द्विनिष्ठत्वात् धात्वोः सम्बन्ध इति विग्रहः। तथा च धात्वर्थयोः सम्बन्धे सति प्रत्ययाः स्युरिति। कस्मिन्नर्थे इत्याकाङ्क्षायां काले इति गम्यते। '**वर्तमानसामीप्ये**' इति सूत्रे यस्मिन् काले ये प्रत्यया उक्तास्ते धात्वर्थयोः सम्बन्धे सति ततोऽन्यस्मिन्नपि काले स्युरित्यर्थः। तथा च '**वसन्ददर्श**' इत्यत्र लडादेशः भूतकालेऽपि शतृप्रत्ययः। **तिङन्तवाच्येति**। 'वसन्ददर्श' इत्यादौ तिङन्तवाच्या दर्शनादिक्रिया प्रधाना, वासादिक्रिया तु दर्शनादिक्रियार्थत्वाद् गुणभूता। अतः प्रधानभूतदर्शनादिक्रियानुसारेण गुणभूतवासादिक्रियावाचिभ्य एवेह कालान्तरेषु प्रत्यया विधीयन्त इत्यर्थः।

---

**विमर्श**– यहाँ 'लिङ् यदि' (३।३।१६८) से 'लिङ्' की अनुवृत्ति आती है। अतः ''योग्य कर्ता वाच्य हो तो धातु से कृत्यसंज्ञक तथा तृच् प्रत्यय होते हैं और चकार से लिङ् लकार भी होता है।''

**उदाहरण**– 'त्वं कन्यां वहेः'– यहाँ 'वहेः' में चकारात् लिङ् लकार हुआ।

(९९९) **पद**– शकि, लिङ्, च। **अनुवृत्ति**–कृत्याः। **विधिसूत्र**।

**मूलार्थ**– शक्य अर्थ में लिङ् और कृत्य प्रत्यय होते हैं।

**विमर्श**– 'कृत्याश्च' (३।३।१७१) से 'कृत्याः' पद की अनुवृत्ति आती है। तदनुसार– ''शक्यार्थ के गम्यमान होने पर धातु से लिङ् लकार होता है और कृत्यसंज्ञक प्रत्यय भी होते हैं।''

**उदाहरण**– 'त्वं भारं वहेः' (तुम भार वहन कर सकते हो)– यहाँ 'वहेः' में लिङ् लकार प्रकृत सूत्र से हुआ है।

(१०००) **पद**– धातुसम्बन्धे, प्रत्ययाः। **विधिसूत्र**।

**मूलार्थ**– धात्वर्थों का सम्बन्ध गम्यमान होने पर जो प्रत्यय जिस-जिस काल में कहे गये हैं, वे प्रत्यय उससे भिन्न काल में भी होते हैं। तिङन्तवाच्य क्रिया प्रधान रहेगी, तदनुसार गौण क्रियावाची धातु से उक्त से अतिरिक्ति काल में भी प्रत्यय होंगे। वसन्ददर्श। लट् इत्यादि।

**विमर्श**– 'धात्वोः सम्बन्धो धातुसम्बन्धः, तस्मिन्' विग्रह में षष्ठीतत्पुरुष समास है। 'धात्वर्थानाम्' में विषयगत बहुत्व का आरोप करके बहुवचन का प्रयोग है। तदनुसार–''दो धातुओं के अर्थ का सम्बन्ध होने पर भिन्न काल में विहित प्रत्यय भी कालान्तर में साधु होते हैं। तिङन्त धातु से वाच्य जो क्रिया उसके प्रधान होने पर गुणभूत क्रियावाचक धातु से भिन्न काल में भी प्रत्यय होते हैं।''

**उदाहरण**– (१) **वसन्ददर्श**–यहाँ भूतकाल में लट् हुआ। ''अतीतकालिक (भूतकालिक) वास का जो कर्ता, वह है कर्ता जिसका, ऐसा दर्शन'' अर्थ है। (२) **सोमयाज्यस्य पुत्रो भविता**– 'सोमयाजी' में 'करणे यजः' से णिनि प्रत्यय है। 'भविता' में ✓ भू से अनद्यतन भविष्यत्काल में लुट्, णिनि तथा लृट् भिन्नकालोक्त प्रत्यय हैं, जो प्रकृत सूत्र द्वारा साधु हैं। 'भविष्यत् काल में सोमयज्ञ करने वाला पुत्र उत्पन्न होगा' यह अर्थ है।

**क्रियासमभिहारे लोट्, लोटो हिस्वौ वा च तध्वमोः ३।४।२।** पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यात्। तस्य च हिस्वौ स्तः। तिङामपवादः। तौ च हिस्वौ क्रमेण परस्मैपदात्मनेपदसंज्ञौ स्तः, तिङ्संज्ञौ च। तध्वमोर्विषये तु हिस्वौ वा स्तः। पुरुषैकवचनसंज्ञे नानयोरतिदिश्येते, हिस्वविधानसामर्थ्यात्। तेन सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः कर्तरि, आत्मनेपदिभ्यः स्वो भावकर्मकर्तृषु। (१००२) **समुच्चयेऽन्यतरस्याम् ३।४।३।** अनेकक्रियासमुच्चये द्योत्ये प्रागुक्तं वा स्यात्। (१००३) **यथाविध्यनुप्रयोगः पूर्वस्मिन् ३।४।४।** आद्ये लोड्विधाने लोट्प्रकृतिभूत

---

(१००१) **क्रियासमभिहारेति।** पौनःपुन्यं भृशार्थश्च क्रियासमभिहारस्तस्मिन्द्योत्ये तध्वमोः परतो हिस्वावादेशावित्यर्थः।

(१००२) **समुच्चय इति।** समभिहार इति पदविरहितं 'क्रिया लोट् लोटो हिस्वौ वा च तध्वमोः' इति पूर्वसूत्रमनुवर्तते। क्रियेति लुप्तषष्ठीकं बहुवचनान्तं पदम्, तच्च 'समुच्चये' इत्यत्रान्वेति। तदाह–**अनेकक्रियासमुच्चय इति।**

(१००३) **यथाविधीति।** विधिमनतिक्रम्य यथाविधि। आद्ये = प्रथमेऽर्थात् क्रिया-समभिहारे इत्यादिसूत्रेण कृत इत्यर्थः।

---

(१००१) **पद–** क्रियासमभिहारे, लोट्, लोटः, हिस्वौ, वा, च, तध्वमोः। **अनुवृत्ति–**धातुसम्बन्धे। **विधिसूत्र।**

**मूलार्थ–** 'पौनःपुन्य' और 'भृशम्' अर्थ में धातु से सर्वलकारापवाद लोट् होता है। उस लोट् के स्थान में तिङापवाद 'हि' और 'स्व' आदेश होता है। 'हि' और 'स्व' की क्रमशः परस्मैपद और आत्मनेपद संज्ञा होती है और तिङ् संज्ञा भी होती है। किन्तु 'त' और 'ध्वम्' के विषय में 'हि' और 'स्व' विकल्प से होते हैं। यहाँ पुरुष और वचन का अतिदेश नहीं होता। अन्यथा हि-स्व विधान व्यर्थ हो जायेगा। आशय यह है कि सभी पुरुष और वचनों के विषय में परस्मैपदी धातुओं के कर्ता में 'हि' होगा तथा आत्मनेपदी धातुओं से भाव, कर्म और कर्ता में 'स्व' होगा।

**विमर्श–**क्रियायाः समभिहारः, तस्मिन् (ष०त०)– क्रिया का पौनःपुन्य (बारम्बार) और भृशम् (अतिशय) अर्थ गम्यमान हो तो सभी कालों में लोट् लकार होता है। उस लोट् के स्थान में (सभी पुरुषों व वचनों में) 'हि' और 'स्व' आदेश होते हैं तथा 'त' और 'ध्वम्' के विषय में लोट् के स्थान में 'हि' और 'स्व' आदेश विकल्प से होते हैं। यहाँ परस्मैपदी धातुओं के लोट् के स्थान में 'हि' तथा आत्मनेपदी धातुओं के लोट् के स्थान में 'स्व' आदेश होते हैं।

(१००२) **पद–** समुच्चये, अन्यतरस्याम्। **अनुवृत्ति–** लोटो हिस्वौ, लोट्, वा, च, तध्वमोः, धातुसम्बन्धे। **विधिसूत्र।**

**मूलार्थ–**अनेक क्रियाओं का समुच्चय द्योत्य होने पर पूर्वोक्त कार्य विकल्प से होते हैं।

**विमर्श–** पूर्वसूत्र (१००१) से 'लोट्, लोटो हिस्वौ, वा, च तध्वमोः' तथा 'धातुसम्बन्धे प्रत्ययाः' (१०००) से धातु- सम्बन्धे' की अनुवृत्ति आती है। तदनुसार–''समुच्चीयमान क्रियाओं को कहने वाली धातु से विकल्प से लोट् होता है और उस लोट् के स्थान में 'हि' और 'स्व' विकल्प से होते हैं; परन्तु त, ध्वम् के विषय में लोट् को विकल्प से हि, स्व आदेश होते हैं। पक्ष में त-ध्वम् ही श्रुतिगोचर होते हैं।''

(१००३) **पद–** यथाविधि, अनुप्रयोगः, पूर्वस्मिन्। **अनुवृत्ति–**धातोः। **विधिसूत्र।**

एव धातुरनुप्रयोज्यः। ( १००४ ) **समुच्चये सामान्यवचनस्य ३।४।५** । समुच्चये लोड्विधौ सामान्यार्थस्य धातोरनुप्रयोगः स्यात्। अनुप्रयोगाद्यथायथं लडादयस्तिबादयश्च। ततः संख्याकालयोः, पुरुषविशेषार्थस्य चाभिव्यक्तिः। * क्रियासमभिहारे द्वे वाच्ये *। याहि याहीति–याति। पुनः पुनरतिशयेन वा यानं ह्यन्तस्यार्थः। एककर्तृकं वर्तमानं यानं 'याती'त्यस्य। 'इति'शब्दस्तु अभेदान्वये तात्पर्यं ग्राहयति। एवं–यातः। यान्ति। यासि। याथः। याथ। यात यातेति यूयं याथ। याहि याहीत्ययासीत्। यास्यति वा। अधीष्वाधीष्वेत्यधीते। 'ध्वं'विषये तु पक्षे–'अधीध्वमधीध्वमि'ति यूयमधीध्वे। समुच्चये तु–सक्तून्पिब धानाः खादेत्यभ्यवहरति। अन्नं भुङ्क्ष्व दाधिकमास्वादस्वेति–अभ्यवहरते। तध्वमोस्तु–पिबत खादतेति–अभ्यवहरथ। भुङ्ग्ध्वमास्वादध्वमिति अभ्यवहरध्वे। पक्षे हिस्वौ। अत्र समुच्चीयमानविशेषाणामनुप्रयोगार्थेन सामान्येनाभेदान्वयः। पक्षे–सक्तून् पिबति। धानाः खादति। अन्नं भुङ्क्ते। दाधिकमास्वादते। एतेन–

''पुरीमवस्कन्द, लुनीहि नन्दनं, मुषाण रत्नानि हरामराङ्गनाः।
विगृह्य चक्रे नमुचिद्विषा बली, य इत्थमस्वास्थ्यमहर्दिवं दिवः''॥

---

(१००४) **समुच्चय इति**। उच्यत इति वचनः। समुच्चये सामान्यवचनस्य धातोरनुप्रयोगः कर्तव्य इत्यर्थः। अनुप्रयुज्यमानाद् धातोः लडादयस्तिबादयश्च। **क्रियेति**। क्रियासमभिहारे पौनःपुन्ये भृशार्थे च धातोर्द्वित्वं वाच्यमित्यर्थः। **एतेनेति**। 'समुच्चयेऽन्यतरस्याम्', 'समुच्चये सामान्यवचनस्ये'ति च सूत्रद्वयेन तदुदाहरणप्रदर्शनेन च 'पुरीमवस्कन्दे'त्यादि-माघकाव्यस्थं श्लोकं व्याख्यातमित्यर्थः। **पुरीमवस्कन्देति**। बली = रावणः, नमुचिद्विषा =

---

**मूलार्थ**– क्रियासमभिहार अर्थ में लोट् का विधान होने पर लोट्-प्रकृतिभूत धातु का ही अनुप्रयोग होता है।

**विमर्श**– पूर्व के लोट्-विषयक 'क्रियासमभिहारे' सूत्र में जिस धातु से लोट् का विधान किया गया हो उसी धातु का अनुप्रयोग होता है।

(१००४) **पद**– समुच्चये, सामान्यवचनस्य। **अनुवृत्ति**–अनुप्रयोगः। **विधिसूत्र**।

**मूलार्थ**– 'समुच्चय' अर्थ में लोट् का विधान होने पर सामान्यार्थवाची धातु का अनुप्रयोग होता है। अनुप्रयुज्यमान धातु से यथाप्राप्त लट् और तिप् आदि होते हैं। उन्हीं से संख्या और काल की तथा पुरुष-विशेष की प्रतीति होती है।

**( वा० )**– क्रियासमभिहार में लोडन्त को द्वित्व होता है, ऐसा कहना चाहिए। याहि याहीति याति इत्यादि।

**विमर्श**– पूर्वसूत्र (१००३) से 'अनुप्रयोगः' की अनुवृत्ति आ रही है। 'धातोः' का अधिकार है। अतः– ''जहाँ समुच्चय अर्थ में लोट् का विधान होता है, वहाँ सामान्यार्थक धातु का अनुप्रयोग होता है। अनुप्रयोग के धातु से यथायोग्य लट् आदि एवं तिप् आदि होते हैं। उनसे संख्या, काल और पुरुष के विशेषार्थ की प्रतीति होती है''।

**( वा० )**– क्रियासमभिहार अर्थात् पौनःपुन्य और भृशम् अर्थ के द्योत्य होने पर लोडन्त धातु को द्वित्व होता है।

**उदाहरण**– (१) 'पुनः पुनः अतिशयेन वा याति' विग्रह में– ✓ या से समुच्चय अर्थ में लोट् (१००३), म०पु०ए०व० – याहि (वा० से द्वित्व)– याहि याहि (✓ या का अनुप्रयोग – 'समुच्चये०',

**इति (माघपद्यं) व्याख्यातम्। अवस्कन्दनलवनादिरूपा भूतानद्यतनपरीक्षा एककर्तृका अस्वास्थ्यक्रियेत्यर्थात्। 'इह पुनः पुनश्चस्कन्देत्यादिरर्थ' इति व्याख्यानं भ्रममूलकमेव, द्वितीयसूत्रे क्रियासमभिहारे इत्यस्याननुवृत्तेश्च। 'पुरीमवस्कन्दे'त्यादि मध्यमपुरुषैकवचनमित्यपि केषाञ्चिद् भ्रम एव, पुरुषवचनसंज्ञे इह नेत्युक्तत्वात्।**

इति लकारार्थप्रकरणम् ॥

। इति तिङन्तप्रकरणम् ।



---

इन्द्रेण सह, विगृह्य = विरोधं प्राप्य, पुर्याः = अमरावत्याः, अवस्कन्दनम् = पीडनम्, नन्दनवनस्य लवनम् = कर्त्तनम्, रत्नानां मोषणम्, अमराङ्गनानां हरणमित्येवम्प्रकारेण अहर्दिवं = अहन्यहनि, दिवः = स्वर्गस्य अस्वास्थ्यं चक्रे = कृतवान्नित्यर्थः। फलितमाह- **अवस्कन्दनलवनादिरूपेति।**

**इति लकारार्थप्रकरणम् ।**

**तिङन्तप्रक्रिया समाप्ता ।**



---

लट् प्र०पु०ए०व०) – **याति। याहि याहि इति याति।** 'पुनः पुनः अतिशयेन यानम्' यह ह्यन्त का ही अर्थ है। 'एककर्तृकं वर्तमानकालिकं यानम्' यह याति का अर्थ है। 'इति' पद अभेदान्वय में तात्पर्य का ग्राहक है। इसी प्रकार- यातः। यान्ति। यासि। याथः। याथ आदि। याहि याहीति-आसीत् (लुङ्)। यास्यति (लृट्)। (४) अधीष्व अधीष्वेति अधीते (लट्)। (३) ध्वम् पक्ष में अधीध्वमधीध्वमिति यूयमधीध्वे। समुच्चय विषय में इस प्रकार रूप बनते है-(५) सक्तून् पिब धाना खाद इति अभ्यवहरति (सत्तू पीता है, धान खाता है, यह सब खाता है)। (६) अन्नं भुङ्क्ष्व दाधिकमास्वादस्वेति अभ्यवहरते (अन्न खाता है, दही से बने पदार्थ का आस्वादन करता है, यह सब खाता है)। (७) त, ध्वम् का उदाहरण- पिबत खादत इति अभ्यवहरथ। भुङ्ध्वमास्वादध्वमिति-अभ्यवहरध्वे। पक्ष में हि एवं स्व आदेश होते हैं। यहाँ समुच्चीयमान विशेष का अनुप्रयोगार्थ सामान्य के साथ अभेदान्वय होता है। पक्ष में (विकल्प से लोट् विधान होने से) – सक्तून् पिबति, धाना खादति, अन्नं भुङ्क्ते, दाधिकमास्वादते इत्यादि। समुच्चय के विषय में शिशुपालवध का श्लोक उदाहरण के रूप में प्रस्तुत किया जा रहा है-

**पुरीमवस्कन्देति**-(प्रबली रावण ने इन्द्र से बैर कर स्वर्ग (अमरावती) को घेर लिया। नन्दन वन को काट दिया, रत्नों को चुरा लिया और देवाङ्गनाओं का भी हरण कर लिया। इस प्रकार उसने दिन-रात स्वर्ग को अस्वस्थ (अस्त-व्यस्त) कर डाला।)। यहाँ 'अवस्कन्दन-लवनादिरूपा भूतानद्यतन परोक्षा एककर्तृका अस्वास्थ्यक्रिया' यह अर्थ है। द्वितीय सूत्र (समुच्चये०) में 'क्रियासमभिहार' की अनुवृत्ति नहीं है। अतः 'पुनः पुनः चस्कन्द' यह व्याख्या उचित नहीं है। 'पुरीमवस्कन्द' में मध्यमपुरुष एकवचन की व्याख्या किसी ने की है, वह भी भ्रममूलक ही है। क्योंकि पुरुष एवं वचन संज्ञा नहीं होते, ऐसा पूर्व में कहा जा चुका है।

**लकारार्थ-प्रकरण समाप्त ।**

**तिङन्तप्रक्रिया समाप्त ।**



# अथ पूर्वकृदन्तप्रकरणम्
## तत्र कृदन्ते कृत्यप्रकरणम्

**( १००५ ) धातोः ३।१।९१** । आतृतीयाध्यायान्तं ये प्रत्ययास्ते धातोः परे स्युः। 'कृदतिङि'ति कृत्संज्ञा। **( १००६ ) वाऽसरूपोऽस्त्रियाम् ३।१।९४** । अस्मिन् धात्वधिकारेऽसरूपोऽपवादः प्रत्यय उत्सर्गस्य बाधको वा स्यात्, स्त्र्यधिकारोक्तं विना।

---

तिङन्तप्रकरणनिरूपणानन्तरं कृत्प्रत्ययान्निरूपयिष्यन्नधिकारविशेषमाह–

(१००५) **धातोरिति**। आतृतीयाध्यायपरिसमाप्तेरधिकारः। तेन सर्वेऽपि कृत्प्रत्यया धातोः परे भवन्ति।

'प्रकल्प्य चापवादविषयं तत उत्सर्गः प्रवर्त्तते' इति न्यायमनुसृत्य अपवादः = विशेषविधिः, उत्सर्गस्य = सामान्यविधेः, सर्वत्र नित्यं बाधको भवति। तथैवात्र अपवादेनोत्सर्गस्य नित्यं बाधे प्राप्ते व्यवस्थामाह–

(१००६) **वाऽसरूप इति**। परिभाषासूत्रमिदम्। 'स्त्रियाम्' इत्यधिकारविहितप्रत्ययं वर्जयित्वा 'धातोः' इत्यधिकारेऽसमानोऽपवादप्रत्यय उत्सर्गस्य विकल्पेन बाधको भवतीत्यर्थः।

---

भ्वादि प्रकरण से लेकर लकारार्थ-पर्यन्त तिङन्त-प्रकरण का निरूपण किया गया। अब कृत्प्रत्ययों का विवेचन करने से पूर्व प्रसङ्गवश कृत्यप्रत्ययों का निरूपण किया जा रहा है।

(१००५) **पद**– धातोः। **अधिकारसूत्र**।

**मूलार्थ**– प्रकृत सूत्र से तृतीय अध्याय की समाप्ति पर्यन्त 'धातोः' का अधिकार है। अतः वक्ष्यमाण तव्यत् आदि प्रत्यय धातु से परे होते हैं। इस 'धातोः' के अधिकार में तिङ्-भिन्न प्रत्ययों की कृत्संज्ञा होती है। (सू०–'कृदतिङ्' ३।१।९३)

(१००६) **पद**– वा, असरूपः, अस्त्रियाम्। **परिभाषासूत्र**।

**मूलार्थ**– 'धातोः' इस सूत्र के अधिकार में असरूप अपवाद प्रत्यय उत्सर्ग का विकल्प से बाधक होता है; 'स्त्रियाम्' इस अधिकार को छोड़कर।

**विमर्श**– यहाँ 'धातोः' का अधिकार है। प्रकृत सूत्र परिभाषासूत्र है। 'प्रकल्प्य चापवादविषयं तत उत्सर्गः प्रवर्तते' इस न्याय के अनुसार अपवाद (विशेष विधि) उत्सर्ग (सामान्य विधि) का नित्य बाधक होता है। तदनुसार प्रस्तुत प्रकरण में भी अपवाद द्वारा उत्सर्ग का नित्य बाध प्राप्त होने पर प्रकृत परिभाषासूत्र से व्यवस्था की जाती है कि '''धातोः' के अधिकार में असमान रूप अपवाद उत्सर्ग का विकल्प से बाध करता है, किन्तु 'स्त्रयाम्' के अधिकार युक्त प्रत्ययों में यह नियम लागू नहीं होता अर्थात् उन प्रत्ययों में अपवाद उत्सर्ग का नित्य बाधक होता है।'' अतः 'अचो यत्', 'ऋहलोर्ण्यत्' इत्यादि अपवाद के विषय में उत्सर्ग (सामान्य) तव्यत् आदि भी होते हैं। क्योंकि यत्, ण्यत् असरूप अपवाद प्रत्यय हैं, जो सामान्य का उक्त नियम से विकल्प से बाध करते हैं। अण् एवं क आदि में अनुबन्ध णकार, ककार से इतर 'अ अ' का परस्पर सारूप्य ही है। अतः वहाँ इस परिभाषा की प्रवृत्ति नहीं होती। क प्रत्यय अपने विषय में अण् का नित्य बाध करता है।

(१००७) **कृत्याः ३।१।९५** । 'ण्वुल्तृचावि'ति सूत्रतः प्राक् कृत्यसंज्ञाः स्युः। (१००८) **कर्तरि कृत् ३।४।६७** । कृत्प्रत्ययः कर्तरि स्यात्। इति प्राप्ते। (१००९) **तयोरेव कृत्यक्तखलर्थाः ३।४।७०** । एते भावकर्मणोरेव स्युः। (१०१०) **तव्यत्तव्यानीयरः ३।१।९६** । धातोरेते स्युः। एधितव्यम्, एधनीयं त्वया। भावे औत्सर्गिकमेकवचनं क्लीबत्वं च। चेतव्यश्चयनीयो वा धर्मस्त्वया। * केलिमर

---

(१००७) **कृत्या इति**। अधिकारोऽयम्। 'ण्वुल्तृचौ' इति यावत्ये प्रत्ययाः ते कृत्यसंज्ञका भविष्यन्तीति वेदितव्यमिति।

(१००८) **कर्तरि कृदिति**। 'धातोरि'त्यधिकारे कृत्संज्ञका प्रत्ययाः कर्तरि कारके भवन्तीत्यर्थः।

(१००९) **तयोरेवेति**। 'तयोरेवे'त्यनेन 'लः कर्मणी'त्यस्मात् 'कर्मणि भावे चाकर्मकेभ्यः' इति परामृश्यते। तेन भावकर्मणोरेव कृत्यसंज्ञकाः, क्तः खलर्थाश्च प्रत्ययाः भवन्ति।

(१०१०) **तव्यत्तव्येति**। धातोरित्यधिक्रियते। धातोः तव्यत् तव्य अनीयर् इत्येते प्रत्यया भवन्तीत्यर्थः। तव्यत्तव्ययोः 'तित्स्वरितमि'ति स्वरे भेदः। **एधितव्यमिति**। 'एध वृद्धौ' इत्यस्माद्धातोः 'धातोः' इत्यधिकारसूत्रेण धातोः परे भवितव्यतां विधाय 'कृदतिङ्' इत्यनेन कृत्संज्ञायां 'कृत्याः' इति कृत्यसंज्ञायां 'कर्तरि कृत्' इति कर्त्तर्यर्थे प्राप्ते 'तयोरेव कृत्यक्त-

---

(१००७) **पद**– कृत्याः। **अधिकारसूत्र**।

**मूलार्थ**–यहाँ से 'ण्वुल्तृचौ' सूत्र से पूर्व तक के प्रत्ययों की कृत्यसंज्ञा होती है।

**विमर्श**– 'ण्वुलतृचौ' (३।१।१३) सूत्र के पूर्व तक 'कृत्याः' इस पद का अधिकार है। अतः इस अधिकार के प्रत्ययो की कृत्यसंज्ञा होती है।

(१००८) **पद**–कर्तरि, कृत्। **विधिसूत्र**।

**मूलार्थ**– कृत्प्रत्यय कर्ता में होते हैं।

**विमर्श**– 'धातोः' और 'प्रत्ययः' का अधिकार है। अतः '''धातोः' के अधिकार में विहित कृत्संज्ञक प्रत्यय कर्ता-कारक में होते हैं।''

(१००९) **पद**–तयोः, एव, कृत्यक्तखलर्थाः। **अनुवृत्ति**–कर्मणि भावे चाकर्मकेभ्यः। **विधिसूत्र**।

**मूलार्थ**– कृत्य, क्त और खलर्थ प्रत्यय भाव और कर्म में ही होते हैं।

**विमर्श**– प्रकृत सूत्र में 'लः कर्मणि च भावे चाकर्मकेभ्यः' (३।४।६९) से 'कर्मणि भावे चाकर्मकेभ्यः' की अनुवृत्ति आती है। तदनुसार– ''कृत्यसंज्ञक प्रत्यय, क्त तथा खल् अर्थवाले प्रत्यय भाव और कर्म में ही होते हैं। अर्थात् अकर्मक धातुओं से कृत्य, क्त और खलर्थ प्रत्यय भाव में होते हैं और सकर्मक धातुओं से कर्म में।''

(१०१०) **पद**– तव्यत्तव्यानीयरः। **विधिसूत्र**।

**मूलार्थ**– धातु से तव्यत्, तव्य और अनीयर् प्रत्यय होते हैं। एधितव्यम्, एधनीयं त्वया। भाव में कृदन्त से स्वाभाविक एकवचन और नपुंसकत्व रहता है। चेतव्यः, चयनीयो वा धर्मस्त्वया इत्यादि।

**विमर्श**– 'धातोः' का अधिकार है। तदनुसार–''धातु से तव्यत्, तव्य और अनीयर् प्रत्यय होते हैं।'' ये प्रत्यय भाव और कर्म में होते हैं। 'तव्यत्' में 'त्' की इत्संज्ञा तित् स्वरार्थ है। 'अनीयर्' में रित् ('र्' की इत्संज्ञा) 'उपोत्तमं रिति' से मध्योदात्त करने के लिए है।

**उपसंख्यानम् *। पचेलिमा माषाः। पक्तव्या इत्यर्थः। भिदेलिमाः सरलाः। कर्मणि प्रत्ययः। * वसेस्तव्यत्कर्तरि णिच्च *। वसतीति वास्तव्यः। ( १०११ ) कृत्यचः ८।४।२९ ।**

---

खलर्थाः' इत्यनेनाकर्मकाद् धातोर्भावे सकर्मकाच्च कर्मणि कृत्यक्तखलर्थानां प्राप्तौ सत्यां 'तव्यत्तव्यानीयरः' इत्यनेन अकर्मकाद्धातोर्भावे तव्यत्प्रत्यये तकारस्येत्संज्ञायां लोपे च कृते 'एध तव्य' इति जाते आर्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड्वलादेः' इतीडागमेऽनुबन्धलोपे 'कृत्तद्धितसमासाश्चे'त्यनेन प्रातिपदिकसंज्ञायां प्रथमैकवचने सौ 'भावे औत्सर्गिकमेकवचनं क्लीबत्वमि'ति नियमात् क्लीबत्वे सोरमि पूर्वरूपे च कृते 'एधितव्यमि'ति।

**केलिमर इति**। भावकर्मणोः धातोः केलिमर्प्रत्ययोऽपि वक्तव्य इत्यर्थः। **पचेलिमा माषा इति**। पच्धातोः 'तयोरेवे'ति कर्मणि 'केलिमर उपसंख्यानम्' इति वार्तिकेन केलिमर्-प्रत्ययेऽनुबन्धलोपे कृदन्तत्वात्प्रातिपदिकसंज्ञायां जसि विभक्तिकार्ये 'पचेलिमाः' इति।

**वसेस्तव्यदिति**। वस्धातोः कर्तरि तव्यत्प्रत्ययो भवति, स च णिद्वद् वक्तव्य इत्यर्थः।

**वास्तव्य इति**। वस्धातोः 'वसेस्तव्यत्कर्तरि णिच्च' इत्यनेन तव्यति णित्वे च कृते 'अत उपधायाः' इति वृद्धौ सो रुत्वे विसर्गे कृते 'वास्तव्यः' इति।

---

**उदाहरण**– (१) ✓ एध + तव्यत् ( = 'तव्य'–भाव अर्थ में–'तव्यत्तव्यानीयरः')– एध् तव्य (आर्धधातुकसंज्ञा, इट् = 'इ'–'आर्धधातुकस्येड्वलादेः', प्रातिपदिकसंज्ञा–'कृत्तद्धितसमासाश्च', प्र०वि०ए०व०–'सु', 'सु' = 'अम्'–'अतोऽम्', अ + अ = 'अ' पूर्वरूप–'अमि पूर्वः') = एधितव्यम्।

**भावे औत्सर्गिकमिति**। भाववाच्य में कृदन्त से स्वाभाविक एकवचन एवं नपुंसकलिङ्ग होता है। भाव में कृत्प्रत्यय का विधान होने से अनुक्त कर्ता में तृतीया विभक्ति होती है–'त्वया'।

(२) ✓ चि + तव्यत् ( = 'तव्य'–कर्म में–'तव्यत्तव्यानीयरः')– चि तव्य ('इ' = 'ए'–गुण, प्रातिपदिकसंज्ञा, प्र०वि०ए०व० सु = स् = र् = :) = चेतव्यः। कर्मवाच्य में तव्यत् अथवा तव्य होने पर कर्मवाचक धर्म शब्द से प्रथमा विभक्ति तथा कर्ता अनुक्त होने से कर्तृवाचक से तृतीया विभक्ति हुई–चेतव्यो धर्मः त्वया।

(३) ✓ चि + अनीयर् ( = अनीय–'कर्म में', 'इ' = 'ए'–गुण– 'सार्वधातु०', 'ए' = 'अय्') –चयनीय (प्रातिपदिकसंज्ञा, सु = स्, स् = र् = :) = चयनीयः।

**(वा०)**– धातु से भाव और कर्म अर्थ में केलिमर् प्रत्यय भी होता है।

**उदाहरण**– (४) ✓ पच् + केलिमर् ( = 'एलिम' – कर्म में–'केलिमर उपसंख्यानम्')– पचेलिम (प्राति० संज्ञा, प्र० बहुवचन जस् = अस्, अ + अ = 'आ'–दीर्घ, स् = र् = :) = पचेलिमाः। यहँ 'केलमर्' प्रत्यय के कित् होने से उपधागुण नहीं हुआ।

(५) ✓ भिद् + केलमर् ( = 'एलिम'–कर्म में)–भिदेलिम (प्राति० संज्ञा, 'जस्' = 'अस्', अ + अ = 'आ'–दीर्घ, स् = र् = :) = **भिदेलिमाः सरलाः** (वृक्ष–विशेष)।

**(वा०)**– वस् धातु से कर्ता अर्थ में 'तव्यत्' प्रत्यय होता है और वह णिद्वत् होता है।

**उदाहरण**– ✓ वस् + तव्यत् ( = 'तव्य' कर्ता में–'वसेस्तव्यत्कर्त्तरि णिच्च', णिद्वद्भाव होने से 'अ' = 'आ'–वृद्धि–'अत उपधायाः')–वास्तव्य (प्रा० संज्ञा, सु = स् = र् = :) = वास्तव्यः।

(१०११) **पद**– कृति, अचः। **अनुवृत्ति**– उपसर्गात्, अट्कुप्वाङ्नुम्व्यवायेऽपि, रषाभ्यां नो णः।

**विधिसूत्र**।

**उपसर्गस्थान्निमित्तात्परस्याऽच उत्तरस्य कृत्यस्य नस्य णत्वं स्यात्। प्रयाणीयम्। अचः किम्? प्रमग्नः। * निर्विण्णस्योपसंख्यानम् *। (१०१२) णेर्विभाषा ८।४।३०। प्राग्वत्। प्रयापणीयम्। प्रयापनीयम्। (१०१३) हलश्चेजुपधात् ८।४।३१।**

---

(१०११) **कृत्यच इति।** उपसर्गस्थणत्वनिमित्तात्परस्य अच उत्तरस्य कृत्यप्रत्ययावयवस्य नस्य णत्वं स्यादित्यर्थः। **प्रयाणीयमिति।** प्रपूर्वकयाधातोः अनीयर्प्रत्यये 'प्र या अनीय' इति जाते, दीर्घे 'कृत्यचः' इति णत्वे सौ अमि पूर्वरूपे 'प्रयाणीयमि'ति।

(१०१२) **णेर्विभाषेति।** उपसर्गस्थान्निमित्तात्परस्य ण्यन्ताद् विहितो य कृत्यप्रत्यय-स्तस्यावयवस्य नस्य णत्वं वा स्यादित्यर्थः।

(१०१३) **हलश्चेति।** धातोर्विशेषणत्वेनाह-**हलादेरिजुपधादिति।**

---

**मूलार्थ–** उपसर्गस्थ निमित्त से परवर्ती अच् से उत्तर कृत्प्रत्यय के नकार को णत्व होता है। प्रयाणीयम्। अचः किम्? प्रमग्नः।

**विमर्श–** सूत्रार्थ की स्पष्टता के लिए 'उपसर्गाद् बहुलम्' (८।४।२८) से 'उपसर्गात्', 'अट्कुप्वाङ्नुम्व्यवायेऽपि' (८।४।२) सूत्र तथा 'रषाभ्यां नो णः समानपदे' (८।४।१) से 'रषाभ्यां नो णः' की यहाँ अनुवृत्ति आ रही है। तदनुसार– ''उपसर्ग में स्थित निमित्त (र्, ष्) से परवर्ती जो अच्, उससे परे जो कृत्प्रत्यय का नकार, उसको णकार आदेश होता है।''

**उदाहरण–** प्र + ✓ या + अनीयर् (= 'अनीय', कृदन्तत्वात् प्राति० संज्ञा, सु, सु = अम्)– प्र या अनीय अम् (आ + अ = 'आ'–दीर्घ, अ + अ = 'अ'–पूर्वरूप, 'न्' = 'ण्'–णत्व–'कृत्यचः') = प्रयाणीयम्।

**प्रत्युदाहरण–** प्रमग्नः। प्रकृत सूत्र में 'अचः' पद का ग्रहण होने से अच् से उत्तरवर्ती कृत्प्रत्यय के नकार को ही णत्व होता है। 'प्रमग्नः' में अच् से उत्तर नकार न होने से णत्व नहीं होता है।

**(वा०)**– 'निर्विण्ण' में णत्व कहना चाहिए। अर्थात् 'निर्विण्णम्' पद में भी णत्व होता है।

**उदाहरण–** 'निर्विण्णम्' में अच् से उत्तर नकार न होने से पूर्वसूत्र में णत्व प्राप्त नहीं है। अतः अप्राप्त णत्व के विधान के लिए वार्तिक का निर्माण किया गया है। प्रक्रिया– निर् + ✓ विद् + क्त (= 'त', 'त्' = 'न्', 'द्' = 'न्'–'रदाभ्यां निष्ठातो०')– निर् विन् न (परवर्ती कृत्प्रत्यय के 'न्' = 'ण्'–'निर्विण्णस्योपसंख्यानम्', पूर्व 'न्' = 'ण्'–ष्टुत्व, प्राति० संज्ञा, 'सु', सु = 'अम्', पूर्वरूप) = निर्विण्णम्।

(१०१२) **पद–** णेः, विभाषा। **अनुवृत्ति–** कृत्यचः, उपसर्गात्, अट्कुप्वाङ्नुम्व्यवायेऽपि, रषाभ्यां नो णः। **विधिसूत्र।**

**मूलार्थ–**ण्यन्त से पूर्ववत् णत्व विकल्प से होता है। प्रयापणीयम्। प्रयापनीयम्।

**विमर्श–** सूत्रार्थ की पूर्ति हेतु 'कृत्यचः' (१०११) सूत्र तथा पूर्ववत् 'उपसर्गात्', 'अट्कुप्वा-ङ्नुम्व्यवायेऽपि' तथा 'रषाभ्यां नो णः' की अनुवृत्ति आ रही है। अतः ''उपसर्ग में स्थित निमित्त र्, ष् से उत्तरवर्ती ण्यन्त से विहित जो कृत्प्रत्यय सम्बन्धी नकार, उसको विकल्प से णत्व होता है।''

**उदाहरण–** प्र + ✓ या + णिच् (= 'इ', पुक् = 'प्' आगम)– प्र या पि + अनीयर् (= 'अनीय', णि = 'इ' का लोप–'णेरनिटि', 'न्' = 'ण्'–णत्व विकल्प से–'णेर्विभाषा', कृदन्तत्वात् प्राति० संज्ञा, 'सु' 'सु' = 'अम्' पूर्वरूप) = प्रयापणीयम्। णत्व के अभाव पक्ष में–प्रयापनीयम्।

**हलादेरिजुपधाद्धातोः परस्य कृन्नस्याऽचः परस्य णो वा स्यात्। प्रकोपणीयम्। प्रकोपनीयम्। हलः किम्? प्रोहणीयम्। इजुपधात्किम्? प्रवपणीयम्। ( १०१४ ) इजादेः सनुमः ८।४।३२ । सनुमश्चेद्भवति तर्हि इजादेर्हलन्ताद्विहितो यः कृत्तत्स्थस्यैव। इखि गतौ–प्रेङ्खणीयम्। इजादेः किम्? 'मगि सर्पणे'। प्रमङ्गनीयम्। (१०१५) वा**

---

(१०१४) **इजादेरिति**। 'कृत्यचः' इत्येव सिद्धे नियमार्थमिदं सूत्रम्। तदेवाह– **सनुमश्चेद्भवतीति। प्रेङ्खणीयमिति**। प्रपूर्वाद् 'ईखि'धातोः अनीयर्प्रत्यये गुणे इदित्त्वान्नुमि अनुस्वारे परसवर्णे 'इजादेः' इति णत्वे सौ, सोरमि पूर्वरूपे 'प्रेङ्खणीयमि'ति।

---

(१०१३) **पद**– हलः, च, इजुपधात्। **अनुवृत्ति**– विभाषा, कृत्यचः, उपसर्गात्, अट्कुप्वाङ्नुम्व्यवायेऽपि, 'रषाभ्यां नो णः'। **विधिसूत्र**।

**मूलार्थ**– हलादि इजुपध धातु से परवर्ती अजुत्तर कृत्प्रत्यय के नकार को विकल्प से णत्व होता है। प्रकोपणीयम्। प्रकोपनीयम्। इत्यादि।

**विमर्श**– प्रकृत सूत्र में 'णेर्विभाषा' (१०१२) से 'विभाषा', 'कृत्यचः' (१०११) तथा पूर्ववत् 'उपसर्गात्, अट्कुप्वाङ्नुम्व्यवायेऽपि, रषाभ्यां नो णः' की अनुवृत्ति आती है। सूत्रस्थ 'इजुपधात्' में 'इच् उपधा यस्य स इजुपधः, तस्मात्' बहुव्रीहि समास है। अतः "इच् उपधा वाले हलादि धातु से परवर्ती कृत्प्रत्यय में स्थित अच् से उत्तर नकार को भी (उपसर्गस्थ निमित्त से उत्तर) णत्व विकल्प से होता है।"

**उदाहरण**– प्र + ✓ कुप् + अनीयर् (= 'अनीय', 'उ' = 'ओ'–गुण, 'न्' = 'ण्'–णत्व विकल्प से– 'हलश्चेजुपधात्', कृदन्तत्वात् प्रातिपदिकसंज्ञा, 'सु' = 'अम्', अ + अ = 'अ'–पूर्वरूप) = प्रकोपणीयम्। णत्व के अभावपक्ष में–प्रकोपनीयम्।

**प्रत्युदाहरण**– (१) प्र + ✓ ऊह् + अनीयर् (= 'अनीय', अ + ऊ = 'ओ'–गुण, 'न्' = 'ण्'–णत्व–'कृत्यचः', सु = अम्, पूर्वरूप) = प्रोहणीयम्। (ऊह् धातु हलादि न होने से 'हलश्चेजुपधात्' से विकल्प से णत्व नहीं हुआ, किन्तु 'कृत्यचः' से नित्य णत्व होकर रूप बना।) (२) प्र + ✓ वप् + अनीयर् (= 'अनीय', 'न्' = 'ण्'–णत्व–'कृत्यचः', प्रा० सं०, 'सु' = 'अम्', पूर्वरूप) = प्रवपणीयम्। (यहाँ 'वप्' धातु के इजुपध न होने से वैकल्पिक णत्व नहीं हुआ अपितु नित्य णत्व हुआ।)

(१०१४) **पद**– इजादेः, सनुमः। **अनुवृत्ति**– हलः, कृत्यचः, उपसर्गात्, अट्कुप्वाङ्नुम्व्यवायेऽपि, रषाभ्यां नो णः। **नियमसूत्र**।

**मूलार्थ**– सनुम् (नुम् सहित) धातु से परे यदि णत्व होता है, तो इजादि और हलन्त से विहित कृत्प्रत्यय स्थित नकार को ही होता है। प्रेङ्खणीयम् इत्यादि।

**विमर्श**– प्रकृत सूत्र में पूर्वसूत्र (१०१३) से 'हलः' तथा पूर्ववत् 'कृत्यचः, उपसर्गात्, अट्कुप्वाङ्नुम्व्यवायेऽपि' एवं 'रषाभ्यां नो णः' की अनुवृत्ति आ रही है। यहाँ पूर्वसूत्र 'कृत्यचः' (१०११) से णत्व सिद्ध था, पुनः 'सिद्धौ सत्यामारभ्यमाणो विधिर्नियमाय भवति' न्याय के अनुसार प्रकृत सूत्र द्वारा पुनर्वचन नियमार्थ है। अर्थात् "नुम् सहित इजादि तथा हलन्त धातुओं से उत्तरवर्ती कृत्प्रत्यय में स्थित नकार को ही णत्व होता है; अन्यों से उत्तर नहीं"।

इकारेत्संज्ञक ✓ इखि धातु गत्यर्थक है।

**उदाहरण**– प्र + ✓ इखि ('इ' की इत्संज्ञा, लोप, नुम् = 'न्'–'इदितो नुम्धातोः', न् = अनुस्वार

**निंसनिक्षनिन्दाम् ८।४।३३ । एषां नस्य णो वा स्यात् कृति। प्रणिंसितव्यम्। ( १०१६ ) न भाभूपूकमिगमिप्यायीवेपाम् ८।४।३४ । एभ्यः कृन्नस्य णो न स्यात्।**

---

(१०१५) **वा निंसेति**। उपसर्गस्थान्निमित्तात्परस्येत्यादि पूर्ववदवगन्तव्यम्।

(१०१६) **न भाभू इति**। 'कृत्यचः' इति णत्वे प्राप्ते निषेधोऽयम्। एभ्यः कृतो नस्य न णत्वमित्यर्थः। **ण्यन्तेति**। ण्यन्तानां भा-भू-पू-कमि-गमि-प्यायी-वेपां न णत्वमिति वक्तव्यमित्यर्थः।

---

-'नश्चापदान्तस्य०', ं = 'ङ्' परसवर्ण-'अनुस्वारस्य०)- प्र + इङ्ख् + अनीयर् (= 'अनीय', अ + इ = 'ए'-गुण, 'न्' = 'ण्'-णत्व-'इजादेः सनुमः', कृदन्तत्वात् प्रा० संज्ञा, सु, 'सु' = 'अम्', पूर्वरूप) = प्रेङ्खणीयम्।

**प्रत्युदाहरण-** इजादेः किमिति? प्र + मगि ('इ' की इत्संज्ञा, लोप, नुम् = 'न्' अनुस्वार, परसवर्ण) प्रमङ्ग् + अनीयर् (= 'अनीय', प्रा० संज्ञा, सु, सु = अम्, पूर्वरूप) = प्रमङ्गनीयम्। (प्रकृत सूत्र में 'इजादेः' पद का ग्रहण होने से ✓ मगि के इजादि न होने के कारण णत्व नहीं हुआ।)

(१०१५) **पद-** वा, निंस-निक्ष-निन्दाम्। **अनुवृत्ति-** कृति, उपसर्गात्, अट्कुप्वाङ्नुम्व्यवायेऽपि, रषाभ्यां नो णः। **विधिसूत्र।**

**मूलार्थ-** निंस, निक्ष और निन्द धातुओं के उपसर्गस्थ निमित्त से उत्तरवर्ती नकार को णकार विकल्प से होता है, कृत्प्रत्यय के परे रहते। प्रणिंसितव्यम्। प्रनिंसितव्यम्।

**विमर्श-** यहाँ 'उपसर्गाद् बहुलम्' (८।४।२८) से उपसर्गात्, 'कृत्यचः' (१०११) से कृति तथा पूर्ववत् 'अट्कुप्वाङ्नुम्व्यवायेऽपि, रषाभ्यां नो णः' की अनुवृत्ति आती है। तदनुसार- ''उपसर्ग में स्थित निमित्त से उत्तरवर्ती निंस, निक्ष और निन्द धातु के नकार को विकल्प से णकारादेश होता है।''

**उदाहरण-** प्र + ✓ निंस् + तव्यत् (= तव्य, इट् = 'इ', 'न्' = 'ण्'-णत्व विकल्प से-'वा निंसनिक्षनिन्दाम्' प्रा० संज्ञा, सु, सु=अम्, पूर्वरूप) = प्रणिंसितव्यम्। णत्व न होने पर-प्रनिंसितव्यम्।

(१०१६) **पद-** न, भा-भू-पू-कमि-गमि-प्यायी-वेपाम्। **अनुवृत्ति-** कृत्यचः, उपसर्गात्, अट्कुप्वाङ्नुम्व्यवायेऽपि, रषाभ्यां नो णः। **विधिसूत्र** (निषेध)।

**मूलार्थ-** भा भू आदि धातुओं से परवर्ती कृत्प्रत्यय के नकार को णत्व नहीं होता। प्रभानीयम्। प्रभवनीयम्।

**विमर्श-** पूर्ववत् 'कृत्यचः, उपसर्गात्, अट्कुप्वाङ्नुम्व्यवायेऽपि तथा रषाभ्यां नो णः' की अनुवृत्ति आती है। इस प्रकार-''उपसर्ग में स्थित निमित्त से उत्तरवर्ती भा, भू, पूञ्, कमि, गमि, ओप्यायी तथा टुवेपृ धातुओं से विहित कृत्प्रत्यय-स्थित नकार को अच् से उत्तर णकार आदेश नहीं होता।''

**उदाहरण-** (१) प्र + ✓ भा + अनीयर् (= 'अनीय', आ + अ = 'आ'-दीर्घ, प्राति० संज्ञा, सु, सु = 'अम्', पूर्वरूप, 'कृत्यचः' से प्राप्त णत्व का 'न भाभू०' से निषेध) = प्रभानीयम्। (२) प्र + ✓ भू + अनीयर् (= 'अनीय', 'ऊ' = 'ओ'-गुण, 'ओ' = 'अव्' आदेश, सु, सु = 'अम्', पूर्वरूप, प्राप्त णत्व का 'न भाभू०' से निषेध) = प्रभवनीयम्।

**(वा०)-** ण्यन्त भा आदि धातु से भी उत्तरवर्ती कृत्स्थ नकार को णत्व नहीं होता।

**उदाहरण-** (३) प्र + ✓ भापि (ण्यन्त) + अनीयर् = ('अनीय', णि = 'इ' का लोप, प्राप्त णत्व का 'ण्यन्तभादीनाम्०' वार्तिक से निषेध, सु, सु = अम्, पूर्वरूप) = प्रभापनीयम्।

**प्रभानीयम्। प्रभवनीयम्। * ण्यन्तभादीनामुपसंख्यानम् *। प्रभापनीयम्। (१०१७) कृत्यल्युटो बहुलम् ३।३।११३ ।**

**क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।**
**विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥**

**स्नात्यनेन स्नानीयं चूर्णम्। दीयतेऽस्मै दानीयो विप्रः।**

---

(१०१७) **कृत्यल्युट इति**। कृत्याश्च ल्युट् च कृत्यल्युटः, इतरेतरद्वन्द्वः। कृत्यसंज्ञकाः प्रत्यया ल्युट् च बहुलमर्थेषु भवन्ति।

**क्वचित्प्रवृत्तिरिति**। अप्राप्तस्यापीति शेषः, यथा 'स्नानीयं चूर्णमि'त्यत्र करणेऽप्राप्तस्याप्यनीयर्प्रत्ययस्य प्रवृत्तिः। **क्वचिदप्रवृत्तिः**–प्राप्तस्यापीति शेषः, यथा– 'रामो जामदग्न्यः' इत्यत्र 'विशेषणं विशेष्येण बहुलमि'ति सूत्रे बहुलग्रहणात्समासाप्रवृत्तिः। **क्वचिद्विभाषेति**। विकल्पः यथा–'मघवा बहुलमि'ति विकल्पः। **क्वचिदन्यदेव**–विकल्पप्राप्तस्यापि नित्यत्वादिकम्। यथा–'उन्मत्तगङ्गम्' इत्यत्र नित्यमम्भावः; 'तृतीयासप्तम्योर्बहुलमि'ति बहुलग्रहणादिति।

---

(१०१७) **पद**– कृत्यल्युटः, बहुलम्। **विधिसूत्र**।

**मूलार्थ**– कृत्य प्रत्यय और ल्युट् प्रत्यय बहुल प्रकार से होते हैं।

**विमर्श**– कृत्याश्च ल्युट् च इति कृत्यल्युटः (इतरेतरद्वन्द्वः)। बहून् अर्थान् लाति = आदत्त इति बहुलम् (बहु + ✓ ला + क = 'अ', 'आ' का लोप–'आतो लोप इटि च' विभक्तिकार्य) = बहुलम्)। अर्थात् अनेक अर्थों को ग्रहण या प्रकट करने वाला। आशय यह है कि आचार्य पाणिनि ने जिसके साथ 'बहुलम्' का प्रयोग किया है वहाँ अनेक बातों से उनका तात्पर्य है। 'क्वचित्प्रवृत्ति' इत्यादि पद्य में चार प्रकार से 'बहुलम्' का वर्गीकरण किया गया है–

**श्लोकार्थ**– ''कहीं प्रवृत्त होना और कहीं प्रवृत्त न होना, कहीं विकल्प से प्रवृत्त होना और कहीं अन्यदेव = प्रकृति और अर्थ की भिन्नता में भी होना। इस प्रकार अनेक तरह से सूत्रों का विधान समझकर शास्त्रज्ञों ने 'बहुल' के चार भेद कहे हैं।'' विवरण इस प्रकार है–

(१) **क्वचित्प्रवृत्तिः**– 'बहुलम्' से निर्देशित कार्य कहीं प्रवृत्ति के अयोग्य स्थानों पर भी प्रवृत्त हो जाता है। जैसे– कृत्य प्रत्ययों का भाव और कर्म अर्थों में विधान किया गया है। परन्तु ये भाव और कर्म के अतिरिक्त करण, सम्प्रदान आदि कारकों में भी हो जाते हैं–(१) स्नाति अनेनेति स्नानीयम् (इसके द्वारा स्नान किया जाता है, वह उबटन 'स्नानीय' कहलाता है)– ✓ ष्णा (स्ना) + अनीयर् (= 'अनीय'–करण अर्थ में, आ + अ = 'आ'–दीर्घ, प्राति० संज्ञा, सु = 'अम्', पूर्वरूप) = स्नानीयं चूर्णम्। (२) दीयते अस्मै इति दानीयो विप्रः (जिसे दान दिया जाता है वह ब्राह्मण 'दानीयः' कहलाता है। ✓ दा + अनीयर् (= 'अनीय', सम्प्रदान में कृत्य प्रत्यय, आ + अ = 'आ'–दीर्घ, सु = रु = र् = :) = दानीयः।

इसी प्रकार ल्युट् प्रत्यय 'करणाधिकरणयोश्च' सूत्र से करण और अधिकरण में विधान किया गया है। परन्तु प्रकृत सूत्र में 'बहुलम्' प्रयोग होने से अन्य कारकों में भी हो जाता है। यथा– प्रस्कन्दति अस्मादिति प्रस्कन्दनम् (जहाँ से कूदते हैं वह स्थान-विशेष)– प्र + ✓ स्कन्द् + ल्युट् (= यु = 'अन्'- अपादान अर्थ में, सु = अम्) = प्रस्कन्दनम् इत्यादि।

(२) **क्वचिदप्रवृत्तिः**– कहीं प्रवृत्ति के योग्य स्थानों पर भी 'बहुलम्' निर्देशित कार्य प्रवृत्त

**(१०१८) ऋदुपधाच्चाऽक्लृपिचृतेः ३।१।११० । क्यप् स्यात्। वृत्–वृत्यम्। वृध्–वृद्ध्यम्। क्लृपिचृत्योस्तु–कल्प्यम्। चर्त्यम्। (१०१९) अचो यत् ३।१।९७ । अजन्ताद्धातोर्यत् स्यात्। चेयम्। जेयम्। (१०२०) ईद्यति ६।४।६५ ।**

---

(१०१८) **ऋदुपधादिति**। ऋदुपधा यस्य धातोरित्याशयः। क्लृपिचृतिभिन्नस्य ऋदुपधाद् धातोः क्यप् स्यादित्यर्थः। **वृत्यमिति**। 'वृतु वर्तने' इत्यस्मात्क्यपि 'वृत्यम्', कित्त्वान्नोपधागुणः।

(१०१९) **अचो यत्**। स्पष्टम्। **चेयम्**– 'चिञ् चयने' इति धातोः 'अचो यत्' इति यति कृते अनुबन्धलोपे आर्धधातुकसंज्ञायां 'सार्वधातुकार्धधातुकयोः' इति गुणे कृदन्तत्वात् प्रातिपदिकत्वे सौ, सोरमि पूर्वरूपे कृते 'चेयमि'ति।

---

नहीं होता। यथा–'रामो जामदग्न्यः' प्रयोग में 'विशेषणं विशेष्येण बहुलम्' सूत्र में 'बहुल' ग्रहण के कारण समास की प्रवृत्ति नहीं हुई।

(३) **क्वचिद्विभाषा**– 'बहुलम्' निर्देशित कार्य कहीं विकल्प से प्रवृत्त हो जाता है। यथा– 'मघवा बहुलम्' से विकल्प से मघवन् शब्द को 'तृ' अन्तादेश होता है।

(४) **क्वचिदन्यदेव**– 'बहुलम्' वाले स्थान पर कहीं कुछ और भी कार्य हो सकता है। अर्थात् 'अन्यदेव' का क्षेत्र व्यापक है। इसमें कहीं प्रकृति बदल जाती है तो कहीं प्रत्यय। कहीं प्राप्त गुण, वृद्धि आदि का अभाव हो जाता है। कहीं प्राप्त विकल्प का नित्य हो जाता है। जैसे– 'उन्मत्तगङ्गम्' में 'तृतीयासप्तम्योबर्हुलम्' सूत्रस्थ 'बहुलम्' निर्देश से नित्य अम्भाव हो जाता है।

(१०१८) ऋत्, उपधात्, च, अक्लृपिचृतेः। **अनुवृत्ति**– धातोः, क्यप्। **विधिसूत्र**।

**मूलार्थ**– क्लृप् और चृत् धातु को छोड़कर ऋदुपध धातु से क्यप् प्रत्यय होता है। वृत्यम्, वृद्ध्यम् इत्यादि। क्लृप् और चृत् धातुओं से– कल्प्यम्, चर्त्यम् (ण्यत्)।

**विमर्श**– 'धातोः' का अधिकार है। 'एतिस्तु०' (३।१।१०९) से 'क्यप्' की अनुवृत्ति आ रही है। अतः ''क्लृप् और चृत् धातुओं को छोड़कर ऋकार उपधा वाली धातुओं से भी क्यप् प्रत्यय होता है।''

**उदाहरण**–(१) ✓ वृत् + क्यप् (= य्– 'ऋदुपधात्०', प्राति०संज्ञा, सु = 'अम्' पूर्वरूप) = वृत्यम्। (यहाँ 'क्यप्' प्रत्यय के कित् होने से उपधागुण नहीं होता।) (२) वृध् + क्यप् (= य– 'ऋदुपधात्०', सु = 'अम्', पूर्वरूप) = वृद्ध्यम्। (३) ✓ क्लृप् और ✓ चृत् धातु से ण्यत् (= 'य'– 'ऋहलोर्ण्यत्', लृ, ऋ = 'अ', उपधागुण, क्रमशः लपर तथा रपर, सु = 'अम्', पूर्वरूप) = कल्प्यम्। चर्त्यम्।

(१०१९) **पद**– अचः, यत्। **अनुवृत्ति**– धातोः। **विधिसूत्र**।

**मूलार्थ**– अजन्त धातु से यत् प्रत्यय होता है। चेयम्। जेयम्।

**विमर्श**– 'धातोः' का अधिकार है। 'अचः' पद 'धातोः' का विशेषण होने से तदन्त विधि होती है। तदनुसार–''अजन्त धातु से परे यत् (= य) प्रत्यय होता है।''

**उदाहरण**– (१) ✓ चि + यत् (= 'य'–'अचो यत्', 'इ' = 'ए'–गुण– 'सार्वधातुकार्धधातुकयोः', प्राति० संज्ञा, सु, 'सु' = 'अम्', अ + अ = 'अ'–पूर्वरूप) = चेयम् (चुनने योग्य)। (२) ✓ जि + यत् (पूर्वोक्त प्रक्रिया) = जेयम् (जीतने योग्य)।

(१०२०) **पद**– ईत्, यति। **अनुवृत्ति**– आतः। **विधिसूत्र**।

**यति परे आत ईत्स्यात्। गुणः। देयम्। ग्लेयम्। ( १०२१ ) पोरदुपधात् ३।१।९८ । पवर्गान्तादुपधाद्यत्। ण्यतोऽपवादः। शप्यम्। लभ्यम्। ( १०२२ ) आङो यि ७।२।६५ । आङः परस्य लभेर्नुम् स्याद्यादौ प्रत्यये। आलम्भ्यो गौः। ( १०२३ )**

---

(१०२०) **ईद्यतीति**। 'आतो लोपः' इत्यस्मादात इत्यनुवर्तते। तदाह–**यति पर इत्यादिना। देयमिति**। दाधातोः यत्प्रत्यये, ईत्वे, सार्वधातुकगुणे सौ, सोरमि पूर्वरूपे देयमिति।

(१०२१) **पोरदुपधादिति**। 'अचो यदि'त्यतः यदित्यनुवर्तते। 'ऋहलोर्ण्यत्' इति प्राप्तस्य ण्यतोऽपवाद इत्यर्थः।

(१०२२) **आङो यीति**। अत्र 'इदितो नुम् धातोः' इत्यतः नुमिति, 'लभेश्चे'त्यतः लभेरिति चानुवर्तेते। तदाह–**आङः परस्येति। आलम्भ्यो गौरिति**। आङ्पूर्वाल्लभ्धातोः 'पोरदुपधात्' इति यति 'आङो यी'ति नुमि अनुस्वारे परसवर्णे सौ रुत्वे विसर्गे कृते 'आलम्भ्यः' इति।

---

**मूलार्थ–** यत् प्रत्यय के परवर्ती रहते आत् को ईत् होता है। देयम्। ग्लेयम्।

**विमर्श–**प्रकृत सूत्र में 'आतो लोप इटि च' (६।४।६४) से 'आतः' पद की अनुवृत्ति आती है। 'अङ्गस्य' का अधिकार है। 'आतः' 'अङ्गस्य' का विशेष होने से तदन्तविधि होती है। तदनुसार– ''आकारान्त अङ्ग के स्थान पर यत् प्रत्यय परे रहते ईत् (ईकार) आदेश हो जाता है''। 'अलोऽन्त्यस्य' परिभाषा के अनुसार यह आदेश आकारान्त अङ्ग के अन्त्य अल् (आकार) को ही होता है।

**उदाहरण–** (१) ✓ दा + यत् (= 'य'–'अचो यत्', 'आ' = 'ई'–ईद्यति', 'ई' = 'ए'–गुण–'सार्वधातुकार्धधातुकयोः', प्राति० संज्ञा, 'सु' = 'अम्', पूर्वरूप) = देयम् (देने योग्य)। (२) ✓ ग्लै + यत् (= 'य', 'ऐ' = 'आ'–आत्व–'आदेच उपदेशेऽशिति')– ग्ला य ('आ' = 'ई'–ईत्व–'ईद्यति', 'ई' = 'ए'–गुण, 'सु' = 'अम्', पूर्वरूप) = ग्लेयम् (= खिन्न होना)।

(१०२१) **पद–** पोः, अदुपधात्। **अनुवृत्ति–** यत्। **विधिसूत्र।**

**मूलार्थ–** अदुपध पवर्गान्त धातु से यत् प्रत्यय होता है। 'ऋहलोर्ण्यत्' से प्राप्त ण्यत् का यह सूत्र अपवाद है। शप्यम्। लभ्यम्।

**विमर्श–** 'धातोः' का अधिकार है। 'अचो यत्' (१०१९) से 'यत्' की अनुवृत्ति आ रही है। अत् उपधा यस्य सः अदुपधः, तस्मात् अदुपधात् (बहुव्रीहि समास)। 'पोः' पद 'धातोः' का विशेषण होने से तदन्त विधि होती है। तदनुसार– ''जिसके अन्त में पवर्ग और उपधा में अत् (अ) हो, उस धातु से यत् प्रत्यय होता है।''

**उदाहरण–** (१) ✓ शप् + यत् (= 'य'–'पोरदुपधात्', विभक्ति–'सु', 'सु' = 'अम्', पूर्वरूप) = शप्यम् (= शाप के योग्य)। (२) ✓ लभ् + यत् (पूर्ववत् प्रक्रिया) = लभ्यम् (= प्राप्त करने योग्य)।

(१०२२) **पद–** आङः, यि। **अनुवृत्ति–** लभेः, नुम्। **विधिसूत्र।**

**मूलार्थ–** 'आङ्' से परे लभ् धातु को नुम् आगम होता है, यकारादि प्रत्यय के परवर्ती रहते। आलम्भ्यो गौः।

**विमर्श–** प्रकृत सूत्र में 'लभेश्च' (७।१।६४) से 'लभेः' तथा 'इदितो नुम् धातोः' (७।१।५८) से 'नुम्' की अनुवृत्ति आती है। 'यि' में विषयसप्तमी होने से 'यकारादिप्रत्ययविषये' अर्थ होता है। इस प्रकार– ''आङ् से परवर्ती यकारादि प्रत्यय के विषय में लभ् धातु को नुम् (= न्) आगम होता है।''

**उपात्प्रशंसायाम् ७।१।६६ ।** उपपूर्वाल्लभेर्नुम् स्यात्प्रशंसायाम्। उपलम्भ्यः साधुः। स्तुतौ किम्? उपलब्धुं शक्यः–उपलभ्यः। **( १०२४ ) शकिसहोश्च ३।१।९९ ।** शक्यम्। सह्यम् **(१०२५) गदमदचरयमश्चानुपसर्गे ३।१।११० ।** एभ्योऽनुपसर्गेभ्यो यत् स्यात्। गद्यम्। मद्यम्। चर्यम्। *** चरेराङि चाऽगुरौ *।** आचर्यो देशः। अगुरौ किम्? आचार्यो

---

(१०२३) **उपादिति।** प्रशंसायामुपपूर्वाल्लभेर्नुम् स्यादित्यर्थः। **उपलम्भ्यः**– उपपूर्वकाद् लम्भ्धातोः 'पोरदुपधादि'ति यति, 'उपात्प्रशंसायाम्' इत्यनेन नुमि, अनुस्वारे, परसवर्णे, सौ, रुत्वे विसर्गे कृते 'उपलम्भ्यः' इति सिद्धम्।

(१०२४) **शकीति।** यत्स्यादित्यर्थः।

(१०२५) **गदमदेति।** यत्स्यादिति शेषः। **चरेरिति।** आङि उपसर्गे सत्यपि चरधातोः गुरुभिन्नार्थे यत्स्यादित्यर्थः। आचर्यो देशः = गन्तव्य इत्यर्थः। गुरुवाचकत्वे तु–आचार्यः। ण्यति रूपम्।

---

**उदाहरण**– आ + ✓ लभ् + यत् (= 'य'–'पोरदुपधात्', नुम् = 'न्'– 'आङो यि', न् = –अनुस्वार = 'म्'–परसवर्ण, सु = र् = :) = आलम्भ्यः (आलम्भन करने योग्य)।

(१०२३) **पद**– उपात्, प्रशंसायाम्। **अनुवृत्ति**– यि, लभेः, नुम्। **विधिसूत्र।**

**मूलार्थ**– प्रशंसा अर्थ में 'उप' उपसर्ग से परवर्ती लभ् धातु को नुम् का आगम होता है, यकारादि प्रत्यय की विवक्षा में। उपलम्भ्यः साधुः, इत्यादि।

**विमर्श**– यहाँ 'आङो यि' (१०२२) से 'यि', 'लभेश्च' से 'लभेः' तथा 'इदितो नुम्०' से 'नुम्' पदों की अनुवृत्ति आती है। तदनुसार– ''प्रशंसा अर्थ गम्यमान होने पर 'उप' उपसर्ग से उत्तरवर्ती लभ् धातु को यकारादि प्रत्यय के परे रहते नुम् होता है।''

**उदाहरण**– उप + ✓ लभ् + यत् (= 'य'–'पोरदुपधात्', नुम् = 'न्'–'उपात्प्रशंसायाम्', न् = अनुस्वार = 'म्'–परसवर्ण, सु = स् = र् = :) = उपलम्भ्यः (= प्राप्त करने योग्य साधु है अर्थात् 'साधु का सान्निध्य प्राप्त करने योग्य है'। यहाँ प्रशंसा व्यक्त की जा रही है।)।

**प्रत्युदाहरण– स्तुतौ किमिति?** सूत्र में 'प्रशंसायाम्' पद स्तुतिपरक होने से अन्य अर्थ में नुम् नहीं होता। यथा 'प्राप्त होने योग्य' अर्थ में उप + लभ् + यत् = 'उपलभ्यः'। यहाँ 'नुम्' नहीं होता, क्योंकि यहाँ प्रशंसा व्यक्त नहीं की जा रही है।

(१०२४) **पद**– शकिसहोः, च। **अनुवृत्ति**– यत्। **विधिसूत्र।**

**मूलार्थ**– शक् और सह् धातु से यत् प्रत्यय होता है। शक्यम्। सह्यम्।

**विमर्श**– पूर्वोक्त सूत्र 'अचो यत्' (१०१९) से 'यत्' की अनुवृत्ति आती है। तदनुसार– ''शक् और सह् धातुओं से यत् प्रत्यय होता है।''

**उदाहरण**– (१) ✓ शक् + यत् ( = 'य'–'शकिसहोश्च', प्राति० संज्ञा, 'सु' = 'अम्', पूर्वरूप) = शक्यम्। (२) ✓ सह् + यत् (पूर्ववत् प्रक्रिया) = सह्यम् (= सहन करने योग्य)।

(१०२५) **पद**– गद-मद-चर-यमः, च, अनुपसर्गे। **अनुवृत्ति**– यत्। **विधिसूत्र।**

**मूलार्थ**– उपसर्ग रहित गद् आदि धातुओं से 'यत्' प्रत्यय होता है। गद्यम्। मद्यम्। चर्यम् इत्यादि।

**विमर्श**– सूत्रार्थ की पूर्ति हेतु 'अचो यत्' (१०१९) से 'यत्' की अनुवृत्ति आती है। 'धातोः' का अधिकार है। अतः ''उपसर्ग सहित गद, मद, चर और यम धातुओं से भी यत् (= य) प्रत्यय होता है।''

**गुरुः। यम्यम्। ( १०२६ ) अवद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेषु ३।१।१०१ । अवद्यादयस्त्रयो निपात्यन्ते, क्रमाद् गर्ह्यादिष्वर्थेषु। अवद्यं पापम्। पण्यं विक्रेयम्। शतेन वर्या कन्या। ( १०२७ ) वह्यं करणम् ३।१।१०२ । वह्यमिति यत्प्रत्ययान्तं निपात्यते,**

---

(१०२६) **अवद्यपण्येति**। यदन्ता निपात्यन्ते इति भावः।

(१०२७) **वह्यमिति**। 'अचो यदि'त्यतो 'यदि'त्यनुवर्तते। तेन करणार्थे वह्धातोः यत् निपात्यते इत्यर्थः। अन्यत्र ण्यति वाह्यमिति।

---

**उदाहरण**– (१) ✓ गद् + यत् (= 'य'–'गदमदचरयमश्चानुपसर्गे', 'सु' = 'अम्', पूर्वरूप) = गद्यम् (= बोलने योग्य)। (२) ✓ मद् + यत् (प्रक्रिया पूर्ववत्) = मद्यम् (= प्रसन्नता योग्य)। (३) ✓ चर् = यत् = चर्यम् (खाने योग्य)। (४) ✓ यम् + यत् = यम्यम् (= शान्त करने योग्य)।

**(वा०)**– आङ् उपसर्ग से परवर्ती चर् धातु से यत् प्रत्यय अगुरु = (गुरु-भिन्न) अर्थ में होता है।

**उदाहरण**–आ + ✓ चर् + यत् (= 'य'–'चरेराङि चाऽगुरौ' वार्तिक से, सु = स् = र् = :) = आचर्यः (= गन्तव्य देश)। **प्रत्युदाहरण– अगुरौ किमिति**। वार्तिक में 'अगुरौ' पद का ग्रहण होने से गुरु-भिन्न अर्थ में ही यत् प्रत्यय होता है। अतः गुरु अर्थ में यत् नहीं होता। आ + ✓ चर् + ण्यत् (= 'य'–गुरु अर्थ में–'ऋहलोर्ण्यत्', 'अ' = 'आ'–वृद्धि–'अत उपधायाः', सु = स् = र् = :) = आचार्यः (= गुरु)।

(१०२६) **पद**– अवद्यपण्यवर्याः, गर्ह्यपणितव्यानिरोधेषु। **अनुवृत्ति**– यत्। **विधिसूत्र**।

**मूलार्थ**– गर्ह्य, पणितव्य और अनिरोध अर्थ में क्रमशः अवद्य, पण्य और वर्य शब्द यत्प्रत्ययान्त निपातित होते हैं। अवद्यम् = पापम् इत्यादि।

**विमर्श**– 'धातोः' का अधिकार है। पूर्वसूत्र (१०१९) से 'यत्' की अनुवृत्ति आ रही है। तदनुसार–'अवद्य', 'पण्य' और 'वर्य' शब्द क्रमशः 'गर्ह्य (निन्दनीय), पणितव्य (बेचने योग्य) और वर्य (अप्रतिबन्ध) अर्थों में यत्प्रत्ययान्त निपातन किये जाते हैं।

**उदाहरण**– (१) नञ् (अ) + ✓ वद् (यहाँ 'वदः सुपि क्यप् च' से यत् और क्यप् प्राप्त होने पर गर्हा अर्थ में 'अवद्यपण्यवर्याः०' सूत्र से यत् ही निपातन से होता है। अ वद् + यत् (= 'य', 'सु' = 'अम्', पूर्वरूप) = अवद्यम् पापम् (= निन्दनीय, न करने योग्य)। (२) ✓ पण् + ण्यत् प्राप्त होने पर निपातनात् यत् (= 'य', पूर्ववत् प्रक्रिया) = पण्यम् (= बेचने योग्य)। (३) ✓ वृ + 'क्यप्' प्राप्त होने पर निपातनात् यत् (= 'य', ऋ = 'अ'–गुण, रपर, स्त्रीत्व विवक्षा में 'टाप्' = 'आ', दीर्घ) = वर्या (= वरण करने योग्य)।

(१०२७) **पद**– वह्यम्, करणम्। **अनुवृत्ति**– यत्। **विधिसूत्र**।

**मूलार्थ**– करण अर्थ में यत्प्रत्ययान्त 'वह्य' शब्द निपातित होता है।

**विमर्श**– 'धातोः' का अधिकार है। पूर्वसूत्र 'अचो यत्' (१०१९) से 'यत्' की अनुवृत्ति आती है। तदनुसार– ''करण अर्थ में वह् धातु से यत्प्रत्ययान्त 'वह्य' निपातन किया जाता है।''

**उदाहरण**– ✓ वह् + यत् (= 'य' निपातनात्–'वह्यं करणम्' ण्यत् का बाधकर, 'सु' = 'अम्', पूर्वरूप) = वह्यम्। करण-भिन्न अर्थ में ✓ वह् + ण्यत् (= 'य'–'ऋहलोर्ण्यत्', 'अ' = 'आ'–वृद्धि, विभक्तिकार्य) = वाह्यम्।

करणेऽर्थे। वहन्त्यनेनेति—वह्यं शकटम्। वाह्यमन्यत्। **( १०२८ ) अर्यः स्वामिवैश्ययोः ३।१।१०३** । 'अर्य' इति यत्प्रत्ययान्तं निपात्यते, स्वामिवैश्ययोरर्थयोः। अनयोः किम्? आर्यो ब्राह्मणः। **( १०२९ ) उपसर्या काल्या प्रजने ३।१।१०४** । उपसर्येति यत्प्रत्ययान्तं निपात्यते, गर्भग्रहणे प्राप्तकाला चेदित्यर्थः। उपसर्या गौः। गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः। प्रजने काल्येति किम्? उपसार्या काशी। प्राप्तव्येत्यर्थः। **( १०३० ) अजर्यं सङ्गतम् ३।१।१०५**। 'अजर्यमि'ति नञ्पूर्वाज्जीर्यतेर्यत्प्रत्ययान्तं निपात्यते, सङ्गतं विशेष्यं चेत्। न जीर्यतीत्यजर्यम्—सतां सङ्गतम्। **( १०३१ ) वदः**

---

(१०२८) **अर्य इति**। स्वामिनि वैश्ये चार्थे ऋधातोः ण्यतोऽपवादो यत् निपात्यते। अन्यत्र ण्यति वृद्धौ 'आर्यः' इति।

(१०२९) **उपसर्या इति**। उपपूर्वकात् सृधातोर्यन्निपात्यते।

(१०३०) **अजर्यमिति**। नञ्पूर्वकाद् जृष्धातोः कर्तरि यत्प्रत्ययो निपात्यते, सङ्गतं चेद् विशेष्यं स्यादित्यर्थः।

---

(१०२८) **पद**— अर्यः, स्वामिवैश्ययोः। **अनुवृत्ति**— यत्। **विधिसूत्र**।

**मूलार्थ**— स्वामी और वैश्य अर्थ में यत्प्रत्ययान्त 'अर्य' शब्द निपातित होता है।

**विमर्श**— पूर्ववत् 'यत्' पद की अनुवृत्ति आती है। अतः ''स्वामी और वैश्य अर्थ अभिधेय हो तो 'ऋ' धातु से यत्प्रत्ययान्त 'अर्य' निपातन होता है।''

**उदाहरण**— ✓ ऋ + यत् (= 'य'– निपातनात् 'अर्यः स्वामिवैश्ययोः', 'ऋ' = 'अ'–गुण, रपर, सु = स् = र् = :) = अर्यः।

**प्रत्युदाहरण— अनयोः किमिति?**— सूत्र में पठित स्वामी और वैश्य अर्थ से भिन्न अर्थों में यत्प्रत्ययान्त निपातन नहीं होगा। अतः 'आर्यो ब्राह्मणः' में ✓ ऋ + ण्यत् = ('य', ऋ = 'आ'–वृद्धि, रपर, विभक्तिकार्य) = आर्यः।

(१०२९) **पद**— उपसर्या, काल्या, प्रजने। **अनुवृत्ति**— यत्। **विधिसूत्र**।

**मूलार्थ**— गर्भग्रहण प्राप्तकाल अर्थ में 'उपसर्या' यह यत्प्रत्ययान्त निपातन होता है। उपसर्या गौः (गर्भाधान के लिए वृषभ (= बैल) के पास जाने के योग्य) इत्यादि।

**विमर्श**— पूर्ववत् 'यत्' की अनुवृत्ति आ रही है। अतः '' 'उपसर्या' पद उप + ✓ सृ धातु से यत्प्रत्ययान्त प्रथम गर्भग्रहण समय अर्थ में निपातित होता है।''

**उदाहरण**— उप + ✓ सृ + यत् (= 'य' निपातनात्–'उपसर्या०', 'ऋ' = 'अ'–गुण, रपर, स्त्रीत्व विवक्षा में टाप् = 'आ', दीर्घ, सु, सुलोप) = उपसर्या गौः (गर्भाधानार्थ वृषभ के पास जाने योग्य गाय)।

**प्रत्युदाहरण— प्रजने काल्येति किम्?**— सूत्र में 'प्रजने काल्या' क्यों ग्रहण किया है? इस पद के अभाव में 'उपसार्या काशी' में भी यत् होने लगेगा। अतः उक्त पद की सार्थकता है। अन्य अर्थ में– उप + ✓ सृ + ण्यत् (= 'य', वृद्धि, रपर, टाप्, दीर्घ, विभक्तिकार्य) = उपसार्या काशी (प्राप्तव्य काशी)।

(१०३०) **पद**— अजर्यम्, सङ्गतम्। **अनुवृत्ति**— यत्। **विधिसूत्र**।

**मूलार्थ**— सङ्गत विशेष्य रहते 'अजर्य' शब्द निपातित होता है।

**सुपि क्यप् च ३।१।१०६** । अनुपसर्गे सुप्युपपदे वदेर्भावे क्यप् स्यात्। चाद्यत्। ब्रह्मोद्यम्। ब्रह्मवद्यम्। **( १०३२ ) भुवो भावे ३।१।१०७** । भुवः क्यप् स्याद्भावे। ब्रह्मणो भावो ब्रह्मभूयम्। **( १०३३ ) हनस्त च ३।१।१०८** । अनुपसर्गे सुप्युपपदे हन्तेर्भावे तकारोऽन्तादेशः स्यात्। चात्क्यप्। ब्रह्मणो हननं ब्रह्महत्या। **( १०३४ )**

---

(१०३१) **वदः सुपीति**। 'गदमदचर०' इत्यतः मण्डूकप्लुतगत्या 'अनुपसर्गे' इत्यनुवर्तते, 'अचो यत्' इत्यतो 'यत्' इति च। **तदाह–'अनुपसर्गे' इत्यादिना। ब्रह्मोद्यमिति**। ब्रह्मपूर्वक-वद्धातोः 'वदः सुपि क्यप् चे'त्यनेन क्यपि यजादित्वात्सम्प्रसारणे उत्वे 'सम्प्रसारणाच्चे'ति पूर्वरूपे गुणे, सावमि, पूर्वरूपे 'ब्रह्मोद्यमि'ति। चाद्यति कृते 'ब्रह्मवद्यमि'ति रूपम्।

(१०३२) **भुवो भावे**। 'वदः सुपी'त्यतः सुपि क्यप् चानुवर्तेते। तदाह–**भुव इति**।

(१०३३) **हनस्त चेति**। अनुपसर्गे सुप्युपपदे हन्धातोर्भावे क्यप् स्यात् तकार-श्चान्तादेशः। **ब्रह्महत्या इति**। हन्धातोः 'हनस्त चे'ति क्यपि नकारस्य तकारे स्त्रीत्वविवक्षायां टापि सौ 'हल्ङ्याब्भ्यः' इति सुलोपे 'ब्रह्महत्या' इति।

---

**विमर्श–** पूर्ववत् 'यत्' की अनुवृत्ति आती है। तदनुसार– ''यदि सङ्गत विशेष्य हो तो नञ्-पूर्वक जृष् धातु से यत्प्रत्ययान्त 'अजर्य' निपातन किया जाता है।''

**उदाहरण–** नञ् = अ + जृ + यत् (= 'य' निपातनात्–'अजर्यं सङ्गतम्', 'ॠ' = 'अ'-गुण, रपर, 'सु' = 'अम्', पूर्वरूप) = अजर्यम्। (कभी न पुरानी होने वाली आर्य-सङ्गति)।

(१०३१) **पद–** वदः, सुपि, क्यप्, च। **अनुवृत्ति–** यत्। **विधिसूत्र**।

**मूलार्थ–** उपसर्ग-भिन्न सुबन्त उपपद रहते वद् धातु से क्यप् प्रत्यय होता है। चकार से पक्ष में यत् प्रत्यय भी होता है। ब्रह्मोद्यम् इत्यादि।

**विमर्श–** यहाँ 'गदमदचरयमश्चानुपसर्गे' (३।१।१००) से मण्डूकप्लुतगत्या 'अनुपसर्गे' तथा 'अचो यत्' (१०१९) से 'यत्' की अनुवृत्ति आती है। तदनुसार– ''अनुपसर्ग सुबन्त उपपद रहते वद् धातु से क्यप् प्रत्यय होता है तथा चकार से यत् भी होता है।

**उदाहरण–** ब्रह्म + ✓ वद् + क्यप् (= 'य'–'वदः सुपि क्यप् च', 'व्' = 'उ'–सम्प्रसारण, पूर्वरूप, अ + उ = 'ओ'–गुण, 'सु' = 'अम्', पूर्वरूप) = ब्रह्मोद्यम्। यत्प्रत्यय पक्ष में–ब्रह्मवद्यम् (ब्रह्म का कथन)।

(१०३२) **पद–** भुवः, भावे। **अनुवृत्ति–** सुपि, क्यप्, अनुपसर्गे। **विधिसूत्र**।

**मूलार्थ–** अनुपसर्ग सुबन्त उपपदक भू धातु से भाव अर्थ में क्यप् प्रत्यय होता है।

**विमर्श–** 'धातोः' का अधिकार है। 'गदमद०' (३।१।१००) से 'अनुपसर्गे' तथा 'वदः सुपि०'(१०३१) से 'सुपि' और 'क्यप्' पदों की अनुवृत्ति आ रही है। इस प्रकार–''अनुपसर्ग सुबन्त उपपद रहने पर भू धातु से भाव अर्थ में क्यप् प्रत्यय होता है।''

**उदाहरण–** ब्रह्म + ✓ भू + क्यप् (= 'य'–'भुवो भावे', प्राति० संज्ञा, 'सु' = 'अम्', पूर्वरूप) = ब्रह्मभूयम् (= ब्रह्मत्व)।

(१०३३) **पद–** हनः, त, च। **अनुवृत्ति–** भावे, सुपि, क्यप्, अनुपसर्गे। **विधिसूत्र**।

**मूलार्थ–** अनुपसर्ग सुबन्त उपपदक हन् धातु को तकार अन्तादेश होता है, चकारात् भाव अर्थ में क्यप् भी होता है।

**(१५१) हन्तेरच् घुर च।** घोरम्। **(१५२) तरतेर्ड्रिः।** त्रयः। त्रीन्। **(१५३) ग्रहेरनिः।** ग्रहणिः। **(१५४) प्रथेरमच्।** प्रथमः। **(१५५) चरेश्च।** चरमः। **(१५६) मङ्गेरलच्।** मङ्गलम्।

**इत्युणादिप्रकरणम् ।**



---

(१५१) **हन्तेरिति।** अच् स्यात् घुर् चादेशश्चेत्यर्थः।

(१५२) **तरतेरिति।** ड्रिः स्यात्। **'त्रयः'**– तृधातोः ड्रिप्रत्ययेऽनुबन्धलोपे, डित्त्वाट्टिलोपे त्रि इत्यस्य जसि 'त्रयः' इति।

(१५३) **ग्रहेरिति।** ग्रह्धातोरनिः स्यादिति।

(१५४) **प्रथेरिति।** अमच् स्यादित्यर्थः।

(१५५) **चरेरिति।** अमच्प्रत्ययः स्यादित्यर्थः।

(१५६) **मङ्गेरिति। अलच् स्यादिति। मङ्गलम्**– मगिधातोः इदित्त्वान्नुमि अनुस्वारे परसवर्णे 'मङ्गेरलच्' इत्यनेन अलच्प्रत्ययेऽनुबन्धलोपे, सुबादिकार्ये 'मङ्गलमि'ति।

**इत्युणादिप्रकरणम् ।**



---

(१५१) **पद**– हन्तेः, अच्, घुर् च। **विधिसूत्र।**

**मूलार्थ**– हन् धातु से अच् प्रत्यय होता है और धातु को घुर् आदेश होता है।

**उदाहरण**– ✓ हन् + अच् (= 'अ', 'हन्' = 'घुर्'–'हन्तेरच्०', वि० का०) = घोरम्।

(१५२) **पद**– तरतेः, ड्रिः। **विधिसूत्र।**

**मूलार्थ**– तृ धातु से 'ड्रि' प्रत्यय होता है।

**उदाहरण**– ✓ तृ + ड्रि (= 'रि'–'तरतेर्ड्रिः', डित्त्वात् 'टि' का लोप)–त्रि (प्रथमा बहुव० जस् = अस्, गुण, अयादेश, स् = र् = :) = त्रयः।

(१५३) **पद**– ग्रहेः, अनिः। **विधिसूत्र।**

**मूलार्थ**– ग्रह् धातु से 'अनि' प्रत्यय होता है।

**उदाहरण**– ✓ ग्रह + 'अनि' (णत्व, वि० का०) = ग्रहणिः।

(१५४) **पद**– प्रथेः, अमच्। **विधिसूत्र।**

**मूलार्थ**– प्रथ् धातु से अमच् प्रत्यय होता है।

**उदाहरण**– ✓ प्रथ् + अमच् (= 'अम', वि० का०) = प्रथमः।

(१५५) **पद**– चरेः, च। **अनुवृत्ति**– अमच्। **विधिसूत्र।**

**मूलार्थ**– चर् धातु से भी अमच् प्रत्यय होता है।

**उदाहरण**– ✓ चर् + अमच् (= 'अम', वि० का०) = चरमः।

(१५६) **पद**– मङ्गेः, अलच्। **विधिसूत्र।**

**मूलार्थ**– मगि धातु से अलच् प्रत्यय होता है।

**उदाहरण**– ✓ मगि (इदित्, नुम्, अनुस्वार, परसवर्ण)–मङ्ग + अलच् (= 'अल'–'मङ्गेरलच्', सु, 'सु' = 'अम्', पूर्वरूप) = मङ्गलम्।

**उणादि-प्रकरण समाप्त ।**



## अथोत्तरकृदन्तप्रकरणम्

**(१२६१) उणादयो बहुलम् ३।३।१** । एते वर्तमाने संज्ञायां च बहुलं स्युः। केचिदविहिता अप्यूह्याः।

"संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु"॥

**(१२६२) दाशगोघ्नौ सम्प्रदाने ३।४।७३** । एतौ निपात्येते। दाशन्ति तस्मै दाशः। गां हन्ति तस्मै गोघ्नः अतिथिः। **(१२६३) तुमुन्ण्वुलौ क्रियायां**

---

(१२६१) **उणादय इति**। 'वर्तमाने लडि'त्यतः वर्तमान इति, 'पुवः संज्ञायामि'त्यतः संज्ञायामिति चानुवर्तते। अत आह-**एते वर्तमान इत्यादिना। संज्ञास्विति**। संज्ञासु = नामशब्देषु (गवादिशब्देषु डित्थडवित्थादिषु च) धातुरूपाणि ऊहनीयाः = कल्पनीयाः। ततो धातुभ्यः परे यथासम्भवं प्रत्ययाः उण् ञुण् डो इत्यादयः कल्पनीयाः। तेषु च कार्यात् = कार्यानुरूपमित्यर्थः, अनूबन्धम् - अनुबन्धं = णकारककारादिकं, विद्यात् = जानीयात्। एतत् = एतावन्मात्रमेवोणादिषु शास्त्रम् = अनुशासनमस्तीत्यर्थः। भाष्यस्थेयं कारिका। शाकटायनप्रणीतानि उणादिसूत्राणि तु अस्यैव बहुलग्रहणस्य प्रपञ्च इत्यर्थः। बहुलग्रहणेनैव महर्षिणा पाणिनिना तानि सङ्ग्रहीतानीति भावः।

(१२६२) **दाशगोघ्नाविति**। अच्टक्प्रत्ययान्तौ सम्प्रदानेऽर्थे एतौ निपात्येते इत्यर्थः।

---

(१२६१) **पद**– उणादयः, बहुलम्। **अनुवृत्ति**– वर्तमाने, संज्ञायाम्। **विधिसूत्र**।

**मूलार्थ**– वर्तमान काल में संज्ञा के वाच्य होने पर उणादि प्रत्यय बहुल प्रकार से होते हैं। इनमें विधान न किये हुए भी प्रत्यय स्वयं कल्पित कर लेना चाहिए।

**'संज्ञासु'**– संज्ञा शब्दों में यथासम्भव धातु की कल्पना करनी चाहिए और पुनः उससे प्रत्यय की कल्पना करनी चाहिए। प्रयोगों में गुणाभाव, वृद्धि आदि कार्यों को देखकर प्रत्ययों से अनुबन्ध की कल्पना भी करनी चाहिए। उणादियों में यही शास्त्रविधान है।

**विमर्श**– प्रकृत सूत्र में 'वर्तमाने लट्'(३।२।१२३) से 'वर्तमाने' तथा 'पुवः संज्ञायाम्' (३।२।१८५) से 'संज्ञायाम्' की अनुवृत्ति आती है। 'धातोः' का अधिकार है। तदनुसार-"धातु से उण् आदि प्रत्यय वर्तमान काल में संज्ञा के वाच्य होने पर बहुल से होते हैं।" बहुल का विवेचन 'कृत्यल्युटो बहुलम्' (कृत्यप्रकरणम्) सूत्र की व्याख्या में किया जा चुका है। प्रकृत में बहुल ग्रहण का प्रयोजन यह है कि यदि किसी शब्द में प्रत्यय का विधान करने वाला कोई सूत्र न हो तो स्वयं प्रकृति-प्रत्ययों की कल्पना कर लेना चाहिए। उदाहरणार्थ-'ऋफिड्ड' शब्द में ऋ धातु से फिड्ड प्रत्यय की कल्पना की जानी चाहिए। 'ऋ' को गुणनिषेध करने के लिए प्रत्ययों को कित् आदि भी कहना चाहिए।

(१२६२) **पद**– दाशगोघ्नौ, सम्प्रदाने। **विधिसूत्र**।

**मूलार्थ**– दाश और गोघ्न शब्द सम्प्रदान अर्थ में निपातित होते हैं। दाशः। गोघ्नः।

**विमर्श**– दाश और गोघ्न कृदन्त शब्द सम्प्रदान-कारक में निपातन किये जाते हैं। तदनुसार-"दाशृ धातु से अच् तथा गोपूर्वक हन् धातु से टक् प्रत्यय निपातन से होता है।"

**उदाहरण**– (१) ✓ दाशृ + अच् (= 'अ' निपातन से-'दाशगोघ्नौ सम्प्रदाने', प्राति० संज्ञा,

**क्रियार्थायाम् ३।३।१०** । क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः। मान्तत्वादव्ययत्वम्। कृष्णं द्रष्टुं याति। कृष्णं दर्शको याति। **( १२६४ ) कालसमयवेलासु**

---

(१२६३) **तुमुन्निति**। धातोरित्यधिकृतम्। 'भविष्यति गम्यादयः' इत्यतः भविष्यतीत्यनुवर्तते। क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था क्रिया, तस्यामुपपदे = क्रियोद्देश्यीभूतक्रियावृत्तिधातावुपपदे इत्यर्थः। तदाह–**क्रियार्थायामिति। द्रष्टुमिति**। 'दृशिर् प्रेक्षणे' इत्यस्माद्धातोः 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इत्यनेन तुमुन्प्रत्ययेऽनुबन्धलोपे 'दृश् तुम्' इति जाते, 'सृजिदृशोर्झल्यमकिति' इत्यनेन अमि अनुबन्धलोपे यणि 'व्रश्चभ्रस्ज०' इत्यादिना शस्य मूर्धन्यादेशे, ष्टुत्वे संयोगे कृते प्रातिपदिकत्वे सौ 'कृन्मेजन्तः' इत्यनेन मान्तत्वादव्ययसंज्ञायाम्, 'अव्ययादाप्सुपः' इत्यनेन सोर्लुकि 'द्रष्टुमि'ति।

(१२६४) **कालसमयेति**। अत्रार्थोपलक्षणार्थं पर्यायग्रहणम्। अतः कालार्थेषूपपदेषु धातोः तुमुन् स्यादित्यर्थः।

---

सु = स् = र् = :) = दाशः (जिसके लिए दिया जाता है)। (२) गो + ✓ हन् + टक् (= 'अ'- निपातन से सम्प्रदान अर्थ में, 'ह्' = 'घ्'-कुत्व, 'अ' उपधा का लोप-गमहन०', विभक्तिकार्य) = गोघ्नः (गां = दुग्धादिकं घ्नन्ति = प्राप्नुवन्ति यस्मै स गोघ्नोऽतिथिः = गौ का दूध आदि जिसके लिए प्राप्त किया जाता है, ऐसा अतिथि। अथवा गां = वाचम्, हन्ति = उच्चारयति अस्मै इति गोघ्नः अतिथिः। अर्थात् जिसके लिए स्वागत-वचनों का उच्चारण किया जाता है, ऐसा अतिथि।

(१२६३) **पद**– तुमुन्ण्वुलौ, क्रियायाम्, क्रियार्थायाम्। **अनुवृत्ति**– भविष्यति। **विधिसूत्र**।

**मूलार्थ**– क्रियार्थक क्रिया के उपपद रहते भविष्यत्काल अर्थ में धातु से तुमुन् और ण्वुल् प्रत्यय होते हैं। तुमुन् (= तुम्) प्रत्यय के मकारान्त होने से तदन्त शब्द की 'कृन्मेजन्तः' सूत्र से अव्यय संज्ञा होती है। कृष्णं द्रष्टुं याति, दर्शको याति।

**विमर्श**– प्रकृत सूत्र में 'भविष्यति गम्यादयः' (३।३।३) से 'भविष्यति' की अनुवृत्ति आती है। 'धातोः' का अधिकार है। क्रिया अर्थः = प्रयोजनं यस्याः सा क्रियार्था, तस्यां क्रियार्थायाम् (बहुव्रीहिः)। किसी क्रिया की सिद्धि के लिए जब दूसरी क्रिया की जाती है तो वह द्वितीय क्रिया प्रथम क्रिया की क्रियार्था क्रिया कहलाती है। इस प्रकार–''क्रियार्थक क्रिया उपपद हो तो भविष्यत् काल में तुमुन् और ण्वुल् प्रत्यय होते हैं''।

'तुमुन्' में उकार तथा नकार इत्संज्ञक है। 'तुम्' मात्र अवशिष्ट रहता है। 'ण्वुल्' में 'चुटू' से णकार तथा 'हलन्त्यम्' से लकार की इत्संज्ञा होती है। लोप होकर 'वु' मात्र शेष रहता है।

**उदाहरण**– (१) ✓ दृशिर् (दृश्) + तुमुन् (= 'तुम्'-'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्', अम् = 'अ'-सृजिदृशोर्झल्यमकिति', 'ऋ' = 'र्'-यण्, 'श्' = 'ष्'-'व्रश्चभ्रस्ज०', 'त्' = 'ट्'-ष्टुत्व, प्राति० संज्ञा, सु, अव्यय संज्ञा-'कृन्मेजन्तः', 'सु' का लुक्-'अव्ययादाप्सुपः') = द्रष्टुम्। कृष्णं द्रष्टुं याति (= कृष्ण को देखने के लिए जाता है)। (२) ✓ दृश् + ण्वुल् (= 'वु'-'तुमुन्ण्वुलौ०', 'वु' = 'अक'- 'युवोरनाकौ', 'ऋ' = 'अ'-गुण, रपर, प्रातिपदिक संज्ञा, सु = स् = र् = :) = दर्शकः।

(१२६४) **पद**– कालसमयवेलासु, तुमुन्। **विधिसूत्र**।

**मूलार्थ**– काल, समय और वेला उपपद रहने पर धातु से तुमुन् प्रत्यय होता है। कालः समयो वेला वा भोक्तुम्।

**तुमुन् ३।३।१६७ । कालः समयो वेला अनेहा वा भोक्तुम्। ( १२६५ ) भावे ३।३।१८ । सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ्। पाकः। ( १२६६ ) अकर्तरि च कारके संज्ञायाम् ३।३।१९ । कर्तृभिन्ने कारके घञ्। ( १२६७ ) घञि च**

---

(१२६५) **भावे**। भावो धात्वर्थः, स च द्विविधः–साध्यावस्थापन्नः सिद्धावस्थापन्नश्च। तत्र लिङ्गसंख्याद्यन्वययोग्ये सिद्धावस्थापन्ने भावे धात्वर्थे वाच्ये घञ् स्यादित्यर्थः। **पाकः–** पच्-धातोः 'भावे' इत्यनेन घञि, अनुबन्धलोपे 'चजोः कुः' इति चस्य कुत्वे, प्रातिपदिकत्वे सौ रुत्वे विसर्गे कृते 'पाकः' इति।

(१२६६) **अकर्तरि चेति**। 'पदरुजविशस्पृशो घञ्' इत्यतो घञित्यनुवर्तते। अत आह– **कर्तृभिन्न इति**।

(१२६७) **घञीति**। 'रञ्जेश्चे'त्यतः रञ्जेरिति, 'श्नान्नलोपः' इत्यतो नलोप इति चानुवर्तते।

---

**विमर्श–** 'धातोः' का अधिकार है। यहाँ सूत्र में काल, समय और वेला– इन तीनों पर्यायों का ग्रहण कालवाचक शब्दों के उपलक्षणार्थ किया गया है। अतः अन्य कालवाची शब्दों का भी ग्रहण किया जाता है। इस प्रकार– ''काल, समय, वेला आदि समयवाचक शब्दों के उपपद रहते धातु से तुमुन् प्रत्यय होता है''।

**उदाहरण–** ✓ भुज् + तुमुन् (= 'तुम्'–'कालसमयवेलासु तुमुन्', प्राप्त इट् का निषेध– 'एकाच उपदेशेऽनुदात्तात्', 'उ' = 'ओ'–लघूपधगुण, 'ज्' = 'ग्'–चोः कुः', 'ग्' = 'क्'–खरि च') = भोक्तुम्।

(१२६५) **पद–** भावे। **अनुवृत्ति–** घञ्। **विधिसूत्र**।

**मूलार्थ–** सिद्धावस्थापन्न धात्वर्थ वाच्य रहते धातु से घञ् प्रत्यय होता है। पाकः।

**विमर्श–** प्रकृत सूत्र में 'पदरुजविशस्पृशो घञ्' (३।३।१६) से 'घञ्' की अनुवृत्ति आती है। 'धातोः' का अधिकार है। धातु के अर्थ क्रिया को ही भाव कहते हैं। वह धात्वर्थ दो प्रकार का होता है– साध्यावस्थापन्न और सिद्धावस्थापन्न। भवति, पठति, पचति आदि तिङन्त पदों का धात्वर्थ साध्यावस्थापन्न होता है और पाकः, पठनम्, गमनम् आदि कृदन्त पदों में सिद्धावस्थापन्न। प्रकृत सूत्र द्वारा ''सिद्धावस्थापन्न भाव (धात्वर्थ) के वाच्य होने पर धातु से घञ् प्रत्यय होता है''।

'घञ्' प्रत्यय के घकार की 'लशक्वतद्धिते' से तथा ञकार की 'हलन्त्यम्' से इत्संज्ञा होती है। इत्संज्ञकों का लोप होने पर 'अ' मात्र शेष रहता है।

**उदाहरण–** ✓ डुपचष् (पच्) + घञ् (= 'अ'–'भावे', ञित् होने से 'अ' = 'आ'–उपधावृद्धि, 'च्' = 'क्'–'चजोः कु घिण्ण्यतोः', प्राति० संज्ञा, सु = स् = र् = :) = पाकः (पकाना)।

(१२६६) **पद–** अकर्तरि, च, कारके, संज्ञायाम्। **अनुवृत्ति–** घञ्। **विधिसूत्र**।

**मूलार्थ–** कर्तृभिन्न कारक में भी धातु से घञ् प्रत्यय होता है, संज्ञा के विषय में।

**विमर्श–** पूर्ववत् 'घञ्' की अनुवृत्ति आती है। 'धातोः' का अधिकार है। न कर्तरि = अकर्तरि (नञ्तत्पुरुष)। तदनुसार–''कर्ता से भिन्न अर्थात् कर्म, करण आदि कारक के वाच्य होने पर संज्ञा के विषय में धातु से घञ् प्रत्यय होता है''। संज्ञा का अर्थ यहाँ 'रूढि' है। ये शब्द यौगिकार्थ के साथ किसी अर्थ-विशेष में रूढ होते हैं।

(१२६७) **पद–** घञि, च, भावकरणयोः। **अनुवृत्ति–** रञ्जेः, नलोपः। **विधिसूत्र**।

**मूलार्थ–** भाव और करण अर्थ में विहित घञ् प्रत्यय के परवर्ती रहते रञ्ज् धातु के 'न्' का लोप होता है। रागः।

**भावकरणयोः ६।४।२७ । रञ्जेर्नलोपः। रागः। अनयोः किम्? रज्यत्यस्मिन्निति रङ्गः।**
**( १२६८ ) निवासचितिशरीरोपसमाधानेष्वादेश्च कः ३।३।४१ । एषु चिनोतेर्घञ्, आदेश्च कः। उपसमाधानं राशीकरणम्। निकायः। आकायम्। कायः। गोमयनिकायः।**

---

अत आह–**रञ्जेर्नलोप इति**। **रागः**– रञ्ज्धातोः 'अकर्तरि च कारके संज्ञायाम्' इत्यनेन घञि अनुबन्धलोपे 'घञि च भावकरणयोः' इत्यनेन नकारलोपे 'चजोः कु घिण्ण्यतोः' इत्यनेन कुत्वेन जस्य गकारे, उपधावृद्धौ, प्रातिपदिकत्वे सौ रुत्वे विसर्गे 'रागः' इति।

(१२६८) **निवासचितीति**। अत्र 'हस्तादाने चेरस्तेये' इत्यतः चेरिति, 'पदरुजे'त्यादितः घञिति चानुवर्तते। तदाह–**एष्विति**। **निकायः**– निपूर्वकचिधातोः 'निवासचितिशरीरोपसमाधानेष्वादेश्च कः' इति घञि चकारस्य ककारे वृद्धौ, आयादेशे प्रातिपदिकत्वे सौ, रुत्वे विसर्गे कृते 'निकायः' इति।

---

**विमर्श**– प्रकृत सूत्र में 'रञ्जेश्च' (६।४।२६) से 'रञ्जेः' तथा 'श्नान्नलोपः' (६।४।२३) से 'नलोपः' की अनुवृत्ति आती है। तदनुसार– ''भाव और करण अर्थ में विहित घञ् प्रत्यय के परवर्ती रहते भी रञ्ज् के नकार का लोप हो जाता है''।

**उदाहरण**– ✓ रञ्ज् + घञ् (= 'अ'–'अकर्तरि च कारके संज्ञायाम्', 'न्' का लोप–'घञि च भावकरणयोः', उपधावृद्धि, प्राति० संज्ञा, सु = स् = र् = ः) = रागः (जिससे रंगा जाय रंग, भाव में– रंगना या प्रेम रखना)।

**प्रत्युदाहरण**– अनयोः किम्? रज्यत्यस्मिन्निति रङ्गः। प्रकृत सूत्र में 'भावकरणयोः' पद का ग्रहण होने से रञ्ज् के नकार का लोप भाव या करण वाचक घञ् के परवर्ती रहने पर ही होगा, अन्य अर्थों में नहीं। अतः 'रज्यति अस्मिन्निति रङ्गः' (जिसमें मानव अनुरक्त होता है, ऐसी रंगशाला) में अधिकरण में घञ् होने से 'न्' का लोप नहीं होता। ✓ रञ्ज् + घञ् (अ), 'ज्' = 'ग्'–कुत्व, न् = अनुस्वार = 'ङ्'–परसवर्ण, विभक्तिकार्य) = रङ्गः।

(१२६८) **पद**– निवासचितिशरीरोपसमाधानेषु, आदेः. च, कः। **अनुवृत्ति**– चेः, घञ्, अकर्तरि च कारके संज्ञायाम्। **विधिसूत्र**।

**मूलार्थ**– निवास, चिति, शरीर और उपसमाधान अर्थों में चिञ् धातु से घञ् प्रत्यय होता है और आदि चकार को ककार आदेश भी होता है। उपसमाधान का अर्थ 'एकत्रित करना' है। निकायः। कायः। गोमयनिकायः।

**विमर्श**– यहाँ 'हस्तादाने चेरस्तेये' (३।३।४०) से 'चेः', 'पदरुज०' (३।३।१६) से 'घञ्' तथा 'अकर्तरि च कारके संज्ञायाम्' (१२६६) की अनुवृत्ति आती है। 'धातोः' का अधिकार है। अतः ''निवास, चिति, शरीर और उपसमाधान अर्थों में चि धातु से घञ् प्रत्यय होता है तथा धातु के आदि वर्ण के स्थान पर 'क्' आदेश होता है, कर्तृभिन्न कारक में संज्ञा का विषय हो तो।''

**उदाहरण**– (१) नि + ✓ चि + घञ् (= 'अ'– अधिकरण अर्थ में निवासस्थान वाच्य होने पर, 'च्' = 'क्'– निवासचितिशरीरोपसमाधानेष्वादेश्च कः')– नि कि अ ('इ' = 'ऐ'–वृद्धि–'अचो ञ्णिति', 'ऐ' = 'आय्' आदेश, प्राति० संज्ञा, सु = स् = र् = ः) = निकायः (घर)। (२) आङ् (आ) ✓ चि + घञ् (= 'अ', चिति = चयन करना अर्थ में, 'च्' = 'क्'–'निवासचिति०', पूर्ववत् वृद्धि, आय् आदेश, विभक्तिकार्य) = आकायम्। (३) ✓ चि + घञ् (= 'अ' शरीर अर्थ में, 'च्' = 'क्', पूर्ववत् वृद्धि, आय् आदेश, विभक्तिकार्य) = कायः (शरीर)। (४) गोमय + नि + ✓ चि + घञ्

**( १२६९ ) एरच् ३।३।५६ ।** इवर्णान्तादच्। चयः। **( १२७० ) ॠदोरप् ३।३।५७ ।** ऋवर्णान्तादुवर्णान्तादप्। करः। गरः। शरः। यवः। लवः। स्तवः। पवः। * घञर्थे क-

(१२६९) **एरच्**। 'भावे' इति 'अकर्तरि च कारके संज्ञायामि'ति चानुवर्तते। धातोरित्यधिकारः तद्विशेषणम् एरिति। तेन तदन्तविधिस्तदाह–**इवर्णान्तादिति**।

(१२७०) **ॠदोरप्**। ऋच्च उश्च ॠदुः, तस्मादिति समाहारद्वन्द्वः। तदाह–**ऋवर्णान्तादिति**। **करः**– कृधातोः 'ॠदोरप्' इत्यपि अनुबन्धलोपे 'सार्वधातुकार्धधातुकयोः' इति गुणे, अकारे रपरे विभक्तिकार्ये 'करः' इति।

= ('अ' उपसमाधान = 'एकत्रित करना' अर्थ में, 'च्' = 'क्' पूर्ववत् वृद्धि, ऐ = 'आय्' आदेश, विभक्तिकार्य) = गोमयनिकायः (गोबर का ढेर)।

(१२६९) **पद**– एः, अच्। **अनुवृत्ति**– भावे, अकर्तरि च कारके संज्ञायाम्। **विधिसूत्र**।

**मूलार्थ**– इवर्णान्त धातु से अच् प्रत्यय होता है। चयः।

**विमर्श**– प्रकृत सूत्र में 'भावे' (१२६५) तथा 'अकर्तरि च कारके संज्ञायाम्' (१२६६) की अनुवृत्ति आती है। 'धातोः' का अधिकार है। 'एः' पद धातु का विशेषण होने से तदन्तविधि होती है। इस प्रकार– ''भाव अर्थ में अथवा संज्ञा में कर्तृ-भिन्न कारक वाच्य हो तो इवर्णान्त धातु से अच् प्रत्यय होता है''। अच् में अन्त्य चकार 'हलन्त्यम्' से इत्संज्ञक होकर लुप्त हो जाता है। 'अ' मात्र शेष रहता है।

**उदाहरण**– ✓ चि + अच् (= 'अ'–'एरच्', आर्धधातुक संज्ञा, 'इ' = 'ए'–गुण–'सार्वधातुकार्धधातुकयोः', 'ए' = 'अय्' आदेश, सु = स् = र् = :) = चयः (चुनना)।

(१२७०) **पद**– ॠदोः, अप्। **अनुवृत्ति**– भावे, अकर्तरि च कारके संज्ञायाम्। **विधिसूत्र**।

**मूलार्थ**– ऋवर्णान्त और उवर्णान्त धातु से 'अप्' प्रत्यय होता है। करः। गरः। शरः इत्यादि।

**विमर्श**– पूर्ववत् 'भावे' और 'अकर्तरि च कारके संज्ञायाम्' की अनुवृत्ति आती है। 'धातोः' का अधिकार है। ऋच्च उश्च इति ॠदुः, तस्मात् 'ॠदोः'। यहाँ दकार उच्चारणार्थ है। तपरकरण नहीं है। तदनुसार– ''भाव में अथवा संज्ञा के विषय में कर्तृभिन्न कारक के वाच्य होने पर ऋवर्णान्त तथा उवर्णान्त धातु से 'अप्' प्रत्यय होता है। 'अप्' में अन्त्य पकार की इत्संज्ञा होती है। उसका लोप होकर 'अ' मात्र शेष रहता है।

**उदाहरण**– (१) ✓ कृ + अप् (= 'अ'–'ॠदोरप्', 'ॠ' = 'अ'–गुण–'सार्वधातुकार्धधातुकयोः', रपर, प्राति० संज्ञा, सु = स् = र् = :) = करः (बिखेरना, करण अर्थ में– हाथ)। (२) ✓ गॄ + अप् (= 'अ'–'ॠदोरप्', 'ॠ' = 'अ'–गुण, रपर, विभक्तिकार्य) = गरः (= निगलना, कर्म में– गीर्यत इति गिरः = विष)। (३) शॄ + अप् (= 'अ', गुण, रपर, विभक्तिकार्य) = शरः (बाण)। (४) ✓ यु + अप् (= 'अ', 'उ' = 'ओ'–गुण–'सार्वधातु०', 'ओ' = 'अव्' आदेश, विभक्तिकार्य) = यवः (मिलाना, कर्म में अप् होने पर 'जौ')। (५) ✓ लू + अप् = 'अ', गुण, 'अव्' आदेश, विभक्तिकार्य) = लवः (काटना)। (६) ✓ स्तु + अप् (= 'अ', पूर्ववत् गुण, अवादेश, विभक्तिकार्य) = स्तवः (स्तुति, स्तोत्र)। (७) ✓ पू + अप् (= 'अ', गुण, अवादेश, विभक्तिकार्य) = पवः (पवित्र करना)।

**(वा०)**– जिस अर्थ में घञ् होता है, उस अर्थ में क प्रत्यय का विधान भी कहना चाहिए।

**उदाहरण**– (१) ✓ प्र + ✓ ष्ठा (स्था) + क (= 'अ'–वा०–'घञर्थे कविधानम्' से, 'आ' का लोप–'आतो लोप इटि च', प्राति० संज्ञा, सु = स् = र् = :) = प्रस्थः (मापक-विशेष)। (२)

**विधानम्** *। **प्रस्थः। विघ्नः। ( १२७१ ) ड्वितः क्त्रिः ३।३।८८ । भावे, स्वभावात्। ( १२७२ ) क्त्रेर्मम् नित्यम् ४।४।२० । क्त्रिप्रत्ययान्तान्मप् निवृत्तेऽर्थे। पाकेन निर्वृत्तं पक्त्रिमम्। डुवप्-उप्त्रिमम्। ( १२७३ ) ट्वितोऽथुच् ३।३।८९ । अयमपि भावे। टुवेपृ**

---

(१२७१) **ड्वित इति**। 'भावे' इत्यनुवर्तते। यस्य धातोः 'डु' इत् स्यात्तस्मात् क्त्रि-प्रत्ययः स्यादित्यर्थः। **पक्त्रिमम्**– डुपचष् धातोः अनुबन्धलोपे 'ड्वितः क्त्रिः' इत्यनेन क्त्रि-प्रत्ययेऽनुबन्धलोपे 'क्त्रेर्मम् नित्यमि'त्यनेन मपि अनुबन्धलोपे प्रातिपदिकत्वे सौ, सोरमि पूर्वरूपे 'पक्त्रिमम्' इति।

(१२७२) **क्त्रेर्ममिति**। 'निर्वृत्तेऽक्षद्यूतादिभ्यः' इत्यतः 'निर्वृत्ते' इत्यनुवर्तते। तदाह– **क्त्रिप्रत्ययान्तादिति**।

(१२७३) **ट्वित इति**। टु इत् यस्य स ट्वित्, तस्माद्धातोः भावे अथुच् स्यादित्यर्थः। **वेपथुः**– टुवेपृ धातोः 'ट्वितोऽथुच्' इत्यनेन अथुच्प्रत्ययेऽनुबन्धलोपे, प्रातिपदिकत्वे सौ रुत्वे विसर्गे कृते 'वेपथुः' इति।

---

वि + ✓ हन् + क (= 'अ' वार्तिक से)– वि हन् अ ('अ' उपधा का लोप–'गमहन०', 'ह्' = 'घ्'–'हो हन्तेः०', विभक्तिकार्य) = विघ्नः (रुकावट)।

(१२७१) **पद**– ड्वितः, क्त्रिः। **अनुवृत्ति**– भावे, अकर्तरि च कारके संज्ञायाम्। **विधिसूत्र**।

**मूलार्थ**– जिस धातु का 'डु' इत् हो उससे भाव में क्त्रि प्रत्यय होता है।

**विमर्श**– 'धातोः' का अधिकार है। पूर्ववत् 'भावे' तथा 'अकर्तरि च कारके संज्ञायाम्' की अनुवृत्ति आती है। परन्तु लोक में भावार्थक प्रयोग ही देखे जाने से यहाँ 'भावे' ही सम्बद्ध होता है। अतः ''जिसका 'डु' इत् हो ऐसी धातु से भाव में क्त्रि प्रत्यय होता है''। 'क्त्रि' के आदि 'क्' की 'लशक्वतद्धिते' से इत्संज्ञा होती है। उसका लोप होकर 'त्रि' शेष रहता है।

(१२७२) **पद**– क्त्रेः, मप्, नित्यम्। **अनुवृत्ति**– निर्वृत्ते। **विधिसूत्र**।

**मूलार्थ**– निर्वृत्त अर्थ में क्त्रि-प्रत्ययान्त धातु से मप् प्रत्यय नित्य होता है। पक्त्रिमम्। उप्त्रिमम्।

**विमर्श**– प्रकृत सूत्र में 'निर्वृत्तेऽक्षद्यूतादिभ्यः' (४।४।१९) से 'निर्वृत्ते' की अनुवृत्ति आती है। 'क्त्रेः' में 'क्त्रि' प्रत्यय का ग्रहण है। अतः 'प्रत्ययग्रहणे तदन्ता ग्राह्याः' परिभाषा के अनुसार क्त्रि प्रत्ययान्त का ग्रहण किया जाता है। तदनुसार–''क्त्रि प्रत्यय जिसके अन्त में है उससे नित्य मप् प्रत्यय होता है और वह तद्धितसंज्ञक होता है''। मप् में अन्त्य 'प्' इत्संज्ञक है। उसका लोप होकर 'म' मात्र शेष रहता है।

**उदाहरण**– (१) पाकेन निर्वृत्तम्। ✓ डुपचष् (पच्) + क्त्रि (= 'त्रि'–'ड्वितः क्त्रिः', 'च्' = 'क्'–'चोः कुः')– पक् त्रि (मप् = 'म'–'क्त्रेर्मम् नित्यम्', प्राति० संज्ञा, 'सु' = 'अम्', पूर्वरूप) = पक्त्रिमम् (पाक से बना हुआ)। (२) ✓ डु वप् (वप्) + क्त्रि (= 'त्रि', 'व्' = 'उ' सम्प्रसारण–'वचिस्वपि०', पूर्वरूप, निर्वृत्त अर्थ में मप् = 'म', प्राति० संज्ञा, विभक्तिकार्य) = उप्त्रिमम् (बोने या काटने से उत्पन्न)।

(१२७३) **पद**– ट्वितः, अथुच्। **अनुवृत्ति**– भावे। **विधिसूत्र**।

**मूलार्थ**– 'टु' जिसका इत् हो ऐसे धातु से भाव में अथुच् प्रत्यय होता है। वेपथुः। श्वयथुः।

**विमर्श**– 'धातोः' का अधिकार है। पूर्ववत् 'भावे' की अनुवृत्ति आती है। तदनुसार– ''जिसका

**कम्पने–वेपथुः। श्वयथुः। ( १२७४ ) यजयाचयतविच्छप्रच्छरक्षो नङ् ३।३।९० । यज्ञः। याच्ञा। यत्नः। विश्नः। प्रश्नः। रक्ष्णः। ( १२७५ ) स्वपो नन् ३।३।९१ । स्वप्नः। ( १२७६ ) उपसर्गे घोः किः ३।३।९२ । प्रधिः। उपधिः। ( १२७७ ) स्त्रियां क्तिन्**

---

(१२७४) **यजयाचेति**। एभ्यः नङ्प्रत्ययः स्याद्भावे। **यज्ञः**– यज्धातोः 'यजयाचयतविच्छप्रच्छरक्षो नङ्' इत्यनेन नङ्प्रत्ययेऽनुबन्धलोपे 'यज् न' इति जाते, श्चुत्वेन ञकारे संयोगे, प्रातिपदिकत्वे सौ, रुत्वे विसर्गे च 'यज्ञः' इति।

(१२७५) **स्वपो नन्**। स्वप्धातोः नन्प्रत्ययः स्यादित्यर्थः।

(१२७६) **उपसर्ग इति**। उपसर्गपूर्वकात् 'घु'संज्ञकाद् धातोः किप्रत्ययः स्यादित्यर्थः।

---

'टु' इत् है ऐसे धातु से भाव में अथुच् प्रत्यय होता है''। 'अथुच्' में इत्संज्ञक अन्त्य चकार का लोप होने पर 'अथु' मात्र अवशिष्ट रहता है।

**उदाहरण**– (१) ✓ टु वेपृ (वेप्) + अथुच् (= 'अथु'–'ट्वितोऽथुच्', प्राति० संज्ञा, सु = स् = र् = :) = वेपथुः (= काँपना)। (२) ✓ टु ओ श्वि ('टु' की इत्संज्ञा–'आदिर्ञिटुडवः', इत्संज्ञक का लोप) = श्वि + अथुच् (= अथु, गुण, अयादेश, विभक्तिकार्य) = श्वयथुः (सूजन)।

(१२७४) **पद**– यजयाचयतविच्छप्रच्छरक्षः, नङ्। **अनुवृत्ति**– भावे, अकर्तरि च कारके संज्ञायाम्। **विधिसूत्र**।

**मूलार्थ**– यज्, याच्, यत्, विच्छ्, प्रच्छ् और रक्ष् धातुओं से नङ् प्रत्यय होता है। भाव में अथवा संज्ञा-विषयक कर्तृभिन्न कारक में। यज्ञः। याच्ञा आदि।

**विमर्श**– 'धातोः' का अधिकार है। पूर्ववत् 'भावे' और 'अकर्तरि च कारके संज्ञायाम्' की अनुवृत्ति आती है। तदनुसार– ''भाव अथवा संज्ञा के विषय में कर्तृभिन्न कारक अर्थ में यज्, याच्, यत्, विच्छ्, प्रच्छ् और रक्ष् धातुओं से 'नङ्' प्रत्यय होता है''।

नङ् का अन्त्य 'ङ्' इत्संज्ञक होकर लुप्त हो जाता है। 'न' मात्र अवशिष्ट रहता है।

**उदाहरण**– (१) ✓ यज् + नङ् (= 'न'–'यजयाचयतविच्छप्रच्छरक्षो नङ्', 'न्' = 'ञ्'–श्चुत्व, ज् + ञ् = 'ज्ञ', प्राति० संज्ञा, सु = स् = र् = :) = यज्ञः (देवपूजा, यज्ञ)। (२) ✓ टु याचृ (याच्) + नङ् (= 'न', 'न्' = 'ञ्'–श्चुत्व, स्त्रीत्व विवक्षा में टाप् = 'आ'–'अजाद्यतष्टाप्', अ + आ = 'आ'–सवर्णदीर्घ, विभक्तिकार्य) = याच्ञा (माँगना)। (३) ✓ यत् + नङ् (= 'न', विभक्तिकार्य) = यत्नः (कोशिश)। (४) ✓ विच्छ् + नङ् (= 'न', प्राप्त इट् का 'नेड् वशि कृति' से निषेध, च्छ् = 'श्'–'च्छ्वोः शूडनुनासिके च', विभक्तिकार्य) = विश्नः (गति या चमक)। (४) ✓ प्रच्छ् + नङ् (= 'न', च्छ् = श्, विभक्तिकार्य) = प्रश्नः (पूछना, प्रश्न)। (५) रक्ष् + नङ् (= 'न', 'न्' = 'ण्'–'रषाभ्यां नो णः समानपदे') = रक्ष्णः (रक्षा)।

(१२७५) **पद**– स्वपः, नन्। **अनुवृत्ति**– भावे, अकर्तरि च कारके संज्ञायाम्। **विधिसूत्र**।

**मूलार्थ**– स्वप् धातु से 'नन्' प्रत्यय होता है। स्वप्नः।

**विमर्श**– 'धातोः' का अधिकार है तथा पूर्ववत् 'भावे' और 'अकर्तरि च कारके संज्ञायाम्' की अनुवृत्ति आती है। तदनुसार– ''भाव में अथवा संज्ञा के विषय में कर्तृभिन्न कारक के वाच्य होने पर स्वप् धातु से नन् प्रत्यय होता है।''

'नन्' में अन्त्य इत्संज्ञक 'न्' का लोप होने पर 'न' मात्र शेष रहता है।

**उदाहरण**– ✓ स्वप् + नन् (= 'न'–'स्वपो नन्', प्राति० संज्ञा, सु = स् = र् = :) = **स्वप्नः** (सोना, शयन करना)।

**३।३।९४ । स्त्रीलिङ्गे भावादौ क्तिन्। घञोऽपवादः। कृतिः। स्तुतिः। * ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः *। तेन नत्वम्। कीर्णिः। गीर्णिः। धूनिः। लूनिः। पूनिः। * सम्पदादिभ्यः क्विप् *। सम्पत्। विपत्। आपत्। * क्तिन्नपीष्यते *। सम्पत्तिः। विपत्तिः। आपत्तिः।**

---

**प्रधिः**– प्रधीयते अनेनेति विग्रहे प्रपूर्वकाद् धाधातोः 'उपसर्गे घोः किः' इत्यनेन किप्रत्यये अनुबन्धलोपे 'आतो लोप इटि च' इत्यनेन आकारलोपे, प्रातिपदिकत्वे सौ रुत्वे विसर्गे कृते 'प्रधिः' इति।

(१२७७) **स्त्रियामिति। कृतिः**– कृधातोः 'स्त्रियां क्तिन्' इति क्तिन्प्रत्ययेऽनुबन्धलोपे,

---

(१२७६) **पद**– उपसर्गे, घोः, किः। **अनुवृत्ति**– भावे, अकर्तरि च कारके संज्ञायाम्। **विधिसूत्र**।

**मूलार्थ**– उपसर्ग उपपद रहते भाव आदि में घुसंज्ञक धातु से कि प्रत्यय होता है। प्रधिः। उपधिः।

**विमर्श**– पूर्ववत् 'भावे' और 'अकर्तरि च कारके संज्ञायाम्' की अनुवृत्ति आती है। 'धातोः' का अधिकार है। सप्तम्यन्त 'उपसर्गे' उपपद है। अतः "उपसर्ग के उपपद रहते भाव अर्थ में अथवा संज्ञा-विषयक कर्तृभिन्न कारक अर्थ में घुसंज्ञक धातु से कि प्रत्यय होता है"।

'कि' का आदि वर्ण 'क्' 'लशक्वतद्धिते' से इत्संज्ञक होकर लुप्त हो जाता है। 'इ' मात्र अवशिष्ट रहता है। कि-प्रत्ययान्त शब्द पुल्लिंग होते हैं।[१]

**उदाहरण**– (१) प्र + ✓ धा + कि (= 'इ'–'उपसर्गे घोः किः', 'आ' का लोप–'आतो लोप इटि च', प्राति० संज्ञा, सु = स् = र् = :) = प्रधिः (परिधि)। (२) उप + ✓ धा + क्ति (= 'इ', 'आ' का लोप पूर्ववत्, विभक्तिकार्य) = उपधिः (छल-कपट)।

(१२७७) **पद**– स्त्रियाम्, क्तिन्। **अनुवृत्ति**– भावे, अकर्तरि च कारके संज्ञायाम्। **विधिसूत्र**।

**मूलार्थ**– स्त्रीलिङ्ग भावादि अर्थ में धातु से क्तिन् प्रत्यय होता है। यह घञ् का अपवाद है। कृतिः। स्तुतिः इत्यादि।

**विमर्श**– प्रकृत सूत्र में 'धातोः' का अधिकार है तथा पूर्ववत् 'भावे' और 'अकर्तरि च कारके संज्ञायाम्' की अनुवृत्ति आती है। तदनुसार– "स्त्रीत्व-विशिष्ट भाव अर्थ में तथा संज्ञा-विषयक कर्तृभिन्न कारक अर्थ में धातु से क्तिन् प्रत्यय होता है"। 'क्तिन्' के आदि ककार की 'लशक्वतद्धिते' से तथा अन्त्य 'न्' की 'हलन्त्यम्' से इत्संज्ञा होती है। 'ति' मात्र शेष रहता है।

**उदाहरण**– (१) ✓ कृ + क्तिन् (= 'ति'–'स्त्रियां क्तिन्', प्राप्त गुण का 'क्ङिति च' से निषेध, प्रातिपदिक संज्ञा, सु = स् = र् = :) = कृतिः (करना)। (२) स्तवनं स्तुतिः। ✓ ष्टुञ् (स्तु) + क्तिन् (= 'ति', पूर्ववत् गुणनिषेध, विभक्तिकार्य) = स्तुतिः (स्तुति करना)।

(१) (**वा०**)– ॠदन्त तथा लू आदि धातुओं से विहित क्तिन् प्रत्यय को निष्ठावत् कार्य होते हैं।

**उदाहरण**– (३) ✓ कॄ + क्तिन् (= 'ति'–'स्त्रियां क्तिन्', प्राप्त गुण का कित्त्व के कारण निषेध–'क्ङिति च', 'ॠ' = 'इ'–'ॠत इद्धातोः', रपर, उपधादीर्घ–'हलि च')–कीर् ति ('ॠल्वादिभ्यः क्तिन्निष्ठावद्वक्तव्यः' वार्तिक से क्तिन् को निष्ठावत् मानकर 'त्' = 'न्'–'रदाभ्यां निष्ठातो नः पूर्वस्य च दः', 'न्' = 'ण्'–'रषाभ्यां नो णः समानपदे', प्राति० संज्ञा, सु = स् = र् = :) = कीर्णिः (बिखेरना)। (४) ✓ गॄ + क्तिन् (पूर्ववत् कार्य) = गीर्णिः (निगलना)। (५) ✓ लू + क्तिन् (= 'ति' वार्तिक से क्तिन् को निष्ठावद्भाव, 'त्' = 'न्'–'ल्वादिभ्यः', विभक्तिकार्य) = लूनिः (= काटना)। (६) ✓ धूञ् (धू) + क्तिन् (लूनिवत् कार्य) = धूनिः (कँपाना)। (७) ✓ पू + क्तिन् = पूनिः (विनाश करना)।

---

१. 'क्यन्तो घुः' (लिङ्गानुशासनम्, ४१)।

**( १२७८ ) ऊतियूतिजूतिसातिहेतिकीर्तयश्च ३।३।९७ । एते निपात्यन्ते। ( १२७९ ) कृञः ३।३।१०० । क्यप्। कृत्या। ( १२८० ) श च ३।३।१०० । कृञः शः। चात्**

---

कित्त्वाद्गुणाभावे विभक्तिकार्ये 'कृतिः' इति। **ऋल्वादिभ्य इति**। ऋकारान्ताद् ल्वादिभ्यश्च परः क्तिन्प्रत्ययो निष्ठावद्भवतीत्यर्थः।

(१२७८) **ऊतियूतीति**। इमे क्तिन्प्रत्ययान्ता निपात्यन्ते। **ऊतिः**—अव्धातोः 'ऊतियूतिजूतिसातिहेतिकीर्तयश्चे'त्यनेन निपातनात् क्तिन्प्रत्ययेऽनुबन्धलोपे 'ज्वरत्वर०' इत्यादिना अकार-वकारयोः स्थाने ऊठि अनुबन्धलोपे, प्रातिपदिकत्वे सौ, रुत्वे विसर्गे च 'ऊतिः' इति सिद्धम्।

(१२७९) **कृञ इति**। 'व्रजयजोर्भावे क्यप्' इत्यतः क्यप् इत्यनुवर्तते, 'स्त्रियां क्तिन्' इत्यतः स्त्रियामिति च। कृञः स्त्रियां भावे क्यप्प्रत्ययो भवतीत्यर्थः।

---

(२) **(वा०)- सम्पदादिभ्यः**—सम्पूर्वक पद आदि धातुओं से भाव आदि में क्विप् प्रत्यय होता है।

**उदाहरण**— (१) सम् + ✓ पद् + 'क्विप्' (– 'सम्पदादिभ्यः क्विप्' वा० से, क्विप् का सर्वापहार लोप, प्रातिपदिक संज्ञा, सु = 'स्' का लोप–'हल्ङ्याब्भ्यः', 'द्' = 'त्' चर्त्व विकल्प से–'वाऽवसाने') = सम्पद्, सम्पत् (सम्पन्नता)। (२) वि + ✓ पद् + क्विप् (पूर्ववत् प्रक्रिया) = विपत् (विपन्नता)। (३) आ + पद् + क्विप् = आपत् (= आपत्ति)।

(३) **(वा०)- क्तिन्नपीष्यते**— सम्पूर्वक पद आदि से क्तिन् प्रत्यय भी उक्त अर्थों में इष्ट है अर्थात् होता है।

**उदाहरण**— (१) सम् + पद् + क्तिन् (= 'ति'–'क्तिन्नपीष्यते' वा० से, 'द्' = 'त्'–'खरि च', विभक्तिकार्य) = सम्पत्तिः। (२) वि + पद् + क्तिन् (पूर्ववत् प्रक्रिया) = विपत्तिः। (३) आ + पद् + क्तिन् = आपत्तिः।

(१२७८) **पद**— ऊतियूतिजूतिसातिहेतिकीर्तयः, च। **अनुवृत्ति**— स्त्रियां क्तिन्, भावे, अकर्तरि च कारके संज्ञायाम्। **विधिसूत्र**।

**मूलार्थ**— ऊति, यूति, जूति, साति, हेति और कीर्ति शब्द क्तिन्नन्त निपातन किये जाते हैं।

**विमर्श**— प्रकृत सूत्र में 'स्त्रियां क्तिन्' (१२७७), 'भावे' (१२६५) और 'अकर्तरि च कारके संज्ञायाम्' (१२६६) की पूर्ववत् अनुवृत्ति आती है। तदनुसार– ''स्त्रीत्व-विशिष्ट भाव में अथवा संज्ञा-विषयक कर्तृभिन्न कारक में ऊति, यूति, जूति, साति, हेति और कीर्ति– ये छः क्तिन्प्रत्ययान्त शब्द निपातित किये जाते हैं''।

**उदाहरण**— (१) ✓ अव + क्तिन् (= 'ति' निपातन से– 'ऊतियूति०', अव् = ऊठ् = 'ऊ'– 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च', प्राति० संज्ञा, सु = स् = र् = :) = ऊतिः (रक्षा)। (२) ✓ यु + क्तिन् (= 'ति'–निपातन से तथा दीर्घ, विभक्तिकार्य) = यूतिः (मिलाना)। (३) ✓ जु + क्तिन् (= 'ति', दीर्घ–निपातन से, विभक्तिकार्य) = जूतिः (वेग)। (४) ✓ षो (सत्व) = सो + क्तिन् (= 'ति' निपातन से, 'ओ' = 'आ'–'आदेच उपदेशेऽशिति', विभक्तिकार्य) = सातिः (नाश)। (५) ✓ हि + क्तिन् (= 'ति' गुण, निपातन से, विभक्तिकार्य) = हेतिः (गति)। (६) ✓ कृत + क्तिन् (= 'ति', 'ॠ' = 'इ'–'ॠत इद्धातोः', रपर, दीर्घ–'हलि च', विभक्तिकार्य) = कीर्तिः (यश)।

(१२७९) **पद**— कृञः। **अनुवृत्ति**— क्यप्, स्त्रियाम्, भावे, अकर्तरि च कारके संज्ञायाम्। **विधिसूत्र**।

क्तिन्। प्रकरणम्—प्रक्रिया। कृतिः। **( १२८१ ) इच्छा ३।३।१०१** । इषेर्निपातोऽयम्। **( १२८२ ) अप्रत्ययात् ३।३।१०२** । प्रत्ययान्तेभ्यः स्त्रियामकारप्रत्ययः। चिकीर्षा।

---

(१२८०) **श च**। स्त्रियां, भावे इति चानुवर्तते। तेन कृञः स्त्रियां भावे शप्रत्ययोऽपि भवति। चात् क्तिन्।

(१२८१) **इच्छा**। इषधातोः शप्रत्ययो भावे स्त्रियां च निपात्यत इत्यर्थः।

(१२८२) **अप्रत्ययादिति**। 'स्त्रियामि'ति 'भावे' इति चानुवर्तते। धातोरित्यधिकृतम्। धातोर्विशेषणत्वात्तदन्तविधिस्तदाह—**प्रत्ययान्तेभ्य इति**। **चिकीर्षा**— सन्नन्तात् चिकीर्षधातोः

---

**मूलार्थ**— कृञ् धातु से स्त्रीलिङ्ग-विशिष्ट भाव आदि में क्यप् प्रत्यय होता है। कृत्या।

**विमर्श**— 'धातोः' का अधिकार है। 'व्रजयजोर्भावे क्यप्' (३।३।९८) से क्यप् की अनुवृत्ति आती है। पूर्ववत् 'स्त्रियाम्', 'भावे' और 'अकर्तरि च कारके संज्ञायाम्' की भी अनुवृत्ति आ रही है। तदनुसार— ''स्त्रीत्व-विशिष्ट भाव में अथवा संज्ञा-विषयक कर्तृभिन्न कारक में कृञ् धातु से क्यप् प्रत्यय होता है''।

'क्यप्' में आदि ककार 'लशक्वतद्धिते' से तथा अन्त्य पकार 'हलन्त्यम्' से इत्संज्ञक होकर लुप्त हो जाते हैं। 'य' मात्र शेष रहता है।

**उदाहरण**— ✓ कृ + क्यप् (= 'य'—'कृञः', तुक् = 'त्' आगम—'ह्रस्वस्य पिति कृति', कित् होने से गुण का निषेध, टाप् = 'आ', सवर्णदीर्घ, प्राति० संज्ञा, सु = 'स्' का लोप—'हल्ङ्याब्भ्यः०') = कृत्या।

(१२८०) **पद**— श, च। **अनुवृत्ति**— कृञः, स्त्रियां, भावे, अकर्तरि च कारके संज्ञायाम्। **विधिसूत्र**।

**मूलार्थ**— कृञ् धातु से स्त्रीत्व-विशिष्ट भाव आदि में श प्रत्यय भी होता है और (चकारात्) क्तिन् भी होता है। प्रक्रिया। कृतिः।

**विमर्श**— पूर्वसूत्र 'कृञः' (१२७९) की तथा पूर्ववत् 'स्त्रियां', 'भावे', 'अकर्तरि च कारके संज्ञायाम्' की अनुवृत्ति आती है। 'च' पद से प्रकरणवशात् क्तिन् का ग्रहण किया जाता है। इस प्रकार— ''स्त्रीत्व-विशिष्ट भाव तथा संज्ञा-विषयक कर्तृभिन्न कारक में कृञ् धातु से श प्रत्यय होता है और क्तिन् भी होता है''।

'श' में आदि वर्ण 'श्' की 'लशक्वतद्धिते' से इत्संज्ञा होती है। उसका लोप होने पर 'अ' मात्र शेष रहता है।

**उदाहरण**— प्र + ✓ कृ + श (= 'अ'—'श च', ऋ = रिङ् = 'रि'—'रिङ्शयग्लिङ्क्षु', ष्यङ्, टाप् = 'आ', सवर्णदीर्घ, विभक्तिकार्य) = प्रक्रिया। क्तिन् पक्ष में—कृतिः।

(१२८१) **पद**— इच्छा। **अनुवृत्ति**— श, स्त्रियाम्, भावे। **विधिसूत्र**।

**मूलार्थ**— स्त्रीत्व-विशिष्ट भाव में निपातन से श आदि होकर 'इच्छा' प्रयोग होता है।

**विमर्श**— पूर्वसूत्र (१२८०) से 'शः' की तथा पूर्ववत् 'स्त्रियाम्' और 'भावे' की अनुवृत्ति आती है। तदनुसार— ''स्त्रीत्व-विशिष्ट भाव में इष् धातु से श प्रत्यय निपातित होता है''।

**उदाहरण**— ✓ इष् + श (= 'अ'—'इच्छा', शित्त्व के कारण 'सार्वधातुके यक्' से प्राप्त यक् का अभाव निपातन से, 'ष्' = 'छ्'—'इषुगमियमां छः', तुक् = 'त्' आगम—'छे च', 'त्' = 'च्'—श्चुत्व, टाप् = 'आ', अ + आ = 'आ' सवर्णदीर्घ, विभक्तिकार्य) = इच्छा (अभिलाषा)।

(१२८२) **पद**— अ, प्रत्ययात्। **अनुवृत्ति**— स्त्रियाम्, भावे, अकर्तरि च कारके संज्ञायाम्। **विधिसूत्र**।

**पुत्रकाम्या। ( १२८३ ) गुरोश्च हलः ३।३।१०३ । गुरुमतो हलन्तात् स्त्रियामप्रत्ययः। ईहा। ऊहा। ( १२८४ ) षिद्भिदादिभ्योऽङ् ३।३।१०४ । जृष्, 'ऋदृशोऽङि गुणः'।**

---

'अप्रत्ययात्' इत्यनेन अप्रत्यये 'अतो लोपः' इत्यनेन सन अकारलोपे, प्रातिपदिकत्वे, स्त्रीत्वे टापि अनुबन्धलोपे, सवर्णदीर्घे सौ हल्ङ्यादिना सुलोपे 'चिकीर्षा' इति।

(१२८३) **गुरोश्चेति**। 'स्त्रियामि'ति अ इति चानुवर्तते। तदाह–**गुरुमत इति**। **ईहा**– ईह् चेष्टायामिति धातोः 'गुरोश्च हलः' इत्यनेन अप्रत्यये, स्त्रियां टापि सवर्णदीर्घे विभक्तिकार्ये 'ईहा' इति।

(१२८४) **षिद्भिदादीति**। षकार इदेषां ते षितस्तेभ्यः भिदादिगणपठितेभ्यश्च स्त्रियां भावेऽङ् स्यादिति स्पष्टार्थः। **जरेति**। 'जृष्'धातोः षित्त्वात् 'षिद्भिदादिभ्योऽङ्' इत्यनेन अङि

---

**मूलार्थ**– प्रत्ययान्त धातुओं से स्त्रीत्व-विशिष्ट भाव अथवा संज्ञा-विषयक कर्तृभिन्न कारक में 'अ' प्रत्यय होता है। चिकीर्षा। पुत्रकाम्या।

**विमर्श**– 'धातोः' का अधिकार है। पूर्ववत् 'स्त्रियाम्', 'भावे' और 'अकर्तरि च कारके संज्ञायाम्' की अनुवृत्ति आती है। 'प्रत्ययात्' पद धातोः का विशेषण होने से तदन्तविधि होकर 'प्रत्ययान्ताद् धातोः' बन जाता है। इस प्रकार– ''स्त्रीत्व-विशिष्ट भाव में अथवा संज्ञा-विषयक कर्तृभिन्न कारक में प्रत्यय जिसके अन्त में है ऐसे धातु से 'अ' प्रत्यय होता है''।

**उदाहरण**– (१) ✓ डुकृञ् (कृ) + सन् (= 'स', कित्त्व–'इको झल्', 'ऋ' = 'ॠ' दीर्घ– 'अज्झन०', 'ॠ' = 'इ'–इत्व– 'ॠत इद्धातोः', रपर, द्वित्व–'सन्यङोः', अभ्याससंज्ञा, हलादिशेष, 'क्' = 'च्'–'कुहोश्चुः', दीर्घ–'हलि च', षत्व) = चिकीर्ष (धातुसंज्ञा, 'अ'–'अप्रत्ययात्', 'ष्' के 'अ' का लोप–'अतो लोपः', प्रा० संज्ञा, स्त्रीत्व विवक्षा में टाप् = 'आ', अ + आ = 'आ'–सवर्णदीर्घ, सु = 'स्' का लोप–'हल्ङ्याब्भ्यः') = चिकीर्षा (= करने की इच्छा)। (२) पुत्र + काम्यच् (= काम्य) = पुत्रकाम्य (धातुसंज्ञा, 'अ'–'अप्रत्ययात्', 'अ' का लोप–'अतो लोपः', टाप्, सवर्णदीर्घ, सु = 'स्' का लोप–'हल्ङ्याब्भ्यः०') = पुत्रकाम्या (अपने लिए पुत्र की कामना)।

(१२८३) **पद**– गुरोः, च, हलः। **अनुवृत्ति**– अ, स्त्रियाम्, भावे, अकर्तरि च कारके संज्ञायाम्। **विधिसूत्र**।

**मूलार्थ**– स्त्रीत्व-विशिष्ट भाव आदि में गुरुमान हलन्त धातु से 'अ' प्रत्यय होता है। ईहा। ऊहा।

**विमर्श**– सूत्रार्थ की स्पष्टता हेतु पूर्वसूत्र (१२८२) से 'अ' की तथा पूर्ववत् 'स्त्रियाम्', 'भावे' और 'अकर्तरि च कारके संज्ञायाम्' की अनुवृत्ति आती है। तदनुसार स्त्रीत्व-विशिष्ट भाव में अथवा संज्ञा-विषयक कर्तृभिन्न कारक में हलन्त तथा गुरुवर्ण से युक्त धातु से 'अ' प्रत्यय होता है''।

**उदाहरण**– (१) ✓ ईह् + 'अ' (–'गुरोश्च हलः', टाप् = 'आ', अ + आ = 'आ'–सवर्णदीर्घ, सु = 'स्' का लोप–'हल्ङ्याब्भ्यः०') = ईहा (चेष्टा)। (२) ऊह् + 'अ' (टाप्, दीर्घ, विभक्तिकार्य) = ऊहा (तर्क)।

(१२८४) **पद**– षिद्भिदादिभ्यः, अङ्। **अनुवृत्ति**– स्त्रियाम्, भावे, अकर्तरि च कारके संज्ञायाम्। **विधिसूत्र**।

**मूलार्थ**– स्त्रीत्व-विशिष्ट भाव आदि में षकारेत्संज्ञक और भिदादि धातुओं से अङ् प्रत्यय होता है। जरा। त्रपा। भिदा इत्यादि।

**विमर्श**– 'धातोः' का अधिकार है। पूर्ववत् 'स्त्रियाम्', 'भावे' और 'अकर्तरि च कारके संज्ञायाम्'

**जरा। त्रपूष्–त्रपा। भिदा। विदारण एवायम्। भित्तिरन्या। छिदा। मृजा। * क्रपेः सम्प्रसारणं च *। कृपा। ( १२८५ ) आतश्चोपसर्गे ३।३।१०६ । अङ् स्यात्। उपदा। अन्तर्द्धा। ( १२८६ ) ण्यासश्रन्थो युच् ३।३।१०७ । अस्यापवादः। कारणा। ( १२८७ )**

---

अनुबन्धलोपे 'ऋदृशोऽङि गुणः' इत्यनेन गुणे, रपरे अकारान्तत्वात् स्त्रियाम् 'अजाद्यतष्टाप्' इति टापि, सवर्णदीर्घे सौ हल्ङ्यादिलोपे 'जरा' इति।

(१२८५) **आतश्चेति**। 'षिद्भिदादिभ्यः' इत्यतोऽङिति अनुवर्तते। उपसर्गे उपपदे आदन्ताद् धातोः अङ्प्रत्ययः स्याद्भावेऽकर्तरि कारके चेत्यर्थः।

(१२८६) **ण्यासश्रन्थ इति**। ण्यन्ताद् असधातोः श्रन्थेश्च युच् स्यादित्यर्थः। **कारणा-**

---

की अनुवृत्ति आती है। 'षित् च भिदादयश्चेति षिद्भिदादयः, तेभ्यः' (इतरेतरयोगद्वन्द्व)। अतः ''स्त्रीत्व-विशिष्ट भाव में अथवा संज्ञा-विषयक कर्तृभिन्न कारक में षकार इत्संज्ञक धातुओं से तथा भिदादि-गणपठित धातुओं से अङ् प्रत्यय होता है''।

'अङ्' में अन्त्य इत्संज्ञक 'ङ्' का लोप होकर 'अ' मात्र शेष रहता है।

**उदाहरण**– (१) ✓ जृष् (जृ) + अङ् (= 'अ'–'षिद्भिदादिभ्योऽङ्', 'ॠ' = 'अ'–गुण-'ऋदृशोऽङि गुणः', रपर, टाप् = आ, अ + आ = 'आ'–सवर्णदीर्घ, सु = 'स्' का लोप-'हल्ङ्याब्भ्यः०') = जरा (वृद्धावस्था)। (२) त्रपूष् (त्रप्) + अङ् (= 'अ'–'षिद्भिदादिभ्योऽङ्', टाप्, दीर्घ, विभक्तिकार्य) त्रपा (लज्जा)। (३) ✓ भिद् + अङ् (= 'अ', टाप् = 'आ', सवर्णदीर्घ, विभक्तिकार्य) = भिदा (फाड़ना)। विदारण अर्थ में ही भिद् धातु से अङ् होता है। अतः अन्यत्र क्तिन् ही होता है–भित्तिः। (४) ✓ छिदिर् (छिद्) + अङ् (= 'अ', टाप् = 'आ', दीर्घ, विभक्तिकार्य) = छिदा (काटना)। (५) ✓ मृजूष् (मृज्) + अङ् (= 'अ', टाप्, दीर्घ, विभक्तिकार्य) = मृजा (शुद्ध करना)।

**(वा०)**– क्रप् धातु से स्त्रीलिंग भाव में अङ् प्रत्यय होता है और धातु को सम्प्रसारण होता है।

**उदाहरण**– (६) ✓ क्रप् + अङ् (= 'अ', 'र्' = 'ऋ'–सम्प्रसारण–'क्रपेः सम्प्रसारणं च' से, पूर्वरूप, स्त्रीत्व विवक्षा में टाप् = 'आ', सवर्णदीर्घ, विभक्तिकार्य) = कृपा।

(१२८५) **पद**– आतः, च, उपसर्गे। **अनुवृत्ति**– अङ्, स्त्रियाम्, भावे, अकर्तरि च कारके संज्ञायाम्। **विधिसूत्र**।

**मूलार्थ**– स्त्रीत्व-विशिष्ट भाव आदि में उपसर्गपूर्वक आदन्त धातु से अङ् प्रत्यय होता है। उपदा। अन्तर्द्धा।

**विमर्श**– पूर्वसूत्र (१२८४) से 'अङ्' की तथा पूर्ववत् 'स्त्रियाम्', 'भावे' और 'अकर्तरि च कारके संज्ञायाम्' की अनुवृत्ति आती है। 'धातोः' का अधिकार है। इस प्रकार–''स्त्रीत्व-विशिष्ट भाव में अथवा संज्ञा-विषयक कर्तृभिन्न कारक में उपसर्गपूर्वक आकारान्त धातु से अङ् प्रत्यय होता है''।

**उदाहरण**– (१) उप + ✓ दा + अङ् (= 'अ', 'आ' का लोप–'आतो लोपः०', टाप् = 'आ', अ + आ = 'आ'–सवर्णदीर्घ, विभक्तिकार्य) = उपदा (देना)। (२) अन्तर् + धा + अङ् (= 'अ'–'आतश्चोपसर्गे', टाप् = 'आ', दीर्घ, विभक्तिकार्य) = अन्तर्धा (छिपना)।

(१२८६) **पद**– ण्यासश्रन्थः, युच्। **अनुवृत्ति**– स्त्रियाम्, भावे, अकर्तरि च कारके संज्ञायाम्। **विधिसूत्र**।

**मूलार्थ**– स्त्रीत्व-विशिष्ट भावादि में ण्यन्त धातु तथा आस् और श्रन्थ् धातुओं से युच् प्रत्यय होता है। यह सूत्र पूर्वोक्त दो सूत्रों द्वारा प्राप्त 'अ' प्रत्यय का अपवाद है। कारणा।

**रोगाख्यायां ण्वुल् बहुलम् ३।३।१०८** । **प्रच्छर्दिका। प्रवाहिका। विचर्चिका। क्वचिन्न, शिरोऽर्त्तिः। * धात्वर्थनिर्देशे ण्वुल्वक्तव्यः *। आसिका। * इक्श्तिपौ धातुनिर्देशे *। पचिः। पचतिः। * वर्णात्कारः *। निर्देश इत्येव। अकारः। ककारः। ***

---

ण्यन्तात् कारिधातोः 'ण्यासश्रन्थो युच्' इत्यनेन युच्प्रत्ययेऽनुबन्धलोपे 'युवोरनाकौ' इत्यनेन 'यु' इत्यस्य स्थाने अनादेशे 'णेरनिटि' इत्यनेन णेर्लोपे, स्त्रीत्वविवक्षायां टापि, सवर्णदीर्घे प्रातिपदिकत्वे सौ, हल्ङ्यादिना सुलोपे 'कारणा' इति।

(१२८७) **रोगाख्यायामिति**। रोगस्य आख्या कथनं तस्मिन् द्योत्ये धातोः बहुलं ण्वुल् स्यादित्यर्थः। **प्रच्छर्दिका**– प्रपूर्वात् छृद्धातोः 'रोगाख्यायां ण्वुल् बहुलमि'ति ण्वुलि, 'युवोरनाकौ' इत्यनेन अकादेशे 'पुगन्त०' इति गुणे रपरे, तुकि, श्चुत्वे टापि दीर्घे 'प्रत्ययस्थात्०' इति इत्वे, सौ हल्ङ्यादिलोपे 'प्रच्छर्दिका' इति। **इक्श्तिपाविति**। धातुस्वरूपे निर्देष्टव्ये इक्श्तिपौ वक्तव्यावित्यर्थः। **वर्णादिति**। वर्णस्वरूपनिर्देशे कर्तव्ये कारप्रत्ययः स्यादिति।

---

**विमर्श**– 'धातोः' का अधिकार है। पूर्ववत् 'स्त्रियाम्', 'भावे' और 'अकर्तरि च कारके संज्ञायाम्' की अनुवृत्ति आ रही है। 'ण्यासश्रन्थः' धातोः का विशेषण है। 'णि' प्रत्यय है, उससे तदन्तविधि होकर 'ण्यन्ताद् धातोः' हो जाता है। तदनुसार– ''स्त्रीत्व-विशिष्ट भाव तथा संज्ञा-विषयक कर्तृभिन्न कारक की विवक्षा में ण्यन्त तथा आस् और श्रन्थ् धातुओं से युच् प्रत्यय होता है।''

'युच्' में इत्संज्ञक चकार का लोप होने पर 'यु' मात्र शेष रहता है।

**उदाहरण**– (१) कृ + णिच् (= 'इ'–'हेतुमति च', वृद्धि, रपर, धातुसंज्ञा–'सनाद्यन्ता धातवः') = ✓ कारि + युच् (= 'यु'–'ण्यासश्रन्थो युच्', 'यु' = 'अन'–'युवोरनाकौ', णि = 'इ' का लोप–'णेरनिटि', प्राति० संज्ञा, टाप् = 'आ', सवर्णदीर्घ, सु = 'स्' का लोप–'हल्ङ्याब्भ्यः०') = कारणा (= कराना)।

(१२८७) **पद**– रोगाख्यायाम्, ण्वुल्, बहुलम्। **अनुवृत्ति**– स्त्रियाम्, भावे, अकर्तरि च कारके संज्ञायाम्। **विधिसूत्र**।

**मूलार्थ**– रोग-विशेष की संज्ञा वाच्य हो तो स्त्रीत्व-विशिष्ट भावादि में धातु से ण्वुल् प्रत्यय बहुल प्रकार से होता है। प्रच्छर्दिका। प्रवाहिका आदि।

**विमर्श**– 'धातोः' अधिकृत है। पूर्ववत् 'स्त्रियाम्, भावे और अकर्तरि च कारके संज्ञायाम्' की अनुवृत्ति आ रही है। तदनुसार– ''स्त्रीत्व-विशिष्ट भाव में अथवा संज्ञा-विषयक कर्तृभिन्न कारक की विवक्षा में धातु से बहुलता से ण्वुल् प्रत्यय होता है, यदि प्रत्ययान्त समुदाय किसी रोग-विशेष की संज्ञा (नाम) हो तो''।

'ण्वुल्' में आदि णकार तथा अन्त्य लकार इत्संज्ञकों का लोप होने पर 'वु' मात्र शेष रहता है।

**उदाहरण**– (१) प्र + ✓ छृद् + ण्वुल् (= 'वु'–'रोगाख्यायां ण्वुल् बहुलम्', 'वु' = 'अक'–'युवोरनाकौ', 'ऋ' = 'अ'–गुण, रपर, तुक्, श्चुत्व, टाप् = 'आ', सवर्णदीर्घ, 'अ' = 'इ'–इत्व–'प्रत्ययस्थात्०', सु = 'स्' का लोप–'हल्ङ्याब्भ्यः०') = प्रच्छर्दिका (वमन)। (२) प्र + ✓ वह + ण्वुल् (= 'वु'–'रोगाख्यायाम्०', 'वु' = 'अक', उपधावृद्धि, टाप् = 'आ', दीर्घ, इत्व, विभक्तिकार्य) = प्रवाहिका (पेचिश)। (३) वि + ✓ चर्च् + ण्वुल् (= वु = 'अक', टाप्, दीर्घ, इत्व, विभक्तिकार्य) = विचर्चिका (दाद)। 'बहुल' पद के ग्रहण से कहीं ण्वुल् नहीं भी होता। ✓ अर्द् + क्तिन् (= 'ति', 'द्' = 'त्'–चर्त्व, विभक्तिकार्य) = शिरोऽर्तिः (सिरदर्द)।

रादिफः *। रेफः। **( १२८८ ) नपुंसके भावे क्तः ३।३।११४ । ( १२८९ ) ल्युट् च ३।३।११५ ।** हसितम्। हसनम्। **( १२९० ) करणाधिकरणयोश्च ३।३।११७ ।** ल्युट्। अनुमानः। अनुमानी। **( १२९१ ) पुंसि संज्ञायां घः प्रायेण ३।३।११८ ।**

---

(१२८८) **नपुंसक इति**। नपुंसकत्वविशिष्टे भावे धातोः क्तप्रत्ययः स्यादित्यर्थः।

(१२८९) **ल्युट् चेति**। उक्तार्थे ल्युडपि भवतीतिं भावः। **हसितमिति**। हस्धातोः 'नपुंसके भावे क्तः' इत्यनेन क्तप्रत्ययेऽनुबन्धलोपे, इडागमे प्रातिपदिकत्वे सौ, सोरमि पूर्वरूपे च कृते 'हसितम्' इति। ल्युट्पक्षे-हसनमिति।

(१२९०) **करणाधिकरणयोरिति**। 'ल्युट् चे'त्यतः ल्युडित्यनुवर्तते। करणेऽधिकरणे च कारके धातोः ल्युट्प्रत्ययो भवतीत्यर्थः।

---

(१) **(वा०)**– धात्वर्थ निर्देश करना हो तो धातु से ण्वुल् प्रत्यय होता है, ऐसा कहना चाहिए।

**उदाहरण**– आस् + ण्वुल् (= 'वु'–'धात्वर्थनिर्देशे ण्वुल्वक्तव्यः' वार्तिक से, 'वु' = 'अक', टाप् = 'आ', दीर्घ, इत्व, विभक्तिकार्य) = आसिका (आसन)।

(२) **(वा०)**– धातु के निर्देश में धातु से इक् और श्तिप् प्रत्यय होते हैं।

**उदाहरण**– (१) ✓ पच् + इक् (= 'इ'–'इक्श्तिपौ धातुनिर्देशे' वा० से, प्राति० सं०, सु = स् = र् = :) = पचिः। (२) ✓ पच् + श्तिप् (= 'ति' वार्तिक से, सार्वधातुकसंज्ञा, श = 'अ'– 'तुदादिभ्यः शः', प्राति० संज्ञा, सु = स् = र् = :) = पचतिः।

(३) **(वा०)**– वर्ण के निर्देश में वर्ण से कार प्रत्यय होता है।

**उदाहरण**– (१) अ + 'कार' (–'वर्णात्कारः', विभक्तिकार्य) = अकारः। (२) क + कार (विभक्तिकार्य) = ककारः।

(४) **(वा०)**– रकार के निर्देश में 'र' से 'इफ' प्रत्यय होता है।

**उदाहरण**– र + इफ–'रादिफः', अ + इ = 'ए' गुण–'आद्गुणः', विभक्तिकार्य) = रेफः।

(१२८८) **पद**– नपुंसके, भावे, क्तः। **विधिसूत्र**।

**मूलार्थ**– नपुंसकलिंग भाव में धातु से क्त प्रत्यय होता है।

**विमर्श**– 'धातोः' का अधिकार है। तदनुसार–''नपुंसकत्व-विशिष्ट भाव में धातु से क्त प्रत्यय होता है''।

(१२८९) **पद**– ल्युट्, च। **अनुवृत्ति**– नपुंसके, भावे। **विधिसूत्र**।

**मूलार्थ**– नपुंसकलिङ्ग-विशिष्ट भाव में धातु से ल्युट् प्रत्यय भी होता है। हसितम्। हसनम्।

**विमर्श**– पूर्वसूत्र (१२८८) से 'नपुंसके' और 'भावे' की अनुवृत्ति आती है। 'धातोः' का अधिकार है। इस प्रकार–''नपुंसकत्व-विशिष्ट भाव में धातु से ल्युट् प्रत्यय भी होता है''।

**उदाहरण**– (१) ✓ हस् + क्त (= 'त'–'नपुंसके भावे क्तः', आर्धधातुकसंज्ञा, इट् = 'इ' आगम–'आर्धधातुकस्येड्वलादेः', कृदन्तत्वात् प्राति० संज्ञा, सु = 'अम्', पूर्वरूप) = हसितम् (हँसना)। (२) ✓ हस् + ल्युट् (= 'यु', 'ल्युट् च', 'यु' = 'अन'–'युवोरनाकौ', प्राति० संज्ञा, सु = 'अम्', पूर्वरूप) = हसनम् (हँसना)।

(१२९०) **पद**– करणाधिकरणयोः, च। **अनुवृत्ति**– ल्युट्। **विधिसूत्र**।

**मूलार्थ**– करण और अधिकरण अर्थ में धातु से ल्युट् प्रत्यय होता है। अनुमानः। अनुमानी।

**(१२९२) छादेर्घेऽद्व्युपसर्गस्य ६।४।९६ ।** द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वो घे। दन्तच्छदः। आकुर्वन्त्यस्मिन्नित्याकरः। **(१२९३) अवे तॄस्त्रोर्घञ् ३।३।१२० ।** अवतारः। अवस्तारो जवनिका। **(१२९४) हलश्च ३।३।१२१ ।** हलन्ताद् घञ्।

---

(१२९१) **पुंसीति**। 'करणाधिकरणयोरि'त्यनुवर्तते। पुंल्लिङ्गयोः करणाधिकरणयोः धातोः घः प्रायेण भवति, समुदायेन चेत् संज्ञा गम्यत इत्यर्थः।

(१२९२) **छादेरिति**। अत्र 'ऊदुपधाया गोहः' इत्यत उपधाया इति, 'खचि ह्रस्वः' इत्यतः ह्रस्व इति चानुवर्तते। तदाह–**द्विप्रभृतीति**।

(१२९३) **अव इति**। 'पुंसि संज्ञायां घः प्रायेणे'त्यनुवर्तते। तेन 'अव' इत्युपसर्गे उपपदे तृ–स्तृ इत्याभ्यां पुंसि संज्ञायां प्रायेण घञ् भवतीत्यर्थः। **अवतारः**– अवोपसर्गपूर्वक-तृधातोः

---

**विमर्श**– प्रकृत सूत्र में पूर्वसूत्र (१२८९) से 'ल्युट्' की अनुवृत्ति आती है। 'धातोः' का अधिकार है। तदनुसार– ''करण और अधिकरण अर्थ में भी धातु से ल्युट् प्रत्यय होता है''।

**उदाहरण**– अनु + ✓ मा + ल्युट् (= 'यु', 'करणाधिकरणयोश्च', 'यु' = 'अन'–'युवोरनाकौ', दीर्घ, प्राति० संज्ञा, सु = स् = र् = :) = अनुमानः। स्त्रीत्व विवक्षा में ल्युट् के टित् होने से ङीप् = ई) = अनुमानी।

(१२९१) **पद**– पुंसि, संज्ञायाम्, घः, प्रायेण। **अनुवृत्ति**– करणाधिकरणयोः। **विधिसूत्र**।

**मूलार्थ**– पुल्लिङ्ग में संज्ञा के वाच्य होने पर करण और अधिकरण अर्थ में धातु से प्रायः 'घ' प्रत्यय होता है।

**विमर्श**– पूर्वसूत्र (१२८९) से 'करणाधिकरणयोः' की अनुवृत्ति आती है। 'धातोः' का अधिकार है। तदनुसार– ''पुल्लिङ्ग में संज्ञा गम्य होने पर करण और अधिकरण अर्थ में धातु से प्रायः 'घ' प्रत्यय होता है''।

'घ' में आदि वर्ण 'घ्' इत्संज्ञक होकर लुप्त हो जाता है, 'अ' मात्र शेष रहता है।

(१२९२) **पद**– छादेः घे, अद्व्युपसर्गस्य। **अनुवृत्ति**– ह्रस्वः, उपधायाः। **विधिसूत्र**।

**मूलार्थ**– द्वि प्रभृति उपसर्गरहित छादि धातु की उपधा को ह्रस्व होता है, 'घ' के परवर्ती रहते। दन्तच्छदः। आकरः।

**विमर्श**– प्रकृत सूत्र में 'खचि ह्रस्वः' (६।४।९४) से 'ह्रस्वः' तथा 'ऊदुपधाया गोहः' (६।४।८९) से 'उपधायाः' की अनुवृत्ति आती है। 'अङ्गस्य' का अधिकार है। अतः ''दो या दो से अधिक उपसर्गों से युक्त नहीं है ऐसे छादि अंग की उपधा को घ प्रत्यय के परे रहने पर ह्रस्व आदेश हो जाता है''।

**उदाहरण**– (१) छद् + णिच् (= 'इ' स्वार्थ में, उपधावृद्धि) = ✓ छादि + घ (= 'अ'– 'पुसि संज्ञायां घः प्रायेण', दन्त कर्म में षष्ठी विभक्ति)– दन्त आम् छादि अ (णि = 'इ' का लोप– 'णेरनिटि', 'आ' = 'अ'–ह्रस्व–'छादेर्घेऽद्व्युपसर्गस्य', समास, विभक्ति का लुक्, तुक् = 'त्'–'छे च', 'त्' = 'च्'–श्चुत्व, प्राति० संज्ञा, सु = स् = र् = :) = दन्तच्छदः (ओष्ठ)। (२) आङ् (आ) + ✓ कृ + घ (= 'अ' अधिकरण में–'पुंसि संज्ञायाम्०', 'ऋ' = 'अ'–गुण–'सार्वधातु०', रपर, विभक्तिकार्य) = आकरः (खान)।

(१२९३) **पद**– अवे, तृस्त्रोः, घञ्। **अनुवृत्ति**– करणाधिकरणयोः, पुंसि, संज्ञायां, प्रायेण। **विधिसूत्र**।

**मूलार्थ**– अव उपसर्ग के उपपद रहते तृ और स्तृ धातु से करण और अधिकरण अर्थ में घञ् प्रत्यय होता है, पुंस्त्व-विशिष्ट संज्ञा वाच्य होने पर। अवतारः। अवस्तारो जवनिका।

**घापवाद:। रमन्ते योगिनोऽस्मिन्निति राम:। अपमृज्यतेऽनेन व्याध्यादिकमित्यपामार्ग:।**
**(१२९५) ईषद्दु:सुषु कृच्छ्राकृच्छ्रार्थेषु खल् ३।३।१२६ । एषु दु:खसुखार्थेषूपपदेषु खल्। 'तयोरेवे'ति भावे कर्मणि च। कृच्छ्रे–दुष्कर: कटो भविता। अकृच्छ्रे–**

---

'अवे तृस्त्रोर्घञ्' इति घञि अनुबन्धलोपे, आर्धधातुकत्वे 'सार्वधातुकार्धधातुकयो:' इति गुणे रपरे उपधावृद्धौ विभक्तिकार्ये 'अवतार:' इति।

(१२९४) **हलश्चेति**। पूर्वसूत्रात् घञित्यनुवर्तते। तदाह–**हलन्तादिति**। **अपामार्ग:**– अपोपसर्गपूर्वकमृज्धातो: 'हलश्चे'ति घञि अनुबन्धलोपे 'मृजेर्वृद्धि:' इत्यनेन उपधावृद्धौ, 'चजो: कु घिण्ण्यतो:' इत्यनेन जस्य गकारे 'उपसर्गस्य घञ्यमनुष्ये बहुलमि'त्यनेन अपाकारस्य दीर्घे, प्रातिपदिकत्वे सौ, रुत्वे विसर्गे कृते 'अपामार्ग:' इति।

(१२९५) **ईषद्दु:सुष्विति**। 'तयोरेव कृत्य-क्त-खलर्था:' इत्यनेन भावे कर्मणि च खल् भवतीत्याशय:। **दुष्कर:**– 'दुस्' उपसर्गात् कृधातो: 'ईषद्दु:सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इत्यनेन

---

**विमर्श**– पूर्वसूत्र (१२८९) से 'करणाधिकरणयो:' तथा 'पुंसि संज्ञायां घ: प्रायेण' (१२९१) से 'पुंसि, संज्ञायां प्रायेण' की अनुवृत्ति आती है। 'धातो:' का अधिकार है। 'अवे' सप्तम्यन्त होने से 'तत्रोपपदं सप्तमीस्थम्' के अनुसार उपपदसंज्ञक है। तदनुसार– '''अव' के उपपद होने पर तृ और स्तृ धातुओं से करण और अधिकरण में प्राय: घञ् प्रत्यय होता है; पुंल्लिङ्ग में संज्ञा वाच्य हो तो''।

'घञ' में आदि घकार 'लशक्वतद्धिते' से तथा अन्त्य ञकार 'हलन्त्यम्' से इत्संज्ञक है। उनका लोप होकर 'अ' मात्र शेष रहता है।

**उदाहरण**– (१) अव + तृ + घञ् (= 'अ'–'अवे तृस्त्रोर्घञ्', 'ॠ' = 'आ'–वृद्धि–'अचो ञ्णिति', रपर, विभक्तिकार्य) = अवतार: (अवतरन्त्यनेनेति, नदी आदि का घाट)। (२) अवस्तीर्यन्तेऽनेनेति– अव + स्तृ + घञ् (= 'अ', वृद्धि, रपर, विभक्तिकार्य) = अवस्तार: (पर्दा)।

(१२९४) **पद**– हल:, च। **अनुवृत्ति**– करणाधिकरणयो:, घञ्, पुंसि संज्ञायां प्रायेण। **विधिसूत्र**।

**मूलार्थ**– करण और अधिकरण अर्थ में हलन्त धातु से प्राय: घञ् प्रत्यय होता है, पुल्लिङ्ग और संज्ञा में। 'पुंसि संज्ञायाम्०' से प्राप्त घ का यह सूत्र अपवाद है। राम:।

**विमर्श**– यहाँ पूर्वसूत्र (१२९३) से 'घञ्' की तथा पूर्ववत् 'करणाधिकरणयो:', 'पुंसि संज्ञायां प्रायेण' की अनुवृत्ति आती है। 'धातो:' पद अधिकृत है। 'हल:' 'धातो:' का विशेषण होने से तदन्तविधि होती है। तदनुसार– ''पुंस्त्व-विशिष्ट संज्ञा वाच्य होने पर हलन्त धातु से करण और अधिकरण अर्थ में प्राय: घञ् प्रत्यय हो जाता है''।

**उदाहरण**– (१) रमन्ते योगिनोऽस्मिन्निति। ✓ रम् + घञ् (= 'अ'–'हलश्च', 'अ' = 'आ'– उपधा को वृद्धि–'अत उपधाया:', प्राति० संज्ञा, सु = स् = र् = :) = राम: (जिसमें योगीजन रमण करते हैं, राम)। (२) अपमृज्यतेऽनेन व्याध्यादि– अप + मृज् + घञ् (= 'अ', 'ॠ' = 'आ'–वृद्धि– 'मृजेर्वृद्धि:', रपर, 'ज्' = 'ग्'–'चजो: कु: घिण्ण्यतो:', उपसर्ग के पकारोत्तर 'अ' = 'आ' दीर्घ– 'उपसर्गस्य घञ्मनुष्ये बहुलम्', विभक्तिकार्य) = अपामार्ग: (अपामार्ग नामक औषधि)।

(१२९५) **पद**– ईषद्दु:सुषु, कृच्छ्राकृच्छ्रार्थेषु, खल्। **विधिसूत्र**।

**मूलार्थ**– दु:खार्थक और सुखार्थक ईषत्, दुस्, सु उपपद रहते धातु से खल् प्रत्यय होता है। 'तयोरेव कृत्यक्तखलर्था:' के अनुसार यह प्रत्यय भाव और कर्म में ही होता है। दुष्कर: कटो भवता। ईषत्कर:। सुकर:।

ईषत्करः। सुकरः। ( १२९६ ) **आतो युच् ३।३।१२८** । खलोऽपवादः। ईषत्पानः सोमो भवता। दुष्पानः। सुपानः। ( १२९७ ) **आवश्यकाधमर्ण्ययोर्णिनिः ३।३।१७०** । अवश्यं कारी। शतं दायी। ( १२९८ ) **कृत्याश्च ३।३।१७१** । तथा धातोः। अवश्यं

---

खल्प्रत्ययेऽनुबन्धलोपे 'इदुपधस्य चाप्रत्ययस्य' इत्यनेन सस्य षत्वे, ऋकारस्य गुणे रपरे प्रातिपदिकत्वे सौ, रुत्वे विसर्गे 'दुष्करः' इति।

(१२९६) **आतो युच्।** ईषदादिषु कृच्छ्राकृच्छ्रार्थेषूपपदेषु आदन्ताद्धातोः युच् स्यादित्यर्थः। **ईषत्पानः**– ईषत्पूर्वकपाधातोः 'आतो युच्' इत्यनेन प्राप्तं खल्प्रत्ययं प्रबाध्य युच्प्रत्ययेऽनुबन्धलोपे 'युवोरनाकौ' इत्यनेन 'यु' इत्यस्य अनादेशे, सवर्णदीर्घे प्रातिपदिकत्वे विभक्तिकार्ये 'ईषत्पानः' इति।

(१२९७) **आवश्यकेति।** आवश्यके आधमर्ण्ये च गम्ये धातोः कर्तरि णिनिः स्यादित्यर्थः।

---

**विमर्श–** 'धातोः' का अधिकार है। कृच्छ्रम् = दुःखम्। अकृच्छ्रम् = सुखम्। कृच्छ्रं च अकृच्छ्रं च कृच्छ्राकृच्छ्रे, अर्थौ येषां ते कृच्छ्राकृच्छ्रार्थास्तेषु (द्वन्द्वगर्भबहुव्रीहिः)। अतः "दुःखवाचक दुस् और सुखवाचक ईषत् अथवा सु उपपद रहते धातु से खल् प्रत्यय होता है"। यह प्रत्यय सकर्मक धातुओं से कर्म में और अकर्मक धातुओं से भाव में होता है। खल् में आदि 'ख्' 'लशक्वतद्धिते' से तथा अन्त्य 'ल्' 'हलन्त्यम्' से इत्संज्ञक होकर लुप्त हो जाता है। 'अ' मात्र शेष रहता है।

**उदाहरण–** (१) दुःखेन क्रियत इति। दुस् + ✓ कृ + खल् ('अ'–'ईषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खल्', आर्धधातुकसंज्ञा, 'ऋ' = 'अ'–गुण–'सार्वधातु०', रपर, 'स्' = 'ष्'–षत्व–'इदुदुपधस्य चाप्रत्ययस्य', प्राति० संज्ञा, सु = स् = र् = :) = दुष्करः कटो भवता (चटाई बनाना आपके लिए कठिन है)। (२) सुखेन क्रियत इति– ईषत् + कृ + खल् (= 'अ', गुण, रपर, विभक्तिकार्य) = ईषत्करः (आसानी से बनाई जा सके)। (३) सु + कृ + खल् (पूर्ववत् प्रक्रिया) = सुकरः।

(१२९६) **पद–** आतः, युच्। **अनुवृत्ति–** ईषद्दुःसुषु, कृच्छ्राकृच्छ्रार्थेषु। **विधिसूत्र।**

**मूलार्थ–** ईषदादि के उपपद रहते आदन्त धातु से युच् प्रत्यय होता है। ईषत्पानः सोमो भवता। दुष्पानः। सुपानः।

**विमर्श–** 'धातोः' का अधिकार है। पूर्वसूत्र (१२९५) से 'ईषद्दुःसुषु, कृच्छ्राकृच्छ्रार्थेषु' की अनुवृत्ति आती है। 'आतः' 'धातोः' का विशेषण है। अतः तदन्तविधि होकर 'आदन्ताद् धातोः' हो जाता है। इस प्रकार–"दुःखवाचक दुस् तथा सुखवाचक ईषत् या सु के उपपद रहते आदन्त धातु से युच् प्रत्यय होता है।"

युच् में इत्संज्ञक चकार का लोप होने पर 'यु' मात्र अवशिष्ट रहता है।

**उदाहरण–** (१) ईषत् + ✓ पा + युच् (= 'यु'–'आतो युच्', 'यु' = 'अन'–'युवोरनाकौ', आ + अ = 'आ'–सवर्णदीर्घ, विभक्तिकार्य) = ईषत्पानः सोमो भवता (आप सोम को आसानी से पी सकते हैं)। (२) दुस् + पा + युच् (पूर्ववत्प्रक्रिया, षत्व) = दुष्पानः। (३) सु + पा + युच् (पूर्ववत् प्रक्रिया) = सुपानः।

(१२९७) **पद–** आवश्यकाधमर्ण्ययोः, णिनिः। **विधिसूत्र।**

**मूलार्थ–** आवश्यक और आधमर्ण्य (लेन-देन) अर्थ गम्य रहने पर धातु से कर्ता में णिनि प्रत्यय होता है। अवश्यंकारी। शतंदायी।

**विमर्श–** 'धातोः' का अधिकार है। तदनुसार– "आवश्यक और आधमर्ण्य (ऋण–विशिष्ट)

**(१४२०) झयः ५।४।१११ ।** झयन्तादव्ययीभावाट्टच् वा स्यात्। उपसमित् – उपसमिधम्। **(१४२१) नदीपौर्णमास्याग्रहायणीभ्यः ५।४।११० ।** वा टच् स्यात्। उपनदम्। 'यस्येति चे'ति इलोपः। उपनदीत्यादि। **(१४२२) गिरेश्च**

---

(१४२०) **झयः** । अन्यतरस्यामिति टजिति चानुवर्तते । 'अव्ययीभावे' इत्यनुवृत्तं पञ्चम्या विपरिणम्यते झया विशेष्यते च । तदाह – **झयन्तादिति** ।

(१४२१) **नदीपौर्णमासी** । अन्यतरस्यामिति टजिति चानुवर्तते । अत आह – **वा टजिति** ।

---

(१४२०) **पद**—झयः। **अनुवत्ति**—अन्यतरस्याम्, अव्ययीभावे, टच्। **विधिसूत्र** ।

**मूलार्थ**—झयन्त अव्ययीभाव से समासान्त टच् प्रत्यय विकल्प से होता है। उपसमिधम्। उपसमित् ।

**विमर्श**—प्रकृत सूत्र में पूर्ववत् 'टच्', पूर्वसूत्र (१४१६) से 'अव्ययीभावे' तथा (१४१९) से 'अन्यतरस्याम्' की अनुवृत्ति आ रही है। 'समासान्ताः' का अधिकार है। अतः ''झयन्त अव्ययीभाव से वैकल्पिक समासान्त टच् प्रत्यय होता है।''

**उदाहरण—विग्रह**—समिधः समीपम्। **अलौकिक विग्रह**—समिध् + ङस्, उप + सु (समास – 'अव्ययं विभक्ति०' विभक्तिलोप, 'उप' का पूर्वप्रयोग, विकल्प से टच् = 'अ' – 'झयः') – उपसमिध् + अ (पुनः विभक्त्युत्पत्ति सु, 'सु' = 'अम्', पूर्वरूप) = उपसमिधम्। 'टच्' के अभावपक्ष में – उपसमिध् + सु ('सु' का लोप, 'ध्' = 'द्' – जश्त्व, 'द्' = 'त्' – चर्त्व) = उपसमित् (समिधा के समीप)।

(१४२१) **पद**—नदीपौर्णमास्याग्रहायणीभ्यः। **अनुवृत्ति**—अन्यतरस्याम्, अव्ययीभावे, टच्। **विधिसूत्र** ।

**मूलार्थ**—नदी, पौर्णमासी और आग्रहायणी शब्दों से समासान्त टच् प्रत्यय विकल्प से होता है। उपनदम्। उपनदि।

**विमर्श**—पूर्वसूत्र (१४१९) से 'अन्यतरस्याम्', १४१६ सूत्र से 'अव्ययीभावे' तथा 'राजाहः०' (५।४।९१) से 'टच्' की अनुवृत्ति अपेक्षित है। पूर्ववत् 'समासान्ताः' का अधिकारजन्य प्रभाव है। सूत्र में इतरेतरद्वन्द्व समास है – ''नदी च पौर्णमासी च आग्रहायणी च, ताभ्यः।'' 'अव्ययीभावे' का पञ्चम्यन्त में विपरिणाम होता है। सूत्रस्थ – 'नदीपौर्णमास्याग्रहायणीभ्यः' 'अव्ययीभावे' का विशेषण हो जाने से तदन्तविधि होती है। तदनुसार – ''नदी, पौर्णमासी और आग्रहायणी शब्द जिस अव्ययीभाव के अन्त में हों, तदन्त से वैकल्पिक समासान्त टच् प्रत्यय होता है।''

**उदाहरण—लौकिक विग्रह**—नद्याः समीपम्। **अलौकिक विग्रह** – नदी + ङस्, उप + सु (सामीप्य अर्थ में अव्ययीभाव समास, विभक्तिलोप, 'उप' का पूर्वनिपात, टच्='अ' प्रत्यय विकल्प से – 'नदीपौर्णमास्याग्रहायणीभ्यः', 'ई' का लोप – 'यस्येति च') – उपनद् + अ (प्राति०संज्ञा, सु, 'सु' = 'अम्', पूर्वरूप) = उपनदम्। टच् के न होने पर उपनदी (नपुंसकलिङ्गनिमित्तक ह्रस्व 'ई' = 'इ' – 'ह्रस्वो नपुंसके प्रातिपदिकस्य', विभक्तिलुक्) = उपनदि (नदी के समीप)।

(१४२२) **पद**—गिरेः, च, सेनकस्य। **अनुवृत्ति**—अन्यतरस्याम्, अव्ययीभावे, टच्। **विधिसूत्र** ।

**सेनकस्य ५।४।११२ । टच् वा स्यात् । उपगिरम् । उपगिरि । * प्रतिपरसमनुभ्योऽक्ष्णः * । टच् स्यात् । अक्ष्णोऽभिमुखं प्रत्यक्षम् । अक्ष्णः परं परोक्षम् । अत एव समासः । 'परोक्षे लिडि'ति निपातनात्परस्यौकार इत्यादि ।**

**इत्यव्ययीभावप्रकरणम् ।**



---

(१४२२) **गिरेश्चेति** ।अन्यतरस्यामिति टजिति चानुवर्तते ।सेनकाचार्याणां मते गिर्यन्ताद्वा टच् स्यादित्यर्थः । **उपगिरिमिति** । गिरेः समीपमित्यर्थः । समासे, सुब्लुकि उपेत्यस्य पूर्वनिपाते 'गिरेश्च सेनकस्ये'ति वा टचि, अनुबन्धलोपे 'यस्येति चे'ति इकारलोपे प्रातिपदिकत्वे सौ, सोरमि पूवरूपे उपगिरमिति । टजभावपक्षे — 'उपगिरि' इति ।

**इत्यव्ययीभावप्रकरणम् ।**



---

**मूलार्थ**—गिरिशब्दान्त अव्ययीभाव से समासान्त टच् प्रत्यय विकल्प से होता है । उपगिरम् । उपगिरि । **प्रतिपर०**—प्रति, पर, सम् और अनु पूर्वक अक्षि शब्द से अव्ययीभाव समास में समासान्त टच् प्रत्यय विकल्प से होता है । प्रत्यक्षम् । परोक्षम् इत्यादि ।

**विमर्श**—पूर्वसूत्र के अनुसार प्रकृत सूत्र में भी 'अन्यतरस्याम्', 'अव्ययीभावे' तथा 'टच्' की अनुवृत्ति आती है । पूर्ववत् 'समासान्ताः' का अधिकार है ।'अव्ययीभावे' का पञ्चम्यन्त में विपरिणाम होता है । सूत्रस्थ 'गिरेः' उसका विशेषण है । अतः तदन्तविधि होती है । इस प्रकार — ''गिरिशब्दान्त अव्ययीभाव समास से भी समासान्त टच् प्रत्यय सेनक आचार्य के मत में (विकल्प से) होता है ।''

**उदाहरण—विग्रह**—गिरेः समीपम् ।**अलौकिक विग्रह**—गिरि + ङस्, उप + सु, (सामीप्यार्थ में समास, विभक्तिलोप, 'उप' का पूर्वनिपात, टच् = 'अ' प्रत्यय विकल्प से, 'इ' का लोप — 'यस्येति च', प्राति० संज्ञा, सु, 'सु' = 'अम्', पूर्वरूप) = उपगिरम् । 'टच्' के अभावपक्ष में — समासादि के पश्चात् विभक्ति का लोप — 'अव्ययादाप्सुपः') = उपगिरि (पर्वत के समीप) ।

**ग० सू०**—प्रति, पर, सम् तथा अनु सहित अक्षि शब्दान्त से भी समासान्त टच् प्रत्यय होता है ।

**उदाहरण—विग्रह**—अक्ष्णी प्रति । **अलौ० वि०**—अक्षि + औ, प्रति + सु (समास — 'लक्षणेनाभिप्रती आभिमुख्ये', प्रति का पूर्वनिपात, विभक्तिलोप, 'इ' = 'य्' — यण्, टच् = 'अ' — 'प्रतिपरसमनुभ्योऽक्ष्णः') — प्रत्यक्षि अ ('इ' का लोप — 'यस्येति च', पुनः विभक्ति — सु, 'सु' = 'अम्', पूर्वरूप) = प्रत्यक्षम् (आँखों के सामने)। **विग्रह**—अक्ष्णः परम् **अलौ० वि०**— अक्षि + ङस्, परम् + सु (सामर्थ्य से अव्ययीभाव समास, विभक्तिलोप, 'पर' का पूर्वनिपात, टच् = 'अ', 'इ' का लोप) — पर अक्ष ('अ' = 'ओ' निपातन 'परोक्षे लिट्' निर्देश होने के कारण, सु = अम्, पूर्वरूप) = परोक्षम् (आँखों से ओझल) ।

**अव्ययीभावप्रकरण समास ।**



# अथ तत्पुरुषसमासप्रकरणम्

**(१४२३) तत्पुरुषः २।१।२२ ।** अधिकारोऽयं प्राग्बहुव्रीहेः । **(१४२४) द्विगुश्च २।१।२३ ।** तत्पुरुषसंज्ञः । **(१४२५) द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २।१।२४ ।** द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते ।

---

अव्ययीभावसमासान्निरूप्येदानीं तत्पुरुषसमासप्रकरणमारभते –

(१४२३) **तत्पुरुष इति** । **प्रागिति** । 'शेषो बहुव्रीहिः' इत्यतः प्राक् 'तत्पुरुषः' इत्यस्याधिकार इत्यर्थः ।

(१४२४) **द्विगुश्च** । 'तद्धितार्थोत्तरपदसमाहारे च' इति वक्ष्यमाणसमासस्य द्विगुसंज्ञा विधास्यते । स द्विगुसमासोऽपि तत्पुरुषसंज्ञक इति ।

(१४२५) **द्वितीयेति** । 'प्रत्ययग्रहणे तदन्तग्रहणमि'ति परिभाषालभ्यस्तदन्तविधिस्तदाह—**द्वितीयान्तमिति** ।सुपेत्यनुवृत्तं बहुवचनान्ततया विपरिणतं प्रत्ययग्रहणपरिभाषया सुबन्त-

---

अव्ययीभाव समास के अनन्तर क्रमप्राप्त तत्पुरुष समास का निर्वचन आरम्भ किया जा रहा है –

(१४२३) **पद**—तत्पुरुषः । **अनुवृत्ति**—सुप्, सह सुपा, समासः । **अधिकारसूत्र** ।

**मूलार्थ**—बहुव्रीहि के पूर्व तत्पुरुष का अधिकार है ।

**विमर्श**—प्रकृत सूत्र अधिकारसूत्र होने के साथ ही संज्ञासूत्र भी है । 'शेषो बहुव्रीहिः' (२।२।२३) सूत्र से पूर्व तक 'तत्पुरुषः' का अधिकार जाता है । अतः बहुव्रीहि से पूर्व अष्टाध्यायी में वर्णित समास तत्पुरुषसंज्ञक होगा ।

(१४२४) **पद**—द्विगुः, च । **अनुवृत्ति**—तत्पुरुषः । **संज्ञासूत्र** ।

**मूलार्थ**—द्विगु की भी तत्पुरुषसंज्ञा होती है ।

**विमर्श**—पूर्वसूत्र (१४२३) का अधिकार होने से 'तत्पुरुषः' की अनुवृत्ति आती है । तदनुसार द्विगु भी तत्पुरुषसंज्ञक होता है । तत्पुरुष का भेद 'कर्मधारय' और कर्मधारय का भेद द्विगु समास कहलाता है ।

(१४२५) **पद**—द्वितीया, श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः । **अनुवृत्ति**—विभाषा, सुप्, सह सुपा । **विधिसूत्र** ।

**मूलार्थ**—द्वितीयान्त का श्रितादिप्रकृतिक समर्थ सुबन्त के साथ विकल्प से समास होता है और वह तत्पुरुषसंज्ञक होता है । कृष्णश्रितः इत्यादि ।

**विमर्श**—द्वितीया से सप्तमीविभक्ति तक ६ विभक्तियों के आधार पर सामान्य तत्पुरुष ६ प्रकार का होता है । सर्वप्रथम द्वितीया तत्पुरुष का विवेचन किया जा रहा है । सूत्रार्थ की स्पष्टता हेतु प्रकृत सूत्र में – 'विभाषा' (२।१।११), 'सह सुपा' (२।१।२) तथा 'सुबामन्त्रिते पराङ्गवत् स्वरे' (२।१।२) से 'सुप्' की अनुवृत्ति आती है । सूत्रस्थ 'श्रिता……पन्नैः' पद में इतरेतरद्वन्द्व समास है । श्रितश्च, अतीतश्च, पतितश्च, गतश्च, अत्यस्तश्च, प्राप्तश्च, आपन्नश्च, तैः । समस्यमान श्रित आदि पद तदनुरूप पदों में लाक्षणिक हैं । 'द्वितीया' पद में 'प्रत्ययग्रहणे तदन्ता ग्राह्याः' परिभाषा के अनुसार तदन्तविधि होती है । इस प्रकार – ''द्वितीयान्त सुबन्त शब्दों का श्रित, अतीत, पतित, गत, अत्यस्त, प्राप्त तथा आपन्न सुबन्तों के साथ विकल्प से समास होता है और वह तत्पुरुषसंज्ञक होता है ।''

**कृष्णं श्रितः कृष्णश्रित इत्यादि। (१४२६) तृतीया तत्कृतार्थेन गुणवचनेन २।१।३०। तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थेन च सह प्राग्वत्। शङ्कुलया खण्डः शङ्कुलाखण्डः। धान्येनार्थो धान्यार्थः। तत्कृतेति किम्? अक्ष्णा काणः।**

---

परम्। श्रितादिशब्दाः श्रितादिप्रकृतिकेषु लाक्षणिका इति भावः। अत आह — **द्वितीयान्तमिति**। **कृष्णश्रितः** — कृष्णं श्रित इति। कृष्ण अम् श्रित सु इत्यलौकिकविग्रहे 'द्वितीयाश्रितातीत-पतितगतात्यस्तप्राप्तापन्नैः' इति समासे प्रातिपदिकत्वे सुपो लुकि 'प्रथमानिर्दिष्टं समास उपसर्जनम्'. इति कृष्णमित्यस्योपसर्जनसंज्ञायाम्, तस्य पूर्वनिपाते पुनः प्रातिपदिकसंज्ञायां सौ रुत्वे विसर्गे 'कृष्णश्रितः' इति।

(१४२६) **तृतीयेति**। 'तृतीये'त्यनेन तृतीयान्तं विवक्षितम्। 'तत्कृत' इति लुप्ततृतीया-कम्, तच्छब्देन तृतीयान्तपरामर्शिना तदर्थो लक्ष्यते। तत्कृतेत्येतच्च गुणद्वारा गुणवचनेऽन्वेति। तदाह — **तृतीयान्तमित्यादिना**। **शङ्कुलाखण्डः** — 'शङ्कुलया खण्डः' इति लौकिकविग्रहे 'शङ्कुला टा खण्ड सु' इत्यलौकिकविग्रहे 'तृतीया तत्कृतार्थेन गुणवचनेने'त्यनेन तत्पुरुषसमासे विभक्तिलोपे शङ्कुलाशब्दस्योपसर्जनत्वे पूर्वप्रयोगे प्रातिपदिकत्वे सौ रुत्वे विसर्गे 'शङ्कुला-खण्डः' इति।

---

**उदाहरण—विग्रह**—कृष्णं श्रितः। **अलौकिक विग्रह**—कृष्ण + अम्, श्रित + सु (द्वितीयान्त कृष्ण का श्रित के साथ समास — 'द्वितीया श्रिता०', उपसर्जनसंज्ञा, कृष्ण का पूर्वनिपात, विभक्तिलोप, प्राति०संज्ञा, पुनः विभक्ति उत्पत्ति सु, स् = र् — 'ससजुषो रुः', र्=: — 'खरवसानयोर्विसर्जनीयः') = कृष्णश्रितः (= कृष्ण को प्राप्त)।

(१४२६) **पद**—तृतीया, तत्कृतार्थेन, गुणवचनेन। **अनुवृत्ति**—सुप्, सह सुपा। **विधिसूत्र**।

**मूलार्थ**—तृतीयान्त पद का तृतीयान्तार्थ से किये गुणवचन के साथ और अर्थ शब्द के साथ विकल्प से समास होता है। शङ्कुलाखण्डः इत्यादि।

**विमर्श**—सूत्रार्थ के निर्वचन हेतु यहाँ पूर्ववत् 'सुप्' और 'सह सुपा' की अनुवृत्ति आती है। समासप्रकरण के सूत्र-'प्राक्कडारात्समासः' (१३९५), 'तत्पुरुषः' (१४२३) तथा 'विभाषा' (१४०८) का अधिकार विद्यमान है। सूत्रस्थ 'तत्कृत' पद लुप्ततृतीयान्त है। अतः अर्थ की दृष्टि से उसका स्वरूप 'तत्कृतेन' है। 'तत्कृतेन' पद 'गुणवचनेन' के साथ अन्वित होता है। 'प्रत्ययग्रहणे तदन्ता ग्राह्याः' परिभाषा के अनुसार 'तृतीया' पद 'तृतीयान्त' का बोधक है। इस प्रकार ''तृतीयान्त सुबन्त का तृतीयान्त के अर्थ द्वारा सम्पादित गुणवाची शब्द के साथ एवम् सुबन्त अर्थ शब्द के साथ विकल्प से समास होता है, वह तत्पुरुषसंज्ञक होता है।''

**उदाहरण—लौकिक विग्रह**—शङ्कुलया खण्डः। **अलौकिक विग्रह**—शङ्कुला + टा, खण्ड + सु (तृतीयान्त शङ्कुला का तत्कृत गुणवाचक सुबन्त 'खण्डः' के साथ समास — 'तृतीया तत्कृतार्थेन०', विभक्तिलोप, उपसर्जनसंज्ञा, 'शङ्कुला' का पूर्वनिपात, पुनः विभक्त्युत्पत्ति सु, स् = र् = :) = शङ्कुलाखण्डः (= सरौते से किया हुआ टुकड़ा)। **विग्रह**—धान्येन अर्थः। **अलौकिक विग्रह**—धान्य + टा, अर्थ + सु (तृतीयान्त सुबन्त 'धान्येन' का 'अर्थः' के साथ समास, विभक्तिलोप आदि, अ + अ = 'आ' – दीर्घ, प्राति० संज्ञा, सु, स् = र् = :) = धान्यार्थः (धान्य से प्रयोजन)।

**प्रत्युदाहरण—तत्कृत इति**। प्रकृत सूत्र में 'तत्कृत' का क्या प्रयोजन है? सूत्र में इस पद का अभाव होने पर 'गुणवाची' पद का तृतीयान्त सुबन्त के अर्थ द्वारा सम्पादित न होने पर भी

**( १४२७ ) पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः २।१।३१** ।तृतीयान्तमेतैः प्राग्वत् । मासपूर्वः । मातृसदृशः । पितृसमः । ऊनार्थे – माषोनं कार्षापणम् । मासविकलम् । वाक्कलहः । आचारनिपुणः । गुडमिश्रः । आचारश्लक्ष्णः । * अवरस्योपसंख्यानम् * । मासावरः । **( १४२८ ) अन्नेन व्यञ्जनम् २।१।३४ ।**

---

(१४२७) **पूर्वसदृशेति** । पूर्व, सदृश, सम, ऊनार्थ, कलह, निपुण, मिश्र, श्लक्ष्ण — एतैः सह तृतीयान्तं पदं समस्यते स तत्पुरुष इत्यर्थः ।

---

तृतीयान्त सुबन्त के साथ समास प्राप्त हो जाता । इस प्रकार – 'अक्ष्णा काणः' (आँख से काना) में भी समास हो जाता । किन्तु यहाँ समास नहीं होता, क्योंकि यहाँ काणत्व आँख के द्वारा सम्पादित है तथा वह दुष्कर्मों का परिणाम है ।

(१४२७) **पद**—पूर्वसदृश ........ श्लक्ष्णैः। **अनुवृत्ति**—तृतीया, सुप्, सह सुपा । **विधिसूत्र** ।

**मूलार्थ**—तृतीयान्त का पूर्व, सदृश आदि के साथ विकल्प से समास होता है । मासपूर्वः । मातृसदृशः । इत्यादि । **वा०**—अवर शब्द का भी (तृतीयान्त सुबन्त के साथ) समास होता है । मासावरः ।

**विमर्श**—प्रकृत एक पद सूत्र में इतरेतरद्वन्द्व समास है । पूर्वश्च, सदृशश्च, समश्च, ऊनार्थश्च, कलहश्च, निपुणश्च, मिश्रश्च, श्लक्ष्णश्च, तैः । पूर्वसूत्र (१४२६) से 'तृतीया' पद की अनुवृत्ति आती है । पूर्ववत् 'तत्पुरुषः', 'विभाषा' तथा 'समासः' का अधिकार है एवम् 'सुप्', 'सह सुपा' की अनुवृत्ति अपेक्षित है । तदनुसार – ''तृतीयान्त सुबन्त का पूर्व, सदृश, सम, ऊनार्थ, कलह, निपुण, मिश्र तथा श्लक्ष्ण सुबन्तों के साथ विकल्प से समास होता है ।''

**उदाहरण** (१) **लौकिक विग्रह**—मासेन पूर्वः।[1] **अलौकिक विग्रह**—मास + टा, पूर्व + सु (तृतीयान्त 'मासेन' का 'पूर्वः' सुबन्त के साथ समास – 'पूर्वसदृश०', विभक्तिलोप आदि, पुनः विभक्त्युत्पत्ति सु = स् = र् = :) = मासपूर्वः (= एक मास पहले का) । (२) **लौकिक विग्रह**—मात्रा सदृशः[2] । **अलौकिक विग्रह**—मातृ + टा, सदृश + सु ('मात्रा' तृतीयान्त का 'सदृशः' के साथ समास, विभक्तिलोप, पुनः प्राति०संज्ञा, सु = स् = र् = :) = मातृसदृशः (= माता के समान) । (३) पित्रा समः । **अलौकिक विग्रह**—पितृ + टा, सम + सु (पूर्ववत् समास, विभक्तिलोप, प्राति०संज्ञा, सु = स् = र् =:) = पितृसमः (पिता के समान) । (४) **विग्रह**—माषेण ऊनम् । **अलौ० वि०**—माष + टा, ऊन + सु (पूर्ववत् समास, विभक्तिलोप, अ + ऊ = 'ओ' – गुण, पुनः विभक्त्युत्पत्ति – सु, सु = अम्, अ + अ = 'अ' – पूर्वरूप) = माषोनम् (माष से कम परिमाण) । (५) **विग्रह**—माषेण विकलम् । **अलौ० वि०**—माष + टा, विकल + सु (पूर्ववत् समासादि) = माषविकलम् (माष से हीन परिमाण) । (६) **विग्रह**—वाचा कलहः । **अलौ० वि०**—वाच् + टा, कलह + सु (पूर्ववत्समासादि, 'च्' = 'क्' – कुत्व) = वाक्कलहः (वाणी के द्वारा झगड़ा) । (७) **लौकिक विग्रह**—आचारेण निपुणः । **अलौ० वि०**—आचार + टा, निपुण + सु (पूर्ववत् समास आदि) = आचारनिपुणः (आचरण द्वारा कुशल) । (८) **विग्रह**—गुडेन मिश्रः । **अलौ० वि०**—गुड + टा,

---

१. यहाँ अवधि (मास) प्रतीत होने से 'अन्यारादितरर्ते०' (२/२/२९) से पञ्चमी विभक्ति की प्राप्ति होती है; परन्तु प्रकृत सूत्र (१४२७) द्वारा समासविधान के कारण ज्ञापकवश तृतीया विभक्ति हुई । इसी प्रकार – 'माषेण ऊनम्' इत्यादि में भी तृतीया ।

२. 'तुल्यार्थैरतुलोपमाभ्यां तृतीया' से तृतीया विभक्ति । 'पित्रा समः' में भी तृतीया ।

संस्कारकद्रव्यवाचकं तृतीयान्तमन्येन सह प्राग्वत्। दध्ना उपसिक्तमोदनं दध्योदनम्।
**(१४२९) भक्ष्येण मिश्रीकरणम् २।१।३५।** गुडेन मिश्रा धानाः गुडधानाः।

---

(१४२८) **अन्नेनेति।** **संस्कारेति।** संस्क्रियते अनेनेति संस्कारः, उपसेकादिसाधनम् तद्वाचकमित्यर्थः। **दध्योदनः** – 'दध्ना उपसिक्तः ओदनः' इति। दधि + टा, ओदन + सु इत्यलौकिकविग्रहे 'अन्नेन व्यञ्जनम्' इति समासे विभक्तिलोपे 'दधि' इत्यस्योपसर्जनत्वे पूर्वप्रयोगे यणि प्रातिपदिकत्वे सौ रुत्वे विसर्गे च 'दध्योदनः' इति।

(१४२९) **भक्ष्येणेति।** मिश्रीक्रियते खाद्यद्रव्यमनेनेति मिश्रीकरणम्। तद्वाचकं तृतीयान्तं भक्ष्यवाचकेन सह समस्यत इत्यर्थः।

---

मिश्र + सु (पूर्ववत् समासादि) – गुडमिश्र (गुड़ मिलाया हुआ)। (९) **विग्रह**—आचारेण श्लक्ष्णः। **अलौ० वि०**—आचार + टा, श्लक्ष्ण + सु (समासादि पूर्ववत्) = आचारश्लक्ष्णः (आचरण से अच्छा)।

**वा०**—तृतीयान्त सुबन्त के साथ सुबन्त 'अवर' का समास होता है।

**उदाहरण**—**विग्रह**—मासेन अवरः। **अलौ० वि०**—मास + टा, अवर + सु (समास 'अवरस्योपसंख्यानम्', विभक्तिलोप, दीर्घ, पुनः सु = स् = र् = :) = मासावरः (एक माह पहले)।

(१४२८) **पद**—अन्नेन, व्यञ्जनम्। **अनुवृत्ति**—तृतीया, सुप्, सह सुपा। **विधिसूत्र।**

**मूलार्थ**—संस्कारकद्रव्यवाचक तृतीयान्त सुबन्त का अन्नवाचक शब्द के साथ विकल्प से समास होता है। दध्योदनम्।

**विमर्श**—सूत्रार्थ की पूर्ति हेतु पूर्वसूत्रों से 'तृतीया', 'सुप्' तथा 'सह सुपा' पदों की अनुवृत्ति आती है। पूर्ववत् 'तत्पुरुषः', 'विभाषा' तथा 'समासः' का अधिकारजन्य प्रभाव विद्यमान है। तदनुसार सूत्र का आशय इस प्रकार है — ''अन्न को स्वादु बनाने के लिए उपयोगी व्यञ्जनवाची तृतीयान्त सुबन्त का अन्नवाची सुबन्त शब्दों के साथ विकल्प से (तृतीयातत्पुरुष) समास होता है।''

**उदाहरण**—**लौकिक विग्रह**—दध्ना (उपसिक्तः) ओदनः। **अलौकिक विग्रह**—दधि + टा, ओदन + सु (व्यञ्जनवाची तृतीयान्त 'दध्ना' के साथ 'ओदनः' अन्नवाची का समास – 'अन्नेन व्यञ्जनम्', विभक्तिलोप, 'इ' = 'य्' – यण्, प्राति० संज्ञा, सु = स् = र् = :) = दध्योदनः (दहीमिश्रित भात)।

(१४२९) **पद**—भक्ष्येण, मिश्रीकरणम्। **अनुवृत्ति**—तृतीया, सुप्, सह सुपा। **विधिसूत्र।**

**मूलार्थ**—मिश्रीकरणवाचक तृतीयान्त सुबन्त का भक्ष्यवाचक सुबन्त के साथ विकल्प से समास होता है। गुडधानाः।

**विमर्श**—पूर्वसूत्र (१४२८) के समान यहाँ भी उक्त सभी पदों की अनुवृत्ति आती है। तदनुसार – 'मिश्रण करना' अर्थात् 'मिलाना' के पर्यायवाचक तृतीयान्त शब्दों का मिश्रितपदार्थसूचक अन्नवाची समर्थ सुबन्त के साथ विकल्प से समास होता है।

**उदाहरण**—**लौकिक विग्रह**—गुडेन धानाः। **अलौकिक विग्रह**—गुड + टा, धान + जस् ('गुडेन' तृतीयान्त का भक्ष्यवाची सुबन्त 'धानाः' के साथ समास – 'भक्ष्येण मिश्रीकरणम्', विभक्ति का लोप, पुनः विभक्त्युत्पत्ति जस् = अस्) – गुडधान + अस् (अ + अ = 'आ' – दीर्घ – 'प्रथमयोः पूर्वसवर्णः', स् = र् = :) = गुडधानाः (गुड मिले हुए धान)।

**(१४३०) कर्तृकरणे कृता बहुलम् २।१।३२।** कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत्। हरिणा त्रातो हरित्रातः। नखभिन्नः। 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' (.प.)। नखनिर्भिन्नः। **(१४३१) चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २।१।३६।** चतुर्थ्यन्तार्थाय यत्तद्वाचिनाऽर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत्। यूपाय

---

(१४३०) **कर्तृकरण इति**। तृतीयेत्यनुवर्तते। प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम्, कृतेत्यपि तथैव। तदाह — **कर्तरि इत्यादि**। **नखनिर्भिन्नः** — 'नखैर्निर्भिन्नः' इति लौकिक-विग्रहे नख + भिस्, निर्भिन्न + सु इत्यलौकिकविग्रहे 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति परिभाषाबलात् 'कर्तृकरणे कृता बहुलम्' इत्यनेन समासे विभक्तिलोपे नखनिर्भिन्नपदस्य प्रातिपदिकत्वे सौ रुत्वे विसर्गे च 'नखनिर्भिन्नः' इति।

(१४३१) **चतुर्थीति**। चतुर्थीत्यनेन प्रत्ययग्रहणपरिभाषया चतुर्थ्यन्तं गृह्यते। तदर्थ, अर्थ, बलि, हित, सुख, रक्षित इत्येषां द्वन्द्वः। चतुर्थ्यन्तमेतैः षड्भिः समस्यते स तत्पुरुष इति

---

(१४३०) **पद**—कर्तृकरणे, कृता, बहुलम्। **अनुवृत्ति**—तृतीया, सुप्, सह सुपा। **विधिसूत्र**।

**मूलार्थ**—कर्तृतृतीयान्त और करणतृतीयान्त का कृदन्त सुबन्त के साथ विकल्प से समास होता है। हरित्रातः। नखभिन्नः। **परि०**—कृत् के ग्रहण में गतिकारकपूर्वक शब्दों का भी ग्रहण होता है। नखनिर्भिन्नः।

**विमर्श**—सूत्रार्थ की स्पष्टता के लिए पूर्वसूत्र के समान सभी पदों की अनुवृत्तियाँ अपेक्षित है। यहाँ 'विभाषा' की अनुवृत्ति नहीं आती। सूत्र में 'बहुलम्' पद का निवेश होने से 'अधिक' अर्थ का लाभ होता है। सूत्रस्थ 'कर्तृकरणे' में समाहारद्वन्द्व समास है — 'कर्ता च करणं च, तस्मिन्।' तदनुसार — ''कर्तृवाची और करणवाची तृतीयान्त सुबन्त का कृदन्त सुबन्त के साथ अधिकतर (बहुलतया) समास होता है।''

**उदाहरण—लौकिक विग्रह**—हरिणा त्रातः[1]। **अलौकिक विग्रह**—हरि + टा, त्रात + सु (कर्तृतृतीयान्त 'हरिणा' के साथ क्तप्रत्ययान्त 'त्रातः' के साथ समास, विभक्तिलोप, प्राति० संज्ञा, सु = स् = र् = :) = हरित्रातः (हरि से रक्षित)। **विग्रह**—नखैः भिन्नः।[2] **अलौकिक विग्रह**—नख + भिस्, भिन्न + सु (करणतृतीयान्त 'नखैः' के साथ क्तप्रत्ययान्त 'भिन्नः' का समास, विभक्ति-लोपादि पूर्ववत्) = नखभिन्नः (नाखूनों से तोड़कर निकाला)।

**परिभाषार्थ**—गति तथा कारक पूर्वपद रहने पर भी कृत्संज्ञक प्रत्यय उसी रूप में ग्राह्य होते हैं।

**उदाहरण—लौकिक विग्रह**—नखैः निर्भिन्नः। **अलौ० वि०**—नख + भिस्, भिन्न + सु (निर् उपसर्ग के योग में भी भिन्न पद कृदन्त का बोधक होने से समास, विभक्तिलोप, पुनः विभक्त्युत्पत्ति सु = स् = र् = :) = नखनिर्भिन्नः (नाखूनों से तोड़ कर निकाला हुआ)।

(१४३१) **पद**—चतुर्थी, तदर्थार्थ - बलि - हित - सुख - रक्षितैः। **अनुवृत्ति**—सुप्, सह सुपा। **विधिसूत्र**।

**मूलार्थ**—चतुर्थ्यन्तार्थ के लिए जो पदार्थ, तद्वाचक शब्द के साथ तथा अर्थ आदि के साथ चतुर्थ्यन्त का विकल्प से समास होता है। यूपदारु। तदर्थ से प्रकृतिविकृतिभाव ही लिया जाता है।

---

१-२. क्रमशः कर्ता और करण में तृतीया - 'कर्तृकरणयोस्तृतीया' (२।३।१८)।

**दारु यूपदारु। तदर्थेन प्रकृतिविकृतिभाव एवेष्यते। तेनेह न – रन्धनाय स्थाली। अश्ववासादयस्तु षष्ठीतत्पुरुषाः। * अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम् *। द्विजायायं द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थं पयः। भूतबलिः।**

---

फलितार्थः। तदर्थेत्यत्र तच्छब्देन चतुर्थ्यन्तार्थो विवक्षितः। चतुर्थ्यन्तवाच्यप्रयोजनकं यत् तत्तदर्थमिति। अत आह – **चतुर्थ्यन्तार्थायेत्यादिना**। **अर्थेनेति**। अर्थशब्देन चतुर्थ्यन्तस्य नित्यसमास इति वक्तव्यम्। अन्यथा विभाषाधिकारात्पक्षे विकल्पः स्यात्। अर्थशब्दस्य नित्यपुंल्लिङ्गत्वेऽपि 'परवल्लिङ्गं' इति पुंल्लिङ्गं बाधित्वाऽनेन विशेष्यलिङ्गानुसारेण स्त्रीलिङ्गता नपुंसकता च। **भूतबलिरिति**। भूतेभ्यो बलिरिति विग्रहः। तादर्थ्यचतुर्थ्यन्तस्य बलिशब्देन समासः।

---

अतः 'रन्धनाय स्थाली' में समास नहीं हुआ। **वा०**—अर्थ शब्द के साथ नित्य समास होता है और विशेष्य के समान लिङ्ग भी होता है। द्विजार्थः सूपः इत्यादि।

**विमर्श**—चतुर्थीतत्पुरुष का प्रकरण आरम्भ होता है। सूत्रस्थ 'तदर्थार्थ.......... रक्षितैः' में इतरेतरद्वन्द्व समास है – "तस्मै इदं तदर्थम्, तदर्थं च, अर्थश्च, बलिश्च, हितञ्च, सुखं च रक्षितं च, तैः।" पूर्ववत् 'समासः', 'विभाषा' तथा 'तत्पुरुषः' का अधिकार है। 'सुप्' और 'सह सुपा' की अनुवृत्ति आ रही है। तदन्तविधि होने से 'चतुर्थी' पद चतुर्थ्यन्त का बोधक है। इस प्रकार – "चतुर्थ्यन्त का तद्वाचक अर्थ में प्रयोग किये जाने वाले प्रातिपदिक के साथ तथा अर्थ, बलि, हित, सुख एवं रक्षित सुबन्तों के साथ विकल्प से तत्पुरुष समास होता है।"

**उदाहरण—विग्रह**—यूपाय दारु। **अलौकिक विग्रह**—यूप + ङे, दारु + सु (सुबन्त 'दारु' प्रकृति है और चतुर्थ्यन्त 'यूपाय' विकृति है, अतः समास – 'चतुर्थी०', विभक्तिलोप, पुनः प्राति० संज्ञा, सु, 'सु' का लोप – 'स्वमोर्नपुंसकात्') = यूपदारु (खम्भे = यज्ञस्तम्भ के लिए लकड़ी)।

**तदर्थेनेति**—तदर्थ से प्रकृतिविकृतिभाव ही लिया जाता है। अर्थात् – चतुर्थ्यन्त सुबन्त के लिए गृहीत वस्तु से यदि चतुर्थ्यन्त पदार्थ में विकार होगा तो समास होगा अन्यथा नहीं। अतः 'रन्धनाय स्थाली' (पकाने के लिए पतीली (बटलोई)) में समास नहीं होता। क्योंकि यहाँ तदर्थवाचक सुबन्त 'स्थाली' है। पकने पर उसमें कोई परिवर्तन (विकार) नहीं होता। इसी प्रकार – अश्वस्य घासः = 'अश्वघासः' में षष्ठीतत्पुरुष समास ही होता है, चतुर्थीतत्पुरुष नहीं। क्योंकि 'अश्व' और 'घास' में भी 'यूप' और 'दारु' के समान प्रकृतिविकृतिभाव नहीं है।

**वा०**—"चतुर्थ्यन्त का 'अर्थ' सुबन्त के साथ नित्य समास होता है और समस्त पद का लिङ्ग विशेष्य के अनुसार होता है।" तत्पुरुष समास में उत्तरपद के अनुसार प्राप्त लिङ्ग का यह बाधक है।[1]

**उदाहरण**—(क) **अस्वपद विग्रह**—द्विजाय अयम्। द्विज + ङे, अर्थ सु (पुल्लिंग 'अर्थ' के स्थान पर विग्रह में 'अयम्' का प्रयोग हुआ है, वा० से नित्य समास, विभक्तिलोप, अ + अ = 'आ' – दीर्घ, पुनः प्राति० संज्ञा, सु = स् = र् = :) = द्विजार्थः सूपः (द्विज के लिए दाल)। (ख) द्विजाय इयम् = द्विजार्था यवागू (द्विज के लिए लपसी)। (ग) द्विजाय इदम् – द्विजार्थं पयः (द्विज के लिए दूध)। उक्त तीनों उदाहरणों में विशेष्य के अनुसार क्रमशः पुंल्लिङ्ग, स्त्रीलिङ्ग और नपुंसकलिङ्ग हुए हैं।

---

१. द्रष्टव्य – 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' (पा० सू० २।४।२६)।

गोहितम्। गोसुखम्। गोरक्षितम्। **(१४३२) पञ्चमी भयेन २।१।३७।** चोराद् भयम् चोरभयम्। **(१४३३) स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन २।१।३९।** **(१४३४) पञ्चम्याः स्तोकादिभ्यः ६।३।२।** अलुगुत्तरपदे। स्तोकान्मुक्तः। अल्पान्मुक्तः। अन्तिकादागतः। अभ्याशादागतः। दूरादागतः। विप्रकृष्टादागतः।

---

(१४३२) **पञ्चमीति**। पञ्चम्यन्तं भयशब्देन सुबन्तेन समस्यत इत्यर्थः। **चोरभयमिति**। चोर ङसि भय सु इत्यलौकिकविग्रहे 'पञ्चमी भयेन' इति समासे सुपो लुकि पञ्चम्यन्तस्य पूर्वनिपाते समुदायात्सौ सोरमि पूर्वरूपे च 'चोरभयमि'ति।

(१४३३) **स्तोकान्तिक इति**। स्तोक, अन्तिक, दूर एतदर्थकानि कृच्छ्र एतानि पञ्चम्यन्तानि क्तप्रत्ययान्तेन समस्यन्त इत्यर्थः। अर्थग्रहणं स्तोकान्तिकदूरेषु सम्बध्यते।

(१४३४) **पञ्चम्या इति**। स्तोकादिशब्देभ्यः पञ्चम्या अलुग् उत्तरपदे परतः।

---

**विग्रह**—भूताय बलिः। **अलौकिक विग्रह**—भूत + ङे, बलि + सु (समास – 'चतुर्थी०', विभक्तिलोप, प्राति० संज्ञा, सु = स् = र् = :) = भूतबलिः (भूत के लिए बलि)। **लौकिक वि०**—गवे हितम्। **अलौकिक विग्रह**—गो + ङे, हित + सु (समास, विभक्तिलोप, पुनः विभवत्युत्पत्ति सु, सु = 'अम्' – 'अतोऽम्', अ + अ = 'अ' पूर्वरूप – 'अमि पूर्वः') = गोहितम् (गाय के लिए हितकारी)। **विग्रह**—गोभ्यः सुखम्। **अलौ० वि०**—गो + भ्यस्, सुख + सु (पूर्ववत् समासादि) – गोसुखम् (गायों के लिए सुख)। **विग्रह**—गवे रक्षितम्। **अलौ० वि०**—गो + ङे, रक्षित + सु (पूर्ववत् समासादि) – गोरक्षितम् (गाय के लिए रक्षित)।

(१४३२) **पद**—पञ्चमी, भयेन। **अनुवृत्ति**—सुप्, सह सुपा। **विधिसूत्र**।

**मूलार्थ**—पञ्चम्यन्त भयवाचक सुबन्त के साथ विकल्प से समस्त होता है। चोरभयम्।

**विमर्श**—पञ्चमीतत्पुरुष का प्रकरण प्रारम्भ होता है। प्रकृत सूत्र में भी पूर्वसूत्र (१४३१) की तरह सभी आवश्यक पदों की अनवृत्ति आती है। तदनुसार – ''पञ्चम्यन्त का सुबन्त भय शब्द समर्थ के साथ विकल्प से समास होता है।''

**उदाहरण**—**लौकिक विग्रह**—चोराद् भयम्। **अलौकिक विग्रह**—चोर + ङसि, भय + सु (समास – 'पञ्चमी भयेन', विभक्तिलोप, पुन विभक्त्युत्पत्ति सु, सु = 'अम्', पूर्वरूप) = चोरभयम् (चोर से भय)।

(१४३३) **पद**—स्तोकान्तिकदूरार्थकृच्छ्राणि, क्तेन। **अनुवृत्ति**—पञ्चमी, सुप्, सह सुपा। **विधिसूत्र**।

**मूलार्थ**—स्तोकादि पञ्चम्यन्तों का क्तान्त के साथ विकल्प से समास होता है।

**विमर्श**—प्रकृत सूत्र में पूर्वसूत्र (१४३२) से 'पञ्चमी' की और पूर्ववत् 'सुप्' तथा 'सह सुपा' की अनुवृत्ति आती है। 'तत्पुरुषः', 'विभाषा' और 'समासः' का अधिकारजन्य प्रभाव विद्यमान है। अत एव ''स्तोकार्थक, अन्तिकार्थक और दूरार्थक पञ्चम्यन्त सुबन्त एवं कृच्छ्रार्थक पञ्चम्यन्त सुबन्त का क्तप्रत्ययान्त समर्थ सुबन्त के साथ विकल्प से समास होता है।''

(१४३४) **पद**—पञ्चम्याः, स्तोकादिभ्यः। **अनुवृत्ति**—अलुक् उत्तरपदे। **विधिसूत्र**।

**मूलार्थ**—उत्तरपद के परे रहते स्तोकादि से परवर्ती पञ्चमी का अलुक् होता है। स्तोकान्मुक्तः। अल्पान्मुक्तः इत्यादि।

**विमर्श**—सूत्र में विधेयांश की पूर्ति हेतु 'अलुगुत्तरपदे' (६।३।१) सम्पूर्ण सूत्र की अनुवृत्ति

**कृच्छ्रादागतः । ( १४३५ ) षष्ठी २।२।८ । सुबन्तेन प्राग्वत् । राज्ञः पुरुषः राजपुरुषः । ( १४३६ ) याजकादिभिश्च २।२।९ । षष्ठ्यन्तं समस्यते । वक्ष्यमाणस्यापवादः । ब्राह्मणयाजकः । देवपूजकः । याजक, पूजक, परिचारक, परिवेषक, स्नातक, अध्यापक, उत्पादक, उद्वर्तक, होतृ, पोतृ, भर्तृ, रथगणक, पत्तिगणक इति याजकादिः । * गुणोत्तरेण**

---

(१४३५) **षष्ठीति** । षष्ठ्यन्तं सुबन्तेन समस्यते, स तत्पुरुष इत्यर्थः । **राजपुरुषः** – राजन् ङस्, पुरुष सु इत्यलौकिकविग्रहे 'षष्ठी' इत्यनेन षष्ठीतत्पुरुषसमासे विभक्तिलोपे प्रातिपदिकत्वे सौ रुत्वे विसर्गे च 'राजपुरुषः' इति ।

(१४३६) **याजकादिभिश्चेति** । याजकादिगणपठितैः षष्ठ्यन्तं समस्यत इत्यर्थः । **देवपूजकः** – 'देवस्य पूजकः' इति लौकिकविग्रहे 'देव ङस्, पूजक सु' इत्यलौकिकविग्रहे

---

आती है । तदनुसार – "उत्तरपद परे रहते स्तोक आदि शब्दों की पञ्चमी विभक्ति का लोप नहीं होता ।"

**उदाहरण**—(१) स्तोकान्मुक्तः । **अलौकिक विग्रह**—स्तोक + ङसि, मुक्त + सु (पञ्चमी-तत्पुरुष समास – 'स्तोकान्तिक०', 'सुपो धातुप्रातिपदिकयोः' से प्राप्त लुक् का अलुक् – 'पञ्चम्याः स्तोकादिभ्यः', 'ङसि' = 'आत्' – 'टाङसिङसामिनात्स्याः') – स्तोकात् मुक्तः ('त्' = 'न्' – 'यरोऽनुनासिकेऽनुनासिको वा', पुनः विभक्ति सु, सु = स् = र् = :) = स्तोकान्मुक्तः (थोड़े से ही छूट गया) । (२) अल्पात् मुक्तः । **अलौ० वि०**—अल्प + ङसि, मुक्त + सु (समास, पूर्ववत् विभक्ति का अलुक्, 'त्' = 'न्' विभक्तिकार्य) = अल्पान्मुक्तः (थोड़े से ही छूट गया) । (३) अन्तिकात् आगतः । **अलौ० वि०**—अन्तिक + ङसि, आगत + सु (पूर्ववत् समास एवं अलुक्, 'त्' = 'द्' – 'झलां जशोऽन्ते' विभक्तिकार्य) = अन्तिकादागतः (समीप से आया हुआ) । (४) अभ्याशात् आगतः । **अलौ० वि०**—अभ्यास + ङसि, आगत + सु (पूर्ववत् समासादि) = अभ्याशादागतः (समीप से आया) । (५) दूरात् आगतः । **अलौ० वि०**—दूर + ङसि, आगत + सु (पूर्ववत् समास, अलुक्, जश्त्व, विभक्तिकार्य) = दूरादागतः (दूर से आया हुआ) । (६) विप्रकृष्टात् आगतः (पूर्ववत् कार्य) = विप्रकृष्टादागतः (दूर से आया हुआ) । (७) कृच्छ्रात् आगतः (उक्तवत् कार्य) = कृच्छ्रादागतः (कठिनाई से आया हुआ) ।

(१४३५) **पद**—षष्ठी । **अनुवृत्ति**—सुप्, सह सुपा । **विधिसूत्र** ।

**मूलार्थ**—षष्ठ्यन्त का समर्थ सुबन्त के साथ विकल्प से समास होता है । राजपुरुषः ।

**विमर्श**—षष्ठीतत्पुरुष का प्रकरण प्रारम्भ होता है । सूत्रार्थ की निष्पत्ति के लिए पूर्ववत् 'सुप्' तथा 'सह सुपा' की अनुवृत्ति आती हैं । प्रकरणानुसार – 'समासः', 'तत्पुरुषः' तथा 'विभाषा' का अधिकार है । तदनुसार सूत्र का आशय यह है कि "षष्ठ्यन्त सुबन्त का समर्थ सुबन्त के साथ विकल्प से तत्पुरुष समास होता है ।"

**उदाहरण**—राज्ञः पुरुषः । **अलौकिक विग्रह**—राजन् + ङस्, पुरुष + सु (समास – '**षष्ठी**', षष्ठ्यन्त की उपसर्जनसंज्ञा, पूर्वनिपात, विभक्तिलोप, विभक्तिलोप के बाद प्रत्ययलक्षण का आश्रय लेकर 'न्' का लोप – 'नलोपः प्रातिपदिकान्तस्य', पुनः विभक्ति सु = स् = र् = :) = राजपुरुषः (राज-सम्बन्धी पुरुष) ।

(१४३६) **पद**—याजकादिभिः, च । **अनुवृत्ति**—षष्ठी, सुप्, सह सुपा । **विधिसूत्र** ।

**मूलार्थ**—षष्ठ्यन्त का याजकादि सुबन्तों के साथ विकल्प से समास होता है । ब्राह्मणयाजकः ।

**तरलोपश्च** *। तरबन्तं यद् गुणवाचि तेन समासः। सर्वेषां श्वेततरः सर्वश्वेतः। सर्वेषां महत्तरः सर्वमहान्। **(१४३७) न निर्धारणे २।२।१०**। षष्ठी न समस्यते। नृणां द्विजः श्रेष्ठः। **(१४३८) पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन**

---

'याजकादिभिश्चे'त्यनेन समासे, सुब्लुकि देवशब्दस्योपसर्जनत्वे पूर्वनिपाते च प्रातिपदिकत्वे सौ रुत्वे विसर्गे 'देवपूजकः' इति।

(१४३७) **न निर्धारण इति**। 'षष्ठी' इत्यनुवर्तते। षष्ठी निर्धारणे न समस्यत इत्यर्थः। **नृणामिति**। नृषु द्विजस्य श्रेष्ठत्वेन निर्धारणत्वान्न समास इत्यर्थः।

(१४३८) **पूरणेति**। अत षष्ठीत्यनुवर्तते, 'न निर्धारणे' इत्यतः नेति च। तदाह **–पूरणा-**

---

देवपूजकः। **वा०**—षष्ठ्यन्त का गुणवाचक तरप् प्रत्ययान्त के साथ समास होता है और तरप् का लोप भी होता है। सर्वश्वेतः इत्यादि।

**विमर्श**—प्रकरणवश पूर्वसूत्र 'षष्ठी' (१४३५) की अनुवृत्ति आती है। अन्य पदों एवं अधिकारसूत्रों का पूर्ववत् प्रभाव विद्यमान है। तदनुसार – "षष्ठ्यन्त सुबन्त तदादि का याजक आदि सुबन्तों के साथ भी विकल्प से समास होता है।" सामान्यतया 'षष्ठी' सूत्र से षष्ठीसमास की प्राप्ति होती है, किन्तु उसका निषेध – 'तृजकाभ्यां कर्तरि' (२।२।१५) से सम्भावित है। अतः उस निषेध का बाधक होकर प्रकृत सूत्र चरितार्थ होता है।

**उदाहरण—लौकिक विग्रह**—ब्राह्मणस्य याजकः। **अलौकिक विग्रह**—ब्राह्मण + ङस्, याजक + सु (षष्ठ्यन्त 'ब्राह्मणस्य' का प्रथमान्त 'याजकः' के साथ समास – 'याजकादिभिश्च', विभक्तिलोप, प्राति० संज्ञा, सु = स् = र् = :) = ब्राह्मणयाजकः (ब्राह्मण का यज्ञ कराने वाला)। देवानां पूजकः। **अलौ० वि०**—देव + आम्, पूजक + सु (समासादिकार्य पूर्ववत्) = देवपूजकः (देवताओं का पूजक)।

**वार्तिकार्थ**—गुणवाचक शब्द से विहित तरप् प्रत्ययान्त षष्ठ्यन्त के साथ वैकल्पिक समास होता है और तरप् प्रत्यय का लोप भी होता है।

**उदाहरण**—(क) **विग्रह**—सर्वेषां श्वेततरः। **अलौ० वि०**—सर्व + आम्, श्वेततर + सु (समास, तरप् = तर का लोप – 'गुणोत्तरेण तरलोपश्च', विभक्तिलोप, पुनः विभक्ति सु = स् = र् = :) = सर्वश्वेतः (सबसे बढ़कर श्वेत बगुला)। (ख) सर्वेषां महत्तरः। **अलौ० वि०**—सर्व + आम्, महत्तर + सु (पूर्ववत् समास, विभक्तिलोप, पुनः प्राति०सं०, सु, नुम् = 'न्' का आगम, उपधादीर्घ – 'सान्तमहतः संयोगस्य') – सर्वमहान् त् सु (सु = 'स्' का लोप – 'हल्ङ्याब्भ्यो दीर्घात्०', 'त्' का लोप – 'संयोगान्तस्य लोपः', संयोगान्तलोप असिद्ध होने से न का लोप नहीं होता) = सर्वमहान् (सब में बढ़कर – ईश्वर)।

(१४३७) **पद**—न, निर्धारणे। **अनुवृत्ति**—षष्ठी, सुप्, सह सुपा। **विधि (निषेध) सूत्र**।

**मूलार्थ**—निर्धारणार्थक षष्ठी समास नहीं होता। नृणां द्विजः श्रेष्ठः।

**विमर्श**—पूर्वसूत्रवत् 'षष्ठी', 'सुप्' तथा 'सह सुपा' पदों की अनुवृत्ति आती है। 'समासः' और 'तत्पुरुषः' का अधिकार है। प्रकृत सूत्र षष्ठी समास का निषेधक है। 'निर्धारणे' पद का सन्निवेश होने से यह अर्थ प्रकट होता है कि "'यतश्च निर्धारणम्' (२।३।४१) सूत्र से विहित षष्ठी का समास नहीं होता।"

**उदाहरण**—नृणां द्विजः श्रेष्ठः (मानवो में द्विज श्रेष्ठ है) – यहाँ 'नृणाम्' पद में निर्धारण अर्थ में षष्ठी विभक्ति होने से समास नहीं होता।

**२।२।११ । पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यते । पूरणे – सतां षष्ठः । गुणे – काकस्य कार्ष्ण्यम् । सुहितार्थास्तृप्त्यर्थाः फलानां सुहितः । सद् – द्विजस्य कुर्वन् कुर्वाणो वा । ब्राह्मणस्य कृत्वा । पूर्वोत्तरसाहचर्याद् कृदव्ययमेव गृह्यते । तेन तदुपरीत्यादि सिद्धम् । ब्राह्मणस्य कर्तव्यम् । तक्षकस्य सर्पस्य । (१४३९) क्तेन च पूजायाम् २।२।१२ ।'मतिबुद्धी'ति सूत्रेण विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते ।**

---

**द्यर्थैरिति । सतां षष्ठः** — षण्णां पूरणः षष्ठ इति पूरणार्थप्रत्ययत्वेन न षष्ठीसमासः । **तव्य इति ।** 'ब्राह्मणस्य कर्तव्यम्' इति तव्यान्तेन न समासः । तव्यता तु भवत्येव समासः स्वकर्तव्यमिति ।

(१४३९) **क्तेनेति** । पूजाग्रहणमत्र 'मतिबुद्धिपूजार्थेभ्यश्चे'ति सूत्रोपलक्षणम् । अत आह — **मतिबुद्धीति** ।

---

(१४३८) **पद**—पूरण······ समानाधिकरणेन । **अनुवृत्ति**—न, षष्ठी, सुप्, सह सुपा । **विधि-(निषेध) सूत्र** ।

**मूलार्थ**—पूरण, गुण और सुहितार्थक प्रत्यय तथा सत् (शतृ-शानच्), अव्यय, तव्य और समानाधिकरण के साथ षष्ठी समास नहीं होता । **पूरण** अर्थ में – सतां षष्ठः । **गुण** अर्थ में – काकस्य कार्ष्ण्यम् ।**'सुहितार्थ'** पद तृप्त्यर्थ का बोधक है – फलानां सुहितः । **सत्**—(शतृशानच्) – ब्राह्मणस्य कुर्वन् अथवा कुर्वाणः (सेवक) । **अव्यय**—ब्राह्मणस्य कृत्वा । पूर्व एवं उत्तर पद के साहचर्य से यहाँ कृत् अव्यय का ही ग्रहण होता है । अतः 'तदुपरि' प्रयोग सिद्ध होता है । **तव्य**—ब्राह्मणस्य कर्तव्यम् । **समानाधिकरण**—तक्षकस्य सर्पस्य ।

**विमर्श**—प्रकृत सूत्रार्थ की पूर्ति हेतु 'न निर्धारणे' (१४३७) से 'न' तथा 'षष्ठी' (१४३५) सूत्र की अनुवृत्ति आती है । पूर्ववत् 'सुप्' तथा 'सह सुपा' पदों की अनुवृत्ति अपेक्षित है । सूत्र में एक ही समस्त पद है – पूरणं च, गुणश्च, सुहितार्थश्च, सत् च, अव्ययं च, तव्यश्च, समानाधिकरणं च, तेन । इस प्रकार – ''पूरण आदि अर्थ तथा सत् आदि (संज्ञावाचक शब्दों) के साथ षष्ठ्यन्त सुबन्त का समास नहीं होता ।''

**उदाहरण**—(१) 'पूरण' अर्थ में 'सतां षष्ठः' ('षण्णां पूरणः' अर्थ में षष् + डट् = 'अ' – 'तस्य पूरणे डट्', थुक् = 'थ्' का आगम – 'षट्कतिकतिपयचतुरां थुक्') – षष् + थ् + अ ('थ्' = 'ठ्' – ष्टुत्व, प्राप्त षष्ठी समास का निषेध – 'पूरणगुण०') – सतां षष्ठः (= सज्जनों में छठा) । (२) गुणवाची शब्द – काकस्य कार्ष्ण्यम् (कृष्ण + ष्यञ् । गुणवाचक शब्द होने से समास का निषेध) – काकस्य कार्ष्ण्यम् (= कौवे का कालापन) । (३) सुहितार्थ (तृप्त्यर्थक) शब्द के साथ षष्ठी समास का निषेध – फलानां सुहितः (फलों से तृप्त)। (४) सत्संज्ञक शब्द के साथ षष्ठ्यन्त के समास का निषेध – द्विजस्य कुर्वन् (शतृ) अथवा कुर्वाणः (शानच्) (= ब्राह्मण का सेवक) । (५) अव्यय – ब्राह्मणस्य कृत्वा (कृ + क्त्वा = 'त्वा', क्त्वा प्रत्यय अव्ययसंज्ञक है – 'क्त्वातोसुन्कसुनः', षष्ठी समास का निषेध) = ब्राह्मणस्य कृत्वा (ब्राह्मण का कार्य करके) । प्रकृत सूत्र में अव्यय के पूर्व पठित सत् संज्ञा तथा उत्तर में पठित तव्यत्-प्रत्यय दोनों ही कृदन्त से सम्बद्ध हैं । अतः पूर्वापरसाहचर्य के अनुसार यहाँ केवल कृदन्त अव्यय का ही ग्रहण होता है । इस प्रकार तद्धित प्रत्ययान्त अव्ययों में षष्ठी समास का निषेध नहीं होता । तस्य उपरि 'तदुपरि' प्रयोग में षष्ठी समास होता है । (६) तव्यप्रत्यय – कृ + तव्य, तव्य के योग में षष्ठी समास का निषेध – ब्राह्मणस्य कर्तव्यम् (ब्राह्मण के करने योग्य) । (७) समान अधिकरण में – तक्षकस्य सर्पस्य (यहाँ दोनों

राज्ञां मतो बुद्धः पूजितो वा। ( १४४० ) **अधिकरणवाचिना च २।२।१३** । क्तेन षष्ठी न समस्यते। इदमेषामासितं गतं भुक्तं वा। ( १४४१ ) **कर्मणि च २।२।१४** । उभयप्राप्तौ कर्मणीति या षष्ठी सा न समस्यते। आश्चर्यो गवां दोहोऽगोपेन।

---

(१४४०) **अधिकरणेति** ।अत्र 'षष्ठी 'ति, 'न निर्धारणे' इत्यतः नेति, 'क्तेन चे 'त्यतः क्तेनेति चानुवर्तते, अधिकरणवाचिनेति क्तस्य विशेषणम्। अधिकरणार्थे विहितेन क्तान्तेन षष्ठी न समस्यते।

(१४४१) **कर्मणीति** । क्तेनेति निवृत्तम्। कर्मणि षष्ठी न समस्यत इति सूत्रार्थः।

---

शब्द समानाधिकरण हैं – तक्षक ही सर्प है और सर्प ही तक्षक है। प्रकृत सूत्र से समास का निषेध) = 'तक्षकस्य सर्पस्य' (= तक्षक सर्प का)।

(१४३९) **पद**—क्तेन, च, पूजायाम्। **अनुवृत्ति**—न, षष्ठी, सुप्, सह सुपा। **विधि ( निषेध )-सूत्र**।

**मूलार्थ**—'मतिबुद्धि' इत्यादि सूत्र से पूजा अर्थ में विहित क्तप्रत्ययान्त के साथ षष्ठी समास नहीं होता।

**विमर्श**—पूर्ववत् सभी पदों की अनुवृत्ति आ रही है। तदनुसार – 'मतिबुद्धिपूजार्थेभ्यश्च' (३।२।१८८) से विहित पूजार्थक क्तप्रत्ययान्त के साथ षष्ठी समास का निषेध होता है।''

**उदाहरण**—राज्ञां मतः, राज्ञां बुद्धः, राज्ञां पूजितः (राजाओं का माना हुआ, राजाओं का जाना हुआ, राजाओं का पूजित) – प्राप्त षष्ठी समास का प्रकृत सूत्र से निषेध।

(१४४०) **पद**—अधिकरणवाचिना, च। **अनुवृत्ति**—क्तेन, न, षष्ठी, सुप्, सह सुपा। **विधि-( निषेध ) सूत्र**।

**मूलार्थ**—अधिकरण अर्थ में विहित क्तप्रत्ययान्त के साथ षष्ठी का समास नहीं होता। इदमेषामासितं भुक्तं वा।

**विमर्श**—पूर्वसूत्र (१४३९) से 'क्तेन' की अनुवृत्ति अपेक्षित है। 'षष्ठी', 'न' पदों एवं 'समासः' आदि अधिकारवाची पदों का प्रभाव यथापूर्व विद्यमान है। इस प्रकार सूत्र से यह अर्थ अभिव्यञ्जित होता है – '''क्तोऽधिकरणे च०' (३।४।७६) सूत्र से अधिकरण अर्थ में विहित क्त प्रत्यय के योग में षष्ठी समास नहीं होता।''

**उदाहरण**—इदम् एषाम् आसितं गतं भुक्तं वा (= यह उनके बैठने का स्थान, जाने का रास्ता, भोजन का स्थान) – प्राप्त षष्ठी समास नहीं हुआ।

(१४४१) **पद**—कर्मणि, च। **अनुवृत्ति**—न, षष्ठी, सुप्, सह सुपा। **विधि ( निषेध ) सूत्र**।

**मूलार्थ**—'उभयप्राप्तौ कर्मणि' सूत्र से कर्म में विहित षष्ठी का समास नहीं होता।

**विमर्श**—प्रकृत सूत्र में प्रमुख अनुवृत्त पद 'न' और 'षष्ठी' है। पूर्ववत् 'सुप्' तथा 'सह सुपा' आदि की अनुवृत्ति यहाँ भी विद्यमान है। तदनुसार – ''कर्म में विहित षष्ठी का अन्य समर्थ सुबन्त के साथ समास नहीं होता।''

**उदाहरण**—**आश्चर्यो गवां दोहः अगोपेन** (ग्वाला से अतिरिक्त व्यक्ति द्वारा दूध दुहना आश्चर्य का विषय है) – यहाँ 'उभयप्राप्तौ कर्मणि' (३।२।६६) सूत्र से 'गवाम्' पद में षष्ठी होने से प्रकृत सूत्र द्वारा 'दोहः' के साथ समास का निषेध।

**(१४४२) तृजकाभ्यां कर्तरि २।२।१५।** कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः। अपां स्रष्टा। वज्रस्य भर्ता। ओदनस्य पाचकः। **(१४४३) कर्तरि च २।२।१६।** कर्तरि षष्ठ्या अकेन न समासः। भवतः शायिका। **(१४४४) पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे २।२।१।** अवयविना सह पूर्वादयः समस्यन्ते,

---

(१४४२) **तृजकाभ्यामिति**। षष्ठी इत्यनुवृत्तं तृतीयान्ततया विपरिणम्यते। कर्तरीति तृजकयोरेव विशेषणम्। तदाह–**कर्त्रर्थतृजकाभ्यामिति**।

(१४४३) **कर्तरीति**। कर्तरीत्येतत् षष्ठीत्यनुवृत्ते अन्वेति। 'तृजकाभ्यामि'ति अकेति चानुवर्तते। **भवतः शायिकेति**।'स्त्रियां क्तिन्' इत्यधिकारे धात्वर्थनिर्देशे ण्वुल्, अकादेशः, टाप्। 'कर्तृकर्मणोः कृती'ति षष्ठी। अत्र अकस्य कर्त्रर्थकत्वाऽभावात् तृजकाभ्यामित्यस्य न प्राप्तिरिति।

(१४४४) **पूर्वापरेति**। अत्रैकदेशशब्दः अवयवे **रूढः**। एकदेशः अस्यास्तीति एकदेशी

---

(१४४२) **पद**—तृजकाभ्याम्, कर्तरि। **अनुवृत्ति**—कर्मणि, न, षष्ठी, सुप्, सह सुपा। **विधि (निषेध) सूत्र**।

**मूलार्थ**—कर्त्रर्थक तृच् और अक प्रत्ययान्त के साथ षष्ठी समास नहीं होता। अपां स्रष्टा। वज्रस्य कर्ता। ओदनस्य पाचकः।

**विमर्श**—पूर्वसूत्रवत् 'न', 'षष्ठी' तथा पूर्वसूत्र (१४४१) से 'कर्मणि' की प्रमुख अनुवृत्ति अपेक्षित है। अन्य 'सुप्', 'सह सुपा' एवं 'समासः' आदि अधिकारपदों का प्रभाव विद्यमान है। सूत्रस्थ 'कर्तरि' पद 'तृच्' तथा 'अकः' दोनों का विशेषण है। इस प्रकार – "कर्ता कारक के अर्थ में 'तृच्' और 'अक' प्रत्ययान्त के साथ कर्म में विहित षष्ठी का समास नहीं होता।"

**उदाहरण**—तृच् (क) अपां स्रष्टा (= जल को उत्पन्न करने वाला) – ✓सृज् + तृच्। (ख) वज्रस्य भर्ता (= वज्र को धारण करने वाला) – ✓भृ + तृच्। इन दोनों में कर्म में षष्ठी हुई है – 'कर्तृकर्मणोः कृति' (२।३।६५)। अतः 'तृजकाभ्यां कर्तरि' से प्राप्त षष्ठी समास का निषेध। अक – ओदनस्य पाचकः (= भात को पकाने वाला) – ✓पच् + ण्वुल् = अक – 'युवोरनाकौ', प्राप्त षष्ठी समास का प्रकृत सूत्र से निषेध।

(१४४३) **पद**—कर्तरि, च। **अनुवृत्ति**—अक, न, षष्ठी, सुप्, सह सुपा। **विधि-(निषेध) सूत्र**।

**मूलार्थ**—कर्ता में विहित षष्ठी का अक प्रत्ययान्त के साथ षष्ठी समास नहीं होता। भवतः शायिका।

**विमर्श**—'न', 'षष्ठी', 'कर्तरि' तथा पूर्वसूत्र से 'अक' की प्रमुख रूप से अनुवृत्ति आती है। अन्य पदों की भी पूर्ववत् अनुवृत्ति विद्यमान है। अनुवृत्त पदों के साथ एकवाक्यता करते हुए सूत्र से यह अर्थ अभिव्यञ्जित होता है – "कर्ता के अर्थ में विहित षष्ठी भी अक-प्रत्ययान्त सुबन्त के साथ समस्त नहीं होती।" अक प्रत्यय नहीं है। ण्वुल् = 'वु' के स्थान पर होने वाला आदेश है।

**उदाहरण**—भवतः शायिका – ✓शी + ण्वुल् = अक, शै + अक + टाप्, शाय् + अक + आ, शाय् + इ + क + आ। प्राप्त षष्ठी समास का प्रकृत सूत्र से निषेध।

(१४४४) **पद**—पूर्वापराधरोत्तरम्, एकदेशिना, एकाधिकरणे। **अनुवृत्ति**—सुप्, सह सुपा। **विधिसूत्र**।

**एकत्वसंख्याविशिष्टश्चेदवयवी। षष्ठीसमासापवादः। पूर्वं कायस्य पूर्वकायः। अपरकायः। एकदेशिना किम्? पूर्वं नाभेः कायस्य। एकाधिकरणे किम्? पूर्वश्छात्राणाम्। (१४४५) अर्धं नपुंसकम् २।२।२। समांशवाच्यार्धशब्दो नित्यं क्लीबे स प्राग्वत्। अर्धं पिप्पल्याः अर्धपिप्पली। * एकविभक्तावषष्ठ्यन्तवचनम् *।**

---

अवयवी तेनेति लभ्यते। अधिकरणं द्रव्यम्। एकत्वविशिष्टे द्रव्ये वर्तमानेन अवयविवाचकेन सुबन्तेन अवयववाचकाः पूर्वादयः शब्दाः समस्यन्ते। **पूर्वकायः** — अत्र षष्ठीसमासप्राप्तावपि सूत्रान्तरविधानं पूर्वादिशब्दस्य पूर्वनिपातार्थकम्।

(१४४५) **अर्धमिति**। अत्र 'अर्धमि'ति नपुंसकलिङ्गनिर्देशादेव नपुंसकत्वे लब्धे पुनर्नपुंसकग्रहणं नित्यनपुंसकलिङ्गस्य ग्रहणार्थमित्यत आह– **समांशवाच्यर्धशब्द इत्यादिना। अर्धपिप्पली** – 'अर्धं पिप्पल्याः' इति। 'अर्धं सु, पिप्पली ङस्' इत्यलौकिकविग्रहे 'अर्धं

---

**मूलार्थ**—यदि एकत्वसंख्याविशिष्ट अवयवी हो, तो अवयववाची के साथ पूर्वादि समर्थ सुबन्त विकल्प से समस्त होते हैं। पूर्वकायः। अपरकायः।

**विमर्श**—षष्ठी समास के बाधक सूत्र का विवेचन किया जा रहा है। पूर्ववत् 'सुप्' तथा 'सह सुपा' की अनुवृत्ति अपेक्षित है। 'तत्पुरुषः' तथा 'विभाषा' का अधिकार है। सूत्रस्थ 'एकदेशी' पद समुदायार्थक (अवयवी) है। तदनुसार – "पूर्व, अपर, अधर, उत्तर अवयववाची शब्दों का अवयवी (एकदेशिवाचक) के साथ समास होता है। यदि एकदेशी (समुदाय) और एकदेश (अवयव) दोनों की स्थिति एक ही पदार्थ (द्रव्य) में विद्यमान रहे।"

**उदाहरण**—**विग्रह**—पूर्वं कायस्य। **अलौकिक विग्रह**—काय + ङस्, पूर्व + सु (समास – 'पूर्वापरा०' विभक्तिलुक्, 'पूर्व' का पूर्वनिपात, पुनः विभक्त्युत्पत्ति – सु – पुल्लिङ्ग – 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः', सु = स् = र् = :) = पूर्वकायः (= शरीर का पूर्व भाग)। अपरं कायस्य। **अलौ० वि०**—काय + ङस्, अपर + सु (समास आदि पूर्ववत्) = अपरकायः (= शरीर का दूसरा भाग)।

**प्रत्युदाहरण**—प्रकृत सूत्र में 'एकदेशिना' पद का समावेश होने से अवयवी का पूर्व आदि शब्दों के साथ समास विधान किये जाने के कारण 'पूर्वं नाभेः कायस्य' में 'काय' के साथ 'पूर्व' शब्द का समास नहीं होता। क्योंकि यहाँ 'पूर्व' पद 'नाभि' (अवयववाचक) के पूर्वभाग का द्योतक है, न कि 'काय' (अवयवी) का। सूत्र में 'एकाधिकरणे' पद का समावेश होने से अवयव का समष्टिगत एक रूप में बोध अपेक्षित होने से 'पूर्वश्छात्राणाम्' (= छात्रसमूह का पहला भाग) में भी समास नहीं होता।

(१४४५) **पद**—अर्धम्, नपुंसकम्। **अनुवृत्ति**—एकदेशिनैकाधिकरणे, सुप्, सह सुपा। **विधिसूत्र**।

**मूलार्थ**—नपुंसकलिङ्ग में नित्य वर्तमान समांशवाची अर्ध शब्द अवयविवाचक समर्थ सुबन्त के साथ विकल्प से समस्त होता है। अर्धपिप्पली। **वार्तिक**—"'एकविभक्तौ चापूर्वनिपाते' सूत्र में अषष्ठ्यन्त ग्रहण करना चाहिए।" ग्रामार्धः इत्यादि।

**विमर्श**—पूर्वसूत्र (१४४४) से 'एकदेशिनैकाधिकरणे' प्रमुखरूप से अनुवृत्त है। समान अंशवाचक (दो भाग) 'अर्ध' शब्द नित्य नपुंसकलिङ्ग में प्रयुक्त होता है। पूर्वसूत्र से विधीयमान एकाधिकरणवाची एकदेशी समास का विस्तार किया जा रहा है। "समान अंशवाचक नित्य नपुंसक-लिङ्ग में वर्तमान अर्ध शब्द का एकाधिकरणवाची एकदेशी (अवयवी) के साथ समास होता है।"

**इत्युपसर्जनसंज्ञाबाधाद्ध्रस्वो न । क्लीबे किम् ? ग्रामार्धः । द्रव्यैक्य एव । अर्धं पिप्पली-नाम् ।( १४४६ ) द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् २।२।३ ।एतान्येकदेशिना सह प्राग्वद्वा । द्वितीयं भिक्षायाः द्वितीयभिक्षा । एकदेशिना किम् ? द्वितीयं भिक्षायाः भिक्षुकस्य । अन्यतरस्यां ग्रहणसामर्थ्यात् पूरणगुणेति निषेधं बाधित्वा पक्षे षष्ठीसमासः ।**

---

नपुंसकम्' इत्यनेन समासे विभक्तिलोपे अर्धशब्दस्योपसर्जनत्वे पूर्वनिपाते 'परवल्लिङ्गं द्वन्द्व-तत्पुरुषयोः' इति स्त्रीत्वे प्रातिपदिकत्वे सौ हल्ङ्यादिना सुलोपे 'अर्धपिप्पली' इति ।

(१४४६) **द्वितीयतृतीयेति** ।'पूर्वपरा'इत्यतः'एकदेशिने'त्यनुषज्यते ।अत्र विभाषाधिकारेण विकल्पे सिद्धे अन्यतरस्यामिति ग्रहणं पक्षे षष्ठीसमासविधानार्थमिति ज्ञेयम् । स च षष्ठीसमासः पूरणगुण इति निषेधं बाधित्वा प्रवर्तत इति भावः ।

---

**उदाहरण**—**विग्रह**—अर्धं पिप्पल्याः । **अलौ० वि०**—अर्ध + सु, पिप्पली + ङस् (समास — 'अर्धं नपुंसकम्', विभक्तिलोप, 'अर्ध' का पूर्वनिपात, पुनः प्राति० संज्ञा, सु = 'स्' का हल्ङ्यादिलोप) = अर्धपिप्पली (= आधी पीपल) । यहाँ 'गोस्त्रियोरुपसर्जनस्य' से प्राप्त ह्रस्व का 'एकविभक्तावषष्ठ्यन्तवचनम्' से निषेध होता है ।

**प्रत्युदाहरण**—सूत्र में (क्लीबे) नपुंसकलिङ्ग में प्रयुक्त 'अर्ध' शब्द की अपेक्षा होने से ग्रामस्य अर्धः = 'ग्रामार्धः' में 'अर्ध' शब्द पुल्लिङ्ग होने के कारण षष्ठीतत्पुरुष समास हुआ । प्रकृत सूत्र से समास नहीं होता ।

पूर्वसूत्र से 'एकाधिकरणे' की अनुवृत्ति होने से अवयविवाचक शब्द की एकता अपेक्षित है । अतः 'अर्धं पिप्पलिनाम्' में पिप्पलियों की अनेकता होने से प्रकृत सूत्र से समास नहीं होता ।

(१४४६) **पद**—द्वितीयतृतीयचतुर्थतुर्याणि, अन्यतरस्याम् । **अनुवृत्ति**—एकदेशिनैकाधिकरणे, सुप्, सह सुपा । **विधिसूत्र** ।

**मूलार्थ**—द्वितीय आदि सुबन्तों का एकदेशी (अवयवी) के साथ विकल्प से समास होता है । द्वितीयभिक्षा । 'एकदेशिना' क्यों कहा? द्वितीयं भिक्षायाः भिक्षुकस्य । सूत्र में 'अन्यतरस्याम्' के ग्रहणसामर्थ्य से 'पूरणगुण' द्वारा प्राप्त निषेध का बाधकर पक्ष में षष्ठी समास होता है ।

**विमर्श**—पूर्वसूत्र (१४४४) से 'एकदेशिनैकाधिकरणे' की अनुवृत्ति आती है । पूर्ववत् सुप्, 'सह सुपा' की तथा 'तत्पुरुषः', 'विभाषा' और 'समासः' अधिकारसूत्रों की अनुवृत्ति अपेक्षित है । तदनुसार ''एकाधिकरण गम्यमान होने पर द्वितीय, तृतीय, चतुर्थ और तुर्य सुबन्त शब्द एकदेशिवाची सुबन्त के साथ विकल्प से समस्त होते हैं । यह षष्ठी समास का बाधक है । 'विभाषा' का अधिकार होने से पक्ष में विग्रहवाक्य भी रहता है । इसके अतिरिक्त 'अन्यतरस्याम्' का निवेश होने से 'पूरणगुण' से प्राप्त षष्ठी समास-निषेध को बाधकर षष्ठी समास भी होता है ।''

**उदाहरण**—**विग्रह**—द्वितीयं भिक्षायाः । **अलौकिक वि०**—द्वितीय + सु, भिक्षा + ङस् ('द्वितीय' का एकदेशिवाची 'भिक्षा' के साथ समास — 'द्वितीयतृतीय०', विभक्तिलुक्, पुनः विभक्त्युत्पत्ति सु = 'स्' – हल्ङ्यादिलोप) = द्वितीयभिक्षा । पक्ष में षष्ठी समास होने पर — भिक्षा-द्वितीयम् (भिक्षा का दूसरा भाग) ।

**प्रत्युदाहरण**—सूत्र में 'एकदेशिना' पद की अनुवृत्ति की गई है । अतः 'द्वितीयं भिक्षायाः भिक्षुकस्य' (भिक्षुक की भिक्षा का दूसरा भाग) में 'एकदेशिना' पद के रहने पर 'द्वितीय' का भिक्षुक

भिक्षाद्वितीयम्। **( १४४७ ) प्राप्तापन्ने च द्वितीयया २।२।४।** पक्षे – द्वितीयाश्रितेति समासः। प्राप्तो जीवनं प्राप्तजीवनः। जीवनप्राप्तः। आपन्नजीवनः। जीवनापन्नः। इह सूत्रे द्वितीयया अ इति छित्वा अकारोऽपि विधीयते। तेन जीविकां प्राप्ता स्त्री प्राप्तजीविका। आपन्नजीविका। **( १४४८ ) कालाः परिमाणिना २।२।५।** परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते। मासो जातस्य यस्य स मासजातः।

---

(१४४७) **प्राप्तापन्न इति**। प्राप्त-आपन्न एतौ शब्दौ द्वितीयान्तेन समस्येते इत्यर्थः। **प्राप्तजीवनः**–प्राप्तः जीवनमिति विग्रहे 'प्राप्तापन्ने च द्वितीयया' इति समासे सुब्लुकि प्राप्तस्य पूर्वनिपाते सुबादिकार्ये 'प्राप्तजीवनः' इति। तदभावे 'द्वितीयाश्रिते'ति समासे सुब्लुकि द्वितीयान्तस्य पूर्वनिपाते विभक्तिकार्ये 'जीवनप्राप्तः' इति। विभाषाधिकारात्तदभावे वाक्यमपि।

(१४४८) **काला इति**। परिमाणं परिच्छेदकमस्यास्तीति परिमाणी परिच्छेद्यस्तेन कालवाचकाः शब्दाः समस्यन्ते इत्यर्थः।

---

शब्द के साथ समास नहीं होता। द्वितीय का भिक्षा के साथ भी समास नहीं होता, क्योंकि भिक्षा अवयवीवाचक नहीं है।

(१४४७) **पद**—प्राप्तापन्ने, च, द्वितीयया। **अनुवृत्ति**—अन्यतरस्याम्, सुप्, सह सुपा। **विधिसूत्र**।

**मूलार्थ**—प्राप्त और आपन्न शब्द का द्वितीयान्त के साथ विकल्प से समास होता है। प्राप्तजीवनः। जीवनप्राप्तः। आपन्नजीवनः। जीवनापन्नः। प्रकृत सूत्र में 'द्वितीयया + अ' ऐसा विच्छेद कर 'अ' का भी विधान होता है। तब प्राप्तजीविका। आपन्नजीविका प्रयोग भी निष्पन्न होते हैं।

**विमर्श**—प्रसङ्गवश षष्ठी के अपवादस्वरूप द्वितीयातत्पुरुष समास के बाधकस्थल का विवेचन किया जा रहा है। पूर्वसूत्र से 'अन्यतरस्याम्' की तथा पूर्ववत् 'सुप्' तथा 'सह सुपा' की अनुवृत्ति आ रही है। अन्य पदों की अनुवृत्ति अधिकारवशात् सिद्ध है। इस प्रकार सूत्र का आशय यह है कि "प्राप्त तथा आपन्न शब्द भी द्वितीयान्त सुबन्त के साथ विकल्प से समस्त होते हैं और वे तत्पुरुषसंज्ञक भी होते हैं।"

**उदाहरण**—**विग्रह**—जीवनं प्राप्तः। **अलौ० वि०**—प्राप्त + सु, जीवन + अम् ('प्राप्त' का 'जीवन' के साथ समास – 'प्राप्तापन्ने च द्वितीयया', सुब्लुक्, प्राप्त का पूर्वनिपात, पुनः सु = स् = र् = :) = प्राप्तजीवनः। पक्ष में द्वितीयातत्पुरुष – जीवनप्राप्तः (जीवन को प्राप्त)। आपन्नः जीवनम्। **अलौ० वि०**—आपन्न + सु, जीवन + अम् (पूर्ववत् विकल्प से समास आदि) = आपन्नजीवनः। पक्ष में द्वितीया त० स० – जीवनापन्नः।

**विशेष**—प्रकृत सूत्र के विधेयांश पद 'द्वितीयया' में 'द्वितीयया + अ' विच्छेद माना गया है। तदनुसार दीर्घान्त (स्त्रीप्रत्ययान्त) प्राप्ता एवम् आपन्ना शब्दों के आकार को अकार भी होता है। इसके फलस्वरूप 'जीविकां प्राप्ता' तथा 'जीविकाम् आपन्ना' में समास होने पर आ = 'अ' भी होता है – प्राप्तजीविका, आपन्नजीविका।

(१४४८) **पद**—कालाः, परिमाणिना। **अनुवृत्ति**—सुप्, सह सुपा। **विधिसूत्र**।

**मूलार्थ**—परिच्छेद्यवाची सुबन्त के साथ कालवाची सुबन्त का विकल्प से समास होता है। मासजातः।

**(१४४९) सप्तमी शौण्डैः २।१।४०** । सप्तम्यन्तं शौण्डादिभिः प्राग्वत् । अक्षेषु शौण्डः अक्षशौण्डः । शौण्ड, धूर्त, कितव, व्याड, प्रवीण, संवीत, अन्तर, अधि, पटु, पण्डित, कुशल, चपल, निपुण इति शौण्डादिः । द्वितीयातृतीयेत्यादियोगविभागा-दन्यत्रापि द्वितीयादीनां प्रयोगवशात्समासो ज्ञेयः । **(१४५०) दिक्संख्ये संज्ञायाम् २।१।५०** । विशेषणं विशेष्येण बहुलमित्येव सिद्धे संज्ञायामेवेति नियमार्थं सूत्रम् । पूर्वेषुकामशमी । सप्तर्षयः । तेनेह न – उत्तरा वृक्षाः । पञ्च ब्राह्मणाः । **(१४५१)**

---

(१४४९) **सप्तमीति** । बहुवचननिर्देशात् गणपाठाच्च शौण्डशब्दस्तदादिपरः । **अक्ष-शौण्डः** – अक्षेषु शौण्ड इति विग्रहे 'सप्तमी शौण्डैः' इति समासे सुपो लुकि विभक्तिकार्ये 'अक्षशौण्डः' इति । अक्षविषयकक्रीडाकुशल इत्यर्थः ।

(१४५०) **दिक्संख्य इति** । **नियमार्थमिति** । नियमाकारश्चेत्थम् – तत्पुरुषे दिक्संख्ये संज्ञायामेव समस्येते इति ।

---

**विमर्श**—पूर्ववत् 'सुप्' तथा 'सह सुपा' पदों की तथा 'समासः', 'विभाषा' और 'तत्पुरुषः' अधिकारसूत्रों की अनुवृत्ति आती है । सूत्रस्थ परिमाणिन् पद परिच्छेद्यवाची है । काल की निश्चित अवधि उसी के द्वारा सूचित होती है । इस प्रकार सूत्र से यह अर्थ अभिव्यञ्जित होता है – "परिमाणवाची कालविशेष को सूचित करने वाले शब्द परिमाणिवाची (काल के अवधिसूचक) सुबन्त शब्दों के साथ विकल्प से समस्त होते हैं ।"

**उदाहरण**—मासः जातस्य यस्य सः । **अलौ० वि०**—मास + सु, जात + ङस् (समास – अवधिसूचक 'जात' का कालबोधक 'मास' के साथ, सुब्लुक्, पुनः सु = स् = र् = :) = मासजातः (एक महीने का उत्पन्न हुआ) ।

(१४४९) **पद**—सप्तमी, शौण्डैः । **अनुवृत्ति**—सुप्, सह सुपा । **विधिसूत्र** ।

**मूलार्थ**—सप्तम्यन्त शब्द शौण्ड आदि के साथ विकल्प से समासयुक्त होते हैं । अक्षशौण्डः ।

**विमर्श**—सप्तमीतत्पुरुष समास का निरूपण किया जा रहा है । पूर्ववत् सभी आधिकारिक पदों की अनुवृत्ति आ रही है । अतः सूत्र का आशय इस प्रकार है – "सप्तम्यन्त सुबन्तपदों का शौण्ड आदि सुबन्त शब्दों के साथ विकल्प से समास होता है ।"

**उदाहरण—विग्रह**—अक्षेषु शौण्डः । **अलौ० बि०**—अक्ष + सुप्, शौण्ड + सु (समास – 'सप्तमी शौण्डैः', विभक्तिलोप, अक्ष का पूर्वनिपात, पुनः विभक्त्युत्पत्ति सु = स् = र् = :) = अक्षशौण्डः (जुआ खेलने में धूर्त) ।

(१४५०) **पद**—दिक्संख्ये, संज्ञायाम् । **अनुवृत्ति**—समानाधिकरणेन, सुप्, सह सुपा । **नियम (विधि) सूत्र** ।

**मूलार्थ**—दिग्वाचक और संख्यावाचक शब्दों का केवल संज्ञा में ही तत्पुरुष समास होता है । 'विशेषणं विशेष्येण बहुलम्' से प्राप्त समास का यह सूत्र संज्ञा में ही नियमन करता है । पूर्वेषुकामशमी । सप्तर्षयः ।

**विमर्श**—प्रकृत सूत्र समान अधिकरणवाची समास का विधान करता है । अतः 'पूर्वकालैक०' (२।१।४९) सूत्र से 'समानाधिकरणेन' पद की अनुवृत्ति आती है । इसका प्रभाव द्वितीय अध्याय के प्रथम पाद की समाप्ति तक रहेगा । पूर्ववत् तत्पुरुष समास में अपेक्षित अन्य पदों की भी अनुवृत्ति

ष्यपूर्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात्। इनसभम्। ईश्वरसभम्। अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह। रक्षःसभम्। पिशाचसभम्। **(१५२७) विभाषा सेना-सुराच्छायाशालानिशानाम् २।४।२५।** एतदन्तस्तत्पुरुषः क्लीबं वा। ब्राह्मणसेनम्, ब्राह्मणसेना इत्यादि। **(१५२८) अशाला च २।४।२४।** सङ्घातार्था या सभा तदन्तस्तत्पुरुषः क्लीबं स्यात्। स्त्रीसभम्। स्त्रीसङ्घात इत्यर्थः। **(१५२९) अर्धर्चाः**

(१५२७) **विभाषेति**। क्लीबं वा स्यादिति भावः।

**मूलार्थ**—राजपर्यायपूर्वक और मनुष्यपूर्वक सभाशब्दान्त तत्पुरुष नपुंसकलिङ्ग होता है। इनसभम्। ईश्वरसभम्। अमनुष्य शब्द रूढ़ि शक्ति द्वारा राक्षस एवं पिशाच आदि का बोधक है। रक्षःसभम्। पिशाचसभम्।

**विमर्श**—लिङ्ग-व्यवस्था का प्रकरण चल रहा है। तदनुसार – ''राजशब्दपूर्वक सभान्त शब्द और मनुष्यभिन्नवाची सभान्त शब्द तत्पुरुष में नपुंसकलिङ्ग होता है।''

**उदाहरण**—इनस्य सभा (षष्ठीतत्पुरुष समास, प्रकृत सूत्र से नपुंसकलिङ्ग, विभक्तिकार्य) = इनसभम्। ईश्वरस्य सभा (समासादि कार्य पूर्ववत्) = ईश्वरसभम् (राजा की सभा)। यहाँ राजपर्यायवाची ईश्वर तथा इन शब्द हैं। अमनुष्यपूर्वक सभान्त का **उदाहरण**—रक्षसां सभा = रक्षःसभम् (राक्षसों की सभा)। पिशाचानां सभा = पिशाचसभम् (पिशाचों की सभा)।

(१५२७) **पद**—विभाषा, सेनासुराच्छायाशालानिशानाम्। **अनुवृत्ति**—तत्पुरुषोऽनञ्कर्मधारयः, नपुंसकम्। **विधिसूत्र**।

**मूलार्थ**—इन शब्दों में से कोई भी शब्द जिसके अन्त में हो वह तत्पुरुष विकल्प से नपुंसकलिङ्ग में होता है। ब्राह्मणसेनम् – ब्राह्मणसेना इत्यादि।

**विमर्श**—सूत्रार्थ की पूर्ति हेतु पूर्ववत् 'तत्पुरुषोऽनञ्कर्मधारयः' तथा 'नपुंसकम्' पदों की अनुवृत्ति आ रही है। सूत्र में षष्ठी विभक्ति का प्रयोग प्रथमा के अर्थ में हुआ है, जो अनुवृत्त 'तत्पुरुषः' का विशेषण है। इस प्रकार तदन्तविधि होकर यह अर्थ निष्पन्न होता है – ''सेना, सुरा, छाया, शाला तथा निशान्त तत्पुरुष का विकल्प से नपुंसकलिङ्ग में प्रयोग होता है।''

**उदाहरण**—ब्राह्मणस्य सेना (षष्ठीतत्पुरुष समास, विभक्तिलोप, प्रकृत सूत्र से विकल्प से नपुंसकलिङ्ग होने पर) = ब्राह्मणसेनम्। नपुंसकलिङ्ग न होने पर परपदानुसार स्त्रीलिङ्ग = ब्राह्मणसेना (ब्राह्मण की सेना)।

(१५२८) **पद**—अशाला, च। **अनुवृत्ति**—सभा, तत्पुरुषोऽनञ्कर्मधारयः, नपुंसकम्। **विधिसूत्र**।

**मूलार्थ**—संघातार्थक सभा शब्दान्त तत्पुरुष नपुंसकलिङ्ग होता है। स्त्रीसभम्। अशाला क्यों कहा? धर्मसभा (धर्मशाला)।

**विमर्श**—पूर्वोक्त अनुवृत्तियों का प्रभाव विद्यमान है। सभा शब्द के दो अर्थ शाला एवं संघात (समूह) अर्थ हैं। अतः प्रकृत सूत्र से ''शालाभिन्नार्थक अर्थात् समूहवाचक सभाशब्दान्त तत्पुरुष को नपुंसकलिङ्ग विधान होता है।''

**उदाहरण**—स्त्रीणां सभा (षष्ठीतत्पुरुष समास, विभक्तिलोप, नपुंसकलिङ्ग में) – स्त्रीसभम् (स्त्रियों का समूह)।

**प्रत्युदाहरण**—सूत्र में 'अशाला' पद का पाठ होने से धर्मसभा (धर्मशाला) में सभा शब्द समूहवाचक न होने से नपुंसकलिङ्ग नहीं हुआ। परपद के अनुसार स्त्रीलिङ्ग।

**पुंसि च २।४।३१ ।** अर्धर्चादयः पुंसि क्लीबे च स्युः । अर्धर्चः, अर्धर्चम् । एवं ध्वजतीर्थमण्डपयूपदेहाङ्कुशकलशसूत्रपात्रादयः । सामान्ये नपुंसकम् । मृदु पचति । प्रातः कमनीयम् ।

इति तत्पुरुषसमासप्रकरणम् ।



---

(१५२९) **अर्धर्चः** । ऋचोऽर्धमिति लौकिकविग्रहे ऋच् + ङस्, अर्ध + सु इत्यलौकिकविग्रहे 'अर्धं नपुंसकमि'ति समासे विभक्तिलोपे अर्धपदस्योपसर्जनत्वे पूर्वप्रयोगे गुणे रपरत्वे, अर्द्धर्च् इति जाते 'ऋक्पूरब्धूः पथामानक्षे' इत्यप्रत्यये 'अर्द्धर्चाः पुंसि च' इत्यनेन नपुंसकत्वे प्रातिपदिकत्वे सौ सोरमि पूर्वरूपे अर्धर्चमिति । पुंसि — 'अर्धर्चः' इति रूपम् ।

**इति तत्पुरुषसमासप्रकरणम् ।**



---

(१५२९) **पद**—अर्धर्चाः, पुंसि, च । **अनुवृत्ति**—नपुंसकम् । **विधिसूत्र** ।

**मूलार्थ**—अर्धर्चादि शब्द पुल्लिङ्ग और नपुंसकलिङ्ग होते हैं । अर्धर्चः – अर्धर्चम् । इसी प्रकार तीर्थ, शरीर, मण्ड, पीयूष, देह, अंकुश, कलश, सूत्र, पात्र आदि भी हैं । मृदु पचति । प्रातः कमनीयम् ।

**विमर्श**—सूत्रस्थ 'पुंसि' पद पुल्लिङ्ग का बोधक है । 'च' पद के कारण पूर्वसूत्र 'अपथं नपुंसकम्' (१५२४) से 'नपुंसकम्' का अनुसरण किया जाता है । तदनुसार — ''अर्धर्च आदि गणपठित शब्द पुल्लिङ्ग तथा नपुंसकलिङ्ग में प्रयुक्त होते हैं ।''

**उदाहरण**—विग्रह – ऋचः अर्धम् (समास, विभक्तिलोप, समासान्त 'अ' प्रत्यय, ऋ = 'अ' – गुण, रपर, प्रकृत सूत्र से पुल्लिङ्ग में) = अर्धर्चः । नपुंसकलिङ्ग में – अर्धर्चम् । इसी प्रकार ध्वज आदि शब्द भी पुल्लिङ्ग और नपुंसकलिङ्ग में होते हैं । ध्वजः – ध्वजम् । तीर्थः – तीर्थम् । शरीरः – शरीरम् । मण्डः – मण्डम् । पीयूषः – पीयूषम् । देहः – देहम् । अङ्कुशः – अङ्कुशम् । कलशः – कलशम् । सूत्रः – सूत्रम् । पात्रः – पात्रम् इत्यादि ।

**सामान्ये नपुंसकम्**—सामान्य में नपुंसकलिङ्ग होता है । अर्थात् किसी लिङ्ग-विशेष की विवक्षा न हो, केवल लिङ्गसामान्य ही विवक्षित हो तो नपुंसकलिङ्ग होता है ।

**उदाहरण**—मृदु पचति (मृदु पकाता है) — यहाँ ✓पच् का अर्थ पकाना है । पकाने पर अन्न मृदु (कोमल) हो जाता है । इस प्रकार 'विक्लित्यनुकूलो व्यापारः' ✓पच् का अर्थ है । इस व्यापार का फल पाक (मृदु होना) है । मृदु और पाक यद्यपि अभिन्न है तथापि उनमें विशेष्यविशेषणभाव कल्पित किया जाता है । मृदु पदार्थ फलरूप क्रिया का विशेषण है, तथापि व्यपदेशिवद्भाव से वह कर्म है । अतः द्वितीया विभक्ति में 'सामान्ये नपुंसकम्' से नपुंसकलिङ्ग विधान होने पर 'अम्' का लुक् होता है = मृदु पचति । प्रातः कमनीयम् (सुन्दर प्रभात) — यहाँ भी 'प्रातर्' से नपुंसकलिङ्ग में द्वितीया विभक्ति 'अम्' का लुक् होता है ।

**तत्पुरुषसमास-प्रकरण समाप्त ।**



# अथ बहुव्रीहिसमासप्रकरणम्

(१५३०) शेषो बहुव्रीहिः २।२।२३। अधिकारोऽयं प्राग्द्वन्द्वात्।

(१५३१) अनेकमन्यपदार्थे २।२।२४। अनेकं प्रथमान्तमन्यपदार्थे वर्तमानं वा

---

(१५३०) **शेषो बहुव्रीहिः**। उक्तादन्यः शेषः। 'द्वितीया श्रिते'त्यादिना यस्य त्रिकस्य (विभक्तेः) विशिष्य समासो नोक्तः स शेषः प्रथमान्तार्थ इत्यर्थः।

(१५३१) **अनेकमन्यपदार्थे**। अनेकम् = एकाधिकम् अन्यस्य पदस्यार्थे वर्तमानं वा समस्यत इति। स बहुव्रीहिः। बहुव्रीहिसमासे अन्यपदार्थस्य प्राधान्यात् समस्तपदस्य तदनुसारेण लिङ्गवचनानि भवन्ति।

---

क्रमप्राप्त बहुव्रीहि समास का निर्वचन किया जा रहा है। बहुव्रीहि समास में अन्य पदार्थ प्रधान होता है – 'अन्यपदार्थप्रधानो बहुव्रीहिः'। इस समास में वचन एवं लिङ्ग सम्बन्धी कुछ विशेषताएँ भी हैं। समस्त शब्दों में कोई भी वचन आ सकता है। विशेष्यवाची शब्द के अनुसार लिङ्गविधान होता है। यथा पीताम्बरः – यहाँ 'पीतानि अम्बराणि यस्य' विग्रह करने पर पीत शब्द अपने विशेष्यवाची अम्बर का अनुसरण कर वचन को बदलता है; किन्तु समस्त पद में विशेष्यवाची शब्द के अनुसार पुल्लिङ्ग होता है। इसी प्रकार स्त्रीलिङ्ग और नपुंसकलिङ्ग में क्रमशः पीताम्बरा (पीतम् अम्बरं यस्याः सा) तथा पीताम्बरम् (पीतम् अम्बरं यस्य तत्) रूप बनते हैं। बहुव्रीहि समास में प्रयुक्त शब्दों के विशेष्य-विशेषण तो यथावत् रहते हैं किन्तु वे गौण हो जाते हैं तथा समास के पद मिलकर अन्य पदार्थ के विशेषण के रूप में प्रयुक्त हो जाते हैं।

(१५३०) **पद**—शेषः, बहुव्रीहिः। **अधिकारसूत्र**।

**मूलार्थ**—द्वन्द्व समास से पूर्व बहुव्रीहि का अधिकार है।

**विमर्श**—सूत्रस्थ 'शेषः' पद पूर्व प्रतिपादित समास से अवशिष्ट समास संज्ञा का बोधक है। उक्तादन्यः शेषः। अष्टाध्यायी क्रम में इसके पूर्व 'द्वितीयाश्रितातीत०' (२।१।२४), 'तृतीया तत्कृतार्थ०' (२।१।३०) आदि सूत्रों द्वारा विभक्तिनिर्देश करके तत्पुरुष समास का निरूपण किया जा चुका है। वहाँ प्रथामान्त का समास वर्णित नहीं है। अतः सूत्रस्थ 'शेषः' से प्रथमान्त का बहुव्रीहि समास ध्वनित होता है। इस प्रकार द्वन्द्व समास के पूर्व ('चार्थे द्वन्द्वः' २।२।२९) तक बहुव्रीहि का अधिकार है।

(१५३१) **पद**—अनेकम्, अन्यपदार्थे। **अनुवृत्ति**—बहुव्रीहिः, विभाषा, सुप्, समासः। **विधिसूत्र**।

**मूलार्थ**—अन्य पद के अर्थ में वर्तमान अनेक प्रथमान्त विकल्प से समस्त होते हैं, वह बहुव्रीहि समास कहलाता है।

**विमर्श**—सूत्र में विधेयांश का अभाव है। अतः 'शेषो बहुव्रीहिः' (१५३०) से 'बहुव्रीहिः' पद की अनुवृत्ति के साथ पूर्ववत् उक्त पदों की अनुवृत्ति आ रही है। सूत्रस्थ 'अनेकम्' पद 'सुप्' पद की अनुवृत्ति द्वारा विशेषण के रूप में तदन्तविधि होने पर सूत्रार्थ में सहायक होता है। इस प्रकार अनेक सुबन्त (प्रथमान्त पद) बहुव्रीहि समास के प्रमुख अङ्ग होते हैं। तदनुसार – ''प्रथमान्त समानाधिकरण पदों का समस्यमान पदों से भिन्न अन्यपदार्थ गम्यमान रहने पर परस्पर विकल्प से समास होता है तथा उसकी बहुव्रीहि संज्ञा होती है।''

**समस्यते, स बहुव्रीहिः। ( १५३२ ) सप्तमीविशेषणे बहुव्रीहौ २।२।३५। सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं स्यात्। ( १५३३ ) हलदन्तात्सप्तम्याः संज्ञायाम् ६।३।९। हलन्ताददन्ताच्च सप्तम्या अलुक्। कण्ठेकालः। अत एव ज्ञापकाद् व्यधिकरणपदो बहुव्रीहिः। प्राप्तमुदकं यं स प्राप्तोदको ग्रामः। ऊढरथोऽनड्वान्।**

---

(१५३२) **सप्तमीविशेषण इति**। सप्तमी प्रत्ययग्रहणपरिभाषया सप्तम्यञ्च विशेषणञ्च ते सप्तमीविशेषणे बहुव्रीहौ पूर्वं प्रयोज्यम्। सर्वोपसर्जनत्वाद् बहुव्रीहेरनियमे प्राप्ते नियमार्थमिदं वचनम्।

(१५३३) **हलदन्तादिति**। स्पष्टम्। **कण्ठेकालः**। कण्ठे कालोऽस्येति विग्रहे, कण्ठ + ङि, काल + सु इत्यलौकिकविग्रहे 'अनेकमन्यपदार्थे' इत्यनेन ज्ञापकात्समासे 'सप्तमीविशेषणे बहुव्रीहौ' इत्यनेन सप्तम्यन्तस्य 'कण्ठे' इत्यस्य पूर्वनिपाते विभक्तिलोपे प्राप्ते 'हलदन्तात्सप्तम्याः संज्ञायामि'ति सप्तम्या अलुकि, प्रातिपदिकत्वे सौ रुत्वे विसर्गे 'कण्ठेकालः' इति।

---

(१५३२) **पद**—सप्तमीविशेषणे, बहुव्रीहौ। **अनुवृत्ति**—पूर्वम्। **नियमसूत्र**।

**मूलार्थ**—सप्तम्यन्त और विशेषण का बहुव्रीहि समास में पूर्वनिपात होता है।

**विमर्श**—प्रकृत सूत्र में विधेय पद का अभाव है। उसकी पूर्ति 'उपसर्जनं पूर्वम्' से 'पूर्व' पद की अनुवृत्ति लाकर की जाती है। 'प्रत्ययग्रहणे तदन्ता ग्राह्याः' परिभाषा के अनुसार सूत्रस्थ 'सप्तमी' पद तदन्त का बोधक है। इस प्रकार यह अर्थ निष्पन्न होता है – ''बहुव्रीहि समास में सप्तम्यन्त पद एवं विशेषणवाची पदों का पूर्वप्रयोग होता है।''

(१५३३) **पद**—हलदन्तात्, सप्तम्याः, संज्ञायाम्। **अनुवृत्ति**—अलुगुत्तरपदे। **विधिसूत्र**।

**मूलार्थ**—हलन्त और अदन्त से परवर्ती सप्तमी का अलुक् होता है। कण्ठेकालः। अत एव ज्ञापक से ज्ञात होता है कि व्यधिकरणपद बहुव्रीहि भी होता है। प्राप्तोदकः ग्रामः। ऊढरथः। उपहृत-पशुः। उद्धृतौदना। पीताम्बरः। वीरपुरुषकः इत्यादि।

**विमर्श**—विधेयांश की पूर्ति हेतु 'अलुगुत्तरपदे' (६।३।१) की आधिकारिक अनुवृत्ति आ रही है। तदनुसार – ''संज्ञा के विषय में हलन्त तथा अकारान्त शब्दों से परे सप्तमी विभक्ति का लुक् नहीं होता।''

**उदाहरण**—कण्ठे कालः **यस्य** (**बहुव्रीहि** समास, प्राप्त विभक्तिलुक् का 'हलदन्तासप्तम्याः संज्ञायाम्' से अलुक्, '**कण्ठे**' **का** पूर्वप्रयोग – 'सप्तीविशेषणे बहुव्रीहौ', विभक्तिकार्य) = कण्ठेकालः (जिनके गले में काल **अर्थात्** विष हों – शिव)।

**अत एवेति**। 'अनेकमन्यपदार्थे' के द्वारा अनेक प्रथमान्त पदों का बहुव्रीहि समास विधान होने से सप्तम्यन्त पद के साथ बहुव्रीहि समास होना सम्भव नहीं होता। तब 'सप्तमीविशेषणे बहुव्रीहौ' सूत्र के द्वारा सप्तम्यन्त पद का बहुव्रीहि समास में पूर्वनिपात विधान व्यर्थ हो जायेगा। वह व्यर्थ होकर ज्ञापन करता है कि कहीं-कहीं व्यधिकरणपद बहुव्रीहि भी होता है।

बहुव्रीहि समास के विग्रह करने में 'यत्' शब्द की विभक्ति से द्वितीयादि समानाधिकरण बहुव्रीहि की प्रतीति होती है। छः विभक्तियों के समानाधिकरण बहुव्रीहि के उदाहरण निम्नवत् हैं –

१. द्वितीयानिष्ठ समानाधिकरण बहुव्रीहि – प्राप्तम् उदकं यं सः = प्राप्तोदकः ग्राम (ऐसा गाँव जहाँ पानी पहुँच चुका हो)।

२. **तृतीयानिष्ठ बहुव्रीहि – ऊढः रथः येन सः** = ऊढरथः अनड्वान् (ऐसा बैल जिसने रथ खींचा हो)।

उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। पीताम्बरो हरिः। वीरपुरुषको ग्रामः। * प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः *। प्रपतितपर्णः प्रपर्णः। * नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः *। अविद्यमानपुत्रोऽपुत्रः। (१५३४) **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६।३।३४।**

**प्रादिभ्य इति**। प्रादिभ्यः परं यद्धातुजप्रकृतिकं प्रथमान्तं तस्याऽन्येन बहुव्रीहिर्वाच्यः। तत्र बहुव्रीहौ प्रादिभ्यः परस्योत्तरपदस्य धातुजस्य लोपश्च विकल्पेन वाच्य इत्यर्थः।

**नञोऽस्त्यर्थानामिति**। नञः परेषामस्त्यर्थवाचिनां सुबन्तानां बहुव्रीहिर्वाच्यः। अस्त्यर्थवाचिनमुत्तरपदानां लोपश्च वा वक्तव्य इत्यर्थः। अस्त्यर्थकस्य विद्यमानपदस्य लोपे रूपम् – **अपुत्र इति**।

(१५३४) **स्त्रिया इति**। भाषितः पुमान् यस्मिन्नर्थे प्रवृत्तिनिमित्तं स भाषितपुंस्कपदेनो-

---

३. चतुर्थीनिष्ठ बहुव्रीहि — उपहृतः पशुः यस्मै सः = उपहृतपशुः रुद्रः (जिनके लिए पशु लाया गया हो)।

४. पञ्चमीनिष्ठ बहुव्रीहि — उद्धृतम् ओदनं यस्मात् सा = उद्धृतौदना स्थाली (ऐसी बटलोई जिससे भात निकाल लिया गया हो)।

५. षष्ठीनिष्ठ बहुव्रीहि — पीतम् अम्बरं यस्य सः – पीताम्बरः हरिः (जिनका वस्त्र पीला हो)।

६. सप्तमीनिष्ठ बहुव्रीहि — वीराः पुरुषाः यस्मिन् सः = वीरपुरुषकः ग्रामः (ऐसा गाँव जिसमें वीर पुरुष हों)।

**१ वा०**—प्र आदि से परवर्ती यदि धातुज शब्द हो तो तदन्त शब्द का अन्य पद के साथ समास होता है तथा विकल्प से उत्तरपद का लोप भी होता है।

**उदाहरण—लौकिक विग्रह**—प्रपतितानि पर्णानि यस्मात्। **अ. वि.**—प्रपतित + जस्, पर्ण + जस् (समास, विभक्तिलोप, पतित शब्द का वा० से वैकल्पिक लोप, विभक्तिकार्य) = प्रपर्णः। पक्ष में — प्रपतितपर्णः (जिससे पत्ते गिर चुके हों ऐसा वृक्ष)।

**२ वा०**—नञ् से परवर्ती अस्त्यर्थ (विद्यमानार्थ) वाचक शब्द का उत्तरपद के साथ समास होता है तथा नञ् के उत्तरवर्ती पद का लोप विकल्प से होता है।

**उदाहरण—लौ० वि०**—अविद्यमानः पुत्रः यस्य सः। **अ० वि०**—न विद्यमान + सु, पुत्र + सु (समास — वार्तिक से, विभक्तिलोप, न से परवर्ती 'विद्यमान' का विकल्प से लोप, 'न्' का लोप — 'नलोपो नञः', पुनः विभक्तिकार्य) = अपुत्रः। पक्ष में विद्यमान पद का लोप न होने पर — अविद्यमानपुत्रः (जिसके पुत्र न हों)।

(१५३४) **पद**—स्त्रियाः, भाषितपुंस्कात्, अनूङ्, समानाधिकरणे, स्त्रियाम्, अपूरणीप्रियादिषु। **अनुवृत्ति**—उत्तरपदे। **अतिदेशसूत्र**।

**मूलार्थ**—भाषितपुंस्क से परे ऊङ्प्रत्यय के अभाव वाले स्त्रीवाचक शब्द के पुंवाचक के समान रूप होते हैं, समानाधिकरण स्त्रीलिङ्ग उत्तरपद के परे रहते। किन्तु पूरणप्रत्ययान्त और प्रियादि के परे यह पुंवद्भाव नहीं होता। चित्रगुः। रूपवद्भार्यः। अनूङ् क्यों कहा? वामोरूभार्यः।

**विमर्श**—अनुवृत्त आधिकारिक पद 'उत्तरपदे' का अन्वय सूत्र के 'समानाधिकरणे' तथा 'स्त्रियाम्' पदों के साथ होता है। 'भाषितपुंस्कादनूङ्' पदस्थ 'अनूङ्' का विग्रह बहुव्रीहिपरक है — ऊङ् अभावः अस्याम्। निपातनवश पञ्चमी का लोप नहीं होता। 'अनूङः' में षष्ठी विभक्ति का लोप हुआ है। जिस निमित्त (अर्थ) को लेकर पुल्लिङ्ग में शब्द प्रवृत्त होता है, यदि नपुंसकलिङ्ग में प्रवृत्ति

**उक्तपुंस्कात्पर ऊङ्भावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकशब्दस्येव रूपं स्यात्समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे, न तु पूरण्यां प्रियादौ च परतः। गोस्त्रियोरिति ह्रस्वः। चित्रगुः। रूपवद्भार्यः। अनूङ् किम्? वामोरूभार्यः। पूरण्यां तु। (१५३५) अप्पूरणीप्रामाण्योः ५।४।११६। पूरणार्थप्रत्ययान्तं यत् स्त्रीलिङ्गं तदन्तात्प्रामाण्याच्च बहुव्रीहेरप् स्यात्। कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः।**

---

च्यते। तस्य प्रतिपादको यः शब्दः सोऽपि भाषितपुंस्कः। ऊङोऽभावोऽनूङ्। तथाभूतस्य स्त्रीप्रत्ययान्तशब्दस्य पुंवाचकस्येव रूपं स्यात् न तु पूरणप्रत्ययान्तशब्दे प्रियादौ च परत इत्यर्थः। **चित्रगुः** — चित्राः गावो यस्येति विग्रहे, चित्रा + जस्, गो + जस् इत्यलौकिकविग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासे सुपो लुकि, 'सप्तमीविशेषणे' इति विशेषणस्य पूर्वनिपाते 'चित्रागो' इति जाते 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्०' इत्यनेन 'चित्रा' इत्येतस्य पुंवद्भावेन टापो निवृत्तौ, गोशब्दस्योपसर्जनत्वेन 'गौस्त्रियोरुपसर्जनस्य' इत्यनेन ह्रस्वे ओकारस्य उकारे प्रातिपदिकत्वे सौ रुत्वे विसर्गे 'चित्रगुः' इति।

(१५३५) **कल्याणीपञ्चमा इति**। कल्याणी पञ्चमी यासां रात्रीणां ताः इति लौकिक-

---

का भी वही निमित्त हो, तो उस शब्द को 'भाषितपुंस्क' कहते हैं। भाषितपुंस्क में प्रवृत्तिनिमित्त की एकरूपता अपेक्षित होती है। इस प्रकार — ''जिस शब्द के प्रयोग का कारण पुल्लिङ्ग और स्त्रीलिङ्ग में तुल्य हो तथा जिसके परे ऊङ् प्रत्यय न हो ऐसे स्त्रीवाचक शब्द का पुंवाचक शब्द के समान रूप होता है, समानाधिकरण स्त्रीलिङ्ग उत्तरपद परे रहते। यदि पूरणी संख्या और प्रिया आदि शब्द उत्तरपद में न हों।''

**उदाहरण—लौकिक विग्रह**—चित्राः गावः यस्य सः। **अलौकिक वि०**—चित्रा + जस्, गो + जस् (समास = 'अनेकमन्यपदार्थे', विभक्तिलोप, स्त्रीवाचक 'चित्रा' को पुंवद्भाव — 'स्त्रियाः पुंवद्०', गो की उपसर्जनसंज्ञा, 'ओ' = 'उ' — ह्रस्व — 'गोस्त्रियोरुपसर्जनस्य', पुनः प्रातिपदिक संज्ञा सु = स् = र् = :) = चित्रगुः (जिसकी गायें चितकबरी हों ऐसा व्यक्ति)। **लौ० वि०**—रूपवती भार्या यस्य सः। **अ० वि०**—रूपवती + सु, भार्या + सु (समास, विभक्तिलोप, प्रकृत सूत्र से पुंवद्भाव) — रूपवत् भार्या ('त्' = 'द्' जश्त्व — 'झलां जशोऽन्ते', 'आ' = 'अ' — ह्रस्व — 'गोस्त्रियोरुपसर्जनस्य', विभक्तिकार्य) = रूपवद्भार्यः (जिसकी पत्नी सुन्दर हो)।

**प्रत्युदाहरण**—प्रकृत सूत्र में 'अनूङ्' का निवेश क्यों किया गया? 'अनूङ्' के अभाव में 'वामौ ऊरू यस्याः सा = वामोरूः'। वामोरू भार्या यस्य सः = 'वामोरूभार्या' में ऊङन्त वामोरू पद को पुंवद्भाव होने पर उरूभाग को ह्रस्व हो जाता। अतः 'अनूङ्' पद का निवेश किया गया है।

(१५३५) **पद**—अप्, पूरणीप्रामाण्योः। **अनुवृत्ति**—बहुव्रीहौ, समासान्ताः। **विधिसूत्र**।

**मूलार्थ**—पूरणप्रत्ययान्त जो स्त्रीलिङ्ग तदन्त से और प्रमाण्यन्त बहुव्रीहि से अप् प्रत्यय होता है। कल्याणीपञ्चमा रात्रयः। स्त्रीप्रमाणः। **वा०**—पुंवद्भाव का प्रतिषेध और अप् प्रत्यय - ये दोनों कार्य प्रधान पूरणीप्रत्ययान्त के होने पर ही हों। रात्रि शब्द उक्त उदाहरण में पूरणीवाच्य है, अतः उसका प्राधान्य है।

**विमर्श**—सूत्रार्थ की पूर्ति के लिए 'बहुव्रीहौ सक्थ्यक्ष्णोः०' (५।४।११२) से 'बहुव्रीहौ' की अनुवृत्ति आ रही है तथा 'समासान्ताः' का अधिकारजन्य प्रभाव विद्यमान है। अनुवृत्त 'बहुव्रीहौ'

**स्त्री प्रमाणी यस्य सः स्त्रीप्रमाणः। पुंवद्भावप्रतिषेधोऽप्प्रत्ययश्च प्रधानपूरण्यामेव। रात्रिः पूरणी वाच्या चेत्युक्तोदाहरणे मुख्या। अन्यत्र तु। (१५३६) नद्यृतश्च ५।४।१५३। नद्युत्तरपदादृदन्तोत्तरपदाच्च बहुव्रीहेः कप्। पुंवद्भावः। (१५३७) केऽणः ७।४।१३। ह्रस्वः। इति प्राप्ते। (१५३८) न कपि ७।४।१४। अणो**

---

विग्रहे, कल्याणी + सु, पञ्चमी + सु इत्यलौकिकविग्रहे बहुव्रीहिसमासे विभक्तिलोपे, पुंवद्भावे प्राप्ते 'अप्पूरणीप्रामाण्योः' इत्यनेन अप्प्रत्ययेऽनुबन्धलोपे भत्वे 'यस्येति चे'तीकारलोपे प्रातिपदिकत्वे जसि अनुबन्धलोपे सवर्णदीर्घे सस्य रुत्वे विसर्गे 'कल्याणीपञ्चमाः' इति।

(१५३६) **नद्यृतश्च**। नदी च ऋच्चेति समाहारद्वन्द्वात्पञ्चमी। 'बहुव्रीहौ सक्थ्यक्ष्णोः' इत्यतो बहुव्रीहावित्यनुवर्तते, तच्च पञ्चम्या विपरिणम्यते। तदाक्षिप्तमुत्तरपदं नद्यृद्भ्यां विशेष्यते, तदन्तविधिः। 'उरःप्रभृतिभ्यः' इत्यतः 'कप्' इत्यनुवर्तते। तदाह — **नद्युत्तरपदादिति।**

(१५३७) **केऽणः**। के परेऽणो ह्रस्वः स्यादित्यर्थः।

---

पद 'पूरणीप्रामाण्योः' का विशेष्य है। विशेषण होने से 'पूरणीप्रामाण्योः' में तदन्तविधि होती है। 'पूरणी' पद पूरणप्रत्ययान्त स्त्रीलिङ्ग का बोधक है। इस प्रकार सूत्र का समष्टिगत अर्थ होता है — "जिस बहुव्रीहि समास के अन्त में पूरणार्थक प्रत्ययान्त स्त्रीलिङ्ग या प्रमाणी पद हो, उससे समासान्त अप् (= 'अ') प्रत्यय होता है।"

**उदाहरण**—कल्याणी पञ्चमी यासां रात्रीणां ताः (बहुव्रीहिसमास, विभक्तिलोप, उत्तरपदस्थ पञ्चमी पद पूरणप्रत्ययान्त होने से 'कल्याणी' को पुंवद्भाव नहीं होता, अप् = 'अ' — 'अप्पूरणीप्रामाण्योः') — कल्याणीपञ्चमी अ ('ई' का लोप — 'यस्येति च', स्त्रीलिङ्ग में टाप् = 'आ', दीर्घ, प्रथमा बहुवचन में विभक्तिकार्य) = कल्याणीपञ्चमाः रात्रयः (जिन रातों में पाँचवीं कल्याणप्रद हो)। स्त्री प्रमाणी यस्य सः (समास, विभक्तिलोप, अप् = 'अ' — पुंवद्भाव का प्रतिषेध, ईकारलोप — 'यस्येति च', विभक्तिकार्य) = स्त्रीप्रमाणः (जिसको स्त्री प्रमाण हो)।

**वा०**—पुंवद्भाव का प्रतिषेध तथा अप् प्रत्यय ये दोनों प्रधानपूरणी में प्रवृत्त होते हैं। तदनुसार पूर्वोक्त प्रयोग 'कल्याणीपञ्चमाः रात्रयः' में पञ्चमी शब्द का रात्रि के साथ सम्बन्ध है। यहाँ पूरणीप्रत्ययान्त पञ्चमी की प्रधानता है, न कि रात्रि की। अतः पुंवद्भाव का अभाव और अप् प्रत्यय होता है। जहाँ पूरणीप्रत्यय प्रधान नहीं है, वहाँ पूर्व पद को पुंवद्भाव होकर 'कल्याणपञ्चमीकः' रूप बनेगा।

(१५३६) **पद**—नद्यृतः, च। **अनुवृत्ति**—कप्, बहुव्रीहौ, समासान्ताः। **विधिसूत्र**।

**मूलार्थ**—नद्युत्तरपद और ऋदन्तोत्तरपद बहुव्रीहि से कप् प्रत्यय होता है।

**विमर्श**—'उरःप्रभृतिभ्यः कप्' (५।४।१५१) सूत्र से विधेय 'कप्' की अनुवृत्ति आती है। अन्य पदों की अनुवृत्ति पूर्ववत् विद्यमान है। तदनुसार — "नदीसंज्ञक तथा ऋकारान्त बहुव्रीहि समास से भी समासान्त कप् (= अ) प्रत्यय होता है।"

(१५३७) **पद**—के, अणः। **अनुवृत्ति**—ह्रस्वः। **विधिसूत्र**।

**मूलार्थ**—क परे रहते अण् को ह्रस्व होता है।

**विमर्श**—प्रकृत सूत्र में विधेय का उल्लेख नहीं है। अतः 'शॄदॄप्रां ह्रस्वो वा' (७।४।१२) से 'ह्रस्वः' पद की अनुवृत्ति आती है। 'अङ्गस्य' का अधिकार है। अतः "क परे रहते अङ्ग को ह्रस्व होता है।"

**ह्रस्वो न। कल्याणपञ्चमीकः पक्षः। अत्र तिरोहितावयवभेदस्य पक्षस्यान्यपदार्थतया रात्रिरप्रधानम्। बहुकर्तृकः। अप्रियादिषु किम्? कल्याणप्रियः। प्रिया। मनोज्ञा। कल्याणी। सुभगा। दुर्भगा। भक्तिः। सचिवा। स्वसा। कान्ता। क्षान्ता। सभा। चपला। दुहिता। बाला। वामा। अबला। तनया। * सामान्ये नपुंसकम् *। दृढं भक्तिर्यस्य सः दृढभक्तिः। स्त्रीत्वविवक्षायां तु दृढा भक्तिः। (१५३९) तसिलादिष्वाकृत्वसुचः ६।३।३५। तसिलादिषु कृत्वसुजन्तेषु स्त्रियाः पुंवत्। परिगणनं**

---

(१५३८) **न कपि**। 'केऽणः' इत्यतः 'अणः' इति 'शृदॄप्राम्' इत्यतः ह्रस्व इति चानुवर्तेते। तदाह — **अणो ह्रस्व इति**। **बहुकर्तृक इति**। बहवः कर्त्तारो यस्येति विग्रहः। **दृढभक्तिः** — दृढा भक्तिर्यस्येति विग्रहे दृढपदस्य प्रियादिषु पाठात् दृढभक्तिरित्यत्र कथं पुंस्त्वमिति जिज्ञासायां 'सामान्ये नपुंसकम्' इत्यनेन नपुंसकत्वात् दृढं भक्तिर्यस्येति विग्रहं कृत्वा बहुव्रीहिसमासो ज्ञेयः।

(१५३९) **तसिलादिष्विति**। 'पञ्चम्यास्तसिल्' इत्यारभ्य 'संख्यायाः क्रियाभ्यावृत्तिगणने

---

(१५३८) **पद**—न, कपि। **अनुवृत्ति**—अणः, ह्रस्वः। **विधि (निषेध) सूत्र**।

**मूलार्थ**—कप् प्रत्यय के परे अण् ह्रस्व न हो। कल्याणपञ्चमीकः पक्षः। यहाँ तिरोहित अवयवगत भेद पक्ष का अन्य-पदार्थता के कारण रात्रि शब्द को अप्रधान = गौण कहा गया है। बहुकर्तृकः। सूत्र में अप्रियादिषु क्यों कहा? कल्याणीप्रियः। प्रिया आदि। सामान्य में नपुंसकलिङ्ग हो। दृढभक्तिः।

**विमर्श**—पूर्वसूत्र (१५३७) से 'अणः' तथा 'शृदॄप्राम्०' से 'ह्रस्वः' की अनुवृत्ति अपेक्षित है। 'अङ्गस्य' का आधिकारिक प्रभाव विद्यमान है। तदनुसार सूत्र का समष्टिगत अर्थ यह होगा — ''कप् प्रत्यय के परवर्ती रहते अण् को ह्रस्व नहीं होता।''

**उदाहरण**—जहाँ पूरणी प्रत्यय मुख्य नहीं है वहाँ — कल्याणी पञ्चमी यस्य (बहुव्रीहि समास, विभक्तिलोप, पूर्वपद को पुंवद्भाव, कप् = 'क' — 'नद्यृतश्च', 'केऽणः' से प्राप्त ह्रस्व = 'ई' = 'इ' का 'न कपि' सूत्र से निषेध, विभक्तिकार्य) = कल्याणपञ्चमीकः। यहाँ पञ्चमी शब्द मुख्यतया 'रात्रि' को बोधित करता है और रात्रि शब्द पक्ष को बोधित करता है। रात्रि गौण है, पक्ष प्रधान है। बहवः कर्तारः यस्य सः। **अ० वि०**—बहु + जस्, कर्तृ + जस् (समास — 'अनेकमन्यपदार्थे', विभक्तिलोप, ऋकारान्त बहुव्रीहि से कप् = 'क' — 'नद्यृतश्च', पुनः विभक्ति सु = स् = र् = :) = बहुकर्तृकः (जिसके बहुत कर्ता हों)।

**प्रत्युदाहरण**—'स्त्रियाः पुंवद्०' सूत्र से पुंवद्भाव होने के लिए अप्रियादिषु = 'प्रिया आदि पदों का परवर्ती न होना' का निवेश किया गया है। अतः 'कल्याणीप्रियः' में उत्तरपद प्रिया होने के कारण पुंवद्भाव नहीं होता। कल्याणी प्रिया यस्य सः (समास, विभक्तिलोप, प्रिया के 'आ' को ह्रस्व – 'गोस्त्रियोरुपसर्जनस्य', विभक्तिकार्य) = कल्याणीप्रियः। प्रिया आदि शब्दों का परिगणन किया गया है। वे १७ हैं। परिगणित शब्दों में से भक्ति शब्द का दृढ के साथ बहुव्रीहि समास करने पर पदसंस्कार पक्ष में सामान्यतः परत्व का आश्रय लेकर 'सामान्ये नपुंसकम्' नियम के अनुसार 'दृढं भक्तिर्यस्य सः = दृढभक्तिः' विग्रह होगा (अर्थ — जिसकी भक्ति दृढ हो)।

(१५३९) **पद**—तसिलादिषु, आकृत्वसुचः। **अनुवृत्ति**—स्त्रियाः पुंवद्। **विधिसूत्र**।

**मूलार्थ**—तसिलादि से कृत्वसुच् पर्यन्त प्रत्यय के परे रहते स्त्रीवाचक शब्द को पुंवद्भाव होता

**कर्तव्यम्। त्रतसौ। तरप्तमपौ। चरट्जातीयरौ। कल्पब्देशीयरौ। रूपप्पाशपौ। थाल्। तिलथ्यनौ। एषु परेषु स्त्रियाः पुंवत्। बह्वीषु इति बहुत्र। बहुत इत्यादि। * त्वतलोर्गुणवचनस्य *। शुक्लत्वम्। शुक्लता। * भस्याऽढे तद्धिते *। हस्तिनीनां समूहो हास्तिकम्। अढेः किम्? रौहिणेयः। * कुक्कुट्यादीनामण्डादिषु *। कुक्कुटाण्डम्।**

---

कृत्वसुच्' इत्येतत्पर्यन्तसूत्रविहितेष्वर्थः। 'स्त्रियाः पुंवत्' इत्यनुवर्तते। तदाह — **तसिलादिष्वित्यादि। बहुत्र इति।** 'बह्वीषु' इत्यर्थे बह्वीशब्दात् 'सप्तम्यास्त्रल्' इति त्रलि, 'तसिलादिष्वाकृत्वसुचः' इति पुंवत्त्वे ङीषो निवृत्तौ बहुत्रेति रूपमिति। **भस्याऽढ इति।** ढभिन्ने तद्धिते परे स्त्रियाः पुंवत्वं वक्तव्यमित्यर्थः। **हास्तिकमिति।** हस्तिनीनां समूह इति विग्रहे 'अचित्तहस्ति-

---

है। परिगणन करना चाहिए — त्रल्, तस्, तरप्, तमप्, चरट्, जातीयर्, कल्पप्, देशीयर्, रूपप्, पाशप्, थाल्, तिल्, थ्यन् प्रत्यय तसिलादि हैं। बह्वीषु इस अर्थ में — बहुत्र, बहुतः। **वा०**—त्व और तल् प्रत्यय के परवर्ती रहते स्त्रीवाचक शब्द को पुंवद्भाव होता है। शुक्लत्वम्, शुक्लता। **वा०**—ढ प्रत्यय भिन्न तद्धित के परे रहते भसंज्ञक को पुंवद्भाव होता है। हास्तिकम्। अढे किम्? रोहिणेयः। **वा०**—कुक्कुटी आदि शब्दों को पुंवद्भाव होता है, अण्ड आदि उत्तरपद के परे रहते। कुक्कुटाण्डम्। मृगपदम् इत्यादि।

**विमर्श**—पुंवद्भाव का प्रकरण चल रहा है। पूर्वसूत्र (१५३४) से 'स्त्रियाः पुंवद्' पद की अनुवृत्ति आती है। 'आकृत्वसुचः' में आङ् का प्रयोग अभिविधि अर्थ में हुआ है। तदनुसार "तसिल् आदि से कृत्वसुच् पर्यन्त प्रत्यय के परवर्ती रहते स्त्रीवाचक शब्द को पुंवद्भाव होता है।" तद्धित प्रकरण के अन्तर्गत 'पञ्चम्यास्तसिल्' (५।३।७) से लेकर 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' (५।४।१७) तक पठित प्रत्यय तसिलादि से गृहीत हैं। उनका परिगणन किया जा रहा है। तदनुसार वे प्रत्यय १३ हैं। इन प्रत्ययों के परे रहते स्त्रीवाची शब्दों को पुंवद्भाव होता है।

**उदाहरण—विग्रह**—बह्वीषु। बह्वी + त्रल् (= 'त्र' — 'सप्तम्यास्त्रल्', पुंवद्भाव — 'तसिलादिष्वाकृत्वसुचः') = बहुत्र (बहुतों में)। विग्रह — बह्वीभ्यः। बह्वी + तसिल् (= तस् — 'पञ्चम्यास्तसिल्', पुंवद्भाव, स् = र् = :) = बहुतः (बहुतों से)।

**१ वा०**—त्व और तल् प्रत्यय परे रहते गुणवाचक शब्दों को पुंवद्भाव होता है। **उदाहरण** — शुक्लत्वम् (सफेदी)। शुक्लता। विग्रह — शुक्लायाः भावः। क्रमशः त्व और तल् प्रत्यय — 'तस्य भावस्त्वतलौ', वार्तिक से पुंवद्भाव के अनन्तर त्वप्रत्ययान्त नपुंसकलिङ्ग में तथा तल्प्रत्ययान्त स्त्रीलिङ्ग में प्रयुक्त होगा।

**२ वा०**—ढभिन्न तद्धित प्रत्यय परे रहते भसंज्ञक को पुंवद्भाव होता है। **उदाहरण**—विग्रह — हस्तिनीनां समूहः (हस्तिनी + ठक् = ठ — 'अचित्तहस्तिधेनोष्ठक्', 'ठ' = 'इक' — 'ठस्येकः', पुंवद्भाव) — हस्तिन् इक ('टि' का लोप — 'नस्तद्धिते', आदिवृद्धि — 'किति च', विभक्तिकार्य — नपुंसकलिङ्ग में) = हास्तिकम् (हथिनियों का समूह)। **प्रत्युदाहरण**—प्रकृत वार्तिक में 'अढे' पद का निवेश होने से ढ प्रत्यय परे रहते पुंवद्भाव नहीं होता। अतः 'रौहिणेयः' (= रोहिणी का पुत्र) में ढ प्रत्यय होने से पुंवद्भाव नहीं हुआ।

**३ वा०**—अण्ड आदि शब्दों के परवर्ती होने पर कुक्कुटी आदि शब्दों को पुंवद्भाव होता है। **उदाहरण—विग्रह**—कुक्कुट्याः अण्डम् (कुक्कुटी + ङस्, अण्ड + सु) (षष्ठी समास, पुंवद्भाव, अ + अ = 'आ' - दीर्घ, नपुंसकलिङ्ग में विभक्तिकार्य) = कुक्कुटाण्डम् (मुर्गी का अण्डा)।

**मृगपदम्। मृगक्षीरम्। काकशावः। (१५४०) क्यङ्मानिनोश्च ६।३।३६। पुंवत्। एनीवाचरति एतायते। श्येनीवाचरति श्येतायते। दर्शनीयां स्त्रियं मन्यते दर्शनीयमानिनी। (१५४१) न कोपधायाः ६।३।३७। स्त्रियाः पुंवत्। पाचिकाभार्यः। रसिकाभार्यः। मद्रिकायते। मद्रिकामानिनी। * कोपधप्रतिषेधे तद्धित-**

धेनोः' इति ठकि ठस्येकादेशे 'नस्तद्धिते' इति टिलोपे 'भस्याऽढे तद्धिते' इति पुंवत्त्वे सति नान्तलक्षणङीपो निवृत्तौ विभक्तिकार्ये 'हास्तिकमि'ति।

(१५४०) **क्यङ्मानिनोश्चेति**। क्यङि मानिनि चोत्तरपदे परत एतयोः पुंवत्त्वं स्यादित्यर्थः। **एतायत इति**। एता = चित्रवर्णा। 'वर्णानुदात्तादि'ति ङीप् नकारश्च। 'उपमानादाचारे' इत्यनुवर्तमाने 'कर्तुः क्यङ् सलोपश्च' इति एनीशब्दात् क्यङि पुंवत्त्वेन ङीब्नत्वयोर्निवृत्तौ 'अकृत्सार्वधातुकयोः' इति दीर्घे 'एतायते' इति।

(१५४१) **न कोपधाया इति**। 'स्त्रियाः पुंवत्' इत्यनुवर्तते। **पाचिकाभार्यः** — पाचिका भार्या यस्येति विग्रहे बहुव्रीहिसमासे विभक्तिलोपे 'स्त्रियाः पुंवद्भाषित०' इत्यनेन पुंवद्भावे

विग्रह — मृग्याः पदम् (समास, पुंवद्भाव आदि पूर्ववत्) = मृगपदम् (हिरनी का पैर)। मृग्याः क्षीरम् (प्रक्रिया उक्तवत्) = मृगक्षीरम् (हिरनी का दूध)। काक्याः शावः (पुंवद्भाव आदि पूर्ववत् पुल्लिङ्ग में विभक्तिकार्य) = काकशावः (मादा कौए का बच्चा)।

(१५४०) **पद**—क्यङ् मानिनोः, च। **अनुवृत्ति**—स्त्रियाः पुंवद्। **विधिसूत्र**।

**मूलार्थ**—क्यङ् और मनिन् प्रत्यय के परे रहते स्त्रीवाचक शब्द को पुंवद्भाव होता है। एतायते। श्येतायते। दर्शनीयमानिनी।

**विमर्श**—सूत्रार्थ की पूर्ति के लिए पूर्वसूत्र (१५३४) से 'स्त्रियाः पुंवत्' की अनुवृत्ति आ रही है। 'उत्तरपदे' का आधिकारिक प्रभाव विद्यमान है। तदनुसार "क्यङ् और मनिन् प्रत्यय के परे रहते पूर्वपद को पुंवद्भाव होता है।"

**उदाहरण**—एनी इव आचरति (एन + ई — ङीप् — 'वर्णानुदात्तात्तोपधात्तो नः', त् = न्, क्यङ् = य — 'कर्तुः क्यङ् सलोपश्च', पुंवद्भाव, दीर्घ — 'अकृत्सार्वधातुकयोः', आत्मनेपद प्रथमपुरुष एकवचन का रूप) = एतायते (जो हिरनी (चीतल) की तरह व्यवहार करता है)। श्येनी इव आचरति (प्रक्रिया पूर्ववत्) = श्येतायते (मादा बाज की तरह व्यवहार करता है)। दर्शनीयाम् (मन् + णिनि = इन् — 'मनश्च') — दर्शनीया + अम्, मन् + इन् (उपपदसमास, विभक्तिलोपादि, उपधावृद्धि, पुंवद्भाव) — दर्शनीयमानिन् (ङीप् = ई तथा विभक्तिकार्य) = दर्शनीयमानिनी (जो अपने से भिन्न किसी स्त्री को सुन्दर समझती है)।

(१५४१) **पद**—न, कोपधायाः। **अनुवृत्ति**—स्त्रियाः पुंवत्। **विधि (निषेध) सूत्र**।

**मूलार्थ**—ककारोपध स्त्रीलिङ्ग शब्द को पुंवद्भाव नहीं होता। पाचिकाभार्यः। रसिकाभार्यः। मद्रिकायते। मद्रिकामानिनी। **वा०**—कोपध प्रतिषेध में तद्धित सम्बन्धी और वु सम्बन्धी कोपध का ही ग्रहण होता है। अतः 'पाकभार्यः' में पुंवद्भाव का निषेध नहीं हुआ।

**विमर्श**—पूर्वोक्त सूत्रों से प्राप्त पुंवद्भाव का निषेध किया जा रहा है। 'स्त्रियाः पुंवत्' की पूर्ववत् अनुवृत्ति आ रही है। तदनुसार "ककार उपधा वाले स्त्रीवाचक शब्दों को पुंवद्भाव नहीं होता।"

**उदाहरण**—**विग्रह**—पाचिका भार्या यस्य सः। **अ० वि०**—पाचिका + सु, भार्या + सु

**वुग्रहणम्** * । नेह – पाकभार्यः । **(१५४२) संज्ञापूरण्योश्च ६।३।३८ ।** न पुंवत् । दत्ताभार्यः । पञ्चमीभार्यः । **(१५४३) वृद्धिनिमित्तस्य च तद्धित-स्यारक्तविकारे ६।३।३९ ।** वृद्धिशब्देन विहिता या वृद्धिस्तद्धेतुर्यस्तद्धितोऽरक्त-

---

प्राप्ते 'न कोपधायाः' इति तन्निषेधे 'भार्या'पदस्योपसर्जनत्वे 'गोस्त्रियोरुपसर्जनस्ये'ति ह्रस्वे विभक्तिकार्ये 'पाचिकाभार्यः' इति ।

(१५४२) **संज्ञापूरण्योश्चेति** । अनयोर्न पुंवदित्यर्थः । **दत्ताभार्यः** — दत्ता भार्या यस्येति विग्रहे समासे विभक्तिलोपे 'संज्ञापूरण्योश्चे'ति पुंवत्त्वनिषेधे उपसर्जनत्वे ह्रस्वे विभक्तिकार्ये 'दत्ताभार्यः' इति ।

(१५४३) **वृद्धिनिमित्तस्येति** । वृद्धिर्निमित्तं हेतुरिति विग्रहः । रक्तं च विकारश्चेति

---

(✓पच् + ण्वुल् = वु = अक, उपधावृद्धि, टाप् = आ, आ = इत् = 'इ' — 'प्रत्ययस्थात्कात् पूर्वात् इदाप्यसुपः') — पाचिका (भार्या के साथ बहुव्रीहि समास, विभक्तिलोप, 'स्त्रियाः पुंवद्०' से प्राप्त पुंवद्भाव का निषेध — 'न कोपधायाः', 'भार्या' की उपसर्जनसंज्ञा, ह्रस्व — 'गोस्त्रियोरुपसर्जनस्य', विभक्तिकार्य) = पाचिकाभार्यः (जिसकी पत्नी पाचिका है) । **विग्रह**—रसिका भार्या यस्य सः । **अ० वि०**—रसिका + सु, भार्या + सु (समास, पुंवद्भावनिषेध आदि कार्य पूर्ववत्) = रसिकाभार्यः (जिसकी पत्नी रसिका है) । **विग्रह**—मद्रिका इव आचरति (आचार अर्थ में क्यङ् = 'य', 'क्यङ्मानिनोश्च' से प्राप्त पुंवद्भाव का प्रकृत सूत्र से निषेध) — मद्रिकायते (मद्रिका के समान आचरण करता है) । **विग्रह**—मद्रिकां मन्यते (✓मन् + णिनि = इन् — 'मनश्च', उपधावृद्धि, उपपद-समास, 'क्यङ्मानिनोश्च' से प्राप्त पुंवद्भाव का प्रकृत सूत्र से निषेध, स्त्रीलिङ्ग में विभक्ति-कार्य) = मद्रिकामानिनी (जो स्त्री अपने को मद्रिका मानती हो) ।

**वा० —कोपध इति** । "तद्धित प्रत्यय सम्बन्धी और ण्वुल् या वुन् के वु को जहाँ अक आदेश होता है, तत्सम्बन्धी क की उपधा को ही पुंवद्भाव का निषेध किया जाय" । इस वार्तिक के नियम से 'पाकभार्यः' में 'न कोपधायाः' सूत्र से प्राप्त पुंवद्भाव का निषेध नहीं हुआ । क्योंकि 'पाका' शब्द का अवयव 'क' न तो तद्धित सम्बन्धी है और न 'वु' सम्बन्धी है ।

(१५४२) **पद**—संज्ञापूरण्योः, च । **अनुवृत्ति**—न, स्त्रियाः पुंवत् । **विधि (निषेध) सूत्र** ।

**मूलार्थ**—संज्ञावाचक और पूरणप्रत्ययान्त स्त्रीलिङ्ग शब्द को पुंवद्भाव नहीं होता । दत्ताभार्यः । पञ्चमीभार्यः ।

**विमर्श**—पूर्वसूत्र (१५४१) से 'न' की अनुवृत्ति प्रमुखतया अपेक्षित है । इसके अतिरिक्त 'स्त्रियाः पुंवत्' की भी अनुवृत्ति पूर्ववत् आ रही है । तदनुसार "संज्ञावाची तथा पूरणप्रत्ययान्त स्त्रीलिङ्ग शब्दों को भी पुंवद्भाव नहीं होता ।"

**उदाहरण—विग्रह**—दत्ता भार्या यस्य सः (बहुव्रीहि समास, प्राप्त पुंवद्भाव का निषेध — 'संज्ञापूरण्योश्च', विभक्तिलोप, उपसर्जन संज्ञा, ह्रस्व, विभक्तिकार्य) = दत्ताभार्यः (जिसका भार्या नाम दत्ता हो) । **विग्रह**—पञ्चमी भार्या यस्य सः (बहुव्रीहि समास, प्राप्त पुंवद्भाव का निषेध, अन्य कार्य पूर्ववत्) = पञ्चमीभार्यः (जिसकी पाँचवीं पत्नी हो) ।

(१५४३) **पद**—वृद्धिनिमित्तस्य, च, तद्धितस्य, अरक्तविकारे । **अनुवृत्ति**—न, स्त्रियाः पुंवत् । **विधि (निषेध) सूत्र** ।

**मूलार्थ**—वृद्धि शब्द से विहित वृद्धि का हेतुभूत जो रक्तविकारार्थभिन्न तद्धित तदन्त स्त्रीलिङ्ग

**विकारार्थस्तदन्ता स्त्री न पुंवत्। स्त्रौघ्नीभार्यः। रक्ते तु – काषायकन्थः। विकारे तु – हैममुद्रिकः। (१५४४) स्वाङ्गाच्चेतः ६।३।४०। स्वाङ्गाद्य ईकारस्तदन्तात्स्त्री न पुंवत्। सुकेशीभार्यः। स्वाङ्गात्किम्? पटुभार्यः। ईतः किम्? अकेशभार्यः।**

---

समाहारद्वन्द्वः। ततो नञ्तत्पुरुषः। वृद्धिपदेनात्र वृद्धिपदेन विहितैव वृद्धिः विवक्षिता, व्याख्यानादित्याह — **वृद्धिशब्देनेत्यादिना। स्त्रौघ्नीभार्यः** — स्रुघ्नो देशः, 'तत्र भव' इत्यण्, अकारलोपः, णित्त्वादादिवृद्धिः, ङीप्। स्त्रौघ्नी भार्या यस्येति विग्रहे समासे विभक्तिलोपे प्राप्तस्य पुंवद्भावस्य 'वृद्धिनिमित्तस्ये'त्यादिना निषेधे उपसर्जनत्वे ह्रस्वे विभक्तिकार्ये 'स्त्रौघ्नीभार्यः' इति।

(१५४४) **स्वाङ्गाच्चेति**। ईत इति च्छेदः। **सुकेशीभार्यः** — सु = शोभना केशाः

---

शब्दों को पुंवद्भाव नहीं होता। स्त्रौघ्नीभार्यः। रक्त अर्थ में — काषायकन्थः। विकारार्थ में — हैममुद्रिकः।

**विमर्श**—पुंवद्भाव के निषेध का प्रकरण होने से पूर्वोक्त 'न' और 'स्त्रियाः पुंवत्' की अनुवृत्ति आ रही है। सूत्रस्थ 'वृद्धिनिमित्तस्य' का विग्रह है—वृद्धिः निमित्तं यस्य सः। निमित्त का अर्थ 'हेतुः' है। तदनुसार "वृद्धि के हेतुभूत रक्तार्थक एवं विकारार्थक तद्धित प्रत्ययों से भिन्न अन्य तद्धित प्रत्ययान्त स्त्रीलिङ्ग शब्दों को पुंवद्भाव नहीं होता।"

**उदाहरण—लौ० वि०**—स्त्रौघ्नी भार्या यस्य सः। **अ० वि०**—स्त्रौघ्नी + सु, भार्या + सु (समास, 'स्त्रियाः पुंवत्०' से प्राप्त पुंवद्भाव का प्रकृत सूत्र से निषेध, उपसर्जनसंज्ञा, ह्रस्व, विभक्तिकार्य) =स्त्रौघ्नीभार्यः (जिसकी पत्नी स्रुघ्न जनपद की हो)। **प्रत्युदाहरण**—सूत्र में 'अरक्तविकारे' पद का निवेश होने से काषायी कन्था यस्य सः = 'काषायकन्थः' (जिसकी कथरी गेरुए रंग की हो) में पुंवद्भाव का निषेध नहीं हुआ। क्योंकि 'काषायी' पद में 'कषायेन रक्ता' अर्थ में 'तेन रक्तं रागात्' से अण् प्रत्यय हुआ है। इसी प्रकार 'हैमी मुद्रिका यस्य सः हैममुद्रिकः' (जिसकी अँगूठी स्वर्ण की है) में विकारार्थक अण् प्रत्यय होने के कारण पुंवद्भाव का निषेध नहीं हुआ।

(१५४४) **पद**—स्वाङ्गात्, च, ईतः। **अनुवृत्ति**—न, स्त्रियाः पुंवत्। **विधि (निषेध) सूत्र।**

**मूलार्थ**—स्वाङ्गवाचक से परवर्ती जो ई प्रत्यय तदन्त स्त्रीवाचक शब्द को पुंवद्भाव नहीं होता। सुकेशीभार्यः। स्वाङ्गात् क्यों कहा? पटुभार्यः। ईतः क्यों कहा? अकेशभार्यः। **वा०**—"मानिनी शब्द के परे रहते पुंवद्भाव का निषेध नहीं होता"। सुकेशमानिनी।

**विमर्श**—पुंवद्भावनिषेध का प्रकरण चल रहा है। पूर्ववत् उक्त पदों की अनुवृत्तियाँ विद्यमान हैं। तदनुसार — "अपने अङ्गवाची शब्द से उत्तर जो ईत् (ई), वह जिसके अन्त में है उस स्त्रीलिङ्ग शब्द को पुंवद्भाव नहीं होता।"

**उदाहरण**—सुकेशी भार्या यस्य सः। **अ० वि०**—सुकेशी + सु, भार्या + सु (बहुव्रीहिसमास, विभक्तिलोप, पुंवद्भाव का निषेध – 'स्वाङ्गाच्चेतः', उपसर्जनसंज्ञा, भार्या को ह्रस्व, विभक्तिकार्य) = सुकेशीभार्यः (जिसकी पत्नी सुन्दर बालों वाली है)।

**प्रत्युदाहरण**—प्रकृत सूत्र में 'स्वाङ्गात्' पद का निवेश होने से 'पटुभार्यः' (जिसकी पत्नी निपुण है) में पुंवद्भाव का निषेध नहीं हुआ। क्योंकि यहाँ ईकारान्त स्त्रीवाचक पट्वी शब्द स्वाङ्गवाचक नहीं है। सूत्र में 'ईतः' पद का निवेश होने से 'अकेशा भार्या यस्य सः' — 'अकेशभार्यः' (जिसकी पत्नी सुन्दर केशवाली न हो) में स्वाङ्गवाची अकेश पद ईकारान्त नहीं होने के कारण पुंवद्भाव का निषेध नहीं होता। पुंवद्भाव होकर — **अकेशभार्यः।**

* अमानिनीति वक्तव्यम् *। सुकेशमानिनी। **(१५४५) जातेश्च ६।३।४१।** न पुंवत्। ब्राह्मणीभार्यः। शूद्राभार्यः। **(१५४६) संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये २।२।२५।** संख्येयार्थया संख्ययाऽव्ययादयः समस्यन्ते स बहुव्रीहिः। **(१५४७) बहुव्रीहौ संख्येये डजबहुगणात् ५।४।७३।** संख्येये बहुव्रीहिस्तस्माड्डच् समासान्तः। दशानां समीपे ये सन्ति ते उपदशाः। अबहुगणात्किम् ?

---

यस्याः सा सुकेशी। सुकेशी भार्या यस्य स इति विग्रहः, 'स्त्रियाः पुंवत्' इति प्राप्तस्यानेन निषेधः।

(१५४५) **जातेश्च**। जातेः परो यः स्त्रीप्रत्ययस्तदन्तं न पुंवदित्यर्थः।

(१५४६) **संख्ययेति**। बहुव्रीहिरित्यनुवर्वते। सुप्सुपा इति च। संख्येये इत्येतत्संख्ययेत्यत्रान्वेति। संख्यया परिच्छेद्यं संख्येयम्, तत्रार्थे विद्यमानतया संख्ययेति लभ्यते। संख्याशब्दश्चात्र एकादिशतान्तशब्दपरस्तदाह — **संख्येयार्थयेति**।

(१५४७) **बहुव्रीहाविति**। संख्ययाव्यय इति विहित इति शेषः। **उपदशाः** — दशानां

---

**वा०**—स्वाङ्गवाची दीर्घ ईकारान्त पद से परवर्ती यदि 'मानिनी' शब्द हो तो पुंवद्भाव का निषेध नहीं होता। **उदाहरण**—सुकेशमानिनी (अपने केशों के सुन्दर मानने वाली)। 'सुकेशी मन्यते' अर्थ में 'मानिनी' शब्द परवर्ती होने के कारण ईकारान्त सुकेशी को पुंवद्भाव हो जाता है।

(१५४५) **पद**—जातेः, च। **अनुवृत्ति**—न स्त्रियाः पुंवत्। **विधि (निषेध) सूत्र**।

**मूलार्थ**—जातिवाचक शब्द से विहित स्त्रीलिङ्ग शब्द को पुंवद्भाव नहीं होता। ब्रह्मणीभार्यः। शूद्राभार्यः।

**विमर्श**—पूर्ववत् उक्त अनुवृत्तियों का प्रभाव विद्यमान है। अतः "जातिवाचक शब्द से विहित स्त्रीप्रत्ययान्त शब्दों को पुंवद्भाव का निषेध होता है।"

**उदाहरण—विग्रह**—ब्राह्मणी भार्या यस्य सः। **अ० वि०**—ब्राह्मणी + सु, भार्या + सु (समास, विभक्तिलोप, 'स्त्रियाः पुंवत्०' से प्राप्त पुंवद्भाव का निषेध — 'जातेश्च', अतः 'ब्राह्मणी' शब्द में ङीष् की निवृत्ति नहीं हुई, उपसर्जनत्व, ह्रस्व, विभक्तिकार्य) = ब्राह्मणीभार्यः (जिसकी पत्नी ब्राह्मण है)। शूद्रा भार्या यस्य सः (प्रक्रिया पूर्ववत्, पुंवद्भावनिषेध) = शूद्राभार्यः (जिसकी पत्नी शूद्रा है)।

(१५४६) **पद**—संख्यया, अव्ययासन्नादूराधिकसंख्याः, संख्येये। **अनुवृत्ति**—बहुव्रीहिः, विभाषा, सुप्, समास। **विधि (संज्ञा) सूत्र**।

**मूलार्थ**—संख्येयार्थक संख्यावाचक शब्द के साथ अव्ययादि का समास होता है, वह बहुव्रीहिसंज्ञक होता है।

**विमर्श**—विशेष व्यवस्था में बहुव्रीहि समास का विधान किया जा रहा है। 'शेषो बहुव्रीहिः' (२।२।२३) से 'बहुव्रीहिः' की अनुवृत्ति आ रही है। 'समासः', 'विभाषा' तथा 'सुप्' की आधिकारिक अनुवृत्ति विद्यमान है। इस प्रकार सूत्र का तात्पर्य यह होता है — "संख्येय अर्थ में वर्तमान संख्या के साथ अव्यय, आसन्न, अदूर, अधिक तथा संख्या - इन सुबन्तों का विकल्प से बहुव्रीहि समास होता है।"

(१५४७) **पद**—बहुव्रीहौ, संख्येये, डच्, अबहुगणात्। **अनुवृत्ति**—समासान्ताः, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—संख्येय अर्थ में हुए बहुव्रीहि से समासान्त डच् प्रत्यय होता है, बहुशब्दान्त और गणशब्दान्त को छोड़कर। उपदशाः। 'अबहुगणात्' क्यों कहा ? उपबहवः। उपगणाः।

**उपबहवः। उपगणाः। (१५४८) ति विंशतेर्डिति ६।४।१४२। विंशतेर्भस्य टेर्लोपो डिति। आसन्नविंशाः, विंशतेरासन्ना इत्यर्थः। अदूरत्रिंशाः। अधिकचत्वारिंशाः। द्वौ वा त्रयो वा द्वित्राः। (१५४९) दिङ्नामान्यन्तराले २।२।२६। दिशो नामा-**

---

समीपे ये सन्तीति लौकिकविग्रहे दशन् + आम् + उप इत्यलौकिकविग्रहे 'तद्धितार्थोत्तरपद-समाहारे च' इति समासे विभक्तिलोपे 'बहुव्रीहौ संख्येये डजबहुगणात्' इत्यनेन डच् प्रत्ययेऽ-नुबन्धलोपे उपपदस्योपसर्जनत्वे पूर्वनिपाते डित्त्वाट्टिलोपे प्रातिपदिकत्वे जसि अनुबन्धलोपे दीर्घे सस्य रुत्वे विसर्गे 'उपदशाः' इति।

(१५४८) **ति विंशतेर्डिति**। तीति लुप्तषष्ठीकं पदम्। भस्येत्यधिकृतम्। **'अल्लोपोऽनः'** इत्यस्माल्लोप इत्यनुवर्तते। तदाह — **विंशतेर्भस्येति**।

(१५४९) **दिङ्नामानीति**। नामानीत्यनन्तरं सुबन्तानि परस्परमिति शेषः। **प्राग्वदिति**।

---

**विमर्श**—बहुव्रीहि समास से सम्बद्ध समासान्त प्रत्यय का प्रतिपादन किया जा रहा है। प्रकृत सूत्र में 'तद्धिताः', 'समासान्ताः', 'प्रत्ययः' और 'परश्च' की आधिकारिक अनुवृत्ति आ रही है। सप्तम्यन्त 'बहुव्रीहौ' पद पञ्चम्यन्त के अर्थ में प्रयुक्त हुआ है। तदनुसार "बहु तथा गणशब्दान्त बहुव्रीहि से भिन्न संख्येय अर्थ में वर्तमान बहुव्रीहि समास से समासान्त डच् (= अ) प्रत्यय होता है।"

**उदाहरण**—**लौ० वि०**—दशानां समीपे ये सन्ति। **अ० वि०**—दशन् + आम्, उप + जस् (संख्यावाची 'दशन्' के साथ 'उप' अव्यय का समास — 'संख्ययाव्यया०', विभक्तिलोप, समासान्त डच् = 'अ' प्रत्यय) — उपदशन् अ (टि = अन् का लोप – 'टेः', पुनः विभक्ति जस् = अस्, दीर्घ, स् = र् = :) = उपदशा (दश के लगभग)।

**प्रत्युदाहरण**—प्रकृत सूत्र 'अबहुगणात्' का निवेश होने से — बहूनां समीपे ये सन्ति = 'उपबहवः' (= लगभग बहुत) में डच् प्रत्यय नहीं हुआ। क्योंकि यहाँ बहु शब्द का उप के साथ बहुव्रीहि समास हुआ है। इसी प्रकार 'उपगणाः' में भी डच् नहीं होता।

(१५४८) **पद**—ति, विंशतेः, डिति। **अनुवृत्ति**—लोपः, भस्य, अङ्गस्य। **विधिसूत्र**।

**मूलार्थ**—भसंज्ञक विंशति शब्द के ति का लोप होता है, डित् प्रत्यय के परे रहते। आसन्न-विंशाः। अदूरत्रिंशाः। अधिकचत्वारिंशाः। द्वित्राः।

**विमर्श**—सूत्रार्थ की पूर्ति के लिए 'अल्लोपोऽनः' (६।४।१३४) से 'लोपः' की अनुवृत्ति आती है। 'भस्य' तथा 'अङ्गस्य' की आधिकारिक अनुवृत्ति विद्यमान है। तदनुसार — "भसंज्ञक विंशति अङ्ग के 'ति' का डित् (डकार-इत्संज्ञक) प्रत्यय परे रहते लोप होता है।"

**उदाहरण**—**विग्रह**—विंशतेः आसन्नाः। **अ० वि०**—विंशति + जस्, आसन्न + जस् (समास— 'संख्ययाव्यया०', समासान्त डच् = 'अ', 'ति' का लोप — 'ति विंशतेर्डिति') — आसन्नविंश अ, (दीर्घ का बाधकर पररूप, विभक्तिकार्य प्रथमा बहुवचन) = आसन्नविंशाः (उन्नीस या इक्कीस)। त्रिंशतः अदूराः। **अ० वि०**—त्रिंशत् + जस्, अदूर + जस् (प्रक्रिया पूर्ववत् डच्, टिलोप आदि) = अदूरत्रिंशाः (उन्तीस या इकत्तीस)। चत्वारिंशतः अधिकाः। **अ० वि०**—चत्वारिंशत् + जस्, अधिक + जस् (पूर्ववत् समासादि) = अधिकचत्वारिंशाः (इकतालीस)। द्वौ वा त्रयः वा। **अ० वि०**—द्वि + औ, त्रि + जस् (समासादि कार्य उक्तवत्) = द्वित्राः (दो या तीन)।

(१५४९) **पद**—दिङ्नामानि, अन्तराले। **अनुवृत्ति**—बहुव्रीहिः, विभाषा, सुप्, समासः। **विधि (संज्ञा) सूत्र**।

न्यन्तराले वाच्ये प्राग्वत्। दक्षिणस्याः पूर्वस्याश्च दिशो यदन्तरालं दक्षिणपूर्वा। **(१५५०) तत्र तेनेदमिति सरूपे २।२।२७।** सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे। **(१५५१) इच् कर्मव्यतिहारे ५।४।१२७। (१५५२) अन्येषामपि दृश्यते ६।३।१३७।** दीर्घः। केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि। दण्डैर्दण्डैश्च प्रहृत्येदं युद्धं

---

समस्यन्ते स च बहुव्रीहिरित्यर्थः।

(१५५०) **तत्रेति**। तत्र इत्यनेन सप्तम्यन्ते पदे विवक्षिते। ग्रहणविषये इति प्रथमाद्वि-वचनान्तं तद्विशेषणमध्याहार्यम्। सरूपे इति पदविशेषणम्। इदमित्यर्थनिर्देशः। युद्धं प्रवृत्तमिति तद्विशेष्यमध्याहार्यम्, कर्मव्यतिहारे द्योत्ये इत्यप्यध्याहार्यम्। तदाह — **सप्तम्यन्त इत्यादिना**।

(१५५२) **अन्येषामपीति**। 'ढ्रलोपे०' इत्यतः 'दीर्घः' इत्यनुवर्तते इति भावः। **केशा-**

---

**मूलार्थ**—अन्तराल (= मध्य) विवक्षित होने पर दिग्वाचक शब्दों का समास होता है। दक्षिणपूर्वा।

**विमर्श**—प्रकरणवश उक्त 'बहुव्रीहिः', 'विभाषा' तथा 'सुप्' और 'समासः' की अनुवृत्ति आती है। तदनुसार — ''दिशा के नामवाची सुबन्तों का अन्तराल (बीच की दिशा) वाच्य हो तो परस्पर विकल्प से समास होता है और वह बहुव्रीहिसंज्ञक होता है।''

**उदाहरण—विग्रह**—दक्षिणस्याः पूर्वस्याश्च अन्तरालम्। **अ० वि०**—दक्षिणा + ङस्, पूर्वा + ङस् (प्रकृत सूत्र से बहुव्रीहि समास, विभक्तिलोप, दक्षिणा को पुंवद्भाव — 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः', विभक्तिकार्य) = दक्षिणपूर्वा (दक्षिणपूर्व का कोना)।

(१५५०) **पद**—तत्र, तेन, इदम्, इति सरूपे। **अनुवृत्ति**—बहुव्रीहिः, विभाषा, सुप्, समासः। **विधि (संज्ञा) सूत्र**।

**मूलार्थ**—सप्तम्यन्त और तृतीयान्त ग्रहण विषय प्रहरणविषयरूप उपपदों का 'इदं युद्धं प्रवृत्तम्' अर्थ में समास होता है, कर्मव्यतिहार से।

**विमर्श**—विशेष प्रकार के बहुव्रीहि समास का विधान प्रकृत सूत्र से किया जा रहा है। पूर्वसूत्रवत् सभी प्राकरणिक तथा आधिकारिक अनुवृत्तियाँ आ रही हैं। सूत्रस्थ 'तत्र' पद विवक्षित सप्तम्यन्त दोनों का बोधक है। इसी प्रकार 'तेन' पद भी विवक्षित तृतीयान्त का बोधक है। 'सरूपे' पद प्रथमा द्विवचनान्त है तथा पद का विशेषण है। अध्याहारवश 'ग्रहणविषये' तथा 'प्रहरणविषये' दो पर अर्थ के स्पष्टीकरण के लिए क्रमशः 'तत्र' और 'तेन' समस्यमान पदों के साथ अन्वित होते हैं। 'इदम्' अर्थनिर्देश हेतु प्रयुक्त हुआ है। इस प्रकार – ''ग्रहणविषय (पकड़ना) अर्थ सूचित करने वाले सप्तम्यन्त समान रूप पदों का प्रहरण विषय (प्रहार करना) अर्थ के बोधक तृतीयान्त समानरूप पदों का (कर्मव्यतिहारे) 'युद्ध प्रवृत्त हुआ है' इस अर्थ में क्रमशः परस्पर ग्रहण एवं परस्पर प्रहरण द्योत्य होने पर विकल्प से बहुव्रीहि समास होता है।''

(१५५१) **पद**—इच्, कर्मव्यतिहारे। **अनुवृत्ति**—बहुव्रीहौ, समासान्ताः। **विधिसूत्र**।

**मूलार्थ**—कर्मव्यतिहार में बहुव्रीहि से समासान्त इच् प्रत्यय होता है।

**विमर्श**—उक्त अनुवृत्तियों का प्रभाव पूर्ववत् विद्यमान है। तदनुसार — ''परस्पर ग्रहण और परस्पर प्रहरण अर्थ में बहुव्रीहि से समासान्त इच् (= इ) प्रत्यय होता है।''

(१५५२) **पद**—अन्येषाम्, अपि, दृश्यते। **अनुवृत्ति**—दीर्घः पूर्वस्य। **विधिसूत्र**।

**मूलार्थ**—कर्मव्यतिहार बहुव्रीहि में इच् प्रत्यय के परे रहते पूर्वपद को दीर्घ होता है।

**प्रवृत्तं दण्डादण्डि। मुष्टीमुष्टि। (१५५३) तेन सहेति तुल्ययोगे २।२।२८। तुल्ययोगे वर्तमानं सहेत्यन्तं तृतीयान्तेन प्राग्वत्। (१५५४) वोपसर्जनस्य ६।३।८२। बहुव्रीहेरवयवस्य सहस्य सः स्याद्वा। पुत्रेण सह सपुत्रः सहपुत्रो वाऽऽगतः।**

---

**केशि** — केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तमिति लौकिकविग्रहे 'तत्र तेनेदमिति सरूपे' इत्यनेन समासे सुपो लुकि 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घे 'इच् कर्मव्यतिहारे' इत्यनेन इचि अनुबन्धलोपे 'केशाकेश इ' इति जाते भसंज्ञायां 'यस्येति चे'त्यनेन अकारलोपे प्रातिपदिकत्वे सौ 'तिष्ठद्गुप्रभृतीनि चे'त्यनेनाव्ययसंज्ञायाम् 'अव्ययादाप्सुपः' इत्यनेन सुपो लुकि 'केशाकेशि' इति सिद्धम्।

(१५५३) **तेनेति**। युगपत्कालिकक्रियायोगे वर्तमानं सहेत्यन्तं तृतीयान्तेन समस्यत इत्यर्थः।

(१५५४) **वोपसर्जनस्येति**। 'उत्तरपदे' इत्यधिकृतम्। 'सहस्य सः संज्ञायाम्' इत्यतः 'सहस्य सः' इत्यनुवर्तते। उपसर्जनमस्यास्तीत्युपसर्जनः। उपसर्जनवतः समासस्येत्यर्थस्तदाह — **बहुव्रीहेरवयवस्येति**।

---

**विमर्श**—विधेयांश की स्पष्टता हेतु 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (६।३।१११) से 'पूर्वस्य' तथा 'दीर्घः' की अनुवृत्ति आती है। तदनुसार — "इच् परे रहते कर्मव्यतिहार में बहुव्रीहि के पूर्वपद को दीर्घ हो जाता है।"

**उदाहरण—लौकिक वि०**—केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम्। **अ० वि०**—केश + सुप्, केश + सुप् (बहुव्रीहिसमास — 'तत्र तेनेदमिति सरूपे', विभक्तिलोप, इच् = 'इ' — 'इच् कर्मव्यतिहारे', अ = आ — दीर्घ — 'अन्येषामपि दृश्यते') — केशाकेश + इ ('अ' का लोप — 'यस्येति च', पुनः विभक्ति सु, 'तिष्ठद्गुप्रभृतीनि च' से अव्ययीभाव होने के कारण विभक्तिलोप — 'अव्ययादाप्सुपः') = केशाकेशि (एक दूसरे के बालों को पकड़कर प्रारम्भ हुआ युद्ध)। दण्डैर्दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तम्। **अ० वि०**—दण्ड + भिस्, दण्ड + भिस् (प्रक्रिया पूर्ववत्) = दण्डादण्डि (डण्डे का प्रहार कर लड़ा जाने वाला युद्ध)। मुष्टिभिः मुष्टिभिः प्रहृत्य इदं युद्धं प्रवृत्तम्। **अ० वि०**—मुष्टि + भिस्, मुष्टि + भिस् (प्रक्रिया उक्तवत्) = मुष्टीमुष्टि (घूँसों का प्रहार कर होने वाला युद्ध)।

(१५५३) **पद**—तेन, सहेति, तुल्ययोगे। **अनुवृत्ति**—बहुव्रीहिः, विभाषा, सुप्, समासः। **विधिसूत्र**।

**मूलार्थ**—तुल्ययोग में वर्तमान सह शब्द का तृतीयान्त के साथ विकल्प से समास होता है।

**विमर्श**—पुनः बहुव्रीहिविधायक सूत्र का उल्लेख किया जा रहा है। अतः (१५५०) पूर्वसूत्रवत् 'बहुव्रीहिः' तथा 'विभाषा' पदों की अनुवृत्ति आती है। अन्य आधिकारिक अनुवृत्तियों का प्रभाव विद्यमान हैं। तदनुसार "तुल्ययोग = एक साथ होने वाली दो क्रियाओं को एकत्रित करने वाले 'सह' का तृतीयान्त प्रातिपदिक के साथ विकल्प से बहुव्रीहि समास होता है।"

(१५५४) **पद**—वा, उपसर्जनस्य। **अनुवृत्ति**—सहस्य सः। **विधिसूत्र**।

**मूलार्थ**—बहुव्रीहि के अवयव 'सह' को 'स' आदेश विकल्प से होता है। सपुत्रः, सहपुत्रो वा आगतः।

**विमर्श**—सूत्र में स्थानी और आदेशवाचक पदों का अभाव है। अतः 'सहस्य सः संज्ञायाम्' सूत्र से 'सहस्य' व 'सः' की अनुवृत्ति आती है। सूत्रस्थ उपसर्जन पद 'बहुव्रीहि' अर्थ का द्योतक

**(१५५५) प्रकृत्याशिषि ६।३।८३** । सहशब्दः । स्वस्ति राज्ञे सहपुत्राय, सहामात्याय । * अगोवत्सहलेष्विति वक्तव्यम् * । सवत्साय । सहलाय । **(१५५६) बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ५।४।११३** । स्वाङ्गवाचि सक्थ्यन्ताद्बहुव्रीहेः षच् । दीर्घसक्थः । जलजाक्षी । स्वाङ्गात्किम् ? दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः ।

---

(१५५५) **प्रकृत्याशिषि** । प्रकृत्या = स्वभावेन स्थितः स्यादित्यर्थः ।

(१५५६) **बहुव्रीहाविति** । **जलजाक्षीति** । जलजे इव अक्षिणी यस्या इति लौकिकविग्रहे जलज+औ, अक्षिन्+औ इत्यलौकिकविग्रहे बहुव्रीहिसमासे विभक्तिलोपे जलजपदस्योपसर्जनत्वे पूर्वनिपाते 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इत्यनेन षचि अनुबन्धलोपे, भत्वात् 'नस्तद्धिते' इति टिलोपे 'जलज+अक्ष+अ' इति जाते, दीर्घे स्त्रीत्वविवक्षायां ङीषि 'यस्येति चे'त्यकारलोपे प्रातिपदिकत्वे सौ हल्ङ्यादिना सुलोपे 'जलजाक्षी' इति ।

---

है । पूर्ववत् 'विभाषा' की अनुवृत्ति भी आ रही है । तदनुसार ''बहुव्रीहि समास के अवयव 'सह' शब्द के स्थान पर 'सः' आदेश विकल्प से होता है ।''

**उदाहरण—विग्रह**—पुत्रेण सह । **अ० वि०**—पुत्र + टा, सह (समास — 'तेन सहेति तुल्ययोगे', उपसर्जनसंज्ञा, सह का पूर्वप्रयोग, विभक्तिलोप, सह = स — 'वोपसर्जनस्य', विभक्तिकार्य) = सपुत्रः । सह के स्थान पर स आदेश न होने पर — सहपुत्रः आगतः (पुत्र के साथ आया) ।

(१५५५) **पद**—प्रकृत्या, आशिषि । **अनुवृत्ति**—सहस्य । **विधिसूत्र** ।

**मूलार्थ**—आशीर्वाद अर्थ में सह शब्द प्रकृतिवत् रहता है अर्थात् स आदेश नहीं होता । स्वस्ति राज्ञे सहपुत्राय, सहामात्याय । **वा०**—गो, वत्स तथा हल् शब्दों से भिन्न में उक्त कार्य कहा जाय । सगवे । सवत्साय । सहलाय ।

**विमर्श**—सह के स्थान पर स आदेश के अपवाद का प्रतिपादन किया जा रहा है — स्थानी और आदेशवाचक पदों की पूर्ववत् अनुवृत्ति अपेक्षित है । तदनुसार — ''आशीर्वाद अर्थ में सह शब्द को प्रकृतिभाव होता है ।''

**उदाहरण**—स्वस्ति राज्ञे सहपुत्राय सहामात्याय (पुत्र तथा मन्त्री के साथ राजा का कल्याण हो) — यहाँ समास होने पर प्रकृत सूत्र द्वारा निषेध (प्रकृतिभाव) हो जाने से 'सह' के स्थान पर 'स' आदेश नहीं हुआ ।

**वा०**—गो, वत्स एवं हल के परे आशीर्वाद अर्थ में सह को प्रकृतिभाव नहीं होता ।

**उदाहरण**—सगवे (गाय के साथ) । सवत्साय (बछड़े के साथ) । सहलाय (हल के साथ) । उक्त तीनों प्रयोगों में प्रकृतिभाव न होने से 'स' आदेश हुआ ।

(१५५६) **पद**—बहुव्रीहौ, सक्थ्यक्ष्णोः, स्वाङ्गात्, षच् । **अनुवृत्ति**—समासान्ताः । **विधिसूत्र** ।

**मूलार्थ**—स्वाङ्गवाचक सक्थि और अक्षि शब्दान्त बहुव्रीहि से षच् प्रत्यय होता है । दीर्घसक्थः । जलजाक्षी । स्वाङ्गात् क्यों कहा ? वेणुयष्टिः । यहाँ 'अक्ष्णोऽदर्शनात्' से अच् प्रत्यय हुआ है ।

**विमर्श**—समासान्त प्रत्यय का विधान किया जा रहा है । 'समासान्ताः' आदि की आधिकारिक अनुवृत्ति आ रही है । सूत्रस्थ 'सक्थ्यक्ष्णोः' में पञ्चमी के अर्थ में षष्ठी विभक्ति का प्रयोग हुआ है । अतः ''स्वाङ्गवाची सक्थ्यन्त और अक्ष्यन्त बहुव्रीहि से समासान्त षच् (= अ) प्रत्यय होता है ।''

**उदाहरण—विग्रह**—दीर्घे सक्थिनी यस्य सः । **अ० वि०**—दीर्घ + औ, सक्थि + औ

समाक्षराणां किम् ? ग्रीष्मवसन्तौ। लघ्वक्षरं पूर्वम्। कुशकाशम्। * अभ्यर्हितं च *। तापसपर्वतौ। * वर्णानामानुपूर्व्येण *। ब्राह्मणक्षत्रियविट्शूद्राः। * भ्रातुर्ज्यायसः *। युधिष्ठिरार्जुनौ। **(१५९५) द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् २।४।२**। एषां द्वन्द्व एकवत्। पाणिपादम्। मार्दङ्गिकवैणविकम्। रथिकाश्वारोहम्। **(१५९६) अध्य-**

---

(१५९५) **द्वन्द्वश्चेति**। एषां=प्राण्यङ्गतूर्याङ्गसेनाङ्गानां द्वन्द्वः एकवत्स्यादित्यर्थः। समाहारस्यैकत्वेनैव सिद्धे प्राण्यङ्गानां समाहारद्वन्द्व एव स्यादिति नियमार्थमिदं वचनम्। **पाणिपादम्**। 'पाणी च पादौ च एषां समाहारः' इति विग्रहे द्वन्द्वसमासे विभक्तिलोपे घिसंज्ञकस्य पूर्वप्रयोगे 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्येकवद्भावे क्लीबत्वे सौ सोरमि पूर्वरूपे 'पाणिपादमि'ति।

---

है। **उदाहरण—विग्रह**—हेमन्तश्च शिशिरश्च वसन्तश्च। **अलौ० वि०**—हेमन्त + सु, शिशिर + सु, वसन्त + सु (समास — 'चार्थे द्वन्द्वः', विभक्तिलोप, ऋतुओं के पौर्वापर्य के अनुसार पौर्वापर्य, विभक्तिकार्य) = हेमन्तशिशिरवसन्ताः। **विग्रह**—कृत्तिका च रोहिणी च (द्वन्द्व समास, विभक्तिकार्य, नक्षत्रों के क्रमानुसार पौर्वापर्य, वि० कार्य) = कृत्तिकारोहिण्यौ।

वार्तिक में 'समाक्षराणाम्' (समान अक्षर युक्त) शब्दों तक ही उक्त नियम सीमित रहने से ग्रीष्मश्च वसन्तश्च = 'ग्रीष्मवसन्तौ' में उक्त नियम लागू नहीं हुआ; अपितु — 'अल्पाच्तरम्' के अनुसार न्यून स्वर वर्णयुक्त ग्रीष्म का पूर्वप्रयोग हुआ।

**२. वा०**—द्वन्द्व समास में दीर्घ स्वर अक्षर युक्त पद की अपेक्षा लघु स्वर अक्षर वाले पद का पूर्वप्रयोग होता है। **उदाहरण—विग्रह**—कुशाश्च काशाश्च, तेषां समाहारः (समास, विभक्तिलोप, लघु अच् होने से कुश का पूर्वप्रयोग, समाहार में नपुंसकलिङ्ग एकवचन में विभक्तिकार्य) = कुशकाशम् (कुश और काश)।

**३. वा०**—अभ्यर्हित (पूज्य) का द्वन्द्व में पूर्वप्रयोग होता है। **उदाहरण—विग्रह**—तापसश्च, पर्वतश्च (समास, पूज्य होने के कारण तापस का पूर्वप्रयोग, प्रक्रिया पूर्ववत्) = तापसपर्वतौ (तपस्वी और पर्वत)।

**४. वा०**—ब्राह्मण आदि वर्णों का द्वन्द्व में आनुपूर्वी (यथाक्रम) से पूर्वप्रयोग होता है। **उदाहरण— विग्रह**—ब्राह्मणश्च, क्षत्रियश्च, विट् च, शूद्रश्च (समासप्रक्रिया पूर्ववत्, वर्णवाचक पदों का क्रम से पूर्वप्रयोग) = ब्राह्मणक्षत्रियविट्शूद्राः।

**५. वा०**—भ्राताओं के मध्य में ज्येष्ठ का पूर्वप्रयोग होता है। **उदाहरण—विग्रह**—युधिष्ठिरश्च अर्जुनश्च (समास — द्वन्द्व, ज्येष्ठभ्रातृवाचक युधिष्ठिर का पूर्वप्रयोग, विभक्तिकार्य) = युधिष्ठिरार्जुनौ (युधिष्ठिर और अर्जुन)।

(१५९५) **पद**—द्वन्द्वः, च, प्राणितूर्यसेनाङ्गानाम्। **अनुवृत्ति**—एकवचनम्। **अतिदेशसूत्र**।

**मूलार्थ**—प्राण्यङ्ग, तूर्याङ्ग और सेनाङ्गवाची द्वन्द्व एकवत् होता है। पाणिपादम्। रथिकाश्वारोहम्।

**विमर्श**—समाहार द्वन्द्व की विशेषताओं का उल्लेख किया जा रहा है। 'द्विगुरेकवचनम्' (२।४।१) से 'एकवचनम्' की अनुवृत्ति आ रही है। सूत्रस्थ 'अङ्ग' पद का अन्वय प्राणि, तूर्य तथा सेना — तीनों शब्दों के साथ पृथक्-पृथक् होता है। अतः "प्राणी के अङ्ग, तूर्य (वाद्य-विशेष) के अङ्ग तथा सेना के अङ्गों के द्वन्द्व समास को भी एकवद्भाव हो जाता है।"

**उदाहरण—विग्रह**—पाणी च पादौ च, तयोः समाहारः। **अलौ० वि०**—पाणि + औ,

**यनतोऽविप्रकृष्टाख्यानाम् २।४।५ ।** अध्ययनेन प्रत्यासन्ना आख्या येषां तेषां द्वन्द्व एकवत्। पदकक्रमकम्। **(१५९७) जातिरप्राणिनाम् २।४।६ ।** प्राणिवर्ज्य-जातिवाचिनां द्वन्द्व एकवत्। धानाशष्कुलि। प्राणिनां तु – विट्शूद्राः। **(१५९८) विशिष्टलिङ्गो नदीदेशोऽग्रामाः २।४।७ ।** ग्रामवर्जनदीदेशवाचिनां भिन्नलिङ्गानां द्वन्द्व

---

(१५९६) **पदकक्रमकमिति।** पदान्यधीयते इति पदकाः। क्रमान् अधीयत इति क्रमकाः। पदकानां क्रमकाणाञ्च समाहार इति विग्रहः।

(१५९७) **जातिरप्राणिनामिति।** जातिरित्यत्र षष्ठीबहुवचनस्थाने व्यत्ययेन प्रथमा। जातिवाचिनामित्यर्थः। **धानाशष्कुलि** – धानाश्च शष्कुल्यश्च तासां समाहार इति विग्रहः। जातिवाचित्वादेकवत्त्वम्। नपुंसकत्वात् ह्रस्व इति भावः।

(१५९८) **विशिष्टलिङ्ग इति।** ग्रामवाचकभिन्नाः भिन्नलिङ्गकाः ये नदीवाचिनः, ये देशवाचिनश्च शब्दाः तेषां द्वन्द्व एकवत्स्यादिति सूत्रार्थः।

---

पाद + औ (द्वन्द्व समास, विभक्तिलोप, पाणि का पूर्वनिपात — 'द्वन्द्वे घि', एकवद्भाव — 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्', नपुंसकलिङ्ग प्रथमा एकवचन विभक्तिकार्य) = पाणिपादम् (हाथ और पैर)। **विग्रह**—मार्दङ्गिकाश्च वैणविकाश्च, तेषां समाहारः (द्वन्द्वसमास, एकवद्भाव आदि) = मार्दङ्गिकवैणविकम् (मृदङ्ग बजाने वाला और वेणु बजाने वाला)। **विग्रह**—रथिकाश्च अश्वारोहाश्च, तेषां समाहारः (द्वन्द्वसमास, रथिक का पूर्वनिपात, प्रकृत सूत्र से एकवद्भाव, विभक्तिकार्य) = रथिकाश्वारोहम् (रथसैनिक तथा अश्वारोही सैनिक)।

(१५९६) **पद**—अध्ययनतः, अविप्रकृष्टाख्यानाम्। **अनुवृत्ति**—द्वन्द्वः, एकवचनम्। **अतिदेशसूत्र**।

**मूलार्थ**—जिनकी संज्ञा अध्ययन से निकट हो उनका द्वन्द्व एकवत् होता है। पदकक्रमकम्।

**विमर्श**—एकवद्भाव का प्रकरण चल रहा है। 'विप्रकृष्ट' पद दूरार्थक है। अतः 'अविप्रकृष्ट' का अर्थ सन्निकट है। अतः सूत्रार्थ इस प्रकार होगा — "अध्ययन से जिनकी आख्या (संज्ञा) निकट हो; तद्वाची शब्दों के द्वन्द्व समास का प्रयोग एकवचन में होता है।"

**उदाहरण—विग्रह**—पदकानां क्रमकाणां च समाहारः (समास, विभक्तिलोप, एकवद्भाव — 'अध्ययनतोऽविप्रकृष्टानाम्', समाहार में नपुंसकलिङ्ग प्रथमा एकवचन में विभक्तिकार्य) = पदकक्रमकम् (पदपाठ और क्रमपाठ करने वाले)।

(१५९७) **पद**—जातिः, अप्राणिनाम्। **अनुवृत्ति**—द्वन्द्वः, एकवचनम्। **अतिदेशसूत्र**।

**मूलार्थ**—प्राणिभिन्न जातिवाचक शब्दों का द्वन्द्व एकवत् होता है। धानाशष्कुलि। विट्शूद्राः।

**विमर्श**—प्रथमान्त 'जातिः' पद षष्ठ्यन्त अर्थ का बोधक है। पूर्वसूत्र (१५९५) से 'द्वन्द्वः' तथा 'द्विगुरेकवचनम्' (२।४।१) से 'एकवचनम्' की अनुवृत्ति आती है। अतः "प्राणिभिन्न जातिवाचक शब्दों का द्वन्द्व समास में एकवद्भाव किया जाता है।"

**उदाहरण—विग्रह**—धानाश्च, शष्कुल्यश्च, तासां समाहारः (समास, एकवद्भाव — 'जातिर-प्राणिनाम्', नपुंसकलिङ्ग, ह्रस्व आदि) = धानाशष्कुलि (भुने हुए धान और पूड़ी)।

**प्रत्युदाहरण**—सूत्र में प्राणिभिन्नवाचक जाति शब्दों की अपेक्षा होने के कारण 'विशः च शूद्राः च = विट्शूद्राः' यहाँ इतरेतरद्वन्द्व में एकवद्भाव नहीं हुआ। क्योंकि यहाँ वैश्य और शूद्र शब्द प्राणि-भिन्न नहीं हैं।

(१५९८) **पद**—विशिष्टलिङ्गः, नदीदेशः, अग्रामाः। **अनुवृत्ति**—द्वन्द्वः, एकवचनम्। **अतिदेशसूत्र**।

**एकवत्। उद्ध्यश्च इरावती च उद्ध्येरावति। गङ्गाशोणम्। कुरवश्च कुरुक्षेत्रं च कुरु-कुरुक्षेत्रम्। (१५९९) क्षुद्रजन्तवः २।४।८। एषां द्वन्द्व एकवत्। यूकालिक्षम्। आनकुलात्क्षुद्रजन्तवः। (१६००) येषां च विरोधः शाश्वतिकः २।४।९। प्राग्वत्। अहिनकुलम्। गोव्याघ्रम्। काकोलूकमित्यादौ परत्वाद्विभाषा वृक्षेति प्राप्तं**

---

(१५९९) **क्षुद्रजन्तव इति। यूकालिक्षमिति।** यूकाश्च लिक्षाश्चेति विग्रहः। केश-बहुले शिरःप्रदेशे स्वेदजाः जन्तुविशेषाः यूकाः लिक्षाश्च। एकवत्त्वं नपुंसकह्रस्वं च।

(१६००) **येषां चेति।** शेषपूरणेन सूत्रं व्याचष्टे – **प्राग्वदिति।** समाहारद्वन्द्वः एकवद्भवतीत्यर्थः। **अहिनकुलम्** — अहयो नकुलश्चेति विग्रहः। अनयोः स्वाभाविकः विरोधः प्रसिद्धः। विरोधः = वैरम्, न तु सहानवस्थितिः।

---

**मूलार्थ**—ग्रामवर्जभिन्न लिङ्ग वाले नदी और देशवाचक शब्दों का द्वन्द्व एकवत् होता है। उद्ध्येरावति। गङ्गाशोणम्। कुरुकुरुक्षेत्रम्।

**विमर्श**—पूर्ववत् उल्लिखित अनुवृत्तियों का प्रभाव विद्यमान है। तदनुसार — ''ग्रामवाची शब्दों को छोड़कर विभिन्न लिङ्ग वाले नदीवाचक तथा देशवाचक शब्दों का द्वन्द्व समास होने पर एक-वद्भाव होता है।''

**उदाहरण—विग्रह**—उद्ध्यश्च इरावती च, तयोः समाहारः (समासादि कार्य पूर्ववत्, यहाँ उद्ध्य शब्द पुल्लिङ्ग तथा इरावती शब्द स्त्रीलिङ्ग है। अतः दोनों शब्द भिन्न लिङ्ग एवं नदीवाचक हैं। प्रकृत सूत्र द्वारा एकवद्भाव, नपुंसकलिङ्ग में ह्रस्व) = उद्ध्येरावति (उद्ध्य नद तथा इरावती नदी)। **विग्रह**—गङ्गा च शोणश्च (समासादि कार्य, एकवद्भाव, विभक्तिकार्य) = गङ्गाशोणम् (गङ्गा और सोन नदी)। **विग्रह**—कुरवश्च कुरुक्षेत्रं च (देश तथा नगरवाची शब्दों का द्वन्द्वसमास, एकवद्भाव, विभक्तिकार्य) = कुरुकुरुक्षेत्रम् (कुरुदेश तथा कुरुक्षेत्र)।

(१५९९) **पद**—क्षुद्रजन्तवः, **अनुवृत्ति**—द्वन्द्वः, एकवचनम्। **अतिदेशसूत्र**।

**मूलार्थ**—क्षुद्र जन्तुवाचक शब्दों का द्वन्द्व एकवत् होता है। यूकालिक्षम्। नेवले से लेकर छोटे सभी जीव-जन्तुओं को 'क्षुद्रजन्तु' कहा जाता है।

**विमर्श**—एकवद्भाव का ही प्रकरण चल रहा है। अतः उक्त अनुवृत्तियों का प्रभाव पूर्ववत् विद्यमान है। अतः ''क्षुद्र जन्तुवाचक शब्दों का द्वन्द्व समास होने पर एकवद्भाव हो जाता है।''

**उदाहरण—विग्रह**—यूकाश्च लिक्षाश्च (द्वन्द्व समास, विभक्तिलोप, क्षुद्रजन्तुओं यूक और 'लिक्ष' का समाहार द्वन्द्व होने से एकवद्भाव — 'क्षुद्रजन्तवः', विभक्तिकार्य) = यूकालिक्षम् (जूँ और लीख)।

(१६००) **पद**—येषां च, विरोधः, शाश्वतिकः। **अनुवृत्ति**—द्वन्द्वः, एकवचनम्। **अतिदेशसूत्र**।

**मूलार्थ**—जिनका सहज विरोध है, तद्वाची शब्दों का द्वन्द्व एकवत् होता है। अहिनकुलम्। गोव्याघ्रम्। काकोलूकम्। अन्तिम दो उदाहरणों में इस सूत्र के परवर्ती होने के कारण 'विभाषा वृक्षमृग०' सूत्र से प्राप्त वैकल्पिक एकवद्भाव का 'च' से बाध हो जाता है।

**विमर्श**—उल्लिखित अनुवृत्तियों का प्रभाव यथावत् विद्यमान है। तदनुसार — ''जिन जीवों का स्वाभाविक विरोध होता है, उनका समाहार द्वन्द्व भी एकवत् होता है।''

**उदाहरण—विग्रह**—अहयश्च नकुलाश्च। **अलौ० वि०**—अहि + जस्, नकुल + जस् (समासादि कार्य पूर्ववत्, एकवद्भाव — **'येषां च विरोधः शाश्वतिकः'**, विभक्तिकार्य) = **अहिनकुलम्**

चकारेण बाध्यते। (१६०१) शूद्राणामनिरवसितानाम् २।४।१०। अबहिष्कृतानां शूद्राणां द्वन्द्वः प्राग्वत्। तक्षायस्कारम्। पात्राद्बहिष्कृतानां तु चण्डालमृतपाः। (१६०२) गवाश्वप्रभृतीनि च २।४।११। यथोच्चारितानि तथैव साधूनि। गवाश्वम्। दासीदासमित्यादि। (१६०३) विभाषा वृक्षमृगतृणधान्यव्यञ्जनप-

---

(१६०१) **शूद्राणामनिरवसितानाम्**। अनिरवसितानाम् = अबहिष्कृतानामिति। **तक्षायस्कारमिति**। तक्षाणश्च अयस्कारश्चेति विग्रहः।

(१६०२) **गवाश्वप्रभृतीनि च**। गवाश्वप्रभृतीनि यथा गणे पठितानि तथैव साधूनीत्यर्थः।

---

(सर्प और नेवला)। काकाश्च उलूकाश्च (समासादि उक्तवत्) = काकोलूकम् (कौआ और उल्लू)। **विग्रह**—गावश्च व्याघ्राश्च (गाय तथा शेर) = गोव्याघ्रम्।

**विशेष**—'गोव्याघ्रम्' तथा 'काकोलूकम्' में 'विभाषा वृक्षमृगतृणधान्य०' (१६०३) सूत्र से परत्वात् वैकल्पिक एकवद्भाव स्वतः प्राप्त था; परन्तु प्रकत सूत्रस्थ चकार से उसका बाध होकर नित्य एकवद्भाव होता है।

(१६०१) **पद**—शूद्राणाम्, अनिरवसितानाम्। **अनुवृत्ति**—द्वन्द्वः, एकवचनम्। **अतिदेशसूत्र**।

**मूलार्थ**—अबहिष्कृत शूद्रों का द्वन्द्व एकवत् होता है। तक्षायस्कारम्। पात्रों की अग्राह्यता से निरवसित (= बहिष्कृत) शूद्रवाची शब्दों का द्वन्द्व समास होने पर 'चण्डालमृतपाः' में एकवद्भाव नहीं होता।

**विमर्श**—सूत्रस्थ अनिरवसित शब्द का अर्थ 'अबहिष्कृत' है। बहिष्कृत होने में स्मृतिप्रतिपादित नियमों की ओर ध्यान दिलाया गया है। त्रैवर्णिक (ब्राह्मण, क्षत्रिय तथा वैश्य) से भिन्न वर्ण के लिए शूद्र शब्द का प्रयोग किया गया है। उसमें भी कुछ ग्राह्य और कुछ अग्राह्य बताये गये हैं। जिनके उच्छिष्ट (जूठे) पात्र क्षारमिश्रित जल से माँजने पर भी शुद्ध न माने जायें, वे निरवसनीय हैं। इसके विपरीत क्षार आदि से माँजने पर जिनके पात्र शुद्ध माने जायें, वे अनिरवसनीय कहलाते हैं। निरवसनीय में चाण्डाल आदि की गणना की जाती है।

**उदाहरण—विग्रह**—तक्षाणश्च अयस्काराश्च तेषां समाहारः। **अलौ० वि०**—तक्षन् + जस्, अयस्कार + जस् (द्वन्द्व समास, विभक्तिलोप, न् का लोप, दीर्घ, प्रकृत सूत्र से एकवद्भाव, पुनः विभक्ति सु, नपुंसकलिङ्ग में सु = अम्, पूर्वरूप) = तक्षायस्कारम् (बढ़ई तथा लोहार)।

**प्रत्युदाहरण**—सूत्र में 'अनिरवसित' का निवेश होने से निरवसित शूद्रों के द्वन्द्व समास में एकवद्भाव नहीं होता। चण्डालाश्च मृतपाश्च = चण्डालमृतपाः (चाण्डाल और डोम) में एकवचन नहीं हुआ।

(१६०२) **पद**—गवाश्वप्रभृतीनि, च। **अनुवृत्ति**—द्वन्द्वः, एकवचनम्। **अतिदेशसूत्र**।

**मूलार्थ**—गवाश्व आदि जैसा गणपठित है वैसा ही साधु माना जाय। गवाश्वम्। दासीदासम्।

**विमर्श**—गवाश्व आदि गण में जैसा गवाश्व आदि का पाठ है वैसे ही समीचीन समझे जायें। पूर्वोक्त पदों की अनुवृत्ति आ रही है। अतः "गवाश्व आदि पदों की एकवद्भाव युक्त साधुता मानी जाती है।"

**उदाहरण—विग्रह**—गावश्च अश्वाश्च। **अलौ० वि०**—गो + जस्, अश्व + जस् (द्वन्द्व समास, विभक्तिलोप, ओ = अवङ् = अव आदेश, दीर्घ, प्रकृत सूत्र से एकवद्भाव होने पर नपुंसकलिङ्ग प्रथमा एकवचन) = गवाश्वम् (गाय और घोड़े)। यहाँ पशुवाची द्वन्द्व होने से वैकल्पिक एकवद्भाव प्राप्त है, उसका यह निपातन बाधक है।

**शुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् २।४।१२। वृक्षादीनां सप्तानां द्वन्द्वः, अश्ववडवेत्यादि द्वन्द्वत्रयं च प्राग्वद्वा। वृक्षादौ विशेषाणामेव ग्रहणम्। प्लक्षन्यग्रोधं, प्लक्षन्यग्रोधाः। रुरुपृषतम्, रुरुपृषतः। कुशकाशम्, कुशकाशाः। व्रीहियवम्, व्रीहियवाः। दधिघृतम्, दधिघृते। गोमहिषम्, गोमहिषाः। शुकबकम्, शुकबकाः। अश्ववडवम्, अश्ववडवौ। पूर्वापरम्, पूर्वापरे। अधरोत्तरम्, अधरोत्तरे। *फलसेनाङ्गवनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्*। बदराणि चामलकानि च बदरामलकम्। नेह—बदरामलके। रथिकाश्वारोहावित्यादि।**

---

(१६०३) **विभाषेति। प्राग्वद्वेति** — विकल्पेन एकवदित्यर्थः। **वृक्षादाविति।** वृक्षविशेषवाचिनां तृणविशेषवाचिनां धान्यविशेषवाचिनां पशुविशेषवाचिनां चेत्यर्थः।

---

(१६०३) **पद**—विभाषा, वृक्षमृग.......... पूर्वापराधरोत्तराणाम्। **अनुवृत्ति**—द्वन्द्वः, एकवत्। **अतिदेशसूत्र।**

**मूलार्थ**—वृक्ष आदि सातों का तथा अश्व, वडव आदि तीनों का द्वन्द्व विकल्प से एकवत् होता है। **वा०**—वृक्ष आदि में विशेष का ही ग्रहण होता है। प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः। रुरुपृषतम्, रुरुपृषताः। कुशकाशम्, कुशकाशाः। व्रीहियवम्, व्रीहियवाः। दधिघृतम्, दधिघृते। गोमहिषम्, गोमहिषाः। शुकबकम्, शुकबकाः। अश्ववडवम्, अश्ववडवौ। पूर्वापरम्, पूर्वापरे। अधरोत्तरम्, अधरोत्तरे। **वा०**—फल, सेना, वनस्पति, मृग, शकुनि, क्षुद्रजन्तु, धान्य तथा तृण — इनके द्वन्द्व में बहुवचन ही एकवत् होता है। बदरामलकम्, बदरामलके आदि में एकवद्भाव नहीं होता।

**विमर्श**—एकवद्भाव का प्रकरण चल रहा है। पूर्ववत् उल्लिखित पदों की अनुवृत्ति अपेक्षित है। तदनुसार सूत्र का समष्टिगत अर्थ होता है "वृक्ष, मृग, तृण, धान्य, व्यञ्जन, शकुनि — इन सात शब्दों का तथा अश्ववडव, पूर्वापर एवं अधरोत्तरवाची शब्दों का द्वन्द्व समास विकल्प से एकवत् होता है।" वार्तिक द्वारा 'वृक्ष' के सम्बन्ध में स्पष्टीकरण दिया गया है। वृक्ष-विशेषवाचक शब्दों का द्वन्द्व में एकवद्भाव होगा।

**वृक्ष आदि के क्रमशः उदाहरण**—(१) **वृक्ष**—**विग्रह**—प्लक्षाश्च न्यग्रोधाश्च (समास, विभक्तिलोप, समाहारद्वन्द्व में विकल्प से एकवद्भाव — 'विभाषा वृक्षमृग०', नपुंसकलिङ्ग में एकवचन विभक्तिकार्य) = प्लक्षन्यग्रोधम्। एकवद्भाव के अभाव पक्ष में इतरेतरद्वन्द्व की स्थिति में वृक्षगत अनेकता के कारण बहुवचन पुल्लिङ्ग का प्रयोग — 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः') = प्लक्षन्यग्रोधाः (पाकड़ तथा बरगद)। **मृग**—(२) रुरवश्च पृषताश्च (प्रक्रिया उक्तवत्, समाहार की विवक्षा में एकवद्भाव, पक्ष में इतरेतरयोगद्वन्द्व अतः बहुवचन) = रुरुपृषतम्, रुरुपृषताः (काले और चित्तीदार हिरन)। **तृण**—(३) **विग्रह**—कुशाः च काशाः च (प्रक्रिया उक्तवत्, विकल्प से एकवद्भाव) = कुशकाशम्, कुशकाशाः (कुश और काश)। **धान्य**—(४) **विग्रह**—व्रीहयश्च यवाश्च (निपातन के फलस्वरूप एकवद्भाव। पक्ष में — बहुवचन) = व्रीहियवम्, व्रीहियवाः (धान और जौ)। **व्यञ्जन**—(५) **विग्रह**—दधि च घृतं च (पूर्ववत् विकल्प से एकवद्भाव) = दधिघृतम्, दधिघृते (दही और घी)। **पशु**—(६) **विग्रह**—गावः च महिषाः च (पूर्ववत् प्रक्रिया) = गोमहिषम्, गोमहिषाः (गायें और भैंसें)। **शकुनि**—(७) **विग्रह**—शुकाश्च बकाश्च (उक्तवत् विकल्प से एकवद्भाव) = शुकबकम्, शुकबकाः। सूत्रोक्त सात शब्दों की प्रक्रिया का निर्देश कर अब तीन अश्ववडवादि की प्रक्रिया का उल्लेख किया जा रहा है। (८) **विग्रह**—अश्वाश्च वडवाश्च (पूर्ववत् समाहारद्वन्द्व, एकवद्भाव विकल्प से) = अश्ववडवम्। पक्ष में — अश्ववडवौ (घोड़े और घोड़ियाँ)। (९) पूर्वम् च अपरं

**(१६०४) न दधिपय आदीनि २।४।१४।** नैकवत्स्युः। दधिपयसी। इध्मा-बर्हिषी। निपातनाद्दीर्घः। ऋक्सामे। वाङ्मनसे। **(१६०५) आनङ् ऋतो द्वन्द्वे ६।३।२५।** विद्यायोनिसम्बन्धवाचिनां ऋदन्तानां द्वन्द्वे आनङ् स्यादुत्तरपदे। होता-

---

(१६०४) **न दधिपय आदीनि।** एषां समाहारद्वन्द्वो नास्तीत्यर्थः। **दधिपयसी** — दधि च पयश्चेति विग्रहः। 'जातिरप्राणिनामि'ति प्राप्तं नित्यमेकवत्त्वं बाधित्वा विकल्पः प्राप्तः सोऽपि न भवति।

(१६०५) **आनङ्ऋतो द्वन्द्वे। विद्यायोनिसम्बन्धवाचिनामिति।** विद्यासम्बन्धवाचिनां योनिसम्बन्धवाचिनामित्यर्थः। 'ऋतो विद्यायोनिसम्बन्धेभ्यः' इत्यतस्तदनुवृत्तेरिति भावः।

---

च (निपातन के अनुसार समाहार द्वन्द्व में नपुंसकलिङ्ग, एकवद्भाव) = पूर्वापरम्। पक्ष में प्रथमा द्विवचन — पूर्वापरे। (१०) अधरं च उत्तरं च (पूर्ववत् प्रक्रिया, विकल्प से एकवद्भाव) = अधरोत्तरम्, अधरोत्तरे (नीचे का और ऊपरी भाग)।

**वा०** — फल, सेना, वनस्पति, मृग, शकुनि, क्षुद्रजन्तु, धान्य तथा तृण – इन शब्दों के बहुवचन-प्रकृतिक द्वन्द्व को ही एकवद्भाव होता है। अर्थात् एकवचन और द्विवचनान्त द्वन्द्व को एकवद्भाव नहीं होता।

**उदाहरण** — बदराणि च आमलकानि च (द्वन्द्व समास, वार्तिक से एकवद्भाव, नपुंसकलिङ्ग में विभक्तिकार्य) = बदरामलकम् (बेर और आँवले)। वार्तिक में 'बहुप्रकृतिक' पद का निवेश होने से 'बदरामलके' में एकवद्भाव नहीं होता। इसी प्रकार 'रथिकाश्वारोहौ' में भी एकवद्भाव की प्रवृत्ति नहीं हुई।

(१६०४) **पद** — न, दधिपय आदीनि। **अनुवृत्ति** — द्वन्द्वः, एकवचनम्। **अतिदेश (निषेध) सूत्र।**

**मूलार्थ** — दधिपयस् आदि का द्वन्द्व एकवत् नहीं होता। दधिपयसी। इध्माबर्हिषी। निपातन से दीर्घ। ऋक्सामे। वाङ्मनसे।

**विमर्श** — पूर्वप्राप्त एकवद्भाव का निषेध बतलाया जा रहा है। पूर्ववत् 'द्वन्द्वः' तथा 'एकवचनम्' की अनुवृत्ति आ रही है। तदनुसार — ''दधिपयसी आदि शब्दों को द्वन्द्व में एकवद्भाव नहीं होता है।'' दधिपयस् शब्दों के व्यञ्जनवाची होने से 'विभाषा वृक्षमृग०' से प्राप्त एकवद्भाव का यह सूत्र निषेधक है।

**उदाहरण — विग्रह** — दधि च पयसश्च (समास, समाहारद्वन्द्व एकवद्भाव का निषेध होने से नहीं होता, अतः इतरेतरद्वन्द्व में द्विवचन) = दधिपयसी (दही और दूध)। इध्मं च बर्हिश्च (एकवद्भाव का निषेध, द्विवचन, निपातन से इध्म को दीर्घ) = इध्माबर्हिषी (हवन की लकड़ी और कुश)। ऋक् च साम च (समास, विभक्तिलोप, एकवद्भाव का निषेध, अच् = 'अ' – 'अचतुर-विचतुर०') — ऋक्सामन् + अ (टि = अन् का लोप, औ विभक्ति, औ = शी = ई, गुण) = ऋक्सामे (ऋग्वेद और सामवेद)। वाक् च मनश्च (समास, एकवद्भाव का निषेध, पूर्ववत् समासान्त अच् प्रत्यय होकर प्रथमा द्विवचन में) = वाङ्मनसे (वाणी और मन)।

(१६०५) **पद** — आनङ्, ऋतः, द्वन्द्वे। **अनुवृत्ति** — विद्यायोनिसम्बन्धेभ्यः, उत्तरपदे। **विधिसूत्र।**

**मूलार्थ** — विद्यायोनि सम्बन्धवाची ऋदन्तों के द्वन्द्व में आनङ् होता है, उत्तरपद के परे रहते। होतापोतारौ। मातापितरौ। यहाँ 'पुत्रेऽन्यतरस्याम्' सूत्र से 'पुत्रे' पद की अनुवृत्ति करने पर — पितापुत्रौ।

**विमर्श** — द्वन्द्वसमास-विषयक अन्य आदेश का उल्लेख किया जा रहा है। 'ऋतो विद्यायोनि-सम्बन्धेभ्यः' (६।३।२२) से 'विद्यायोनिसम्बन्धेभ्यः' की अनुवृत्ति आ रही है। 'उत्तरपदे' का

**पोतारौ । मातापितरौ । पुत्रे इत्यनुवृत्तेः पितापुत्रौ । ( १६०६ ) देवताद्वन्द्वे च ६।३। २६ । इहोत्तरपदे पूर्वपदस्यानङ् । मित्रावरुणौ । * वायुशब्दप्रयोगे प्रतिषेधः * । अग्नि-वायू । वाय्वग्नी । ( १६०७ ) ईदग्नेः सोमवरुणयोः ६।३।२७ । देवताद्वन्द्व इत्येव ।**

---

**मातापितरौ** — माता च पिता चेति लौकिकविग्रहे 'मातृ + सु, पितृ + सु' इत्यलौकिकविग्रहे द्वन्द्वसमासे विभक्तिलोपे 'मातरपितरावुदीचामि'त्यनेन अरङादेशे निपातिते प्रातिपदिकत्वे 'मातर्पितृ + औ' इति जाते औप्रत्ययस्य सर्वनामस्थानसंज्ञायाम् 'ऋतो ङिसर्वनामस्थानयोः' इत्यनेन गुण रपरत्वे 'आनङ् ऋतो द्वन्द्वे' इति पूर्वपदस्थानङादेशे विभक्तिकार्ये 'मातापितरौ' इति ।

(१६०६) **देवताद्वन्द्वे चेति** । 'उत्तरपदे' इत्यधिकृतम् । **मित्रावरुणौ** — मित्रश्च वरुणश्चेति विग्रहे द्वन्द्वसमासे विभक्तिलोपे 'देवताद्वन्द्वे चे' त्यनेन पूर्वपदस्यानङदेशेऽनुबन्धलोपे प्रातिपदिकत्वे औ विभक्तौ 'वृद्धिरेचि' इत्यनेन वृद्धौ 'मित्रावरुणौ' इति ।

(१६०७) **ईदग्नेः** । **इत्येवेति** । 'देवताद्वन्द्वे' इत्यनुवर्तत एवेति भावः । सोमशब्दे वरुण-शब्दे च उत्तरपदे परे अग्नेरीदादेशः स्याद्देवताद्वन्द्वे इत्यर्थः ।

---

आधिकारिक प्रभाव विद्यमान है । तदनुसार — ''विद्या सम्बन्धी एवं रक्तसम्बन्धवाची ह्रस्व ऋकारान्त पदों के द्वन्द्व समास में उत्तरपद परे रहते आनङ् आदेश होता है ।'' 'ङिच्च' सूत्र के अनुसार ङित् अनेकाल् आदेश आनङ् = आन् अन्त्य अल् के स्थान पर होगा ।

**उदाहरण—विग्रह**—होता च पोता च । **अलौ० वि०**—होतृ + सु, पोतृ + सु (द्वन्द्व समास, विभक्तिलोप, पुनः विभक्ति औ, ऋ = आनङ् = 'आन्' — 'आनङ् ऋतो द्वन्द्वे', 'न्' का लोप) — होतापोतृ + औ (ऋ = अर् — गुण, रपर, अ = 'आ' – दीर्घ – 'असृन्तृच्०') = होतापोतारौ (होता और ऋत्विक) । माता च पिता च (समासप्रक्रिया पूर्ववत्, ऋ = आनङ् आदेश) = मातापितरौ (माता और पिता) । पिता च पुत्रश्च = 'पितापुत्रौ' में उक्त सूत्र से आनङ् की प्राप्ति नहीं होती । क्योंकि उक्त सूत्र से ह्रस्व ऋकारान्त पदों का ऋकारान्त के साथ समास होने पर ही आनङ् की प्रवृत्ति होती है । इसके समाधान के लिए कहा गया है कि प्रकृत सूत्र में 'पुत्रेऽन्यतरस्याम्' (६।३।२२) से मण्डूकप्लुति द्वारा 'पुत्रे' पद की अनुवृत्ति करने से पुत्र शब्द के परवर्ती होने पर भी पूर्वपद को आनङ् हो जाता है ।

(१६०६) **पद**—देवताद्वन्द्वे, च । **अनुवृत्ति**—आनङ्, उत्तरपदे । **विधिसूत्र** ।

**मूलार्थ**—देवताद्वन्द्व में भी उत्तरपद परे रहते आनङ् होता है । मित्रावरुणौ । **वा०**—द्वन्द्व में देवतावाची वायु का प्रयोग होने पर इसका निषेध होता है । अग्निवायू – वाय्वग्नी ।

**विमर्श**—'उत्तरपदे' का आधिकारिक प्रभाव विद्यमान है । पूर्वसूत्र (१६०५) से 'आनङ्' की अनुवृत्ति आ रही है । तदनुसार — ''देवतावाची शब्दों के द्वन्द्व समास में भी उत्तरपद परे रहते पूर्वपद को आनङ् आदेश होता है ।'' ङित् होने से यह आदेश अन्त्य अल् के स्थान में होगा ।

**उदाहरण—विग्रह**—मित्रश्च वरुणश्च (द्वन्द्वसमास, विभक्तिलोप, अ = आनङ् = 'आन्' आदेश — 'देवताद्वन्द्वे च', 'न्' का लोप, पुनः विभक्ति औ, अ + औ = 'औ' वृद्धि — 'वृद्धिरेचि') = मित्रावरुणौ (सूर्य और वरुण) ।

**वा०**—वायु शब्द के पूर्वपद या उत्तरपद में रहने पर आनङ् नहीं होता । तदनुसार — (अग्निश्च वायुश्च) = 'अग्निवायू' और 'वाय्वग्नी' (अग्नि और वायु) में द्वन्द्व समास होने पर आनङ् नहीं होता ।

(१६०७) **पद**—ईत्, अग्नेः, सोमवरुणयोः । **अनुवृत्ति**—देवताद्वन्द्वे, उत्तरपदे । **विधिसूत्र** ।

**(१६०८) अग्नेः स्तुत्स्तोमसोमाः ८।३।८२।** अग्नेः परेषामेषां सस्य षः समासे। अग्निष्टुत्। अग्निष्टोमः। अग्निषोमौ। अग्नीवरुणौ। **(१६०९) इद् वृद्धौ ६।३।२८।** वृद्धिमित्युत्तरपदे अग्नेरिदादेशो देवताद्वन्द्वे। अग्नामरुतौ देवते अस्य अग्निमारुतं कर्म। अग्नीवरुणौ देवते अस्य अग्निवारुणम्। 'देवताद्वन्द्वे चे'त्युभयपदवृद्धिः। * विष्णौ

---

(१६०८) **अग्नेः स्तुत्स्तोमस्तोमाः**। 'अपदान्तस्य मूर्धन्यः' इत्यनुवर्तते। तदाह — **अग्नेः परेषामिति**। अग्निष्टुत्। क्रतुविशेषः।

(१६०९) **इद् वृद्धौ**। अग्नेरिति देवताद्वन्द्वे इति चात्रानुवर्तते, वृद्धिपदेन वृद्धिमल्लक्ष्यते। तदाह — **वृद्धिमतीति**। **विष्णौ नेति**। विष्णुशब्दे परेऽग्नेरिकारो नेति वक्तव्यमित्यर्थः।

---

**मूलार्थ**—सोम और वरुण शब्द के परवर्ती रहते अग्नि शब्द को ईत् होता है। यह विधान देवताद्वन्द्व में ही होता है।

**विमर्श**—पूर्वसूत्र (१६०६) से 'देवताद्वन्द्वे' की अनुवृत्ति आ रही है। तदनुसार — "देवतावाची शब्दों के द्वन्द्व समास में सोम और वरुण शब्द उत्तरपद रहते अग्नि शब्द को दीर्घ ईकार आदेश हो जाता है।" 'अलोऽन्त्यस्य' परिभाषा द्वारा यह आदेश अन्तिम अल् के स्थान पर होगा।

(१६०८) **पद**—अग्नेः, स्तुत्-स्तोम-स्तोमाः। **अनुवृत्ति**—समासे, सः, अपदान्तस्य मूर्धन्यः, संहितायाम्। **विधिसूत्र**।

**मूलार्थ**—समास में अग्नि से परे स्तुत्, स्तोम और सोम शब्द के स् को ष् आदेश होता है। अग्निष्टुत्। अग्निष्टोमः। अग्नीषोमौ। अग्नीवरुणौ।

**विमर्श**—प्रसंगवश षत्वप्रकरण का सूत्र उद्धृत किया जा रहा है। अतः 'तयोर्य्वाचि संहितायाम्' (८।२।१०८) से 'संहितायाम्', 'समासेऽङ्गुलेः सङ्गः' (८।३।३०) से 'समासे', 'सहेः साडः सः' (८।३।५६) से षष्ठ्यन्त 'सः' तथा 'अपदान्तस्य मूर्धन्यः' (८।५।५५) की अनुवृत्ति आती है। सूत्रस्थ 'अग्नेः' पद पञ्चम्यन्त है। तदनुसार सूत्र का समष्टिगत अर्थ होगा कि "अग्नि शब्द से परवर्ती स्तुत्, स्तोम और सोम के सकार को समास में मूर्धन्य (षकार) आदेश होता है।"

**उदाहरण**—**विग्रह**—अग्निः स्तूयते यत्र। अग्नि + स्तु + क्विप् ('क्विप्' का सर्वापहारलोप, तुक् = 'त्' का आगम तथा उपपदसमास, 'स्' = 'ष्' — आदेश — 'अग्नेः स्तुत्स्तोमसोमाः') = अग्निष्टुत् (एक यज्ञ का नाम)। **विग्रह**—अग्नेः स्तोमः (षष्ठीतत्पुरुष, स् = ष् — प्रकृत सूत्र से, त् = ट् — 'ष्टुत्व', विभक्तिकार्य) = अग्निष्टोमः (स्तोत्रविशेष)। **विग्रह**—अग्निश्च सोमश्च (द्वन्द्व-समास, विभक्तिलोप, 'इ' = 'ई' — 'ईदग्नेः सोमवरुणयोः', स् = ष् — प्रकृत सूत्र से, प्रथमा द्विवचन में) = अग्नीषोमौ (यज्ञविशेष)। **विग्रह**—अग्निश्च वरुणश्च (द्वन्द्वसमास, 'इ' = 'ई' आदेश, प्रथमा द्विवचन विभक्तिकार्य) = अग्नीवरुणौ (अग्नि और वरुण)।

(१६०९) **पद**—इद्, वृद्धौ। **अनुवृत्ति**—अग्नेः, देवताद्वन्द्वे, उत्तरपदे। **विधिसूत्र**।

**मूलार्थ**—वृद्धिमान उत्तरपद परे रहते अग्नि को इत् होता है, देवताद्वन्द्व में। अग्निमारुतम्। अग्निवारुणम्। 'देवताद्वन्द्वे च' से उभयपदवृद्धि हुई है। **वा०** – विष्णु शब्द परे रहते इत् आदेश नहीं होता। अग्नावैष्णवम्।

**विमर्श**—देवताद्वन्द्व का प्रकरण है। पूर्वसूत्र (१६०६) से 'देवताद्वन्द्वे' तथा (१६०७) से 'अग्नेः' की अनुवृत्ति प्रमुखतया अपेक्षित है। 'उत्तरपदे' का आधिकारिक प्रभाव विद्यमान है। तदनुसार "देवताद्वन्द्व में उत्तरपदस्थ पद यदि वृद्धि युक्त हो तो पूर्वपदस्थ अग्नि शब्द को इत् (ह्रस्व इकार) अन्तादेश होता है।"

**न** *। **अग्नावैष्णवम्। ( १६१० ) दिवो द्यावा ६।३।२९ । देवताद्वन्द्वे उत्तरपदे। द्यावाभूमी। ( १६११ ) मातरपितरावुदीचाम् ६।३।३२ । उदीचां किम् ? माता-**

---

(१६१०) **द्यावाभूमी**। द्यौश्च भूमिश्चेति विग्रहः। दिवो द्यावादेशः।

(१६११) **मातरपितराविति**। उदीचां मते 'मातरपितरावि'ति भवतीत्यर्थः। **मातरपितरौ** — माता च पिता चेति लौकिकविग्रहे मातृ + सु, पितृ + सु इत्यलौकिकविग्रहे द्वन्द्वसमासे विभक्तिलोपे 'मातरपितरावुदीचामि'ति अरङादेशे निपातिते प्रातिपदिकत्वे औ-विभक्तौ सर्वनामस्थानसंज्ञायाम् 'ऋतो ङि सर्वनामस्थानयोः' इति गुणे रपरत्वे 'मातरपितरौ' इति उदीचां मते सिद्धम्। अन्यत्र तु आनङ् आदेशे कृते 'मातापितरौ' इति।

---

**उदाहरण**—**विग्रह**—अग्निश्च मरुत् च (द्वन्द्वसमास, विभक्तिलोप, इ = आनङ् = 'आन्' आदेश — 'देवताद्वन्द्वे च', 'न्' का लोप, प्रथमा द्विवचन, तदनन्तर — 'अग्नामरुतौ देवतेऽस्य' अर्थ में अण् = 'अ' — 'साऽस्य देवता') — अग्नामरुत् + अ (औ विभक्ति, विभक्तिलोप — 'सुपो धातुप्रातिपदिकयोः', उभयपदवृद्धि — 'देवताद्वन्द्वे च', 'अग्ना' के आ = इत् = 'इ' आदेश — 'इद्-वृद्धौ', प्रथमा एकवचन नपुंसकलिङ्ग में विभक्तिकार्य) = अग्निमारुतम् (जिस कर्म के अधिष्ठाता देव अग्नि और मरुत् हों)। **विग्रह**—अग्निवरुणौ देवते यस्य (प्रक्रिया उक्तवत्) = अग्निवारुणम् (जिस कर्म के अधिष्ठाता अग्निदेव और वरुण हों)।

**वा०**—देवताद्वन्द्व में 'विष्णु' के उत्तरपद रहने पर पूर्वपदस्थ अग्नि के स्थान पर इकार अन्तादेश नहीं होता।

**उदाहरण**—अग्निश्च विष्णुश्च = अग्नाविष्णू। अग्नाविष्णू देवते यस्य (अग्नाविष्णु + अण् = 'अ', उभयपदवृद्धि) - अग्नावैष्णु + अ (उ = 'ओ' - गुण - 'ओर्गुणः', ओ = 'अव्' आदेश, प्राप्त इत् का निषेध — 'विष्णौ न', प्रथमा एकवचन) = अग्नावैष्णवम् (जिस कर्म के अधिष्ठाता देव अग्नि और विष्णु हों)।

(१६१०) **पद**—दिवः, द्यावा। **अनुवृत्ति**—देवताद्वन्द्वे, उत्तरपदे। **विधिसूत्र**।

**मूलार्थ**—देवताद्वन्द्व समास में उत्तरपद परे रहते दिव् को 'द्यावा' आदेश होता है। द्यावाभूमी।

**विमर्श**—पूर्ववत् 'देवताद्वन्द्वे' तथा 'उत्तरपदे' की अनुवृत्ति आ रही है। तदनुसार — ''देवतावाची शब्दों के द्वन्द्वसमास में उत्तरपद के परवर्ती रहते पूर्ववर्ती 'दिव्' शब्द के स्थान में 'द्यावा' आदेश हो जाता है।''

**उदाहरण**—द्यौश्च भूमिश्च (द्वन्द्वसमास, विभक्तिलोप, दिव् = द्यावा आदेश — 'दिवो द्यावा', प्रथमा द्विवचन में विभक्तिकार्य) = द्यावाभूमी (आकाश और पृथ्वी)।

(१६११) **पद**—मातरपितरौ, उदीचाम्। **विधिसूत्र**।

**मूलार्थ**—पश्चिमी आचार्यों के मत से 'मातरपितरौ' इस द्वन्द्व में मातृ शब्द को अरङ् आदेश होता है। मातरपितरौ। 'उदीचाम्' क्यों कहा ? मातापितरौ।

**विमर्श**—मातृ और पितृ शब्द के द्वन्द्वसमास में उदीच्य आचार्यों के मत में 'मातरपितरौ' शब्द निपातित है। तदनुसार मातृ शब्द से अरङ् = अर आदेश होता है।

**उदाहरण**—माता च पिता च। **अलौ० वि०**—मातृ + सु, पितृ + सु (द्वन्द्वसमास, ऋ = अरङ् = 'अर' निपातन प्रकृत सूत्र से, प्रथमा द्विवचन में विभक्तिकार्य) = मातरपितरौ। प्राच्य आचार्यों के मत में ऋ = आनङ् = आन् होकर — मातापितरौ (माता और पिता)।

**पितरौ। ( १६१२ ) द्वन्द्वाच्चुदषहान्तात्समाहारे ५।४।१०६ । चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् समाहारे। वाक्त्वचम्। त्वक्स्रजम्। शमीदृषदम्। वाक्त्विषम्। छत्रोपानहम्। समाहारे किम्? प्रावृट्शरदौ।**

**इति द्वन्द्वसमासप्रकरणम्।**



---

(१६१२) **द्वन्द्वाच्चुदषहान्तादिति।** 'राजाहस्सखिभ्यः' इत्यतः टजित्यनुवर्तते। तदाह — **चवर्गान्तादित्यादिना।** **वाक्त्वचमिति।** वाक्च त्वक् चेति समाहारद्वन्द्वः। कुत्वस्यासिद्धत्वाच्चवर्गान्तत्वाट्टच्। **प्रावृट्शरदाविति।** प्रावृट् च शरच्चेति विग्रहः। इतरेतरयोगद्वन्द्वान्न टजिति भावः।

**इति द्वन्द्वसमासः।**



---

(१६१२) **पद**—द्वन्द्वात्, चुदषहान्तात्, समाहारे। **अनुवृत्ति**—टच्, समासान्ताः। **विधिसूत्र।**

**मूलार्थ**—समाहार में चवर्गान्त, दकारान्त, षकारान्त और हकारान्त द्वन्द्व से समासान्त टच् प्रत्यय होता है। वाक्त्वचम्। त्वक्स्रजम्। शमीदृषदम्। वाक्त्विषम्। छत्रोपानहम्। 'समाहारे' क्यों कहा? प्रावृट्शरदौ।

**विमर्श**—प्रसङ्गवश समासान्त टच्-विधायक सूत्र की व्याख्या प्रस्तुत की जा रही है। 'समासान्ताः' की आधिकारिक अनुवृत्ति विद्यमान है। 'राजाहस्सखिभ्यष्टच्' (५।४।९१) से 'टच्' की अनुवृत्ति आ रही है। तदनुसार — "समाहार द्वन्द्व में विद्यमान चवर्गान्त, दकारान्त, षकारान्त तथा हकारान्त शब्दों से समासान्त टच् (= अ) प्रत्यय होता है।"

**उदाहरण**—**विग्रह**—वाक्च, त्वक् च तयोः समाहारः (द्वन्द्व समास, विभक्तिलोप, कुत्व के असिद्ध होने से चवर्गान्त मानकर टच् = 'अ' – 'द्वन्द्वाच्चुदषहान्तात्समाहारे', पूर्वपद के 'च्' = 'क्' — कुत्व, पुनः विभक्ति) — वाक्त्वच + सु (सु = अम्, पूर्वरूप) = वाक्त्वचम् (वाणी और त्वचा)। **विग्रह**—त्वक् च स्रक् च (समासादि कार्य पूर्ववत्, टच्) = त्वक्स्रजम् (त्वचा और माला)। **विग्रह**—शमी च दृषद् च (समास आदि कार्य उक्तवत्) = शमीदृषदम् (शमीवृक्ष और सिल)। **विग्रह**—वाक् च त्विट् च (समासप्रक्रिया उक्तवत्, जश्त्व के असिद्ध होने के कारण ष् के अनन्तर टच्) = वाक्त्विषम् (वाणी और कान्ति)। **विग्रह**—छत्रं च उपानत् च (समास, ह् के स्थान पर होने वाले 'घ्' के असिद्ध होने से ह् के अनन्तर टच्) = छत्रोपानहम् (छाता और जूता)।

**प्रत्युदाहरण**—प्रकृत सूत्र में 'समाहारे' पद का निवेश होने से इतरेतरयोग द्वन्द्व में टच् नहीं होता। तदनुसार — प्रावृट् च शरद् च = 'प्रावृट्शरदौ' (वर्षा और शरद् ऋतु) में समासान्त टच् नहीं होता।

**द्वन्द्वसमास-प्रकरण समाप्त।**



# अथैकशेषसमासप्रकरणम्

*विरूपाणामपि समानार्थानाम्*। वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ। कुटिलदण्डौ।(१६१३) **वृद्धो यूना तल्लक्षणश्चेदेव विशेषः १।२।६५**।यूना सहोक्तौ गोत्रं शिष्यते गोत्रयुवप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात्। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। वृद्धः किम्? गर्गगार्ग्यायणौ। यूना किम्? गर्गगार्ग्यौ। कृत्स्नं किम्?

---

**विरूपाणामिति**। एकार्थकत्वे विरूपाणामप्येकशेषो वक्तव्य इत्यर्थः।

(१६१३) **वृद्धो यूना**। रूपतोऽर्थतश्च भेदेऽपि प्राप्त्यर्थमिदम्। **यूनेति**। 'जीवति तु वंश्ये युवा' इति वक्ष्यमाणयुवप्रत्ययान्तेनेत्यर्थः। **गोत्रमिति**। 'अपत्यं पौत्रप्रभृतिगोत्रम्' इत्यनेनोक्तं गोत्रं विवक्षितमित्यर्थः। तथा च गोत्रयुवप्रत्ययान्तयोर्विशेषः वैरूप्यं तल्लक्षणश्चेत् गोत्र-युवप्रत्ययनिमित्तकश्चेदित्यर्थः। **गार्ग्याविति**। गर्गशब्दस्य गार्ग्यायणशब्दस्य च गोत्रयुवप्रत्यय-कृतमेव वैरूप्यमिति गोत्रप्रत्ययान्तो गार्ग्यशब्दः शिष्यत इति भावः।

---

अब एकशेष समास का प्रकरण आरम्भ होता है। एकशेष समास की प्रमुख विशेषता यह है कि समान स्वरूप या समान अर्थ वाले अनेक शब्दों में से केवल एक शब्द शेष रहकर सभी शब्दों का अर्थ प्रकट करता है।

**मूलार्थ—वा०**—समानार्थक विरूप शब्दों का भी एकशेष होता है। वक्रदण्डौ। कुटिलदण्डौ।

**विमर्श**—द्वन्द्व समास के निरूपण के अनन्तर उसके अपवादस्वरूप एकशेष-प्रकरण का निरूपण किया जा रहा है। अष्टाध्यायी में प्रथम अध्याय के द्वितीय पाद के अन्त में एकशेष का प्रतिपादन किया गया है। उसमें सर्वप्रथम 'सरूपाणामेकशेष एकविभक्तौ' (१।२।६४) सूत्र का उल्लेख किया गया है। तदनुसार ''एक विभक्ति में जो समान रूप हों, उनमें एक ही शेष रहता है; अन्य शब्दों का लोप हो जाता है।'' यथा — 'रामश्च रामश्च = रामौ'। यहाँ द्वन्द्व प्राप्त है, परन्तु एकशेषविधायक शास्त्र निरवकाश होने से (अपवादस्वरूप) द्वन्द्व का बाधक होता है। एकशेष में अवशिष्ट शब्द लुप्त हुए अन्य के अर्थ का भी बोध कराता है। यह एकशेष केवल समानरूपात्मक शब्दों में ही नहीं होता, अपितु समानार्थक विरूपों का भी एकशेष होता है। (वा०)

**उदाहरण**—वक्रदण्डश्च कुटिलदण्डश्च (वक्र और कुटिल शब्द यहाँ समानरूपात्मक नहीं हैं तथापि समानार्थक हैं। अतः वार्तिक द्वारा एकशेष होने पर विवक्षानुसार पाक्षिक दो रूप बनते हैं) = वक्रदण्डौ। कुटिलदण्डौ (दो टेढ़ी लाठी)।

(१६१३) **पद**—वृद्धः, यूना, तल्लक्षणः, चेद् एव विशेषः। **अनुवृत्ति**—शेषः। **विधिसूत्र**।

**मूलार्थ**—युवसंज्ञक के साथ गोत्रसंज्ञक की उक्ति हो तो गोत्रसंज्ञक ही शेष रहता है, यदि दोनों में गोत्रप्रत्यय और युवप्रत्यय मात्र ही विशेष हो। गार्ग्यौ। 'यूना' क्यों कहा? गर्गगार्ग्यौ (गार्ग्य का शेष नहीं हुआ)। 'वृद्धः' क्यों कहा? गर्गगार्ग्यायणौ। कृत्स्न क्यों कहा? गार्ग्यवात्स्यायनौ।

**विमर्श**—'सरूपाणामेकशेष एकविभक्तौ' (१।२।६४) से 'शेषः' की अनुवृत्ति आ रही है। सूत्रस्थ 'वृद्ध' शब्द से 'अपत्यं पौत्रप्रभृतिगोत्रम्' सूत्रोक्त गोत्र अर्थ लिया जाता है। 'यूना' में सहार्थक तृतीया विभक्ति है। तदनुसार सूत्र का अर्थ यह होगा कि ''युवप्रत्ययान्त के साथ गोत्र (वृद्ध) प्रत्ययान्त का कथन होने पर गोत्रवाची शब्द शेष रह जाता है, युवप्रत्ययान्त निवृत्त हो जाता है। यदि वृद्धयुव-

**गार्ग्यवात्स्यायनौ। (१६१४) स्त्री पुंवच्च १।२।६६। यूना सहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत्। गार्गी च गार्ग्यायणौ च गर्गाः। (१६१५) पुमान् स्त्रिया १।२।६७। स्त्रिया सहोक्तौ पुमान् शिष्यते, तल्लक्षण एव विशेषश्चेत्। हंसा च हंसश्च**

---

(१६१४) **स्त्री पुंवच्च**। 'वृद्धो यूने' त्यादितः 'वृद्धो यूने' त्यनुवर्तते। वृद्धेति स्त्रीलिङ्गेन विपरिणम्यते। तदाह — **यूनेत्यादिना**। **गर्गाः** — गर्गादियञन्तात् 'यञश्चे' ति ङीष्। गर्गाद्य-ञन्ताद् यून्यपत्ये 'यञिञोश्चे' ति फक्, फस्यायनादेशः। अत्र स्त्रीत्वकृतवैरूप्याधिक्येऽपि गोत्रप्रत्ययान्तः स्त्रीवाचको गार्गीशब्दः शिष्यते स पुंवत्, यञो लुक्। गर्गस्यापत्यं स्त्री इत्यर्थः।

(१६१५) **पुमान् स्त्रिया**। **तल्लक्षण एवति**। 'वृद्धो यूना' इत्यतस्तदनुवृत्तेरिति भावः।

---

निमित्तक प्रत्यय का ही भेद लक्षित हो।''

**उदाहरण—विग्रह**—गार्ग्यश्च गार्ग्यायणश्च (यहाँ क्रमशः 'गार्ग्य' में अपत्यार्थक गोत्र (पौत्र) अर्थ का सूचक 'गर्गादिभ्यो यञ्' से यञ् प्रत्यय हुआ है तथा 'गार्ग्यायण' में अपत्यार्थक युवसंज्ञक फक् प्रत्यय हुआ है। दोनों के समास होने पर वृद्धसंज्ञक (गोत्र प्रत्ययान्त) 'गार्ग्य' शब्द शेष। क्योंकि इन दोनों में प्रत्यय मात्रकृत (यञ् तथा फक्) वैरूप्य है। प्रकृतिगत (गर्ग) साम्य है) = गार्ग्यौ (गर्ग का पौत्र और प्रपौत्र)।

**प्रत्युदाहण**—प्रकृत सूत्र में 'वृद्धः' पद का निवेश होने से गर्गश्च गार्ग्यायणश्च = 'गर्ग-गार्ग्यायणौ' में एकशेष नहीं हुआ। क्योंकि यहाँ गर्ग शब्द गोत्रप्रत्ययान्त नहीं है। 'यूना' पद का निवेश होने से गर्गश्च गार्ग्यश्च = 'गर्गगार्ग्यौ' (गर्ग और उसका पौत्र) में भी एकशेष नहीं हुआ। यहाँ यञ्प्रत्ययान्त गार्ग्य के साथ समस्त होने वाला गर्ग पद युवप्रत्ययान्त नहीं है। सूत्र में 'एव' से उपलक्षित 'कृत्स्न' का निवेश होने से 'गार्ग्यवात्स्यायनौ' (गर्ग का पौत्र और वत्स का युवा प्रपौत्र) में एकशेष नहीं हुआ। यहाँ प्रकृतिकृत वैरूप्य है।

(१६१४) **पद**—स्त्री, पुंवत् च। **अनुवृत्ति**—वृद्धो यूना तल्लक्षणश्चेदेव विशेषः, शेषः। (विधि) **अतिदेशसूत्र**।

**मूलार्थ**—युवप्रत्ययान्त के साथ वृद्धा स्त्री की उक्ति हो तो वृद्धा स्त्री शेष रहती है और पुंवद्भाव होता है। गर्गाः।

**विमर्श**—पूर्वसूत्र 'वृद्धो यूना तल्लक्षणश्चेदेव विशेषः' (१६१३) सूत्र की अनुवृत्ति आ रही है। प्राकरणिक 'शेषः' पद की अनुवृत्ति विधेयांश की पूर्ति हेतु अपेक्षित है। 'वृद्धः' पद स्त्रीलिङ्ग में विपरिणत हो जाता है। तदनुसार — ''युवप्रत्ययान्त के साथ वृद्धसंज्ञक स्त्रीवाचक शब्द की स्थिति होने पर गोत्रप्रत्ययान्त स्त्रीवाची (वृद्धसंज्ञक) शेष रहता है और उसका पुंवद्भाव भी होता है।''

**उदाहरण—विग्रह**—गार्गी च गार्ग्यायणौ च (समास, 'गार्गी' शब्द गोत्रप्रत्ययान्त स्त्रीलिङ्गवाची (गर्ग + यञ् + ङीप्) है तथा 'गार्ग्यायण' शब्द युवप्रत्ययान्त (गर्ग + यञ् = गार्ग्य + फक् = आयन्) है। अतः वैरूप्य होने पर भी प्रकृत सूत्र से एकशेष होने पर 'गार्गी' शेष रहा। बहुत्वविवक्षा में पुंवद्भाव होने पर 'यञञोश्च' से यञ् का लोप, गर्ग + जस्) = गर्गाः (गर्ग की पौत्री तथा दो प्रपौत्र)।

(१६१५) **पद**—पुमान्, स्त्रिया। **अनुवृत्ति**—तल्लक्षणश्चेदेव, विशेषः, शेषः। **विधिसूत्र**।

**मूलार्थ**—स्त्री के साथ पुरुष की उक्ति में पुरुष शेष रहता है, तावन्मात्र ही यदि विशेष हो।

हंसौ।

हंसौ। **(१६१६) भ्रातृपुत्रौ स्वसृदुहितृभ्याम् १।२।६८। भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ। (१६१७) नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् १।२।६८। अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत् स्याल्लक्षण एव विशेषश्चेत्। शुक्लः पटः, शुक्ला शाटी, शुक्लं वस्त्रम्, तदिदं शुक्लम्, तानीमानि**

---

(१६१६) **भ्रातृपुत्राविति**। स्वसृदुहितृभ्यां सहोक्तौ क्रमात् भ्रातृपुत्रौ शिष्येते इत्यर्थः।

(१६१७) **नपुंसकमिति**। अन्यतरस्यां ग्रहणमेकवदित्यनेनैवान्वेति आनन्तर्यात् न त्वेकशेषेणेत्याह — **तच्चेति**। **तल्लक्षण एवेति**। नपुंसकत्वानपुंसत्वमात्रकृतवैरूप्यञ्चेदित्यर्थः।

---

**विमर्श**—पूर्ववत् प्राकरणिक 'शेषः' की अनुवृत्ति आ रही है तथा सूत्र १६१३ से 'तल्लक्षणश्चेदेव विशेषः' की अनुवृत्ति भी आ रही है। सूत्रस्थ 'स्त्रिया' पद में सहार्थक तृतीया विभक्ति है। तदनुसार — ''स्त्रीवाचक शब्द के साथ पुल्लिङ्गवाची शब्द के रहने पर पुल्लिङ्गवाची शब्द शेष रहता है; यदि उनमें स्त्रीत्व एवं पुंस्त्व कृत ही विशेषता हो।''

**उदाहरण**—हंसश्च हंसी च (समास, विभक्तिलोप, पुंल्लिङ्गवाची 'हंस' शेष — 'पुमान् स्त्रिया', द्विवचन में विभक्तिकार्य) = हंसौ (हंस और हंसी)।

(१६१६) **पद**—भ्रातृपुत्रौ, स्वसृदुहितृभ्याम्। **अनुवृत्ति**—शेषः। **विधिसूत्र**।

**मूलार्थ**—भ्राता के साथ स्वसा की उक्ति हो तो भ्राता शेष रहता है और पुत्र के साथ दुहिता की उक्ति हो तो 'पुत्र' शेष रहता है। भ्रातरौ। पुत्रौ।

**विमर्श**—विधेयांश की पूर्ति हेतु पूर्ववत् 'शेषः' पद की अनुवृत्ति आ रही है। 'स्वसृदुहितृभ्याम्' में सहार्थक तृतीया है। तदनुसार — ''स्वसृ और दुहितृ शब्दों के साथ क्रमशः भ्रातृ और पुत्र शब्द का कथन होने पर 'पुत्र' और 'दुहितृ' शब्द शेष रह जाते हैं।''

**उदाहरण—विग्रह**—भ्राता च स्वसा च (समास, विभक्तिलोप, एकशेष होने पर 'भ्रातृ' शेष, प्रथमा द्विवचन में विभक्तिकार्य) = भ्रातरौ (भाई और बहिन)। **विग्रह**—पुत्रश्च, दुहिता च (समासादि प्रक्रिया उक्तवत् एकशेष) = पुत्रौ (पुत्र और पुत्री)।

(१६१७) **पद**—नपुंसकम्, अनपुंसकेन, एकवत्, च, अस्य, अन्यतरस्याम्। **अनुवृत्ति**—तल्लक्षणश्चेदेव विशेषः, शेषः। **विधि (अतिदेश) सूत्र**।

**मूलार्थ**—अनपुंसक के साथ नपुंसक की उक्ति हो तो नपुंसक शेष रहता है तथा विकल्प से एकवद्भाव होता है। यदि दोनों में नपुंसकत्व और अनपुंसकत्व मात्र विशेष हो तो। शुक्लः (पटः), शुक्ला (शाटी), शुक्लं (वस्त्रम्) तदिदं शुक्लम्, तानीमानि शुक्लानि।

**विमर्श**—प्राकरणिक 'शेषः' की अनुवृत्ति के साथ 'तल्लक्षणश्चेदेव विशेषः' (१६१३) की भी अनुवृत्ति आ रही है। 'अन्यतरस्याम्' पद अपने निकटस्थ 'एकवत्' के साथ अन्वित होकर एकवचन के विकल्प का बोधक है। तदनुसार सूत्र का आशय यह है कि ''नपुंसकलिङ्गवाचक तथा नपुंसकलिङ्गभिन्नवाचक (अर्थात् पुंल्लिङ्ग और स्त्रीलिङ्गवाचक) शब्दों का साहचर्य होने पर स्त्रीलिङ्ग एवं पुल्लिङ्गवाची शब्द हट जाते हैं तथा शेष नपुंसकलिङ्गवाची शब्द को विकल्प से एकवद्भाव होता है; यदि उन शब्दों में नपुंसकगुण एवं नपुंसकभिन्न गुणों की ही विशेषता हो एवं शेष प्रकृति आदि समान हों।''

**उदाहरण**—शुक्लः (पटः), शुक्ला (शाटी), शुक्लं (वस्त्रम्) (यहाँ भिन्नलिङ्गवाचक पदों

शुक्लानि। (१६१८) **पिता मात्रा १।२।७०**। मात्रा सहोक्तौ पिता वा शिष्यते। माता च पिता च पितरौ, मातापितरौ। (१६१९) **श्वसुरः श्वश्रू वा १।२।७१**। श्वश्रू वा सहोक्तौ श्वशुरो वा शिष्यते। श्वश्रूश्च श्वशुरश्च श्वशुरौ। श्वश्रूश्वशुरौ। (१६२०) **त्यदादीनि सर्वैर्नित्यम् १।२।७२**। सर्वैः सहोक्तौ त्यदादीनि शिष्यन्ते। स च देवदत्तश्च

---

(१६१८) **पिता मात्रा**। 'पुमान् स्त्रिया' इत्यत्र सरूपाणामित्यनुवृत्तेरप्राप्तौ वचनमिदं विकल्पार्थम्। **पितरौ** — माता च पिता चेति विग्रहे द्वन्द्वसमासे 'पिता मात्रा' इत्यनेन विभाषया पितृशब्दस्यैकशेषे प्रथमाद्विवचने औप्रत्यये सर्वनामस्थानत्वे 'ऋतो ङि सर्वनामस्थानयोः' इत्यनेन गुणे रपरत्वे च 'पितरौ' इति सिद्धम्।

(१६१९) **श्वशुरौ** — श्वश्रू श्वशुरश्चेति विग्रहे द्वन्द्वसमासे विभक्तिलोपे 'श्वशुरः श्वश्रू वा' इत्यनेन श्वशुरशब्दस्यैकशेषे प्रथमाद्विवचने औप्रत्यये वृद्धौ 'श्वशुरौ' इति। एकशेषाभाव-पक्षे 'श्वश्रूश्वशुरौ' इति। अत्राभ्यर्हितत्वात् श्वश्रूपदस्य पूर्वनिपातो बोध्यः।

(१६२०) **त्यदादीनामिति**। त्यदादिगणे यत्परं पठितं तच्छिष्यत इति, शब्दपरवि-

---

के साहचर्य में नपुंसक-गुण तथा तद्भिन्न पुंस्त्व एवं स्त्रीत्व की विशेषता है तथा प्रकृति (शुक्ल) समान है। अतः प्रकृत सूत्र से एकशेष नपुंसकलिङ्ग तथा विकल्प से एकवद्भाव) = (तदिदं) शुक्लम्। पक्ष में बहुवचन — तानि इमानि = शुक्लानि।

(१६१८) **पद**—पिता, मात्रा। **अनुवृत्ति**—अन्यतरस्याम्। शेषः। **विधिसूत्र**।

**मूलार्थ**—माता के साथ पिता की सहविवक्षा में विकल्प से पिता शेष रहता है। पितरौ। मातापितरौ।

**विमर्श**—सूत्रार्थ की पूर्णता के लिए पूर्ववत् 'शेषः' की तथा पूर्वसूत्र (१६१७) से 'अन्यतर-स्याम्' की अनुवृत्ति आ रही है। तदनुसार — "मातृ के साथ पितृ का कथन होने पर विकल्प से 'पितृ' पद शेष रह जाता है।"

**उदाहरण**—**विग्रह**—माता च पिता च। **अलौ० वि०**—मातृ + सु, पितृ + सु (द्वन्द्व समास, विभक्तिलोप, पितृ शब्द शेष (मातृ का लोप) विकल्प से — 'पिता मात्रा', प्रथमा द्विवचन औ) — पितृ + औ (ऋ = अर् — गुण, रपर - 'ऋतो ङिसर्वनामस्थानयोः') = पितरौ। एकशेष न होने पर पक्ष में मातृ-पितृ + औ (ऋ = आनङ् = आन् — 'आनङ् ऋतो द्वन्द्वे', 'न्' का लोप, गुण, रपर) = मातापितरौ (माता और पिता)।

(१६१९) **पद**—श्वशुरः श्वश्रू, वा। **अनुवृत्ति**—अन्यतरस्याम्, शेषः। **विधिसूत्र**।

**मूलार्थ**—श्वश्रू के साथ श्वशुर की उक्ति में विकल्प से श्वशुर शेष रहता है। श्वशुरौ। श्वश्रूश्वशुरौ।

**विमर्श**—पूर्ववत् 'अन्यतरस्याम्' तथा 'शेषः' पदों की अनुवृत्ति आ रही है। तदनुसार "श्वश्रू के साथ श्वशुर की सहविवक्षा में विकल्प से श्वशुर शेष रहता है।"

**उदाहरण**—श्वश्रूश्च श्वशुरश्च (द्वन्द्व समास, विभक्तिलोप, श्वशुर का एकशेष — 'श्वशुरः श्वश्रू वा', प्रथमा द्विवचन में) = श्वशुरौ। एकशेष न होने पर पक्ष में (इतरेतरद्वन्द्वसमास, प्रथमा द्विवचन) = श्वश्रूश्वशुरौ (सास और ससुर)।

(१६२०) **पद**—त्यदादीनि, सर्वैः, नित्यम्। **अनुवृत्ति**—शेषः। **विधिसूत्र**।

**मूलार्थ**—अन्य सबके साथ त्यदादियों की उक्ति हो तो नित्य त्यदादि ही शेष रहते हैं। तौ।

तौ । * त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते * । स च यश्च यौ । * पूर्वशेषोऽपि दृश्यते * । इति भाष्यम् । स च यश्च तौ । * त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि * । सा च देवदत्तश्च तौ । तच्च देवदत्ता च यज्ञदत्तश्च तानि । (१६२१) ग्राम्य-पशुसङ्घेष्वतरुणेषु स्त्री १।२।७३ । एषु सहविवक्षायां स्त्री शिष्यते । गाव इमाः ।

---

प्रतिषेधाश्रयणादिति भावः । **पूर्वशेषोऽपीति** । परपदस्येष्टवाचित्वात् क्वचित्पूर्वमपि शिष्यत इति । **त्यदादित इति** । त्यदादीनां स्त्रीशेषेऽपि सह विवक्षितेषु यः पुमान् यच्च नपुंसकं तद्वशेन लिङ्ग-प्रतिपादकानि भवन्तीति भावः ।

(१६२१) **ग्राम्य पशु** । **एष्विति** । तरुणभिन्नेषु ग्राम्याणां पशूनां सङ्घेष्वित्यर्थः । **गाव इमाः** – गौश्च गौश्च गौश्चेति गावः । अत्र पुल्लिङ्गस्त्रीलिङ्गेषु गोशब्देषु सहविवक्षितेषु 'पुमान्

---

**वा०**—त्यदादियों की परस्पर सहोक्ति हो तो पर शेष रहता है । स च यश्च = यौ । भाष्यकार के मत में कहीं पूर्ववर्ती शब्द भी शेष रहता है । **वा०**—त्यदादि के एकशेष में जो त्यदादि शेष रहता है उसके लिङ्ग और वचन पूर्वविद्यमान पुल्लिङ्ग और नपुंसकलिङ्ग शब्दों की तरह होते हैं । स च देवदत्तश्च = तौ । तच्च देवदत्ता च यज्ञदत्तश्च = तानि ।

**विमर्श**—त्यदादि सर्वनाम शब्दों के सम्बन्ध में एकशेष की व्यवस्था की जा रही है । सूत्र में 'नित्य' पद का निवेश 'अन्यतरस्याम्' की निवृत्ति के लिए किया गया है । पूर्ववत् 'शेषः' की अनुवृत्ति विद्यमान है । तदनुसार — ''अन्य शब्दों के साथ प्रयुक्त त्यद् आदि सर्वनामवाचक शब्द शेष रह जाते हैं ।''

**उदाहरण**—**विग्रह**—स च देवदत्तश्च (द्वन्द्वसमास, विभक्तिलोप, 'तत्' का एकशेष – 'त्यदादीनि सर्वैर्नित्यम्', द्विवचन औ, द् = अ, पररूप, वृद्धि) = तौ (वह और देवदत्त) ।

**१. वा०**—जब अनेक त्यदादि शब्द परस्पर साथ रहें तो त्यदादि गणपाठ के अनुसार उत्तरवर्ती पद शेष रह जाते हैं । **उदाहरण**—स च यश्च (समास, विभक्तिलोप, गणपाठ के अनुसार 'यत्' शेष, विभक्तिकार्य) = यौ (वह और जो) । महाभाष्यकार के मतानुसार कहीं-कहीं पूर्ववर्ती शब्द का प्रयोग भी दिखायी देता है । स च यश्च = तौ ।

**२. वा०**—''त्यदादि शब्दों का एकशेष होने पर जो शब्द शेष रहता है उसके लिङ्ग का निर्धारण एकशेष से पूर्व विद्यमान पुल्लिङ्ग और नपुंसकलिङ्गवाचक शब्दों से होता है ।''

**उदाहरण**—सा च देवदत्तश्च (समासादि, पुल्लिङ्ग के अनुसार प्रथमा द्विवचन) = तौ । तच्च देवदत्ता च यज्ञदत्तश्च ('तत्' नपुंसकलिङ्ग के अनुसार प्रथमा बहुवचन एकशेष में) = तानि (वह, देवदत्त तथा यज्ञदत्ता) ।

(१६२१) **पद**—ग्राम्यपशुसङ्घेषु, अतरुणेषु, स्त्री । **अनुवृत्ति**—शेषः । **विधिसूत्र** ।

**मूलार्थ**—अतरुण ग्राम्य पशुओं के संघ की सहोक्ति में स्त्रीवाचक शेष रहता है । गावः इमाः । ग्राम्य क्यों कहा ? रुरव इमे । पशु क्यों कहा ? ब्राह्मणा इमे । सङ्घेषु क्यों कहा ? एतौ गावौ । अतरुणेषु क्यों कहा ? वत्सा इमे । **वा०**—उक्त व्यवस्था अनेक शफों (खुरों) वालों के लिए ही है, ऐसा कहा जाय । अश्वा इमे ।

**विमर्श**—पूर्ववत् 'शेषः' पद की अनुवृत्ति प्रमुखतया अपेक्षित है । पशुओं को अभिलक्षित कर एकशेष की व्यवस्था की जा रही है । अतः ''तरुणावस्थाभिन्न ग्रामीण पशुओं के समूह की उक्ति होने पर स्त्रीपशुवाची शब्द का एकशेष होता है ।'' यह सूत्र 'पुमान्स्त्रिया' का अपवाद है ।

**ग्राम्येति किम्? रुरव इमे। पशुग्रहणं किम्? ब्राह्मणा इमे। सङ्घेषु किम्? एतौ गावौ। अतरुणेषु किम्? वत्सा इमे। * अनेकशफेष्विति वाच्यम् *। अश्वा इमे।**

**इत्येकशेषसमासप्रकरणम्।**



स्त्रिया' इत्यनेन पुंसः शेषं प्रबाध्य 'ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री' इत्यनेन स्त्रीलिङ्गः गौशब्दः शिष्यते। तेन 'गावः इमाः' इति सङ्गच्छते।

**इत्येकशेषसमासप्रकरणम्।**



**उदाहरण**—गौश्च गौश्च गौश्च (द्वन्द्वसमास, विभक्तिलोप, गो शब्द दोनों लिङ्गों में समान होने से स्त्रीलिङ्ग का एकशेष होने पर इमाः का अनुप्रयोग) = इमाः गावः (ये बैल एवं गायें)।

**प्रत्युदाहरण**—प्रकृत सूत्र में 'ग्राम्य' का निवेश होने से रुरुश्च रुरुश्च रुरुश्च = 'रुरव इमे' = (ये काले मृग) में वन्य पशुओं का समूह होने से स्त्रीलिङ्गवाची का एकशेष नहीं हुआ। पुल्लिङ्गवाची का एकशेष। सूत्र में 'पशु' का निवेश होने से पशुभिन्न ग्राम्य प्राणियों के समूह की विवक्षा में भी स्त्रीलिङ्गवाचक का एकशेष नहीं होता। ब्राह्मणी च ब्राह्मणश्च = ब्राह्मणा इमे (ये ब्राह्मणी और ब्राह्मण)। 'संघे' पद का निवेश होने से द्वित्व की विवक्षा में स्त्रीलिङ्गवाची का एकशेष नहीं होता। एतौ गावौ (ये दो बैल और गाय)। 'अतरुणेषु' का सूत्र में पाठ होने से तरुणवाची पशुसंघ की विवक्षा में स्त्रीवाचक शब्द शेष नहीं रहता। यथा — वत्साश्च वत्साश्च = वत्सा इमे (ये बछिया और बछड़े)।

**वा०**—प्रकृत सूत्र में जिन ग्राम्य-पशुओं का उल्लेख किया गया है उनके सम्बन्ध में व्यवस्था दी जा रही है कि वे पशु अनेक शफ = खुर वाले हों। अतः अश्वाश्च अश्वाश्च = 'अश्वाः इमे' (ये घोड़ी और घोड़े) में स्त्रीवाचक 'अश्वाः' शेष नहीं रहा। क्योंकि अश्व एक खुरवाला पशु है।

**एकशेषसमास-प्रकरण समाप्त।**



# अथ समासान्तप्रकरणम्

**(१६२२) ऋक्पूरब्धूः पथामानक्षे ५।४।७४।** ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः, अक्षे या धूस्तदन्तस्य न। अर्धर्चः। अनृचबह्वृचावध्येतर्येव। नेह – अनृक् साम। बह्वृक् सूक्तम्। विष्णुपुरम्। विमलापं सरः। (१६२३)

---

अथ सर्वसमाससाधारणसमासान्ता निरूप्यन्ते —

(१६२२) ऋक्पूरब्धूः। **छेद इति**। सूत्रे अ इति लुप्तप्रथमान्तनिर्देश इति भावः। 'समासान्ताः' इत्यधिकृतम्। ऋगादिभिः समासो विशेष्यते। तेन तदन्तविधिस्तदाह — **ऋगाद्यन्तस्येति**। **अर्धर्चः** — ऋचोऽर्धमिति विग्रहे, 'अर्ध+सु, ऋच्+ङस्' इत्यलौकिकविग्रहे 'अर्धं नपुंसकमि'ति समासे विभक्तिलोपे 'ऋक्पूरब्धूः पथामानक्षे' इत्यनेन अप्रत्यये 'अर्ध ऋच् अ' इति जाते गुणे रपरत्वे 'अर्धर्चाः पुंसि च' इति पुंस्त्वे प्रातिपदिकत्वे सौ रुत्वे विसर्गे च 'अर्धर्चः' इति।

---

समास-प्रकरण के अनन्तर श्री वरदराजाचार्य सामान्य रूप से सभी समासों में उपयोगी समासान्त प्रत्ययों के प्रकरण का प्रारम्भ कर रहे हैं। इस प्रकरण में 'समासान्ताः' के साथ 'तद्धिताः' का भी अधिकार है। समासान्त प्रत्यय समास के ही अवयव होते हैं।

(१६२२) **पद**—ऋक्-पू-रब्-धूः पथाम्, अ, अनक्षे। **अनुवृत्ति**—समासान्ताः, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—ऋगाद्यन्त समास का अन्तावयव अ प्रत्यय होता है, किन्तु अक्ष सम्बन्धी धुर्वाचक धूःशब्दान्त को नहीं होता। अर्धर्चः। 'अनृच्' तथा 'बह्वृच्' से अध्येता अर्थ में ही अप्रत्यय होता है। अतः 'अनृक् साम' तथा 'बह्वृक् सूक्तम्' में नहीं हुआ। विष्णुपुरम्। विमलापं सरः।

**विमर्श**—सूत्रार्थ की स्पष्टता के लिए 'समासान्ताः' की अनुवृत्ति प्रमुखतया अपेक्षित है। सूत्रस्थ 'आनक्षे' में अ + अनक्षे पदच्छेद है। 'अः' लुप्त प्रथमान्त पद है। ऋक् च, पुर् च, अप् च, धुर् च पन्थाश्च ऋक्पूरब्धूः पन्थानः, तेषाम् = 'ऋक्पूरब्धूः पथाम्' में इतरेतरयोग द्वन्द्वसमास है। यह पद समास का विशेषण है। अतः तदन्तविधि होती है। 'अनक्षे' का सम्बन्ध सूत्रस्थ धूर् से ही होता है। तदनुसार सूत्रार्थ होगा कि ''जिस समास के अन्त में ऋक्, पुर्, अप्, पथिन् और अक्ष भिन्न धूर् अन्त वाले शब्द हों, उनसे समासान्त अ प्रत्यय होता है।''

**उदाहरण**—**विग्रह**—ऋचः अर्धम् (समास — 'अर्धं नपुंसकम्', विभक्तिलोप, अ प्रत्यय — 'ऋक्पूरब्धूः पथामानक्षे') — अर्ध + ऋच् + अ (ऋ = अर् गुण, रपर, 'अर्धर्चाः पुंसि च' के अनुसार विभक्तिकार्य) = अर्धर्चः (आधी ऋचा)। पुर् शब्दान्त — **विग्रह**—विष्णोः पूः। **अलौ० वि०**—विष्णु + ङस्, पुर् + सु (षष्ठीतत्पुरुष समास, विभक्तिलोप, समासान्त 'अ' प्रत्यय, नपुंसकलिङ्ग प्रथमा एकवचन) = विष्णुपुरम् (विष्णु का नगर)। अप् शब्दान्त। **विग्रह**—विमला आपः यत्र। **अलौ० वि०**—विमल + जस्, अप् + जस् (बहुव्रीहिसमास, विभक्तिलोप, समासान्त अ, दीर्घ, विभक्तिकार्य) = विमलापं सरः (स्वच्छ जल वाला तालाब)।

**विशेष**—'अनृच्' और 'बह्वृच्' शब्दों से अध्येता अर्थ में ही अ प्रत्यय होता है। **उदाहरण**—अविद्यमानाः ऋचः यस्य = अनृचः। बहवः ऋचः यस्य = बह्वृचः। अध्येता से भिन्न अर्थ में अ प्रत्यय न होने पर 'अनृक्' तथा सूक्त अर्थ में 'बह्वृक्' रूप बनते हैं। **विग्रह**—(क) न विद्यमानाः ऋचः

**द्व्यन्तरुपसर्गेभ्योऽप ईत् ६।३।९७। द्वीपम्। अन्तरीपम्। प्रतीपम्। समीपम्। * अवर्णान्ताद् वा *। प्रेपम्, प्रापम्। (१६२४) ऊदनोर्देशे ६।३।९८। अनूपो देशः। राजधुरा। अक्षे तु – अक्षधूः। दृढधूरक्षः। सखिपथः। रम्यपथो देशः।**

---

(१६२३) **द्व्यन्तरुपसर्गेभ्य इति**। द्वि-अन्तर-उपसर्ग एतेभ्यः परस्याऽप्शब्दस्याऽ-प्रत्ययान्तस्याऽकारस्य ईत्स्यादित्यर्थः। **द्वीपम्** — द्वयोः पार्श्वयोर्गता आपो यस्मिन्निति विग्रहे 'द्वि + ङस्, अप + जस्' इत्यलौकिकविग्रहे उपपदसमासे विभक्तिलोपे अप्रत्यये, 'द्व्यन्त-रुपसर्गेभ्योऽप ईत्' इत्यनेन अप अकारस्य ईदादेशे 'द्वि + ईप् + अ' इति जाते सवर्णदीर्घे प्रातिपदिकत्वे सौ, सोरमि पूर्वरूपे 'द्वीपम्' इति।

(१६२४) **ऊदनोर्देशे**। अनोः परस्याऽपस्य उत्स्याद् देशे। ईत्वस्यापवादः।

---

यस्मिन् तत् 'अनृक् साम' (= ऋचाओं से रहित साम)। (ख) बहवः ऋचः यस्मिन् तत् = बह्वृक् सूक्तम् (बहुत मन्त्रों वाला सूक्त)।

(१६२३) **पद**—द्व्यन्तरुपसर्गेभ्यः, अपः, ईत्। **अनुवृत्ति**—उत्तरपदे। **विधिसूत्र**।

**मूलार्थ**—द्वि, अन्तर् और उपसर्ग से परवर्ती कृत समासान्त अप् शब्द के अकार को ईत् होता है। द्वीपम्। अन्तरीपम्। प्रतीपम्। समीपम्। **वा०**—अवर्णान्त से परे अप् के अकार को ईत् विकल्प से होता है। प्रेपम्, प्रापम्।

**विमर्श**—सूत्रार्थ की पूर्णता हेतु 'अलुगुत्तरपदे' (६।३।१) से 'उत्तरपदे' की अनुवृत्ति आ रही है। सूत्रस्थ 'अपः' शब्द अ प्रत्यय युक्त 'अप्' का बोधक है। 'अपः' षष्ठ्यन्त है। 'आदेः परस्य' परिभाषा के अनुसार अप् के अकार को 'ई' आदेश होगा। इस प्रकार सूत्रार्थ यह होगा कि "द्वि, अन्तर् तथा उपसर्ग से उत्तरवर्ती अप् के अकार को ईत् = (ई) आदेश होता है।"

**उदाहरण**—**विग्रह**—द्वयोः गताः आपः यस्मिन्। **अलौ० वि०**—द्वि + ओस्, अप् + जस् (समास — 'अनेकमन्यपदार्थे', विभक्तिलोप, समासान्त 'अ' प्रत्यय — 'ऋक्पूरब्धूः०', 'अप्' का अ = ई – 'द्व्यन्तरुपसर्गेभ्योऽप ईत्', इ + ई = 'ई' — सवर्णदीर्घ, नपुंसकलिङ्ग प्रथमा एकवचन में विभक्तिकार्य) = द्वीपम् (= टापू, जिसके दोनों ओर जल हो)। **विग्रह**—अन्तर्गताः आपः यस्मिन् तत्। **अलौ० वि०**—अन्तर् + जस्, अप् + जस् (समास, विभक्तिलोप, समासान्त अ, अ = ई, विभक्ति-कार्य) = अन्तरीपम् (जिसमें अन्दर तक पानी हो)। **विग्रह**—सङ्गताः आपः यस्मिन् तत् (प्रक्रिया उक्तवत्) = समीपम् (जहाँ पानी मिलता हो)।

**वा०**—अवर्णान्त से परे कृतसमासान्त अप् के अकार के स्थान पर ईत् (ई) विकल्प से होता है। **उदाहरण**—**विग्रह**—प्रगताः आपः यस्य (समासादि पूर्ववत्, अ प्रत्यय) प्र + अप् + अ (अ = ई विकल्प से, अ + ई = ए – 'गुण', विभक्तिकार्य) = प्रेपम्। ईत् न होने पर पक्ष में दीर्घ = प्रापम् (गड्ढा)।

(१६२४) **पद**—ऊत्, अनोः, देशे। **अनुवृत्ति**—उत्तरपदे। **विधिसूत्र**।

**मूलार्थ**—देशवाच्य होने पर अनु से परे अप् के अकार को ऊत् होता है। अनूपः। राजधुरा। अक्षधूः। दृढधूः अक्षः। सखिपथः। रम्यपथः।

**विमर्श**—पूर्ववत् 'उत्तरपदे' की अनुवृत्ति आ रही है। तदनुसार – "देश-विशेष का कथन होने पर 'अनु' उपसर्ग से उत्तरवर्ती अप् शब्द के अकार के स्थान पर ऊत् (= ऊ) आदेश होता है।" यह ईत्व का अपवाद है।

# तद्धितप्रकरणम्

## अथापत्यादिविकारान्तार्थसाधारणप्रत्ययाः

**( १६९७ ) समर्थानां प्रथमाद्वा ४।१।८२ ।** इदं पदत्रयमधिक्रियते, प्राग्दिश इति यावत् । **( १६९८ ) प्राग्दीव्यतोऽण् ४।१।८३ ।** 'तेन दीव्यती' त्यतः प्रागणधिक्रियते । **( १६९९ ) अश्वपत्यादिभ्यश्च ४।१।८४ ।** एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु । अश्वपतेरपत्यादि आश्वपतम् । गाणपतम् । **( १७०० ) दित्यदित्यादित्य-**

---

अथ समासान्निरूप्य तद्धितप्रकरणमारभते —

(१६९७) **समर्थानामिति** । विधेयस्यात्रादर्शनान्नायं स्वतन्त्रविधिरिति मत्वाह — **इदमिति** । समर्थानां मध्ये यः प्रथमः तस्मात् अर्थात् सूत्रे प्रथमोच्चारितशब्दबोध्यात् प्रत्ययो **वा** स्यादिति सूत्रार्थः ।

(१६९८) **प्राग्दीव्यतोऽण्** । 'तेन दीव्यति खनति जयति जितम्' इति सूत्रस्थदीव्यतिशब्दस्यैकदेशस्यानुसरणमिह दीव्यच्छब्दः। अतस्तद्घटितं तत्सूत्रं लक्ष्यते। तदाह — **तेनेत्यादि**।

(१६९९) **अश्वपत्यादिभ्यश्च** । चकारात् 'प्राग्दीव्यतोऽण्' इत्यनुकृष्यते । तदाह —

---

संस्कृत शब्दों की संरचना में कृत् और तद्धित प्रत्यय अत्यन्त महत्त्वपूर्ण हैं । कृत् प्रत्यय धातुओं से विहित हैं; किन्तु तद्धित प्रत्यय प्रातिपदिक (शुद्ध या कृदन्त) से विहित हैं । ये भिन्न-भिन्न अर्थों को लक्ष्य कर प्रयुक्त होते हैं । अतः समासप्रकरण के निरूपण के अनन्तर तद्धितवृत्ति के आरम्भस्वरूप उपयोगी साधारण प्रत्ययों का निर्वचन किया जा रहा है । 'तद्धित' शब्द योगरूढ है — 'तस्मै हिताः' तद्धिताः । अर्थात् तद्धित प्रत्यय प्रकृत्यर्थ के लिए (हिताः) = उपकारक हैं । अतः संज्ञावाचक एवं विशेषणवाचक शब्दों की संरचना में तद्धित प्रत्ययों की सार्थकता है ।

(१६९७) **पद**—समर्थानां, प्रथमाद्, वा । **अधिकारसूत्र** ।

**मूलार्थ**—'प्राग्दिशो विभक्तिः' तक 'समर्थानाम्, प्रथमाद्, वा' ये तीनों पद अधिकृत हैं । सामर्थ्य का अर्थ परिनिष्ठित है ।

**विमर्श**—उक्त तीनों पदों का अधिकृत सूत्रों में प्रभाव रहेगा । सूत्रस्थ 'समर्थानाम्' पद निर्धारणार्थक षष्ठी विभक्ति में प्रयुक्त हुआ है । अतः 'प्राग्दिशो विभक्तिः' (५।१।३) सूत्र के पूर्व तक इस सूत्र के अधिकार में आने वाले प्रत्यय समर्थों में जो प्रथम हो, उससे विकल्प से होते हैं ।

(१६९८) **पद**—प्राक्, दीव्यतः, अण् । **अनुवृत्ति**—प्रत्ययः, परश्च । **अधिकारसूत्र** ।

**मूलार्थ**—'तेन दीव्यति' सूत्र के पूर्व तक अण् का अधिकार है ।

**विमर्श**—'तेन दीव्यति खनति जयति जितम्' (४।४।२) सूत्र से पहले तक 'अण्' प्रत्यय का अधिकार है । तो भी अण् प्रत्यय केवल उत्सर्ग-सूत्रों से ही होगा, अपवाद-सूत्रों से नहीं । क्योंकि अपवाद-सूत्र द्वारा उत्सर्ग का बाध होता है ।

(१६९९) **पद**—अश्वपत्यादिभ्यः, च । **अनुवृत्ति**—प्राग्दीव्यतोऽण्, तद्धिताः, ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च । **विधिसूत्र** ।

**मूलार्थ**—प्राग्दीव्यतीय अर्थों में इनसे अण् प्रत्यय होता है, विकल्प से । आश्वपतम् । गाणपतम् ।

**पत्युत्तरपदाण्ण्यः ४।१।८५। प्राग्दीव्यतीयेष्वर्थेषु। दितेरपत्यादि दैत्यः। अदितेरादित्यस्य वा आदित्यः। * यणो मयो द्वे वाच्ये *। मय इति पञ्चमी यण इति षष्ठीति पक्षे**

---

**एभ्योऽण् स्यादित्यादि। आश्वपतम्** — अश्वपतेरपत्यमिति विग्रहे 'तस्यापत्यमि'त्यनेन अणि 'अश्वपति + ङस् + अ' इति जाते 'कृत्तद्धितसमासाश्चे'त्यनेन प्रातिपदिकसंज्ञायां 'सुपो धातुप्रातिपदिकयोः' इत्यनेन सुपो लुकि 'यचि भम्' इति भसंज्ञायां 'यस्येति च' इति इकारलोपे 'तद्धितेष्वचामादेः' इत्यनेनाद्यचो वृद्धौ सौ, सोरमि पूर्वरूपे 'आश्वपतमि'ति रूपम्।

(१७००) **दित्यदित्यादित्य इति**। दित्यादिभ्यः पत्युत्तरपदाच्च ण्यः स्यादित्यर्थः। **आदित्यः** — अदितेरपत्यमिति विग्रहे 'अदितिशब्दात्' दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्यप्रत्यये णकारलोपे 'अदिति + ङस् + अ' इति जाते प्रातिपदिकत्वे सुपो लुकि भत्वे 'यस्येति चे' त्यनेन इकारलोपे 'तद्धितेष्वचामादेः' इत्यनेनाद्यचो वृद्धौ आदित्य इति जाते सौ रुत्वे विसर्गे च 'आदित्यः' इति।

---

**विमर्श**—उक्त आधिकारिक अनुवृत्तियों का प्रभाव विद्यमान है। सूत्रस्थ पदों के साथ आधिकारिक पदों का अन्वय होने पर यह अर्थ अभिव्यञ्जित होता है कि "अश्वपति आदि समर्थ प्रातिपदिकों से प्राग्दीव्यतीय आदि अर्थों में विकल्प से अण् (= अ) होता है।"

**उदाहरण—विग्रह**—अश्वपतेः अपत्यम् (अश्वपति + ङस् + अण् — 'अश्वपत्यादिभ्यश्च') — अश्वपति + अ (विभक्तिलोप — 'सुपो धातुप्रातिपदिकयोः', आदि अच् को वृद्धि — अ = आ — 'तद्धितेष्वचामादेः', भ संज्ञा, इकारलोप — 'यस्येति च', प्रातिपदिकसंज्ञा — 'कृत्तद्धितसमासाश्च', पुनः विभक्ति सु, सु = अम् — 'अतोऽम्', अ + अम् = अम्, पूर्वरूप — 'अमि पूर्वः') = आश्वपतम् (अश्वपति की सन्तति)। **विग्रह**—गणपतेरपत्यम् (प्रक्रिया उक्तवत्) = गाणपतम् (गणपति की सन्तति)।

(१७००) **पद**—दित्यदित्यादित्यपत्युत्तरपदात्, ण्यः। **अनुवृत्ति**—प्राग्दीव्यतः, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—दित्यादि और पत्युत्तरपद से प्राग्दीव्यतीय अर्थ में विकल्प से ण्य प्रत्यय होता है। दैत्यः। आदित्यः। **वा०**—यण् से परे मय् और मय् से परे यण् को द्वित्व होता है। 'मयः' में पञ्चमी और 'यण्' में षष्ठी पक्ष में 'य्' को द्वित्व होता है।

**विमर्श**—सूत्रार्थ की स्पष्टता हेतु 'प्राग्दीव्यतीय' की प्रमुख आधिकारिक अनुवृत्ति के अतिरिक्त अन्य पदों की अनुवृत्ति यथापूर्व विद्यमान है। तदनुसार — "दिति, अदिति, आदित्य तथा पति उत्तरपदक समर्थ प्रातिपदिकों से प्राग्दीव्यतीय (अपत्य आदि) अर्थों में ण्य प्रत्यय होता है।" ण्य प्रत्यय सामान्यतः विहित अण् प्रत्यय का अपवाद है।

**उदाहरण—विग्रह**—दितेः अपत्यम् (दिति + ङस् + ण्य = 'य' — 'दित्यदित्यादित्य०', विभक्तिलोप, आदिवृद्धि, भसंज्ञा, 'इ' का लोप — 'यस्येति च', विभक्तिकार्य) = दैत्यः (दिति की सन्तान)। **विग्रह**—अदितेः अपत्यम् (अदिति + ङस् + ण्य = य, आदिवृद्धि, भसंज्ञा, इकारलोप, विभक्तिकार्य) = आदित्यः (अदिति की सन्तान)। आदित्यस्य अपत्यम् (आदित्य + ङस् + ण्य = 'य', आदिवृद्धि, 'अ' का लोप) आदित्य् + य (पूर्व 'य्' को विकल्प से द्वित्व — 'यणो मयो द्वे वाच्ये', 'य्' का पाक्षिक लोप — अग्रिम सूत्र-'हलो यमां यमि लोपः) = आदित्य्यः। द्वित्व न होने एवं लोप

**यस्य द्वित्वम् । ( १७०१ ) हलो यमां यमि लोपः ८।४।३४ । वा स्यात् । इत्यसति लोपे द्वित्वे च सति त्रियं रूपम् । असति लोपे द्वित्वलोपयोर्वा द्वियम् । द्वित्वाभावे लोपे च सति -एकयम् । प्राजापत्यः । * देवाद्यञञौ * । दैव्यम्, दैवम् । * बहिषष्टिलोपो यञ्च * । बाह्यः । * ईकक् च * । ( १७०२ ) किति च ७।२।११८ । किति तद्धितेऽचामादेरचो वृद्धिः । वाहीकः । * गोरजादिप्रसङ्गे यत् * । गोरपत्यादि गव्यम् । ( १७०३ )**

---

(१७०१) **हलो यमामिति** । हलः परस्य यमो लोपः स्याद् वा यमीत्यर्थः ।

(१७०२) **किति च** । 'तद्धितेष्वचामादेः' इति सूत्रम्, 'अचो ञ्णिति' इत्यत 'अचः' इति 'मृजेर्वृद्धिः' इत्यतो वृद्धिरिति चानुवर्तते । तदाह — **किति तद्धितेऽचामित्यादि** ।

---

न होने पर भी दो 'य्' वाला रूप) = आदित्य्यः । द्वित्व न होने पर एवं य् का लोप होने पर **एक** यकारात्मक रूप-आदित्यः (आदित्य की सन्तान) ।

(१७०१) **पद**—हलः, यमां, यमि, लोपः । **अनुवृत्ति**—वा । **विधिसूत्र** ।

**मूलार्थ**—हल् से परे यम् का लोप विकल्प से होता है, यम् परे रहते । प्राजापत्यः । **वा०**—देव शब्द से यञ् और अञ् प्रत्यय होते हैं । दैव्यम् । दैवम् । **वा०**—बहिस् शब्द से यञ् प्रत्यय होता है और टि का लोप होता है । बाह्यः । **वा०**—बहिस् से ईकक् भी होता है ।

**विमर्श**—सूत्रार्थ की स्पष्टता के लिए 'वा' पद की अनुवृत्ति अपेक्षित है । तदनुसार—पूर्वोक्त सूत्रार्थ निष्पन्न होता है ।

**उदाहरण**—**विग्रह**—अदितेः अपत्ययम् = आदित्यः (प्रक्रिया सू० १७०० के विमर्श में बतायी जा चुकी है । पत्युत्तर शब्द — **विग्रह**—प्रजापतेः अपत्यम् (प्रजापति + ण्य = य, आदिवृद्धि, इकार-लोप एवं विभक्तिकार्य) = प्राजापत्यः (प्रजापति की सन्तान) ।

१. **वा०**—अपत्यादि अर्थ में देव शब्द से यञ् एवम् अञ् प्रत्यय होते हैं । **उदाहरण**—**विग्रह**—देवस्य अपत्यादि (देव + यञ् = य — 'देवाद्यञञौ', आदिवृद्धि, भसंज्ञा — 'अ' का लोप, विभक्ति-कार्य) = दैव्यम् (देव की सन्तान) । देव + अञ् (= अ — 'देवाद्यञञौ', आदिवृद्धि, अकारलोप, विभक्तिकार्य) = दैवम् (देव की सन्तान) ।

२. **वा०**—बहिस् शब्द से प्राग्दीव्यतीय अर्थों में यञ् प्रत्यय तथा 'टि' का लोप होता है । **उदाहरण**—बहिर्भवः (बहिस् + यञ् = य, टि = 'इस्' का लोप — 'बहिषष्टिलोपश्च', आदिवृद्धि एवम् विभक्तिकार्य) = बाह्यः (बाहरी) ।

३. **वा०**—बहिस् शब्द से ईकक् प्रत्यय और टि = इस् का लोप होता है । **उदाहरण**—बहिस् + ईकक् = ईक, टि = 'इस्' का लोप — 'ईकक् च', आदिवृद्धि- 'किति च' अग्रिम सूत्र से तथा विभक्तिकार्य) = बाहीकः (बाहरी) ।

(१७०२) **पद**—किति, च । **अनुवृत्ति**—तद्धितेष्वचामादेः, अचः, वृद्धिः अङ्गस्य । **विधिसूत्र** ।

**मूलार्थ**—कित्-तद्धित प्रत्यय के परवर्ती रहने पर अचों में आदि अच् को वृद्धि होती है । बाहीकः । गो शब्द से अजादि प्रत्यय के प्रसङ्ग में यत्प्रत्यय होता है । गव्यम् ।

**विमर्श**—'तद्धितेष्वचामादेः' (७।२।११७) सूत्र की अनुवृत्ति प्रमुख रूप से अपेक्षित है । 'अचो ञ्णिति' (७।२।११५) से 'अचः' तथा 'मृजेर्वृद्धिः' (७।२।११४) से 'वृद्धि' पद की अनुवृत्ति आ रही है । तदनुसार सूत्र का अर्थ यह होता है कि "क् इत्संज्ञक तद्धित प्रत्यय के परवर्ती होने पर अचों **में आदि अच् वर्ण को वृद्धि होती है** ।"

**उत्सादिभ्योऽञ् ४।१।८६ ।औत्सः ।**

**इत्यपत्यादिविकारान्तार्थसाधारणप्रत्ययाः ।**



---

(१७०३) **उत्सादिभ्योऽञ्** । प्राग्दीव्यतीयेष्वर्थेष्विति शेषः । **औत्सः** — उत्सस्यापत्यमिति विग्रहे 'उत्सादिभ्योऽञ्' इत्यनेन अञ्प्रत्ययेऽनुबन्धलोपे 'उत्स + ङस् + अ' इति जाते प्रातिपदिकत्वे सुपो लुकि सौ रुत्वे विसर्गे च 'औत्सः' इति ।

**इत्यपत्यादिविकारान्तार्थसाधारणप्रत्ययाः ।**



---

**उदाहरण**—बाहीकः (प्रक्रिया उक्त सूत्र (१७०१) में बतायी जा चुकी है) ।

१. **वा०**—गो शब्द से अच् आदि प्रत्ययों की प्राप्ति होने पर सर्वत्र अपत्यादि एवं प्राग्दीव्यतीय अर्थों में यत् प्रत्यय होता है । **उदाहरण**—गवि भवम् (गो + यत् = य, ओ = अव् आदेश — 'वान्तो यि प्रत्यये', विभक्तिकार्य) = गव्यम् (गाय में होने वाला, गाय सम्बन्धी) ।

(१७०३) **पद**—उत्सादिभ्यः, अञ् । **अनुवृत्ति**—प्राग्दीव्यतः, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—प्राग्दीव्यतीय आदि अर्थ में उत्स आदि शब्दों से अञ् प्रत्यय होता है । औत्सः ।

**विमर्श**—उक्त पदों की अनुवृत्ति का पूर्ववत् प्रभाव विद्यमान है । तदनुसार—''उत्स आदि प्रातिपदिकों से प्राग्दीव्यतीय आदि अर्थ में अञ् प्रत्यय होता है ।''

**उदाहरण**—उत्स + अञ् (= अ — 'उत्सादिभ्योऽञ्', उ = 'औ' — आदिवृद्धि —'तद्धितेष्वचामादेः', अ का लोप, विभक्तिकार्य) = औत्सः (उत्स की सन्तान) ।

**अपत्यादिविकारान्तार्थसाधारणप्रत्यय समाप्त ।**



# अथापत्याधिकारप्रकरणम्

**(१७०४) स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ४।१।८७। धान्यानां भवन इत्यतः प्रागर्थेष्वाभ्यामेतौ स्तः। स्त्रैणः। पौंस्नः। (१७०५) तस्यापत्यम् ४।१।९२। षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ताः वक्ष्यमाणाश्च प्रत्यया वा स्युः। (१७०६)**

---

अथापत्याधिकारो निरूप्यते —

(१७०४) **स्त्रीपुंसाभ्यामिति**। भवनपदेनात्र 'धान्यानां भवने क्षेत्रे खञ्' इति सूत्रं विवक्षितम्। **'प्राग्दीव्यतः'** इत्यस्मात्प्रागिति अनुवृत्तम्। अत आह — **धान्यानामित्यादि**। **स्त्रैण इति**। स्त्रीषु भवः, स्त्रीणां समूहः, स्त्रियाः अपत्यमित्यादिविग्रहे **'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादि'**त्यनेन नञि 'स्त्री + ङस् + नञ्' इति जाते सुपो लुकि 'तद्धितेष्वचामादेः' इत्यनेनाद्यचो वृद्धौ 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति नस्य णत्वे सौ रुत्वे विसर्गे **'स्त्रैणः'** इति।

(१७०५) **तस्यापत्यम्**। तद्धिताः, प्रत्ययः परश्चेति चाधिकृतम्। तच्छब्द उपगवादिसर्वविशेषबोधकः। सुप् चेह तस्येति प्रथमोच्चारिते पदे उपस्थिततत्वात् षष्ठ्येव गृह्यते। ततश्च षष्ठ्यन्तादिति फलति। सामर्थ्यं कृतसन्धिकार्यत्वम्। तदाह — **षष्ठ्यन्तादिति**। **उक्ता इति**। 'प्राग्दीव्यतोऽण्' इत्याद्यौत्सर्गिका इति। **वक्ष्यमाणाश्चेति**। 'अत इञ्' इत्याद्याः वैशेषिका इत्यर्थः। **औपगवः** — 'उपगोरपत्यमि'ति विग्रहे उपगुशब्दात् 'तस्यापत्यम्' इत्यणि प्रातिपदिकसंज्ञायां सुपो लुकि 'यचि भम्' इति भसंज्ञायाम्, आद्यचो वृद्धौ 'ओर्गुणः' इत्यनेन उकारस्य गुणे ओकारे अवादेशे सौ रुत्वे विसर्गे च 'औपगवः' इति।

---

(१७०४) **पद**—स्त्रीपुंसाभ्याम्, नञ्स्नञौ, भवनात्। **अनुवृत्ति**—प्राग्दीव्यतः, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—'धान्यानां भवने क्षेत्रे' से पूर्व अर्थों में स्त्री और पुमस् शब्द से क्रमशः नञ् और स्नञ् प्रत्यय विकल्प से होता है। स्त्रैणः। पौंस्नः।

**विमर्श**—प्रकृत सूत्र में प्रयुक्त 'भवन' शब्द का अभिप्राय 'धान्यानां भवने क्षेत्रे खञ्' (५।२।१) से है। आधिकारिक 'प्राक्' पद 'भवनात्' के साथ अन्वित होता है। यथासंख्य परिभाषा के अनुसार नञ् और स्नञ् प्रत्यय क्रम से होते हैं। इस प्रकार सूत्र का अर्थ होता है कि "'धान्यानां भवने क्षेत्रे खञ्' सूत्र से पहले तक जितने अर्थ कहे गये हैं उन सभी (अपत्य, भव, समूह आदि) अर्थों में स्त्री और पुंस् शब्द से क्रमशः 'नञ्' और 'स्नञ्' प्रत्यय होते हैं।"

**उदाहरण—विग्रह**—स्त्रियः अपत्यम्, स्त्रीणां समूहः आदि (स्त्री + नञ् = न — 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्', इ = ऐ — आदिवृद्धि, णत्व, विभक्तिकार्य) = स्त्रैणः (स्त्री की सन्तान आदि)। **विग्रह**—पुंसः अपत्यम् (पुंस् + स्नञ् = स्न प्रत्यय, 'स्' का लोप — 'संयोगान्तस्य लोपः', आदिवृद्धि, विभक्तिकार्य) = पौंस्नः (पुरुष की सन्तान आदि)।

(१७०५) **पद**—तस्य, अपत्यम्। **अनुवृत्ति**—समर्थानां प्रथमाद् वा, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—षष्ठ्यन्त कृतसन्धि समर्थसुबन्त से अपत्य अर्थ में उक्त (अण्, ण्य आदि) और वक्ष्यमाण (इञ् आदि) प्रत्यय विकल्प से होते हैं।

**विमर्श**—प्रकृत सूत्र के तस्य और अपत्य दोनों पर अर्थ के बोधक हैं। 'तस्य' का अभिप्राय

**ओर्गुणः ६।४।१४६** । उवर्णान्तस्य भस्य गुणस्तद्धिते । ओरोदिति वक्तव्ये गुणोक्तिः 'संज्ञापूर्वको विधिरनित्य' इति ज्ञापयितुम् । तेन स्वायम्भुवमित्यादि सिद्धम् । उपगोरपत्यम् औपगवः । आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः । **(१७०७) अपत्यं पौत्रप्रभृति गोत्रम् ४।१।१६२** । अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् ।

---

(१७०६) **ओर्गुणः** । 'ओः' इति षष्ठ्येकवचनम् । तेन भस्येत्यधिकृतं विशेष्यते । तदन्तविधिः । 'नस्तद्धिते' इत्यस्मात्तद्धिते इत्यनुवर्तते । अत आह — **उवर्णान्तस्येति** ।

(१७०७) **अपत्यमिति** । अपत्याधिकारात्सिद्धे पुनरपत्यग्रहणं व्यर्थमित्यत आह — **अपत्यत्वेन विवक्षितमिति** । पौत्रप्रभृति अपत्यं गोत्रसंज्ञकमित्यर्थः ।

---

है — 'षष्ठ्यन्त पद' और 'अपत्य' का अर्थ है — अपत्य अर्थ का बोधक कोई भी प्रत्यय । पूर्वोक्त आधिकारिक पदों का प्रभाव पूर्ववत् विद्यमान है । तदनुसार सूत्र का आशय यह है कि "अपत्य (सन्तान) अर्थ में जिन प्रत्ययों का इस सूत्र के पूर्व अथवा बाद में विधान किया गया है वे सभी प्रत्यय प्रथम षष्ठ्यन्त समर्थ सुबन्त पद से होते हैं ।"

(१७०६) **पद**—ओः, गुणः । **अनुवृत्ति**—तद्धिते, भस्य, अङ्गस्य । **विधिसूत्र** ।

**मूलार्थ**—उवर्णान्त भसंज्ञक को गुण होता है, तद्धित प्रत्यय के परे रहते । यहाँ 'ओरोत्' कहना ही पर्याप्त था, गुण पद का कथन संज्ञानिर्देशपूर्वक विधान की अनित्यता को सूचित करता है । उससे 'स्वायम्भुवः' आदि प्रयोग सिद्ध होते हैं । औपगवः । आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः ।

**विमर्श**—प्राकरणिक एवम् आधिकारिक 'तद्धिते', 'भस्य' तथा 'अङ्गस्य' की अनुवृत्तियाँ आ रही हैं । तदनुसार "उवर्णान्त भसंज्ञक अङ्ग को तद्धित प्रत्यय के परवर्ती होने पर पर (ओ) गुण होता है ।"

**विशेष**—'उ' के स्थान में 'ओ' गुण विधान करने के लिए सूत्र में 'ओरोत्' निर्देश से ही कार्य चल सकता था, गुण शब्द के प्रयोग का क्या औचित्य है? इसका समाधान यह है कि सूत्रों में संज्ञावाचक शब्दों का प्रयोग करने पर विधीयमान कार्य नित्य नहीं होता । अर्थात् कहीं-कहीं गुण न होने पर भी प्रयोगों को साधु माना जाता है । इस प्रकार 'संज्ञापूर्वको विधिरनित्यः' परिभाषा को ज्ञापित करने के लिए गुण पद आवश्यक है । इससे 'स्वायम्भुवः' आदि प्रयोग साधु माने गये हैं । स्वयम्भू + अण् (= अ, गुण न होने पर ऊ = उवङ् = उव आदेश, आदिवृद्धि तथा विभक्ति-कार्य) = स्वायम्भुवः ।

**उदाहरण**—(१) **विग्रह**—उपगोः अपत्यम् (उपगु + ङस् + अण् = 'अ' — 'तस्यापत्यम्', विभक्ति का लुक्, आदि वर्ण उ = 'औ' वृद्धि — 'तद्धितेष्वचामादेः') — औपगु + अ (उ = 'ओ' — गुण — 'ओर्गुणः', ओ = अव् आदेश, प्रातिपदिक संज्ञा — 'कृत्तद्धितसमासाश्च', विभक्ति सु = स् = र् = ः) = औपगवः (उपगु की सन्तान) । (२) अश्वपतेः अपत्यम् (अश्वपति + अण् = अ, प्राप्त ण्य का बाध), आदिवृद्धि, इकारलोप — 'यस्येति च', विभक्तिकार्य) = आश्वपतः (अश्वपति की सन्तान) । (३) **विग्रह**—दितेः अपत्यम् (दिति + ण्य — अण् के अपवादस्वरूप 'दित्यदित्या-दित्य०')- दिति + य (आदिवृद्धि, इकारलोप, विभक्तिकार्य) = दैत्यः (दिति की सन्तान) । (४) उत्सस्य अपत्यम् (उत्स + अञ् = 'अ' — इञ् का बाधकर — 'उत्सादिभ्योऽञ्', आदिवृद्धि, अकारलोप, विभक्तिकार्य) = औत्सः (उत्स की सन्तान) । (५) स्त्रैणः (स्त्री की सन्तान) । (६) पौंस्नः (पुरुष की सन्तान) । प्रक्रिया सूत्र १७०४ में देखें ।

(१७०७) **पद**—अपत्यम्, पौत्रप्रभृति, गोत्रम् । **संज्ञासूत्र** ।

**(१७०८) एको गोत्रे ४।१।९३।** गोत्रे एक एवापत्यप्रत्ययः स्यात्। उपगोर्गोत्रापत्यम् औपगवः। **(१७०९) गर्गादिभ्यो यञ् ४।१।१०५।** गोत्रापत्ये। गर्गस्य गोत्रापत्यं गार्ग्यः। वात्स्यः। **(१७१०) यञञोश्च २।४।६४।** गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक्, तत्कृते बहुत्वे, न तु स्त्रियाम्। गर्गाः। वत्साः। **(१७११)**

---

(१७०८) **एको गोत्रे।** अपत्याधिकारात्प्रत्ययाधिकाराच्च अपत्यप्रत्यय इति तद्विशेष्यलाभः। अत आह — **गोत्रे एक एवेति।**

(१७०९) **गर्गादिभ्यो यञ्। गार्ग्यः** — गर्गस्य गोत्रापत्यमिति विग्रहे 'गर्गादिभ्यो यञ्' इति यञि आदिवृद्धौ अकारलोपे सौ सस्य रुत्वे विसर्गे च गार्ग्यः।

(१७१०) **यञञोश्च।** 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति सूत्रं तद्राजस्येति वर्जमनुवर्तते। 'ण्यक्षत्रिय' इत्यतो लुगिति 'यस्कादिभ्यो गोत्रे' इति गोत्रे इति च। तदाह — **गोत्रे यदिति।**

---

**मूलार्थ**—अपत्य (सन्तान) के रूप में विवक्षित पौत्रप्रभृति गोत्रसंज्ञक होते हैं।

**विमर्श**—सामान्यत: पौत्र आदि अपत्य (पुत्र) की श्रेणी में नहीं आते। अत: सूत्रस्थ 'अपत्यम्' शब्द विशिष्ट अर्थ का सूचक है। ''यदि पौत्र एवम् प्रपौत्र आदि को भी 'अपत्य' कहना अभीष्ट हो तो उनकी 'गोत्र' संज्ञा होती है।'' इस प्रकार पौत्र एवं प्रपौत्र को गोत्रापत्य कहा जाता है।

(१७०८) **पद**—एक:, गोत्रे। **नियमसूत्र।**

**मूलार्थ**—'गोत्र' में एक ही अपत्य प्रत्यय होता है। औपगवः।

**विमर्श**—'तस्यापत्यम्' की प्राकरणिक अनुवृत्ति का प्रभाव विद्यमान है। तदनुसार — ''गोत्र अर्थ में एक ही अपत्यवाचक प्रत्यय होता है।'' अर्थात् पौत्र से लेकर आगे की पीढ़ियों को बताने के लिए भिन्न-भिन्न प्रत्ययों की आवश्यकता होती है, उसका निवारण करने के लिए इस नियम की चरितार्थता होती है।

**उदाहरण**—औपगवः (उपगु का पौत्र, प्रपौत्र आदि) — उपगु + अण् — 'गोत्र अर्थ में', प्रपौत्र आदि अर्थ को सूचित करने के लिए इञ् (अत इञ्) की आवश्यकता नहीं है।

(१७०९) **पद**—गर्गादिभ्य:, यञ्। **अनुवृत्ति**—गोत्रे, तस्यापत्यम्, तद्धिता:। **विधिसूत्र।**

**मूलार्थ**—गोत्रापत्य अर्थ में गर्ग आदि शब्दों से यञ् प्रत्यय होता है। गार्ग्यः। वात्स्यः।

**विमर्श**—सूत्रार्थ की स्पष्टता हेतु 'गोत्रे' की अनुवृत्ति प्रमुखतया अपेक्षित है। 'आधिकारिक पदों के साथ एकवाक्यता होने पर सूत्रार्थ होता है कि ''गर्ग आदि समर्थ प्रातिपदिकों से गोत्रापत्य अर्थ में यञ् प्रत्यय होता है।''

**उदाहरण—विग्रह**—गर्गस्य गोत्रापत्यम् (गर्ग + यञ् = य — 'गर्गादिभ्यो यञ्', आदिवृद्धि, 'अ' का लोप तथा विभक्तिकार्य) = गार्ग्यः (गर्ग का पौत्र आदि)। वत्सस्य गोत्रापत्यम् (यञ् आदि पूर्ववत्) = वात्स्यः (वत्स का पौत्र आदि)।

(१७१०) **पद**—यञञो:, च। **अनुवृत्ति**—गोत्रे, लुक्, बहुषु तेनैवास्त्रियाम्। **विधिसूत्र।**

**मूलार्थ**—गोत्रार्थक यञन्त और अञन्त के अवयव यञ् और अञ् का लुक् होता है, तत्कृत बहुत्व गम्य होने पर; किन्तु स्त्रीलिङ्ग में लुक् नहीं होता। गर्गाः। वत्साः।

**विमर्श**—'ण्यक्षत्रियार्षञितो यूनि लुगणिञो:' (२।४।५८) से विधेयवाचक पद 'लुक्' की अनुवृत्ति अपेक्षित है। 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' (२।४।६२) से 'बहुषु, तेनैवास्त्रियाम्' तथा 'यस्कादिभ्यो गोत्रे' (२।४।६३) से 'गोत्रे' पद की अनुवृत्ति आ रही है। सूत्रस्थ यञ् और अञ्

**गोत्रेऽलुगचि ४।१।८९ ।** अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुक् स्यात् । गर्गाणां छात्राः । वक्ष्यमाणो वृद्धाच्छः । **( १७१२ ) आपत्यस्य च तद्धितेऽनाति ४।१।१५१ ।** हलः परस्यापत्यस्य यस्य लोपस्तद्धिते, न त्वाकारे । गार्गीयाः । अनाति किम् ? गार्ग्यायणः । प्राग्दीव्यतीये किम् ? गर्गेभ्यो हितं गर्गीयम् । अचि किम्? गर्गेभ्य

(१७११) **गोत्रेऽलुगचि** । प्राग्दीव्यत इति पदानुवृत्तेः प्रत्ययाधिकाराच्च प्राग्दीव्यतीये प्रत्यये इति लब्धम् । अचीति तद्विशेषणम् । अतस्तदादिविधिस्तदाह — **अजादावित्यादि** ।

(१७१२) **आपत्यस्येति** । 'ढे लोपोऽकद्र्वा' इत्यतो लोप इति 'सूर्यतिष्य' इत्यतो य इति षष्ठ्यन्तमनुवर्तते । 'हलस्तद्धितस्ये'त्यतो 'हलः' इति पञ्चम्यन्तं पदमनुवर्तते । तदाह — **हलः परस्येति** । **गार्गीयाः** — गार्ग्यशब्दाच्छप्रत्यये यञोऽलुकि न वृद्ध्यभावः, यकारस्य लोपे छस्य ईयादेशे 'गार्गीयाः' इति ।

पद प्रत्ययवाची हैं । प्रत्ययग्रहण परिभाषा से यञ् और अञ् में तदन्तविधि होती है । तदनुसार — "स्त्रीलिङ्ग से भिन्न अन्य लिङ्गों में गोत्र अर्थ में वर्तमान यञ् प्रत्ययान्त एवम् अञ् प्रत्ययान्त का बहुवचन में लोप होता है।" 'निर्दिश्यमानस्यादेशा भवन्ति' परिभाषा के अनुसार यह लोप 'यञ्' और 'अञ्' प्रत्यय का ही होता है ।

**उदाहरण—विग्रह**—गर्गस्य गोत्रापत्यानि पुमांसः (गर्ग + ङस् + यञ् = 'य' — 'गर्गादिभ्यो यञ्', विभक्तिलोप, यञ् = 'य' का लोप — 'यञञोश्च', प्रातिपदिक संज्ञा, विभक्ति — जस् = अस्, अ + अ = 'आ' — पूर्वसवर्णदीर्घ, स् = र् = :) = गर्गाः (गर्ग के बहुत से गोत्रापत्य पुरुष) । वत्सस्य गोत्रापत्यानि पुमांसः = वत्साः (वत्स के गोत्रापत्य पुरुष) — प्रक्रिया उक्तवत् ।

(१७११) **पद**—गोत्रे, अलुक्, अचि । **अनुवृत्ति**—प्राग्दीव्यतः । **विधिसूत्र** ।

**मूलार्थ**—अजादि प्राग्दीव्यतीय प्रत्यय विवक्षित रहते गोत्र प्रत्यय का लुक् नहीं होता । गर्गाणां छात्राः । 'वृद्धाच्छः' (छ प्रत्यय) ।

**विमर्श**—सूत्रस्थ पद 'अचि' में विषय-सप्तमी है । 'प्राग्दीव्यतः' की आधिकारिक अनुवृत्ति आ रही है । सामान्यतः अञ् और यञ् प्रत्यय का बहुवचन में लुक् होता है; किन्तु "अजादि प्राग्दीव्यतीय प्रत्यय की विवक्षा होने पर गोत्र प्रत्यय का अलुक् होता है ।"

(१७१२) **पद**—आपत्यस्य, च, तद्धिते, अनाति । **अनुवृत्ति**—हलः, यः, लोपः, भस्य, अङ्गस्य । **विधिसूत्र** ।

**मूलार्थ**—तद्धित प्रत्यय के परवर्ती रहने पर हल् से परे अपत्यार्थक यकार का लोप होता है, यदि आकार परे न हो तो । गार्गीयाः । 'अनाति' क्यों कहा? गार्ग्यायणः । 'प्राग्दीव्यतीय' क्यों कहा? गर्गीयम् । 'अचि' क्यों कहा? गर्गरूप्यम् ।

**विमर्श**—'अङ्गस्य' तथा 'भस्य' का अधिकार है । 'हलस्तद्धितस्य' (६।४।१५०) से 'हलः', 'सूर्यतिष्या०' (६।४।१४९) से 'यः' तथा 'ढे लोपोऽकद्र्वाः' (६।४।१४७) से 'लोपः' की अनुवृत्ति आ रही है । तदनुसार — "हल् (व्यञ्जन) वर्ण से उत्तरवर्ती भसंज्ञक अङ्ग के अपत्यप्रत्यय सम्बन्धी यकार का भी आकारभिन्न तद्धित प्रत्यय परे रहते लोप होता है ।"

**उदाहरण—विग्रह**—गर्गाणां छात्राः (गर्ग + यञ् — 'गर्गादिभ्यो यञ्', उपधावृद्धि, अकार-लोप) — गार्ग्य + जस् (यञ् का बहुवचन में लोप — 'यस्कादिभ्यो गोत्रे') = गर्गाः । 'गर्गाणां छात्राः' इस अर्थ की विवक्षा में — गार्ग्य + छ ( — 'वृद्धाच्छः', यञ् का अलुक् — 'गोत्रेऽलुगचि',

**आगतं गर्गरूप्यम्। (१७१३) जीवति तु वंश्ये युवा ४।१।१६३। वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव स्यान्न तु गोत्रसंज्ञम्। (१७१४) गोत्राद्यून्यस्त्रियाम् ४।१।९४। यून्यपत्ये विवक्षिते गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्, स्त्रियां तु न युवसंज्ञा। (१७१५) यञिञोश्च ४।१।१०१। गोत्रे यौ यञिञौ**

---

(१७१३) **जीवतीति**। वंश = उत्पादकपित्रादिपरम्परा, तत्र भवो वंश्यः, दिगादित्वाद् यत्। 'तस्यापत्यमि'त्यत अपत्यमित्यनुवर्तते। तदाह — **वंश्ये पित्रादाविति**।

(१७१४) **गोत्राद्यून्यस्त्रियामिति**। गोत्रप्रत्ययान्तादेव प्रत्यया इति नियमः क्रियते। तदाह — **गोत्राद्यूनीति**।

(१७१५) **यञिञोश्च**। 'गोत्रे' इत्यधिकृतं यञिञोर्विशेषणम्, न तु विधेयस्य फकः व्याख्यानादित्याह — **गोत्रे इति**।

---

छ = ईय, अ का लोप — 'यस्येति च', 'य्' का लोप — 'आपत्यस्य च तद्धितेऽनाति', प्रथमा बहुवचन) — गार्गीयाः।

**प्रत्युदाहरण** — प्रकृत सूत्र में 'अनाति' पद का निवेश किये जाने से 'गार्ग्यायणः' में अकार में आकार परे होने से य् का लोप नहीं होता। गार्ग्य + फक् (= 'फ', फ = आयन्, आकार परे होने से 'य्' का लोप नहीं होता, विभक्तिकार्य, णत्व) = गार्ग्यायणः। 'प्राग्दीव्यतीये' की अनुवृत्ति आने से 'गर्गेभ्यो हितम् — गर्गीयम्' (गर्गवंशजों के लिए हितकारी) में — गर्ग + छ (— 'तस्मै हितम्', छ = ईय, प्राग्दीव्यतीय न होने के कारण लुक् का निषेध नहीं, यञ् का लुक् — 'यञञोश्च') = गर्गीयम्। 'अचि' पद का निवेश 'गोत्रेऽलुगचि' सूत्र में होने से अजादि प्राग्दीव्यतीय प्रत्यय की विवक्षा में गोत्र प्रत्यय का लोप नहीं होगा। गर्गरूप्यम् (गर्गवंशजों से आगत) में यञ् का लोप होता है।

(१७१३) **पद**—जीवति तु वंश्ये युवा। **अनुवृत्ति**—अपत्यं पौत्रप्रभृति। **संज्ञासूत्र**।

**मूलार्थ**—वंशगत पिता आदि के जीवित रहते पौत्रादि का अपत्य जो चतुर्थादि उसकी युवसंज्ञा होती है, गोत्रसंज्ञा नहीं।

**विमर्श**—सूत्रस्थ 'जीवति तु वंश्ये' और अनुवृत्त 'पौत्रप्रभृति, अपत्यम्' संज्ञी है, 'युव' संज्ञा है। सूत्र में वंश्ये भवः = वंश्य शब्द 'सन्तति के नैरन्तर्य' का सूचक है। पूर्वसूत्र 'अपत्यं पौत्रप्रभृति गोत्रम्' (१७०७) से 'अपत्यं पौत्रप्रभृति' की अनुवृत्ति आ रही है। प्रथमान्त 'पौत्रप्रभृति' का षष्ठ्यन्त में विपरिणाम किया जाता है। तदनुसार — ''वंश्ये जीवति = पिता आदि के जीवित रहने पर पौत्रप्रभृति की सन्तान (प्रपौत्र आदि) की युवसंज्ञा होती है; गोत्र संज्ञा नहीं।''

(१७१४) **पद**—गोत्राद्, यूनि, अस्त्रियाम्। **अनुवृत्ति**—प्रत्ययः। **नियमसूत्र**।

**मूलार्थ**—युवा अपत्य विवक्षित होने पर गोत्रप्रत्ययान्त से ही प्रत्यय होता है, स्त्रीलिङ्ग में युवसंज्ञा नहीं होती है।

**विमर्श**—पूर्वसूत्र (१७१३) में गोत्रापत्य की युवसंज्ञा प्रतिपादित की गई है। युवापत्य अर्थ में प्रत्यय-विधान का यह नियमन करता है। तदनुसार — ''युवापत्य की विवक्षा होने पर गोत्र से ही प्रत्यय होता है। इसके साथ ही स्त्रीवाच्य में युवसंज्ञा नहीं होती।'' गोत्रसंज्ञा के कारण एक ही प्रत्यय होगा। 'अपत्य' पद पुत्र-पौत्रादि का वाचक है।

(१७१५) **पद**—यञिञोः, च। **अनुवृत्ति**—फक्, गोत्रे, तस्यापत्यम्, तद्धिताः। **विधिसूत्र**।

**तदन्तात्फक् । ( १७१६ ) आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ७।१।२ । प्रत्ययादेः फस्य आयन्, ढस्य एय्, खस्य ईन्, छस्य ईय्, घस्य इय् स्युः । गर्गस्य युवापत्यं गार्ग्यायणः । ( १७१७ ) अत इञ् ४।१।९५ । अपत्येऽर्थे । दाक्षिः ।**

---

(१७१६) **आयनेयीनीयिय इति** । स्पष्टम् । **गार्ग्यायणः** — गर्गस्य गोत्रापत्यं गार्ग्यः । गार्ग्यस्य गोत्रापत्यमिति विग्रहे 'जीवति तु वंश्ये युवा' इत्यनेन युवसंज्ञायां 'गोत्राद्यून्यस्त्रियाम्' इति सहकारेण 'यञिञोश्चे'ति गोत्रप्रत्ययान्तात् यञन्ताद् गार्ग्यशब्दात् फकि कलोपे 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' इति फस्य आयनादेशे गार्ग्य + आयन् इति जाते भसंज्ञायाम् 'यस्येति चे'त्यनेन गकारोत्तरवर्त्यकारलोपे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति नस्य णत्वे प्रातिपदिकत्वेन सौ रुत्वे विसर्गे च 'गार्ग्यायणः' इति ।

(१७१७) **अत इञ्** । अदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात् षष्ठ्यन्तादिञ् स्यादपत्येऽर्थे इत्यर्थः । **दाक्षिः** — दक्षस्यापत्यमिति विग्रहे 'अत इञ्' इत्यनेन इञ्प्रत्यये, दक्ष + ङस् + इञ्

---

**मूलार्थ**—गोत्र अर्थ में विहित यञन्त एवम् इञन्त प्रत्ययों से फक् प्रत्यय होता है ।

**विमर्श**—सूत्रार्थ की निष्पत्ति हेतु 'नडादिभ्यः फक्' (४।१।९९) से 'फक्' तथा 'गोत्रे कुञ्जादिभ्यः' (४।१।९८) से 'गोत्रे' पद की अनुवृत्ति आती है । यञ् और इञ् प्रत्यय होने से तदन्तविधि होती है । तदनुसार — ''गोत्रापत्य में विहित यञ्प्रत्ययान्त और इञ्प्रत्ययान्त से 'फक्' प्रत्यय होता है ।'' पूर्वोक्त (१७१४) नियम के कारण यह फक् प्रत्यय युवापत्य अर्थ में ही होगा ।

(१७१६) **पद**—आयनेयीनीयियः, फढखछघाम्, प्रत्ययादीनाम् । **विधिसूत्र** ।

**मूलार्थ**—प्रत्यय के आदि फ को **आयन्**, ढ को **एय**, ख को **ईन**, छ को **ईय** और घ को **इय** आदेश होते हैं । गार्ग्यायणः । दाक्षायणः ।

**विमर्श**—सूत्र स्वतः पूर्ण है । प्रकृत सूत्र द्वारा विविध तद्धित प्रत्ययों के स्थान में होने वाले आदेशों की व्यवस्था की जा रही है । तदनुसार — ''प्रत्यय के आदि में स्थित फ = आयन्, ढ = एय, ख = ईन, छ = ईय और घ = इय आदेश होते हैं ।''

**उदाहरण—विग्रह**—गर्गस्य युवापत्यम् । यञन्त — गार्ग्यः (गर्गस्य गोत्रापत्यम्) । गार्ग्यस्य अपत्यम् ('युव' संज्ञा — 'जीवति तु वंश्ये युवा', 'गोत्राद्यून्यस्त्रियाम्' के सहकार से 'यञिञोश्च' से फक् = फ, फ = आयन् आदेश — 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्') — गार्ग्य + आयन् (भ संज्ञा, 'अ' का लोप — 'यस्येति च', न् = ण् - णत्व — 'अट्कुप्वाङ्नुम्०', प्रातिपदिक संज्ञा, सु = स् = र् = :) = गार्ग्यायणः (गर्ग कुल का युवा सदस्य) । **विग्रह**—दक्षस्य गोत्रापत्यम् (दक्ष + इञ् = इ — 'अत इञ्', आदिवृद्धि, अकारलोप, विभक्तिकार्य) = दाक्षिः । दाक्षेः युवापत्यम् (दाक्षि + फक् = फ = आयन्, इकारलोप — 'यस्येति च', णत्व, विभक्तिकार्य) = दाक्षायणः (दक्ष का प्रपौत्र आदि) ।

(१७१७) **पद**—अत इञ् । **अनुवृत्ति**—तस्यापत्यम्, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—अपत्य अर्थ में अदन्त से इञ् प्रत्यय होता है । दाक्षिः ।

**विमर्श**—उक्त आधिकारिक पदों की अनुवृत्ति का प्रभाव विद्यमान है । सूत्रस्थ 'अतः' पद प्रातिपदिक का विशेषण होने से तदन्तविधि होती है । अतः ''षष्ठ्यन्त समर्थ अकारान्त प्रातिपदिक से अपत्य अर्थ में इञ् प्रत्यय होता है ।''

**उदाहरण—विग्रह**—दक्षस्य अपत्यम् (दक्ष + ङस् + इञ् = 'इ' — 'अत इञ्', सुप् का

**(१७१८) बाह्वादिभ्यश्च ४।१।९६।** बाहविः। औडुलोमिः। औडुलोमी। * लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः *। बाह्वादेरपवादः। उडुलोमाः। आकृतिगणोऽयम्।
**(१७१९) अनृष्यानन्तर्ये विदादिभ्योऽञ् ४।१।१०४।** ये त्वयानृषयस्तेभ्योऽपत्येऽन्यत्र तु गोत्रे। विदस्य गोत्रं वैदः। वैदौ। विदाः। पुत्रस्यापत्यं पौत्रः। पौत्रौ। यञञोश्चेति सूत्रे प्रवराध्यायप्रसिद्धं गोत्रं, तेनेह न – पौत्राः। एवं दौहित्रादयः।

---

इति जाते प्रातिपदिकत्वे सुपो लुकि भसंज्ञायां 'यस्येति चे'त्यकारलोपे आद्यचो वृद्धौ सौ रुत्वे विसर्गे च 'दाक्षिः' इति।

(१७१८) **बाह्वादिभ्यश्च**। इञ् स्यादित्यर्थः। **औडुलोमिः** — उडूनीव (=नक्षत्राणीव) लोमानि यस्य स उडुलोमा। उडुलोम्नोऽपत्यं पुमान् औडुलोमिः। इञ्, 'नस्तद्धिते' इति टिलोपः।

(१७१९) **अनृष्यानन्तर्ये**। अनृषीति लुप्तपञ्चमीकं पदम्, 'विदादिभ्योऽञ्' इति द्विरावर्तते। तथा च अनृष्यानन्तर्ये 'विदादिभ्योऽञ्' इति कृत्स्नमेकं वाक्यम्। 'विदादिभ्योऽञ्' इति वाक्यान्तरम्, इत्यभिप्रेत्याह — **ये त्वित्यादिना**। **वैदः** — विदस्य गोत्रापत्यमित्यत्र 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' इत्यञि भत्वे अकारलोपे, आद्यचो वृद्धौ विभक्तिकार्ये 'वैदः' इति।

---

लोप, आदिवृद्धि) — दाक्ष + इ (भसंज्ञा, 'अ' का लोप — 'यस्येति च', विभक्तिकार्य) = दाक्षिः (दक्ष का पुत्र या प्रपौत्र)।

(१७१८) **पद**—बाह्वादिभ्यः, च। **अनुवृत्ति**—इञ्, तस्यापत्यम्, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—अपत्य अर्थ में बाह्वादि शब्दों से इञ् प्रत्यय होता है। बाहविः। औडुलोमिः। औडुलोमी। **वा०** — लोमन् शब्दान्त से बहुत्वविशिष्ट अपत्य अर्थ में अ प्रत्यय होता है। बाह्वादि का यह अपवाद है। उडुलोमाः।

**विमर्श**—पूर्वसूत्र (१७१७) से 'इञ्' पद की अनुवृत्ति प्रमुखतया अपेक्षित है। शेष प्राकरणिक पदों की अनुवृत्ति यथापूर्व विद्यमान है। अतः "षष्ठ्यन्त समर्थ बाहु आदि से अपत्य अर्थ में इञ् प्रत्यय होता है।"

**उदाहरण**—बाहु + इञ् (= 'इ' — 'बाह्वादिभ्यश्च', आदिवृद्धि, 'पर्जन्यवल्लक्षणप्रवृत्ति' के अनुसार उ = ओ — गुण — 'ओर्गुणः', ओ = अव् आदेश, विभक्तिकार्य) = बाहविः। उडुलोम्नः अपत्यम् (उडुलोमन् + इञ् = इ, टि = 'अन्' का लोप — 'नस्तद्धिते', आदिवृद्धि, विभक्तिकार्य) = औडुलोमिः (उडुलोमन् का अपत्य)। औडुलोमी (प्र० द्विवचन)।

१. **वा०**—लोमन् शब्दान्त से बहुत्वविशिष्ट अपत्य अर्थ में अ प्रत्यय होता है। यह 'बाह्वादिभ्यश्च' का अपवाद है। **उदाहरण**—उडुलोम्नः अपत्यानि (उडुलोमन् + 'अ' वार्तिक से, टिलोप, उपधावृद्धि, प्रथमा बहुवचन जस् = अस्, पूर्वसवर्णदीर्घ, स् = र् = :) = उडुलोमाः (उडुलोमन् की सन्तानें)। यह आकृतिगण है।

(१७१९) **पद**—अनृषि, आनन्तर्ये, विदादिभ्यः, अञ्। **अनुवृत्ति**—तस्यापत्यम्, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—विदादिगणपठित ऋषिओं से गोत्र अर्थ में और ऋषि-भिन्नों से अपत्य अर्थ में अण् प्रत्यय होता है। वैदः। वैदौ। विदाः। पौत्रः। पौत्रौ इत्यादि।

**विमर्श**—'अनृषि' पद लुप्तपञ्चम्यन्त है। अतः 'अनृषिभ्यः' पद 'विदादिभ्यः' का विशेषण है। 'विदादिभ्यः' पद की आवृत्ति की जाती है। तदनुसार प्रथम अर्थ होता है — 'अनृष्यानन्तर्ये

**(१७२०) शिवादिभ्योऽण् ४।१।११२ । अपत्ये – शैवः । गाङ्गः । (१७२१) ऋष्यन्धकवृष्णिकुरुभ्यश्च ४।१।११४ । ऋषिभ्यः – वासिष्ठः । वैश्वामित्रः । अन्धकेभ्यः – श्वाफल्कः । वृष्णिभ्यः – वासुदेवः । कुरुभ्यः – नाकुलः । साहदेवः ।**

---

(१७२०) **शिवादिभ्योऽण्** । शिवादिभ्यः अण् स्यादपत्येऽर्थे । **शैवः** — शिवस्यापत्यमिति इञोऽपवादेन 'शिवादिभ्योऽण्' इत्यणि आदिवृद्धौ अकारलोपे विभक्तिकार्ये 'शैवः' इति ।

(१७२१) **ऋष्यन्धक इति** । अण् स्यादित्यर्थः ।

---

विदादिभ्यः अञ्' । द्वितीय — 'विदादिभ्य अञ् गोत्रे' । आधिकारिक पदों के साथ सूत्रस्थ पदों का अन्वय करने पर सूत्रार्थ होता है कि ''षष्ठ्यन्त समर्थ विदादि से गोत्रापत्य अर्थ में अञ् प्रत्यय होता है; किन्तु ऋषिवाचीभिन्न शब्दों से अनन्तरापत्य अर्थ में ही अञ् प्रत्यय होगा।'' आशय यह है कि ''विदादि गण के अन्तर्गत ऋषिवाची शब्दों से गोत्रापत्य अर्थ में अञ् प्रत्यय होता है; अनन्तरापत्य में नहीं।''

**उदाहरण—विग्रह**—विदस्य गोत्रापत्यम् (विद + अञ् = 'अ' — 'अनृष्यानन्तर्ये०', आदिवृद्धि, अकारलोप, विभक्तिकार्य) = वैदः (विद ऋषि के पौत्र) । प्र० द्विवचन — वैदौ । प्रथमा बहुवचन — विदाः (बहुवचन में 'यञञोश्च' से 'अञ्' का लुक्, अतः आदिवृद्धि नहीं होती) । पुत्रस्यापत्यं पुमान् (पुत्र + अञ् = 'अ', आदिवृद्धि, अकारलोप, विभक्तिकार्य) = पौत्रः (पुत्र का पुत्र) । पौत्रौ (द्विवचन) । 'यञञोश्च' सूत्र में प्रवराध्यायप्रसिद्ध गोत्र अर्थ का ग्रहण होता है । अर्थात् गोत्र पद केवल धर्मशास्त्रोक्त प्रवराध्याय में प्रसिद्ध कश्यप आदि सात ऋषियों की सन्तान के रूप में गृहीत है । अतः 'पौत्राः' (पुत्र के अनेक पुत्र) में 'अञ्' का लुक् नहीं हुआ । इसी प्रकार दौहित्राः (लड़की के बहुत-से पुत्र) में भी अञ् का लुक् नहीं होता ।

(१७२०) **पद**—शिवादिभ्यः, अण् । **अनुवृत्ति**—तस्यापत्यम्, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—अपत्य अर्थ में शिवादि से अण् प्रत्यय होता है । शैवः । गाङ्गः ।

**विमर्श**—आधिकारिक पदों की अनुवृत्ति पूर्ववत् आ रही है । तदनुसार — ''षष्ठ्यन्त समर्थ शिवादि प्रातिपदिकों से अपत्य में ही अण् प्रत्यय होता है।'' यह सूत्र इञ् आदि का बाधक है ।

**उदाहरण—विग्रह**—शिवस्य अपत्यम् (शिव + अण् = 'अ' — 'शिवादिभ्योऽण्', आदिवृद्धि, 'अ' का लोप, विभक्तिकार्य) = शैवः (शिव का पुत्र) । गङ्गायाः अपत्यं पुमान् (गङ्गा + अण् = 'अ', आदिवृद्धि, 'आ' का लोप, विभक्तिकार्य) = गाङ्गः (गङ्गा का पुत्र) ।

(१७२१) **पद**—ऋष्यन्धकवृष्णिकुरुभ्यः, च । **अनुवृत्ति**—अण्, तस्यापत्यम्, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—ऋष्यादि से अपत्य अर्थ में अण् प्रत्यय होता है । वासिष्ठः । वैश्वामित्रः । **अन्धकों से** श्वाफल्कः । **वृष्णियों से** — वासुदेवः । **कुरुओं से** — नाकुलः । साहदेवः ।

**विमर्श**—विधेयांश हेतु पूर्वसूत्र (१७२०) से 'अण्' की अनुवृत्ति आती है । अन्य उल्लिखित पदों की अनुवृत्ति का प्रभाव पूर्ववत् विद्यमान है । तदनुसार — ''ऋषिवाची, अन्धक, वृष्णि और कुरु वंश वाले समर्थ प्रातिपदिकों से भी अपत्य अर्थ में अण् प्रत्यय होता है।''

**ऋषिवाची के उदाहरण**—(१) वसिष्ठस्य अपत्यं पुमान् (वसिष्ठ + अण् = 'अ' — 'ऋष्यन्धक०', आदिवृद्धि, 'अ' का लोप एवं विभक्तिकार्य) = वासिष्ठः (वसिष्ठ का पुत्र) । (२) **विश्वामित्रस्य** अपत्यं पुमान् (प्रक्रिया पूर्ववत्) = वैश्वामित्रः (विश्वामित्र का पुत्र) । (३) **अन्धकवंश का उदाहरण** — श्वाफल्कः (विग्रह आदि पूर्ववत्) = श्वफल्क का पुत्र । **वृष्णिवंश का उदाहरण—**

**( १७२२ ) मातुरुत्संख्यासम्भद्रपूर्वायाः ४।१।११५ ।** संख्यादिपूर्वस्य मातृशब्दस्य उदादेशः स्यादण्प्रत्ययश्च । द्वैमातुरः । षाण्मातुरः । भाद्रमातुरः । **( १७२३ ) स्त्रीभ्यो ढक् ४।१।१२० ।** स्त्रीप्रत्ययान्तेभ्यो ढक् । वैनतेयः । **( १७२४ ) कन्यायाः कनीन**

---

(१७२२) **मातुरुत्संख्यासम्भद्रपूर्वायाः** ।**द्वैमातुरः** — द्वयोर्मात्रोरपत्यं पुमान् इति विग्रहे 'तद्धितार्थ०' इति समासे सुपो लुकि 'मातुरुत्संख्यासंभद्रपूर्वायाः' इति मातुरुदादेशे अणि च 'द्वि मातुर अ' इति जाते आद्यचो वृद्धौ विभक्तिकार्ये 'द्वैमातुरः' इति ।

(१७२३) **स्त्रीभ्यो ढक्** । स्त्रीप्रत्ययान्तेभ्योऽपत्येऽर्थे ढक् स्यात् । **वैनतेयः** — विनताया अपत्यमिति विग्रहे 'स्त्रीभ्यो ढक्' इति ढकि ढस्येयादेशे 'किति चे'त्यादिवृद्धौ सौ रुत्वे विसर्गे 'वैनतेयः' इति ।

---

(४) वसुदेवस्य अपत्यम् (प्रक्रिया उक्तवत्) = वासुदेवः (वसुदेव का पुत्र — कृष्ण) । (५) आनिरुद्धः (विग्रहादि पूर्ववत्) = अनिरुद्ध का पुत्र । **कुरुवंश का उदाहरण**—(६) नाकुलः (नकुल का पुत्र) । (७) साहदेवः (सहदेव का पुत्र) ।

(१७२२) **पद**—मातुः, उत्, संख्यासंभद्रपूर्वायाः । **अनुवृत्ति**—अण्, तस्यापत्यम्, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—संख्यादिपूर्वक मातृ शब्द को उत् आदेश होता है और अण् प्रत्यय होता है । द्वैमातुरः । षाण्मातुरः । भाद्रमातुरः ।

**विमर्श**—पूर्ववत् 'अण्' आदि पदों की अनुवृत्ति आ रही है । वाक्यभेद से सूत्रस्थ 'मातुः' पद पञ्चमी एवं षष्ठी दोनों विभक्तियों का सूचक है । अण् प्रत्यय के विधान हेतु पञ्चमी विभक्ति तथा 'ऋ' के स्थान पर 'उत्' आदेश के लिए षष्ठी विभक्ति मानी जाती है । अलोऽन्त्यपरिभाषा के अनुसार 'उत्' आदेश मातृ के ऋ के स्थान पर होता है । तदनुसार — ''संख्यावाचक शब्द, सम् एवम् भद्र पूर्वक मातृ शब्द से अपत्य अर्थ में अण् प्रत्यय होता है और मातृशब्दावयव ऋ के स्थान पर उत् = 'उ' आदेश होता है ।''

**उदाहरण—विग्रह**—द्वयोः मात्रोः अपत्यम् (द्वि + ओस्, मातृ + ओस् — समास, 'तद्धितार्थोत्तर-पदसमाहारे च', विभक्तिलोप, अण् = 'अ' तथा ऋ = उत् = 'उ' आदेश, रपर) — 'द्वि मात् उ र् + अ' (आदिवृद्धि इ = ऐ, विभक्तिकार्य) = द्वैमातुरः (दो माताओं की सन्तान अर्थात् जिसे दो माताएँ पुत्र मानें) । षण्णां मातॄणाम् अपत्यम् (षष् + आम्, मातृ + आम् — समास, विभक्तिलोप, अण् तथा उत् आदेश, रपर, आदिवृद्धि, विभक्तिकार्य) = षाण्मातुरः (छः माताओं द्वारा पालित) । भद्रा चासौ माता (कर्मधारयसमास) — भद्रमातुः अपत्यम् (समास — 'तद्धितार्थो०', विभक्तिलोप, भद्रा को पुंवद्भाव, अण् = 'अ', 'ऋ' = 'उ', रपर, आदिवृद्धि, विभक्तिकार्य) = भाद्रमातुरः (अच्छी माँ का पुत्र) ।

(१७२३) **पद**—स्त्रीभ्यः, ढक् । **अनुवृत्ति**—तस्यापत्यम्, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—अपत्य अर्थ में स्त्रीप्रत्ययान्तों से ढक् होता है । वैनतेयः ।

**विमर्श**—प्राकरणिक अनुवृत्तियों का प्रभाव विद्यमान है । तदनुसार — ''स्त्रीप्रत्ययान्त (जिनके अन्त में 'टाप्' आदि स्त्रीप्रत्यय हों) षष्ठ्यन्त समर्थ प्रातिपदिकों से अपत्य अर्थ में 'ढक्' प्रत्यय होता है ।''

**उदाहरण—विग्रह**—विनतायाः अपत्यम् (विनता + ढक् = ढ — **'स्त्रीभ्यो ढक्'**, ढ = **'एय'** —

**च ४।१।११६। चादञ्। कानीनो व्यासः कर्णश्च। (१७२५) राजश्वसुराद्यत् ४।१।१३७। *राज्ञो जातावेव*। (१७२६) ये चाभावकर्मणोः ६।४।१६८। यादौ तद्धिते अन् प्रकृत्या स्यान्न तु भावकर्मणोः। राजन्यः। श्वशुर्यः। जातावेवेति**

---

(१७२४) अपत्यार्थे कन्याशब्दस्य 'कनीन' इत्यादेशो भवति 'अण्' प्रत्ययश्चेत्यर्थः।

(१७२५) **राजश्वशुराद्यत्**। राजन्शब्दात् श्वशुरशब्दाच्चापत्ये यत्प्रत्ययः स्यादित्यर्थः। **राज्ञो जातावेवेति**। जातिः समुदायवाच्या चेदित्यर्थः।

(१७२६) **ये चेति**। 'अन्' इति सूत्रमनुवर्तते 'प्रकृत्यैकाच्' इत्यतः प्रकृत्येति च। 'अङ्गस्ये'त्यधिकारप्राप्तप्रत्ययो यकारेण विशिष्यते, तेन तदादिविधिस्तदाह — **यादाविति**।

---

'आयनेयीनीयियः०', आदि वर्ण इ = 'ऐ' — वृद्धि, आकारलोप — 'यस्येति च', विभक्तिकार्य) = वैनतेयः (विनता का पुत्र — गरुड)।

(१७२४) **पद**—कन्यायाः, कनीन, च। **अनुवृत्ति**—अण्, तस्यापत्यम्, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—कन्या शब्द से अपत्य अर्थ में अण् प्रत्यय होता है और कन्या शब्द को 'कनीन' आदेश होता है। कानीनः।

**विमर्श**—पूर्वसूत्र (१७२३) से विधेयांश 'अण्' की अनुवृत्ति आती है। शेष प्राकरणिक अनुवृत्तियाँ यथापूर्व विद्यमान हैं। तदनुसार — ''षष्ठ्यन्त कन्या शब्द से अपत्य अर्थ में अण् प्रत्यय होता है तथा कन्या शब्द के स्थान में 'कनीन' आदेश होता है।'' अनेकाल् होने से 'कनीन' सम्पूर्ण कन्या शब्द के स्थान में होता है।

**उदाहरण—विग्रह**—कन्यायाः अपत्यं पुमान् (कन्या + अण् = 'अ', कन्या = 'कनीन' आदेश — 'कन्यायाः कनीन च', आदिवृद्धि, भसंज्ञा, 'अ' का लोप, विभक्तिकार्य) = कानीनः (कन्या अर्थात् अविवाहिता की सन्तति-व्यास या कर्ण)।

**विशेष**—''शास्त्रोक्त विधि से विवाह होने से पूर्व पुरुष के साथ संयोग होने पर भी 'कन्या' कहलाती है।'' यह महाभाष्यकार पतञ्जलि ने प्रकृत सूत्र के भाष्य में स्पष्ट किया है। 'प्रदीप' व्याख्या में कैयट ने उक्त का आशय स्पष्ट करते हुए कहा है कि मुनि एवं देवता के माहात्म्य से पुरुष संयोग होने पर भी व्यास एवं कर्ण को कन्या की सन्तति कहा गया।

(१७२५) **पद**—राजश्वशुराद्, यत्। **अनुवृत्ति**—तस्यापत्यम्, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—राजन् और श्वशुर शब्द से अपत्य अर्थ में यत् प्रत्यय होता है। **वा०** राजन् शब्द से यत्प्रत्यय जाति अर्थ में ही कहा जाय।

(१७२६) **पद**—ये, च, अभावकर्मणोः। **अनुवृत्ति**—अन्, प्रकृत्या, भस्य, अङ्गस्य। **विधिसूत्र**।

**मूलार्थ**—भाव और कर्मार्थक भिन्न यादि तद्धित प्रत्यय परे रहते 'अन्' को प्रकृति**भाव** होता है। राजन्यः। श्वशुर्यः। पूर्व सूत्र में 'जातावेव' क्यों कहा? राजनः।

**विमर्श**—प्रकृत सूत्र में 'नस्तद्धिते' (६।४।१४४) से 'तद्धिते', 'प्रकृत्यैकाच्' (६।४।१६३) से 'प्रकृत्या' तथा सम्पूर्ण 'अन्' (१७२६) सूत्र की अनुवृत्तियाँ आ रही हैं। सूत्रस्थ 'ये' पद में 'तद्धिते' का विशेषण होने से तदादिविधि होती है। 'भस्य' एवम् 'अङ्गस्य' का आधिकारिक प्रभाव भी विद्यमान है। तदनुसार — ''भाव एवं कर्म से भिन्न अन्य अर्थों में वर्तमान यकारादि तद्धित प्रत्ययों के परवर्ती होने पर भी अन्नन्त भसंज्ञक अङ्ग को प्रकृतिभाव होता है। अर्थात् 'अन्' का लोप नहीं होता।''

**किम् ? (१७२७) अन् ६।४।१६७ । प्रकृत्याऽणि परे राजनः । (१७२८) क्षत्राद् घः ४।१।१३८ । क्षत्रियः । जातावित्येव । क्षात्रिरन्यः । (१७२९) रेवत्यादि-भ्यष्ठक् ४।१।१४६ । (१७३०) ठस्येकः ७।३।५० । अङ्गात्परस्य ठस्येका-**

---

**राजन्यः** — क्षत्रियात् क्षत्रियायां स्वभार्यायामुत्पन्नो 'राजन्यः' इति प्रसिद्धम् । राज्ञोऽपत्यमि'ति विग्रहे राजन्शब्दात् 'तस्याऽपत्यमि'त्यणि प्राप्ते 'राजश्वशुराद्यत्' इति यत्प्रत्यये 'राजन् + ङस् + यत्' इति स्थिते प्रातिपदिकत्वे सुपो लुकि 'ये चाऽभावकर्मणोः' इत्यनेन 'अन्' इत्यस्य प्रकृति-भावात् टिलोपाभावे सौ रुत्वे विसर्गे च राजन्यः ।

(१७२७) **अन्** । '**इनण्य**नपत्ये' इत्यत अणीत्यनुवर्तते 'प्रकृत्यैकाच्' इत्यतः प्रकृत्येति च । तदाह — **अणीति** ।

(१७२८) **क्षत्राद्घः** । अपत्ये इति शेषः । **क्षत्रियः** — क्षत्रशब्दात् 'क्षत्राद्घः' इति घ-प्रत्यये घस्य इयादेशे 'यस्येति चे'त्यकारलोपे विभक्तिकार्ये 'क्षत्रियः' इति ।

(१७२९) **रेवत्यादिभ्य इति** । 'अपत्ये' इत्यर्थः । ढगाद्यपवादः ।

(१७३०) **ठस्येकः** । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते । अत आह — **अङ्गादिति** ।

---

**उदाहरण—विग्रह**—राज्ञः क्षत्रियायां जातम् अपत्यं पुमान् (राजन् + यत् = 'य' — 'राज-श्वशुराद्यत्', 'अन्' का प्रकृतिभाव — 'ये चाभावकर्मणोः', प्रातिपदिकसंज्ञा, सु = स् = र् = :) = राजन्यः (राजा का क्षत्रिया में उत्पन्न पुत्र) । श्वशुरस्य अपत्यम् पुमान् (श्वशुर + यत् = य, 'अ' का लोप तथा विभक्तिकार्य) = श्वशुर्यः (श्वशुर का पुत्र - साला) ।

(१७२७) **पद**—अन् । **अनुवृत्ति**—अणि, प्रकृत्या, भस्य, अङ्गस्य । **विधिसूत्र** ।

**मूलार्थ**—अण् प्रत्यय के परवर्ती रहते 'अन्' को प्रकृतिभाव होता है । राजनः ।

**विमर्श**—'इनण्यनपत्ये' (६।४।१६४) से 'अणि' तथा 'प्रकृत्यैकाच्' (६।४।१६३) से 'प्रकृत्या' की अनुवृत्ति आती है । उक्त आधिकारिक पदों का प्रभाव भी वर्तमान है । अतः "अण् प्रत्यय परवर्ती होने पर भी 'अन्'अन्त वाले भसंज्ञक अङ्ग को प्रकृतिभाव होता है ।"

**उदाहरण**—उक्त (१७२५) सूत्र में स्थित वार्तिक में 'जातावेव' का ग्रहण होने से राजा से भिन्न जाति में पुत्र उत्पन्न करने के अर्थ में यत् प्रत्यय नहीं होता । राजन् + अण् (= अ — 'प्राग्दीव्यतोऽण्', टिलोप की प्राप्ति होने पर 'अन्' सूत्र से 'अन्' का प्रकृतिभाव, विभक्तिकार्य) = राजनः ।

(१७२८) **पद**—क्षत्राद्, घः । **अनुवृत्ति**—तस्यापत्यम्, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—क्षत्र शब्द से अपत्य अर्थ में 'घ' प्रत्यय होता है, समुदाय से जाति गम्यमान होने पर । क्षत्रियः । अन्यत्र - क्षात्रिः ।

**विमर्श**—उक्त अनुवृत्त पदों के साथ सूत्रस्थ पदों का अन्वय करने पर यह सूत्रार्थ निष्पन्न होता है कि "क्षत्र शब्द से अपत्य अर्थ में घ प्रत्यय होता है ।" यह जाति अर्थ प्रतीत होने पर ही होता है ।

**उदाहरण**—क्षत्रस्य अपत्यम् (क्षत्र + घ, घ = इय, 'अ' का लोप तथा विभक्तिकार्य) = क्षत्रियः (क्षत्र अर्थात् रक्षक का पुत्र) । अन्यत्र अर्थात् क्षत्र से शूद्रा में उत्पन्न सन्तति के अर्थ में 'क्षात्रिः' (क्षत्र + इञ्) प्रयोग होगा ।

(१७२९) **पद**—रेवत्यादिभ्यः, ठक् । **अनुवृत्ति**—तस्यापत्यम्, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ—रेवत्यादि शब्दों से अपत्य अर्थ में 'ठक्' प्रत्यय होता है ।**

**देशः। रैवतिकः। (१७३१) गोत्रे कुञ्जादिभ्यश्च्फञ् ४।१।९८। (१७३२) व्रातच्फञोरस्त्रियाम् ५।३।११३। व्रातवाचिभ्यश्च्फञन्तेभ्यश्च स्वार्थे ञ्यप्रत्ययः स्यात्। कौञ्जायन्यः। कौञ्जायिन्यौ। बहुत्वे लुग् वक्ष्यते ब्राध्नायन्यः। (१७३३)**

---

**रैवतिकः** — रेवत्या अपत्यं पुमान् इति विग्रहे 'रेवत्यादिभ्यष्ठक्' इति ठकि 'ठस्येकः' इति ठस्य इकादेशे आदिवृद्धौ अकारलोपे सौ रुत्वे विसर्गे च 'रैवतिकः' इति।

(१७३१) **गोत्रे कुञ्जादिभ्यश्च्फञ्**। स्पष्टम्।

(१७३२) **व्रातच्फञोः**। 'पूगाञ्ञ्योऽग्रामणीपूर्वादि'त्यतः 'ञ्यः' इत्यनुवर्तते। तदाह — **व्रातवाचिभ्य इति**। **कौञ्जायन्यः** — कुञ्जस्य गोत्रापत्यमिति विग्रहे कुञ्जशब्दात् च्फञ्प्रत्यये फस्य आयनादेशे आदिवृद्धौ, अकारलोपे ततः कौञ्जायनशब्दात् ञ्यप्रत्यये सौ रुत्वे विसर्गे च 'कौञ्जायन्यः' इति।

---

**विमर्श**—उक्त प्राकरणिक एवम् आधिकारिक पदों की अनुवृत्ति का प्रभाव विद्यमान होने से उक्त अर्थ निष्पन्न होता है।

(१७३०) **पद**—ठस्य, इकः। **अनुवृत्ति**—अङ्गस्य। **विधिसूत्र**।

**मूलार्थ**—अङ्ग से परे 'ठ' को 'इक' आदेश होता है। रैवतिकः।

**विमर्श**—अधिकृत 'अङ्गस्य' का पञ्चमी विभक्ति में विपरिणाम होता है। तदनुसार — "अङ्ग से परवर्ती 'ठ' के स्थान में 'इक' आदेश हो जाता है।"

**उदाहरण—विग्रह**—रेवत्याः पुत्रः (रेवती + ठक् = 'ठ' — १७२९ सूत्र से, ठ = 'इक' — 'ठस्येकः', आदिवृद्धि, 'ई' का लोप — 'यस्येति च', सु = स् = र् = :) = रैवतिकः (रेवती का पुत्र)।

(१७३१) **पद**—गोत्रे, कुञ्जादिभ्यः, च्फञ्। **अनुवृत्ति**—तस्यापत्यम्, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—गोत्र अर्थ में कुञ्जादि शब्दों से च्फञ् प्रत्यय होता है।

**विमर्श**—प्राकरणिक पदों की अनुवृत्ति के साथ एकवाक्यता होने पर यह अर्थ स्पष्ट होता है कि "कुञ्ज आदि षष्ठ्यन्त समर्थ प्रातिपदिकों से गोत्र अर्थ में च्फञ् प्रत्यय होता है।"

(१७३२) **पद**—व्रातच्फञोः, अस्त्रियाम्। **अनुवृत्ति**—ञ्यः, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—व्रातवाचक से और च्फञ् प्रत्ययान्त से स्वार्थ में ञ्य प्रत्यय होता है। कौञ्जायन्यः। कौञ्जायन्यौ। बहुवचन की विवक्षा में अण् का लुक् कहा जायेगा। ब्राध्नायन्यः।

**विमर्श**—प्रकृत सूत्र में 'पूगाञ्ञ्योऽग्रामणीपूर्वात्' (५।३।११२) से स्वार्थ में विहित 'ञ्यः' की अनुवृत्ति आती है। अन्य प्राकरणिक अनुवृत्तियों का प्रभाव पूर्ववत् विद्यमान है। सूत्रस्थ 'वातच्फञोः' षष्ठ्यन्त पद पञ्चमी के अर्थ में प्रयुक्त हुआ है। तदनुसार — "व्रातवाचक एवम् च्फञ्प्रत्ययान्त प्रातिपदिकों से स्वार्थ में 'ञ्य' प्रत्यय होता है, किन्तु स्त्रीलिंग में नहीं होता।"

**उदाहरण—विग्रह**—कुञ्जस्य गोत्रापत्यम् (कुञ्ज + ङस् + च्फञ् = 'फ' — 'गोत्रे कुञ्जादिभ्यश्च्फञ्', च्फञ् में 'च्' तथा 'ञ्' की इत्संज्ञा लोप) — कुञ्ज + फ (फ = आयन्, आदिवृद्धि, 'अ' का लोप) — कौञ्जायन + ञ्य (= 'य' — 'व्रातच्फञोरस्त्रियाम्', 'अ' का लोप — 'यस्येति च', विभक्तिकार्य) = कौञ्जायन्यः (कुञ्ज का गोत्रापत्य)। द्विवचन में — कौञ्जायन्यौ। बहुवचन में तद्राज-संज्ञा होने से 'ञ्य' प्रत्यय का लोप हो जाता है — 'तद्राजस्य बहुषु तेनैवास्त्रियाम्'। अतः बहुवचन में — '**कौञ्जायनाः**।' ब्रध्नस्य गोत्रापत्यम् (प्रक्रिया उक्तवत्) = **ब्राध्नायन्यः** (ब्रध्न का पौत्र आदि)।

**नडादिभ्यः फक् ४।१।९९ । गोत्र इत्येव । नाडायनः । चारायणः । अनन्तरो नाडिः । ( १७३४ ) अश्वादिभ्यः फञ् ४।१।११० । गोत्रे आश्वायनः । ( १७३५ ) इतश्चानिञः ४।१।१२२ । इकारान्ताद् द्व्यचोऽपत्ये ढक्, न त्विञन्ताद् । दौलेयः ।**

---

(१७३३) **नडादिभ्यः फक्** । स्पष्टम् । इञोऽपवादः ।

(१७३४) **अश्वादिभ्यः फञ्** । स्पष्टम् ।

(१७३५) **इतश्चानिञः** । अस्त्रीप्रत्ययान्तार्थमिदं सूत्रम् । **दौलेयः** — दुलेरपत्यं पुमान्, ढक्, ढस्य एयादेशः, 'किति चे'त्यादिवृद्धिः ।

---

(१७३३) **पद**—नडादिभ्यः, फक् । **अनुवृत्ति**—गोत्रे, तस्यापत्यम्, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—गोत्र अर्थ में ही नडादि शब्दों से फक् होता है। नाडायनः। चारायणः। अनन्तर = साक्षात्पुत्र अर्थ में — नाडिः ।

**विमर्श**—पूर्वसूत्र (१७३१) से 'गोत्रे' पद की अनुवृत्ति प्रमुख रूप से अपेक्षित है । अन्य प्राकरणिक अनुवृत्तियाँ यथापूर्व आ रही हैं । तदनुसार — ''नडादिगणपठित षष्ठ्यन्त प्रातिपदिकों से गोत्र अर्थ में फक् प्रत्यय होता है ।''

**उदाहरण—विग्रह**—नडस्य गोत्रापत्यम् (नड + फक् = 'फ' — 'नडादिभ्यः फक्', फ = आयन्, आदिवृद्धि — 'किति च', भसंज्ञा, 'अ' का लोप तथा विभक्तिकार्य) = नाडायनः । चरस्य गोत्रापत्यम् (प्रक्रिया उक्तवत्) = चारायणः (चर का गोत्रापत्य) ।

**प्रत्युदाहरण**—'गोत्रे' की अनुवृत्ति होने के कारण साक्षात्पुत्र की विवक्षा में — **नाडिः** (नड + इञ्) ।

(१७३४) **पद**—अश्वादिभ्यः, फञ् । **अनुवृत्ति**—गोत्रे, तस्यापत्यम्, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—अश्वादि शब्दों से गोत्र अर्थ में फञ् प्रत्यय होता है । आश्वायनः ।

**विमर्श**—पूर्ववत् 'गोत्रे' तथा अन्य प्राकरणिक पदों की अनुवृत्ति का प्रभाव विद्यमान है । अतः ''षष्ठी-समर्थ अश्वादि प्रातिपदिकों से गोत्रापत्य अर्थ में फञ् प्रत्यय होता है ।''

**उदाहरण—विग्रह**—अश्वस्य गोत्रापत्यम् (अश्व + फञ् = फ, फ = आयन्, आदिवृद्धि, 'अ' का लोप, विभक्तिकार्य) = आश्वायनः (अश्व का पौत्र आदि) ।

(१७३५) **पद**—इतः, च, अनिञः । **अनुवृत्ति**—द्व्यचः, ढक्, तस्यापत्यम्, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—इकारान्त द्व्यच्क शब्द से अपत्य अर्थ में 'ढक्' प्रत्यय होता है; इञन्त से नहीं होता । दौलेयः । नैधेयः । आत्रेयः । आत्रेयौ ।

**विमर्श**—प्रकृत सूत्र में 'द्व्यचः' (४।१।१२१) सूत्र तथा 'स्त्रीभ्यो ढक्' (१७२३) से 'ढक्' की अनुवृत्ति आती है । तदनुसार — ''इञन्त-भिन्न द्व्यच्क (दो अच् वाले) इकारान्त प्रातिपदिकों से भी अपत्य अर्थ में ढक् प्रत्यय होता है ।''

**उदाहरण—विग्रह**—दुलेः अपत्यम् (दुलि + ढक् = ढ — 'इतश्चानिञः', ढ = एय, आदिवृद्धि, इकारलोप तथा विभक्तिकार्य) = दौलेयः (दुलि का अपत्य) । निधेः अपत्यम् (ढक् आदि पूर्ववत्) = नैधेयः (निधि का पुत्र) । यहाँ नि + √धा + कि = इ — 'उपसर्गे घोः किः' प्रत्ययान्त है, इञन्त नहीं है। अत्रेः अपत्यम् (प्रक्रिया उक्तवत्) = आत्रेयः (अत्रि का पुत्र) । आत्रेयौ (द्विवचनान्त) ।

**नैधेयः । आत्रेयः । आत्रेयौ । ( १७३६ ) अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च २।४।६५ ।** एभ्यो गोत्रप्रत्ययस्य लुक् स्यात्, तत्कृते बहुत्वे, न तु स्त्रियाम् । अत्रयः । भृगवः । कुत्साः । वसिष्ठाः । गोतमाः । अङ्गिरसः । **( १७३७ ) शुभ्रादिभ्यश्च ४।१।१२३ ।** शौभ्रेयः । **( १७३८ ) कल्याण्यादीनामिनङ् ४।१।१२६ ।** एषामिनङ् स्यात्, ढक् च । कल्याणिनेयः । बान्धकिनेयः । **( १७३९ ) कुलटाया वा**

---

(१७३६) **अत्रिभृगु०** । 'यस्कादिभ्यो गोत्रे' इत्यस्माद् 'गोत्रे' इत्यनुवर्तते । 'ण्यक्षत्रियार्ष०' इत्यतो लुगिति 'तद्राजस्य बहुषु तेनैवास्त्रियामि'त्यतश्च 'बहुषु तेनैवास्त्रियामि'ति चानुवर्तते । तदाह — **एभ्यो गोत्रेति** ।

(१७३७) **शुभ्रादिभ्यश्च** । ढक् स्यादित्यर्थः ।

(१७३८) **कल्याणिनेय इति** । कल्याण्या अपत्यमिति विग्रहे 'कल्याण्यादीनामिनङ्' इति ईकारस्य इनङादेशे कल्याणिन्‌शब्दात् ढकि, ढस्य एयादेशे आदिवृद्धौ स्वादिकार्ये 'कल्याणिनेयः' इति ।

---

(१७३६) **पद**—अत्रि-भृगु-कुत्स-वसिष्ठ-गोतमाङ्गिरोभ्यः, च । **अनुवृत्ति**—गोत्रे, ढक्, बहुषु तेनैवास्त्रियाम् । **विधिसूत्र** ।

**मूलार्थ**—अत्रि आदि से तत्कृत बहुत्व गम्य होने पर गोत्र प्रत्यय का लुक् होता है, स्त्रीलिङ्ग में नहीं । अत्रयः । भृगवः । कुत्साः । वसिष्ठाः । गोतमाः । अङ्गिरसः ।

**विमर्श**—'यस्कादिभ्यो गोत्रे' (२।४।६३) से 'गोत्रे' पद की अनुवृत्ति प्रमुखतया अपेक्षित है । 'ण्यक्षत्रियार्ष०' (२।४।५८) से 'लुक्' तथा 'तद्राजस्य बहुषु०' (२।४।६४) से 'बहुषु तेनैवास्त्रियाम्' की अनुवृत्ति आ रही है । तदनुसार — "अत्रि, भृगु, कुत्स, वसिष्ठ, गोतम तथा अङ्गिरस शब्दों से स्त्रीलिङ्ग के अतिरिक्त बहुवचन में विवक्षित गोत्रापत्य प्रत्यय का लोप होता है ।"

**उदाहरण**—अत्रेः अपत्यानि (अत्रि + ढक् = 'ढ' — 'इतश्चानिञः', 'ढक्' का लुक् — प्रकृत सूत्र से, विभक्ति जस् = अस्) — अत्रि + अस् (इ = 'ए' — गुण — 'जसि च', ए = अय् आदेश, स् = र् = :) = अत्रयः (अत्रि के अनेक पौत्र आदि) । भृगोः अपत्यानि (बहुत्व विवक्षा में अण् —'ऋष्यन्धकवृष्णि०', अण् का प्रकृत सूत्र से लुक्) = भृगवः । वसिष्ठस्य अपत्यानि (प्रक्रिया उक्तवत्) = वसिष्ठाः (वसिष्ठ के पौत्र आदि) । कुत्साः (कुत्स के पौत्रादि) । अङ्गिरसः (अङ्गिरस् के पौत्र आदि) । अण् आदि का लुक् होने से आदिवृद्धि नहीं होती ।

(१७३७) **पद**—शुभ्रादिभ्यः, च । **अनुवृत्ति**—ढक्, तस्यापत्यम्, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—शुभ्रादि से अपत्य अर्थ में ढक् प्रत्यय होता है । शौभ्रेयः ।

**विमर्श**—पूर्वसूत्र (१७२३) से 'ढक्' की अनुवृत्ति प्रमुखतया अपेक्षित है । अन्य प्राकरणिक पदों की अनुवृत्ति का प्रभाव यथापूर्व विद्यमान है । तदनुसार "शुभ्रादिगणपठित शब्दों से भी अपत्य अर्थ में ढक् प्रत्यय होता है ।"

**उदाहरण**—**विग्रह**—शुभ्रस्य अपत्यम् (शुभ्र + ढक् = ढ — 'शुभ्रादिभ्यश्च', ढ = एय, आदिवृद्धि, 'अ' का लोप तथा विभक्तिकार्य) = शौभ्रेयः (शुभ्र का पुत्र) ।

(१७३८) **पद**—कल्याण्यादीनाम्, इनङ् । **अनुवृत्ति**—ढक्, तस्यापत्यम्, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—कल्याणी आदि शब्दों से अपत्य अर्थ में ढक् प्रत्यय होता है और इनङ् आदेश होता है । कल्याणिनेयः । बान्धकिनेयः ।

**५।३।६६ । सुबन्तात्तिङन्ताच्च । प्रशस्तः पटुः पटुरूपः । पचतिरूपम् । (२१५६) ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ५।३।६७ । ईषदूनो विद्वान् विद्वत्कल्पः । विद्वद्देश्यः । विद्वद्देशीयः । पचतिकल्पम् । (२१५७) विभाषा सुपो बहुच् पुरस्तात्तु ५।३।६८ । ईषदूनः पटुर्बहुपटुः । पटुकल्पः । सुपः किम् ? यजतिकल्पम् ।**

(२१५६) **ईषदसमाप्ताविति** । ईषदसमाप्तिविशिष्टेऽर्थे विद्यमानात् सुबन्तात् तिङन्ताच्च स्वार्थे कल्पप्-देश्य-देशीयर् इत्येते प्रत्ययाः स्युरित्यर्थः । **विद्वत्कल्प इति** । ईषदूनः विद्वान् इति विग्रहे विद्वस्शब्दात् 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति कल्पप्प्रत्यये सस्य जश्त्वे चर्त्वे च प्रातिपदिकत्वे सौ रुत्वे विसर्गे च 'विद्वत्कल्पः' इति । देशीयर्प्रत्यये कृते - 'विद्वद्देशीयः' इति रूपम् ।

(२१५७) **विभाषेति** । ईषदसमाप्तिविशिष्टेऽर्थे सुबन्तात् बहुच्प्रत्ययो वा स्यात्स च प्रागेव न तु परत इत्यर्थः ।

**मूलार्थ**—सुबन्त और तिङन्त से प्रशंसा अर्थ में रूपप् प्रत्यय होता है । पटुरूपः । पचतिरूपम् ।

**विमर्श**—पूर्वसूत्र 'तिङश्च' (२१३९) से 'तिङः' की अनुवृत्ति प्रमुखतया अपेक्षित है । तदनुसार "प्रशंसा अर्थ में प्रातिपदिक तथा तिङन्त से स्वार्थ में 'रूपप्' प्रत्यय होता है ।"

**उदाहरण**—प्रशस्तः पटुः (पटु + रूपप् = रूप, विभक्तिकार्य) = पटुरूपः (अच्छा निपुण) । प्रशस्तं पचति (पचति + रूपप् = रूप, विभक्तिकार्य) = पचतिरूपम् (अच्छा पकाता है) ।

(२१५६) **पद**—ईषत्, असमाप्तौ, कल्पप्-देश्य-देशीयरः । **अनुवृत्ति**—तिङः, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—ईषत् असमाप्ति (थोड़ी-सी कमी) अर्थ में वर्तमान सुबन्त और तिङन्त से कल्पप्, देश्य और देशीयर् प्रत्यय होते हैं । विद्वत्कल्पः, विद्वद्देश्यः, विद्वद्देशीयः । पचतिकल्पम् ।

**विमर्श**—पूर्ववत् 'तिङः' की अनुवृत्ति अनुसरण कर रही है । तदनुसार "किञ्चित् अपूर्णता (न्यूनता) अर्थ में वर्तमान प्रातिपदिक एवं तिङन्त से कल्पप् (कल्प), देश्य और देशीयर् (देशीय) प्रत्यय होते हैं ।"

**उदाहरण**—(**सुबन्त**) ईषत् ऊनः विद्वान् (विद्वस् + कल्पप् = 'कल्प', 'स्' = 'द्' - 'वसुस्रंसुध्वंस्वनडुहां दः', 'द्' = 'त्' - चर्त्व, प्रातिपदिकसंज्ञा सु = स् = र् = :) = विद्वत्कल्पः (कुछ कम विद्वान्) । विद्वस् + देश्यः = विद्वद्देश्यः (पूर्ववत् स् = द्) । विद्वस् + देशीयर् (= देशीय, 'स्' = 'द्') = विद्वद्देशीयः । **तिङन्त**—ईषत् ऊना पाकक्रिया (पचति + कल्पप् = कल्प) = पचतिकल्पम् (कुछ कम पकना) ।

(२१५७) **पद**—विभाषा, सुपः, बहुच्, पुरस्तात् । **अनुवृत्ति**—ईषदसमाप्तौ, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—ईषत् असमाप्ति अर्थ में सुबन्त से बहुच् प्रत्यय विकल्प से होता है और यह बहुच् प्रत्यय प्रकृति से पूर्व होता है । बहुपटुः, पटुकल्पः । 'सुपः' क्यों कहा? पचतिकल्पम् ।

**विमर्श**—पूर्वसूत्र (२१५६) से 'ईषदसमाप्तौ' अंश की अनुवृत्ति आ रही है । अन्य आधिकारिक पदों की अनुवृत्ति का प्रभाव पूर्ववत् विद्यमान है । अतः "ईषद् असमाप्ति (किञ्चित् अपूर्णता) अर्थ में वर्तमान सुबन्त से बहुच् (= बहु) प्रत्यय होता है और वह 'परश्च' के आधिकारिक प्रभाव से मुक्त होकर प्रकृतिवाची शब्द के पूर्व में संयुक्त होता है ।"

**(२१५८) प्रागिवात्कः ५।३।७०। इवे प्रतिकृतावित्यतः प्राक्काधिकारः। (२१५९) अव्ययसर्वनाम्नामकच् प्राक् टेः ५।३।७१। कापवादः। तिङश्चेत्यनुवर्तते। (२१६०) कस्य च दः ५।३।७२। कान्ताव्ययस्य दादेशोऽकच्च। (२१६१) अज्ञाते ५।३।७३। कस्यायमश्वः अश्वकः। उच्चकैः। नीचकैः। सर्वके।**

---

(२१५८) **प्रागिवात्कः**। अधिकारसूत्रमिदम्। इवपदं तद्घटितसूत्रपरमिति मत्वाह — **इवे प्रतिकृताविति**।

(२१५९) **अव्ययसर्वनाम्नामिति**। अव्ययसर्वनाम्नां तिङन्ताच्च टेः प्रागकच्प्रत्ययः स्यादित्यर्थः।

(२१६०) **कस्य चेति**। स्वरितत्वप्रतिज्ञाबलात् पूर्वसूत्रादव्ययग्रहणमेवात्रानुवर्तते। चकारेण 'अकच्' इत्यनुवर्तते। तदाह — **कान्ताव्ययस्येति**।

(२१६१) **अज्ञाते**। अज्ञातेऽर्थे विद्यमानात् सुबन्तात् स्वार्थे कप्रत्ययः स्यादव्ययसर्वनाम्नां तिङन्तानां च टेः प्रागकच्।

---

**उदाहरण**—ईषत् ऊनः पटुः ('पटु' से पूर्व वैकल्पिक बहुच् = 'बहु' प्रत्यय) = बहुपटुः। पक्ष में 'कल्पप्' होकर = पटुकल्पः (कुछ कम चतुर)।

**प्रत्युदाहरण**—प्रकृत सूत्र में 'सुपः' पद का निवेश होने से ईषत् ऊना पाकक्रिया = **'यजतिकल्पम्'** में तिङन्त से बहुच् प्रत्यय नहीं हुआ, कल्पप् प्रत्यय होता है।

(२१५८) **पद**—प्राक्, इवात्, कः। **अनुवृत्ति**—सुपः, तद्धिताः। **अधिकारसूत्र**।

**मूलार्थ**—'इवे प्रतिकृतौ' सूत्र से पूर्व 'क' प्रत्यय का अधिकार है।

**विमर्श**—'इव' शब्द तद्घटित सूत्र का सूचक है। अतः 'इवे प्रतिकृतौ' (५।३।९६) सूत्र से पहले तक इसका अधिकार रहेगा।

(२१५९) **पद**—अव्ययसर्वनाम्नाम्, अकच्, प्राक्, टेः। **अनुवृत्ति**—सुपः, प्रागिवात् तिङश्च, तद्धिताः। **अधिकारसूत्र**।

**मूलार्थ**—प्रागिवीयादि अर्थों में अव्यय, सर्वनाम और तिङन्त की टि से पूर्व अकच् प्रत्यय होता है।

**विमर्श**—पूर्वसूत्र से 'सुपः' की अनुवृत्ति प्रमुखतया अपेक्षित है। पूर्वसूत्र 'प्रागिवात् कः' (२१५८) से अनुवृत्त पद - 'प्रागिवात्' के अतिरिक्त मण्डूकप्लुंति से 'तिङश्च' की अनुवृत्ति भी आती है। तदनुसार ''अव्यय, सर्वनाम और तिङन्त से इवार्थ से पूर्व तक अकच् (= अक) प्रत्यय होता है। यह प्रत्यय टि से पूर्व होता है।''

(२१६०) **पद**—कस्य, च, दः। **अनुवृत्ति**—अव्ययम्, अकच्, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—ककारान्त अव्यय को दकार आदेश होता है और टि से पूर्व अकच् प्रत्यय भी होता है।

**विमर्श**—स्वरितत्व प्रतिज्ञा के अनुसार पूर्वसूत्र (२१५९) से केवल 'अव्ययम्' की अनुवृत्ति आती है। 'अकच्' का अधिकार है। 'कस्य' पद 'क्' का बोधक है, अव्यय का विशेषण होने से तदन्त का बोधक होता है। इस प्रकार ''ककारान्त अव्यय को अकच् प्रत्यय होता है और 'क्' के स्थान में दकार आदेश भी होता है।''

(२१६१) **पद**—अज्ञाते। **अनुवृत्ति**—अव्ययसर्वनाम्नाम् अकच्, प्राक्टेः, प्रागिवात्कः, तिङः, तद्धिताः। **विधिसूत्र**।

**पचतकि। धकित्। (२१६२) कुत्सिते ५।३।७४। कुत्सितोऽश्वः अश्वकः। (२१६३) अल्पे ५।३।८५। अल्पं तैलं तैलकम्। ह्रस्वो वृक्षः वृक्षकः। * अस्मिन्प्रकरणे हलादौ प्रत्यये द्वितीयादचः परस्य लोपो वा वाच्यः *। देवदत्तकः। देवकः। * लोपः पूर्वपदस्य च *। दत्तकः। * विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वा वाच्यः *।**

---

(२१६२) **कुत्सिते**। येन धर्मेण वस्तु कुत्स्यते तद्धर्मयुक्तार्थाभिधायिनः प्रातिपदिकात् स्वार्थे प्रत्ययः स्यादित्यर्थः। अव्ययसर्वनाम्नां तु टेः प्रागकच् भवति, कान्तस्याव्ययस्य दकारश्चान्तादेश इति।

(२१६३) **अल्पे**। अल्पत्वविशिष्टे विद्यमानात् यथाविहितं प्रत्ययाः स्युरित्यर्थः।

---

**मूलार्थ**—अज्ञात अर्थ में सुबन्त से 'क' प्रत्यय होता है और अव्यय, सर्वनाम तथा तिङन्त से अकच् (टि से पूर्व) होता है। अश्वकः। उच्चकैः। नीचकैः। सर्वके। पचतकि। धकित्।

**विमर्श**—'अव्ययसर्वनाम्नामकच् प्राक्टेः' तथा 'प्रागिवात्कः' का अधिकार है। 'तिङः' की पूर्ववत् अनुवृत्ति आ रही है। अन्य प्राकरणिक एवम् आधिकारिक पदों की अनुवृत्ति का प्रभाव पूर्ववत् विद्यमान है। तदनुसार "अज्ञात अर्थ में वर्तमान प्रातिपदिक तथा तिङन्त से स्वार्थ में यथाविहित (अव्यय, सर्वनाम तथा तिङन्त से 'अकच्' एवम् अन्य प्रातिपदिकों से 'क') प्रत्यय होते हैं।"

**उदाहरण**—(१) अज्ञातः अश्वः (अश्व + क) = अश्वकः (ऐसा घोड़ा जिसका स्वामी ज्ञात न हो)। (२) किम् उच्चैः (अव्यय) - उच्चैस् + अकच् (= 'अक्' — टि भाग से पूर्व) उच्च् + अक् + ऐस् (स् = र् = :) = उच्चकैः (क्या ऊँचा है)। (३) किम् नीचैः (नीचैस् + अकच्, टि भाग से पूर्व, प्रक्रिया उक्तवत्) = नीचकैः (क्या नीचा है)। (४) **सर्वनाम** - अज्ञाताः सर्वे (सर्वे + अकच् = 'अक्' — टि से पूर्व) = सर्व + अक् + ए = सर्वके (सब अज्ञात है)। (५) **तिङन्त**—पचति + अकच् (= 'अक्' टि से पूर्व) = पचत् + अक् + इ = पचतकि (क्या पकाता है)। (६) धिक् + अकच् (= 'अक्' 'टि' से पहले) = ध् + अक् + इक् = धकित्।

(२१६२) **पद**—कुत्सिते। **अनुवृत्ति**—अव्ययसर्वनाम्नामकच् प्राक्टेः, प्रागिवात्कः, तिङः, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—कुत्सित अर्थ में यथाविहित क आदि प्रत्यय होते हैं। अश्वकः।

**विमर्श**—पूर्ववत् उल्लिखित अनुवृत्तियाँ अनुसरण कर रही हैं। तदनुसार "कुत्सित (निन्दा) अर्थ में वर्तमान प्रातिपदिक तथा तिङन्त से यथाविहित 'क' आदि प्रत्यय होते हैं।"

**उदाहरण**—कुत्सितः अश्वः (अश्व + क) = अश्वकः (खराब या सुस्त घोड़ा)।

(२१६३) **पद**—अल्पे। **अनुवृत्ति**—तिङः, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—अल्प अर्थ में 'क' प्रत्यय होता है। तैलकम्। वृक्षकः। **वा०** - इस प्रकरण में हलादि प्रत्यय परे रहते द्वितीय अच् से पर भाग का विकल्प से लोप होता है। देवदत्तकः, देवकः। **वा०** - हलादि प्रत्यय के परे कहीं-कहीं पूर्व पद का लोप भी होता है। दत्तकः। **वा०** - प्रत्यय के बिना भी पूर्व अथवा पर पद का लोप होता है। सत्यभामा, भामा, सत्या।

**विमर्श**—पूर्ववत् 'तिङः' की अनुवृत्ति प्रमुखतया अपेक्षित है। इसके अतिरिक्त 'प्रातिपदिकात्' आदि की आधिकारिक अनुवृत्ति आ रही है। अतः "अल्प (थोड़ा) अर्थ में प्रातिपदिक तथा तिङन्त से यथाविहित 'क' आदि प्रत्यय होते हैं।"

**उदाहरण**—अल्पं तैलम् (तैल + 'क' प्रत्यय) = तैलकम् (थोड़ा तेल)। ह्रस्वः वृक्षः (वृक्ष + क) = वृक्षकः (छोटा पेड़)।

सत्यभामा। भामा। सत्या। (२१६४) **कुटीशमीशुण्डाभ्यो रः ५।३।८८।** ह्रस्वा कुटी कुटीरः। शमीरः। शुण्डारः। (२१६५) **कुत्वा डुपच् ५।३।८९।** ह्रस्वा कुतूः कुतुपः। कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्। (२१६६) **कासूगोणीभ्यां ष्टरच् ५।३।९०।** आयुधविशेषा कासूः ह्रस्वा सा कासूतरी।

---

(२१६४) **कुटीशमी०**। ह्रस्वार्थे एभ्यो रप्रत्ययः स्यादित्यर्थः। **कुटीरः** — ह्रस्वा कुटी इति विग्रहे 'कुटीशमीशुण्डाभ्यो रः' इत्यनेन रप्रत्यये प्रातिपदिकत्वे सौ रुत्वे विसर्गे 'कुटीरः' इति।

(२१६५) **कुत्वा डुपच्**। ह्रस्वार्थे इति शेषः।

(२१६६) **कासूगोणीभ्यामिति**। ह्रस्वार्थे इति शेषः। **कासूतरी** — ष्टरचः षित्त्वात् 'षिद्गौरादिभ्यश्च' इति ङीष्।

---

१. **वा०**—''इस प्रागिवीय प्रत्यय के प्रकरण में हलादि प्रत्यय के परवर्ती रहते द्वितीय अच् से परभाग का लोप विकल्प से होता है।'' **उदाहरण**—देवदत्त + कन् (= 'क', 'दत्त' का विकल्प से लोप) = देवकः। लोप न होने पर - देवदत्तकः।

२. **वा०**—''हलादि प्रागिवीय प्रत्यय के परवर्ती होने पर पूर्वपद का भी लोप होता है।'' **उदाहरण**—देवदत्त + कन् (= 'क', पूर्वपद 'देव' का लोप) = दत्तकः।

३. **वा०**—''यदि कोई प्रत्यय न भी हो तो भी पूर्वपद या उत्तरपद का विकल्प से लोप होता है।'' **उदाहरण**—अकम्पिता सत्यभामा (सत्यभामा, सत्य का लोप) = भामा। उत्तरपद भामा का लोप होने पर - सत्या।

(२१६४) **पद**—कुटीशमीशुण्डाभ्यः, रः। **अनुवृत्ति**—ह्रस्वे, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—ह्रस्व अर्थ में कुटी, शमी और शुण्डा शब्द से र प्रत्यय होता है। कुटीरः। शमीरः। शुण्डारः।

**विमर्श**—पूर्वसूत्र 'ह्रस्वे' (५।३।८६) की अनुवृत्ति प्रमुखरूप से अपेक्षित है। शेष आधिकारिक पदों की अनुवृत्तियाँ पूर्ववत् अनुसरण कर रही हैं। तदनुसार ''ह्रस्व अर्थ द्योत्य होने पर कुटी, शमी तथा शुण्डा शब्दों से 'र' प्रत्यय होता है।''

**उदाहरण**—ह्रस्वा कुटी (कुटी + र) = कुटीरः (छोटी कुटी)। ह्रस्वः शमीवृक्षः (शमी + र) = शमीरः (छोटा शमी वृक्ष)। ह्रस्वा शुण्डा (शुण्डा + र) = शुण्डारः (छोटी सूँड़)।

(२१६५) **पद**—कुत्वाः, डुपच्। **अनुवृत्ति**—ह्रस्वे, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—ह्रस्व अर्थ में कुतू शब्द से डुपच् प्रत्यय होता है। कुतुपः।

**विमर्श**—पूर्ववत् 'ह्रस्वे' की अनुवृत्ति प्रमुखरूप से अपेक्षित है। अतः ''ह्रस्वत्व द्योतित होने पर कुतू शब्द से डुपच् (= उप) प्रत्यय होता है।'' 'डुपच्' में 'चुटू' से ड् की इत्संज्ञा होती है तथा अन्त्यवर्ण होने से 'च्' इत्संज्ञक है।

**उदाहरण**—ह्रस्वा कुतूः (कुतू + डुपच् = 'उप', डित् होने से टि = 'ऊ' का लोप) = कुतुपः (चमड़े से निर्मित छोटा थैला)। अमरकोश के अनुसार कुतू घी आदि रखने के लिए चमड़े का बड़ा थैला होता था। उसके छोटे आकार को 'कुतुप' कहते हैं। (पुं०)।

(२१६६) **पद**—कासूगोणीभ्याम्, ष्टरच्। **अनुवृत्ति**—ह्रस्वे, तद्धिताः। **विधिसूत्र**।

**मूलार्थ—ह्रस्व अर्थ में कासू और गोणी शब्दों से 'ष्टरच्' प्रत्यय होता है।** कासूतरी। गोणीतरी।

गोणीतरी । ( २१६७ ) **वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ५।३।९१** । वत्सतरः । उक्षतरः । अश्वतरः । ऋषभतरः । ( २१६८ ) **किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् ५।३।९२** । अनयोः कतरो वैष्णवः ? यतरः । ततरः । ( २१६९ ) **वा बहूनां जातिपरिप्रश्ने डतमच् ५।३।९३** । जातिपरिप्रश्न इति प्रत्याख्यातमाकरे । कतमो भवतां

---

(२१६७) **वत्सोक्ष इति** । वत्स, उक्ष, अश्व, ऋषभ एभ्यः तनुत्वविशिष्टवृत्तिभ्यः ष्टरच् स्यादित्यर्थः ।

(२१६८) **किंयत्तदो निर्धारणे** । द्वयोरेकस्य निर्धारणे गम्ये निर्धार्यमाणवाचिभ्यः किमादिभ्यो डतरच् स्यादित्यर्थः । **कतरः** — डतरच्, डित्त्वाट्टिलोपः ।

---

**विमर्श**—ह्रस्वार्थ का विषय होने से पूर्ववत् सभी अनुवृत्तियाँ अनुसरण कर रही हैं । तदनुसार "कासू तथा गोणी शब्दों से ह्रस्व अर्थ में 'ष्टरच्' प्रत्यय होता है ।" 'ष्टरच्' में 'ष्' और 'च्' इत्संज्ञक हैं । 'तर' शेष रहता है । षित् होने से स्त्रीलिङ्ग में 'ङीष्' हो जाता है ।

**उदाहरण**—ह्रस्वा कासूः (कासू + ष्टरश्च् = 'तर', 'षः प्रत्ययस्य' से ष् की इत्संज्ञा तथा लोप होने पर 'ट्' = 'त्' — 'निमित्तापाये नैमित्तिकस्याप्यपायः', स्त्रीत्व विवक्षा में ङीष् = 'ई', विभक्तिकार्य) = कासूतरी (छोटा अस्त्र) । ह्रस्वा गोणी (गोणी + तर + ङीष्) = गोणीतरी (छोटी गाय) ।

(२१६७) **पद**—वत्सोक्षाश्वर्षभेभ्यः, च, तनुत्वे । **अनुवृत्ति**—ष्टरच्, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—तनु अर्थ में वत्स, उक्षन्, अश्व और ऋषभ शब्दों से ष्टरच् (= तर) प्रत्यय होता है । वत्सतरः । उक्षतरः । अश्वतरः । ऋषभतरः ।

**विमर्श**—पूर्वसूत्र (२१६६) से विधेय पद 'ष्टरच्' की अनुवृत्ति आ रही है । अन्य आधिकारिक अनुवृत्तियाँ पूर्ववत् अनुसरण कर रही हैं । तदनुसार "तनुत्व (न्यूनता, कमी) द्योतित होने पर वत्स, उक्षन्, अश्व तथा ऋषभ शब्दों से ष्टरच् (= तर) प्रत्यय होता है ।"

**उदाहरण**—तनुर्वत्सः (वत्स + ष्टरच् = 'तर') = वत्सतरः (बछड़े की प्रथम अवस्था वत्सत्व में कमी अर्थात् द्वितीय अवस्था को प्राप्त बछड़ा) । तनुरुक्षा (उक्षन् + ष्टरच् = 'तर', 'न्' का लोप, विभक्तिकार्य) = उक्षतरः (युवावस्था को पार कर गया बैल) । तनुः अश्वः (अश्व + ष्टरच्) = अश्वतरः (अश्व से गर्दभी में उत्पन्न 'खच्चर') । तनुः ऋषभः (ऋषभ + ष्टरच्) = ऋषभतरः (मन्दशक्ति - बैल) ।

(२१६८) **पद**—किंयत्तदः, निर्धारणे, द्वयोः, एकस्य, डतरच् । **अनुवृत्ति**—तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—दो में से एक के निर्धारण में किम्, यत् और तत् शब्दों से डतरच् प्रत्यय होता है । कतरः । यतरः । ततरः ।

**विमर्श**—पूर्ववत् आधिकारिक अनुवृत्तियाँ अनुसरण कर रही हैं । अतः "'दो में से एक को अलग करना' अर्थ गम्य होने पर किम्, यद् तथा तद् शब्दों से डतरच् (= अतर) प्रत्यय होता है ।"

**उदाहरण**—अनयोः कतरः वैष्णवः (किम् + डतरच् = 'अतर', टि = 'इम्' का लोप — 'टेः', विभक्तिकार्य) = कतरः (इन दोनों में से कौन वैष्णव है) । यद् + डतरच् = 'अतर', टि = 'अद्' का लोप) = यतरः (जो) । तद् + डतरच् (= अतर, टिलोप) = ततरः (दोनों में से वह) ।

(२१६९) **पद**—वा, बहूनां, जातिपरिप्रश्ने, डतमच् । **अनुवृत्ति**—किंयत्तदः निर्धारणे, एकस्य, तद्धिताः । **विधिसूत्र** ।

**कठः । यतमः । ततमः । वाग्रहणमकजर्थम् । ( २१७० ) एकाच्च प्राचाम् ५।३।९४ । डतरच् डतमच्च स्यात् । अनयोरेकतरो मैत्रः । एषामेकतमः ।**

**इति प्रागिवीयाः ।**



(२१६९) **वा बहूनामिति** । जातौ परिप्रश्ने च गम्ये बहूनामेकस्य निर्धारणे निर्धार्यमाणवाचिभ्यः डतमच् वा भवतीत्यर्थः ।

(२१७०) **एकाच्च प्राचाम्** । 'बहूनां डतमच्' इति 'निर्धारणे एकस्य डतमच्' इति चानुवर्तते । तदाह — **डतरजिति** । **एकतमः** — अनयोरेकः इति विग्रहे एकशब्दात् 'एकाच्च प्राचाम्' इत्यनेन डतमच्प्रत्ययेऽनुबन्धलोपे सौ रुत्वे विसर्गे च 'एकतमः' इति ।

**इति प्रागिवीयाः ।**



**मूलार्थ**—जाति अथवा परिप्रश्न गम्य होने पर बहुतों में से एक के निर्धारण में किम्, यत् और तत् शब्द से 'डतमच्' प्रत्यय विकल्प से होता है । आकर ग्रन्थ में 'जातिपरिप्रश्ने' का प्रत्याख्यान किया गया है । कतमः भवतां कठः । यतमः । ततमः ।

**विमर्श**—निर्धारण का ही विषय होने से पूर्वसूत्र (२१६८) से 'किंयत्तदो निर्धारणे एकस्य' की अनुवृत्ति प्रमुखरूप से आ रही है । 'बहूनाम्' पद में निर्धारणार्थक षष्ठी का प्रयोग है । तदनुसार ''जाति तथा परिप्रश्न (पूछना) अर्थ गम्य होने पर 'किम्', 'यत्' तथा 'तत्' शब्दों से एक का निर्धारण होने पर विकल्प से डतमच् (= अतम) प्रत्यय होता है ।''

**उदाहरण**—कतमः भवतां कठः (किम् + डतमच् = अतम, टि = 'इम्' का लोप, विभक्ति-कार्य) = कतमः (आपलोगों में से कौन कठशाखाध्यायी है?) । इसी प्रकार यत् + डतमच् (= अतम) = यतमः (जो) । तत् + डतमच् (= अतम, टिलोप) = ततमः (वह) । सूत्र में 'वा' पद का निवेश होने से पक्ष में सर्वनाम होने के कारण 'अकच्' प्रत्यय होता है ।

(२१७०) **पद**—एकात्, च, प्राचाम् । **अनुवृत्ति**—बहूनां डतमच्, निर्धारणे, एकस्य, डतरच्, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—प्राचीन आचार्यों के मत में एक शब्द से भी पूर्वोक्त अर्थों में डतरच् और डतमच् प्रत्यय होते हैं । एकतरः । एकतमः ।

**विमर्श**—पूर्वसूत्र (२१६९) से 'बहूनाम्, डतमच्' तथा २१६८ से 'एकस्य, डतरच्' अनुवृत्ति आती है । इस प्रकार ''एक शब्द से प्राचीन आचार्यों के मत में 'दो में से एक के निर्धारण में' डतरच् तथा 'बहुतों में से एक के निर्धारण में' डतमच् प्रत्यय होता है ।''

**उदाहरण**—अनयोः एकतरः मैत्रः (एक + डतरच् = अतर, टि = 'अ' का लोप, विभक्ति-कार्य) = एकतरः (इन दोनों में से एक मैत्र है) । एषाम् एकतमः मैत्रः (एक + डतमच् = अतम, टिलोप) = एकतमः (इनमें से एक मैत्र है) ।

**प्रागिवीय प्रकरण समाप्त ।**



# अथ स्वार्थिकप्रकरणम्

**( २१७१ ) इवे प्रतिकृतौ ५।२।९६ ।** कन् स्यात्। अश्व इव प्रतिकृतिः अश्वकः । **( २१७२ ) शाखादिभ्यो यः ५।३।१०३ ।** शाखेव शाख्यः । मुख्यः । जघन्यः । अग्र्यः । शरण्यः । **( २१७३ ) कुशाग्राच्छः ५।३।१०५ ।** कुशाग्रीया

---

अथ स्वार्थिकप्रकरणं निरूप्यते —

(२१७१) **इवे प्रतिकृताविति** । इवार्थे (सादृश्यार्थे) वर्तमानात्प्रातिपदिकात् कन् स्यात्प्रतिकृतौ । मृदादिनिर्मिता प्रतिमा प्रतिकृतिः ।

(२१७२) **शाखादिभ्यो यः** । इवार्थे इति शेषः ।

(२१७३) **कुशाग्राच्छः** । इवार्थे इति शेषः । **कुशाग्रीयः** — कुशाग्रमिवेत्यर्थे छप्रत्यये, छस्येयादेशे रूपम् ।

---

अब स्वार्थिक प्रत्ययों के निर्वचन हेतु प्रकरण का आरम्भ किया जा रहा है । इस स्वार्थिक प्रत्ययों का विधान होने पर अर्थान्तर व्यक्त नहीं होता । अतः अवयवार्थ से अतिरिक्त कोई संघातार्थ नहीं होता ।

(२१७१) **पद**—इवे, प्रतिकृतौ । **अनुवृत्ति**—कन्, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—इवार्थ में वर्तमान प्रातिपदिक से स्वार्थ में 'कन्' प्रत्यय होता है; यदि उपमेय प्रतिकृति अर्थात् चित्र अथवा मूर्ति हो । अश्वकः ।

**विमर्श**—पूर्वसूत्र 'अवक्षेपणे कन्' (५।३।९५) से विधेयांश 'कन्' की अनुवृत्ति आ रही है । अन्य प्राकरणिक एवम् आधिकारिक पदों की अनुवृत्ति यथापूर्व विद्यमान है । तदनुसार ''इव के अर्थ अर्थात् (सादृश्यवान्) उपमान अर्थ में प्रातिपदिक से कन् = (क) प्रत्यय होता है; यदि उपमेय प्रतिकृति (चित्र, मूर्ति आदि) हो तो ।''

**उदाहरण**—अश्व इव प्रतिकृतिः (अश्व + कन् = 'क', पुल्लिङ्ग में विभक्तिकार्य) = अश्वकः (घोड़े की तरह प्रतिमा) । स्वार्थिक प्रत्यय प्रकृतिगत लिङ्ग और वचन का अनुसरण करते हैं ।

(२१७२) **पद**—शाखादिभ्यः, यः । **अनुवृत्ति**—इवे, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—शाखादि से इवार्थ में 'य' प्रत्यय होता है । शाख्यः । मुख्यः । जघन्यः । अग्र्यः । शरण्यः ।

**विमर्श**—पूर्वसूत्र (२१७१) से 'इवे' की अनुवृत्ति अनुसरण कर रही है । अतः ''शाखादिगणपठित शब्दों से स्वार्थ में 'य' प्रत्यय होता है ।''

**उदाहरण**—शाखा इव (शाखा + 'य', 'अ' का लोप, विभक्तिकार्य) = शाख्यः (शाखा के समान) । मुखम् इव (मुख + य, 'अ' का लोप) = मुख्यः (मुख के समान) । जघनमिव = (जघन + य, 'अ' का लोप) = जघन्यः (जंघा के समान) । अग्रम् इव (अग्र + य, 'अ' का लोप) = अग्र्यः (आगे की तरह, प्रमुख) । शरणम् इव (शरण + य) = शरण्यः (शरण के समान) ।

(२१७३) **पद**—कुशाग्रात्, छः । **अनुवृत्ति**—इवे, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—इवार्थ में विद्यमान कुशाग्र शब्द से 'छ' प्रत्यय होता है । कुशाग्रीयः ।

**विमर्श**—पूर्ववत् 'इवे' का सातत्य विद्यमान है । अतः ''कुशाग्र शब्द से इवार्थ में 'छ' प्रत्यय होता है ।''

बुद्धिः। **(२१७४) तत्प्रकृतवचने मयट् ५।४।२१।** प्राचुर्येण प्रस्तुतं प्रकृतम्, तस्य वचनं प्रतिपादनम्। भावे अधिकरणे वा ल्युट्। आद्ये प्रकृतमन्नम् अन्नमयम्। अपूपमयम्। द्वितीये – अन्नमयो यज्ञः। अपूपमयं पर्व। **(२१७५) संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ५।२।१७।** अभ्यावृत्तिर्जन्म, क्रियाजन्मगणनवृत्तेः संख्यायाः स्वार्थे कृत्वसुच्। पञ्चकृत्वो भुङ्क्ते। संख्यायाः किम्? भूरिवारान्भुङ्क्ते।

---

(२१७४) **तत्प्रकृतवचने मयट्**। तदिति प्रथमान्तनिर्देशः। **प्राचुर्येणेति**। बहुलतया उपस्थितं बहुलशब्देन विवक्षितमित्यर्थः। **अधिकरणे वेति**। प्राचुर्यविशेषणकं यद्वस्तु यस्मिन्नु-च्यते तदधिकरणे वाच्ये तादृशवस्तुवृत्तेः शब्दात् मयडिति फलितार्थः।

(२१७५) **संख्याया इति**। **अभ्यावृत्तिर्जन्म इति**। अभ्यावृत्तिशब्देन यदि द्वितीयादि-प्रवृत्तिर्गृह्यते तदा चतुर्वारं पाकप्रवृत्तौ त्रिः पचतीति स्यात्। इत्यत आह — **अभ्यावृत्तिरिति**।

---

**उदाहरण**—कुशाग्रम् इव (कुशाग्र + छ, 'छ' = 'ईय' + टाप् = 'आ', दीर्घ, विभक्तिकार्य) = कुशाग्रीया बुद्धिः (कुश के अग्रभाग के समान तीक्ष्ण बुद्धि)।

(२१७४) **पद**—तत्, प्रकृतिवचने, मयट्। **अनुवृत्ति**—तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—प्राचुर्येण प्रस्तुत अर्थ में वर्तमान प्रथमान्त प्रातिपदिक से स्वार्थ में मयट् प्रत्यय होता है। 'वचन' पद में भाव या अधिकरण में ल्युट् प्रत्यय हुआ है। (क) अन्नमयम्, अपूपमयम्। (ख) अधिकरण में ल्युट् - अन्नमयः यज्ञः। अपूपमयं पर्व।

**विमर्श**—सूत्रस्थ 'तत्' प्रथमान्त पद समर्थ विभक्ति का सूचक है। 'प्र' उपसर्ग के बल से प्रकृत शब्द का अर्थ 'प्राचुर्य से प्रस्तुत' होना है। पूर्ववत् आधिकारिक पदों की अनुवृत्ति का प्रभाव विद्यमान है। तदनुसार ''प्रथमान्तसमर्थ प्रातिपदिक से 'जो प्राचुर्य रूप से प्रस्तुत किया गया हो' उससे स्वार्थ में मयट् (= मय) प्रत्यय होता है।'' सूत्रस्थ 'वचन' पद ल्युट् प्रत्ययान्त है। ल्युट् का प्रयोग 'भाव' और 'अधिकरण' दोनों अर्थों में होता है। भाव अर्थ में 'प्रकृतस्य वचनम् = उक्तिः प्रकृत-वचनम्' अर्थात् 'प्राचुर्य (आधिक्य) का कथन' मात्र अर्थ होता है।

**उदाहरण**—(क) प्रकृतम् अन्नं (अन्न + मयट् = 'मय', विभक्तिकार्य) = अन्नमयम् (अन्न प्रधान)। प्रकृतः अपूपः (अपूप + मयट् = मय) = अपूपमयम् (मालपुए की प्रचुरता)। (ख) अधिकरणार्थ ल्युट् प्रत्यय के विधान में 'प्रकृतम् उच्यते अस्मिन्' अर्थ में — प्रकृतम् अन्नं यस्मिन् (अन्न + मयट्) = अन्नमयः यज्ञः (जिस यज्ञ में अन्न की प्रचुरता हो)। प्रकृताः अपूपाः यस्मिन् (अपूप + मयट्) = अपूपमयं पर्व (जिस पर्व (त्यौहार) में मालपुओं का प्राचुर्य हो)।

(२१७५) **पद**—संख्यायाः, क्रियाभ्यावृत्तिगणने, कृत्वसुच्। **अनुवृत्ति**—तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—अभ्यावृत्ति = जन्म। क्रियोत्पत्ति के गणन अर्थ में वर्तमान संख्यावाचक शब्द से स्वार्थ में 'कृत्वसुच्' प्रत्यय होता है। पञ्चकृत्वो भुङ्क्ते। 'संख्यायाः' क्यों कहा? भूरिवारान् भुङ्क्ते।

**विमर्श**—यहाँ 'अभ्यावृत्ति' का अर्थ जन्म अर्थात् उत्पत्ति ग्रहण किया जाता है। तदनुसार ''क्रियाजन्म की गणना में वर्तमान संख्यावाची प्रातिपदिकों से स्वार्थ में कृत्वसुच् (= कृत्वस्) प्रत्यय होता है।'' इस प्रत्यय में 'च्' इत्संज्ञक और 'उ' उच्चारणार्थ है।

**उदाहरण**—पञ्चवारान् भुङ्क्ते (पञ्चन् + कृत्वसुच् = 'कृत्वस्', 'न्' का लोप, अव्ययसंज्ञा होने से विभक्तिलुक्, स् = र् = :) = पञ्चकृत्वः भुङ्क्ते (पाँच बार भोजन करता है)।

**(२१७६) द्वित्रिचतुर्भ्यः सुच् ५।४।१८** । कृत्वसुचोऽपवादः । द्विर्भुङ्क्ते । त्रिर्भुङ्क्ते । 'रात्सस्य' – चतुर्भुङ्क्ते । **(२१७७) एकस्य सकृच्च ५।४।१९** । सकृदादेशः चात्सुच् । सकृद् भुङ्क्ते । **(२१७८) देवतान्तात्तादर्थ्ये यत् ५।४।२४** । तदर्थ एव तादर्थ्यम् । अत एव स्वार्थे ष्यञ् । अग्निदेवतायै इदम् अग्निदेवत्यम् । पितृदेवत्यम् ।

---

(२१७६) **द्वित्रिचतुर्भ्य इति** । क्रियाभ्यावृत्तिगणने इति शेषः । चतुर्शब्दात् सुच्प्रत्यये 'रात्सस्ये'ति सलोपः । अत आह – **रात्सस्येति** ।

(२१७७) **एकस्येति । सकृद् भुङ्क्ते** — एकशब्दात् सुच्प्रत्यये प्रकृतेः सकृदित्यादेशे च रूपम् । एकशब्दोऽत्र क्रियाविशेषणम्, एकत्वविशिष्टा भुजिक्रियेत्यर्थः ।

(२१७८) **देवतान्तात्तादर्थ्ये यत्** । देवतान्तात् प्रातिपदिकात् तादर्थ्ये यत्प्रत्ययः स्यादित्यर्थः ।

---

**प्रत्युदाहरण**—'संख्यायाः' पद का सूत्र में निवेश होने से संख्यातिरिक्त 'भूरिवारान् भुङ्क्ते' (अनेक बार खाता है) में 'कृत्वसुच्' नहीं होता ।

(२१७६) **पद**—द्वित्रिचतुर्भ्यः सुच् । **अनुवृत्ति**—संख्यायाः क्रियाभ्यावृत्तिगणने, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—क्रियोत्पत्ति अर्थ में वर्तमान द्वि, त्रि और चतुर् शब्द से 'सुच्' प्रत्यय होता है । यह पूर्वोक्त 'कृत्वसुच्' का अपवाद है । द्विर्भुङ्क्ते । त्रिर्भुङ्क्ते । चतुर्भुङ्क्ते ।

**विमर्श**—पूर्वसूत्र से 'संख्यायाः क्रियाभ्यावृत्तिगणने' की अनुवृत्ति आ रही है । तदनुसार "द्वि, त्रि तथा चतुर् संख्यावाचक शब्दों से क्रिया की उत्पत्ति अर्थ में स्वार्थिक सुच् (= स्) प्रत्यय होता है ।"

**उदाहरण**—द्विवारं भुङ्क्ते (द्वि + सुच् = 'स्', स् = र् = :, अव्यय संज्ञा होने से विभक्ति-लुक्) = द्विर्भुङ्क्ते (दो बार खाता है) । त्रिवारं भुङ्क्ते (त्रि + सुच् = 'स्' = र् = :, विभक्तिकार्य) = त्रिः भुङ्क्ते (तीन बार खाता है) । चतुर्वारं भुङ्क्ते (चतुर् + सुच् = स् = र् = :) = चतुः भुङ्क्ते (चार बार खाता है) । यहाँ रेफ (र्) से परवर्ती 'स्' का लोप होता है - 'रात्सस्य' ।

(२१७७) **पद**—एकस्य, सकृत्, च । **अनुवृत्ति**—सुच्, क्रियाभ्यावृत्तिगणने, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—पूर्वोक्त विषय में एक शब्द से 'सुच्' प्रत्यय होता है और एक को 'सकृत्' आदेश भी होता है । सकृद्भुङ्क्ते ।

**विमर्श**—क्रियागणन का ही विषय है । अतः पूर्वसूत्र (२१७५) से 'क्रियाभ्यावृत्तिगणने' की तथा २१७६ से 'सुच्' की अनुवृत्ति आती है । तदनुसार "क्रियागणन अर्थ में वर्तमान एक शब्द से 'सुच्' प्रत्यय होता है और एक शब्द के स्थान में 'सकृत्' आदेश होता है ।" यह कृत्वसुच् का अपवाद है ।

**उदाहरण**—एकवारं भुङ्क्ते (एक + सुच् = स् तथा 'एक' = 'सकृत्' आदेश) सकृत् + स्, विभक्तिलुक् तथा 'स्' का संयोगान्तलोप) = सकृद् भुङ्क्ते (एक बार खाता है) ।

(२१७८) **पद**—देवतान्तात्, तादर्थ्ये, यत् । **अनुवृत्ति**—तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—चतुर्थ्यन्त देवतान्त प्रातिपदिक से तादर्थ्य में 'यत्' प्रत्यय होता है । अग्निदेवत्यम् । पितृदेवत्यम् ।

**विमर्श**—"तदर्थ एव तादर्थ्यम् अर्थात् प्रकृत्यर्थार्थ वाच्य होने पर चतुर्थीसमर्थ देवतान्त प्रातिपदिक से यत् (= य) प्रत्यय होता है ।" 'तादर्थ्य' शब्द में स्वार्थिक ष्यञ् प्रत्यय हुआ है ।

**( २१७९ ) पादार्घाभ्यां च ५।४।२५ ।** पादार्थमुदकं पाद्यम् । अर्घ्यम् । **( २१८० ) अतिथेर्ञ्यः ५।४।२६ ।** अतिथये इदम् आतिथ्यम् । *** नवस्य नू आदेशस्त्नप्तनप्खाश्च वक्तव्याः *** । स्वार्थे । नत्नम् । नूतनम् । नवीनम् । *** भागरूपनामभ्यो धेयः *** । भागधेयम् । रूपधेयम् । नामधेयम् । *** आग्नीध्रसाधारणादञ् *** । आग्नीध्रम् ।

(२१७९) **पादार्घाभ्यां चेति** । तादर्थ्ये एव यत् भवतीत्यर्थः ।

(२१८०) **अतिथेर्ञ्यः** । अतिथिशब्दात् तादर्थ्ये ञ्यः प्रत्ययः स्यादित्यर्थः । **आतिथ्यम्** — अतिथेर्भावः इति विग्रहे अतिथिशब्दात् 'अतिथेर्ञ्यः' इत्यनेन ञ्यप्रत्यये आद्यचो वृद्धौ भत्वाट्टि-लोपे प्रातिपदिकत्वे सौ सोरमि पूर्वरूपे आतिथ्यमिति ।

---

**उदाहरण**—अग्निदेवतायै इदम् (अग्निदेवता + यत् = 'य', अन्त्यवर्ण 'आ' का लोप, विभक्तिकार्य) = अग्निदेवत्यम् (अग्निदेवता के लिए यह हविष्) । पितृदेवताभ्य इदम् (पितृदेवता + यत्) = पितृदेवत्यम् (पितृदेवता के लिए हविष्) ।

(२१७९) **पद**—पादार्घाभ्याम्, च । **अनुवृत्ति**—तादर्थ्ये, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—पाद और अर्घ शब्द से तादर्थ्य में 'यत्' प्रत्यय होता है । पाद्यम् । अर्घ्यम् ।

**विमर्श**—पूर्वसूत्र (२१७८) से 'तादर्थ्ये' तथा 'यत्' की अनुवृत्ति आती है । 'तादर्थ्ये' में प्रत्ययविधान होने से समर्थ चतुर्थी विभक्ति का ग्रहण होता है । तदनुसार ''पाद और अर्घ शब्दों से तादर्थ्य वाच्य रहते यत् = 'य' प्रत्यय होता है ।''

**उदाहरण**—पादार्थम् उदकम् (पाद + यत् = 'य') = पाद्यम् (पैर धोने के लिए जल) । अर्घार्थम् उदकम् (अर्घ + यत्) = अर्घ्यम् (पूजा के लिए जल) ।

(२१८०) **पद**—अतिथेः, ञ्यः । **अनुवृत्ति**—तादर्थ्ये, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—अतिथि शब्द से तादर्थ्य में 'ञ्य' प्रत्यय होता है । आतिथ्यम् । **वा०**—नव शब्द से स्वार्थ में त्नप्, तनप् तथा ख प्रत्यय होते हैं और नव को 'नू' आदेश होता है । नूत्नम्, नूतनम्, नवीनम् । **वा०**—भाग, रूप और नाम शब्द से स्वार्थ में धेय प्रत्यय होता है । भागधेयम् । रूपधेयम् । नामधेयम् । **वा०**—अग्नीध्र और साधारण शब्दों से स्वार्थ में अञ् प्रत्यय होता है । आग्नीध्रम् । साधारणम् ।

**विमर्श**—पूर्वसूत्र (२१७८) से 'तादर्थ्ये' की अनुवृत्ति अपेक्षित है । अतः ''अतिथि शब्द से तादर्थ्य में ञ्य (य) प्रत्यय होता है ।''

**उदाहरण**—अतिथये इदम् (अतिथि + ञ्य = 'य', आदिवृद्धि, अन्त्यवर्ण 'इ' का लोप, विभक्तिकार्य) = आतिथ्यम् (अतिथि का स्वागत-सत्कार) ।

१. **वा०**—''नव शब्द से स्वार्थ में त्नप्, तनप् तथा 'ख' प्रत्यय होते हैं और नव शब्द के स्थान में 'नू' आदेश भी होता है ।'' **उदाहरण**—नवम् एव (नव + त्नप् = 'त्न' तथा नव = 'नू' आदेश, विभक्तिकार्य) = नूत्नम् । नव + तनप् ( = 'तन', 'नू' आदेश, विभक्तिकार्य) = नूतनम् । नव + 'ख' तथा नव = 'नू' आदेश (ख = ईन) — नू + ईन (ऊ = 'ओ' - 'ओर्गुणः', ओ = 'अव्' आदेश, विभक्तिकार्य) = नवीनम् (नया) ।

२. **वा०**—''भाग, रूप तथा नाम शब्दों से धेय प्रत्यय होता है ।'' **उदाहरण**—भाग एव (भाग + धेय, विभक्तिकार्य) = भागधेयम् (भाग्य) । रूपमेव (रूप + धेय) = रूपधेयम् (रूप) । नाम एव (नाम + धेय) = नामधेयम् (नाम) ।

**साधारणम्। ( २१८१ ) देवात्तल् ५।४।२७ ।** देव एव देवता। **( २१८२ ) अवेः कः ५।४।२८ ।** अविरेव अविकः। **( २१८३ ) यावादिभ्यः कन् ५।४।२९ ।** याव एव यावकः। मणिकः। * **सर्वप्रातिपदिकेभ्यः स्वार्थे कन्** *। बहुतरकम्। **( २१८४ ) मृदस्तिकन् ५।४।२९ ।** मृदेव मृत्तिका। **( २१८५ ) सस्नौ प्रशंसायाम् ५।४।४० ।**

---

(२१८१) **देवात्तल्**। तादर्थ्ये इति निवृत्तम्। स्वार्थे तल् भवतीति भावः।

(२१८२) **अवेः कः**। स्वार्थे इति शेषः।

(२१८३) **यावादिभ्यः कन्**। **यावकः** — यवानामयं यावः ओदनादि, स एव यावकः। अलक्तवृक्षो वा यावः, स एव यावकः। स्वार्थे कन्।

(२१८४) **मृदस्तिकन्**। मृद्शब्दात् स्वार्थे तिकन्प्रत्ययो भवतीत्यर्थः।

(२१८५) **सस्नौ प्रशंसायाम्**। मृदः प्रशंसायां सप्रत्ययः स्नप्रत्ययश्च स्यादित्यर्थः।

---

३. **वा०**—''आग्नीध्र तथा साधारण शब्दों से अञ् प्रत्यय होता है।'' **उदाहरण**—आग्नीध्रम् एव (आग्नीध्र + अञ् = 'अ', अन्त्यवर्णलोप, विभक्तिकार्य) = आग्नीध्रम् (यज्ञ में अग्निस्थापन का स्थान)। साधारणम् एव (साधारण + अञ् = 'अ') = साधारणम् (= साधारण)।

(२१८१) **पद**—देवात्, तल्। **अनुवृत्ति**—तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—देव शब्द से स्वार्थ में तल् (= त) प्रत्यय होता है। देवता।

**विमर्श**—अर्थ स्पष्ट है। शब्दशक्ति स्वभाव से तल् प्रत्ययान्त शब्द स्त्रीलिङ्ग में प्रयुक्त होते हैं। तदनुसार टाप् = 'आ' प्रत्यय भी संयुक्त होता है।

**उदाहरण**—देवः एव (देव + तल् = 'त' + टाप् = 'आ', दीर्घ तथा विभक्तिकार्य) = देवता (= देव)।

(२१८२) **पद**—अवेः, कः। **अनुवृत्ति**—तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—अवि शब्द से स्वार्थ में 'क' प्रत्यय होता है। अविकः।

**विमर्श**—अर्थ स्पष्ट है।

**उदाहरण**—अविः एव (अवि + क) = अविकः (भेड़)।

(२१८३) **पद**—यावादिभ्यः, कन्। **अनुवृत्ति**—तद्धिताः। **विधिसूत्र**।

**मूलार्थ तथा विमर्श**—''यावादिगण-पठित शब्दों से स्वार्थ में कन् (= क) प्रत्यय होता है।''

**उदाहरण**—यवानाम् अयं यावः, याव एव (याव + कन् = 'क') = यावकः (जौ)। मणिः एव (मणि + कन् = 'क') = मणिकः (= मणि)।

(२१८४) **पद**—मृदः, तिकन्। **अनुवृत्ति**—तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—मृद् शब्द से स्वार्थ में 'तिकन्' प्रत्यय होता है। मृत्तिका।

**विमर्श**—पूर्ववत् आधिकारिक पदों की अनुवृत्ति का प्रभाव विद्यमान है। अतः ''प्रथमासमर्थ मृद् प्रातिपदिक से तिकन् (= तिक) प्रत्यय होता है।''

**उदाहरण**—मृद् एव (मृद् + तिकन् = 'तिक', 'द्' = 'त्' - चर्त्व, टाप् = 'आ', दीर्घ, विभक्तिकार्य) = मृत्तिका (मिट्टी)।

(२१८५) **पद**—सस्नौ, प्रशंसायाम्। **अनुवृत्ति**—मृदः, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—मृद् शब्द से प्रशंसा अर्थ में स और स्न प्रत्यय होते हैं। मृत्सा, मृत्स्ना।

रूपपोऽपवादः । प्रशस्ता मृत् मृत्सा, मृत्स्ना । **( २१८६ ) प्रज्ञादिभ्यश्च ५।४।३८ ।** अण् स्यात् । प्रज्ञ एव प्राज्ञः । दैवतः । बान्धवः । **( २१८७ ) पूगाञ्ञ्योऽग्रामणीपूर्वात् ५।३।११२ ।** स्वार्थे । नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः पूगाः । लौहितध्वज्यः । **( २१८८ ) ञ्यादयस्तद्राजाः ५।३।११९ ।** तद्राजस्येति लुक् । लोहितध्वजाः । व्रातेति च्फञ् । कापोतपाक्यः । कपोतपाकाः । कौञ्जायना इत्यादि ।

---

**मृत्स्ना** — प्रशस्ता मृदिति विग्रहे मृत्शब्दात् 'सस्नौ प्रशंसायाम्' इत्यनेन स्नप्रत्यये प्रातिपदिकत्वे टापि दीर्घे सौ हल्ङ्यादिना सुलोपे 'मृत्स्ना' इति सिद्धम् ।

(२१८६) **प्रज्ञादिभ्यश्च** । 'तद्युक्तात् कर्मणोऽण्' इत्यत अणित्यनुवर्तते । तदाह – **अण् स्यादिति** ।

(२१८७) **पूगाञ्ञ्यः** । पूगवाचकात् स्वार्थे ञ्यप्रत्ययः स्यात् । ग्रामणीवाचकपूर्वावयवकात्तु न, पूगेति न स्वरूपग्रहणं व्याख्यानात् । **लौहितध्वज्यः** — लोहिताः ध्वजाः यस्य पूगस्य स लोहितध्वजः, स एव लौहितध्वज्यः । ञ्यप्रत्ययः ।

(२१८८) **ञ्यादयः** । एते तद्राजसंज्ञाः स्युरित्यर्थः ।

---

**विमर्श**—पूर्वसूत्र (२१८४) से उद्देश्यवाचक पद 'मृदः' की अनुवृत्ति अपेक्षित है । अतः "प्रशंसा अर्थ में वर्तमान मृद् शब्द से 'स' और 'स्न' प्रत्यय होते हैं ।"

**उदाहरण**—मृद् एव (मृद् = 'स' प्रत्यय, 'द्' = 'त्' - चर्त्व, टाप् = 'आ', दीर्घ एवं विभक्तिकार्य) = मृत्सा । मृद् + 'स्न' ('द्' = 'त्' - चर्त्व, टाप् आदि पूर्ववत्) = मृत्स्ना (मिट्टी) ।

(२१८६) **पद**—प्रज्ञादिभ्यः, च । **अनुवृत्ति**—अण्, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—प्रज्ञादिगणपठित शब्दों से स्वार्थ में अण् प्रत्यय होता है । प्राज्ञः । दैवतः । बान्धवः ।

**विमर्श**—'तद्युक्तात् कर्मणोऽण्' (५।६।३६) से 'अण्' की अनुवृत्ति आ रही है । तदनुसार "प्रज्ञादिगणपठित शब्दों से स्वार्थ में अण् प्रत्यय होता है ।"

**उदाहरण**—प्रज्ञः एव (प्रज्ञ + अण् = 'अ', आदिवृद्धि तथा अन्त्यवर्ण 'अ' का लोप) = प्राज्ञः (बुद्धिमान्) । देवता एव (देवता + अण् = 'अ', आदिवृद्धि तथा अन्त्यलोप) = दैवतः (देवता) । बन्धुः एव (बन्धु + अण् = 'अ', आदिवृद्धि, 'उ' = 'ओ' - गुण, अवादेश) = बान्धवः (भाई-बन्धु) ।

(२१८७) **पद**—पूगात्, ञ्यः, अग्रामणीपूर्वात् । **अनुवृत्ति**—तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—पूगवाचक शब्दों से स्वार्थ में ञ्य प्रत्यय होता है; ग्रामणीपूर्वक से यह प्रत्यय नहीं होता । लौहितध्वज्यः ।

**विमर्श**—नानाजातीय और अनियत वृत्तिवाले तथा अर्थ और काम में आसक्त पुरुषों के समूह को पूग कहते हैं । "तद्वाचक से स्वार्थ में ञ्य (= य) प्रत्यय होता है । ग्रामणी शब्द पूर्वपद में होने की स्थिति में 'ञ्य' नहीं होता ।"

**उदाहरण**—लोहिता ध्वजा यस्य सः लोहितध्वजः, स एव (लोहितध्वज + ञ्य = 'य', आदिवृद्धि, अन्त्यवर्ण 'अ' का लोप, विभक्तिकार्य) = लौहितध्वज्यः (लाल ध्वजा वाला संघ) ।

(२१८८) **पद**—ञ्यादयः, तद्राजाः । **संज्ञासूत्र** ।

**मूलार्थ**—ञ्य आदि प्रत्यय तद्राजसंज्ञक होते हैं । लोहितध्वजाः । कपोतपाकाः । कौञ्जायनाः ।

**विमर्श**—यहाँ 'तद्राज' संज्ञा है और 'ञ्यादयः' संज्ञी । तदनुसार "पूगाञ्ञ्योऽग्रामणीपूर्वात्"

**(२१८९) बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ५।४।४२।** बहूनि ददाति - बहुशः। अल्पानि - अल्पशः। बह्वल्पार्थान्मङ्गलामङ्गलवचनम्। नेह – बहु ददात्यनिष्टेषु। अल्पं ददात्याभ्युदयिकेषु। **(२१९०) संख्यैकवचनाच्च वीप्सायाम् ५।४।४३।** द्वौ द्वौ ददाति द्विशः। माषं माषं माषशः। परिमाणशब्दा वृत्तावेकार्था एव। संख्यैकवचनात्किम्? घटं घटं ददाति। वीप्सायां किम्? द्वौ ददाति। कार-

---

(२१८९) **बह्वल्पार्थादिति।** बह्वर्थात् अल्पार्थाच्च कारकाभिधायिनः शब्दात् स्वार्थे शस् प्रत्ययो वा स्यादित्यर्थः।

(२१९०) **संख्यैकवचनाच्चेति।** संख्यावाचकाद् अन्यस्माच्चैकत्वविशिष्टवाचकात् कारकाभिधायिनः प्रातिपदिकात् वीप्सायां शस् भवतीत्यर्थः। **द्विशः** — द्वौ द्वौ ददाति 'नित्यवीप्सयोरि'ति द्विर्वचनम्। द्विशब्दात् शस्प्रत्यये सौ सुब्लुकि सस्य रुत्वे विसर्गे 'द्विशः' इति।

---

(५।३।११२) से लेकर इस सूत्र के पूर्व तक कहे हुए प्रत्ययों की तद्राजसंज्ञा होती है।'' इसके फलस्वरूप बहुवचन में 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' (२।४।६२) से प्रत्यय का लुक् हो जाता है।

**उदाहरण**—लोहितध्वजाः ('पूगाञ्ञ्यः' से विहित 'ञ्य' का लुक्)। कपोतपाकाः (ञ्य का लुक्)। कौञ्जायनाः ('व्रातच्फञोरस्त्रियाम्' से विहित 'ञ्य' का लुक्)।

(२१८९) **पद**—बह्वल्पार्थात्, शस्, कारकात्, अन्यतरस्याम्। **अनुवृत्ति**—स्वार्थे, तद्धिताः। **विधिसूत्र।**

**मूलार्थ**—बह्वर्थक और अल्पार्थक कारकाभिधायी शब्दों से स्वार्थ में विकल्प से 'शस्' प्रत्यय होता है। बहुशः। अल्पशः।

**विमर्श**—पूर्ववत् आधिकारिक अनुवृत्तियाँ अनुसरण कर रही हैं। तदनुसार ''बहु तथा अल्पार्थक कारकाभिधायी शब्दों से स्वार्थ में वैकल्पिक 'शस्' प्रत्यय होता है।'' सामान्यतया यहाँ छः कारकों का ग्रहण होता है। 'अन्यतरस्याम्' पद का निवेश होने से पक्ष में विग्रहवाक्य ही रहेगा।

**उदाहरण**—बहूनि ददाति (बहु + शस्, अव्यय होने से विभक्तिलुक्, स् = र् = :) = बहुशः (बहुत)। अल्पं ददाति (अल्प + शस्, विभक्तिलोप तथा स् = र् = :) = अल्पशः (थोड़ा)। **वा०**—बहु शब्द से मङ्गल (कल्याण) अर्थ में और अल्प शब्द से अमङ्गल (अकल्याण) अर्थ में 'शस्' प्रत्यय होता है। अतः 'बहु ददात्यनिष्टेषु' (अनिष्ट के समय बहुत देता है) तथा 'अल्पं ददाति आभ्युदयिकेषु' (कल्याण के समय कम देता है) में विपरीत दशा होने से शस् प्रत्यय नहीं होता।

(२१९०) **पद**—संख्यैकवचनात्, च, वीप्सायाम्। **अनुवृत्ति**—शस्, अन्यतरस्याम्, तद्धिताः। **विधिसूत्र।**

**मूलार्थ**—संख्यावाचक और एकत्वविशिष्टवाचक कारकाभिधायी प्रातिपदिक से वीप्सा में शस् प्रत्यय होता है। द्विशः। माषशः। परिमाणवाचक शब्द समास, तद्धित आदि वृत्ति में एकार्थ ही होते हैं। 'संख्यैकवचनात्' क्यों कहा? घटं घटं ददाति। 'वीप्सायाम्' क्यों कहा? द्वौ ददाति। कारक से ही यह प्रत्यय होता है। अतः 'द्वयोर्द्वयोः स्वामी' में नहीं हुआ।

**विमर्श**—पूर्वसूत्र (२१८९) से 'शस्' तथा 'अन्यतरस्याम्' की अनुवृत्ति आ रही है। अतः ''संख्यावाचक तथा एकार्थाभिधायी प्रातिपदिक से भी वीप्सा में विकल्प से 'शस्' प्रत्यय होता है।''

कादित्येव। द्वयोर्द्वयोः स्वामी। **( २१९१ ) प्रतियोगे पञ्चम्यास्तसिः ५।४।४४।** प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात्तसिः। प्रद्युम्नः कृष्णतः। प्रति। * आद्यादिभ्यस्तसेरुपसंख्यानम् *। आदौ आदितः। मध्यतः। पृष्ठतः। पार्श्वतः। आकृतिगणोऽयम्। स्वरेण स्वरतः। वर्णतः। **( २१९२ ) कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः ५।४।५०।** * अभूततद्भाव इति वक्तव्यम् *। विकारात्मतां प्राप्नुवत्यां

---

(२१९१) **प्रतियोगे इति**। **पञ्चमीविहितेति**। 'प्रतिः प्रतिनिधिप्रतिदाने च' इति प्रतेः कर्मप्रवचनीयसंज्ञायां तद्योगे 'प्रतिनिधिप्रतिदाने च यस्मादि'ति पञ्चमीविहितेत्यर्थः।

(२१९२) **कृभ्वस्तियोगे**। **अभूतेति**। येन रूपेण प्रागभूतं यद्वस्तु तस्य तद्रूपप्राप्तिः = अभूततद्भावः तस्मिन् गम्ये च्विः स्यादित्यर्थः।

---

**उदाहरण**—द्वौ द्वौ ददाति (द्वि + 'शस्' - विकल्प से, विभक्तिलुक् तथा स् = र् = :) = द्विशः। पक्ष में — द्वौ द्वौ (द्वित्व युक्त (वीप्सा) रूप)। अर्थ - दो-दो। माषं माषं ददाति (माष + शस्, रुत्व, विसर्ग) = माषशः (एक-एक माशा)। पक्ष में - माषम् माषम्। समास, तद्धित आदि में परिमाण के बहुत्व होने पर भी एक ही अर्थ माष आदि शब्दों से कहा ज़ाता है।

**प्रत्युदाहरण**—प्रकृत सूत्र में 'संख्यैकवचनात्' का ग्रहण होने से 'घटं घटं ददाति' में घट शब्द के जातिबोधक होने से 'अनेक घडों का दाता घड़े-घड़े भर देता है' यह अर्थ भी सम्भव है। अतः शस् नहीं होता। 'वीप्सायाम्' का निवेश होने से 'द्वौ ददाति' (दो देता है) में वीप्सा (द्विरुक्ति) न होने से 'शस्' नहीं होता। 'कारकात्' की अनुवृत्ति आने से यह प्रत्यय कारक से ही होता है। अतः 'द्वयोः द्वयोः स्वामी' (दो-दो का स्वामी) में षष्ठी के कारक विभक्ति न होने से शस् प्रत्यय नहीं होता।

(२१९१) **पद**—प्रतियोगे, पञ्चम्याः, तसिः। **अनुवृत्ति**—अन्यतरस्याम, तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—कर्मप्रवचनीय 'प्रति' के योग में विहित पञ्चम्यन्त से तसि प्रत्यय होता है। प्रद्युम्नः कृष्णतः प्रति। **वा०**—आद्यादिगणपठित शब्दों से तसि प्रत्यय होता है। आदितः। मध्यतः। पृष्ठतः। पार्श्वतः। यह आकृतिगण है। स्वरतः। वर्णतः।

**विमर्श**—पूर्वसूत्र (२१८९) से 'अन्यतरस्याम्' की अनुवृत्ति प्रमुखतया अपेक्षित है। तदनुसार ''कर्मप्रवचनीयसंज्ञक प्रति के योग से विहित जो पञ्चमी विभक्ति, तदन्त (पञ्चम्यन्त) प्रातिपदिक से तसि (= तस्) प्रत्यय होता है।''

**उदाहरण**—प्रद्युम्नः कृष्णतः प्रति ('प्रति' के योग में तसि = 'तस्', स् = र् = :) = कृष्णतः। पक्ष में पञ्चमी विभक्ति — कृष्णात् (प्रद्युम्न कृष्ण के प्रतिनिधि हैं)।

**वा०**—आद्यादिगणपठित शब्दों के उत्तरवर्ती सभी विभक्तियों को अभिलक्षित कर तसि प्रत्यय होता है।

**उदाहरण**—आदौ (आदि + तसि = तस्) = आदितः (प्रारम्भ में)। मध्यात् मध्ये वा (मध्य + तसि = तस्) = मध्यतः (बीच से या बीच में)। पृष्ठात् (पृष्ठ + तस्) = पृष्ठतः (पीछे से)। पार्श्वात् (पार्श्व + तस्) = पार्श्वतः (बगल से)। आकृतिगण होने से स्वरेण (स्वर + तस्) = स्वरतः (स्वर से) तथा वर्णेन (= वर्णतः) में भी तस् होता है।

(२१९२) **पद**—कृभ्वस्तियोगे, सम्पद्यकर्तरि, च्विः। **अनुवृत्ति**—तद्धिताः। **विधिसूत्र**।

**मूलार्थ**—विकार रूप को प्राप्त करने वाली प्रकृति के अर्थ में वर्तमान विकारवाचक शब्द

प्रकृतौ वर्तमानात् विकारशब्दात्स्वार्थे च्विर्वा स्यात् करोत्यादिभिर्योगे। (२१९३) **अस्य च्वौ ७।४।३२**। अवर्णस्य ईत् स्यात् च्वौ। अकृष्णः कृष्णः सम्पद्यते, तं करोति कृष्णीकरोति। ब्रह्मीभवति। गङ्गीस्यात्। * अव्ययस्य च्वावीत्वं नेति वाच्यम् *। दोषाभूतमहः। दिवाभूता रात्रिः। (२१९४) **क्यच्व्योश्च ६।४।१५२**। हलः परस्यापत्ययकारस्य लोपः क्ये च्वौ च परतः। गार्गीभवति। (२१९५) **च्वौ च**

---

(२१९३) **अस्य च्वाविति**। अवर्णस्य ईत् स्यात् च्वौ इत्यर्थः।

(२१९४) **क्यच्व्योश्च**। 'अल्लोपोऽनः' इत्यतः लोप इति, 'हलस्तद्धितस्ये'ति हल इति

---

से स्वार्थ में 'च्वि' प्रत्यय होता है। कृ, भू और अस् धातु के योग में विकल्प से होता है। **वा०**—अभूततद्भाव अर्थ में च्वि प्रत्यय हो।

**विमर्श**—सम्पद्यस्य कर्ता सम्पद्यकर्ता, तस्मिन् सम्पद्यकर्तरि। इस प्रकार ''सम्पद्यमान में वर्तमान कर्ता प्रातिपदिक से कृ, भू तथा अस् धातु के योग में च्वि प्रत्यय होता है।'' किस रूप में किसका परिवर्तन अपेक्षित है? इस शंका का निवारण करने के लिए महाभाष्यकार ने ''अभूत-तद्भाव इति वक्तव्यम्'' वार्तिक उद्धृत किया है। तदनुसार ''जो वस्तु पहले जिस रूप में नहीं थी बाद में वह उस रूप को प्राप्त हो, (अभूततद्भाव) अर्थ गम्यमान होने पर = तद्वाची शब्द के वर्तमान होने पर कृ, भू तथा अस् धातुओं में से किसी एक के भी निष्पन्न रूप के योग में 'च्वि' प्रत्यय होता है।''

(२१९३) **पद**—अस्य, च्वौ। **अनुवृत्ति**—ई, अङ्गस्य। **विधिसूत्र**।

**मूलार्थ**—'च्वि' परे रहते 'अ' को ईत् आदेश होता है। कृष्णीकरोति। ब्रह्मीभवति। गङ्गीस्यात्। **वा०**—च्वि परे रहते अव्यय के आकार को ईत् नहीं होता। दोषाभूतम् अहः। दिवाभूता रात्रिः।

**विमर्श**—यह प्रासङ्गिक सूत्र है। 'अङ्गस्य' का अधिकार है। 'ई घ्राध्मोः' (७।४।३१) से 'ई' की अनुवृत्ति अपेक्षित है। तदनुसार ''च्वि प्रत्यय के परवर्ती रहते अवर्णान्त अङ्ग के स्थान में 'ई' कार आदेश होता है।'' 'अलोऽन्त्यस्य' परिभाषानुसार यह आदेश अन्त्य वर्ण को होगा।

**उदाहरण**—अकृष्णः कृष्णः सम्पद्यते, तं करोति (यहाँ सम्पद्यमान होने से अभेदारोपित 'कृष्ण' 'सम्पद्यते' क्रिया का कर्ता है और 'कृ' धातु के साथ उसका योग भी है। अतः कृष्ण + च्वि = व् 'च्' की इत्संज्ञा, लोप तथा 'इ' उच्चारणार्थ, 'अ' = 'ई' - 'अस्य च्वौ', 'व्' का लुक् - 'वेरपृक्तस्य', पुनः विभक्ति सु) — कृष्णी + सु ('ऊर्यादिच्विडाचश्च' से निपातसंज्ञा होने पर 'स्वरादिनिपातमव्ययम्' से अव्ययसंज्ञा होने से विभक्ति का लुक्) = कृष्णीकरोति (जो कृष्ण नहीं उसे कृष्ण करता है)। अब्रह्म ब्रह्म सम्पद्यमानं भवति (ब्रह्मन् + च्वि = व्, 'न्' का लोप, अ = 'ई' तथा 'व्' का लोप आदि कार्य) = ब्रह्मीभवति (ब्रह्म होता है)। अगङ्गा गङ्गा सम्पद्यमाना भवति (प्रक्रिया पूर्ववत्) = गङ्गीस्यात् (गङ्गा हो जाय)।

**वा०**—अव्ययवाची शब्द से 'च्वि' प्रत्यय होने पर अकार के स्थान में इत्व नहीं होता।

**उदाहरण**—अदोषा दोषा अभूत् (दोषा + 'च्वि', 'अस्य च्वौ' से प्राप्त ईत्व का प्रकृत वार्तिक से निषेध, शेष प्रक्रिया उक्तवत्) = दोषाभूतम् अहः (दिन रात हो गया)। अदिवा दिवा अभूत् (यहाँ दिवा के 'आ' को 'ई' नहीं हुआ) = दिवाभूता रात्रिः (रात दिन हो गया)।

(२१९४) **पद**—क्यच्व्योः, च। **अनुवृत्ति**—आपत्यस्य, हलः, अङ्गस्य, लोपः। **विधिसूत्र**।

**७।४।२६ । दीर्घः । शुचीभवति । पटूस्यात् । ( २१९६ ) अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ५।४।५१ । चात् च्विः । अरूकरोति । उन्मनीकरोति । उच्चक्षूकरोति । उच्चेतीकरोति । विरहीकरोति । विरजीकरोति । ( २१९७ ) विभाषा साति कात्स्न्र्ये**

---

'सूर्यतिष्य' इत्यतः य इति 'आपत्यस्य चे' त्यस्मात् आपत्यस्येति चानुवर्तते । अत आह — **हलः परस्येति । गार्गीभवति** — अगार्ग्यो गार्ग्यः सम्पद्यमानो भवति = गार्गीभवति । 'गर्गादिभ्यो यञि'ति यञन्तात् च्वौ यकारलोपः ।

(२१९५) **च्वौ च** । च्वौ परे पूर्वस्य दीर्घ इत्यर्थः । **शुचीभवति** — अशुचिः शुचिः सम्पद्यमानो भवति । च्वौ परे दीर्घः ।

(२१९६) **अरुर्मनश्चक्षु० । एषामिति** । अरुस्, मनस्, चक्षुष्, चेतस्, रहस्, रजस् इत्येतेषामित्यर्थः । पूर्वेणैव प्रत्ययसिद्धेस्तत्सन्नियोगेन अन्त्यलोप इह विधीयते ।

---

**मूलार्थ**—हल् से परे अपत्यार्थक प्रत्यय के यकार का लोप होता है, क्य और च्वि परे रहते । गार्गीभवति ।

**विमर्श**—यह भी प्रासङ्गिक सूत्र है । सूत्रार्थ की निष्पत्ति हेतु 'आपत्यस्य च तद्धितेऽनाति' (६।४।१५१) से 'आपत्यस्य', 'हलस्तद्धितस्य' (६।४।१५०) से 'हलः' तथा 'ढे लोपोऽकद्र्वाः' (६।४।१४८) से 'लोपः' की अनुवृत्ति आती है । तदनुसार ''क्य तथा च्वि प्रत्यय परवर्ती रहते हल् से उत्तरवर्ती अङ्ग के अपत्यसम्बन्धी यकार (य्) का लोप होता है ।''

**उदाहरण**—अगार्ग्यः गार्ग्यः सम्पद्यमानः भवति (अपत्याधिकारीय यडन्त गार्ग्य + च्वि, 'य्' का लोप - 'क्यच्व्योश्च', ईत्व, विभक्त्यादिकार्य) = गार्गीभवति (गर्ग का वंशज हो रहा है) ।

(२१९५) **पद**—च्वौ, च । **अनुवृत्ति**—दीर्घः, अङ्गस्य । **विधिसूत्र** ।

**मूलार्थ**—'च्वि' परे रहते पूर्व को दीर्घ होता है । शुचीभवति । पटूस्यात् ।

**विमर्श**—यह प्रासङ्गिक सूत्र है । 'अकृत्सार्वधातुकयोः' (६।४।२५) से 'दीर्घः' की अनुवृत्ति आती है । 'अङ्गस्य' का अधिकार है । तदनुसार ''च्वि प्रत्यय के परवर्ती रहते पूर्व अङ्ग को दीर्घ होता है ।''

**उदाहरण**—अशुचिः शुचिः सम्पद्यमानः भवति (शुचि + च्वि, 'इ' = 'ई' - दीर्घ - 'च्वौ च', 'च्वि' का सर्वापहार लोप) = शुचीभवति (पवित्र होता है) । अपटुः पटुः सम्पद्यमानः स्यात् (पटु + च्वि, दीर्घ, लोपादि) = पटूस्यात् (निपुण हो जाय) ।

(२१९६) **पद**—अरुर्मनश्चक्षुश्चेतोरहोरजसाम्, लोपः, च । **अनुवृत्ति**—कृभ्वस्तियोगे सम्पद्य-कर्तरि, च्विः, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—अरुष्, मनस्, चक्षुस्, चेतस्, रहस् और रजस् शब्द के अन्त्य वर्ण का लोप होता है और इनसे च्वि प्रत्यय होता है । अरूकरोति । उन्मनीकरोति । उच्चक्षूकरोति । उच्चेतीकरोति । विरहीकरोति । विरजीकरोति ।

**विमर्श**—'च्वि' का ही प्रसङ्ग है । अतः 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' (२१९२) की अनुवृत्ति आती है । तदनुसार ''सम्पद्यमान कर्ता में वर्तमान अरुस्, मनस्, चक्षुस्, चेतस्, रहस् और रजस् शब्दों के अन्त्यवर्ण (स्) का लोप होता है तथा कृ, भू, अस् के योग में होने के साथ ही च्वि प्रत्यय भी होता है ।''

**उदाहरण**—(१) अनुरुः उरुः सम्पद्यते, तत् करोति (उरुस् + च्वि + करोति, 'स्' का लोप,

**५।४।५२ । च्वेर्विषये सातिर्वा स्यात्साकल्ये । 'सात्पदाद्योः' । कृत्स्नं शस्त्रमग्निः सम्पद्यते अग्निसाद्भवति, अग्नीभवति । कात्स्र्न्ये किम्? एकदेशेन शुक्लीभवति पटः ।**
**(२१९८) अभिविधौ सम्पदा च ५।४।५३ । सम्पदा कृभ्वस्तिभिश्च योगे सातिर्वा व्याप्तौ । पक्षे – कृभ्वस्तियोगे च्विः, सम्पदा तु वाक्यमेव । अग्निसात् सम्पद्यते, अग्निसाद्भवति शस्त्रम्, अग्नीभवति । जलसात्सम्पद्यते, जलीभवति लवणम् ।**

---

(२१९७) **विभाषेति** । सातीति लुप्तप्रथमाकम् । कृभ्वस्तियोगे, 'सम्पद्यकर्तरि' इति चानुवर्तते । तदाह — **च्वेर्विषय इत्यादि** ।

(२१९८) **अभिविधाविति** । **सम्पदा इति** = सम्पूर्वकपदधातुनेत्यर्थः ।

---

तथा 'उ' को दीर्घ - 'च्वौ च', 'च्वि' का सर्वापहार लोप) = उरूकरोति (घाव करता है) । (२) अनुन्मनाः उन्मनाः सम्पद्यते तत्करोति (उन्मनस् + 'च्वि' तथा 'स्' का लोप - प्रकृत सूत्र से, 'अ' = 'ई' -'अस्य च्वौ', 'च्वि' का सर्वापहार लोप) = उन्मनीकरोति (उदास करता है) । (३) अनुच्चक्षुः उच्चक्षुः सम्पद्यते, तत् करोति (उच्चक्षुस् + च्वि + करोति, स् का लोप तथा दीर्घ — 'च्वौ च', 'च्वि' का लोप) = उच्चक्षूकरोति (आँख ऊपर करता है) । (४) अनुच्चेताः उच्चेताः करोति (उच्चेतस् + च्वि + करोति, 'स्' का लोप तथा च्वि, ईत्व, 'च्वि' का लोप आदि पूर्ववत्) = उच्चेतीकरोति (चित्त को प्रसन्न करता है) । (५) अविरहः विरहः सम्पद्यते तं करोति (विरहस् + च्वि + करोति, अन्त्य वर्ण लोप, 'अ' = 'ई' 'च्वि' का लोप) = विरहीकरोति (अलग करता है) । (६) अविरजाः विरजाः सम्पद्यते, तत् करोति (विरजस् + च्वि + करोति, 'स्' का लोप, 'अ' = 'ई' तथा 'च्वि' का सर्वापहार लोप) = विरजीकरोति (धूल से रहित करता है) ।

(२१९७) **पद**—विभाषा, साति, कात्स्र्न्ये । **अनुवृत्ति**—कृभ्वस्तियोगे, सम्पद्यकर्तरि, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—साकल्य अर्थ में च्वि प्रत्यय के विषय में विकल्प से 'साति' प्रत्यय होता है । अग्निसाद्भवति, अग्नीभवति । 'कात्स्र्न्ये' क्यों कहा? एकदेशेन शुक्लीभवति पटः ।

**विमर्श**—''कृभ्वस्तियोगे सम्पद्य कर्तरि'' की अनुवृत्ति अपेक्षित है । सूत्रस्थ 'साति' पद लुप्तप्रथमाविभक्तिक है । तदनुसार ''सम्पद्यते क्रिया के कर्ता में वर्तमान प्रातिपदिक से कृ, भू तथा अस्ति के योग में साकल्य अर्थ गम्यमान होने पर विकल्प से साति (= सात्) प्रत्यय होता है ।'' पक्ष में यथाप्राप्त 'च्वि' होता है ।

**उदाहरण**— अनग्निः अग्निः सम्पद्यते तं करोति (अग्नि + साति = 'सात्' प्रत्यय + भवति, 'आदेशप्रत्यययोः' से प्राप्त षत्व का 'सात्पदाद्योः' से निषेध, 'त्' = 'द्' — जश्त्व) = अग्निसाद्भवति (अग्निमय हो जाता है) । पक्ष में 'च्वि' होने पर — अग्नीभवति ।

**प्रत्युदाहरण**—प्रकृत सूत्र में 'कात्स्र्न्ये' पद का निवेश होने से '**एकदेशेन शुक्लीभवति पटः**' में 'सात्' प्रत्यय नहीं होता । क्योंकि वस्त्र में सफेदी किसी एक भाग में हो रही है न कि पूरे वस्त्र में । यथाप्राप्त 'च्वि' प्रत्यय हुआ ।

(२१९८) **पद**—अभिविधौ, सम्पदा, च । **अनुवृत्ति**—विभाषा, साति, कृभ्वस्तियोगे, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—अभिविधि (अभिव्याप्ति) अर्थ गम्यमान हो तो कृ, भू, अस् और सम्पूर्वक पद के योग में च्वि के विषय में विकल्प से 'साति' प्रत्यय होता है । पक्ष में कृ, भू और अस्ति के योग

**( २१९९ ) तदधीनवचने ५।४।५४ ।** सातिः कृभ्वस्तिभिः सम्पदा च योगे राजसात्करोति । राजाधीनमित्यर्थः । **( २२०० ) देये त्रा च ५।४।५५ ।** तदधीने देये त्रा स्यात्सातिश्च कृभ्वादियोगे । विप्राधीनं देयं करोति विप्रत्राकरोति । विप्रत्रा सम्पद्यते । पक्षे – विप्रसात्करोति । देये किम् ? राजसाद्भवति राष्ट्रम् । **( २२०१ ) देवमनुष्य-**

---

(२१९९) **तदधीनवचने** । 'विभाषा साति कार्त्स्न्ये' इत्यस्मात् 'साती'ति, 'अभिविधौ सम्पदा चे'त्यतः 'सम्पदे'ति चानुवर्तते । 'कृभ्वस्तियोगे' इत्यप्यनुवर्तते । अत आह – **'सातिः' इत्यादिना** ।

(२२००) **देये त्रा चेति** । 'तदधीनवचने' इत्यनुवर्तते । **कृभ्वादियोग इति** । कृभ्वस्तिभिः सम्पदा च योगे इत्यर्थः ।

---

में 'च्वि' प्रत्यय होता है । सम् + पद् से तो वाक्य ही रहेगा । अग्निसाद् सम्पद्यते । अग्निसाद्भवति शस्त्रम् अग्नीभवति । जलसात् सम्पद्यते जलीभवति ।

**विमर्श**—पूर्वसूत्र (२१९७) से 'विभाषा' तथा 'साति' पदों की अनुवृत्ति आती है । 'कृभ्वस्तियोगे' की अनुवृत्ति भी विद्यमान है । तदनुसार "अभिव्याप्ति गम्यमान होने पर कृ, भू तथा अस् के योग में एवं सम्पूर्वक पद् धातु के योग में विकल्प से साति प्रत्यय होता है ।"

**उदाहरण**—अग्निसात्सम्पद्यते तथा कृ, भू के योग में अग्निसाद्भवति (विकल्प से साति = 'सात्' प्रत्यय) (समग्र शस्त्र अग्निरूप में परिणत होता है) । पक्ष में 'च्वि' — अग्नीभवति । इसी प्रकार जलसात्सम्पद्यते (साति) = जलीभवति (च्वि) लवणम् (= पूरा नमक जल रूप में परिणत होता है) ।

(२१९९) **पद**—तदधीनवचने । **अनुवृत्ति**—सम्पदा, सातिः, कृभ्वस्तियोगे, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—तदधीनता बोध्य होने पर कृ, भू तथा अस् और सम् + पद् के योग में साति प्रत्यय होता है । राजसात्करोति ।

**विमर्श**—'साति' प्रत्यय का ही विषय है । अतः पूर्वसूत्रों से 'सम्पदा', 'सातिः' और 'कृभ्वस्तियोगे' की अनुवृत्तियाँ अनुसरण कर रही हैं । तदनुसार "तदधीनवचन = उसके अधीन है ऐसे कथन में कृ, भू, अस्ति तथा सम्पद् के योग में साति = 'सात्' प्रत्यय होता है ।"

**उदाहरण**—राजसात् करोति (√कृ के योग में साति = 'सात्' प्रत्यय) । अर्थ – राजा के अधीन करता है ।

(२२००) **पद**—देये, त्रा, च । **अनुवृत्ति**—तदधीनवचने, सम्पदा, सातिः, कृभ्वस्तियोगे, तद्धिताः । **विधिसूत्र** ।

**मूलार्थ**—तदधीन देयता अर्थ गम्य होने पर कृ, भू, अस् तथा सम्पद् के योग में साति प्रत्यय होता है । विप्रत्राकरोति । विप्रत्रासम्पद्यते । पक्ष में – विप्रसात्करोति । 'देये' क्यों कहा? राजसाद् भवति राष्ट्रम् ।

**विमर्श**—पूर्वसूत्र के विषय के अतिरिक्त विशेष अर्थ में प्रत्यय का विधान किया जा रहा है । अतः सम्पूर्ण पूर्वसूत्र 'तदधीनवचने' की अनुवृत्ति आती है । अन्य उल्लिखित पदों की अनुवृत्ति भी पूर्ववत् आ रही है । तदनुसार "यदि देय (देने योग्य वस्तु) दिये जाने वाले के अधीन की जाय तो तद्वाचक शब्द से कृ, भू, अस्ति और सम् + पद् के योग में 'त्रा' तथा 'साति' प्रत्यय होते हैं ।"

**उदाहरण—'कृ' के योग में** — विप्र + 'त्रा' प्रत्यय = विप्रत्राकरोति । **'सम्पद्' के योग**

**(२२५७) षिद्गौरादिभ्यश्च ४।१।४१।** ङीष्। नर्तकी। गौरी। अनड्वाही, अनडुही। *पिप्पल्यादयश्च*। आकृतिगणोऽयम्। *मत्स्यस्य ङ्याम्*। यलोपः– मत्सी। **(२२५८) जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुक-कबराद् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छा-केशवेशेषु ४।१।४२।** एभ्य एकादशभ्यः क्रमाद् वृत्त्यादिष्वर्थेषु ङीष्, जानपदी वृत्तिश्चेत्। अन्या तु – जानपदा। अजन्तत्वात् ङीपि आद्युदात्तः। कुण्डी अमत्रं चेत्। कुण्डाऽन्या। गोणी आवपनं चेत्। गोणाऽन्या। स्थली अकृत्रिमा चेत्। स्थलाऽन्या। भाजी श्राणा चेत्। भाजाऽन्या। 'यवागूरुष्णिका श्राणा विलेपी तरला च सा' इत्यमरः। नागी स्थूला चेत्। नागाऽन्या। काली वर्णश्चेत्। कालाऽन्या। नीली

---

(२२५७) **षिद्गौरादिभ्यश्च**। षिद्भ्यो गौरादिभ्यश्च ङीप् स्यादित्यर्थः। **नर्तकी** — नृती गात्रविक्षेपे 'शिल्पिनि ष्वुन्' इति ष्वुन् षनावितौ 'वु' इत्यस्य अकादेशे लघूपधगुणे रपरत्वे 'षिद्गौरादिभ्यश्चे'ति ङीषि कृते 'नर्तकी' इति।

(२२५८) **जानपद इति**। जानपदेत्यादि कबरादित्यन्तमेकं पदम्, समाहारद्वन्द्वात्पञ्चमी। जानपदेत्यादिभ्यः एकादशभ्यः क्रमाद् वृत्त्यादिष्वर्थेषु ङीष् स्यादित्यर्थः।

---

(२२५७) **पद**—षिद्गौरादिभ्यः, च। **अनुवृत्ति**—ङीष्। **विधिसूत्र**।

**मूलार्थ**—षित् तथा गौरादिगणपठित शब्दों से ङीष् होता है। नर्तकी। गौरी। अनड्वाही, अनडुही। **वा०**—पिप्पल्यादि से भी स्त्रीलिङ्ग में ङीष् होता है। **वा०**—मत्स्य शब्द से ङी के परवर्ती रहते यकार का लोप होता है। मत्सी।

**विमर्श**—पूर्वसूत्र 'अन्यतो ङीष्' (४।१।४०) से विधेयवाचक 'ङीष्' की अनुवृत्ति आ रही है। अन्य प्राकरणिक तथा आधिकारिक पदों की अनुवृत्तियाँ पूर्ववत् अनुसरण कर रही हैं। सूत्र में उल्लिखित गौरादि आकृतिगण है। तदनुसार ''षकार इत्संज्ञक प्रातिपदिक तथा गौरादिगणपठित शब्दों से स्त्रीलिङ्ग में ङीष् (= ई) प्रत्यय होता है।''

**उदाहरण**—षित् — ✓नृत् = नृ + ष्वुन् (= 'वु' = अक, गुण, रपर) — नर्तक + ङीष् (= 'ई' - 'षिद्गौरादिभ्यश्च', अ का लोप, विभक्तिकार्य) = नर्तकी (नृत्य करने वाली स्त्री)। गौर + ङीष् (= 'ई', 'अ' का लोप) = गौरी (गौरवर्ण की स्त्री)। अनडुह् + ङीष् (= 'ई', विकल्प से आम् = 'आ' आगम - 'आमनडुहः स्त्रियां वा') — अनडु आ ह् ई ('उ' = 'व्' यण् आदेश) = अनड्वाही। 'आम्' के अभाव पक्ष में - अनडुही।

**ग० सू०**—पिप्पली आदि शब्दों से भी स्त्रीलिङ्ग में 'ङीष्' प्रत्यय होता है।

**वा०**—ङी प्रत्यय के परे रहते मत्स्य के यकार का लोप होता है। **उदाहरण**— मत्स्य + ङीष् (= 'ई', 'अ' का लोप, 'य्' का लोप - 'मत्स्यस्य ङ्याम्') = मत्सी (मछली)।

(२२५८) **पद**—जानपद·······कबरात्, वृत्त्यमत्र·······केशवेशेषु। **अनुवृत्ति**—ङीष्। **विधिसूत्र**।

**मूलार्थ**—जानपद आदि शब्दों से क्रमशः वृत्ति आदि अर्थों में स्त्रीत्व द्योत्य रहते ङीष् प्रत्यय होता है। जानपदी। अन्य अर्थ में - जानपदी। पात्र अर्थ में - कुण्डी। अन्यत्र - कुण्डा। कोठली अर्थ में - गोणी। अन्यत्र - गोणा। अकृत्रिमभूमि - स्थली। अन्यत्र - स्थला। व्यञ्जनविशेष - भाजी। अन्यत्र - भाजा। मोटी स्त्री अर्थ में - नागी। अन्यत्र - नागा। काला रंग वाली - काली। अन्यत्र -

**अनाच्छादनं चेत्। नीलाऽन्या, नील्या रक्ता शाटीत्यर्थः। कुशी अयोविकारश्चेत्। कुशाऽन्या। कामुकी मैथुनेच्छा चेत्। कामुकाऽन्या। कबरीकेशानां सन्निवेशश्चेत्। कबराऽन्या। (२२५९) शोणात्प्राचाम् ४।१।४३। शोणी, शोणा। (२२६०)**

---

(२२५९) **शोणात्प्राचाम्**। शोणशब्दो वर्णवाची, 'अन्यतो ङीष्' इति नित्यं ङीषि प्राप्ते विकल्पार्थं वचनमिदम्।

---

काला। गाय - नीली। अन्यत्र - नीला (नीली रंगी हुई साड़ी)। लोहे के फाल अर्थ में - कुशी। अन्यत्र - कुशा। सहवास की इच्छुक स्त्री के अर्थ में - कामुकी। अन्यत्र - कामुका। केशों को सम्हालने वाली - कबरी। अन्यत्र - कबरा।

**विमर्श**—पूर्ववत् 'अन्यतो ङीष्' (४।१।४०) से ङीष् की अनुवृत्ति आती है। पूर्ववत् आधिकारिक पदों की अनुवृत्ति का प्रभाव विद्यमान है। अतः "जानपद, कुण्ड, गोण, भाज, नाग, काल, नील, कुश, कामुक और कबर शब्दों से क्रमशः वृत्ति, पात्रविशेष, कोठली (बोरा आदि), अकृत्रिम भूमि, व्यञ्जन, अधिक मोटा, काला रंग, वस्त्र से भिन्न अर्थ, लोहे से निर्मित उपकरण - विशेष, सम्भोग की इच्छा तथा केशविन्यास अर्थ वाच्य होने पर स्त्रीलिङ्ग में ङीष् (= ई) प्रत्यय होता है।"

**उदाहरण**—(१) जानपद (जनपद + अण् = 'अ', आदिवृद्धि, अन्त्यवर्णलोप) - जानपद + ङीष् (= 'ई', 'अ' का लोप) = जानपदी (आजीविका)। आजीविका से भिन्न अर्थ में - जनपद + अञ् (= 'अ' - 'उत्सादिभ्योऽञ्', आदिवृद्धि, 'अ' का लोप + ङीप् = 'ई' - 'टिड्ढाणञ्०', 'अ' का लोप) = जानपदी। ङीप् होने पर आद्युदात्त - जानपदी। (२) कुण्ड + ङीष् (= 'ई', 'अ' का लोप) = कुण्डी (संन्यासी का कमण्डलु)। अन्यत्र - कुण्ड + टाप् (= 'आ' दीर्घ) = कुण्डा (जलने वाली वस्तु)। (३) गोण + ङीष् ('अ' का लोप) = गोणी (अनाज रखने की कोठली, बोरा आदि)। अन्यत्र टाप् होकर - गोणा (नाम-विशेष)। (४) स्थल + 'ङीष्' (अ का लोप) = स्थली (अकृत्रिम भूमि)। अन्यत्र - स्थला (कृत्रिम भूमि)। (५) भाज + ङीष् (= 'ई', 'अ' का लोप) = भाजी (व्यञ्जन-विशेष)। अन्यत्र - भाजा (टाप्)। (६) नाग + ङीष् (अन्त्यवर्णलोप) = नागी (मोटी स्त्री)। अन्य अर्थ में – नागा। (७) काल + ङीष् (= ई, अ का प) = काली (काले रंग की स्त्री)। अन्यत्र टाप् = काला (क्रूर स्त्री)। (८) नील + ङीष् (= 'ई', 'अ' का लोप) = नीली (नील गाय)। अन्यत्र टाप् = नीला (नीले रंग की साड़ी)। (९) कुश + ङीष् ('अ' का लोप) = कुशी (लोहे की फाल)। इससे भिन्न अर्थ में टाप् - कुशा (गूलर की छोटी लकड़ी)। (१०) कामुक + ङीष् = कामुकी (कामवासना युक्त स्त्री)। अन्यत्र टाप् - कामुका (धनादि की इच्छुक स्त्री)। (११) कबर + ङीष् (= ई, 'अ' का लोप) = कबरी (चित्र-विचित्र केशविन्यास वाली)। अन्य अर्थ में टाप् - कबरा (चितकबरा)।

(२२५९) **पद**—शोणात्, प्राचाम्। **अनुवृत्ति**—ङीष्। **विधिसूत्र**।

**मूलार्थ**—शोण शब्द से स्त्रीलिङ्ग में विकल्प से ङीष् होता है। शोणी, शोणा।

**विमर्श**—'अनुपसर्जनात्', 'स्त्रियाम्' तथा 'प्रातिपदिकात्' का अधिकार है। 'अन्यतो ङीष्' (४।१।४०) से 'ङीष्' पद की अनुवृत्ति आती है। तदनुसार "उपसर्जन रहित शोण शब्द से स्त्रीलिङ्ग में प्राचीन आचार्यों के मत में 'ङीष्' प्रत्यय होता है।"

**उदाहरण**—शोण + ङीष् (= 'ई' विकल्प से, 'अ' का लोप) = शोणी। अन्य आचार्यों के मत में - शोणा (टाप्) (लाल घोड़ी)।

**वोतो गुणवचनात् ४।१।४४** । उदन्ताद् गुणवाचिनो वा ङीष् । मृद्वी, मृदुः । उतः किम् ? शुचिः । गुणेति किम् ? आखुः । * खरुसंयोगोपधान्न * । खरुः पतिंवरा कन्या । पाण्डुः । **( २२६१ ) बह्वादिभ्यश्च ४।१।४५** । वा ङीष् । बह्वी, बहुः । * कृदिकारादक्तिनः * । रात्री, रात्रिः । * सर्वतोऽक्तिन्नर्थादित्येके * । शकटी, शकटिः ।

---

( २२६० ) **वोतो गुणवचनात्** । 'ङीषि'त्यनुवर्तते । तदाह — **उदन्तादिति** ।

( २२६१ ) **बह्वादिभ्यश्चेति** । आकडारसूत्रभाष्यरीत्या संख्याशब्दानां गुणवाचित्वाऽनभ्युपगमाद् बहुशब्दग्रहणम् । 'वा' इति 'ङीषि' ति चानुवर्तते । तदाह — **वेति** । **कृदिकारादिति** । कृत्प्रत्ययस्य य इकारः तदन्तात्प्रातिपदिकात् ङीष् वा स्यात्; न तु क्तिन्नन्तादित्यर्थः ।

---

( २२६० ) **पद**—वा, उतः, गुणवचनात् । **अनुवृत्ति**—ङीष् । **विधिसूत्र** ।

**मूलार्थ**—गुणवाचक उदन्त शब्द से वैकल्पिक ङीष् होता है । मृद्वी, मृदुः । 'उतः' क्यों कहा ? शुचिः । 'गुण' क्यों कहा ? आखुः । **वा०** - खरु शब्द और संयोगोपध शब्दों से ङीष् नहीं होता । खरुः । पाण्डुः ।

**विमर्श**—पूर्वसूत्रवत् आधिकारिक पदों की अनुवृत्ति अनुसरण कर रही है । 'अन्यतो ङीष्' से 'ङीष्' की अनुवृत्ति आती है । 'उतः' पद 'गुणवचनात्' एवं 'प्रातिपदिकात्' का विशेषण होने से तदन्तविधि होती है । तदनुसार "उकारान्त गुणवाचक प्रातिपदिक से स्त्रीलिङ्ग में विकल्प से ङीष् होता है ।"

**उदाहरण**—मृदु + ङीष् ( = 'ई', 'उ' = 'व्' - यण्) = मृद्वी । ङीष् न होने पर - मृदुः (कोमल स्वभाव वाली स्त्री) ।

**प्रत्युदाहरण**—सूत्र में 'उतः' पद का निवेश होने से 'शुचिः' (पवित्र स्त्री) में ङीष् नहीं होता । यहाँ शुचि शब्द उकारान्त नहीं है । उकारान्त शब्द गुणवाची अपेक्षित होने से 'आखुः' (मूषिका) में ङीष् नहीं होता ।

**वा०**—खरु तथा संयुक्त वर्णोपध शब्दों से ङीष् प्रत्यय नहीं होता । **उदाहरण**—खरुः (पति को वरण करने वाली) — यहाँ प्राप्त ङीष् का प्रकृत वार्तिक से निषेध । पाण्डुः ( श्वेतवर्णा स्त्री)— यहाँ ङीष् प्राप्त होने पर संयुक्त वर्ण होने से वार्तिक द्वारा ङीष् का निषेध होता है ।

( २२६१ ) **पद**—बह्वादिभ्यः, च । **अनुवृत्ति**—वा, ङीष् । **विधिसूत्र** ।

**मूलार्थ**—बह्वादिगणपठित शब्दों से विकल्प से ङीष् प्रत्यय होता है । बह्वी, बहुः । **ग० सू०** - कृत्प्रत्यय सम्बन्धी इकारान्त शब्दों से वैकल्पिक ङीष् होता है । रात्री, रात्रिः । **ग०सू०** - कोई आचार्य यह मानते हैं कि क्तिन् प्रत्यय के अर्थ से भिन्न कृत् अथवा अकृत् इकारान्त से वैकल्पिक ङीष् प्रत्यय होता है । शकटी, शकटिः ।

**विमर्श**—पूर्वसूत्र (२२६०) से 'वा' तथा 'अन्यतो ङीष्' से 'ङीष्' की अनुवृत्ति आती है । पूर्ववत् 'अनुपसर्जनात्', 'स्त्रियाम्', 'प्रातिपदिकात्' आदि की आधिकारिक अनुवृत्ति का प्रभाव विद्यमान है । इस प्रकार "बह्वादिगणपठित शब्दों से स्त्रीलिङ्ग में विकल्प से ङीष् ( = ई) प्रत्यय होता है ।"

**उदाहरण**—बहु + ङीष् ( = 'ई' विकल्प से - 'बह्वादिभ्यश्च', 'उ' = 'व्' - यण्) = बह्वी । पक्ष में 'बहुः' (बहु + स् = र् = :) । (बहुत गुणों वाली स्त्री) ।

**१. ग०सू०**—क्तिन् प्रत्यय के अर्थ से भिन्न इकारान्त कृत्प्रत्ययान्त शब्दों से स्त्रीलिङ्ग में विकल्प से ङीष् प्रत्यय होता है । **उदाहरण**—रात्रि + ङीष् ( = ई, दीर्घ) = रात्री । पक्ष में - रात्रिः (रात) ।

**(२२६२) पुंयोगादाख्यायाम् ४।१।४८** । या पुमाख्या पुंयोगात्स्त्रियां वर्तते ततो ङीष्। गोपस्य स्त्री गोपी। *पालकान्तान्न*। गोपालिका। अश्वपालिका। *सूर्याद्देवतायां चाप् वाच्यः*। सूर्यस्य स्त्री देवता सूर्या। देवतायां किम्? सूरी, कुन्ती, मानुषीयम्। **(२२६३) इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ४।१।४९** । ङीष् च। इन्द्राणी। *हिमारण्ययोर्महत्त्वे*।

---

(२२६२) **पुंयोगादाख्यायाम्**। 'ङीषि'त्यनुवर्तते। अत आह — **या पुमाख्येति**।

(२२६३) **इन्द्रवरुण इति**। एषामानुगागमो ङीष् चेत्यर्थः। **इन्द्राणी** — इन्द्रस्य स्त्रीति विग्रहे इन्द्रशब्दात् 'इन्द्रवरुणभवे'त्यादिना ङीषि आनुगागमे च कित्त्वादन्त्यावयवे सवर्णदीर्घे

---

२. **ग०सू०** — कुछ आचार्यों के मत में क्तिन् प्रत्यय के अर्थ से भिन्न सभी इकारान्त शब्दों से स्त्रीलिङ्ग में विकल्प से ङीष् प्रत्यय होता है। **उदाहरण** — शकटि + ङीष् (= 'ई') = शकटी। पक्ष में - शकटिः (बैलगाड़ी)।

(२२६२) **पद** — पुंयोगात्, आख्यायाम्। **अनुवृत्ति** — ङीष्। **विधिसूत्र**।

**मूलार्थ** — जो पुरुषवाचक शब्द पुंयोग से स्त्रीलिङ्ग में प्रवृत्त हो तो उससे ङीष् प्रत्यय होता है। गोपी। **वा०** - पालकान्त से ङीष् नहीं होता। गोपालिका। अश्वपालिका। **वा०** - देवता अर्थ में सूर्य शब्द से पुंयोग में 'चाप्' प्रत्यय होता है। सूर्या। 'देवतायाम्' क्यों कहा? सूरी, कुन्ती, मानुषीयम्।

**विमर्श** — ङीष् प्रत्यय के विधान का प्रकरण चल रहा है। पूर्ववत् सभी आधिकारिक सूत्रों की अनुवृत्ति आ रही है। 'अन्यतो ङीष्' से ङीष् की अनुवृत्ति आती है। सूत्रस्थ 'आख्यायाम्' में सप्तम्यन्त पद पञ्चम्यन्त के अर्थ में प्रयुक्त हुआ है। 'पुम्' की आवृत्ति की जाती है। 'पुम्' शब्द का अन्वय 'योग' के साथ तथा 'आख्या' के साथ किया जाता है। 'पुमाख्या' शब्द का अर्थ - पुरुषवाचक है। तदनुसार "यदि पुरुषवाचक शब्द का प्रयोग पुरुष के साथ साहचर्य होने के कारण स्त्रीलिङ्ग में हो, तो अनुपसर्जन (विशेषण रहित) अकारान्त प्रातिपदिक से 'ङीष्' प्रत्यय होता है।"

**उदाहरण** — गोप + ङीष् (= 'ई', 'अ' का लोप) = गोपी (ग्वाले की स्त्री)।

१. **वा०** — जिस पुरुषवाचक शब्द के अन्त में पालक शब्द हो, उससे पुंयोग होने पर ङीष् प्रत्यय नहीं होता। **उदाहरण** — गोपालक ('पुंयोगादाख्यायाम्' से प्राप्त ङीष् का प्रकृत वार्तिक से निषेध, अकारान्त होने से टाप् = 'आ', 'अ' = 'इ', दीर्घ) = गोपालिका (गोपालक की स्त्री)। इसी प्रकार अश्वपालक (प्राप्त ङीष् का निषेध, टाप्) = अश्वपालिका (अश्वपालक की स्त्री)।

२. **वा०** — सूर्य शब्द से पुंयोग में देवता वाच्य रहते चाप् (= 'आ') प्रत्यय होता है।

**उदाहरण** — सूर्य + चाप् (= 'आ', दीर्घ) = सूर्या (सूर्य की देवता स्त्री)। **प्रत्युदाहरण** — मनुष्य जाति की स्त्री वाच्य होने पर 'देवतायाम्' का ग्रहण वार्तिक में होने से चाप् नहीं होता। सूर्य + ङीष् (= 'ई', 'अ' का लोप होने पर 'य्' का लोप - 'सूर्यतिष्यागस्त्य०') = सूरी (सूर्य की मानवी स्त्री, कुन्ती)।

(२२६३) **पद** — इन्द्रवरुण.........मातुलाचार्याणाम्, आनुक्। **अनुवृत्ति** — पुंयोगात्, ङीष्। **विधिसूत्र**।

**मूलार्थ** — इन्द्र, वरुण आदि शब्दों को पुंयोग में 'आनुक्' का आगम होता है और ङीष् प्रत्यय भी होता है। इन्द्राणी। **वा०** - हिम और अरण्य शब्दों से महत्त्व अर्थ में आनुक् = 'आन्'

**महद्धिमं हिमानी । *यवाद्दोषे* । दुष्टो यवो यवानी । *यवनाल्लिप्याम्* । यवनानां लिपिर्यवनानी । *मातुलोपाध्याययोरानुग्वा* । मातुलानी, मातुली । उपाध्यायानी, उपाध्यायी । *आचार्यादणत्वं च* । आचार्याणी । *अर्यक्षत्रियाभ्यां वा स्वार्थे* । अर्याणी, अर्या । क्षत्रियाणी, क्षत्रिया । पुंयोगे तु – अर्यी । ( २२६४ ) क्रीतात्करण-**

---

णत्वे विभक्तिकार्ये 'इन्द्राणी' इति । **हिमारण्ययोर्महत्त्वे** । महत्त्वविशिष्टे हिमे अरण्ये च वर्तमानयोरानुङ्ङीषावित्यर्थः ।

---

और 'ङीष्' होता है । हिमानी । **वा०** – यव शब्द से दोष अर्थ में आनुक् और ङीष् होता है । यवानी । **वा०** – यवन शब्द से लिपि अर्थ में आनुक् और ङीष् होता है । यवनानी । **वा०** – मातुल और उपाध्याय शब्द से आनुक् विकल्प से होता है । उपाध्यायानी, उपाध्यायी । मातुलानी, मातुली । **वा०** – आचार्य शब्द से परे आनुक् के नकार को णत्व नहीं होता । आचार्याणी । **वा०** – अर्य और क्षत्रिय शब्द से स्वार्थ में विकल्प से आनुक् और ङीष् होता है । अर्याणी, अर्या । क्षत्रियाणी, क्षत्रिया । पुंयोग में – अर्यी । क्षत्रियी ।

**विमर्श**—पूर्वसूत्र (२२६२) से 'पुंयोगात्' की तथा 'अन्यतो ङीष्' (४।१।४०) से 'ङीष्' की अनुवृत्ति आती है । पूर्ववत् आधिकारिक पदों की अनुवृत्ति अनुसरण कर रही है । तदनुसार ''पुंल्लिङ्ग के हेतु से स्त्रीत्व में वर्तमान इन्द्र, वरुण, भव, शर्व, रुद्र, मृड, हिम, अरण्य, यव, यवन, मातुल तथा आचार्य शब्दों से आनुक् (= आन्) का आगम तथा ङीष् प्रत्यय होता है ।'' 'आनुक्' में 'क्' की इत्संज्ञा होने से 'आद्यन्तौ टकितौ' परिभाषानुसार इन्द्र आदि का अन्तावयव होगा ।

**उदाहरण**—इन्द्रस्य स्त्री (इन्द्र + आनुक् = 'आन्' + ङीष् = 'इ' – 'इन्द्रवरुण०', 'न्' 'ण्' – 'अट्कुप्वाङ्नुम्व्यवायेऽपि') = इन्द्राणी (इन्द्र की स्त्री) ।

१. **वा०**—''हिम और अरण्य शब्दों से आधिक्य अर्थ में ङीष् प्रत्यय और आनुक् का आगम होता है ।'' **उदाहरण**—हिम + आनुक् (= 'आन्' + ङीष् = 'ई') = हिमानी (सदैव रहने वाली बर्फ) ।

२. **वा०**—''यव शब्द से दुष्ट अर्थ में आनुक् आगम एवं ङीष् प्रत्यय होते हैं ।'' **उदाहरण**— यव + आनुक् (= आन् + ङीष् = ई) = यवानी (अजवाइन) छोटा होना ही इसका दोष है ।

३. **वा०**—''यवन शब्द से लिपि अर्थ में आनुक् एवं ङीष् होते हैं ।'' **उदाहरण**— यवन + आनुक् (= आन् + ङीष् = ई) = यवनानी (यवनों की लिपि) ।

४. **वा०**—''मातुल और उपाध्याय शब्दों से विकल्प से आनुक् का आगम होता है ।'' **उदाहरण**—मातुल + आनुक् (= 'आन्' विकल्प से, दीर्घ + ङीष् = 'ई') = मातुलानी । पक्ष में – आनुक् आगम के न होने पर 'पुंयोगादाख्यायाम्' से ङीष् – मातुली (मामी) । उपाध्याय + आनुक् (= 'आन्' विकल्प से, दीर्घ + ङीष् = ई) = उपाध्यायानी । पक्ष में – उपाध्यायी (गुरु की पत्नी) ।

५. **वा०**—''आचार्य शब्द से परवर्ती आनुक् के 'न्' को णत्व नहीं होता ।'' **उदाहरण**— आचार्य + आनुक् (= 'आन्', सवर्णदीर्घ + ङीष् = 'ई', प्राप्त णत्व का प्रकृत वार्तिक से निषेध) = आचार्यानी (आचार्य की पत्नी) ।

६. **वा०**—''अर्य और क्षत्रिय शब्दों से स्वार्थ में विकल्प से 'आनुक्' और ङीष् होते हैं ।'' **उदाहरण**—अर्य + आन् (दीर्घ, ङीष् = 'ई' – विकल्प से, णत्व) = अर्याणी (वैश्य स्त्री या स्वामिनी) । पक्ष में टाप् होकर – अर्या । क्षत्रिय + आन् + ङीष् (= 'ई' विकल्प से) = क्षत्रियाणी (क्षत्रिय की स्त्री) । पक्ष में – क्षत्रिया । पुंयोग में – 'पुंयोगादाख्यायाम्' से ङीष् होता है ।

**पूर्वात् ४।१।५० । क्रीतान्ताददन्तात्करणादेर्ङीष् । वस्त्रक्रीती । क्वचिन्न – धनक्रीता । ( २२६५ ) बहुव्रीहेश्चान्तोदात्तात् ४।१।५२ । क्तान्तान्ङीष् । ऊरुभिन्नी । ( २२६६ ) अस्वाङ्गपूर्वपदाद्वा ४।१।५३ । पूर्वेण नित्ये प्राप्ते विकल्पोऽयम् । सुरापीती,**

---

(२२६४) **क्रीतात्करणपूर्वात्** । ङीष् इत्यनुवर्तते, अत इति च । प्रातिपदिकादित्यनुवृत्तम् 'अत' इत्यनेन क्रीतादित्यनेन च विशेष्यते, तदन्तविधिस्तदाह – **क्रीतान्तादित्यादिना** ।

(२२६५) **बहुव्रीहेश्चेति** । बहुव्रीहेः क्तान्तादन्तोदात्तादन्तात् स्त्रियां ङीष् स्यादित्यर्थः ।

(२२६६) **अस्वाङ्गपूर्वपदाद्वेति** । न स्वाङ्गम् = अस्वाङ्गम् । अस्वाङ्गं यत्पूर्वपदं तस्मात्परं यत् क्तान्तं तदन्ताद् बहुव्रीहेः ङीष् वा स्यादिति सूत्रार्थः ।

---

**उदाहरण**—अर्य + ङीष् (= 'ई' 'अ' का लोप) = अर्यी (वैश्यपुरुष की पत्नी) । क्षत्रिय + ङीष् (= 'ई', 'अ' का लोप) = क्षत्रियी (क्षत्रिय पुरुष की पत्नी) ।

(२२६४) **पद**—क्रीतात्, करणपूर्वात् । **अनुवृत्ति**—ङीष्, अतः । **विधिसूत्र** ।

**मूलार्थ**—करणपूर्वक अदन्त क्रीतान्त प्रातिपदिक से ङीष् प्रत्यय होता है । वस्त्रक्रीती । कहीं नहीं भी होता - धनक्रीता ।

**विमर्श**—पूर्ववत् 'अनुपसर्जनात्', 'स्त्रियाम्' एवम् 'प्रातिपदिकात्' की आधिकारिक अनुवृत्ति आ रही है । 'अन्यतो ङीष्' (४।१।४०) से 'ङीष्' तथा 'अजाद्यतष्टाप्' (२२२१) से 'अतः' की अनुवृत्ति प्रमुख रूप से अपेक्षित है । 'क्रीताम्' एवम् 'अतः' पद अनुवृत्त 'प्रातिपदिकात्' के विशेषण हैं, अतः तदन्तविधि होती है । तदनुसार "करणकारकपूर्व एवं क्रीतशब्दान्त अकारान्त प्रातिपदिक से स्त्रीत्व द्योत्य रहते ङीष् प्रत्यय होता है ।"

**उदाहरण**—वस्त्रेण क्रीता ('कर्तृकरणे कृता बहुलम्' से समास, विभक्तिलुक्) — वस्त्रक्रीत + ङीष् (= 'ई' - 'क्रीतात्करणपूर्वात्', 'अ' का लोप तथा विभक्तिकार्य) = वस्त्रक्रीती । इसके अपवादस्वरूप कहीं-कहीं धनक्रीता (= धन से खरीदी हुई) आदि में ङीष् नहीं होता ।

(२२६५) **पद**—बहुव्रीहेः, च, अन्तोदात्तात् । **अनुवृत्ति**—क्तान्तात्, अतः, ङीष् । **विधिसूत्र** ।

**मूलार्थ**—अन्तोदात्त क्तान्त अदन्त बहुव्रीहि से स्त्रीलिङ्ग में ङीष् प्रत्यय होता है । ऊरुभिन्नी ।

**विमर्श**—ङीष् विधान का प्रकरण चल रहा है । 'क्तात् अल्पाख्यायाम्' (४।१।५१) से 'क्तात्' की अनुवृत्ति अपेक्षित है । अन्य प्राकरणिक एवम् आधिकारिक पदों की अनुवृत्ति पूर्वसूत्रवत् विद्यमान है । तदनुसार "अन्तोदात्त युक्त प्रत्ययान्त ह्रस्व अकारान्त बहुव्रीहि से स्त्रीत्व द्योत्य रहते ङीष् प्रत्यय होता है ।"

**उदाहरण**—ऊरू भिन्नौ यस्याः (ऊरुभिन्न - यहाँ √भिद् + क्त = भिन्न होने से ङीष् = 'ई', 'अ' का लोप) = ऊरुभिन्नी (असंयुक्त जाँघ वाली) ।

(२२६६) **पद**—अस्वाङ्गपूर्वपदात्, वा । **अनुवृत्ति**—बहुव्रीहेः च अन्तोदात्तात्, क्तात्, ङीष् । **विधिसूत्र** ।

**मूलार्थ**—स्वाङ्गभिन्न पूर्वपद हो तो पूर्व विषय में विकल्प से ङीष् होता है । सुरापीती, सुरापीता ।

**विमर्श**—सम्पूर्ण पूर्वसूत्र (२२६५) की अनुवृत्ति के साथ पूर्वसूत्र 'क्तात् अल्पाख्यायाम्' (४।१।५१) से 'क्तात्' की अनुवृत्ति आती है । 'ङीष्' की अनुवृत्ति पूर्ववत् अनुसरण कर रही है । अन्य आधिकारिक सूत्रों की अनुवृत्ति का प्रभाव यथापूर्व विद्यमान है । तदनुसार "स्वाङ्गवाचक शब्द

सुरापीता। ( २२६७ ) स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ४।१।५४। असंयोगोपधमुपसर्जनं यत्स्वाङ्गं तदन्ताद्वा ङीष्। अतिकेशी, अतिकेशा। चन्द्रमुखी, चन्द्रमुखा। संयोगोपधात्तु – सुगुल्फा।

अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्।
अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथायुतम्॥ १॥

(२२६७) **स्वाङ्गाच्चेति**। स्वाङ्गादित्येतत् अत इत्यनुवृत्तं च प्रातिपदिकादित्यनुवृत्तस्य विशेषणम्, तदन्तविधिस्तदाह – **असंयोगोपधमित्यादिना**। 'अस्वाङ्गपूर्वपदाद्वा' इत्यस्माद्वेति 'अन्यतो ङीष्' इत्यतः ङीषिति चानुवर्तते। तदाह – **वा ङीषिति**। **अतिकेशी** – केशानतिक्रान्तेति विग्रहे 'अत्यादयः क्रान्ताद्यर्थे' इति समासे सुपो लुकि 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इत्यनेन विकल्पेन ङीषि भत्वाट्टिलोपे विभक्तिकार्ये 'अतिकेशी' इति। पक्षे टापि

पूर्वपद में न रहने पर बहुव्रीहि समास एवं अन्तोदात्तस्वरयुक्त क्तप्रत्ययान्त ह्रस्व अकारान्त प्रातिपदिक से स्त्रीत्व द्योत्य रहते विकल्प से ङीष् प्रत्यय होता है।''

**उदाहरण**—सुरा पीता यया सा (सुरापीत + ङीष् = 'ई' विकल्प से, 'अ' का लोप) = सुरापीती। पक्ष में - टाप् - सुरापीता (सुरा पी हुई स्त्री)।

(२२६७) **पद**—स्वाङ्गात्, च, उपसर्जनात्, असंयोगोपधात्। **अनुवृत्ति**—वा, अतः, ङीष्। **विधिसूत्र**।

**मूलार्थ**—असंयोगोपध और उपसर्जन स्वाङ्गवाचक अदन्त प्रातिपदिक से वैकल्पिक ङीष् होता है। अतिकेशी, अतिकेशा। चन्द्रमुखी, चन्द्रमुखा। संयोगोपध से - सुगुल्फा। स्वाङ्ग तीन प्रकार का है - (१) अद्रव - न पिघलने वाला, मूर्तिमान् तथा प्राणिस्थित अविकारज। द्रवत्व होने के कारण - सुस्वेदा। अमूर्त होने के कारण - सुज्ञाना। अप्राणिस्थ होने के कारण - सुमुखा शाला। विकारज होने से - सुशोफा। (२) प्राणिस्थ न होने पर भी प्राणी में दृष्टिगोचर हो। प्राणिस्थ न होने पर प्राणी में दिखाई देने से - सुकेशी, सुकेशा। (३) जिस अङ्ग से प्राणी युक्त होता हो, उसी अंग से अप्राणी भी युक्त हो। प्राणी के समान प्राणीसदृश में विद्यमान होने के कारण - सुस्तनी, सुस्तना आदि।

**विमर्श**—पूर्वसूत्र (२२६६) से 'वा' की अनुवृत्ति प्रमुखतया अपेक्षित है। 'अजाद्यतष्टाप्' (२२२१) से 'अतः' तथा 'अन्यतो ङीष्' (४।१।४०) से 'ङीष्' की अनुवृत्ति आती है। अन्य आधिकारिक सभी अनुवृत्तियाँ पूर्ववत् अनुसरण कर रही हैं। 'स्वाङ्गात्' पद अनुवृत्त 'अतः' तथा 'प्रातिपदिकात्' के विशेषण हैं। अतः तदन्तविधि होती है। तदनुसार ''असंयोगोपध (= जिसकी उपधा में संयुक्त वर्ण न हो) तथा विशेषण के रूप में प्रयुक्त स्वाङ्गवाचक शब्द अन्त में हो, ऐसे अकारान्त प्रातिपदिक से स्त्रीत्व द्योत्य रहते विकल्प से ङीष् प्रत्यय होता है।''

**उदाहरण**—केशान् अतिक्रान्ता (तत्पुरुष समास होने से अतिकेश शब्द का उपान्त्य वर्ण 'श्' संयोग पूर्व नहीं है; साकार होने से स्वाङ्ग है, उपसर्जन भी है। अतः ङीष् = 'ई' विकल्प से, 'अ' का लोप आदि) = अतिकेशी। पक्ष में - टाप् = अतिकेशा (केशों का उल्लङ्घन करने वाली माला आदि)। चन्द्रः इव मुखं यस्याः (चन्द्रमुख + ङीष् = 'ई' विकल्प से, 'अ' का लोप) = चन्द्रमुखी। पक्ष में टाप् - चन्द्रमुखा (चन्द्रमा के तुल्य मुख वाली)। **प्रत्युदाहरण**—'सुगुल्फ' शब्द की उपधा में संयुक्त वर्ण 'ल्फ्' है। अतः वैकल्पिक ङीष् नहीं हुआ। सुगुल्फ + टाप् = सुगुल्फा (सुन्दर गुल्फ वाली)।

सुस्वेदा, द्रवत्वात्। सुज्ञाना, अमूर्तत्वात्। सुमुखा शाला, अप्राणिस्थत्वात्। सुशोफा, विकारजत्वात्। सुकेशी, सुकेशा वा रथ्या, अप्राणिस्थस्यापि प्राणिनि द्रष्टत्वात्। सुस्तनी, सुस्तना वा प्रतिमा; प्राणिवत्प्राणिसदृशे स्थितत्वात्। (२२६८) **नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ४।१।५५।** वा ङीष्। तुङ्गनासिकी, तुङ्गनासिका। ***पुच्छाच्च***। सुपुच्छी, सुपुच्छा। ***कबरमणिविषशरेभ्यो नित्यम्***।

---

कृते – 'अतिकेशा' इति। **अद्रवमिति**। महाभाष्ये त्रिधा निरुक्तं पारिभाषिकं स्वाङ्गमत्र विवक्षितमिति प्रदर्शयति – **अद्रवमित्यादिना**। न विद्यते द्रवो यस्य तत् अद्रवम्, मूर्तिः = अवयवसंयोगोऽस्यास्तीति मूर्तिमत् मूर्तं द्रव्यमिति भावः। किञ्च प्राणिस्थम् = प्राणधारिजन्तौ विद्यमानम्, अविकारजम् = रोगादिविकाराजन्यं द्रव्यं स्वाङ्गम् इति प्रथमं स्वाङ्गलक्षणम्। अति-केशी इत्यादि। अतत्स्थम् = अप्राणिस्थं तत्र प्राणिनि दृष्टं यत्तदपि स्वाङ्गम्। यथा – सुकेशी, सुकेशा वा रथ्या। इह रथ्यस्थानां केशानां प्राणिस्थत्वाभावादपि प्राणिनि दृष्टत्वमस्तीति स्वाङ्गम्। तेन प्राणिस्थेन स्तनाद्यङ्गाकृतिकावयवविशेषेण अप्राणिद्रव्यं प्रतिमादि यदि प्राणिद्रव्यवत् सम्बद्धं स्यात्तदा तत् अप्राणिनोऽपि स्तनाद्याकृतिकं वस्तु स्वाङ्गम्। यथा – सुस्तनी, सुस्तना वा प्रतिमा। स्वाङ्गलक्षणस्य पदकृत्यं प्रदर्शयति – **सुस्वेदेत्यादि**।

---

यहाँ स्वाङ्ग पारिभाषिक शब्द है, उसके तीन लक्षण कारिका में बताये गये हैं।

(क) प्रथम लक्षण के अनुसार "जो द्रववाचक न हो तथा मूर्तिमान् हो एवं प्राणी में वर्तमान होने के साथ ही अविकारज (विकार रहित) हो, वह स्वाङ्ग है।" यथा - अतिकेशी बाला।

**प्रत्युदाहरण**—सु = शोभनः स्वेदः = घर्मजः उदकप्रसवो यस्याः सा = 'सुस्वेदा' में द्रव होने से स्वाङ्ग न होने के कारण ङीष् नहीं हुआ (सुस्वेद + टाप्)। अमूर्त होने से 'सुज्ञाना' (= अच्छे ज्ञान वाली) में ङीष् नहीं होता। प्राणिस्थ न होने से 'सुमुखा शाला' (= अच्छे अग्रभाग वाली शाला) में ङीष् नहीं होता। इसी प्रकार रोगज होने से स्वाङ्ग न होने के कारण 'सुशोफा' (बहुत फूली हुई) में ङीष् नहीं होता।

(ख) "जो सम्प्रति प्राणी में स्थित न हो; किन्तु प्राणी में कभी अवश्य देखा गया हो, वह भी स्वाङ्ग है।" यथा - सुकेशी सुकेशा वा रथ्या (अच्छे बालों वाली गली)। बालों को काटकर गली में फेंक दिया गया है। यहाँ बाल यद्यपि इस समय प्राणी से संयुक्त नहीं हैं; किन्तु काटे जाने से पूर्व प्राणी में देखे गये थे। अतः पारिभाषिक स्वाङ्ग होने से वैकल्पिक ङीष् होता है।

(ग) "जो प्राण्यङ्ग के समान आकृति युक्त होकर अप्राणी को प्राणी के समान सुशोभित करता है, वह भी स्वाङ्ग है"। यथा - सुस्तनी सुस्तना वा प्रतिमा (सुन्दर स्तनों वाली प्रतिमा)। यहाँ प्रतिमा (मूर्ति) का सुन्दर वक्षःस्थल प्राण्यङ्ग के समान आकृति युक्त होकर मूर्ति को शोभित करता है। अतः स्वाङ्गवाचक होने से वैकल्पिक ङीष् होता है। पक्ष में टाप्।

(२२६८) **पद**—नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गात्, च। **अनुवृत्ति**—स्वाङ्गात्, च उपसर्जनात्, वा, ङीष्। **विधिसूत्र**।

**मूलार्थ**—नासिकाद्यन्त स्वाङ्गवाची उपसर्जन प्रातिपदिक से स्त्रीलिङ्ग में विकल्प से ङीष् होता है। तुङ्गनासिकी, तुङ्गनासिका। **वा०** - पुच्छान्त प्रातिपदिक से भी स्त्रीलिङ्ग में ङीष् होता है। सुपुच्छी, सुपुच्छा। **वा०** - कबर, मणि, विष और शर से परे पुच्छान्त प्रातिपदिक से नित्य ङीष् होता है।

**कबरपुच्छी। * उपमानात्पक्षाच्च पुच्छाच्च *। उलूकपक्षी शाला। उलूकपुच्छी सेना। (२२६९) न क्रोडादिबह्वचः ४।१।५६। क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष्। कल्याण-क्रोडा। आकृतिगणोऽयम्। सुजघना। (२२७०) सहनञ्विद्यमानपूर्वाच्च**

---

(२२६८) **नासिकोदरौष्ठ इति**। 'अस्वाङ्गपूर्वपदाद्वा' इत्यस्माद्वेति 'अन्यतो ङीष्' इत्यतो ङीषिति चानुवर्तते। तदाह — **वेति**।

(२२६९) **न क्रोडादिबह्वचः**। 'ङीषि'त्यनुवर्तते। तदाह — **क्रोडादेरित्यादि**। **कल्याणक्रोडा** — कल्याणी क्रोडा = उरःस्थलं यस्याः सा कल्याणक्रोडा वडवा, पूर्वपदे पुंवद्भावः, ङीषृनिषेधश्च।

---

कबरपुच्छी। **वा०** - उपमानवाचक से परे पक्ष और पुच्छ शब्दान्त प्रातिपदिक से नित्य ङीष् होता है। उलूकपक्षी शाला। उलूकपुच्छी सेना।

**विमर्श**—स्वाङ्गवाचक शब्दों के सन्दर्भ में नासिका आदि शब्दों को अभिलक्षित कर ङीष् विधान का प्रकरण है। अतः पूर्वसूत्र (२२६७) से 'स्वाङ्गाच्चोपसर्जनात्' की, २२६६ से 'वा' तथा 'अन्यतो ङीष्' (४।१।४०) से 'ङीष्' की अनुवृत्ति आ रही है। पूर्ववत् आधिकारिक पदों की अनुवृत्ति का प्रभाव विद्यमान है। तदनुसार "नासिका, उदर, ओष्ठ, जङ्घा, दन्त, कर्ण तथा शृङ्ग इन स्वाङ्ग-वाचक शब्दों के उपसर्जन (विशेषण) के रूप में प्रयुक्त होने पर तदन्त प्रातिपदिकों से स्त्रीत्व द्योत्य रहते विकल्प से ङीष् प्रत्यय होता है।"

**उदाहरण**—तुङ्गा नासिका यस्याः सा (तुङ्गनासिक - बहुव्रीहि समास के बाद विकल्प से ङीष् = 'ई', 'अ' का लोप, विभक्तिकार्य) = तुङ्गनासिकी। पक्ष में - टाप् = तुङ्गनासिका (ऊँची नाक वाली स्त्री)।

१. **वा०**—पुच्छान्त प्रातिपदिक से भी स्त्रीलिङ्ग में वैकल्पिक ङीष् होता है। **उदाहरण**—सुपुच्छ + ङीष् (= 'ई' विकल्प से - 'पुच्छाच्च') = सुपुच्छी। ङीष् न होने पर टाप् - सुपुच्छा (अच्छी पूँछ वाली)।

२. **वा०**—कबर, मणि, विष तथा शर शब्दों से परे पुच्छ शब्दान्त प्रातिपदिकों से नित्य ङीष् होता है। **उदाहरण**—कबरपुच्छ + ङीष् (= 'ई', अन्त्यवर्णलोप) = कबरपुच्छी (चितकबरी पूँछ वाली, मोरनी)।

३. **वा०**—उपमानवाचक से परे पक्ष तथा पुच्छशब्दान्त प्रातिपदिक से भी ङीष् होता है। **उदाहरण**—उलूकपक्षौ इव पक्षौ यस्याः सा (उलूकपक्ष + ङीष्) = उलूकपक्षी शाला (उल्लू के पंखों की तरह पार्श्व भाग वाला कक्ष। उलूकपुच्छमिव पुच्छं यस्याः (उलूकपुच्छ + ङीष्) = उलूकपुच्छी (उल्लू की पूँछ की तरह पृष्ठभाग वाली सेना)।

(२२६९) **पद**—न, क्रोडादिबह्वचः। **अनुवृत्ति**—स्वाङ्गोपसर्जनात्, ङीष्, अतः। **विधि (निषेध) सूत्र**।

**मूलार्थ**—स्वाङ्गवाचक जो क्रोडादिगणपठित शब्द और बह्वच्क शब्द तदन्त प्रातिपदिक से ङीष् प्रत्यय नहीं होता। कल्याणक्रोडा। यह आकृतिगण है। सुजघना।

**विमर्श**—पूर्वसूत्र (२२६७) से 'स्वाङ्गाच्चोपसर्जनात्' तथा 'अजाद्यतष्टाप्' से 'अतः' और 'अन्यतो ङीष्' (४।१।४०) से 'ङीष्' की अनुवृत्ति आती है। 'स्त्रियाम्' आदि आधिकारिक पदों की अनुवृत्ति यथापूर्व विद्यमान है। अतः "स्वाङ्गवाचक क्रोडादिगणपठित शब्द एवं अनेक अच् युक्त ह्रस्व अकारान्त प्रातिपदिकों से स्त्रीलिङ्ग में ङीष् नहीं होता।"

**४।१।५७। न ङीष्। सकेशा। अकेशा। विद्यमाननासिका। (२२७१) नखमुखात्संज्ञायाम् ४।१।५८। ङीष् न। शूर्पणखा। गौरमुखा। संज्ञायां किम्?**

---

(२२७०) **सहनञ् इति**। सहेत्यादित्रिकपूर्वान्न ङीष् इति भावः।

(२२७१) **नखमुखादिति**। स्वाङ्गाच्चेति प्राप्तस्य ङीषो निषेधोऽयम्। **शूर्पणखा** — शूर्पाणीव नखानि यस्याः सा राक्षसी इति विग्रहे शूर्पनखशब्दात् 'स्वाङ्गाच्चे'ति प्राप्तस्य ङीष्-प्रत्ययस्य 'नखमुखात्संज्ञायाम्' इत्यनेन निषेधे टापि 'पूर्वपदात्संज्ञायामगः' इति नस्य णत्वे प्रातिपदिकत्वे सौ हल्ङ्याादिना सुलोपे 'शूर्पणखा' इति।

---

**उदाहरण**—कल्याणी क्रोडा यस्याः सा (कल्याणक्रोड - 'स्वाङ्गाच्चोपसर्जनात्०' से प्राप्त ङीष् का निषेध - 'न क्रोडादिबह्वचः', टाप् = 'आ' दीर्घ) = कल्याणक्रोडा (सुन्दर वक्षःस्थल युक्त अश्वा)। शोभनं जघनं यस्याः (प्राप्त ङीष् का निषेध, सुजघन + टाप्) = सुजघना (सुन्दर जाँघ वाली)।

(२२७०) **पद**—सहनञ्विद्यमानपूर्वात्, च। **अनुवृत्ति**—न, स्वाङ्गाच्चोपसर्जनात्, ङीष्। **विधि (निषेध) सूत्र**।

**मूलार्थ**—सह, नञ् और विद्यमान शब्दपूर्वक स्वाङ्गवाचक शब्द से ङीष् नहीं होता। सकेशा। अकेशा। विद्यमाननासिका।

**विमर्श**—पूर्वसूत्र (२२६९) से 'न', २२६७ से 'स्वाङ्गाच्चोपसर्जनात्' की तथा 'अन्यतो ङीष्' (४।१।४०) से ङीष् की अनुवृत्ति प्रमुखरूप से आती है। आधिकारिक सूत्रों का प्रभाव यथापूर्व विद्यमान है। तदनुसार "सह, नञ् और विद्यमान शब्द पूर्व में रहने पर स्वाङ्गवाचक उपसर्जनात् प्रातिपदिकों से स्त्रीत्व द्योत्य रहते ङीष् नहीं होता।"

**उदाहरण**—सह केशाः यस्याः ('तेन सहेति तुल्ययोगे' से समास, 'सह' = 'स' आदेश - 'वोपसर्जनस्य') - सकेश ('स्वाङ्गाच्चोपसर्जनात्' से प्राप्त ङीष् का निषेध - 'सहनञ्०', टाप् = 'आ', दीर्घ) = सकेशा (केशों से युक्त स्त्री)। न विद्यमानाः केशाः यस्याः (बहुव्रीहि समास, विद्यमान पद का लोप - 'नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्च वक्तव्यः', 'न्' का लोप, प्राप्त ङीष् का निषेध, टाप्) = अकेशा (बिना केशों की स्त्री)। विद्यमाना नासिका यस्याः (विद्यमाननासिक, प्राप्त ङीष् का निषेध, टाप् = 'आ', दीर्घ) = विद्यमाननासिका (नाक वाली)।

(२२७१) **पद**—नखमुखात्, संज्ञायाम्। **अनुवृत्ति**—न, स्वाङ्गाच्चोपसर्जनात्, ङीष्। **विधि (निषेध) सूत्र**।

**मूलार्थ**—संज्ञा में नखान्त और मुखान्त प्रातिपदिकों से स्त्रीलिङ्ग में ङीष् नहीं होता। शूर्पणखा। गौरमुखा। 'संज्ञायाम्' क्यों कहा? ताम्रमुखी कन्या।

**विमर्श**—पूर्वसूत्र (२२७०) में अनुवृत्त सभी प्राकरणिक एवम् आधिकारिक पदों की अनुवृत्तियाँ यहाँ भी अनुसरण कर रही हैं। सूत्रस्थ 'नखमुखात्' का अन्वय अनुवृत्त स्वाङ्गात् के साथ होता है। 'स्वाङ्गात्' पद 'प्रातिपदिकात्' का विशेषण होने से तदन्तविधि होती है। तदनुसार "स्वाङ्गवाचक नखशब्दान्त तथा मुखशब्दात् प्रातिपदिकों से संज्ञा द्योत्य रहते स्त्रीलिङ्ग में ङीष् प्रत्यय नहीं होता।"

**उदाहरण**—शूर्पाणि इव नखानि यस्याः सा (शूर्पनख, 'स्वाङ्गाच्चोपसर्जनात्०' से प्राप्त ङीष् का निषेध - 'नखमुखात्संज्ञायाम्', टाप् = 'आ', दीर्घ, 'न्' = 'ण्' - 'पूर्वपदात्संज्ञायामगः') = शूर्पणखा (सूप के समान नाखून वाली राक्षसी)। गौरं मुखं यस्याः (गौरमुख, प्राप्त ङीष् का निषेध, टाप्) = गौरमुखा (गोरे मुख वाली - इस नाम की स्त्री)।

**ताम्रमुखी कन्या। (२२७२) वाहः ४।१।६१ । वाहन्तात् ङीष्। दित्यौही। दित्यवाट् च मे दित्यौही च मे। (२२७३) सख्यशिश्वीति भाषायाम् ४।१।६२ । सखी। अशिश्वी। (२२७४) जातेरस्त्रीविषयादयोपधात् ४।१।६३ । जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततो ङीष्।**

---

(२२७२) **वाहः**। ङीषित्यनुवर्तते। वाह् इति प्रातिपदिकादित्यनुवृत्तस्य विशेषणम्। तेन तदन्तविधिस्तदाह — **वाहन्तादिति**।

(२२७३) **सख्यशिश्वीति**। लौकिकप्रयोगो भाषा। सखिशब्दात् अशिशुशब्दाच्च स्त्रियां ङीष् निपात्यते भाषायामित्यर्थः।

(२२७४) **जातेरस्त्रीविषयादिति**। 'ङीषि'त्यनुवर्तते, यकार उपधायां यस्य तद् योपधं,

---

**प्रत्युदाहरण**—संज्ञावाचक शब्दों से ही ङीप् का निषेध होने से 'ताम्रमुखी' (ताम्रं मुखं यस्याः) में ङीष् का निषेध नहीं होता।

(२२७२) **पद**—वाहः। **अनुवृत्ति**—छन्दसि, ङीष्। **विधिसूत्र**।

**मूलार्थ**—वाहन्त प्रातिपदिक से स्त्रीलिङ्ग में ङीष् होता है। दित्यौही। दित्यवाट् च मे दित्यौही च मे।

**विमर्श**—'अनुपसर्जनात्', 'स्त्रियाम्' तथा 'प्रातिपदिकात्' का अधिकार है। 'दीर्घजिह्वी च छन्दसि' (४।१।४९) से 'छन्दसि' की अनुवृत्ति प्रमुखतया अपेक्षित है। 'ङीष्' पद पूर्ववत् अनुवृत्त हो रहा है। इस प्रकार ''वाह्शब्दान्त अनुपसर्जन प्रातिपदिक से वैदिक प्रयोग में स्त्रीत्व द्योत्य रहते 'ङीष्' प्रत्यय होता है।''

**उदाहरण**—दित्यं वहति (उपपदसमास, दित्यवह् + ण्वि, उपधावृद्धि, 'ण्वि' का सर्वापहार-लोप) — दित्यवाह् + ङीष् (= 'ई' - 'वाहः', 'व्' = 'ऊठ्' = 'ऊ', अ + ऊ = 'औ' - वृद्धि - 'एत्येधत्यूठ्सु') — दित्यौही + सु (= 'स्' का लोप - 'हल्ङ्याब्भ्यो दीर्घात्०') = दित्यौही (तृतीय अवस्था को प्राप्त हुई गाय)।

(२२७३) **पद**—सखी, अशिश्वी, इति भाषायाम्। **अनुवृत्ति**—ङीष्, स्त्रियाम्, प्रातिपदिकात्। **विधिसूत्र**।

**मूलार्थ**—भाषा (लोक) में सखि और अशिशु शब्द से स्त्रीलिङ्ग में ङीष् निपातन होता है। सखी। अशिश्वी।

**विमर्श**—'स्त्रियाम्' तथा 'प्रातिपदिकात्' का अधिकार है। 'ङीष्' की पूर्ववत् अनुवृत्ति आ रही है। तदनुसार ''लौकिक प्रयोग में 'सखी' और 'अशिश्वी' शब्द ङीषन्त निपातित होते हैं।'' अतः वेद में कहीं-कहीं यह निपातन दृष्टिगोचर नहीं होता।

**उदाहरण**—सखि + ङीष् (= 'ई', 'इ' का लोप) = सखी (सहचरी, सहेली)। अशिशु + ङीष् (= 'ई', 'उ' = 'व्' - यण्) = अशिश्वी (बिना बच्चे वाली स्त्री)।

(२२७४) **पद**—जातेः, अस्त्रीविषयात्, अयोपधात्। **अनुवृत्ति**—ङीष्, अनुपसर्जनात्, स्त्रियाम्, प्रातिपदिकात्। **विधिसूत्र**।

**मूलार्थ**—नित्य स्त्रीलिङ्ग से भिन्न, अयोपध, जातिवाचक से स्त्रीलिङ्ग में ङीष् प्रत्यय होता है। (१) आकृति से जिसका ज्ञान हो वह जाति है। अर्थात् एक स्वरूप से जो पहचाना जाय उसे जाति कहते हैं। यथा - तटी।

"आकृतिग्रहणा जातिर्लिङ्गानां न च सर्वभाक्।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥"

तटी। वृषली। औपगवी। कठी। जातेः किम्? मुण्डा। अस्त्रीविषयात्किम्? बलाका। अयोपधात्किम्? क्षत्रिया। *योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्थानाम-प्रतिषेधः*। हयी। गवयी। मुकयी। मनुषी। मत्सी। (२२७५) पाककर्णपर्ण-

न योपधम् = अयोपधमित्याह – **जातिवाचीति**। **आकृतिग्रहणेति**। भाष्याभिमतां त्रिविधां जातिं लक्षयति – **आकृतिग्रहणा जातिः**। आकृतिः = अवयवसन्निवेशः ग्रहणं = व्यञ्जकं यस्याः सा जातिः (अनुगतसंस्थानव्यङ्ग्या) इति प्रथमं जातिलक्षणम्। यथा – तटी, घटी इत्यादि। जलसमीपप्रदेशः आकृतिविशिष्टस्तरः। अतस्तटत्वमाकृतिव्यङ्ग्यत्वाज्जातिः। द्वितीयं जातिलक्षणमाह – **लिङ्गानां न च सर्वभाक्**। या सर्वाणि लिङ्गानि न भजते। अयं भावः – असर्वलिङ्गत्वे सति एकस्यां व्यक्तौ कथनात् व्यक्त्यन्तरे कथनं विनापि सुग्रहा जातिरित्यर्थः। यथा – वृषली। वृषलत्वं हि असर्वलिङ्गं नपुंसकत्वाभावात् एकस्यां व्यक्तौ वृषलत्वे उपदिष्टे सति व्यक्त्यन्तरे अपत्यादिषु तदुपदेशं विना सुग्रहत्वात् ङीष्सिद्धिः। तृतीयां जातिमाह – **गोत्रं च चरणैः सह**। गोत्रम् = अपत्यप्रत्ययान्तः, चरणैः = शाखाध्येतृवाचिभिः सह जातिः =

(२) जिससे सब लिङ्ग न हों तथा एकत्र एक बार ग्रहण हो जाने पर अन्यत्र बिना कहे उसका ज्ञान हो, वह भी जाति है। यथा - वृषली।

(३) चरण (वेदशाखा) वाची शब्दों के साथ गोत्रप्रत्ययान्त शब्द भी जाति कार्य को प्राप्त करते हैं। यथा - औपगवी। कठी। 'जातेः' क्यों कहा? मुण्डा। 'अस्त्रीविषयात्' क्यों कहा? बलाका। 'अयोपधात्' क्यों कहा? क्षत्रिया। **वा०** - यकारोपध के प्रतिषेध में हय, गवय, मुकय, मनुष्य और मत्स्य को छोड़कर अन्य शब्दों का ग्रहण किया जाय। हयी। गवयी। मुकयी। मनुषी। मत्सी।

**विमर्श**—ङीष् का प्रकरण है। उल्लिखित सभी आधिकारिक पदों की अनुवृत्ति यथापूर्व अनुसरण कर रही है। सूत्रस्थ 'अस्त्रीविषयक' का तात्पर्य है - 'जिसका विषय केवल स्त्रीलिङ्ग न हो।' य उपधा यस्य स योपधः, न योपधः 'अयोपधः' अर्थात् यकारोपध से भिन्न। तदनुसार यह सूत्रार्थ निष्पन्न होता है कि "यंकार से भिन्न उपधा वाले, नित्य स्त्रीलिङ्ग रहित जातिवाचक प्रातिपदिकों से स्त्रीत्व द्योत्य रहते 'ङीष्' प्रत्यय होता है।"

महाभाष्यकार ने सूत्रस्थ 'जाति' शब्द को पारिभाषिक स्वीकार किया है। तदनुसार मूलोक्त कारिका में जाति के तीन प्रकार बताये गये हैं।

(१) आकृतिः ग्रहणं = व्यञ्जकं यस्याः सा - आकृतिग्रहणा जातिः। अर्थात् अवयवसन्निवेश विशेष (स्वरूप) देखने से जिसका ज्ञान हो, वह जाति है। **उदाहरण**—तट + ङीष् (= 'ई', अकारलोप) = तटी। नदी आदि का जलसमीपवर्ती स्थान 'तट' कहलाता है। उसका ज्ञान उस स्थान की आकृति से होता है, अतः 'तटत्व' जाति है। तट शब्द का प्रयोग तीनों लिङ्गों में होता है। इसलिए यह नियतस्त्रीलिङ्ग नहीं है। उपधा में यकार भी नहीं है, अतः प्रकृत सूत्र से ङीष् हुआ।

(२) दूसरा जातिपरिचायक बतलाया जा रहा है — "लिङ्गानां न च सर्वभाक्। सकृदा-ख्यातनिर्ग्राह्या'।" जिससे सभी लिङ्ग न होते हों अर्थात् जो शब्द पुल्लिङ्ग, स्त्रीलिङ्ग और नपुंसकलिङ्ग

**पुष्पफलमूलबालोत्तरपदाच्च** ४।१।६४। पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीष्। ओदनपाकी। शङ्कुकर्णी। शालपर्णी। शङ्खपुष्पी। दासीफली।

---

जातिकार्यं लभते इत्यर्थः। यथा — औपगवी। उपगोरपत्यं स्त्रीति विग्रहेऽपत्यार्थेऽणि वृद्धौ गुणेऽवादेशे 'जातेरस्त्रीविषयादयोपधादि'त्यनेन ङीष्प्रत्यये 'औपगवी' इति। एवमेव — कठेन प्रोक्तमधीयाना स्त्री 'कठी' इति।

(२२७५) **पाककर्ण इति**। 'जातेरस्त्रीविषयात्' इति पूर्वसूत्रेणैव सिद्धे किमर्थमिद-मित्यत आह — **स्त्रीविषयादपीति**।

---

इन तीनों लिङ्गों में प्रयुक्त न हों एवम् एक बार बताने पर जिसका ज्ञान अन्यत्र भी हो उसे भी जाति कहा जाता है।'' जैसे 'वृषल' कहने से उसकी सन्तान आदि में भी वृषलत्व जाति का परिज्ञान हो जाता है। अतः 'वृषल + ङीष्' = वृषली।

(३) गोत्रं च चरणैः सह (अपत्यप्रत्ययान्तः शाखाध्येतृवाची च शब्दो जातिकार्यं लभत इत्यर्थः) — गोत्रप्रत्ययान्त एवं शाखाध्येतृवाचक शब्द भी जातिकार्य को प्राप्त होते हैं। अर्थात् इन दोनों अर्थों के बोधक प्रत्ययों से निष्पन्न शब्दों से भी जातिप्रयुक्त कार्य होते हैं। **उदाहरण**— औपगव + ङीष् = औपगवी (उपगु की कन्या)। कठ + ङीष् = कठी (कठशाखाध्येत्री)।

**प्रत्युदाहरण**—(१) प्रकृत सूत्र द्वारा जातिवाची शब्दों से ही ङीष् का विधान होने के कारण 'मुण्डा' में ङीष् नहीं होता। क्योंकि मुण्डत्व पारिभाषिक जाति नहीं है। (२) अस्त्रीविषय अर्थात् नियत स्त्रीलिङ्ग न होने पर ही ङीष् होता है। अतः नियत स्त्रीलिङ्गवाची बलाक शब्द से ङीष् नहीं हुआ। बलाक + टाप् = बलाका (पक्षी)। (३) ङीष्-विधान में अयोपध अर्थात् यकारोपध न होने की अपेक्षा होने के कारण क्षत्रिय शब्द से ङीष् नहीं होता। 'क्षत्रिय' शब्द यकारोपध है, अतः क्षत्रिय + टाप् = क्षत्रिया (क्षत्रिय स्त्री)।

**वा०**—''हय, गवय, मुकय, मनुष्य तथा मत्स्य शब्दों से भिन्न यकारोपध शब्दों में ङीष् का निषेध होता है।'' आशय यह है कि प्रकृत वार्तिक द्वारा हयादि शब्दों से प्राप्त ङीष्-निषेध का प्रतिषेध किया जाता है। तब ङीष् होकर 'हयी' आदि रूप बनते हैं। **उदाहरण**—हय + ङीष् (= 'ई', अकारलोप) = हयी (घोड़ी)। मुकय + ङीष् = मुकयी (खच्चरी)। मनुष्य + ङीष् (= 'ई', 'अ' का लोप होने पर 'य्' का लोप - 'हलस्तद्धितस्य') = मानुषी (मानवी)। मत्स्य + ङीष् (= 'ई', 'अ' का लोप तथा 'य्' का लोप) = मत्सी (मछली)।

(२२७५) **पद**—पाककर्णपर्णपुष्पफलमूलबालोत्तरपदात्, च। **अनुवृत्ति**—जातेः, ङीष्। **विधिसूत्र**।

**मूलार्थ**—पाक, कर्ण आदि उत्तरपद में हों तो जातिवाची स्त्रीलिङ्ग शब्दों से भी ङीष् होता है। ओदनपाकी। शङ्कुकर्णी। शालपर्णी। शङ्खपुष्पी। दासीफली। दर्भमूली। गोवाली। ये शब्द औषधिविशेष में रूढ़ हैं।

**विमर्श**—प्राकरणिक 'ङीष्' की एवम् 'स्त्रियाम्' तथा 'प्रातिपदिकात्' आदि की आधिकारिक अनुवृत्ति यथापूर्व अनुसरण कर रही है। पूर्वसूत्र (२२७४) से 'जातेः' की अनुवृत्ति प्रमुखतया अपेक्षित है। तदनुसार ''पाक, कर्ण, पर्ण, पुष्प, फल, मूल तथा बाल - ये शब्द यदि उत्तरपद में हों तो जातिवाचक प्रातिपदिक से भी स्त्रीलिङ्ग में ङीष् होता है।'' नियतलिङ्ग शब्दों के विषय में इस ङीष्-विधान की उपयोगिता है।

**दर्भमूली। गोवाली। ओषधिविशेषे रूढा एते। (२२७६) इतो मनुष्यजातेः ४।१।६५। ङीष्। दाक्षी। (२२७७) ऊङुतः ४।१।६६। ऊकारान्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ्। कुरूः। (२२७८) पङ्गोश्च ४।१।६८। पङ्गूः। * श्वशुरस्योकाराकारलोपश्च *। चादूङ्। पुंयोगलक्षणङीषोऽपवादः। श्वश्रूः।**

---

(२२७६) **इतो मनुष्यजातेः**। इदन्तान्मनुष्यजातिवाचिनः स्त्रियां ङीष् इत्यर्थः। **दाक्षी** — दक्षस्यापत्यं स्त्री इत्यर्थे 'अत इञ्' इति इञ्प्रत्यये आदिवृद्धौ दाक्षिशब्दात् 'इतो मनुष्यजातेः' इति ङीषि 'यस्येति चे'तीकारलोपे 'दाक्षी' इति।

(२२७७) **ऊङुतः**। 'अयोपधादि'ति 'मनुष्यजातेः' इति चानुवर्तते। उत इति तद्विशेषणम्, तदन्तविधिस्तदाह — **ऊकारान्तादिति**। **कुरूः** — कुरुक्षेत्रस्य राजा कुरुः, तस्याऽपत्यं स्त्रीति विग्रहे 'गोत्रं च चरणैः सह' इति जातित्वात् कुरुशब्दात् 'ऊङुतः' इत्यनेन ऊङ्प्रत्यये 'कुरु + ऊ' इति जाते सवर्णदीर्घे प्रातिपदिकत्वे सौ रुत्वे विसर्गे 'कुरूः' इति।

---

**उदाहरण**—(१) ओदनपाक + ङीष् (= 'ई' - 'पाककर्ण०', 'अ' का लोप, विभक्तिकार्य) = ओदनपाकी (नीलझिण्टी नामक जड़ी)। (२) शङ्कुकर्ण + ङीष् = शङ्कुकर्णी (औषधि-विशेष)। (३) शङ्खपुष्प + ङीष् = शङ्खपुष्पी (सफेद फूलों वाली प्रसिद्ध ओषधि)। (४) शालपर्ण + ङीष् = शालपर्णी (ओषधि-विशेष)। (५) दासीफल + ङीष् = दासीफली। (ओषधि-विशेष)। (६) दर्भमूल + ङीष् = दर्भमूली (ओषधि-विशेष)। (७) गोवाल + ङीष् = गोवाली (ओषधि-विशेष)। ये सभी शब्द ओषधि विशेष में रूढ़ होने से जातिवाचक हैं, अतः ङीष् होता है।

(२२७६) **पद**—इतः, मनुष्यजातेः। **अनुवृत्ति**—ङीष्। **विधिसूत्र**।

**मूलार्थ**—इदन्त मनुष्यजातिवाचक शब्द से ङीष् होता है। दाक्षी।

**विमर्श**—'ङीष्' की अनुवृत्ति अनुसरण कर रही है। 'अनुपसर्जनात्', 'स्त्रियाम्' तथा 'प्रातिपदिकात्' का आधिकारिक प्रभाव विद्यमान है। सूत्रस्थ 'इतः' पद अनुवृत्त 'प्रातिपदिकात्' का विशेषण है, अतः तदन्तविधि होती है। इस प्रकार ''मनुष्यजातिवाचक अनुपसर्जन (विशेषण रहित) इकारान्त प्रातिपदिक से स्त्रीलिङ्ग में ङीष् प्रत्यय होता है।''

**उदाहरण**—दक्ष + इञ् (= 'इ' - 'अत इञ्', आदिवृद्धि, अकारलोप) = दाक्षि + ङीष् (= 'ई' - 'इतो मनुष्यजातेः', 'इ' का लोप) = दाक्षी (दक्ष की स्त्री सन्तान)।

(२२७७) **पद**—ऊङ्, उतः। **अनुवृत्ति**—मनुष्यजातेः, अयोपधात्। **विधिसूत्र**।

**मूलार्थ**—उकारान्त अयोपध मनुष्यजातिवाची से स्त्रीलिङ्ग में ऊङ् प्रत्यय होता है। कुरूः।

**विमर्श**—सूत्रार्थ की निष्पत्ति हेतु 'इतो मनुष्यजातेः' (४।१।६५) से 'मनुष्यजातेः' तथा 'जातेरस्त्रीविषयादयोपधात्' (२२७४) से 'अयोपधात्' की अनुवृत्ति आती है। अन्य आधिकारिक सूत्रों की अनुवृत्ति यथापूर्व अनुसरण कर रही है। सूत्रस्थ 'उतः' पद अनुवृत्त 'प्रातिपदिकात्' का विशेषण होने से तदन्त का बोधक होता है। तदनुसार ''यकारोपधभिन्न एवं मनुष्यजातिवाचक उकारान्त प्रातिपदिक से स्त्रीत्व द्योत्य रहते ऊङ् (= ऊ) प्रत्यय होता है।''

**उदाहरण**—कुरु + ऊङ् (= 'ऊ' - 'ऊङुतः', उ = ऊ = 'ऊ' - दीर्घ, विभक्तिकार्य) = कुरूः (कुरुवंश की स्त्री)।

(२२७८) **पद**—पङ्गोः, च। **अनुवृत्ति**—ऊङ्। **विधिसूत्र**।

**(२२७९) ऊरूत्तरपदादौपम्ये ४।१।६९।** उपमानवाचिपूर्वपदमुरूत्तरपदं यत्तस्मादूङ्। करभोरूः। **(२२८०) संहितशफलक्षणवामादेश्च ४।१।७०।** संहितोरूः। ***सहितसहाभ्यां चेति वक्तव्यम्*।** सहितोरूः। सहोरूः। **(२२८१)**

---

(२२७८) **पङ्गोश्चेति**। पङ्गुत्वं न जातिरिति 'ऊङुतः' इत्यप्राप्तौ वचनम्। पङ्गुशब्दादपि स्त्रियामूङ् स्यादित्यर्थः।

(२२७९) **ऊरूत्तरपदादिति**। ऊरूः उत्तरपदं यस्येति विग्रहः। 'प्रातिपदिकादि'त्यनुवर्तते। उत्तरपदेत्यनेन पूर्वपदमाक्षिप्तम्, 'औपम्ये' इति तत्रान्वेति। उपमीयते अनयेत्युपमा — उपमानम्। तदाह — **उपमानवाचीति**। **करभोरूः** — करभाविव ऊरूः यस्याः इति विग्रहे करभोरुशब्दात् 'ऊरूत्तरपदादौपम्ये' इत्यनेन ऊङिअनुबन्धलोपे सवर्णदीर्घे प्रातिपदिकत्वे सौ सस्य रुत्वे विसर्गे च 'करभोरूः' इति।

(२२८०) **संहितशफलक्षण इति**। अनौपम्यार्थमिदं वचनम्। 'ऊरूत्तरपदादि'ति

---

**मूलार्थ**—पङ्गु शब्द से स्त्रीलिङ्ग में ऊङ् प्रत्यय होता है। पङ्गूः। **वा०** - श्वसुर शब्द के उकार और अकार का लोप होता है तथा ङीष् प्रत्यय होता है। पुंयोगनिमित्तक ङीष् का अपवाद है। श्वश्रूः।

**विमर्श**—पूर्वसूत्र (२२७७) से 'ऊङ्' की अनुवृत्ति आती है। अन्य आधिकारिक सूत्रों की अनुवृत्ति का प्रभाव यथापूर्व विद्यमान है। तदनुसार ''पङ्गु शब्द स्त्रीत्व द्योत्य रहते ऊङ् = 'ऊ' प्रत्यय होता है।''

**उदाहरण**—पङ्गु + ऊङ् ( = 'ऊ' - 'पङ्गोश्च', उ + ऊ = 'ऊ' - सवर्णदीर्घ, विभक्तिकार्य) = पङ्गूः। (पङ्गु शब्द के जातिवाचक न होने से पूर्वसूत्र से ऊङ् प्राप्त नहीं होता)।

**वा०**—श्वसुर शब्द से स्त्रीलिङ्ग में 'ऊङ्' प्रत्यय होता है तथा 'श्वसुर' शब्द के उकार एवम् अकार का लोप भी होता है। **उदाहरण**—श्वसुर + ऊङ् ( = 'ऊ', 'उ' तथा 'अ' का लोप) - श्वस्र् (विभक्ति सु = स् = र् :) = श्वश्रूः (सास)।

(२२७९) **पद**—ऊरूत्तरपदात्, औपम्ये। **अनुवृत्ति**—ऊङ्। **विधिसूत्र**।

**मूलार्थ**—उपमानवाचक पूर्वपदक ऊरूत्तरपदक प्रातिपदिक से स्त्रीलिङ्ग में ऊङ् प्रत्यय होता है। करभोरूः।

**विमर्श**—प्रकृत सूत्र में पूर्वसूत्र (२२७७) से 'ऊङ्' की अनुवृत्ति आ रही है। स्त्रीप्रत्यय के अधिकारसूत्रों का प्रभाव यथापूर्व विद्यमान है। अतः ''ऊरु शब्द उत्तरपद में रहने पर तदन्त प्रातिपदिक से औपम्य गम्यमान होने पर स्त्रीलिङ्ग में 'ऊङ्' प्रत्यय होता है।''

**उदाहरण**—करभौ इव ऊरू यस्याः (बहुव्रीहिसमास) — करभोरु + ऊङ् ( = 'ऊ' - 'ऊरूत्तरपदादौपम्ये', उ + ऊ = 'ऊ' - दीर्घ, विभक्तिकार्य) = करभोरूः (हाथी की सूँड़ के समान जङ्घा वाली)।

(२२८०) **पद**—संहितशफलक्षणवामादेः, च। **अनुवृत्ति**—ऊरूत्तरपदात्, ऊङ्। **विधिसूत्र**।

**मूलार्थ**—संहित, शफ, लक्षण और वाम शब्द पूर्वपद में हों तो ऊरु शब्द से ऊङ् प्रत्यय होता है। संहितोरूः। **वा०**—सहित और सह शब्द पूर्व रहते भी ऊरु शब्द से ऊङ् प्रत्यय होता है। सहितोरूः। सहोरूः।

**शार्ङ्गरवाद्यञो ङीन् ४।१।७३। शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन्। शार्ङ्गरवी। बैदी। * नृनरयोर्वृद्धिश्च *। नारी। (२२८२) यङश्चाप् ४।१।७४। यङन्ताच्चाप्। आम्बष्ठ्या। कारीषगन्ध्या। * षाद्यञश्चाप् वाच्यः *। पौतिमाष्या।**

---

ऊङिति चानुवर्तते। संहित-शफ-लक्षणवामादिभ्यः परो य ऊरुशब्दस्तस्मादपि ऊङ् स्यादित्यर्थः। **सहितेति**। सहित, सह आभ्यां परो य ऊरुशब्दस्तस्मादपि ऊङ् वक्तव्यमित्यर्थः।

(२२८१) **शार्ङ्गरवाद्यञो ङीन्। शार्ङ्गरवी** — शृङ्गरोरपत्यं स्त्रीति विग्रहे शृङ्गरुशब्दादपत्याऽर्थेऽणि णित्त्वादाद्यचो वृद्धौ 'ओर्गुणः' इति उकारस्य गुणेऽवादेशे शार्ङ्गरवशब्दात् 'शार्ङ्गरवाद्यञो ङीन्' इति ङीन्प्रत्ययेऽनुबन्धलोपे भत्वादकारलोपे विभक्तिकार्ये 'शार्ङ्गरवी' इति।

(२२८२) **यङश्चाप्**। यङन्ताच्चाप् स्यादित्यर्थः।

---

**विमर्श**—सूत्रार्थ की पूर्ति हेतु २२७७ से 'ऊङ्' की तथा पूर्वसूत्र (२२७९) से 'ऊरूत्तरपदात्' की अनुवृत्ति आती है। तदनुसार "संहित, शफ, लक्षण और वाम शब्दों के पूर्वपद में स्थित होने पर तथा 'ऊरु' शब्द के उत्तरपद में होने पर स्त्रीलिङ्ग में 'ऊङ्' प्रत्यय होता है।"

**उदाहरण**—संहितौ ऊरू यस्याः सा (समास, संहितोरु + ऊङ् = 'ऊ', उ + ऊ = 'ऊ' - सवर्णदीर्घ, विभक्तिकार्य) = संहितोरूः (मिली हुई जाँघों वाली)।

**वा०**—सहित और सह शब्द से परवर्ती ऊरु शब्द के होने पर भी तदन्त शब्द से स्त्रीलिङ्ग में 'ऊङ्' होता है। **उदाहरण**—सहितौ ऊरू यस्याः सा सहितोरु + 'ऊङ्' (= 'ऊ', सवर्णदीर्घ) = सहितोरूः (हित से युक्त ऊरु = जाँघ वाली)।

(२२८१) **पद**—शार्ङ्गरवाद्यञः, ङीन्। **अनुवृत्ति**—अनुपसर्जनात्, स्त्रियाम्, प्रातिपदिकात्। **विधिसूत्र**।

**मूलार्थ**—शार्ङ्गरव आदि शब्दों से तथा अञ्प्रत्ययान्त शब्दों से स्त्रीलिङ्ग में ङीन् (= ई) प्रत्यय होता है। शार्ङ्गरवी। बैदी। **वा०** - नृ और नर शब्द को वृद्धि और ङीन् प्रत्यय भी होता है। नारी।

**विमर्श**—उल्लिखित 'स्त्रियाम्' आदि सूत्रों की आधिकारिक अनुवृत्ति आ रही है। **'शार्ङ्गरवादि'** शब्द लुप्तपञ्चम्यन्त है। 'अञः' पद अनुवृत्त 'प्रातिपदिकात्' का विशेषण है, अतः तदन्तविधि होती है। तदनुसार "शार्ङ्गरव आदि गणपठित शब्दों से तथा अञ्प्रत्ययान्त जातिवाचक प्रातिपदिकों से स्त्रीलिङ्ग में ङीन् (= ई) प्रत्यय होता है।"

**उदाहरण**—शृङ्गरु + अण् (= 'अ', आदिवृद्धि, रपर, 'उ' = 'ओ' - गुण, 'ओ' = अव् आदेश) — शार्ङ्गरव + ङीन् (= 'ई', 'अ' का लोप) = शार्ङ्गरवी (शृङ्गरु मुनि की स्त्री सन्तान)। बिद + अञ् (= 'अ' – 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्', 'अ' का लोप, आदिवृद्धि) — बैद + ङीन् (= 'ई', 'अ' का लोप) = बैदी (बिद की स्त्री सन्तान)। ये दोनों शब्द गोत्रवाची होने से जातिवाचक हैं।

**वा०**—जातिवाचक नृ तथा नर शब्दों से स्त्रीत्व द्योत्य रहते ङीन् प्रत्यय होता है तथा उनके अच् को वृद्धि भी होती है। **उदाहरण**—नृ + ङीन् (= 'ई', ऋ = आर् - वृद्धि, रपर) = नारी। नर + ङीन् (= 'ई', अ = 'आ' - वृद्धि, 'अ' का लोप) = नारी (स्त्री)।

(२२८२) **पद**—यङः, चाप्। **विधिसूत्र**।

**मूलार्थ**—यङन्त प्रातिपदिक से स्त्रीलिङ्ग में 'चाप्' प्रत्यय होता है। आम्बष्ठ्या। कारीषगन्ध्या। **वा०**—षकार से परे यञन्त से भी स्त्रीलिङ्ग में चाप् होता है। पौतिमाष्या।

**( २२८३ ) आवट्याच्च ४।१।७५ ।** अस्माच्चाप्। 'यञश्च' इति ङीषोऽपवादः। अवटशब्दो गर्गादिः। आवट्या। **( २२८४ ) यूनस्तिः ४।१।७७ ।** युवन्शब्दात्तिः।

---

(२२८३) **आवट्याच्च**। पूर्वसूत्रात् 'चाप्' इत्यनुवर्तते। तदाह — **अस्माच्चेति**।

(२२८४) **यूनस्तिः**। **युवतिः** — युवत्वजातिविशिष्टा स्त्रीति विग्रहे युवन्शब्दात् 'यूनस्तिः' इत्यनेन तिप्रत्यये 'स्वादिष्वसर्वनामस्थाने' इति पदत्वान्नलोपे प्रातिपदिकत्वे सौ सस्य

---

**विमर्श**—'स्त्रियाम्', 'प्रातिपदिकात्' आदि की आधिकारिक अनुवृत्ति यथापूर्व अनुसरण कर रही है। तदनुसार "यङन्त प्रातिपदिक से स्त्रीत्व द्योत्य रहते चाप् (= आ) प्रत्यय होता है।" यङ् से यहाँ 'ञ्यङ्' तथा 'ष्यङ्' प्रत्ययों का सामान्यतया ग्रहण होता है।

**उदाहरण**—अम्बष्ठस्य अपत्यं स्त्री — अम्बष्ठ + ञ्यङ् (= 'य' - 'वृद्धेत्कोसलाजादाञ्ञ्यङ्', आदिवृद्धि तथा 'अ' का लोप) — आम्बष्ठ्य + चाप् (= 'आ', अ + 'आ' – सवर्णदीर्घ, विभक्ति-कार्य) = आम्बष्ठ्या (अम्बष्ठ जाति की स्त्री)। करीषस्य इव गन्धः यस्य (अ = इत् = 'ई' - उप-मानाच्च) — करीषगन्धि + अण् (= 'अ', अण् = ष्यङ् = 'य' आदेश - 'अणिञोरनार्षयोः', आदि-वृद्धि) — कारीषगन्ध्य + चाप् (= 'आ', सवर्णदीर्घ) = कारीषगन्ध्या (गोबर की तरह गन्ध वाली)।

**वा०**—षकार से परवर्ती यञ्प्रत्ययान्त प्रातिपदिक से चाप् होता है। **उदाहरण**—पूतिमाष + यञ् (= 'य', 'अ' का लोप, आदिवृद्धि) - पौतिमाष्य + चाप् (= 'आ' - प्रकृत वार्तिक से, दीर्घ) = पौतिमाष्या (पूतिमाष की स्त्री सन्तति)।

(२२८३) **पद**—आवट्यात्, च। **अनुवृत्ति**—चाप्। **विधिसूत्र**।

**मूलार्थ**—यञन्त आवट्य शब्द से भी 'चाप्' होता है। आवट्या।

**विमर्श**—पूर्वसूत्र (२२८२) से 'चाप्' की अनुवृत्ति आ रही है। स्त्रियाम्, अनुपसर्जनात् तथा प्रातिपदिकात् का अधिकार है। तदनुसार "आवट्य शब्द से स्त्रीत्व द्योत्य रहते चाप् (= आ) प्रत्यय होता है।" यह 'यञश्च' से प्राप्त 'ङीप्' का अपवाद है।

**उदाहरण**—अवट + यञ् (= 'य', आदिवृद्धि, 'अ' का लोप) - आवट्य + चाप् = ('आ' - 'आवट्याच्च', दीर्घ तथा विभक्तिकार्य) = आवट्या (अवट की स्त्री सन्तान)।

(२२८४) **पद**—यूनः, तिः। **अनुवृत्ति**—तद्धिताः, स्त्रियाम्, अनुपसर्जनात्, प्रातिपदिकात्। **विधिसूत्र**।

**मूलार्थ**—युवन् शब्द से स्त्रीलिङ्ग में 'ति' प्रत्यय होता है। युवतिः। उपसर्जनरहित से ही 'ति' होगा। बहुयुवा। ✓यु धातु से शतृ प्रत्यय करने पर तदन्त से ङीप् होने पर 'युवती' शब्द निष्पन्न होता है।

**विमर्श**—उक्त अधिकारसूत्रों की अनुवृत्ति यथापूर्व विद्यमान है। तदनुसार "युवन् शब्द से स्त्रीलिङ्ग में ति प्रत्यय होता है और उसकी तद्धिता संज्ञा होती है।"

**उदाहरण**—युवन् + 'ति' (- 'यूनस्तिः', 'स्वादिष्वसर्वनामस्थाने' से पदसंज्ञा, 'न्' का लोप - 'नलोपः प्रातिपदिकान्तस्य', विभक्ति सु = स् = र् = :) = युवतिः (युवा स्त्री)। 'अनुपसर्जनात्' का अधिकार होने से उपसर्जन (विशेषण) के रूप में प्रयुक्त न होने पर ही युवन् शब्दान्त से ति प्रत्यय होता है। अतः 'बहवो युवानो यस्यां सा (बहुत-से युवकों से युक्त नगरी) में 'ति' प्रत्यय नहीं होता। क्योंकि यहाँ अन्य पदार्थ 'नगरी' में 'युवन्' पदार्थ उपसर्जन है। बहुयुवन् + डाप् (= 'आ' -

**युवतिः । अनुपसर्जनादित्येव । बहवो युवानो यस्यां सा बहुयुवा । युवतीति तु यौतेः शत्रन्तात् ङीपि बोध्यम् ।**

**इति स्त्रीप्रत्ययप्रकरणम् ।**



---

रुत्वे विसर्गे च 'युवतिः' इति । 'यु मिश्रणे' इत्यस्मात् लटः शतृआदेशेऽदादित्वेन शपो लुकि उवङि युवत्शब्दात् 'उगितश्चे'ति ङीप्रत्यये कृते 'युवती'शब्दो निष्पद्यते ।

**इति स्त्रीप्रत्ययप्रकरणम् ।**



---

'डाबुभाभ्यामन्यतरस्याम्', टि = 'अन्' का लोप) = बहुयुवा । स्त्रीलिङ्ग में 'युवती' शब्द का प्रयोग भी देखा जाता है । तदनुसार ✓यु + शतृ (= 'अत्', शप् तथा शप् का लुक्, 'उ' = 'उवङ्' = 'उव्' आदेश) — युवत् + ङीप् (= 'ई' - 'उगितश्च') = युवती ।

**स्त्रीप्रत्यय-प्रकरण समाप्त ।**



# अथ वैदिकप्रकरणम्

**(२२८५) षष्ठीयुक्तश्छन्दसि वा १।४।९।** पतिशब्दो घिसंज्ञः। **क्षेत्रस्य पतिना वयम्।** इह वा इति योगं विभज्य 'छन्दसि' इत्यनुवर्तते। तेन सर्वे विधयश्छन्दसि वैकल्पिकाः। 'बहुलं छन्दसि' इत्यादिरस्यैव प्रपञ्चः। **(२२८६) अयस्मयादीनि च्छन्दसि १।४।२०।** एतानि छन्दसि साधूनि। भपदसंज्ञाधिकाराद्यथायोगं संज्ञाद्वयं बोध्यम्। तथा च वार्तिकम्। * उभयसंज्ञान्यपीति वक्तव्यम् *। **स सुष्टुभा स ऋक्वता**

---

अथ वैदिकप्रकरणं निरूप्यते —

(२२८५) **षष्ठीयुक्त इति।** 'शेषो घ्यसखि' इत्यतः 'घि' इत्यनुवर्तते, 'पतिः समास एव' इत्यतः पतिरिति च। षष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि घिसञ्ज्ञो वा स्यादित्यर्थः। तेन 'क्षेत्रस्य पतिना' इत्यत्र घिसंज्ञात्वेन 'आङो नाऽस्त्रियामि'त्यनेन नाभावः।

(२२८६) **अयस्मयादीनीति।** 'आकडारादेका संज्ञा' इति नियमाल्लोके भपदसंज्ञयोर्मध्यत एकैव संज्ञा भवति, छन्दस्युभयथा सिद्धये निपातनमिदम्। **स सुष्टुभा स ऋक्वता गणेनैंति।**

---

लौकिक भाषा में प्रयुक्त शब्दों के विविध रूपों का विवेचन करने के उपरान्त कतिपय वैदिक प्रयोगों के सिद्धि की प्रक्रिया बतायी जा रही है।

(२२८५) **पद**—षष्ठीयुक्तः, छन्दसि, वा। **अनुवृत्ति**—पतिः, घिः। **संज्ञासूत्र**।

**मूलार्थ**—षष्ठ्यन्त से युक्त पति शब्द की विकल्प से घि संज्ञा होती है। क्षेत्रस्य पतिना वयम्। यहाँ सूत्र के 'वा' अंश का विभाजन करके 'छन्दसि' की अनुवृत्ति की जाती है। तदनुसार वेद में सभी विधियाँ विकल्प से होती हैं। 'बहुलं छन्दसि' सूत्र इसी का प्रपञ्च है।

**विमर्श**—सूत्रार्थ की निष्पत्ति हेतु पूर्वसूत्र 'पतिः समास एव' (२०७) से 'पतिः' तथा 'शेषो घ्यसखि' (१९१) से 'घि' की अनुवृत्ति आती है। तदनुसार ''षष्ठी विभक्त्यन्त पद से युक्त पति शब्द की विकल्प से घिसंज्ञा होती है।'' 'पतिः समास एव' सूत्र के अनुसार समासाभाव में घिसंज्ञा प्राप्त नहीं है। अतः प्रकृत सूत्र द्वारा विकल्प से घिसंज्ञा का विधान किया गया है। यहाँ प्रकृत सूत्र से 'वा' ऐसा पृथक् विभाजन कर 'छन्दसि' की अनुवृत्ति लाकर ''वा छन्दसि'' सूत्र कल्पित किया जाता है। अतः इस शास्त्र में प्रतिपदिक सभी विधान वेद में विकल्प से होते हैं। 'अष्टाध्यायी' में स्थान-स्थान में आया 'बहुलं छन्दसि' सूत्र इसी योगविभाग 'वा' का प्रपञ्च (अनुवादक मात्र) है।

**उदाहरण**—'क्षेत्रस्य पतिना वयम्' (यहाँ वैदिक प्रयोग होने से 'पति + टा' की विकल्प से घिसंज्ञा, टा = 'ना' - 'आङो नाऽस्त्रियाम्') = पतिना। घि संज्ञा के अभाव पक्ष में पति + टा (= 'आ', 'इ' = 'य्' - यण्) = पत्या।

(२२८६) **पद**—अयस्मयादीनि, छन्दसि। **विधिसूत्र**।

**मूलार्थ**—अयस्मय आदि शब्द वेद में निपातन से साधु हैं। भ-पद संज्ञा में प्रयोगानुरोध से दोनों संज्ञाएँ होती हैं। **वा०**—वेद में भसंज्ञा और पदसंज्ञा दोनों होती हैं। स सुष्टुभा स ऋक्वता गणेन। नैनं हिन्वन्त्यपि वाजिनेषु।

**विमर्श**—वेद में अयस्मयादि शब्द निपातन से सिद्ध होते हैं। प्रयोगानुरोध से भसंज्ञा या पदसंज्ञा अथवा दोनों संज्ञाएँ एक साथ हो जाती हैं। 'उभसंज्ञान्यपीति वक्तव्यम्' वार्तिक भी इसी आशय का

गणेन। पदत्वात्कुत्वम्, भत्वाज्जशत्वाभावः। नैनं हिन्वन्त्यपि वाजिनेषु। अत्र पदत्वाज्जशत्वं, भत्वात्कुत्वाभावः। 'ते प्राग्धातोः'। (२२८७) **छन्दसि परेऽपि ४।१।८१।** (२२८८) **व्यवहिताश्च १।४।८२।** हरिभ्यां याह्योक आ। आ मन्द्रैरिन्द्र हरिभिर्याहि। (२२८९) **तृतीया च होश्छन्दसि २।३।३।** जुहोतेः कर्मणि तृतीया

---

'अयस्मयादीनि छन्दसि' इत्यनेन भपदसंज्ञे सार्धमेव भवतः। 'उभयसंज्ञान्यपीति वक्तव्यमि'ति वार्तिकेनापि उक्तम्। अतः 'ऋच् + वता' इत्यत्र पदत्वात् कुत्वम्, भत्वाज्जशत्वाभावः।

(२२८७) **छन्दसि परेऽपि**। गत्युपसर्गसंज्ञकाः छन्दसि परे प्रयोक्तव्याः, अपिशब्दात्पूर्वे इत्यर्थः।

(२२८८) **व्यवहिताश्च**। व्यवहिता अपि गत्युपसर्गसंज्ञकाः प्रयोक्तव्या इति भावः। **हरिभ्यामिति**। आ याहीति प्राप्ते 'याहि ओक आ' इति परप्रयोगः।

(२२८९) **तृतीया चेति**। 'कर्मणि द्वितीये' त्यतः 'कर्मणी'त्यनुवर्तते। कर्मणि द्वितीयायां प्राप्तायां तृतीयाऽनेन विधीयते चकाराद् द्वितीयाऽपि।

---

बोधक है। लोक में 'आकडारादेका संज्ञा' सूत्र के नियम से भ और पद संज्ञा में से एक ही संज्ञा होती है। अतः वैदिक प्रयोगों में आवश्यकतानुसार दोनों संज्ञाओं के विधान हेतु यह निपातन किया गया है।

**उदाहरण**—ऋच् + वता (यहाँ प्रकृत सूत्र द्वारा पद संज्ञा होने से 'च्' = 'क्' - कुत्व तथा भसंज्ञा का निपातन होने से पदसंज्ञा का बाध होने पर जश्त्व नहीं होता) = ऋक्वता। वाच् + इनेषु (यहाँ पदसंज्ञा का निपातन होने से 'च्' = 'ज्' - जश्त्व - 'झलां जश् झशि') = वाजिनेषु। भसंज्ञा होने पर पदसंज्ञा का बाध हो जाने पर कुत्व (ज् = ग्) नहीं होता।

**ते प्राग्धातोः**—गतिसंज्ञक एवम् उपसर्गसंज्ञक का धातु के पूर्व प्रयोग होता है।

(२२८७) **पद**—छन्दसि, परेऽपि। **अनुवृत्ति**—ते, धातोः। **नियमसूत्र**।

**मूलार्थ**—छन्द में उपसर्ग और गतिसंज्ञक प्रादियों का धातु से परे भी प्रयोग होता है।

**विमर्श**—पूर्वसूत्र 'ते प्राग्धातोः' (१।४।८०) से 'ते' और 'धातोः' की अनुवृत्ति आ रही है। तदनुसार "ते = उपसर्गसंज्ञक एवम् गतिसंज्ञक प्र आदि का धातु से पर प्रयोग भी होता है।"

(२२८८) **पद**—व्यवहिताः, च। **अनुवृत्ति**—छन्दसि, ते, धातोः। **नियमसूत्र**।

**मूलार्थ**—उक्त का धातु से व्यवहित प्रयोग भी होता है। 'हरिभ्यां याह्योक आ'। आ मन्द्रैरिन्द्र हरिभिर्याहि।

**विमर्श**—पूर्वसूत्र (२२८७) से 'छन्दसि' की तथा 'ते प्राग्धातोः' (१।४।८०) से 'ते, धातोः' की अनुवृत्ति अपेक्षित है। अतः "धातु से किसी शब्द का व्यवधान होने पर भी उपसर्गसंज्ञक और गतिसंज्ञक का प्रयोग होता है।"

**उदाहरण**—आ मन्द्रैरिन्द्र हरिभिर्याहि (यहाँ 'ते प्राग्धातोः' के नियम से आङ् का पूर्वप्रयोग होकर 'आयाहि' प्राप्त था, परन्तु वेद में 'व्यवहिताश्च' का नियम के अनुरोध से आङ् और याहि के बीच में व्यवधान होने पर भी आङ् का प्रयोग साधु है)। हरिभ्यां याह्योक आ ('छन्दसि परेऽपि' के नियम से धातु से पर 'आ' का प्रयोग हुआ है)।

(२२८९) **पद**—तृतीया, च, होः, छन्दसि। **अनुवृत्ति**—अनभिहिते, कर्मणि, द्वितीया। **विधिसूत्र**।

**स्यात् द्वितीया च। यवाग्वाऽग्निहोत्रं जुहोति। (२२९०) मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ३।२।७१। *श्वेतवहादीनां डस् पदस्येति वक्तव्यम्*। यत्र पदत्वं भावि तत्र ण्विनोऽपवादो डस् वक्तव्य इत्यर्थः। श्वेतवाः, श्वेतवाहौ, श्वेतवाहः। उक्थानि उक्थैर्वा शंसति उक्थशा यजमानः, उक्थशासौ। पुरो दाश्यते दीयते पुरोडाः। (२२९१) अवे यजः ३।२।७२। अवयाः, अवयाजौ, अवयाजः।**

---

(२२९०) **मन्त्रे श्वेतवहो०**। श्वेतादिपूर्वेभ्यो वहादिभ्यो ण्विन् स्यादिति सूत्रार्थः। **श्वेतवाः** — श्वेता एव यं वहन्ति स श्वेतवाः = इन्द्रः। 'श्वेतवह्' इत्यस्मात् भाविपदत्वेन ण्विनोऽपवादे 'श्वेतवहादीनां डस् पदस्येति वक्तव्यम्' इति डसि डित्त्वाट्टिलोपे श्वेतवस् इति जाते, प्रातिपदिकत्वे सौ हल्ङ्याादिना सुलोपे उपधादीर्घे सस्य रुत्वे विसर्गे च 'श्वेतवाः' इति।

(२२९१) **अवे यजः**। अवपूर्वकाद् यजेः ण्विन्, पदत्वे भाविनि तदपवादो डस् भवतीत्यर्थः।

---

**मूलार्थ**—हु धातु के कर्म में तृतीया और चकार से द्वितीया भी होती है। यवाग्वाऽग्निहोत्रं जुहोति।

**विमर्श**—'अनभिहिते' (२।३।१) तथा 'कर्मणि द्वितीया' (२।३।२) की अनुवृत्ति आ रही है। तदनुसार "वेदविषय में हु धातु के अनभिहित कर्म में तृतीया विभक्ति होती है। चकार-प्रयोग से द्वितीया भी होती है।"

**उदाहरण**—यवाग्वा अग्निहोत्रं जुहोति (हु धातु के कर्म में तृतीया - यवागू + टा (= 'आ', यण्) = यवाग्वा (यवागू (लप्सी) से अग्निहोत्र करता है)।

(२२९०) **पद**—मन्त्रे, श्वेतवहोक्थशस्पुरोडाशः, ण्विन्। **अनुवृत्ति**—सुपि। **विधिसूत्र**।

**मूलार्थ**—मन्त्र में श्वेतवहादि से ण्विन् प्रत्यय होता है। **वा०**—जहाँ पदत्व की सम्भावना हो वहाँ ण्विन् का अपवाद 'डस्' प्रत्यय होता है। श्वेतवाः, श्वेतवाहौ, श्वेतवाहः। उक्थशाः यजमानः, उक्थशासौ। पुरोडाः।

**विमर्श**—प्रकृत सूत्र में 'सुपि स्थः' (३।२।४) सूत्र से 'सुपि' की अनुवृत्ति आती है। तदनुसार "सुप् के परवर्ती रहते मन्त्र में श्वेत उपपदक वह् धातु से, उक्थ उपपदक शंस् धातु से तथा पुरस् उपपदक दा धातु से 'ण्विन्' प्रत्यय होता है।"

**वा०**—श्वेतवहादि शब्दों से जहाँ पदत्व होने वाला हो, वहाँ ण्विन् को बाधकर डस् (= अस्) प्रत्यय होता है।

**उदाहरण**—श्वेताः एनं वहन्ति स श्वेतवाः (इन्द्रः)। श्वेत + √वह् (ण्विन् का बाधकर प्रकृत वार्तिक से डस् = 'अस्', डित् होने से टि = 'अह्' का लोप) - श्वेतवस् (अ = 'आ' - दीर्घ - 'अत्वसन्तस्य०', सुलोप तथा स् = र् = :) = श्वेतवाः। प्रथमा विभक्ति में - श्वेतवाः, श्वेतवाहौ, श्वेतवाहाः। उक्थानि उक्थैर्वा शंसति (उक्थ + √शंस् + डस् = 'अस्' पूर्ववत्, टिलोप, दीर्घ आदि) = उक्थशा यजमानः। प्रथमा द्विवचन में 'न्' लोप, उपधावृद्धि - उक्थशासौ। पुरो दाश्यते दीयते (पुरस् + √दा + ण्विन् का अपवाद डस् = अस्, टिलोप, द् = 'ड्', उपधादीर्घ तथा विभक्तिकार्य) = पुरोडाः।

(२२९१) **पद**—अवे, यजः। **अनुवृत्ति**—मन्त्रे, ण्विन्, धातोः। **विधिसूत्र**।

**(२२९२) अवयाः श्वेतवाः पुरोडाश्च ८।२।६७। एते सम्बुद्धौ कृतदीर्घा निपात्यन्ते। चादुक्थशाः। (२२९३) लिङर्थे लेट् ३।४।७। (२२९४) सिब्बहुलं लेटि ३।१।३४। (२२९५) इतश्च लोपः परस्मैपदेषु ३।४।९७। लेटस्तिङामितो लोपो वा स्यात्परस्मैपदेषु। (२२९६) लेटोऽडाटौ ३।४।९४। स्तो वा। तौ च**

---

(२२९२) **अवया इति**। सम्बुद्धौ 'अत्वसन्तस्य' इत्यप्राप्तौ दीर्घोऽनेन निपात्यते।

(२२९३) **लिङर्थे लेट्**। विध्यादौ हेतुहेतुमद्भावादौ च धातोर्लेट् स्याच्छन्दसीत्यर्थः।

(२२९४) **सिब्बहुलमिति**। लेटि बहुलं सिप् स्यादित्यर्थः।

(२२९५) **इतश्चेति**। लेटस्तिङामितो लोपो वा स्यात्परस्मैपदेषु।

---

**मूलार्थ**—अवपूर्वक यज् धातु से मन्त्र में ण्विन् प्रत्यय होता है। अवयाः, अवयाजौ, अवयाजः।

**विमर्श**—पूर्वसूत्र (२२३०) से 'मन्त्रे' तथा 'ण्विन्' की अनुवृत्ति अपेक्षित है। तदनुसार ''मन्त्र में अव पूर्वक यज् धातु से ण्विन् प्रत्यय होता है।''

**उदाहरण**—अव + √यज् (ण्विन् को बाधकर पदत्वभावी डस् = अस्, टिलोप, उपधादीर्घ, विभक्तिकार्य उक्तवत्) = अवयाः। अन्यत्र ण्विन्, उपधादीर्घ - अवयाजौ, अवयाजः।

(२२९२) **पद**—अवयाः, श्वेतवाः, पुरोडाः, च। **विधिसूत्र**।

**मूलार्थ**—ये तीनों सम्बुद्धि में कृतदीर्घ निपातित हैं। चकार से - उक्थशाः।

**विमर्श**—मन्त्र में 'अवयाः', 'श्वेतवाः' और 'पुरोडाः' ये तीनों सम्बुद्धि अर्थात् सम्बोधन प्रथमा विभक्ति में दीर्घ किये हुए निपातन हैं। सम्बोधन में 'अत्वसन्तस्य०' सूत्र की प्रवृत्ति नहीं होती। अतः प्रकृत सूत्र द्वारा दीर्घ निपातन किया गया है।

**उदाहरण**—अव + √यज् (ण्विन् का अपवाद डस् = अस्, टिलोप, सम्बोधन में दीर्घ निपातन, विभक्तिकार्य) = अवयाः। इसी प्रकार - श्वेतावाः। पुरोडाः।

(२२९३) **पद**—लिङर्थे, लेट्। **अनुवृत्ति**—छन्दसि, धातोः। **विधिसूत्र**।

**मूलार्थ**—लिङ् के अर्थों में वेद में लेट् लकार होता है।

**विमर्श**—सूत्रार्थ की स्पष्टता हेतु 'छन्दसि लुङ्लङ्लिटः' (३।४।६) से 'छन्दसि' की अनुवृत्ति आती है। 'धातोः' का अधिकार है। अतः ''विध्यादि और हेतुहेतुमद्भावादि लिङर्थ में धातु से लेट् लकार होता है।''

(२२९४) **पद**—सिप्, बहुलं, लेटि। **अनुवृत्ति**—धातोः। **विधिसूत्र**।

**मूलार्थ**—लेट् के परे रहने पर धातु से सिप् प्रत्यय बहुलतया होता है।

**विमर्श**—पूर्ववत् 'धातोः' की अनुवृत्ति विद्यमान है। तदनुसार ''लेट् के परवर्ती रहते धातु से सिप् प्रत्यय बहुल प्रकार से होता है।''

(२२९५) **पद**—इतः, च, लोपः, परस्मैपदेषु। **अनुवृत्ति**—वा, लेटः। **विधिसूत्र**।

**मूलार्थ**—परस्मैपद में लेट्-स्थानिक तिङ् के इकार का लोप विकल्प से होता है।

**विमर्श**—'वैतोऽन्यत्र' (३।४।९६) से 'वा' तथा 'लेटोऽडाटौ' (२२९६) से 'लेटः' की अनुवृत्ति आ रही है। तदनुसार ''परस्मैपद विषय में लेट् लकार सम्बन्धी इकार का भी विकल्प से लोप होता है।''

(२२९६) **पद**—लेटः, अडाटौ। **अनुवृत्ति**—वा। **विधिसूत्र**।

**पितौ । *सिब्बहुलं णिद्वक्तव्यः* । वृद्धिः । प्र ण॒ आयूंषि तारिषत् । सुपेशस्करति जोषिषद्धि । आ साविषदर्शसा॒नाय । सिप इलोपस्य चाभावे । पताति वि॒द्युत् । प्रियः सूर्ये प्रि॒यो अ॒ग्ना भवाति । (२२९७) स उत्तमस्य ३।४।९८ । लेट उत्तमस्य वा लोपः । करवावः, करवाव । टेरेत्वम् । (२२९८) आत ऐ ३।४।९५ । लेट**

---

(२२९६) **लेटोऽडाटौ** । लेटः अट् आट् एतावागमौ स्तः, तौ च पितौ स्यातामिति ।

**प्रण॒ आयूंषिं तारिषत्** — तृधातोर्लेटि अनुबन्धलोपे लस्य स्थाने तिपि 'सिब्बहुलं लेटि' इत्यनेन सिपि अनुबन्धलोपे 'लेटोऽडाटौ' इत्यडागमे 'सिब्बहुलं णिद्वक्तव्यः' इत्यनेन सिपः णित्त्वात् 'अचो ञ्णिति' इति वृद्धौ रपरत्वे आर्धधातुकत्वादिडागमे, सस्य षत्वे 'इतश्च लोपः परस्मैपदेषु' इत्यनेन तिप इकारलोपे 'तारिषत्' इति ।

(२२९७) **स उत्तमस्य** । लेटस्थानिकयोः वस्मसोः सस्य वा लोपः स्यादित्यर्थः ।

(२२९८) **आत ए** । 'लेटः' इत्यनुवर्तते । तदाह — **लेट इत्यादिना** ।

---

**मूलार्थ**—लेट् को विकल्प से अट्, आट् आगम होते हैं और वे पित् होते हैं ।

**वा०**—सिप् को बहुलप्रकार से णिद्वद्भाव होता है । प्रण आयूंषि तारिषत् । सुपेशस्करति जोषषद्धि । आ साविषदर्शसानाय । सिप् और इकारलोप के अभाव में - पताति विद्युत् । प्रियः सूर्ये प्रियो अग्नाभवति ।

**विमर्श**—'वा छन्दसि' (३।४।८८) से 'वा' की अनुवृत्ति आती है तथा 'आडुत्तमस्य पिच्च' (३।४।९२) से 'पित्' की अनुवृत्ति आ रही है । तदनुसार "लेट् को अट् और आट् का आगम विकल्प से होता है और पित् माने जाते हैं ।"

**वा०**—सिप् प्रत्यय को बहुल प्रकार से णिद्वद्भाव होता है ।

**उदाहरण**—(१) ✓तृ + लेट् ( = 'ल्' - 'लिङर्थे लेट्', ल् = तिप् = 'ति', 'सिप्' - 'सिब्बहुलं लेटि', इट् = 'इ', अट् = 'अ' का आगम - 'लेटोऽडाटौ', 'सिब्बहुलं णिद्वक्तव्यः' से णिद्वद्भाव होने पर ॠ = 'आ' र् वृद्धि, रपर, षत्व, 'इ' का लोप - 'इतश्च लोपः परस्मैपदेषु') = तारिषत् । (२) ✓जुषी = जुष् + लेट् ( = ल्, व्यत्यय से परस्मैपद - तिप् = ति, सिप् = 'स्', इट् = 'इ' का आगम, षत्व, उपधागुण, अट् आगम तथा इकारलोप) = जोषिषत् । (३) आङ् + 'षु प्रसवैस्वर्ययोः' + लेट् (प्रक्रिया उक्तवत्) = आसाविषत् । (४) ✓पत् + लेट् (तिप् = 'ति', इकारलोप के अभाव पक्ष में तथा सिप् के अभाव में आट् = 'आ' का आगम) = पताति । (५) ✓भू + लेट् (तिप् = 'ति', इकारलोप तथा सिप् के अभाव पक्ष में - आट् आगम, गुण तथा अवादेश) = भवाति ।

(२२९७) **पद**—स, उत्तमस्य । **अनुवृत्ति**—लोपः, लेटः, वा । **विधिसूत्र** ।

**मूलार्थ**—लेट् के उत्तमपुरुष के सकार का लोप विकल्प से होता है । करवावः, करवाव ।

**विमर्श**—सूत्रार्थ की पूर्ति के लिए 'इतश्च लोपः परस्मैपदेषु' (२२९५) से 'लोपः', 'लेटोऽडाटौ' (२२९६) से 'लेटः' तथा 'वैतोऽन्यत्र' (३।४।९६) से 'वा' की अनुवृत्ति आती है । तदनुसार "लेट् लकार सम्बन्धी उत्तमपुरुष के सकार का लोप विकल्प से होता है ।"

**उदाहरण**—✓कृञ् = कृ + लेट् ( = वस्, 'उ' - 'तनादिकृञ्भ्य उः', ऋ = 'अर्' - गुण, रपर, 'आट्' = 'आ' - आगम - 'लेटोऽडाटौ', 'उ' = 'ओ' - गुण, अवादेश, 'स्' का लोप विकल्प से - 'स उत्तमस्य') = करवाव । सकारलोप के न होने पर रुत्व-विसर्ग - करवावः ।

(२२९८) **पद**—आतः, ऐ । **अनुवृत्ति**—लेटः । **विधिसूत्र** ।

**आकारस्य ऐ स्यात् । सुतेभिः सुप्रयसा मादयैते । आतामित्याकारस्य ऐ । ( २२९९ ) वैतोऽन्यत्र ३।४।९६ । लेट एकारस्य ऐ स्याद्वा । 'आय ऐ' इत्यस्य विषयं विना । पशूनामीशै । ग्रहा गृह्यान्तै । अन्यत्र किम् ? सुप्रयसा मादयैते । ( २३०० ) उपसंवादाशङ्कयोश्च ३।४।८ । पणबन्धे आशङ्कायां च लेट् । अहमेव पशूनामीशै । नेज्जिह्मयान्तो नरकं पताम । ( २३०१ ) व्यत्ययो बहुलम् ३।१।८५ । विकरणानां बहुलं**

(२२९९) **वैतोऽन्यत्र** । **पशूनामीशै** — 'ईश् ऐश्वर्ये' लेटि, लस्य स्थाने उत्तमपुरुषैकवचने इटि टेरेत्वे 'ईश + ए' इति स्थिते 'वैतोऽन्यत्र' इति एकारस्य ऐकारे 'ईशै' इति ।

(२३००) **उपसंवादाशङ्कयोश्च** । लेडित्यनुवर्तते । तदाह — **पणबन्ध इति** ।

(२३०१) **व्यत्ययो बहुलम्** । शबादीनां विकरणानां बहुलं व्यत्ययः स्याच्छन्दसीत्यर्थः ।

---

**मूलार्थ**—लेट् के आत् को ऐ होता है । सुतेभिः सुप्रयसा मादयैते ।

**विमर्श**—पूर्वसूत्र 'लेटोऽडाटौ' (२२९६) से 'लेटः' की अनुवृत्ति आती है । तदनुसार "लेट् लकार सम्बन्धी (आत्मनेपद के आताम् और आथाम् के आदि) आकार को 'ऐ' आदेश होता है ।"

**उदाहरण**— ✓मदी - हर्षे (णिजन्त) = मादि + लेट् (= ल् = प्रथमपुरुष द्विवचन –'आताम्', टि - 'आम्' = 'ए' - 'टित आत्मनेपदानां टेरे', आ = 'ऐ' - 'आत ऐ') — मादि + ऐते (इ = 'ए' - गुण, ए = 'अय्' आदेश) = मादयैते ।

(२२९९) **पद**—वा, एतः, अन्यत्र । **अनुवृत्ति**—ऐ । **विधिसूत्र** ।

**मूलार्थ**—'आत ऐ' के विषय को छोड़कर अन्यत्र लेट् के एकार को ऐ विकल्प से होता है । पशूनामीशै । ग्रहा गृह्यान्तै । 'अन्यत्र' क्यों कहा ? सुप्रयसा मादयैते ।

**विमर्श**—पूर्वसूत्र (२२९८) से 'ऐ' की अनुवृत्ति आ रही है । तदनुसार "'आत ऐ' इस पूर्वसूत्र के विषय को छोड़कर लेट् सम्बन्धी आकार को ऐकार आदेश विकल्प से होता है ।"

**उदाहरण**—✓ईश् + लेट् (आत्मनेपद उत्तमपुरुष एकवचन इट् = 'इ' = 'ए', एत्व) — ईश् + ए (ए = 'ऐ' विकल्प से - वैतोऽन्यत्र) = ईशै । पक्ष में - ईशे । ✓ग्रह् + कर्म में लेट् (= 'झ' = 'अन्त' आदेश, यक् = 'य्' का आगम, र् = 'ऋ' सम्प्रसारण - 'ग्रहिज्या०', आट् = 'आ' आगम - 'लेटोऽडाटौ', टि को एत्व, ए = 'ऐ' आदेश प्रकृत सूत्र से) = गृह्यान्तै ।

**प्रत्युदाहरण**—प्रकृत सूत्र में 'अन्यत्र' का निवेश होने से 'आत ऐ' के विषय में ऐत्व हेतु इसकी प्रवृत्ति नहीं होती । अतः 'सुप्रयसा मादयैते' में एकार को ऐत्व नहीं होता ।

(२३००) **पद**—उपसंवादाशङ्कयोः, च । **अनुवृत्ति**—लेट् । **विधिसूत्र** ।

**मूलार्थ**—पणबन्ध और आशङ्का अर्थ में भी लेट् लकार होता है । अहमेव पशूनामीशै । नेज्जिह्मयान्तो नरकं पताम ।

**विमर्श**—पूर्वसूत्र (२२९३) से 'लेट्' की अनुवृत्ति अपेक्षित है । तदनुसार "उपसंवादं अर्थात् पणबन्ध (= शर्त, बाजी मारना) और आशङ्का अर्थ में धातु से लेट् लकार भी होता है ।"

**उदाहरण**—✓ईश् + लेट् ( - 'पणबन्ध अर्थ' में, सिद्धिप्रक्रिया पूर्ववत्) = अहमेव पशूनाम् ईशै (मैं समस्त जीवों का अधिपति हूँ) । ✓पत् + लेट् ( - आशंका अर्थ में, उत्तमपुरुष बहुवचन -'मस्', आट् = 'आ' आगम, स् का लोप) = पताम (गिरे) ।

(२३०१) **पद**—व्यत्ययः, बहुलम् । **अनुवृत्ति**—छन्दसि । **विधिसूत्र** ।

**व्यत्ययः स्याच्छन्दसि । आण्डा शुष्मस्य भेदति । भिनत्तीति प्राप्ते । जरसा मरते पतिः । म्रियत इति प्राप्ते । इन्द्रो बस्तेन नेषतु । नयतेर्लोट् । शप्सिपौ द्वौ विकरणौ । इन्द्रेण युजा तरुषेम वृत्रम्, तरेमेत्यर्थः । तरतेर्विध्यादौ लिङ् । उः शप् सिप् चेति त्रयो विकरणाः ।**

**"सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।**
**व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥"**

**धुरि दक्षिणायाः । दक्षिणस्यामिति प्राप्ते । चषालं ये अश्वयूपाय तक्षति । उपग्रहः – परस्मैपदात्मनेपदे । ब्रह्मचारिणमिच्छते । इच्छतीति प्राप्ते । प्रतीपमन्य ऊर्मिर्युध्यति । युध्यत**

---

आण्डा शुष्मस्य भेदति । भिद्धातोः लटि तिपि रुधादित्वात् श्नमि प्राप्ते 'व्यत्ययो बहुलम्' इति व्यत्ययेन शपि उपधागुणे 'भेदति' इति । **सुप्तिङिति** । शास्त्रकृत् = आचार्यः पाणिनिः सुप्तिङ्-प्रभृतीनां विपर्यासं वाञ्छति । सोऽपि व्यत्ययो बहुलतया सिद्ध्यति । अत एवाचार्येण बहुलग्रहणं कृतम् । दक्षिणस्यामिति प्राप्ते 'धुरि दक्षिणायाः' इत्यादीनि क्रमेणोदाहरणानि वृत्तौ दर्शितानीति ।

---

**मूलार्थ**—छन्द (वेद) में विकरणों का बहुल प्रकार से व्यत्यय होता है । भिनत्ति प्राप्त होने पर - आण्डा शुष्मस्य भेदति । म्रियते प्राप्त होने पर जरसा मरत्ते पतिः । इन्द्रो वस्तेन नेषतु । ✓नी + लोट् । शप् और सिप् दो विकरण हुए । इन्द्रेण युजा तरुषेम वृत्रम्, तरेम प्राप्त था । तृ + विध्यादि में लिङ् । उ, शप् और सिप् तीन विकरण हुए ।

**सुप्तिङ्०**—शास्त्रकार आचार्य पाणिनी सुप्, तिङ्, उपग्रह अर्थात् परस्मैपद - आत्मनेपद, लिङ्ग, नर = पुरुष, काल, हल्, अच्, उदात्तादिस्वर, कारक तथा तद्वाचक कृत्तद्धित और यङ् इनका वेद में व्यत्यय चाहते हैं; किन्तु यह सब बहुलग्रहण से सिद्ध है । उदा० - 'दक्षिणस्याम्' प्राप्त रहने पर धुरि दक्षिणाया इत्यादि ।

**विमर्श**—प्रकृत सूत्र में 'छन्दसि शायजपि' (३।१।८४) से 'छन्दसि' की अनुवृत्ति आती है । तदनुसार "वेद में विकरण प्रत्ययों का बहुल करके व्यत्यय होता है ।"

**उदाहरण**—(१) आण्डा शुष्मस्य भेदति (यहाँ '✓भिदिर् विदारणे' धातु से 'रुधादिभ्यः-श्नम्' से 'श्नम्' होकर 'भिनत्ति' प्राप्त था, परन्तु व्यत्यय से शप् = 'अ' प्रत्यय (विकरण) जो बाध्य है, होता है, उपधागुण) = भेदति । (२) जरसा मरते पतिः (यहाँ ✓'मृङ् प्राणत्यागे' धातु से 'तुदादिभ्यः शः' के श विकरण होकर रिङादेश तथा इयङ् होकर 'म्रियते' प्राप्त है, किन्तु व्यत्यय से 'श' प्रत्यय) = मरते । (३) इन्द्रो वस्तेन नेषतु (✓'नी' धातु से लोट् लकार में शप् होकर 'नयतु' प्राप्त है, किन्तु यहाँ शप् और सिप् दो विकरण हुए, गुण, षत्व) = नेषतु । (४) इन्द्रेण युजा तरुषेम (✓तृ धातु से विधिलिङ् में तरेम प्राप्त है, किन्तु यहाँ उत्तमपुरुष बहुवचन में व्यत्यय से उ, शप् और सिप् तीन विकरण हुए, गुण, षत्व) - तरुष + मस् (यासुट् = 'यास्' आगम, यास् के 'स्' का लोप - 'लिङः सलोपोऽनन्त्यस्य' तथा 'मस्' के 'स्' का लोप - 'नित्यं ङितः', या = 'इय्' - 'अतो येयः', 'य्' का लोप - 'लोपो व्योः०' अ + इ = 'ए' - गुण) = तरुषेम ।

**कारिकार्थ**—"शब्दशास्त्र के रचनाकार आचार्य पाणिनि सुप्, तिङ्, उपग्रह (परस्मैपद तथा आत्मनेपद) — लिङ्, पुरुष, काल (कालवाचक प्रत्यय), हल्, अच्, स्वर, कर्तृ (कारकवाची, कृत् और तद्धित तथा यङ् (यङ् के यकार से आरम्भ कर 'लिङ्याशिष्यङ्' के ङकार तक प्रत्याहार) इन सबका वेद में व्यत्यय चाहते हैं और वह व्यत्यय बहुलप्रकार से सिद्ध होता है ।"

इति प्राप्ते। मधोस्तृप्ता इवासते। मधुन इति प्राप्ते। नरः – पुरुषः। अधा स वीरैर्दशभिर्वियूयाः। वियूयादिति प्राप्ते। कालः – कालवाची प्रत्ययः। श्वोऽग्नीनाधास्यमानेन। लुटो विषये लृट्। तमसो गा अदुक्षत्। अधुक्षदिति प्राप्ते। मित्र वयं च सूरयः। मित्रा वयमिति प्राप्ते। स्वरव्यत्ययस्तु वक्ष्यते, कर्तृशब्दः कारकमात्रपरः, तथा च तद्वाचिनां कृत्तद्धितान्तानां व्यत्ययः। अन्नादाय। अण्विषये अच्। यङो यशब्दादारभ्य 'लिङ्याशिष्यङ्' इति ङकारेण प्रत्याहारः। तेषां व्यत्ययो 'भेदति' इत्यादिरुक्त एव। **(२३०२) छन्दस्युभयथा ३।४।११७।** धात्वधिकारे उक्तः प्रत्ययः सार्वधातुकार्धधातुकोभयसंज्ञः स्यात्। वर्धन्तु त्वा सुष्टुतयः। वर्धयन्त्वित्यर्थः।

---

(२३०२) **छन्दस्युभयथा**। धात्वधिकारोक्तः प्रत्ययः वेदे सार्वधातुकार्धधातुकोभयसंज्ञः स्यादित्यर्थः। **वर्धन्तु** — णिजन्ताद् वृध्धातोर्लोटि प्रथमपुरुषबहुवचेन रूपम्। 'छन्दस्युभयथा' इत्यार्धधातुकत्वेन 'णेरनिटि' इति णिलोपे 'वर्धन्तु' इति।

---

**उदाहरण**—(१) **सुप् का व्यत्यय** यथा - 'धुरि दक्षिणायाः' (यहाँ 'दक्षिणस्याम्' प्राप्त था, व्यत्यय से 'ङि' के स्थान में ङस्) = दक्षिणायाः। (२) **तिङ् व्यत्यय** यथा - 'चाषालं ये अश्वयूपाय तक्षति' (यहाँ तक्षन्ति प्राप्त था, किन्तु व्यत्यय से 'झि' के स्थान पर तिप्) = तक्षति। (३) आत्मनेपद एवं परस्मैपद को उपग्रह कहते हैं। **उपग्रह व्यत्यय** यथा - ब्रह्मचारिणमिच्छते (यहाँ 'इच्छति' परस्मैपद प्राप्त था, व्यत्यय से आत्मनेपद) = इच्छते। (४) प्रतीपमन्य ऊर्मिर्युध्यति (यहाँ आत्मनेपद - 'युध्यते' प्राप्त होने पर व्यत्यय से परस्मैपद) = युध्यति। (५) **लिङ्** - मधोस्तृप्ता इवासते (यहाँ 'मधुनः' नपुंसकलिङ्ग प्राप्त था; परन्तु व्यत्यय से पुल्लिङ्ग) = मधोः। (६) **नर (पुरुष) व्यत्यय** यथा - अघा स वीरैर्दशभिर्वियूयाः (प्रथमपुरुष 'वियूयात्' प्राप्त होने पर व्यत्यय से मध्यमपुरुष) = वियूयाः। (७) **काल (= कालवाची) प्रत्यय** - श्वोऽग्नीनाधास्यमानेन (यहाँ लुट् के विषय में व्यत्यय से लृट्, शानच् रूप) = आधास्यमानेन। (८) **हल् का व्यत्यय** यथा - तमसो गा अदुक्षत् (व्यत्यय से 'ध्' के स्थान पर 'द्') = अदुक्षत्। अधुक्षत् प्राप्त था। (९) **अच् व्यत्यय** - मित्र वयं च सूरयः (मित्रा वयम् प्राप्त था, व्यत्यय से मित्र)। (१०) स्वरों का व्यत्यय स्वरप्रक्रिया में स्पष्ट किया जायेगा। (११) कर्तृ शब्द कारकमात्र परक है। कारकवाचक कृत् एवं तद्धित प्रत्ययों का व्यत्यय **कर्तृव्यत्यय** है। यथा - अन्नादाय (यहाँ व्यत्यय से अण् के विषय में अच् प्रत्यय हुआ)। यद्यपि रूपसिद्धि में अच् और अण् में कोई भेद नहीं है तथापि अवग्रह में भिन्नता है। अण् होने पर - 'अन्न आदाय'। अच् होने पर 'अन्न अदाय'। (१२) **यङ् व्यत्यय** - यङ् के यकार से लेकर 'लिङ्याशिष्यङ्' के ङकार तक यङ् प्रत्याहार है। यङ् का व्यत्यय 'भिनत्ति' के स्थान पर 'भेदति' पूर्व में कहा जा चुका है।

(२३०२) **पद**—छन्दसि, उभयथा। **अनुवृत्ति**—सार्वधातुकम्, आर्धधातुकम्। **संज्ञासूत्र**।

**मूलार्थ**—छन्द में धात्वधिकारोक्त प्रत्यय की सार्वधातुक और आर्धधातुक दोनों संज्ञाएँ होती हैं। वर्धन्तु त्वा सुष्टुतयः। आर्धधातुक होने से णिलोप - विशृण्विरे। सार्वधातुक संज्ञा होने से श्नः तथा श्नुभाव, यण्।

**विमर्श**—सूत्रोक्त 'उभयथा' पद दो संज्ञाओं की अनुवृत्ति का परामर्शक है। अतः 'तिङ्शित्सार्वधातुकम्' (३।४।११३) से 'सार्वधातुकम्' की तथा 'आर्धधातुकं शेषः' (३।४।११४) से

आर्धधातुकत्वाण्णिलोपः । विशृण्विरे । सार्वधातुकत्वात् श्नः शृभावश्च । हुश्नुवोरिति यण् । **( २३०३ ) तुमर्थे सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ३।४।९** । से – वक्षे रायः । सेन् – ता वामेषे । असे – शरदो जीवसे धाः । असेन् – नित्त्वादाद्युदात्तः । क्से – प्रेषे । कसेन् – गवामिव श्रियसे । अध्यै-अध्यैन् – जठरं पूर्णध्यै । पक्षे – आद्युदात्तम् । कध्यै -कध्यैन् – आहवध्यै । शध्यै – राधसः, सहमादयध्यै । शध्यैन् – वायवे पिबध्यै । तवै – दातवा उ । तवेङ् – सूतवे । तवेन् – कर्तवे । **( २३०४ ) प्रयै रोहिष्यै अव्यथिष्यै ३।४।१० ।**

---

(२३०३) **तुमर्थे इति** । धातोरेते पञ्चदश प्रत्ययाः तुमर्थे भवन्तीत्यर्थः । **पिबध्यै** — 'पा पाने' इत्यस्माद्धातोः 'तुमर्थे सेसेनसे' इत्यादिना शध्यैन्प्रत्ययेऽनुबन्धलोपे शित्त्वात्सार्वधातुकत्वेन 'पा' इत्यस्य पिबादेशे 'पिबध्यै' इति ।

(२३०४) **प्रयै रोहिष्यायिति** । एते तुमर्थे निपात्यन्त इत्यर्थः ।

---

'आर्धधातुकम्' की अनुवृत्ति आती है । तदनुसार ''धातु के अधिकार में विहित प्रत्ययों की सार्वधातुक एवम् आर्धधातुक दोनों संज्ञाएँ होती हैं ।''

**उदाहरण**—णिजन्त ✓वृध् + लोट् (प्रथमपुरुष बहुवचन में आर्धधातुक संज्ञा होने पर णिलोप) = वर्धन्तु । वि + ✓श्रु + लिङ् प्र० पु० बहुवचन में सार्वधातुक संज्ञा होने से श्नु और शृभाव,, झ = इरेच् = 'इरे', यण् - 'हुश्नुवोः०' = विशृण्विरे ।

(२३०३) **पद**—तुमर्थे, से……तवेनः । **अनुवृत्ति**—छन्दसि, धातोः । **विधिसूत्र** ।

**मूलार्थ**—तुमुन् के अर्थ में धातु से से, सेन इत्यादि १५ प्रत्यय वेद में होते हैं । से - वक्षे रायः । सेन् - ता वामेषे । असे - शरदो जीवसे धाः इत्यादि ।

**विमर्श**—'धातोः' का अधिकार है । पूर्वसूत्र 'छन्दसि लुङ्लङ्लिटः' (३।४।६) से 'छन्दसि' की अनुवृत्ति आती है । तदनुसार ''वेद में तुमुन् प्रत्यय के अर्थ (भावार्थ) में धातु से से, सेन, असे, असेन्, क्से, कसेन्, अध्यै, अध्यैन्, कध्यै, कध्यैन्, शध्यै, शध्यैन्, तवै, तवेङ् और तवेन् प्रत्यय होते हैं ।''

**उदाहरण**—(१) ✓वच् + 'से' (– प्रत्यय प्रकृत सूत्र से, 'च्' = 'क्' - कुत्व, 'स्' = 'ष्' - षत्व) = वक्षे । (२) ✓इण् + सेन् (= से, 'इ' = 'ए' - गुण, षत्व) = एषे । लोक में एतुम् । (३) जीव् + असे = जीवसे । लोक में - जीवितुम् । (४) असेन् प्रत्यय में आदि उदात्त है । नित् प्रत्ययान्त तदादि का आदि उदात्त होता है । (५) प्र + ✓इण् + क्स (= 'स' प्रत्यय, कित् होने से गुण का अभाव, षत्व, गुण) = प्रेषे । (६) ✓श्रिञ् = श्रि + कसेन् (= कसे = 'असे', कित्वात् गुणाभाव, इयङ् आदेश) = श्रियसे । लोक में - श्रयितुम् । (७) ✓पृ + अध्यै या अध्यैन् प्रत्यय (= 'अध्यै' विकरण - श्ना = 'ना', ह्रस्व - 'प्वादीनां ह्रस्वः', अ का लोप तथा णत्व) = पृणध्यै । अध्यैन् प्रत्यय में नकार की इत्संज्ञा होने से स्वर में भेद है । रूप में विशेषता नहीं है । (८) आ + ✓हु + कध्यै अथवा कध्यैन् = ('अध्यै' गुणाभाव, उवङ्) = आहुवध्यै । लोक में - आहोतुम् । (९) ण्यन्त ✓मद = मादि + शध्यै (= 'अध्यै' प्रत्यय, शप् = 'अ', गुण, अय् आदेश) = मादयध्यै । लोक में - मादयितुम् । (१०) ✓पा + शध्यैन् (= 'अध्यै' प्रत्यय, शित् होने से सार्वधातुकसंज्ञा, शप् = 'अ', पा = 'पिब्' आदेश) = पिबध्यै । लोक में - पातुम् । (११) दा + तवै = दातवै उ (ऐ = 'आय्' आदेश, 'य्' का लोप - 'लोपः शाकल्यस्य') = दातवा उ । लोक में - दातुम् । (१२)

एते निपात्यन्ते। प्रायतुं रोद्धुम्, अव्यथितुमित्यर्थः। **(२३०५) दृशे विख्ये च ३।४।११।** निपातौ। द्रष्टुं, विख्यातुमित्यर्थः। **(२३०६) कृत्यार्थे तवैकेन्केन्यत्वनः ३।४।१४।** धातोरेते स्युः। तवै – अन्वतवै। केन् – अवगाहे। केन्य – दिदृक्षेण्यः। त्वन् – कर्त्वम्। **(२३०७) सृपितृदोः कसुन् ३।४।१७।** तुमर्थे।

(२३०५) **दृशे विख्ये चेति**। दृशेः विपूर्वकख्याधातोश्च केप्रत्ययः निपात्यत इति। कित्त्वाद् दृशेर्नोपधागुणः।

(२३०६) **कृत्यार्थ इति**। कृत्यानां = तव्यदादीनामर्थे = भावकर्मणोः एते प्रत्ययाः स्युरित्यर्थः। **अन्वेतवै** — अनुपूर्वादिण्धातोः 'कृत्यार्थे तवैकेन्केन्यत्वनः' इत्यनेन तवैप्रत्यये आर्धधातुकत्वाद् गुणे 'अनु + ए + तवै' इति जाते, यणि प्रातिपदिकत्वे सौ 'कृन्मेजन्तः' इत्यव्ययत्वे सोर्लुकि 'अन्वेतवै' इति।

---

सू + तवेङ् (= तवे, ङित्वात् गुणाभाव) = सूतवे। लोक में - सोतुम्। (१३) कृञ् + तवेन् (= तवे, ऋ = 'अर्' - गुण, रपर) = कर्तवे। लोक में - कर्तुम्।

(२३०४) **पद**—प्रयै, रोहिष्यै, अव्यथिष्यै। **अनुवृत्ति**—तुमर्थे, छन्दसि, धातोः। **विधिसूत्र**।

**मूलार्थ**—ये तीनों तुमर्थ में निपातन से सिद्ध होते हैं।

**विमर्श**—पूर्वसूत्र (२३०३) से 'तुमर्थे', 'छन्दसि लुङ्लङ्लिटः' (३।४।६) से 'छन्दसि' की अनुवृत्ति आती है। 'धातोः' का अधिकार है। तदनुसार "वेद में प्रयै, रोहिष्यै और अव्यथिष्यै निपातन से सिद्ध होते हैं।"

**उदाहरण**—प्र + ✓या + कै (= 'ऐ' निपातन, आ का लोप) = प्रयै। लोक में - प्रयातुम्। ✓रुह् + 'इष्यै' प्रत्यय निपातन, उपधागुण) = रोहिष्यै। लोक में - प्रयातुम्। ✓रुह् + 'इष्यै' (- प्रत्यय निपातन, उपधागुण) = रोहिष्यै। लोक में – रोढुम्। नञ् + ✓व्यथ् + इष्यै = अव्यथिष्यै। लोक में - अव्यथितुम्।

(२३०५) **पद**—दृशे, विख्ये, च। **अनुवृत्ति**—तुमर्थे, छन्दसि, धातोः। **विधिसूत्र**।

**मूलार्थ**—ये दोनों तुमर्थ में निपातन से सिद्ध होते हैं।

**विमर्श**—पूर्ववत् 'तुमर्थे' और 'छन्दसि' की अनुवृत्ति आ रही है। 'धातोः' का अधिकार है। तदनुसार "'दृशे' और 'विख्ये' - ये दोनों तुमर्थ में निपातन से सिद्ध होते हैं।"

**उदाहरण**—दृश् + के (= 'ए' प्रत्यय निपातन, कित्वात् गुणाभाव) = दृशे। वि + ख्या + के (= 'ए', 'आ' का लोप) = विख्ये।

(२३०६) **पद**—कृत्यार्थे, तवैकेन्केन्यत्वनः। **अनुवृत्ति**—छन्दसि, धातोः। **विधिसूत्र**।

**मूलार्थ एवं विमर्श**—उक्तवत् 'छन्दसि' की अनुवृत्ति विद्यमान है। तदनुसार "कृत्य प्रत्यय के अर्थ में धातु से तवै, केन्, केन्य और त्वन् प्रत्यय वेद में होते हैं।"

**उदाहरण**—भावकर्म अर्थ में - अनु + ✓इण् (= इ + तवै, 'इ' = 'ए' - गुण, उ = 'व्' - यण्) = अन्वेतवै। अव + ✓गाहू विलोडने (= गाह् + केन् = 'ए' प्रत्यय निपातन) = **अवगाहे**। सन्नन्त ✓दृश् = **दिदृक्ष** + 'केन्य' (- प्रत्यय निपातन = एन्य, 'अ' का लोप, णत्व) = दिदृक्षेण्यः। कृञ् + त्वन् (= 'त्व' निपातन से, गुण, रपर) = कर्त्वम् (= कार्य)।

(२३०७) **पद**—सृपि-तृदोः, कसुन्। **अनुवृत्ति**—भावलक्षणे, छन्दसि, तुमर्थे। **विधिसूत्र**।

**पुरा क्रूरस्य विसृपो विरप्शिन्। पुरा जत्रुभ्य आतृदः। (२३०८) प्रकृत्यान्तःपादमव्यपरे ६।१।११५।** ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यादिति परे, न तु वकारयकारपरेऽति। उपप्रयन्तो अध्वरम्। सुजाते अश्वसूनृते। अन्तःपादं किम्? एतास एतेऽर्चन्ति। अव्यपरे किम्? तेऽवदन्। **(२३०९) अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ६।१।११६।** एषु व्यपरेऽप्यति एङ् प्रकृत्या। वसुभिर्नो अव्यात्।

---

(२३०७) **सृपितृदोः कसुन्।** भावलक्षणेऽर्थे विद्यमानयोः सृपितृदोस्तुमर्थे कसुन्प्रत्ययः स्यादित्यर्थः।

(२३०८) **प्रकृत्यान्त इति।** पादस्य मध्ये इत्यन्तः पादमित्यव्ययीभावः। पादश्चेह ऋक्पाद एव गृह्यते। 'वा छन्दसी'त्यतो मण्डूकप्लुत्या छन्दसीत्यनुवर्तते। अत आह — **ऋक्पादमध्यस्थ इति।**

(२३०९) **अव्यादवद्यादिति।** अव्यात्, अवद्यात्, अवक्रमुः, अव्रत, अयम्, अवन्तु,

---

**मूलार्थ**—सृप् और तृद् धातु से तुमर्थ में कसुन् प्रत्यय होता है। पुरा क्रुरस्य **विसृपो** विरप्शिन्। पुरा **जत्रुभ्य** आतृदः।

**विमर्श**—पूर्वसूत्र 'भावलक्षणे स्थेणकृञ्०' (३।४।१६) से 'भावलक्षणे' की अनुवृत्ति आती है। 'छन्दसि' की अनुवृत्ति पूर्ववत् विद्यमान है। 'धातोः' का अधिकार है। तदनुसार ''भावलक्षण में विद्यमान गत्यर्थक सृप् और हिंसार्थक तृद् धातु से तुमनर्थ में वेद में कसुन् (= अस्) प्रत्यय होता है।''

**उदाहरण**—वि + ✓सृप् + कसुन् (= 'अस्' प्रत्यय, कित्वात् उपधागुण का अभाव, स् = र् = :) = विसृपः। आ + तृद् + कसुन् (= 'अस्' प्रत्यय) = आतृदः।

(२३०८) **पद**—प्रकृत्या, अन्तःपादम्, अव्यपरे। **अनुवृत्ति**—एङः, अति, संहितायाम्।

**मूलार्थ**—ऋक्पादमध्यस्थ एङ् को प्रकृतिभाव होता है, किन्तु वकार-यकारपरक अत् परे रहते नहीं होता। उपप्रयन्तो अध्वरम्। सुजाते अस्वसूनृते। 'अन्तः पादम्' क्यों कहा? एतास एतेऽर्चन्ति। 'अव्यपरे' क्यों कहा? तेऽवदन्।

**विमर्श**—पूर्वसूत्र 'एङः पदान्तादति' (४८) से 'एङः' और 'अति' की अनुवृत्ति आती है। 'संहितायाम्' का अधिकार है। तदनुसार ''ऋक्पादमध्यस्थ एङ् का अत् परे रहते प्रकृतिभाव होता है। किन्तु यकार-वकारपरक अत् के परे यह प्रकृतिभाव नहीं होता।''

**उदाहरण**—'उपप्रयन्तो + अध्वरम्' (में 'एङः पदान्तादति' से पूर्वरूप प्राप्त होने पर प्रकृत सूत्र से प्रकृतिभाव) = उपप्रयन्तो अध्वरम्। सुजाते + अश्वसूनृते (पूर्वरूप प्राप्त होने पर प्रकृतिभाव) सुजाते अश्वसूनृते।

**प्रत्युदाहरण**—प्रकृत सूत्र में 'अन्तः पादम्' का निवेश होने से 'एतास एतेऽर्चन्ति' में पादमध्यस्थ के अभाव में प्रकृतिभाव नहीं होता, पूर्वरूप हुआ। 'अव्यपरे' का सूत्र में ग्रहण होने से 'तेऽवदन्' में प्रकृतिभाव नहीं होता। क्योंकि यहाँ वकारपरक अत् है।

(२३०९) **पद**—अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु, च। **अनुवृत्ति**—प्रकृत्या, अन्तःपादम्, एङः, अति। **विधिसूत्र।**

**मूलार्थ—अव्यात्, अवद्यात्, अवक्रमु, अव्रत, अयम्, अवन्तु और अवस्यु शब्द परे रहते एङ् को प्रकृतिभाव होता है।**

मित्रमहो अवद्यात् । मा शिवासो अवक्रमुः । ते नो अव्रत । शतधारो अयं मणिः । ते नो अवन्तु । कुशिकासो अवस्यवः । (२३१०) **सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः ७।१।३९** । ऋजवः सन्तु पन्थाः । पन्थान इति प्राप्ते । परमे व्योमन् । व्योमनीति प्राप्ते । धीती मती सुष्टुती । धीत्या मत्या सुष्टुत्येति प्राप्ते पूर्वसवर्णः । या सुरथा रथीतमोभा । यौ सुरथाविति प्राप्ते आ । नताद् ब्राह्मणम् । नतमिति प्राप्ते आत् । यादेव विद्म ता त्वा । यमिति प्राप्ते । न युष्मे वाजबान्धवः, अस्मे इन्द्रा बृहस्पती, युष्मासु अस्मभ्यमिति प्राप्ते शे । उरुया, धृष्णुया । उरुणा धृष्णुनेति प्राप्ते या । नाभा पृथिव्याः ।

---

अवस्युः इत्येतेषु परत एङः प्रकृतिभावो निपात्यत इत्यर्थः । **अवक्रमुः** — अवपूर्वकस्य क्रमेर्लिट्युसि 'द्विर्वचनप्रकरणे छन्दसि वा वचनमि'ति द्विर्वचनाभावे रूपम् ।

(२३१०) **सुपां सुलुक् इति** । सुपां स्थाने सुलुक् – पूर्वसवर्ण – आ – आत् – या – डा – ड्यायाच् आल् इत्येते आदेशाः स्युश्छन्दसीत्यर्थः । **ऋजवः सन्तु पन्थाः** – अत्र 'पन्थानः' इति बहुवचने प्राप्ते 'सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः' इत्यनेन जसः स्थाने सु–विभक्तौ अनुबन्धलोपे सस्य रुत्वे विसर्गे च 'पन्थाः' इति ।

---

**विमर्श**—पूर्वसूत्र (२३०७) से 'प्रकृत्या' तथा 'अन्तःपादम्' की अनुवृत्ति आती है । 'एङः पदान्तादति' (४८) से 'एङः' और 'अति' की अनुवृत्ति आ रही है । इस प्रकार "वेद में अव्यात्, अवद्यात्, अवक्रमु, अव्रत, अयम्, अवन्तु और अवस्यु शब्द का अवयव अत् परे रहते एङ् को प्रकृतिभाव होता है । इनमें यकार-वकारपरक अत् के परवर्ती रहने पर पूर्वसूत्र से प्रकृतिभाव प्राप्त नहीं था । अतः प्रकृत सूत्र द्वारा निपातन किया गया है ।"

**उदाहरण**—(१) वसुभिर्नो + अव्यात् (प्रकृतिभाव निपातन) = वसुभिर्नो अव्यात् । (२) मित्रमहो अवद्यात् । (३) मा शिवासो अवक्रमुः । (४) ते नो अव्रत । (५) शतधारो अयं मणिः । (६) ते नो अवन्तु । (७) कुशिकासो अवस्यवः (इन सभी प्रयोगों में प्रकृत सूत्र से प्रकृतिभाव निपातन होने से अव् आदि नहीं होते) ।

(२३१०) **पद**—सुपाम्, सुलुक्, पूर्व........जालः । **अनुवृत्ति**—छन्दसि । **विधिसूत्र** ।

**मूलार्थ**—वेद में सुप् के स्थान में सु, लुक्, पूर्वसवर्ण, आ, आत्, शे, या, डा, ड्या, याच्, आल् ये आदेश बहुल करके होते हैं । ऋजवः सन्तु पन्थाः । 'पन्थानः' प्राप्त था । परमे व्योमन्, 'व्योमनि' प्राप्त था । धीती मती सुष्टुती इत्यादि ।

**विमर्श**—'क्त्वापि छन्दसि' (७।१।३८) से 'छन्दसि' की अनुवृत्ति आ रही है । तदनुसार "वेद में सुप् के स्थान में सु, सुप् का लुक्, पूर्वसवर्णदीर्घ, आ, आत्, शे, या, डा, ड्या, याच् और आल् ये आदेश होते हैं ।"

**उदाहरण**—(१) पन्थाः (जस् को 'सु' आदेश, रुत्व, विसर्ग) = पन्थाः । 'पन्थानः' प्राप्त था । (२) परमे व्योमन् ('ङि' का लुक्) । लोक में – व्योमनि । (३) धीती मती (पूर्वसवर्णदीर्घ) । लोक में - धीत्या, मत्या । इसी प्रकार - सुष्टुती । (४) या सुरथा रथीतमोभा (यहाँ 'सुरथौ' प्राप्त था, औ = 'आ') = सुरथा । (५) नताद् ब्राह्मणम् ('नतम्' प्राप्त था, अम् = 'आत्' आदेश) = नताद् । (६) याद् देव विद्म ता त्वा (यहाँ 'यम्' प्राप्त था, प्रकृत सूत्र से अम् = आत्) = यात् । (७) न युष्मे वाजबन्धवः (यहाँ सप्तमी बहुवचन सुप् को 'से' आदेश) = युष्मे । (८) अस्मे इन्द्राबृहस्पती ('भ्यस्' के शे आदेश) = अस्मे । इन दोनों में 'युष्मासु' और 'अस्मभ्यम्' रूप प्राप्त थे । (९) उरुया

नाभाविति प्राप्ते डा। ता अनुष्ठ्योच्च्यावयतात्। आङो ड्या। साधुया, साध्विति प्राप्ते याच्। वसन्ता यजेत। वसन्त इति प्राप्ते आल्। * इयाडियाजीकाराणामुपसंख्यानम् *। उर्विया। उरुणेति प्राप्ते इया। सुक्षेत्रिया। सुक्षेत्रिणेति प्राप्ते डियाच्। 'दृतिं न शुष्कं सरसी शयानम्'। सरस्यामिति प्राप्ते ई। **(२३११) आज्जसेरसुक् ७।१।५०।** ब्राह्मणासः। * तन्वादीनां छन्दसि बहुलम् *। तन्वं पुषेम, तनुवं पुषेम। विष्वं पश्य, विषुवं पश्य। स्वर्गो लोकः। सुवर्गो लोकः। त्र्यम्बकम्, त्रियम्बकम्। वरेण्यम्, वरेणिम्। अतो भिस ऐस्। **(२३१२) बहुलं छन्दसि ७।१।१०।** अग्निर्देवेभिः। **(२३१३)**

---

(२३११) **आज्जसेरसुक्**। अवर्णान्तादङ्गात्परस्य जसोऽसुक् स्यादित्यर्थः। **ब्राह्मणासः** — ब्राह्मणशब्दाज्जसि अनुबन्धलोपे 'आज्जसेरसुक्' इत्यसुगागमेऽनुबन्धलोपे 'ब्राह्मण + अस्' इति जाते सवर्णदीर्घे सस्य रुत्वे विसर्गे च 'ब्राह्मणासः' इति। **तन्वादीनामिति**। तन्वादीनां छन्दसि बहुलमिति वार्तिकमत्र संक्षिप्योक्तम्। तन्वादिगस्थानां शब्दानामियङ्-उवङौ छन्दसि वा स्यातामित्यर्थः।

---

धृष्णुया (यहाँ 'टा' के स्थान में या आदेश) = उरुया, धृष्णुया। लोक में - उरुणा, धृष्णुना। (११) नाभा पृथिव्या ('ङि' को डा = 'आ' आदेश) = नाभा। लोक में - नाभौ। (१२) ता अनुष्ठ्योच्या-वयतात् (अनुष्ठानम् - अनुष्ठा तथा अनुष्ठ्या, आङ् के स्थान में ड्या आदेश - टिलोप) = अनुष्ठ्या। (१३) साधुया (सु = याच् = 'या') = साधुया। (१४) वसन्ता यजेत (वसन्ते यजेत प्राप्त था, ङि = आल् = 'आ' आदेश) = वसन्ता।

**वा०**—वेद में सुप् के स्थान में इया, डियाच् और ईकार आदेश होते हैं। **उदाहरण**—उर्विया (उरु + टा = 'इया' आदेश, यण्) = उर्विया। लोक में - उरुणा। सुक्षेत्रिया (सुक्षेत्रिणा प्राप्त था, टा = डियाच् = इया, टिलोप) = सुक्षेत्रिया। दृतिं न शुष्कं सरसी शयानम् ('सरसि' प्राप्त था, इ = 'ई' आदेश) = सरसी। लोक में - 'सरस्याम्'।

(२३११) **पद**—आत्, जसेः, असुक्। **अनुवृत्ति**—छन्दसि, अङ्गस्य। **विधिसूत्र**।

**मूलार्थ**—वेद में अवर्णान्त अङ्ग से परे जस् को असुक् का आगम होता है। ब्राह्मणासः। **वा०** - तन्वादि को वेद में इयङ् - उवङ् विकल्प से होते हैं। तन्वं पुषेम, तनुवं पुषेम। विष्वं पश्य, विषुवं पश्य। स्वर्गो लोकः, सुवर्गो लोकः। त्र्यम्बकम्, त्रियम्बकम्। वरेण्यम्, वरेणिम्।

**विमर्श**—'क्त्वापि छन्दसि' (७।१।३८) से 'छन्दसि' की अनुवृत्ति आती है। 'अङ्गस्य' का अधिकार है। तदनुसार "वेद में अवर्णान्त अङ्ग से परे विद्यमान जस् को असुक् का आगम बहुल करके होता है।"

**उदाहरण**—ब्राह्मण + जस् (जस् को असुक् = 'अस्' का आगम) — ब्राह्मण अस् अस् (पूर्वसवर्णदीर्घ, अन्त्य स् = र् = :) = ब्राह्मणासः।

**वा०**—तनु आदि शब्दों में इयङ्-उवङ् विकल्प से होते हैं। **उदाहरण**—(१) तनु + अम् ('उ' = 'उवङ्' = 'उव' वार्तिक से) = तनुवम्। पक्ष में - यण् = तन्वम्। (२) विषु + अम् (उवङ्) = विषुवम्। पक्ष में यण् - विष्वम्। (३) सु + अर्गः (उ = उवङ् वैकल्पिक) = सुवर्गः। पक्ष में यण् - स्वर्गः। (४) त्रि + अम्बकम् (इ = इयङ् विकल्प से) = त्रियम्बकम्। पक्ष में यण् - त्र्यम्बकम्। (५) वरेणि + अम् (इयङ्) = वरेणियम्। पक्ष में यण् - वरेण्यम्।

**मन्त्रेष्वाङ्यादेरात्मनः ६।४।१४१ ।** आत्मन्शब्दस्यादेर्लोपि आङि। त्मना देवेषु। अपोभि । *** मासश्छन्दसीति वक्तव्यम् *** । माद्भिः । शरद्भिः । **( २३१४ ) प्रसमुपोदः पादपूरणे ८।१।६ ।** एषां द्वे स्तः पादपूरणे । प्रप्रायमग्निः । संसमिद्युवसे । उपोप मे

---

(२३१२) **बहुलं छन्दसि** । छन्दसि बहुलं भिस ऐस् स्यात्, कुत्रचित् प्राप्तावपि न भवतीत्याशयः । **अग्निर्देवेभिः** — अत्र ऐसादेशाभावे 'बहुवचने झल्येत्' इत्येत्वम् ।

(२३१३) **मन्त्रेष्वाङ्यादेरिति** । **आङीति** । टाविभक्तावित्यर्थः । **माद्भिः** — मास-शब्दस्य 'पद्दन्नोमास्०' इत्यादिना सकारान्तो 'मास्' इत्यादेशे भिसि, 'मास् + भिस्' इत्यत्र 'मासश्छन्दसीति वक्तव्यम्' इति वार्तिकेन सस्य तकारे जश्त्वेन दकारे, सस्य रुत्वे विसर्गे च 'माद्भिः' इति रूपम् ।

(२३१४) **प्रसमुपोद इति** । **प्रप्रायमग्निः** — अत्र 'प्रसमुपोदः पादपूरणे' इत्यनेन प्र उपसर्गस्य द्वित्वं भवतीति ।

---

(२३१२) **पद**—बहुलं, छन्दसि । **अनुवृत्ति**—अतो भिस ऐस्, अङ्गस्य । **विधिसूत्र** ।

**मूलार्थ**—वेद में भिस् को ऐस् बहुलता से होता है । अग्निर्देवेभिः ।

**विमर्श**—सूत्रार्थ की स्पष्टता के लिए 'अतो भिस ऐस्' (७।१।९) सूत्र की अनुवृत्ति आ रही है । अङ्गस्य का अधिकार है । तदनुसार "वेद में अदन्त अङ्ग से परवर्ती 'भिस्' के स्थान में 'ऐस्' आदेश बहुलप्रकार से होता है ।"

**उदाहरण**—देव + भिस् (भिस् = 'ऐस्' बहुल प्रकार से, वृद्धि, स् = र् = :) = देवैः । भिस् = ऐस् के अभाव पक्ष में - देव + भिस् (अ = ए - 'एत्व' 'बहुवचने झल्येत्', स् = र् = :) = देवेभिः ।

(२३१३) **पद**—मन्त्रेषु,. आङि, आदेः, आत्मनः । **अनुवृत्ति**—लोपः, भस्य, अङ्गस्य । **विधिसूत्र** ।

**मूलार्थ**—मन्त्र में आङ् परे रहते आत्मन् शब्द के आदि का लोप होता है । त्मना देवेषु । अपोभि । **वा०**—छन्द में मास् शब्द के सकार को तकार आदेश होता है । माद्भिः । शरद्भिः ।

**विमर्श**—प्रकृत सूत्र में 'अल्लोपोऽनः' (६।४।१३४) से 'लोपः' की अनुवृत्ति आती है । तदनुसार "मन्त्र में आङ् (= टा) के परवर्ती रहते आत्मन् शब्द के आदि आकार का लोप होता है ।"

**उदाहरण**—आत्मन् + टा (= 'आ', 'आत्मन्' के आदिवर्ण 'आ' का लोप) = त्मना ।

**वा०**—वेद में मास् के स् के स्थान में 'त्' आदेश होता है भादि प्रत्यय के परे ।

**उदाहरण—मास** + भिस् (मास = 'मास्' आदेश - 'पद्दन्नोमास्०', 'स्' = 'त्' आदेश - वार्तिक से, 'त्' = 'द्' - जश्त्व, स् = र् = :) = माद्भिः ।

(२३१४) **पद**—प्रसमुपोदः, पादपूरणे । **अनुवृत्ति**—सर्वस्य द्वे । **विधिसूत्र** ।

**मूलार्थ**—वेद में प्र, सम्, उप और उद् को द्वित्व होता है, यदि पादपूर्ति होती हो । प्रप्रायमग्निः । संसमिद्युवसे । उपोपमे परामृश । किं नो दुदु हर्षसे ।

**विमर्श**—यहाँ 'सर्वस्य द्वे' (८।१।१) की अनुवृत्ति आती है । तदनुसार "पादपूरणार्थक प्र, सम्, उप और उत् को वेद में द्वित्व होता है ।"

**उदाहरण**—प्र + अयम् अग्निः ('प्र' को द्वित्व, दीर्घ) = प्र प्रायमग्निः । सम् + इद्युवसे (सम्

**परामृश। किं नो दुदु हर्षसे। (२३१५) षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ८।३।५३। विसर्गस्य सः स्यात्। वाचस्पतिं विश्वकर्माणम्। दिवस्पुत्राय सूर्याय। दिवस्पृष्ठं भन्दमानः। तमसस्पारमस्य। परीवीत। इलस्पदे। दिवस्पयो दिधिषाणा। रायस्पोषं यजमानेषु।**

**इति वैदिकप्रकरणम्।**



(२३१५) **षष्ठ्या इति**। षष्ठ्यन्तविसर्गस्य पतिपुत्रादिषु परतः सकारादेशः स्याच्छन्दसीत्यर्थः। **वाचंस्पतिमिति**। 'वाचः + पतिम्' इत्यत्र षष्ठ्याः 'षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु' इत्यनेन विसर्गस्य सत्वे 'वाचस्पतिमि'ति रूपम्।

**इति वैदिकप्रकरणम्।**



को द्वित्व) = संसमिद्युवसे। उप मे परामृश ('उप' को द्वित्व) — उप उप (गुण) = उपोप मे परामृश। किं न उदु हर्षसे (उत् को द्वित्व) = किन्नो दुदु हर्षसे।

(२३१५) **पद**—षष्ठ्याः, पतिपुत्रपृष्ठपारपदपयस्पोषेषु। **अनुवृत्ति**—छन्दसि, विसर्जनीयस्य, सः, पदस्य। **विधिसूत्र**।

**मूलार्थ**—पति, पुत्र, पृष्ठ, पार, पद, पयस् और पोष शब्द परे रहते षष्ठी के विसर्ग को सकार आदेश होता है। वाचस्पतिं विश्वकर्माणम्। दिवस्पुत्राय सूर्याय। दिवस्पृष्ठं भन्दमानः। तमसस्पारमस्य। परीवीत इलस्पदे। दिवस्पयो दिधिषाणाः। रायस्पोषं यजमानेषु।

**विमर्श**—'छन्दसि वाऽऽम्रेडितयोः' (८।३।४९) से 'छन्दसि' तथा 'विसर्जनीयस्य सः' (८।३।३४) की अनुवृत्ति आती है। 'संहितायाम्' का अधिकार है। तदनुसार ''वेद में - पति, पुत्र, पृष्ठ, पार, पद, पयस् और पोष के परवर्ती रहते षष्ठी सम्बन्धी विसर्ग को सत्व ('स्' आदेश) होता है।''

**उदाहरण**—(१) वाचः + पतिम् (ः = 'स्' आदेश प्रकृत सूत्र से) = वाचस्पतिम्। (२) दिवः + पुत्राय (विसर्ग = स्) = दिवस्पुत्राय। (३) तमसः + पारम् (स् आदेश) = तमसस्पारम्। (४) इलः + पदे (सत्व) = इलस्पदे। (५) दिवः + पयः (सत्व) = दिवस्पयः। (६) रायः + पोषम् (सत्व) = रायस्पोषम्।

**वैदिक-प्रकरण समाप्त।**



# अथ स्वरप्रकरणम्

**( २३१६ ) धातोः ६।१।१६२ ।** अन्त उदात्तः स्यात् । **( २३१७ ) अनुदात्तं पदमेकवर्जम् ६।१।१५८ ।** परिभाषेयं स्वरविधिविषया। यस्मिन्पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं तत्पदमनुदात्ताच्कं स्यात्। गोपाय तं नः। अत्र 'सनाद्यन्ता धातवः' इति धातुत्वे धातुस्वरेण यकाराकार उदात्तः।

---

अथ स्वरप्रकरणं निरूप्यते – वेदेषु मुख्यास्त्रयः (उदात्तानुदात्तस्वरिताः) स्वरा उपयुज्यन्ते।

(२३१६) **धातोः**। धातोरन्त उदात्तः स्यादित्यर्थः।

(२३१७) **अनुदात्तं पदमिति**। परिभाषाया लिङ्गापेक्षायामाह – **स्वरविधीति**। अत्रानुदात्तस्य क्रियमाणत्वात् तद्भिन्न उदात्तः स्वरितो वा वर्ज्यत इत्याह – **तमेकमिति**। यत्तदोर्नित्यसम्बन्धाद्यस्योदात्तस्वरितविधानं तस्यैव वर्जनम्। गोपायतं नः – 'गुपू रक्षणे' इत्यस्माद्धातोः लोट्लकारस्य मध्यमपुरुषद्विवचनस्य रूपमेतत्। अत्र 'धातोः' इत्यनेनान्तोदात्तः। ततः आयप्रत्ययः 'आद्युदात्तश्चे'ति प्रत्ययस्वरेणाद्युदात्तः। ततः धातुसंज्ञायां 'धातोः' इत्यनेन यकाराकार उदात्तः। स च प्रागुक्तयोः उदात्तयोः सतोः पश्चात्प्रवृत्तत्वात् सति शिष्टः अतो बलवान्। तस्य 'अनुदात्तौ सुप्पितौ' इत्यनेनानुदात्तेन शपोऽकारेण सह 'अतो गुणे' इति पररूपे कृते 'एकादेश उदात्तेनोदात्तः थसस्तमादेशः'। तस्य 'तास्यनुदात्तेन्ङिददुपदेशात्' इत्युपदेशात्परत्वादनुदात्तत्वम्।

---

वैदिक प्रकरण में वेदों में प्रयुक्त कतिपय शब्दों की सिद्धि-प्रक्रिया का प्रतिपादन किया गया। अब वैदिक स्वरों को स्पष्ट करने के लिए स्वरप्रकरण का आरम्भ किया जा रहा है। वेदों के मन्त्रों में उदात्त, अनुदात्त और स्वरित तीन प्रकार के स्वरों का उपयोग किया गया है।

(२३१६) **पद**—धातोः। **अनुवृत्ति**—अन्त उदात्तः। **विधिसूत्र**।

**मूलार्थ**—धातु का अन्त उदात्त होता है।

**विमर्श**—प्रकृत सूत्र में 'कर्षात्वतो घञोऽन्त उदात्तः' (६।१।१५९) से 'अन्त उदात्तः' की अनुवृत्ति आती है। तदनुसार ''धातु का अन्त उदात्त होता है।''

(२३१७) **पद**—अनुदात्तम्, पदम्, एकवर्जम्। **परिभाषासूत्र**।

**मूलार्थ तथा विमर्श**—यह स्वरविधि विषयक परिभाषासूत्र है। ''जिस पद में जिस अच् को उदात्त अथवा अनुदात्त विधान किया गया है, उस एक अच् को छोड़कर उस पद के शेष सभी अच् अनुदात्त होते हैं।''

**उदाहरण— गोपायतं नः** — 'गुपू रक्षणे' में उकार की इत्संज्ञा लोप होने पर 'धातोः' (२३१६) सूत्र से गकारोत्तरवर्ती उकार उदात्त है। उससे 'आय' प्रत्यय हुआ। वह 'आद्युदात्तश्च' इस प्रत्यय स्वर से आकार आद्युदात्त है। 'सनाद्यन्ता धातवः' से धातुसंज्ञा होने पर 'गोपाय' में अन्तिम अकार 'धातोः' से उदात्त है। शेष को निघात (अनुदात्त) है। यह उदात्त पूर्व प्रवृत्त √गुप् के उकार को उदात्तत्व एवं 'आय' के अकार को जो उदात्त स्वर हुआ था उसके पश्चाद्भावी होने से शिष्टस्वर है। अतः बलवान् है। इस प्रकार √गोपाय अन्तोदात्त है। अनन्तर शप् (अ) विकरण है। 'अनुदात्तौ सुप्पितौ' से शप् का अकार अनुदात्त होता है। इस अनुदात्त से पूर्ववर्ती उदात्त 'अ' का 'अतो गुणे' से पररूप। पररूप से निष्पन्न एकादेश रूप अकार 'एकादेश उदात्तेनोदात्तः' से उदात्त है। 'थस्' =

**शिष्टमनुदात्तम्। (२३१८) उदात्तादनुदात्तस्य स्वरितः ८।४।६६। इति तकाराकारः। स्वरितः। (२३१९) स्वरितात्संहितायामनुदात्तानाम् १।२।३९। एकश्रुतिः स्यात्। इति नकाराकारः प्रचयः। (२३२०) अनुदात्तस्य च यत्रोदात्तलोपः ६।१।१६१। यस्मिन्ननुदात्ते उदात्तो लुप्यते, तस्योदात्तः। देवीं वाचम्। अत्र**

---

तस्य 'उदात्तानुदात्तस्य स्वरितः' इत्यनेन स्वरितत्वे 'स्वरितात्संहितायाम्' इत्यनेन नकारस्य एकश्रुतौ 'गोपायतं नः' इति।

(२३१८) **उदात्तादनुदात्तस्येति**। उदात्तात्परस्य अनुदात्तस्य स्वरितः स्यादित्यर्थः।

(२३१९) **स्वरितात्संहितायामिति**। स्वरितात्परेषामनुदात्तानां संहितायामेकश्रुतिः स्यादित्यर्थः। 'गोपायतं नः' इत्यत्र नकाराकारः प्रचयः = एकश्रुतिः।

(२३२०) **अनुदात्तस्य चेति। देवीं वाचमिति**। अत्र देवशब्दोऽच्प्रत्ययान्तत्वात् 'चितः' इत्यनेनान्तोदात्तः। पचादिषु देवडिति पाठात् टित्त्वात् 'टिड्ढाणञ्०' इत्यादिना ङीप्प्रत्यये तस्य 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तत्वे 'यस्येति चे'त्यनेनाकारलोपे 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यनेन ङीपः उदात्तत्वे **देवीमिति**।

---

'तम्' आदेश। उसको अदुपदेश से परत्व के कारण 'तास्यनुदात्तेन्ङिदुपदेशात्' से अनुदात्तत्व होता है। तब 'उदात्तानुदात्तस्य स्वरितः' से तकारोत्तरवर्ती अकार को 'स्वरित' हो जाता है।

(२३१८) **पद**—उदात्तात्, अनुदात्तस्य, स्वरितः। **विधिसूत्र**।

**मूलार्थ एवं विमर्श**—"उदात्त से परे अनुदात्त को स्वरित होता है।" 'गोपायतं नः' में तकारोत्तरवर्ती 'अकार' स्वरित है।

(२३१९) **पद**—स्वरितात्, संहितायाम्, अनुदात्तानाम्। **अनुवृत्ति**—एकश्रुतिः। **विधिसूत्र**।

**मूलार्थ**—स्वरित से परे अनुदात्त को संहिता में एकश्रुति स्वर होता है।

**विमर्श**—प्रकृत सूत्र में 'एकश्रुति दूरात्सम्बुद्धौ' (१।२।३३) से 'एकश्रुति' की अनुवृत्ति आती है। तदनुसार "स्वरित से परवर्ती अनुदात्त को संहिता में एकश्रुति (प्रचय) स्वर होता है।" **उदाहरण**—'गोपायतं नः' में नकारोत्तरवर्ती अकार प्रचय (एकश्रुति) है।

**विशेष**—एका श्रुतिः श्रवणं यस्य तत् एकश्रुतिः। वाक्य में पृथक्-पृथक् उदात्त, अनुदात्त और स्वरित स्वरों का श्रवण न होकर एक प्रकार का स्वर सुनाई देता है, उसे एकश्रुति कहते हैं।

(२३२०) **पद**—अनुदात्तस्य, च, यत्र, उदात्तलोपः। **अनुवृत्ति**—उदात्तः। **विधिसूत्र**।

**मूलार्थ**—जिस अनुदात्त के परे रहते उदात्त का लोप हो जाय तो वह अनुदात्त स्वर उदात्त हो जाता है। देवीं वाचम्। यहाँ ङीप् उदात्त है।

**विमर्श**—सूत्रार्थ की पूर्ति हेतु 'कर्षात्वतो घञोऽन्त उदात्तः' (६।१।१५९) से 'उदात्तः' की अनुवृत्ति आती है। तदनुसार "जिस अनुदात्त अच् के परवर्ती रहते उदात्त अच् का लोप हुआ हो तो उस अनुदात्त अच् को उदात्त आदेश हो जाता है।"

**उदाहरण**— देवीं वाचम्। यहाँ 'देव' शब्द अच्प्रत्ययान्त होने से 'चितः' से अन्तोदात्त है। पचादिगण में 'देवट्' का पाठ है। अतः टित् होने से 'टिड्ढाणञ्०' से ङीप् होता है, वह ङीप् (ई) 'अनुदात्तौ सुप्पितौ' से अनुदात्त है। 'यस्येति च' से 'अ' का लोप होने पर 'अनुदात्तस्य च यत्रोदात्तलोपः' से ङीप् (ई) को उदात्त आदेश - देवीम्।

**ङीबुदात्तः । ( २३२१ ) आद्युदात्तश्च ३।१।३ ।** प्रत्ययस्याद्युदात्तः स्यात् । कर्तव्यम् । **( २३२२ ) अनुदात्तौ सुप्पितौ ३।१।४ ।** पूर्वस्यापवादः । यज्ञस्य । न यो युच्छति । शिप्तिपोरनुदात्तत्वे स्वरितप्रचयौ ।**( २३२३ ) चितः ६।१।१६३ ।** अन्त उदात्तः स्यात् । * चितः सप्रकृतेर्बह्वकजर्थम् * । चिति प्रत्यये सति प्रकृतिप्रत्ययसमुदायस्यान्त उदात्तो वाच्य इत्यर्थः । नभन्तामन्यके समे । यके सरस्वतीमनु । तकत्सुते । **( २३२४ ) तद्धितस्य ६।१।१६४ ।( २३२५ ) कितः ६।१।१६५ ।** चितस्तद्धित-

---

(२३२१) **आद्युदात्तश्चेति** । प्रत्ययस्याद्युदात्तः स्यादिति ।

(२३२२) **अनुदात्ताविति** । सुपः पितश्च प्रत्यया आद्यनुदात्ताः स्युरित्यर्थः ।

(२३२३) **चितः** । चितोऽन्तोदात्तो भवतीत्याशयः ।

(२३२४) **तद्धितस्य** । **कौञ्जायनाः** – कुञ्जस्यापत्यानीति विग्रहे 'गोत्रे कुञ्जादिभ्य-

---

(२३२१) **पद**—आद्युदात्तः, च । **अनुवृत्ति**—प्रत्ययः । **विधिसूत्र** ।

**मूलार्थ**—प्रत्यय का आदि उदात्त होता है । कर्तव्यम् ।

**विमर्श**—'प्रत्ययः' (३।१।१) की अनुवृत्ति आ रही है । अतः ''प्रत्यय का आदि वर्ण उदात्त होता है ।''

**उदाहरण**—✓कृ + तव्यत् ( = तव्य, गुण, रपर, विभक्तिकार्य) = कर्तव्यम् । यहाँ तव्य प्रत्यय का आदि 'अ' वर्ण उदात्त हुआ ।

(२३२२) **पद**—अनुदात्तौ, सुप्पितौ । **अनुवृत्ति**—प्रत्ययः । **विधिसूत्र** ।

**मूलार्थ**—सुप् और पित् प्रत्यय का आदि अनुदात्त होता है । पूर्वसूत्र का यह अपवाद है । यज्ञस्य । यो न युच्छति ।

**विमर्श**—पूर्ववत् 'प्रत्ययः' की अनुवृत्ति अनुसरण कर रही है । तदनुसार ''सुप् तथा पित् प्रत्यय अनुदात्त होते हैं ।'' यह पूर्वसूत्र का बाधक है ।

**उदाहरण**—**यज्ञस्य** । यहाँ सुप् प्रत्यय अनुदात्त हुआ । ✓युच्छ प्रमादे + शप् प्रत्यय अनुदात्त हुआ । यहाँ शप् - तिप् को अनुदात्तत्व होने पर स्वरित (प्रचय) होता है ।

(२३२३) **पद**—चितः । **अनुवृत्ति**—अन्त उदात्तः । **विधिसूत्र** ।

**मूलार्थ**—चित् प्रत्यय का अन्त उदात्त होता है । **वा०**—चित् प्रत्यय होने पर प्रकृति-प्रत्यय समुदाय का अन्त उदात्त होता है, ऐसा कहना चाहिए । नभन्तामन्यके समे । यके सरस्वतीमनु । तकत्सुते ।

**विमर्श**—'कर्षात्वतो घञोऽन्त उदात्तः' (६।१।१५९) से 'अन्त उदात्तः' की अनुवृत्ति आ रही है । तदनुसार ''चकारेत्संज्ञक प्रत्यय का अन्त्य वर्ण उदात्त होता है ।''

**वा०**—प्रत्यय चित् होने पर प्रकृति-प्रत्यय समुदाय का ही अन्त उदात्त करना चाहिए ।

**उदाहरण**—नभन्तामन्यके समे । यहाँ 'अव्ययसर्वनाम्नामकच् प्राक्टेः' से अकच् = अक प्रत्ययघटित समुदाय 'अन्यके' का एकार उदात्त हुआ । यके सरस्वतीमनु । यत् शब्द से अकच् होने पर 'यके' का एकार उदात्त । तकत्सुते । यहाँ अकच्घटित समुदाय का एकार उदात्त होता है ।

(२३२४) **पद**—तद्धितस्य । **अनुवृत्ति**—चितः, अन्त उदात्तः । **विधिसूत्र** ।

**मूलार्थ**—चित् तद्धित प्रत्यय का अन्त उदात्त होता है । पूर्वसूत्र से ही उदात्तत्व सिद्ध था, यह सूत्र ञित् स्वर बाधनार्थ है । कौञ्जायनाः ।

**स्यान्त उदात्तः। यदाग्नेयः। (२३२६) तित्स्वरितम् ६।१।१८५। क्व नूनम्। (२३२७) उपोत्तमं रिति ६।१।११७।** रित्प्रत्ययान्तस्योपोत्तममनुदात्तं स्यात्। **यदाहवनीये। (२३२८) ञ्नित्यादिर्नित्यम् ६।१।१९७।** ञिदन्तस्य निदन्तस्य

---

श्च्फञ्' इति च्फञ्प्रत्ययेऽनुबन्धलोपे फस्यायनादेशे आद्यचो वृद्धौ कौञ्जायन इति जाते 'व्रातच्फञोरस्त्रियाम्' इति ञ्प्रत्यये तद्राजसंज्ञायाम् 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति ञ्यप्रत्ययस्य लुकि प्रातिपदिकत्वे जसि 'कौञ्जायनाः' इति। अत्र 'तद्धितस्ये'त्यनेनान्तोदात्तत्वं भवति।

(२३२५) **कितः**। कितस्तद्धितान्तस्यान्त उदात्तो भवतीत्यर्थः।

(२३२६) **तित्स्वरितम्**। तकारः इत् यस्येति तित् बहुव्रीहिः। तित्स्वरितं भवतीत्यर्थः।

(२३२७) **उपोत्तमं रिति**। अनुदात्तमित्यनुवर्तते। तदाह — **रित्प्रत्ययान्तस्येति। यदाहवनीये** — आङ्पूर्वाद् हुधातोरनीयर्प्रत्ययः। उपोत्तमम् = उपान्त्यमित्यर्थः, ततो गतिसमासे कृदुत्तरपदप्रकृतिस्वरः।

(२३२८) **ञ्नित्यादिरिति**। पूर्वसूत्राद् 'उदात्तः' इत्यनुवर्तते। अत आह — **ञिदन्त-**

---

**विमर्श**—पूर्वसूत्र 'चितः' की अनुवृत्ति अपेक्षित है। पूर्ववत् 'अन्त उदात्तः' की अनुवृत्ति आ रही है। तदनुसार ''तद्धित प्रत्ययसम्बन्धी चित् प्रत्यय का अन्त उदात्त होता है।''

**उदाहरण—कौञ्जायनाः** (बहुत्वविशिष्ट अपत्य अर्थ में कुञ्ज शब्द से 'गोत्रे कुञ्जादिभ्यश्च्फञ्' सूत्र से च्फञ् = 'फ' प्रत्यय, फ = आयन, आद्यच् को वृद्धि) - कौञ्जायन + 'ञ्य' प्रत्यय (- 'व्रातच्फञोरस्त्रियाम्', तद्राजसंज्ञा, 'ञ्य' का लुक् - 'तद्राजस्य बहुषु तेनैवाऽस्त्रियाम्', प्रथमा बहुवचन में विभक्तिकार्य) = कौञ्जायनाः। यहाँ 'तद्धितस्य' से अन्तोदात्त हुआ।

(२३२५) **पद**—कितः। **अनुवृत्ति**—तद्धितस्य, अन्त उदात्तः। **विधिसूत्र**।

**मूलार्थ**—कित् तद्धित का अन्त उदात्त होता है। यदाग्नेयः।

**विमर्श**—पूर्वसूत्र 'तद्धितस्य' (२३२४) की तथा पूर्ववत् 'अन्त उदात्तः' की अनुवृत्ति आती है। तदनुसार ''तद्धितसम्बन्धी कित् प्रत्यय का अन्त्य वर्ण उदात्त होता है।''

**उदाहरण—यदाग्नेयः** (अग्नि + ढक् = ढ = एय, आदिवृद्धि, 'इ' का लोप) = आग्नेयः। यहाँ अन्त 'अ' उदात्त हुआ।

(२३२६) **पद**—तित्, स्वरितम्। **विधिसूत्र**।

**मूलार्थ**—तित् प्रत्यय का अन्त स्वरित होता है। क्व नूनम्।

**विमर्श**—तकार की इत्संज्ञा युक्त प्रत्यय होने पर स्वरित होता है।

**उदाहरण— क्व नूनम्** — किम् + अत् (= 'अ' प्रत्यय, किम् = 'क्व' आदेश) = 'क्वातिः'। प्रकृत सूत्र द्वारा 'क्व' का अन्त स्वरित हुआ।

(२३२७) **पद**—उपोत्तमम्, रिति। **अनुवृत्ति**—उदात्तः। **विधिसूत्र**।

**मूलार्थ**—रित् प्रत्यय का उपोत्तम (अन्त से पूर्व अच्) उदात्त होता है। यदाहवनीये।

**विमर्श**—पूर्ववत् 'कर्षात्वतो घञोऽन्त उदात्तः' (६।१।१५९) से 'उदात्तः' की अनुवृत्ति आती है। तदनुसार ''रेफ इत्संज्ञक प्रत्ययान्त का उपोत्तम (अन्त्य अच् से पूर्व अच्) वर्ण उदात्त होता है।''

**उदाहरण**—आङ् + हु + अनीयर् = आहवनीये (यहाँ उपोत्तम वर्ण उदात्त हुआ)।

(२३२८) **पद**—ञ्निति, आदिः, नित्यम्। **अनुवृत्ति**—उदात्तः। **विधिसूत्र**।

चादिरुदात्तः। यस्मि॒न्विश्वानि॒ पौंस्या। पुंसः कर्मणि ब्राह्मणादित्वात् ष्यञ्। सु॒तेदधिष्व न॒श्चन। चायतेरसुन्। चायेरन्ने ह्रस्वश्चेति चकारादसुनो नुडागमः। **(२३२९) लिति ६।१।१९३।** इत्यादिप्रत्ययात्पूर्वमुदात्तं स्यात्। चिकीर्षकः। अत्र ईकारस्योदात्तता। इत्यादिप्रयोगमनुसृत्यान्वाख्यातम्।

इति स्वरप्रक्रिया।



---

**स्येति। यस्मिन्विश्वानि पौंस्या** — पुंसः कर्मणि ब्राह्मणादित्वात् ष्यञि आद्यचो वृद्धौ स्त्रियां टापि 'पौंस्या' इत्यत्र 'ञ्नित्यादेर्नित्यमि'त्यनेन आद्युदात्तत्वे उक्तं रूपम्।

(२३२९) **लिति।** लिति परे प्रत्ययात्पूर्वमुदात्तं भवतीत्यर्थः। **चिकीर्षकः** — सन्नन्तात् चिकीर्षधातोः 'ण्वुल्तृचौ' इति ण्वुलि, 'वु' इत्यस्य अकादेशे आर्धधातुकत्वात् 'अतो लोपः' इत्यकारलोपे प्रातिपदिकत्वे सौ रुत्वे विसर्गे च 'चिकीर्षकः' इति। 'लिति' इत्यनेन ईकारस्य उदात्तत्वे 'चिकीर्षकः' इति।

**इति स्वरप्रक्रिया।**



---

**मूलार्थ**—ञिदन्त और निदन्त का आदि उदात्त होता है। यस्मिन्विश्वानि पौंस्या। 'पौंस्या' में पुंस् से कर्म में - ब्राह्मणादित्वात् ष्यञ्। सुते दधिष्व नश्चनः। चाय् से असुन्, ह्रस्व एवं नुडागम ('चायतेरन्ने ह्रस्वश्चे'ति — उणादिसूत्र)।

**विमर्श**—पूर्ववत् 'उदात्तः' की अनुवृत्ति आ रही है। तदनुसार "ञिदन्त और निदन्त का आदि वर्ण उदात्त होता है।"

**उदाहरण**—यस्मिन् विश्वानि पौंस्या ('पौंस्या' में पुंस् से कर्म में ष्यञ् = 'य', आदिवृद्धि, टाप्) = पौंस्या (यहाँ 'ञ्नित्यादेर्नित्यम्' से आदि वर्ण उदात्त)। नश्चनः (चाय् + असुन् = 'अस्', ह्रस्व तथा नुट् = 'न्' का आगम - 'चायतेरन्ने ह्रस्वश्च') = नश्चनः। यहाँ आदि वर्ण उदात्त हुआ।

(२३२९) **पद**—लिति। **अनुवृत्ति**—प्रत्ययात्, पूर्वम्, उदात्तः। **विधिसूत्र।**

**मूलार्थ**—लित् प्रत्यय परे रहते पूर्व उदात्त होता है। चिकीर्षकः। यहाँ ईकार उदात्त है।

**विमर्श**—यहाँ 'भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति' (६।१।१९२) से 'प्रत्ययात् पूर्वम्' की तथा 'कर्षात्वतो घञोऽन्तोदात्तः' (६।१।१५९) से 'उदात्तः' की अनुवृत्ति आ रही है। तदनुसार "लकारेत्संज्ञक प्रत्यय के परवर्ती रहते पूर्ववर्ण उदात्त होता है।"

**उदाहरण**—सन्नन्त चिकीर्ष + ण्वुल् (= वु, वु = 'अक' आदेश) — ✓चिकीर्ष + अक ('अ' का लोप - 'अतो लोपः', प्रातिपदिकसंज्ञा सु = स् = र् = :) = चिकीर्षकः (यहाँ लित् प्रत्यय 'ण्वुल्' से पूर्व 'इ' को 'लिति' से उदात्त होता है)।

**स्वरप्रक्रिया-प्रकरण समाप्त।**



